अचिरज्वरितस्यापि भेषजं दोषपाकतः ॥ ३ ॥
पाययेदातुरं सामं पाचनं सप्तमेऽहनि ।
शमने नाथवा दृष्ट्वा निरामं समुपाचरेत् ॥ ४ ॥
पीताम्बुर्लङ्घितः क्षीणोऽजीर्णी भुक्तः पिपासितः ।
न पिबेदौषधं जन्तुः संशोधनमथेतरत् ॥ ५ ॥
वेपथुर्विषमो वेगः कण्ठौष्ठपरिशोषणम् ।
निद्रानाशः क्षवस्तम्भो गात्राणां रौक्ष्यमेव च ॥ ६ ॥
शिरो हृद्गात्ररुग्वक्त्रवैरस्यं गाढ़विट्कता ।
शूलाध्माने जृम्भणञ्च भवत्यनिलजे ज्वरे ॥ ७ ॥
नागरं देवकाष्ठञ्च धान्यकं बृहतीद्वयम् ।
दद्यात्पाचनकं पूर्वं ज्वरितानां ज्वरापहम् ॥ ८ ॥
हिमवद्विन्ध्यशैलाभ्यां प्रायोव्याप्ता वसुन्धरा ।
सौम्या सौम्यं हिमं हैममाग्नेयं वैन्ध्यमौषधम् ॥ ९ ॥

सर्वज्वरेषु ।

द्रव्याण्यभिनवाण्येव प्रशस्तानि क्रियाविधौ ।
ऋते गुड़घृतक्षौद्रधान्य कृष्णाविड़ङ्गतः ॥ १० ॥
यत्र येन प्रधानेन द्रव्यं समनुगृह्यते ।
तत्संज्ञकः समं योगो भवतीति विनिश्चयः ॥ ११ ॥
मात्रोत्तमापलेन स्यात् त्रिभिश्चात्र मध्यमाः ।
जघन्यास्यात्पलार्धेन स्नेहक्वाथौषधेषु च ॥ १२ ॥
क्वाथद्रव्यपले वारिद्विरष्टगुणमिष्यते ।
चतुर्भागावशिष्टन्तु पेयं पलचतुष्टयम् ॥ १३ ॥
दीप्तानलं महाकायं पाययेदञ्जलिं जलम् ।
अन्ये त्वर्द्धं परित्यज्य प्रसृतिं तु चिकित्सकाः ॥ १४ ॥
क्वाथत्यागमनिच्छन्तस्त्वष्टभागावशेषितम् ।

पारम्पर्य्योपदेशेन दृढवैद्याः पलद्वयम् ॥ १५ ॥
ब्रह्मदक्षाश्विरुद्रेन्द्रभूचन्द्रार्कानिलादयः ।
ऋषयः सौषधि ग्रामा भूतसङ्घाश्च पान्तु वः ॥ १६ ॥
रसायणमिवर्षीणां देवानाममृतं यथा ।
सुधेवोत्तमनागानां भैषज्यमिदमश्नुते ॥ १७ ॥

—०—

## अथ औषधकालः ।

ततोपविश्य विश्रान्तः प्रसन्नवदनेक्षणः ।
औषधान् हेमरजतस्फटिकाजनपरिरक्षितान् ॥ १८ ॥
पिबेत्प्रसन्नहृदयः पित्वा पात्रमधोमुखम् ।
निःक्षिप्याचम्यसलिलं ताम्बूलाद्युपयोजयेत् ॥ १८ ॥

वीर्य्याधिकं भवति भेषजसन्नहीनं
हन्यात्तथामयमसंशयमाशु चैव ।
तद्बालवृद्धयुवती मृदुभिश्च पीतं
ग्लानिं परां समुपयाति बलक्षयश्च ॥ २० ॥

अनुलोमोऽनिलः स्वास्थ्यं क्षुत्तृष्णा सुमनस्कता ।
लघुत्वमिन्द्रियोद्गारशुद्धिः जीर्णौषधाकृतिः ॥ २१ ॥
औषधशेषे भुक्तं पीतञ्च तथौषधं स शेषान्ने ।
न करोति गदोपशमं प्रकोपयत्यन्यरोगांश्च ॥ २२ ॥

शीघ्रं विपाकमुपयाति बलं न हिंस्या-
दन्नावृतं न च मुहुर्वदनान्निरेति ।
प्राग्भुक्तसेवितमथौषधमेतदेव
दद्याच्च वृद्धशिशुभीरुवराङ्गनाभ्यः ॥ २३ ॥

विल्वादेः पञ्चमूलस्य क्वाथः स्याद्वातिकज्वरे ।

पाचनं पिप्पलीमूलं गुडुची विश्वजोऽथवा ॥ २४ ॥
न शोधयति यद्दोषान् समान्नोदीरयत्यपि।
समौ करोति विषमांस्तत्संशमनमुच्यते ॥ २५ ॥
किराताब्दामृतोदीच्य वृहतीद्वय गोचुरैः।
स स्थिरा कलशी विश्वैः क्वाथो वातज्वरापहः ॥ २६ ॥
पञ्चमूल बिला रास्ना कुलित्थैः सह पौष्करैः।
पर्वभेदं शिरःकम्पं निहन्ति पवनज्वरम् ॥ २७ ॥
पिप्पली शारि वा द्राक्षा वला चांशुमती तथा।
एषोऽपि परमः सिद्धो वातज्वरविनाशनः ॥ २८ ॥
द्राक्षा गुडुची काश्मर्य्य त्रायमाणा स शारिवा।
निष्क्वाथ्य स गुडं क्वाथं पिवेद्वातकृते ज्वरे ॥ २९ ॥
दर्भं वलां गोचुरकं पिवेत्पादावशेषितम्।
शर्कराघृतसंयुक्तं पिवेद्वातज्वरापहम् ॥ ३० ॥
शर्करा दाडिमाभ्याञ्च द्राक्षा दाड़िमयोस्तथा।
वैरस्ये धारयेत् कल्कं गण्डूषञ्च तथा हितम् ॥ ३१ ॥
आमं पचेदनिलजे हितो नित्यं रसोदनः।
मुद्गामलकयूषस्तु गाढ़विट्के विधीयते ॥ ३२ ॥

इति वातज्वरः।

तीक्ष्णोष्णदाहहृट् मूर्च्छा मदास्य कटुता भ्रमाः।
प्रलापो घ्राणकण्ठौष्ठमुखपाकोचिमास्नुता ॥ ३३ ॥
शीताभिलाषिता पीतमलनेत्रनख त्वचः।
पित्तोद्गारातिसारौ च पैत्तिकज्वरलक्षणम् ॥ ३४ ॥
दाहवम्यर्दितं क्षामं निरन्नं तृष्णयान्वितम्।
शर्करा मधुसंयुक्तं पाययेल्लाजतर्पणम् ॥ ३५ ॥
कलिङ्गं कट्फलं मुस्तं पाठा कटुकरोहिणी।

पक्वं सशर्करं पीतं पाचनं पैत्तिके ज्वरे ॥ ३६ ॥
शर्करामधुरो हन्ति कषायः पैत्तिकं ज्वरम्।
चन्दनोशीरश्रीपर्णी परूषकमधूकजः ॥ ३७ ॥
गुडुचीपद्मरोध्राणां शारिवोत्पलयोस्तथा।
शर्करा मधुरो क्वाथः शीतः पित्तज्वरापहः ॥ ३८ ॥
दुरालभा पर्पटकं प्रियङ्गु भूनिम्ब वासा कटुरोहिणीनाम्।
जलं पिबेच्छर्करयावगाढ़ं तृष्णा स्रपित ज्वरदाहयुक्तः ॥३८॥
द्राक्षाभया पर्पटकाब्दतिक्ता क्वाथं स सम्याकफलं विदध्यात्।
प्रलापमूर्च्छाभ्रमदाहमोहतृष्णान्विते पित्तभवे ज्वरे तु ॥४०॥
पटोलयवधान्याकमधुकं मधुसंयुतम्।
हन्ति पित्तज्वरं दाहं तृष्णाञ्चैव प्रमाथिनीम् ॥ ४१ ॥
पटोलयवनिःक्वाथो मधुना मधुरी कृतः।
तीव्रपित्तज्वरोन्मर्दी पानतृट्दाहनाशनः ॥ ४२ ॥
गुडुच्यामलकैर्युक्तः केवलो वापि पर्पटः।
पित्तज्वरं हरेत्तूर्णं दाहशोषभ्रमान्वितम् ॥ ४३ ॥
रोध्रोत्पलामृतापद्म शारिवाणां सशर्करः।
क्वाथः पित्तज्वरं हन्यादथवा पर्पटोद्भवः ॥ ४४ ॥
पर्पटामृतधात्रृणां क्वाथः पित्तज्वरं जयेत्।
द्राक्षारग्वधयोश्चापि काश्मर्या अथवा पुनः ॥ ४५ ॥
एकः पर्पटकः श्रेष्ठः पित्तज्वरविनाशनः।
किं पुनर्यदि युज्येत चन्दनोशीरनागरैः ॥ ४६ ॥
विश्वपर्पटकोशीर घनचन्दनसाधितम्।
दद्यात्सुशीतलं वारि तृट्छर्दिज्वरदाहनुत् ॥ ४७ ॥
गुडुची मुस्तधान्याकं मधूकं कटुरोहिणी।
तृष्णा शूलारुचिच्छर्दि पित्तज्वरहरो गणः ॥ ४८ ॥

पाचनं पिप्पलीमूलं गुडुची विश्वजोऽथवा ॥ २४ ॥
न शोधयति यद्दोषान् समान्नोदीरयत्यपि।
समी करोति विषमांस्तत्संशमनमुच्यते ॥ २५ ॥
किराताब्दामृतोदीच्य बृहतीद्वय गोक्षुरैः।
स स्थिरा कलशी विश्वैः क्वाथो वातज्वरापहः ॥ २६ ॥
पञ्चमूल बिला रास्ना कुलित्थैः सह पौष्करैः।
पर्वभेदं शिरःकम्पं निहन्ति पवनज्वरम् ॥ २७ ॥
पिप्पली शारि वा द्राक्षा बला चांशुमती तथा।
एषोऽपि परमः सिद्धो वातज्वरविनाशनः ॥ २८ ॥
द्राक्षा गुडुची काश्मर्य्य त्रायमाणा स शारिवा।
निष्क्वाथ्य स गुडं क्वाथं पिबेद्वातकृते ज्वरे ॥ २९ ॥
दर्भं बलां गोक्षुरकं पिबेत्पादावशेषितम्।
शर्कराघृतसयुक्तं पिबेद्वातज्वरापहम् ॥ ३० ॥
शर्करा दाडिमाभ्याञ्च द्राक्षा दाडिमयोस्तथा।
वैरस्ये धारयेत् कल्कं गण्डूषञ्च तथा हितम् ॥ ३१ ॥
आमं पचेदनिलजे हितो नित्यं रसोदनः।
मुद्रामलकयूषस्तु गाढ़विट्के विधीयते ॥ ३२ ॥

इति वातज्वरः।

तीक्ष्णोष्णदाहहृट् मूर्च्छा मदास्य कटुता भ्रमाः।
प्रलापो घ्राणकण्ठौष्ठमुखपाकोऽक्षिसाश्रुता ॥ ३३ ॥
शीताभिलाषिता पीतमलनेत्रनख त्वचः।
पित्तोद्गारातिसारौ च पैत्तिकज्वरलक्षणम् ॥ ३४ ॥
दाहवम्यर्दितं चामं निरन्नं तृष्णयान्वितम्।
शर्करा मधुसंयुक्तं पाययेल्लाजतर्पणम् ॥ ३५ ॥
कलिङ्गं कट्फलं मुस्तं पाठा कटुकरोहिणी।

पक्कं सशर्करं पीतं पाचनं पैत्तिके ज्वरे ॥ ३६ ॥
शर्करामधुरो हन्ति कषायः पैत्तिकं ज्वरम्।
चन्दनोशीरश्योपर्णी परुषकमधूकजः ॥ ३७ ॥
गुड़ुचीपद्मरोध्राणां शारिवोत्पलयोस्तथा।
शर्करा मधुरो क्वाथः शीतः पित्तज्वरापहः ॥ ३८ ॥
दुरालभा पर्पटक पियङ्गु भूनिम्ब वासा कटुरोहिणीनाम्।
जलं पिबेच्छर्करयावगाढं तृष्णा सपित्त ज्वरदाहयुक्तः ॥३९॥
द्राक्षाभया पर्पटकाब्दतिक्ता क्वाथं स सम्याकफलं विदध्यात्।
प्रलापमूर्च्छाभ्रमदाहमोहतृष्णान्विते पित्त भवेज्वरे तु ॥४०॥
पटोलयवधान्याकमधुकं मधुसंयुतम्।
हन्ति पित्तज्वरं दाहं तृष्णाञ्चैव प्रमाथिनीम् ॥ ४१ ॥
पटोलयवनिःक्वाथो मधुना मधुरी कृतः।
तीव्रपित्तज्वरोन्मर्दी पानतृड्दाहनाशनः ॥ ४२ ॥
गुड़ुच्यामलकैर्युक्तः केवलो वापि पर्पटः।
पित्तज्वरं हरेत्तूर्णं दाहशोषभ्रमान्वितम् ॥ ४३ ॥
रोध्रोत्पलामृतापद्म शारिवाणां सशर्करः।
क्वाथः पित्तज्वरं हन्यादथवा पर्पटोद्भवः ॥ ४४ ॥
पर्पटामृतधात्रीणां क्वाथः पित्तज्वरं जयेत्।
द्राक्षारग्वधयोश्चापि काश्मर्या अथवा पुनः ॥ ४५ ॥
एकः पर्पटकः श्रेष्टः पित्तज्वरविनाशनः।
किं पुनर्यदि युज्येत चन्दनोशीरनागरैः ॥ ४६ ॥
विश्वपर्पटकोशीर घनचन्दनसाधितम्।
दद्यात्सुशीतलं वारि तृट्छर्दिज्वरदाहनुत् ॥ ४७ ॥
गुड़ुची मुस्तधान्याकं मधूकं कटुरोहिणी।
तृष्णा शूलारुचिच्छर्दि पित्तज्वरहरो गणः ॥ ४८ ॥

किराताम्रतधान्याक चन्दनोशीरपर्पटैः।
सपद्मकैः क्षतः क्वाथो हन्ति पित्तभवं ज्वरम्।
दाह हृल्लासमरुचि मुर्च्छेशवमथूल्कमान् ॥ ४८ ॥
ससितो निशिपर्युषितः प्रातर्धान्याकतण्डुलक्वाथः।
पीतः शमयत्यचिरादन्तर्दाहं ज्वरं घोरम् ॥ ५० ॥
चन्दनं मधुकं द्राक्षां कटुकं स दुरालभाम्।
चन्दनादि गणः प्रोक्तो हन्याद्दाहज्वरारुचिम् ॥ ५१ ॥
मुद्गानामञ्जलीचूर्णं षष्टीमधुकसाधितम्।
पाक्यं शीतकषायं वा पिबेत्पित्तज्वरापहम् ॥ ५२ ॥
ह्रीवेरं धान्यकं मुस्तं चन्दनं मधुयष्टिका।
हपोशीरयुतः क्वाथः शर्करा मधुसंयुतः।
रक्तपित्तं जयत्युग्रं तृष्णादाहज्वरापहः ॥ ५३ ॥
भूनिम्बातिविषा लोध्र मुस्तकेन्द्रयवामृताः।
वासकं नागरं विल्वं कषायो माक्षिकान्वितः।
श्वासं कासञ्च विट्भेदं रक्तपित्तज्वरं जयेत् ॥ ५४ ॥
तिक्ता वालकभूनिम्बश्यामापर्पटवासकैः।
शृतं जलं सितायुक्तं रक्तपित्तज्वरं जयेत् ॥ ५५ ॥
पथ्यां तैलघृतक्षौद्रैर्लिहेद्दाहज्वरापहाम्।
कासासृक्पित्तवीसर्पश्वासान् हन्ति वमीनपि ॥ ५६ ॥
हर्म्यं शुभ्राभ्रसंकाशे शशाङ्ककरशीतले।
मलयोदकसिक्ते या सुप्यात्पित्तज्वरी नरः ॥ ५७ ॥
जिह्वातालुगलक्लोमशोषे मूर्ध्नि च दापयेत्।
केसरं मातुलुङ्गस्य मधुसैन्धवसंयुतम् ॥ ५८ ॥
हरीतकीं प्रियङ्गुञ्च पिप्पली लोध्रमेव च।
दार्वी हरिद्रा तेजोह्वा सक्षौद्रमुखधावने ॥ ५९ ॥

एतेन कटुभावाच्च मुखरोगश्च शाम्यति।
वक्त्रं विशदतामेति भक्तच्छन्दश्च जायते ॥ ६० ॥
मुद्गयूषोदनो देयः सितया पैत्तिके ज्वरे ॥

इति पित्तज्वरः।

कासश्वासप्रतिश्याय प्रसेकारुचिच्छर्दयः।
निद्रा गुरुत्वं हृल्लासः स्तैमित्यं मधुरास्यता ॥ ६१ ॥
शीतरोमाञ्चिता शौक्ल्यमलाचिकरजत्वचम्।
उष्णाभिलाषिता चेति श्लैष्मिकज्वरलक्षणम् ॥ ६२ ॥
मातुलुङ्गशिफा विश्वकायस्था ग्रन्थिकोद्भवम्।
कफज्वरेषु सक्षारं पाचनं वा कणादिकम् ॥ ६३ ॥
त्रिफला चित्रता मुस्तं कटुकं सकलिङ्गकम्।
पटोलारग्वधं चैव रोहिणी चित्रकं समम्।
क्वाथः क्षौद्रयुतः श्लेष्मज्वरकासगलामये ॥ ६४ ॥
निम्बविश्वामृता भीरु शठीभूनिम्बपौष्करम्।
पिप्पली वृहती चेति क्वाथो हन्ति कफज्वरम् ॥ ६५ ॥
कुष्टमिन्द्रयवं मूर्वा पटोलं वापि साधितम्।
पिबेन्मरीचसंयुक्तं सक्षौद्रं कफजे ज्वरे ॥ ६६ ॥
त्रिफला पटोलवासाच्छिन्नरुहातिक्तरोहिणीषड्ग्रन्था।
मधुना श्लेष्मसमुत्थे दशमूलीवासकस्य वा क्वाथः ॥ ६७ ॥
मात्राक्षौद्रघृतादीनां क्वाथे स्नेहे सुचूर्णवत्।
सप्तच्छदं गुडूची च निम्बस्फूर्जक मेव च।
क्वाथयित्वा पिबेत्तोयं सक्षौद्रं कफजे ज्वरे ॥ ६८ ॥
आमलक्यभयाकृष्णाचित्रकश्चेत्ययं गणः।
सर्वज्वरकफातङ्क भेदीदीपनपाचनः ॥ ६९ ॥
तिक्तानिम्बविषाव्योष यक्राह्वाभिः शृतं जलम्।

पिबेत्कफज्वरं घोरं हन्ति कासमन्वितम् ॥ ७० ॥
सिन्धुवारदलक्वाथं कणाढ्यं कफजे ज्वरे।
जङ्घयोश्च बले क्षीणे कर्णे च पिहिते पिबेत् ॥ ७१ ॥
मुस्तं मधुकबीजानि त्रिफलाकटुरोहिणीं।
परूषकानि निष्क्वाथ. कफज्वरविनाशनः ॥ ७२ ॥
कट्फलं पौष्करं कृष्णा शृङ्गी च मधुना सह।
श्वासकासज्वरहरः श्रेष्ठो लेहः कफान्तकृत् ॥ ७३ ॥

चातुर्भद्रावलेहिका।

लिह्यज्ज्वरार्त्तस्त्रिफलां पिप्पलीं सममाक्षिकाम्।
कासे श्वासे च मधुना सर्पिषा च सुखी भवेत् ॥ ७४ ॥
कट्फलं पौष्करं शृङ्गीं मुस्तकं कटुकां शठीम्।
समस्तान्येकशो वापि सूक्ष्मचूर्णानि कारयेत् ॥ ७५ ॥
पार्द्रकस्वरसक्षौद्रै र्लिह्यात्कफविनाशनम्।
शूलानिलारुचिच्छर्दि कासश्वासक्षयापहम् ॥ ७६ ॥
क्षौद्रोपकुल्यासंयोगः श्वासकासज्वरापहः।
प्लीहानं हन्ति हिक्काञ्च बालानाञ्च प्रशस्यते ॥ ७७ ॥
कर्षचूर्णस्य कल्कस्य गुटिकानाञ्च सर्वशः।
द्रवः शुक्त्यावलेढव्यः पातव्यश्च चतुर्द्रवः ॥ ७८ ॥
मात्रायानास्त्यवस्थानं दोषमग्निबलं वयः।
व्याधिद्रव्यञ्च कोष्टञ्च वीक्ष्यमात्रां प्रयोजयेत् ॥ ७९ ॥
घजाजीशर्करायुक्तो दाड़िमीस्वरसे न तु।
शुचिश्यो मधुनायुक्तः कर्त्तव्यः कवलग्रहः ॥ ८० ॥
मुद्गयूषोदनश्चापि पेयः कफसमुत्थिते ॥ ८१ ॥

इति श्लेष्मज्वरः।

वातापित्तज्वरदेयमौषधं पञ्चमेऽहनि ।
पित्तश्लेष्मज्वरे देयमौषधं सप्तमेऽहनि ॥ ८२ ॥
अत ऊर्ध्वञ्च सप्ताहाद्वातश्लेष्मज्वरे पिबेत् ॥ ८३ ॥
तृष्णा मूर्च्छा भ्रमो दाहः स्वप्ननाशः शिरोरुजा ।
कण्ठास्य शोषो वमथू रोमहर्षो रुचिस्तथा ।
पर्वभेदश्च जृम्भा च वातपित्तज्वराकृतिः ॥ ८४ ॥
संसृष्टदोषेषु हितं संसृष्टमथपाचनम् ।
निदग्धिकावलारास्ना त्रायमाणामृतायुतैः ।
मसूरविदलैः क्वाथो वातपित्तज्वरं जयेत् ॥ ८५ ॥
त्रिफला शाल्मलीरास्ना राजवृक्षाटरूपकैः
शृतमम्बु हरत्याशु वातपित्तभवं ज्वरम् ॥ ८६ ॥
किराततिक्तममृतां द्राक्षामामलकीं शठीम् ।
निष्क्वाथ्यपित्तानिलजे तं क्वाथं सगुड़ं पिबेत् ॥ ८७ ॥
मधुकं शारिवा द्राक्षा मधुकं चन्दनोत्पलम् ।
काश्मरीफलकं लोध्रं त्रिफला पद्मकेशरम् ॥ ८८ ॥
परूषकं मृणालञ्च न्यसेदुत्तमवारिणि ।
मधुलाजसितायुक्तं तत्पीतसुषितं निशि ॥ ८९ ॥
वातपित्तज्वरं दाहं तृष्णामूर्च्छारुचिभ्रमान् ।
शमयेद्रक्तपित्तञ्च जीमूतमिवमारुतः ॥ ९० ॥

मधुकादिक्वाथः ।

विश्वामृताब्दभूनिम्बैः पञ्चमूलीसमन्वितैः ।
कृतः कषायो हन्त्याशु वातपित्तोत्तरं ज्वरम् ॥ ९१ ॥
बला भार्ग्यमृतैरण्ड चन्दनो शीरपर्पटैः ।
उपकुल्याब्दह्रीवेरैः कषायञ्च पिबेत्ततः ॥ ९२ ॥

पर्वभेदशिरःकम्पं वातपित्तज्वरं जयेत्।
गुडूची पर्पटं मुस्तं किरातं विश्वभेषजम्।
वातपित्तज्वरे देयं पञ्चभद्रमिदं शुभम्॥ ९३॥
नीलोत्पलमुशीराणि बलापद्मकमेव च।
काश्मरीमधुकं द्राक्षा मधुकं सपरुषकम्॥ ९४॥
पेयः शीतकषायोऽयं वातपित्तज्वरापहः।
सप्रलापं समोहञ्च शमयेत्पैत्तिकं ज्वरम्॥ ९५॥
आरग्वधफलं मुस्तं यष्टीमधुकमेव च।
उशीरमभया चैव हरिद्रा दारुसाह्वया॥ ९६॥
पटोलं पिचुमन्दञ्च तथा कटुकरोहिणी।
एभिः सिद्धः कषायः स्याद्वातपित्तभवेज्वरे॥ ९७॥
कफपित्तहरामुद्गाः कारवेल्लादयस्तथा।
प्रायेण नतु ते देया वातपित्तोद्भवे ज्वरे।
शूलोदावर्त्तविष्टम्भ जनकाः ज्वरवर्धनाः॥ ९८॥
दाड़िमामलमुद्गानां यूषस्त्वनिलपैत्तिके।
मुद्गामलकयूषस्तु वातपित्तात्मके हितः॥ ९९॥
महादाहे विधातव्यो यूषः चणकसम्भवः॥ १००॥

इति वातपित्तज्वरः।

मुहुर्दाहो मुहुः शीतं स्वेदस्तम्भौ मुहुर्मुहुः।
मोहः कासो रुचिस्तृष्णा श्लेष्मपित्तप्रवर्त्तनम्।
लिप्ततिक्तास्यतातन्द्रा पित्तश्लेष्मज्वराकृतिः॥ १०१॥
गुडूचीनिम्बधन्याकं पद्मकं चन्दनान्वितम्।
तृष्णा दाह ज्वरच्छर्द्दि पित्तश्लेष्मज्वरापहः॥ १०२॥
गुडूचीनिम्बधन्याकं पद्मकं चन्दनानि च।
तृष्णा दाहारुचिच्छर्द्दि सर्वज्वरहरो गणः॥ १०३॥

पटोलं पिचुमन्दश्च त्रिफलामधुकं बला।
साधितोयं कषायश्च पित्तश्लेष्मभवे ज्वरे॥ ३०४॥
दीपनं कफविच्छेदि पित्तवातानुलोमनम्।
ज्वरघ्नं पाचनं भेदि सृष्टं धान्यपटोलयोः॥ ३०५॥
पटोलं चन्दनं मूर्वातिक्तापाठामृतागणः।
पित्तश्लेष्मारुचिच्छर्दि ज्वरकण्डूविषापहः॥ ३०६॥
सशर्करामक्षमात्रां कटुकामुष्णवारिणा।
पिबा ज्वरं जयेज्जन्तुः कफपित्तसमुद्भवम्॥ ३०७॥
त्रिफलात्रायमाणा च मृद्वीकाकटुरोहिणी।
पित्तश्लेष्मज्वरे ह्येषां कषायो ह्यनुलोमनः॥ ३०८॥
वत्सकं पद्मकाष्ठञ्च नागरं चन्दनामृते।
पटोलं धान्यकञ्चैव क्वाथो मधुसमायुतः।
कफपित्तजरं शूलं दाहं हन्त्यङ्घ्रिपाणिषु॥ ३०९॥
पटोल वालकञ्चैव मुस्तकं रक्तचन्दनम्।
पाठा मूर्वामृताशुण्ठी चोशीरं कटुरोहिणी।
समभागैः शृतं तोयं सर्वज्वरहरं पिबेत्॥ ३१०॥
स नागरं पर्पटकं पिबेद्वा स दुरालभम्।
किराततिक्तकं मुस्तं गुडूचीं विश्वभेषजम्।
पाठामुशीरं सोदीच्यं पिबेज्ज्वरस्य शान्तये॥ ३११॥
ज्वरघ्नो दीपनश्चैव कषायो दोषपाचनः।
तृष्णारुचिप्रशमनो मुखवैरस्य नाशनः॥ ३१२॥
यव पर्पटकं धान्यं पटोलं निम्बसाधितम्।
पिबेत्स शर्कराक्षौद्रं पित्तश्लेष्मज्वरापहम्॥ ३१३॥
अमृतेन्द्रयवारिष्टं पटोलं कटुरोहिणी।
नागरं चन्दनं मुस्तं पिप्पलीचूर्णसंयुतम्।

अमृताष्टकमित्येतत्पित्तश्लेष्मज्वरापहम् ॥ ३१४ ॥

इत्यमृताष्टकम्।

कफपित्तवमिकण्डूज्वरविसर्पदाहनुत्।
कषायः परिपीतस्तु शृङ्गवेरपटोलयोः ॥ ३१५ ॥
कण्टकार्य्यमृताभार्गी नागरेन्द्रयवासकम्।
भूनिम्बं चन्दनं मुस्तं पटोलं कटुरोहिणी ॥ ३१६ ॥
कषायं पाययेदेतत्पित्तश्लेष्मज्वरापहम्।
दाहतृष्णारुचिच्छर्दिकासहृद्रोगशूलनुत् ॥ ३१७ ॥

कण्टकार्य्यादिः।

क्षुद्रामृताभ्यां सह नागरेण
स पुष्करं चैव किराततिक्तम्।
पिबेत्कषायन्त्वथ पञ्चतिक्तं
ज्वरं निहन्त्यष्टविधं समस्तम् ॥ ३१८ ॥

भार्गी पुष्करमूलञ्च मुस्तकं कण्टकारिका।
त्रिकण्टकगुडूच्यौ च कर्णिनी नागरैः शृतैः ॥ ३१९ ॥
एष भार्ग्यादिको नाम्ना पित्तश्लेष्मज्वरापहः।
हृल्लासारोचकच्छर्दि-तृष्णादाहविबन्धनुत् ॥ ३२० ॥
नागरेन्द्रयवं मुस्तं चन्दनं कटुरोहिणी।
पिप्पलीचूर्णसंयुक्तं कषायन्तु पिबेन्नरः।
भ्रममूर्च्छारुचिच्छर्दिपित्तं श्लेष्मज्वरापहः ॥ ३२१ ॥
द्राक्षा सम्याकधान्यार्कं कटुकामुस्तग्रथिकम्।
क्वाथं हन्यादुदावर्त्तं शूलं पित्तकफज्वरम् ॥ ३२२ ॥
पटोलयवधान्याकमुद्गामलकचन्दनम्।
पैत्तिके श्लेष्मपित्तोत्थे ज्वरे तृट्छर्दिदाहनुत् ॥ ३२३ ॥
रूपवपुष्पवासाया रसः क्षौद्रसितायुतः।

कफपित्तज्वरं हन्ति मा स्वक्पित्तं म कामलम् ॥ १२४ ॥
पटोलं पिचुमन्दश्च त्रिफला मधुकं यया:।
साधितो यं कषाय: स्यात्पित्तश्लेष्मभवेज्वरे ॥ १२५ ॥
मुस्तपर्पटकैरातनिर्यूहेण प्रसाधित:।
कफपित्तज्वरहरो यूषो धान्यपटोलयो: ॥ १२६ ॥
निम्बकोलकयूषस्तु हित: पित्तकफात्मके ॥

इति पित्तश्लेष्मज्वर:।

स्तैमित्यं पर्वणां भेदो निद्रागौरवमेव च।
शिरोग्रह: प्रतिश्याय: कास: कम्पो रुचिस्तथा।
सन्तापो मध्यवेगश्च वातश्लेष्मज्वराकृति: ॥ १२७ ॥

क्षुद्रामृतानागरपुष्कराह्वयै:
कृत: कषाय: कफमारुतोत्तरे।
स श्वासकासारुचिपार्श्वरुक्करे
ज्वरे त्रिदोषप्रभवेऽपि शस्यते ॥ १२८ ॥

मुस्तापर्पटकं शुण्ठी गुडूची स दुरालभा।
कफवातारुचिच्छर्दिदाहशोषज्वरापह: ॥ १२९ ॥
मातुलुङ्गफलकेसरोद्धृत: सिन्धुजन्ममरिचान्वितो मुखे।
हन्ति वातकफरोगमास्यगं शोषमाशुजडतामरोचकम् ॥ १३० ॥

आरग्वधग्रन्थिकमुस्ततिक्ता
हरीतकीभि: क्वथित: कषाय:।
सामे सशूले कफवातयुक्ते
ज्वरे हितो दीपनपाचनश्च ॥ १३१ ॥

आरोग्यपञ्चकम्।

पिप्पली पिप्पलीमूलं चव्यचित्रकनागरै:।

दीपनीयः स्मृतो वर्गः कफानिलगदापहः ॥ ३३२ ॥

इति पञ्चकोलः।

किराततिक्तं मुस्तं गुडूचीं विश्वभेषजम्।
चातुर्भद्रकमित्याहुः वातश्लेष्मज्वरापहम् ॥ ३३३ ॥

चातुर्भद्रकम्।

पिप्पलीभिः स्मृतं तोयमनभिष्यन्दिदीपनम्।
वातश्लेष्मविकारघ्नं ज्वरघ्नं प्लीहनाशनम् ॥ ३३४ ॥
निम्बामृता विश्वदारुकट्फलं कटुकी वचा।
कषायं पाययेदाशु वातश्लेष्मज्वरापहम् ॥ ३३५ ॥
पर्वभेदः शिरःशूलकासारोचकपीड़ितम् ॥ ३३६ ॥
दारुपर्पटभार्ग्यब्द वचा धान्यककट्फलैः।
साभया विश्वपूतीकैः क्वाथो हिंगुमधूत्कटः ॥ ३३७ ॥
कफवातज्वरे पीतो हिक्काशोषगलग्रहान्।
श्वासकासप्रमेहांश्च हन्यात्तरुमिवाशनिः ॥ ३३८ ॥
दशमूलीरसः पीतः कणाढ्यश्च कफानिले।
अविपाकेऽतिनिद्रायां पार्श्वरुक् श्वासकासके ॥ ३३९ ॥
पर्ण्यौ बृहत्यौ गोकण्टो विल्वोऽग्निमन्थनोऽरलुः।
काश्मरी पाटला चेति सन्निपातहरो गणः ॥ ३४० ॥

दशमूलम्।

कृष्णान्विते वातकफार्त्तिशूले
स श्वासकासारुचिबद्ध विट्के।
हितं जलं दीपनपाचनञ्च
पटोलशुण्ठीयवपिप्पलीनाम् ॥ ३४१ ॥

पीनसश्वासबाधिर्य्ये लद्दापर्वास्थिशूलिनि।
कफवातज्वरे स्वेदं कारयेत्तं विधानवित् ॥ ३४२ ॥

खर्परभ्रष्टपटस्थितकाञ्चिकसंसिक्तवालुकास्वेदः।
शमयतिवातकफामय मस्तकशूलाङ्गभङ्गादीन् ॥ ३४३ ॥
स्रोतसां मार्दवं कृत्वा नीत्वा पावकमाशयम्।
हत्वा वातकफस्तम्भं स्वेदो ज्वरमपोहति ॥ ३४४ ॥
पुष्करमूलयूषस्तु वातघ्ने षाडिके हितः।

वातघ्नेषज्वरः।

वैरोधिकैरन्नपानैरजीर्णाध्यसनेन च।
व्यामिश्रसेवनाच्चापि सन्निपातः प्रकुप्यति ॥ ३४५ ॥
क्षणे दाहः क्षणे शीतमस्थिसन्धि शिरोरुजा।
स स्रावे कलुषे रक्ते निर्भुग्ने चापि लोचने ॥ ३४६ ॥
स स्वनौ स रुजौ कर्णौ कण्ठः शूकैरिवावृतः।
तन्द्रा मोहः प्रलापश्च कासः श्वासो रुचिभ्रमः ॥ ३४७ ॥
परिदग्धा खरस्पर्शा जिह्वा स्रस्ताङ्गतापरम्।
ष्ठीवनं रक्तपित्तस्य कफेनोन्मिश्रितस्य च ॥ ३४८ ॥
शिरसो लोठनं तृष्णा निद्रानाशो हृदिव्यथा।
स्वेदमूत्रपुरीषाणां चिराद्दर्शनमल्पशः ॥ ३४९ ॥
कृशत्वं नातिगात्राणां सततं कण्ठकूजनम्।
कोठानां श्यावरक्तानां मण्डलानाञ्च दर्शनम् ॥ ३५० ॥
मूकत्वं स्रोतसां पाको गुरुत्वमुदरस्य च।
चिरात्पाकश्च दोषाणां सन्निपातज्वराकृतिः ॥ ३५१ ॥
दोषे विबद्धे नष्टेऽग्नौ सर्वसम्पूर्णलक्षणः।
सन्निपातज्वरो साध्यः कृच्छ्रसाध्यस्ततोऽन्यथा ॥ ३५२ ॥
वातपित्ताधिको यस्य सन्निपातश्च कुप्यति।
तस्य ज्वरो मदस्तृष्णा मुखशोषप्रमीलिकाः।
आध्मानारुचितन्द्राश्च कासश्वासभ्रमक्लमाः ॥ ३५३ ॥

पित्तश्लेष्माधिको यस्य सन्निपातः प्रकुप्यति।
अन्तर्दाहो बहिः शीतं तस्य तृष्णा प्रवर्द्धते ॥ ३५४ ॥
तुद्यते दक्षिणं पार्श्वं सुखशोषगलग्रहाः।
ष्ठीवति रक्तपित्तं च कृच्छ्रात्कण्ठश्च दूयते ॥ ३५५ ॥
विट्भेदश्वास हिक्काश्च बर्द्धन्ते स प्रमीलिकाः।
विधुः फल्गुय तौ नाम्ना सन्निपाता वुदाहृतौ ॥ ३५६ ॥
श्लेष्मानिलाधिको यस्य सन्निपातः प्रकुप्यति।
तस्य शीतज्वरो मूर्च्छा क्षुत्तृष्णा पार्श्वसंग्रहः ॥ ३५७ ॥
शूलमखिद्यमानस्य हिक्काश्वासश्च जायते।
असाध्यः सन्निपातोऽयं शीघ्रकारीति कथ्यते ॥
न हो जीवत्यहोरात्रमनेनाविष्टविग्रहः ॥ ३५८ ॥
कासः श्वासस्तमो मूर्च्छा प्रलापो मोहवेपथुः।
पार्श्वयोर्वेदना जृम्भा कषायत्वं मुखस्य च ॥
वातोत्तरस्य रूपाणि सन्निपातस्य लक्षयेत् ॥ ३५९ ॥
एष विस्फोरको नाम्ना सन्निपातः सुदारुणः।
अतिसारो भ्रमो मूर्च्छा मुखपाकस्तथैव च।
गात्रे च विन्दवो रक्ता दाहो तीव्रः प्रजायते ॥ ३६० ॥
पित्तोत्तरस्य रूपाणि सन्निपातस्य लक्षयेत्।
भिषग्भिः सन्निपातोयमाशुकारी प्रकीर्त्तितः ॥ ३६१ ॥
जड़तागद्गदावाणी रात्रौ निद्रा भवत्यपि।
प्रस्तब्धे नयने चैव सुखमाधुर्य्यमेव च ॥ ३६२ ॥
कफोत्तरस्य रूपाणि सन्निपातस्य लक्षयेत्।
मुनिभिस्सन्निपातोयमुक्तः कम्पनसंज्ञकः ॥ ३६३ ॥
हिनमध्याधिकैर्यस्य वातपित्तकफैः क्रमात्।
सन्निपातः प्रभवति पीड़ान्दोषदर्शनात् ॥ ३६४ ॥

एकपचाभिघातस्तु तत्राप्येतद्विशेषतः।
एष संमोहको नाम्ना सन्निपातः सुदारुणः ॥ ३७७ ॥
हीनाति वृद्धमध्यैस्तु सन्निपातो यदा भवेत्।
तस्य रोगास्त एवोक्ता यथा दोष बलाश्रयाः ॥ ३७८ ॥
हृदयं दह्यते चास्य यकृत् प्लीहान्त्रफुफुसाः।
पच्यन्ते त्वयमूर्ध्वाधः पूयशोणितनिर्गमः ॥ ३७९ ॥
प्रवृद्धहीनमध्यैस्तु वातपित्तकफैश्च यः।
तेन रोगास्त एवोक्ता यथा रोग बलाश्रयाः।
प्रलापायायसंमोहः कम्पमूर्च्छारतिभ्रमाः ॥ ३८० ॥
मन्यास्तम्भेन मृत्युश्च तत्राप्येतद्विशेषणम्।
मध्यप्रवृद्धहीनैश्च सन्निपातो यदा भवेत्।
तस्य रोगास्त एवोक्ता यथा रोग बलाश्रयाः ॥ ३८१ ॥
मोहप्रलापमूर्च्छाः स्युस्तमः कम्पशिरोग्रहाः।
कासश्वासौ भ्रमस्तन्द्रा संज्ञानाशो हृदिग्रहः ॥ ३८२ ॥
खेभ्यो रक्तं विसृजति तत्राप्येतद्विशेषणम्।
अर्वाक् विरावान्मृत्युश्च तन्द्री वा स्तब्धलोचनः।
एषां त्रयाणां नामानि याम्यक्रकचपाकलाः ॥ ३८३ ॥
सर्वैर्दोषैः प्रकुपितं सन्निपातं निबोध मे।
त्रयाणामपिदोषाणां सर्वरूपाणि लक्षयेत् ॥ ३८४ ॥
यानिज्वरचिकित्सायां रूपाण्युक्तानि कृत्स्नशः।
तैः सर्वैरेव सम्पूर्णैर्विज्ञेयः कूटपाकलः ॥ ३८५ ॥
व्याधिभ्यो दारुणेभ्यश्च वज्रशस्त्राग्निसन्निभः।
केवलोच्छ्वासपरमः स्तब्धाङ्गः स्तब्धलोचनः ॥ ३८६ ॥
विरावात् परमे तस्य अन्तोऽहरति जीवितम्।
तदावस्थन्तु तं दृष्ट्वा मूर्द्ध्याहरते यतः ॥ ३८७ ॥

धर्षितो राक्षसैर्नूनमवेलायां चरन्ति ये।
अध्ययानुवते केचिद्यक्षिण्यो ब्रह्मराक्षसैः॥ ३८८॥
पिशाचैर्गुह्यकैश्चैव तथान्यैर्मस्तके हृतम्।
कुलदेवार्चनाहीनं धर्षितं कुलदेवतैः॥ ३८९॥
नक्षत्रपीड़ामपरे गरकर्मेति चापरे।
वदन्ति सन्निपातन्तु भिषजाः कूटपाकलम्॥ ३९०॥
कूटस्थैर्जायते दोषैर्बलिभिः कूटपाकलम्।
त्रयोदशविधं प्रोक्तं सन्निपातस्य लक्षणम्॥ ३९१॥
क्षुभ्यते वापि हीनस्य क्षीयते कश्चितस्य च।
कफस्थानानुपूर्व्या वा सन्निपातज्वरक्रिया॥ ३९२॥
हीनस्य वर्धनाद्धानिर्वृद्धयो रिति निश्चयः।
ह्रापनादतिवृद्धस्य हीनयोर्वृद्धिसम्भवः॥ ३९३॥
ततः समत्वं दोषाणामामस्थानं कफस्य तु।
तत्रस्थानां क्रियां तद्वदिति ज्वरविनिर्णयः॥ ३९४॥
यथा दोषोच्छ्रयश्चैव ज्वराञ्छेपानुपाचरेत्।
निर्हरेत्पित्तमेवादौ ज्वरेषु समवायिषु।
दुर्निवारतरं तद्धि ज्वरार्त्तेषु विशेषतः॥ ३९५॥
सन्निपाते क्षुधार्त्तं यो भोजयेत्पिशितौदनम्।
स कथं भिषगाख्यातिं लभेन्मूढो नराधमः॥ ३९६॥
सन्निपाते तु दाहार्त्तं यः सिञ्चेच्छीतवारिणा।
आतुरः स कथं जीवेद्भिषग्वा सकथं भवेत्॥ ३९७॥
सन्निपातेन मनुजं विलपन्तन्तु यो घृतम्।
पाययेद्भोजयेद्वापि तौ च स्यातासुभौ बधम्॥ ३९८॥
सन्निपातेन तृष्यन्तं पार्श्वहृत्तालुशोषिणम्।
यः पाययेज्जलं शीतं समृत्युर्नरविग्रहः॥ ३९९॥

समुद्रतरणं ह्येतद्वदन्ति भिषगीश्वराः ।
मृत्युना सह योद्धव्यं सन्निपातचिकित्सुना ॥ ४०० ॥
सन्निपातार्णवे मग्नं योऽभ्युद्धरतिमानवम् ।
कस्तेन न कृतो धर्मः कास्वपूजां न सोऽर्हति ॥ ४०१ ॥
श्लेष्मनिग्रहमेवादौ कुर्य्यादग्राधौ त्रिदोषजे ।
निरस्ते श्लेष्मणिह्यस्य स्रोतःसूद्घाटितेषु च ।
लाघवं जायते ह्यस्य तृष्णा चैवोपशाम्यति ॥ ४०२ ॥
लङ्घनं वालुकास्वेदो नस्यं निष्ठीवनं तथा।
अवलेहो जनश्चैव प्राक्प्रयोज्यं त्रिदोषजे ॥ ४०३ ॥
त्रिरात्रं पञ्चरात्रं वा दशरात्रमथापि वा ।
लङ्घनं सन्निपातेषु कुर्य्यादारोग्यदर्शनात् ॥ ४०४ ॥
दोषाणामेव साशक्तिर्लङ्घने या सहिष्णुता ।
न हि दोषचये कश्चित्सहते लङ्घनादिकम् ॥ ४०५ ॥
कफपित्ते द्रवे धातू सहेते लङ्घनं महत् ।
आमचयादूर्ध्वमपि वायुर्न सहते चणम् ॥ ४०६ ॥
ग्लान्यङ्गगौरवेऽव्यद्याविकृतिर्हीनलङ्घिते ।
प्रकाङ्क्षालाघवोऽग्लानिः स्वस्थतासु प्रसन्नता ॥ ४०७ ॥
उपद्रवनिवृत्तिश्च सम्यग्लङ्घितलक्षणम् ।
संमोहः सन्धिशैथिल्यं वातरुक् चातिलङ्घिते ॥ ४०८ ॥
ग्रस्तं सुलङ्घितस्यादौ विधायकवलग्रहम् ॥ ४०९ ॥
लाजमक्तुकपथ्यं स्यात्सैन्धवेनावचूर्णितम् ।
तच्च सौर्यत्वविघ्नेन रोगीजीवेत्तदा ध्रुवम् ॥ ४१० ॥
इति केचित्।

रक्तपित्तहरत्वेन दाहज्वरकृते तथा।
स क्वथः शीतवीर्य्याः स्युर्मांसपूर्वाहितानते ॥ ४११ ॥

पाचनो दीपनो लाजमण्डस्तेनोष्ण इष्यते।
अतोऽयं दशमूलादि साधितोयं भिषग्मतः॥ ४१२॥
पञ्चमुष्टिकयूषेण त्रिकण्टकक्षते न च।
त्रिदोषशमनात्यर्थं त्रिकण्टे नैव साधयेत्॥ ४१३॥
यवकोलकुलित्थानां मुद्गामलकशुण्ठयोः।
एकैकं मुष्टिमादाय पचेदष्टगुणे जले॥ ४१४॥
पञ्चमुष्टिक इत्येष वातपित्तकफापहः।
शस्यते गुल्मशूले च श्वासे कासे चये ज्वरे॥ ४१५॥

इति पञ्चमुष्टिकयूषः।

यवकोलकुलित्थैश्च मुद्गामलकसंयुतैः।
धान्याकविल्वयुक्तैश्च यूषो वातकफापहः॥ ४१६॥
सप्तमुष्टिक इत्येष सन्निपातज्वरापहः।
कफवातामदोषघ्नः कण्ठहृद्वक्त्रशोधनः॥ ४१७॥

इति सप्तमुष्टिकः।

आर्द्रकस्वरसो पेतं सैन्धवं स कटुत्रयम्।
आकण्ठं धारयेदास्ये निष्ठीवेच्च पुनः पुनः॥ ४१८॥
ते नास्य हृदये स्र षामन्यापार्श्वशिरो गलान्।
नीलोप्याकृष्यते शुष्को लाघवं चास्य जायते॥ ४१९॥
पर्वभेदो ज्वरो मूर्च्छा निद्राश्वासगलामयाः।
मुखाक्षिगौरवं जाड्यं क्लेशश्चैवोपशाम्यति॥ ४२०॥
सकृद्द्वित्रिचतुःकुर्यात् दृष्ट्वा दोषवलाबलम्।
एतद्विपरमं प्राहुर्भेषजं सन्निपातिनाम्॥ ४२१॥

इति कवलग्रहः।

सुरसार्जकनिर्यासः समधुव्योषसैन्धवः।
महास्रे ष्मानिलोद्रेक संज्ञानाशविमोचणः॥ ४२२॥

मधूकसारमिन्धूत्थ वचो पणकणाः समाः ।
श्लक्ष्णं पिष्ट्वाम्भसानस्य कुर्य्यात्संज्ञा प्रबोधनम् ॥ ४२३ ॥

इति मधूकसारादिनस्यम् ।

स्विन्नमामलकान् पिष्ट्वा द्राक्षयासहसत्त्वजेत् ।
विश्वभेषजसंयुक्तं मधुना सह लेहयेत् ॥ ४२४ ॥
तेनास्य शाम्यते मूर्च्छाकासः श्वासस्तथैव च ॥ ४२५ ॥
अष्टाङ्गं मधुना लिह्यादार्द्रकस्वरसेन वा ।
समोहं दारुणं हन्ति तन्द्रा काससमन्वितम् ॥ ४२६ ॥
कट्फल पुष्करं भार्गी व्योषं यासञ्च कारवी ।
श्लक्ष्णं चूर्णीकृतञ्चैतन्मधुना सह लेहयेत् ॥ ४२७ ॥
एषावलेहिका हन्ति सन्निपातं सुदारुणम् ।
हिक्कां श्वासञ्च कासञ्च कण्ठरोगं नियच्छति ॥ ४२८ ॥
एतद्योज्यं कफोद्रेके चूर्णमार्द्रकजैरसैः ।
उर्ध्वजत्रुगदघ्नीया साय कार्य्यावलेहिका ।
अधोरोगहरीयातु मापूर्वं भोजनान्मता ॥ ४२९ ॥

इत्यष्टाङ्गावलेहिका ।

मरीचं पिप्पली शुण्ठी पथ्यालोध्रं सपुष्करम् ।
भूनिम्बकटुकाकुष्टं यवानीकट्फलं तथा ॥ ४३० ॥
एतानि समभागानि सूक्ष्मचूर्णानि कारयेत् ।
प्रस्वेदे कण्ठरोधे च सन्धौ मर्द्दनमिष्यते ॥ ४३१ ॥
एतदुद्धूलनं प्रोक्तं सन्निपातहरं परम् ।

इति मरिचाद्युद्धूलनम्

सर्वेषु सन्निपातेषु न चौद्रमवचारयेत् ।
शीतोपचारीचौद्रं स्याच्छीतं चात्र विरुध्यते ॥ ४३२ ॥
क्रियाभिस्तुल्यरूपाभिः क्रियासांकर्य्यमिष्यते ।

भिन्नरूपतयातास्तु न कुर्वन्ति हि दूषणम्॥ ३३३॥
यदाल्पानिलकफौ तालुक्लोमगतौ स्थितौ।
कुर्य्यातामधिकं शोषं जिह्वायाः खरतां तथा॥ ४३३॥
तदा तां स्फुटितां जिह्वामुच्छूनां मधुपिष्टया।
द्राक्षया साज्यया चास्य लेपयेत्सन्निपातिनः॥ ४३५॥
घर्षेज्जिह्वां जड़ां सिन्धुवूषणैः साम्लवेतसैः॥ ४३६॥

स्वेदोद्गमे भ्रष्टकुलित्थचूर्ण-
निपातनं शस्तमिति ब्रुवन्ति।
मृत्युश्च तस्मिन् बहुपिच्छलत्वा-
च्छीतस्य जन्तोः परितः सरत्वात्॥ ४३७॥
चूर्णं यथा कट्फलकृष्णजीरकं
लोध्रं गवां काननविट् पुरातनम्।
तिक्ता स पथ्यालवणं तथां जन-
मुद्धूलनं स्वेदविकारजित्परम्॥ ४३८॥

भूनिम्बकारवीतिक्ता वचा कट्फलजं रजः।
उद्धूलनं त्रिदोषोत्थे ह्यभिष्यन्दिनि च ज्वरे॥ ४३८॥

इति भूनिम्बाद्युद्धूलनम्।

विल्वोऽग्निमन्थःश्योनाकः काश्मरीपाटलास्थिरा।
त्रिकण्टकः पृष्टपर्णी वृहतीकण्टकारिका।
दशमूलमिदं श्वास सन्निपातज्वरापहम्॥ ४४०॥
अविपाकानिलश्लेष्म तन्द्रा पार्श्वार्त्तिकासनुत्।
पिप्पलीचूर्णसयुक्तं हृत्कण्ठग्रहनाशनम्॥ ४४१॥
महान्ति यानि मूलानि काष्टगर्भाणि यानि च।
तेषान्तु वल्कलं ग्राह्यं ह्रस्वमूलानि कृत्स्नशः॥ ४४२॥
दशमूलस्य निर्यूहः कट्फलादि रजो युतः।

तुल्यार्द्रकरसो पेतो मृत्युकल्पं ज्वरं जयेत् ॥ ४४३ ॥
पञ्चमूली किरातादिगणो योज्य स्त्रिदोषजे ।
पित्तोत्कटे च मधुना कणया वा कफोत्कटे ॥ ४४४ ॥

इति चातुर्भद्रकपञ्चमूलम् ।

चिरज्वरे वातकफोल्वणे वा
त्रिदोषजे वा दशमूलमिश्रः ।
किराततिक्तादिगणः प्रयोज्यः
शुद्धर्थिने वा त्रिवृता विमिश्रः ॥ ४४५ ॥

दशमूलीशठीशृङ्गी पौष्करं स दुरालभम् ।
भार्गी कुटजबीजञ्च पटोलं कटुरोहिणी ॥ ४४६ ॥
अष्टादशाङ्ग इत्येषः सन्निपातज्वरापहः ।
कासहृद्ग्रहपार्श्वार्तिश्वासहिक्का वमीहरः ॥ ४४७ ॥

इत्यष्टादशाङ्गः ।

दशमूली कषायन्तु पुष्कराह्वकणायुतम् ।
सन्निपातज्वरे देयं श्वासकासक्षयान्विते ॥ ४४८ ॥
बृहत्यौ पुष्करं भार्गीशठीशृङ्गी दुरालभा ।
वत्सकस्य च बीजानि पटोलं कटुरोहिणी ॥ ४४९ ॥
बृहत्यादिगणः प्रोक्तः सन्निपातज्वरापहः ।
श्वासादिषु च सर्वेषु हितः सोपद्रवेषु च ॥ ४५० ॥

इति बृहत्यादिः ।

शठीपुष्करमूलं च व्याघ्रीशृङ्गीदुरालभा ।
गुडूचीनागरं पाठा किरातं कटुरोहिणी ॥ ४५१ ॥
एष शठ्यादिको वर्गः सन्निपातज्वरापहः ।
कासहृद्ग्रहपार्श्वार्तिश्वासे तन्द्रासु शस्यते ॥ ४५२ ॥

इति शठ्यादिः ।

शठीपुष्करमूलन्तु गुडूची विश्वभेषजम्।
त्रिकण्टकं त्रायमाणा पिप्पली स दुरालभा॥ ४५३॥
व्याघ्री पर्पटकं रास्नाऽभया कटुकरोहिणी।
देवदारुवचाभार्गी सम भागानि कारयेत्॥ ४५४॥
एष शठ्यादिको वर्गः सन्निपातज्वरापहः।
कासं श्वासं दिवानिद्रां रात्रौ जागरणं तथा।
मुखशोषं तृषां दाहं त्रिदोषश्च नियच्छति॥ ४५५॥
इति बृहच्छठ्यादिः।
पित्ताधिक्ये तु शठ्यादिर्वृहत्यादिः कफाधिके।
वातोत्तरे सन्निपाते कट्फलादिः प्रशस्यते॥ ४५६॥
कट्फलाब्दवचापाठापुष्कराजाजिपर्पटैः।
देवदार्वभया शृङ्गीकणा भूनिम्बनागरैः॥ ४५७॥
भार्गीकलिङ्गकटुकाशठिकत्तृणधान्यकैः।
समांशैः साधितः क्वाथो हिंग्वार्द्रकरसैर्युतः॥ ४५८॥
कर्णमूलोद्भवं शोथं हन्तिमन्या गलाश्रयम्।
कफवातज्वरं श्वासं कासं हिक्कां हनुग्रहम्॥ ४५९॥
दशमूलयुतो ह्येष सन्निपातज्वरं जयेत्।
अभिन्यासं समस्तञ्च कट्फलादिर्नियच्छति॥ ४६०॥
इति कट्फलादिः।
दारुनागरभूनिम्ब धान्यतिक्ता कलिङ्गजैः।
गजाह्वा दशमूलाब्दैर्मृत्युकल्पं ज्वरं जयेत्॥ ४६१॥
अष्टादशाङ्ग इत्येष सन्निपातज्वरापहः।
कासहृद्ग्रहपार्श्वार्त्ति श्वासहिक्कावमीर्हरेत्॥ ४६२॥
इति अष्टादशाङ्गः।
गुडूचीचन्दनं पद्मनागरेन्द्रयवासकम्।

अभयारग्वधोशीरपाठा धान्याब्दरोहिणी ॥ ४६३ ॥
कषायं पाययेदेतत्पिप्पलीचूर्णसंयुतम्।
तन्द्रा कासज्वरश्वासपिपासा दाहनाशनः ॥ ४६४ ॥
विण्मूत्रानिलविष्टम्भ त्रिदोषप्रभवस्य च।
गुडूच्यादिगणो ह्येष पाचनो दीपनः परः ॥ ४६५ ॥
इति गुडूच्यादिः।
अमृता दशमूलीभ्यां साधितं विधिवज्जलम्।
सन्निपातज्वरं हन्यात्त्रयोदशविधं नृणाम् ॥ ४६६ ॥
विषशुण्ठी दशमूली छिन्नापाठा च पिप्पलीन्द्रयवैः।
स किराततिक्तवासा शमयति हतौजसं सद्यः ॥ ४६७ ॥
चूषणदशमूलशुण्ठी भार्गी छिन्नोद्भवोद्भवः क्वाथः।
पीतः शमयति सहसा ज्वरमुग्रं सन्निपाताख्यम् ॥ ४६८ ॥
द्विपञ्चमूलीषड्ग्रया विश्वाग्टभ्रनखीद्वयम्।
कफवातहरः क्वाथः सन्निपातहरः परः ॥ ४६९ ॥
सिंहास्य पर्पटारिष्ट यष्टिधान्यकनागरम्।
दारुयगन्धेन्द्रयवाः श्वदंष्ट्रा ग्रन्थिकं तथा ॥ ४७० ॥
एषां कषायमह्नि सन्निपातज्वरे पिबेत्।
श्वासातिसारकासघ्नं शूलारुचिहरं परम् ॥ ४७१ ॥
कट्फलं त्रिफला दारु चन्दनं स पर्पटकम्।
कटुकं पद्मकोशीरं विषचेलार्पिकं जलम् ॥ ४७२ ॥
तत्सन्निपातदाहघ्नं पानमात्रे प्रपूजितम्।
दीर्घकालप्रयुक्तानां ज्वराणाममृतोपमम् ॥ ४७३ ॥
स मुस्तं पञ्चमूलञ्च दद्याद्वातोत्तरं गदे।
भृशोष्णं वा सुखोष्णं वा दृष्ट्वा दोष बलाबलम् ॥ ४७४ ॥
कफोत्तरे बृहत्यादिगणस्य दशमूलजः।

परूपकाणि त्रिफला देवदारु स कट्फलम्।
पित्तोत्तरे नृणामेतत् सन्निपाते चिकित्सितम्॥ ४७५॥
मुस्ता पर्पटकोशीर देवदारु महौषधम्।
त्रिफला धन्वयासश्च नीलीकाम्पिल्लकं त्रिवृत्॥ ४७६॥
किराततिक्तकं पाठा बला कटुकरोहिणी।
मधुकं पिप्पलीमूलं मुस्ताद्यो गण उच्यते॥ ४७७॥
अष्टादशाङ्गमुदकं सन्निपातज्वरापहम्॥ ४७८॥
पित्तोत्तरे सन्निपाते हितमुक्तं मनीषिभिः।
मन्या स्तम्भ उरो घाते हनुस्तम्भे शिरोगदे॥ ४७९॥

इत्यष्टादशाङ्गः।

व्योषाब्द त्रिफलारिष्ट पटोलो तिक्तवत्सकैः।
स भूनिम्बामृतापाठैस्त्रिदोषज्वरजिज्जलम्॥ ४८०॥
विल्वकं त्रिवृता दन्ती स मूलं चतुरङ्गुलम्।
पक्वं कषायं विशाल्यनीलीचूर्णविमिश्रितम्॥
स सर्पिष्कं पिबेत्तूर्णं सन्निपाते विरेचनम्॥ ४८१॥
कम्पप्रलापनं यस्य संज्ञानाशश्च दारुणः।
रसैश्च लाववर्तैश्च कलिङ्गैः शशतित्तिरैः॥ ४८२॥
तर्पयेत्प्राक् पुराणेन सर्पिषाऽभ्यंजयेदपि।
बला रास्ना गुडूच्याद्यैस्तैलैश्च परिषेचयेत्॥ ४८३॥
आचितामाशयकफे सन्निपातज्वरे दृढे।
शान्ते प्रवशं तस्याशुतन्द्रासमुपजायते॥ ४८४॥
अभिद्रवरसक्षीर दिवास्वप्ननिषेवणात्।
दुर्बलस्याल्पवातस्य जन्तोः श्लेष्मा प्रकुप्यति॥ ४८५॥
वायुमार्गं समावृत्य धमनीरनुसृत्यसः।
तन्द्रां सुघोरां जनयेत्तस्या वक्ष्यामि लक्षणम्॥ ४८६॥

उन्मीलित विनिर्भुग्ने परिवर्त्तिततारके।
भवतस्तस्य नयने लुलिते चलपक्ष्मणी ॥ ४८७ ॥
विवृत्ताननदन्तौष्टं मुहुरुत्तानशायिनाम्।
पिच्छिलोच्छिन्न तन्तुश्च कण्ठे श्लेष्मास्य गच्छति ॥ ४८८ ॥
कण्ठमार्गविरोधश्च वैकृतं चोपजायते।
सोऽर्वाक्त्रिरात्रं साध्यः स्यादसाध्यस्तु ततः परम् ॥ ४८९ ॥
ज्योतिष्मत्यास्तथा तैलं मूलं पिण्डारकस्य च।
तन्द्रा विनाशनं श्रेष्टं नस्यकर्मणि योजितम् ॥ ४९० ॥
सैन्धवं श्वेतमरिचं सर्षपः कुष्टमेव च।
मूत्रेण पिष्टा वस्तस्य नस्यं तन्द्राविनाशनम् ॥ ४९१ ॥
असुराह्वयगन्धस्य विट्चूर्णमधुसंयुतम्।
अञ्जनाद्बोधयेन्मुग्धं तन्द्रितं सान्निपातिनम् ॥ ४९२ ॥
जातीपुष्पं प्रवालञ्च मरिचं रोहिणी वचा।
सैन्धवं वस्तमूत्रेण तन्द्रानाशनमुत्तमम् ॥ ४९३ ॥
अयोरजः श्वेतलोध्रमञ्जनं मरिचं तथा।
गोपित्तेन समायुक्तं तन्द्रानाशनमुत्तमम् ॥ ४९४ ॥
सन्निपातज्वरोत्पन्नां युक्त्यातन्द्रां जयेद्भिषक्।
उपद्रवः कष्टतमो ज्वराणां सविशेषतः ॥ ४९५ ॥
वयश्च कुपितादोषा उरः स्रोतोऽनुगाश्रयम्।
आमाविबद्धाशयितावुद्धीन्द्रियमनोऽनुगाः ॥ ४९६ ॥
जनयन्ति महाघोरमभिन्यासं ज्वरं नृणाम्।
प्रस्तब्धगात्रकृत्ववाग्मोहादृष्टचेष्टो न काङ्क्षते ॥ ४९७ ॥
न च दृष्टीर्भवे तस्य समर्थारूपदर्शने।
न च गन्धरसस्पर्शं शब्दान्वाप्यवबुध्यते ॥ ४९८ ॥
शिरो लोठयतेऽभीक्ष्ण महारवाभि नन्दति।

कूजते तुद्यते चैवं प्रतिपत्तिश्च हीयते ॥ ४९८ ॥
कालं प्रभाषते किञ्चिदभिन्यासः स उच्यते ।
प्रत्याख्येयः सभूयिष्टं कश्चिदेवाल सिध्यति ॥ ५०० ॥
सप्ताहं वादशाहं वा द्वादशाहमथापि वा ।
ते घ्नन्ति संहिताधातोः पाकान्मुञ्चति चान्यथा ॥ ५०१ ॥
एतत्तु हारित्तस्त्वाहुर्घ्नन्ति मुञ्चति वानरम् ।
दिवसैर्द्विगुणैः सप्त नवैकादशभिः क्रमात् ॥ ५०२ ॥
दुर्गेम्भसि यथा मग्नन् भाजनं त्वरया बुधः ।
गृह्णीयात्तलमप्राप्तं तथाभिन्यासपीडितम् ॥ ५०३ ॥
निद्रोपेतमभिन्यासं चिप्रं विद्याद्धतौजसम् ॥ ५०४ ॥
कारवीपुष्करैरण्डत्रायन्तीनागराम्रृता ।
दशमूलीशठीशृङ्गीवासा भार्गीपुनर्नवा ॥ ५०५ ॥
तुल्यामूत्रेण निष्क्वाथ्य पीतो स्त्रोतो विशोधनः ।
अभिन्यासज्वरायासमाशुघ्नन्ति समुद्धतम् ॥ ५०६ ॥
मातुलुङ्गाऽश्मभिद्बिल्व व्याघ्री पाठा रुबूकजः ।
क्वाथो लवणमूत्राढ्योऽभिन्यासानाह शूलनुत् ॥ ५०७ ॥
व्याघ्रीदुरालभाभार्गी शठीशृङ्गी सपौष्करम् ।
पक्वाम्बु स्ने मद्धदेयमभिन्यासप्रशान्तये ॥ ५०८ ॥
भार्गीपुष्करमूलञ्च रास्नाबिल्वं समुस्तकम् ।
नागरं दशमूलञ्च पिप्पलीविपसाधितम् ॥ ५०९ ॥
हिम्वार्द्रकरसो येत्त पिप्पलीचूर्णसंयुतम् ।
सन्निपातज्वरं घोरमभिन्यासञ्च दारुणम् ।
हृत्पार्श्वशूलमानाहं सद्यः पीतं नियच्छति ॥ ५१० ॥
वीजपूरकबिल्वाश्मभेदकं बृहतीद्वयम् ।
सकाशकं तथैरण्डं जले चाष्टगुणे शृतम् ॥ ५११ ॥

पक्वागो मूत्रसंयुक्तं विडसौवर्चलान्वितम्।
हृद्वस्तिशूलमानाहमभिन्यासे ज्वरे हितम्॥ ५१२॥
दन्तीं द्रवन्तीं वृहतीमेरण्डं बीजपूरकम्।
श्यामां व्याघ्रीञ्च निष्क्वाथ्याभिन्यासे बद्धवर्चसि॥ ५१३॥
सिंहीयाग्रमृताद्राक्षा अजाजी सकटुत्रिकम्।
शृङ्गीविडङ्गञ्च समं पक्वाविस्राव्यसाधयेत्॥ ५१४॥
घृताक्तैःस्तण्डुलैर्भृष्टैः पेयामुष्णां ज्वरीपिबेत्।
हिक्काश्वासौ च कासौ च तथाभिन्यासपीडितः॥
विबद्धवातविण्मूत्रः पानमेतत्प्रयोजयेत्॥ ५१५॥
वृहतीपौष्करं भार्गी शठीशृङ्गीदुरालभा।
पक्वापानं प्रशसन्ति श्लेष्मा तेनोपशाम्यति॥ ५१६॥
त्रिवृद्विशालाकटुकात्रिफलारग्वधैः कृतः।
सक्षारो भेदनः क्वाथः पेयः सर्वज्वरापहः॥ ५१७॥
तिक्ताभयात्रिवृद्दन्तीफलं वै राजवृक्षजम्।
क्षाराढ्यः सैन्धवो पेतः क्वाथो भेदी ज्वरापहः॥ ५१८॥
आर्द्रकस्वरसो पेतं सिन्धूत्थं सकटुत्रिकम्।
प्रबोधाय मुखे दद्यात्तस्यच्च मरिचेन वै॥ ५१९॥
मातुलुङ्गार्द्रकरसं कोष्णाम्लिलवणान्वितम्।
अन्यद्वा सिद्धविहितं नस्यं तीक्ष्णं प्रयोजयेत्॥ ५२०॥
शिरीषबीजगोमूत्रकृष्णामरिचसैन्धवैः।
अञ्जनं स्यात्प्रबोधाय सरसो न शिलावचैः॥ ५२१॥
शिरीषबीजं मरिचं वस्तमूत्रेण तत्समम्।
अञ्जनं तदभिन्यासे सञ्ज्ञा बोधनमिष्यते॥ ५२२॥
मातुलुङ्गरसं तस्य हिङ्गुशुण्ठीयुतं मुखे।
दद्यात्प्रधमनं तीक्ष्णं कटुतिक्तोपसंहितम्॥ ५२३॥

पटोलपत्रं सुपुवीबृहतीकण्टकारिका।
मरिचं पिप्पलीविल्वं चिरविल्वं स चित्रकम्॥ ५२४॥
करञ्जवीजमञ्जिष्टा त्रायन्तीविश्वभेषजम्।
गलप्रबोधनं श्रेष्टमभिन्यास ज्वरापहम्॥ ५२५॥
करञ्जो विल्वमञ्जिष्टे त्रायन्त्यग्निः पटोलकम्।
बृहत्यौ सुपुवीव्योषं क्वाथः स्याद्गलशोधनः॥ ५२६॥
चिकित्सिते कृतेप्येवं यस्य संज्ञा न जायते।
ललाटे पादयोर्वापितस्य दाहः प्रशस्यते॥ ५२७॥
सन्निपातज्वरस्यान्ते कर्णमूले सुदारुणः।
शोथः सञ्जायते तेन कश्चिदेवविमुच्यते॥ ५२८॥
तं जयेच्छोणितस्रावैः सर्पिः पानप्रलेपनैः।
प्रदाहैः कफपित्तघ्नैः वमनैः कवलग्रहैः॥ ५२९॥
जीर्णानां रक्तशालिनां ज्वरघ्नक्वाथसाधितः।
प्रस्तस्त्वोदनोहितस्त्रिः कार्य्यो यूषादिकोपि वा॥ ५३०॥
स चेज्जीर्यत्यविघ्नेन ज्वरीजीवेत्तदा ध्रुवम्॥ ५३१॥
गैरिकं पांशुकं शुण्ठी वचा कट्फलकाञ्जिकैः।
कर्णशोथहरो लेपः सन्निपातज्वरे भृशम्॥ ५३२॥
अभिघाताभिचाराभ्यामभिशापाभिषङ्गतः।
आगन्तुर्जायते दोषैर्यथास्वन्तं विभावयेत्॥ ५३३॥
श्यावास्यताविषकृते दाहोऽतीसार एव च।
भक्तारुचिः पिपासा च तोदश्च सह मूर्च्छया॥ ५३४॥
औषधीगन्धजे मूर्च्छा शिरो रुग्वमथुस्तथा॥ ५३५॥
कामजे चित्तविभ्रंशस्तन्द्रालस्यमभोजनम्।
हृदये वेदना चास्यं गात्रञ्च परिशुष्यति॥ ५३६॥
भयात् प्रलापः शोकाच्च भवेत्कोपाच्च वेपथुः।

अभिचाराभिशापाभ्यां मोहस्तृष्णा च जायते।
भूताभिषङ्गादुद्वेगो हास्य रोदनकम्पनम्॥ ५३७॥
कामशोकभयाद्वायुः क्रोधात्पित्तं त्रयो मलाः।
भूताभिषङ्गात् कुप्यन्ति भूतसामान्यलक्षणाः॥ ५३८॥
अभिचाराभिशापोत्थौ ज्वरौ होमादिभिर्जयेत्।
दानस्वस्त्ययनातिथ्यैरुत्पातग्रहपीड़जौ॥ ५३९॥
भूतविद्यासमुद्दिष्टैर्बन्धावेशनताड़नैः।
जयेद्भूताभिषङ्गोत्थं मनःस्वास्थ्यैश्च मानसैः॥ ५४०॥
औषधीगन्धविषजौ विषपित्तप्रबाधनैः।
जयेत्कषायैर्मतिमान् सर्वगन्धकृतैर्भिषक्॥ ५४१॥
क्रोधजे पित्तजित्काम्ये नार्य्याः सद्वाक्यमेव च।
आश्वासे नेष्टलाभेन वायोः प्रशमनेन च।
हर्षणैश्च शमं यान्ति कामशोकभयज्वराः॥ ५४२॥
कामात् क्रोधज्वरो नाशं क्रोधात्कामसमुद्भवः।
याति ताभ्यामुभाभ्याञ्च भयशोकसमुत्थितः॥ ५४३॥
विसर्पेण ज्वरो यश्च यश्च विस्फोटकज्वरः।
तत्रादौ सर्पिषः पानं कफपित्तोत्तरे भवेत्॥ ५४४॥
निम्बदारुकषायं वा हितं सौ मनसं तथा।
व्यमद्ययोत्थे भुञ्जीतघृताभ्यक्तं रसौदनम्॥ ५४५॥
रोगोत्थानप्रकोपाभ्यां यो ज्वरो जायते नृणाम्।
शमयेत्पाचयेच्चापि यथा योगैश्चिकित्सकः॥ ५४६॥
स्त्रीणामप्यप्रजातानां प्रजातानां तथाऽहितैः।
स्तन्यावतरणे चैव ज्वरो दोषैः प्रकुप्यति।
तस्य प्रशमनं कार्य्यं तथा दोषविधानतः॥ ५४७॥
अभिघातज्वरे कुर्य्यात् क्रियामुष्णविवर्जिताम्।

कषायमधुरस्निग्धां यथा दोषमथापि वा ॥ ५४८ ॥
अभिघातज्वरो नश्येत्पानाभ्यङ्गेन सर्पिषः।
मध्यैर्व्यैश्च सात्म्यैश्च तथा मांसरसौदनैः ॥ ५४९ ॥
व्यधबन्धश्रमात्यध्वभङ्गभ्रंशसमुद्भवान्।
ज्वरानुपाचरेत्पूर्वं सुस्निग्धक्षीरभोजनैः ॥ ५५० ॥

इत्यागन्तुकज्वरचिकित्सा।

दोषोऽल्पो हितसम्भूतो ज्वरोत्सृष्टस्य वा पुनः।
धातुमन्यतमं प्राप्य करोति विषमज्वरम् ॥ ५५१ ॥
सन्ततो रसधातुस्थः सततो रक्तधातुगः।
भिषजा चैव विज्ञेयः सोऽन्येद्युः पिशिताश्रितः ॥ ५५२।
मेदोगतस्तृतीयेऽह्नि ह्यस्थिमज्जागतः पुनः।
कुर्य्याच्चातुर्थिकं घोरमन्तकं रोगसङ्करम् ॥ ५५३ ॥
सप्ताहं वा दशाहं वा द्वादशाहमथापि वा।
सन्तत्यायोऽविसर्गी स्यात्सन्ततः स निगद्यते ॥ ५५४ ॥
अहोरात्रे सततको द्वौ कालावनुवर्त्तते।
अन्येद्युष्कस्त्वहोरात्रादेककालं प्रवर्त्तते ॥ ५५५ ॥
तृतीयकस्तृतीयेऽह्नि चतुर्थेऽह्नि चतुर्थकः।
केचिद्भूताभिषङ्गोत्थं ब्रुवते विषमज्वरम् ॥५५६॥
यस्मादनियतात्कालाच्छीतोष्णाभ्यान्तथैव च।
वेगतश्चापि विषमः स ज्वरो विषमः स्मृतः ॥ ५५७ ॥
कफपित्तात्त्रिकग्राही पृष्ठाद्वातकफात्मकः।
वातपित्ताच्छिरोग्राही त्रिविधः स्यात्तृतीयकः ॥ ५५८ ॥
चातुर्थिको दर्शयति प्रभावं द्विविधं ज्वरः।
जङ्घाभ्यां श्लैष्मिकः पूर्वं शिरसोऽनिलसम्भवः ॥ ५५९ ॥

विषमज्वर एवान्यथातुर्थिकविपर्ययः ।
अस्थिमज्जागतैर्दोषैश्चातुर्थिकविपर्ययः ।
स मध्ये ज्वरयत्यह्नोह्यादावन्ते विमुञ्चति ॥ ५६० ॥
समौ वातकफौ यस्य हीनपित्तस्य देहिनः ।
भवेत्तीक्ष्णो मृदुर्वापि ज्वरस्तस्य तु रात्रिजः ॥ ५६१ ॥
ज्वरास्तु विषमाः सर्वे सन्निपातसमुद्भवाः ।
यथोल्वणस्य दोषस्य तेषां कार्य्यं चिकित्सितम् ॥ ५६२ ॥
विषमज्वरनाशाय चिकित्साबक्ष्यतेऽधुना ।
वातप्रधानं सर्पिर्भिर्बस्तिभिः सानुवासनैः ।
स्निग्धोष्णै रन्नपानैश्च शमयेद्विषमज्वरम् ॥ ५६३ ॥
विरेचनेन पयसा सर्पिषा संस्कृतेन च ।
विषमं तिक्तशीतैश्च ज्वरं पित्तोत्तरं जयेत् ॥ ५६४ ॥
वमनं पाचनं रूक्षमन्नपानं विलङ्घनम् ।
कषायोष्णन्तु विषमे ज्वरे शस्तं कफोत्तरे ॥ ५६५ ॥
त्रायन्तीकटुकानन्ता सारिवाभिः शृतं जलम् ।
सन्तताख्ये ज्वरे देयं वातादीनां निवृत्तये ॥ ५६६ ॥
द्राक्षापटोलनिम्बाब्दशक्राह्वात्रिफलाशृतम् ।
जलं जन्तुः पिबेच्छीतमन्ये द्युर्ज्वरशान्तये ॥ ५६७ ॥
पटोलारिष्टमद्वीकाशम्याकं त्रिफला वृषम् ।
क्वाथ ऐकाहिकं हन्ति शर्करामधुयोजितः ॥ ५६८ ॥
षोडशाष्टचतुर्भागं वातपित्तकफार्त्तिषु ।
क्षौद्रं कषाये दातव्यं विपरीता तु शर्करा ॥ ५६९ ॥
पटोलेन्द्रयवानन्ताघथ्यारिष्टामृताजलम् ।
ज्वरं सततकं पानं निहन्त्याशुप्रयोजितम् ॥ ५७० ॥
उशीरं चन्दनं मुस्तं गुडूचीधान्यनागरम् ।

अम्भसा क्वथितः पेयः शर्करामधुयोजितः।
ज्वरे तृतीयके पुंसां तृष्णादाहसमन्विते ॥ ५७१ ॥
स्थिरासामलकीदारुशिवाह्वयमहौषधैः।
शृतं शीतं जलं दद्यात्सितामधुविमिश्रितम्।
चातुर्थिके ज्वरे तीव्रे मन्दे चैवाथ पावके ॥ ५७२ ॥

शैलूषमण्डनरजः वयसानुरूपं
शुभ्राङ्गवत्ससुरभीपयसानिपीतम्।
आदित्यवारभवपालदिने नरेण
चातुर्थिकं सुचिरजं जयति चणेन ॥ ५७३ ॥

कालिङ्गकः पटोलस्य पत्रं कटुकरोहिणी।
पटोलं शारिवा मुस्तं पाठाकटुकरोहिणी ॥ ५७४ ॥
निम्बः पटोलं त्रिफला मृद्वीका मुस्तवत्सकौ।
किराततिक्तममृता चन्दनं विश्वभेषजम् ॥ ५७५ ॥
गडूच्यामलकं मुस्तमर्धश्लोकसमापनाः।
कषायाः शमयन्त्याशु पञ्च पञ्चविधं ज्वरम् ॥ ५७६ ॥
कल्कः शिरीषपुष्पस्य रजनीद्वयसंयुतः।
नस्यं सर्पिः समायोगाज्ज्वरं चातुर्थिकं जयेत् ॥ ५७७ ॥
अगस्त्यपत्ररसेन नस्यं निहन्ति चातुर्थिकमुग्रवीर्यम् ॥५७८॥
सहदेवायामूलं विधिना कण्ठनिबद्धमपहरति।
एक द्वित्रि चतुर्भिर्दिवसैर्भूतज्वरं पुंसाम् ॥ ५७९ ॥
सितवर्षाभूमूलं पयसा पीतं च प्रैत्तिकं जयति।
चातुर्थिकं सुचिरजं ताम्बूले नैव भक्षणादथवा ॥ ५८० ॥
कृष्णामलकीरामठ दार्वी वचा राजसर्षपरसोनैः।
छागलमूत्र सुपिष्टैर्नस्यं त्वैकाहिकादिघ्नम् ॥ ५८१ ॥
वन्दाकं विषजातञ्च तक्रेण विषमज्वरे।

मथितादधिमण्डेन हिंगुना च प्रयोजयेत् ॥ ५८२ ॥
पिप्पली शर्करा चौद्रं शृतं चीरं घृतं नवम्।
खजेन मथितं पेयं विषमज्वरनाशनम् ॥ ५८३ ॥

चीराविका रजनिमर्दक मचयाणाम्
मूलं ज्वरापहमवश्यमिदं शिखायाम्।
बद्धं दिवाकरदिनेष्वथवाष्टमीषु
रात्रिज्वरं हरति रञ्जितसूत्रबद्धम् ॥ ५८४ ॥

घृतं पयः शर्करा च पिप्पल्यो मधुसर्पिषा।
पञ्चसारमिदं देयं मथितं विषमज्वरे ॥
चतचीणे चये कासे हृद्रोगे चापि शस्यते ॥ ५८५ ॥
मुस्तामलकगुडूची विश्वौषधि कण्टकारिका क्वाथः।
पीतः सकणाचूर्णः समधुविषमज्वरं हन्ति ॥ ५८६ ॥

रसोनकल्कं तिलतैलमिश्रं
योऽश्नाति नित्यं विषमज्वरार्त्तः।
प्रमुच्यते सोऽप्यचिराज्ज्वरेण
वातामयैश्चापि सुघोररूपैः ॥ ५८७ ॥

जीरकं गुडसंयुक्तं विषमज्वरनाशनम्।
अग्निमांद्यं जयेच्छीघ्रं वातरोगापहं मतम् ॥ ५८८ ॥
चीरेण पञ्चवृद्ध्या वा दुग्धान्नाशी कणां पिबेत्।
यावत्पूर्णं शतं तत्स्यात्तथा चैवापकर्षयेत्।
वातास्रश्वासपाण्डुर्शो गुल्मशोफोदरापहम् ॥ ५८९ ॥
विषमज्वरेषु कर्त्तव्यमूर्द्ध्वं चाधश्च शोधनम्।
शान्तिं नयेत् लिहन्नापि सचौद्रा विषमज्वरम् ॥ ५९१ ॥
सुरासमंडाः पानार्थं भच्यार्थं चरणायुधाः।
तित्तिराश्च यूमराश्च प्रयोज्या विषमज्वरे ॥ ५९२ ॥

अङ्गवङ्गकलिङ्गेषु सौराष्ट्रमगधेषु च।
वाराणस्याञ्च यद्वृत्तं तत्तदेकाहिके स्मरेत्॥
योऽसौ सरस्वतीतीरेऽपुत्रस्तापसो मृतः।
तस्मै तिलोदकं दद्यान्मुञ्चत्येकाहिको ज्वरः॥ ५९४॥
एतमन्त्रेण वाश्वत्थपत्रहस्तः प्रतर्पयेत्॥ ५९५॥
आस्फोटजसहस्रेण दलेन सुकृतां पिबेत्।
पेयां घृतप्लुता जन्तुश्चातुर्थिकाहरीं त्र्यहम्॥ ५९६॥
सैन्धवं पिप्पलीनाञ्च तण्डुलाः समनःशिला।
नेत्राञ्जनं तैलपिष्टं शस्यते विषमज्वरे॥ ५९७॥
उर्णनाभिस्य जालेन कज्जलं ग्राहयेच्छनैः।
अञ्जयेन्नेत्रयुगलं द्व्याहिकन्तु ज्वरं जयेत्॥ ५९८॥
निम्बपत्रं वचा कुष्टं पथ्यासिद्धार्थकं घृतम्।
विषमज्वरनाशाय गुग्गुलुश्चेति धूपनम्॥ ६००॥
वैडालं वा शकृच्छ्रेष्टं वेपमानस्य धूपने।
सहदेवी वचाभद्रानाकुलीभिः प्रधूपनम्।
प्रदेहोद्वर्त्तनं कुर्यादेभिर्वा ज्वरशान्तये॥ ६०१॥
मयूरचन्द्रकैर्धूपः सर्वज्वरग्रहापहः॥ ६०२॥
पलंकषा वचा कुष्टं निम्बपत्रयवैर्घृतैः।
पथ्यासिद्धार्थकैर्धूपः शस्तः सर्वज्वरापहः॥ ६०३॥
सुरध्याम वचा सर्जनिम्बार्कागुरुदारुभिः।
सर्वज्वरहरो धूपः श्रेष्ठोयमपराजितः॥ ६०४॥
रुद्रजटागोश्रृङ्गं विडालविष्टोरगस्य निर्मोकः।
मदनफलभूतकेश्यौ वंशत्वग्द्रुनिर्माल्यम्॥ ६०५॥
घृतयवमयूरचन्द्रच्छागलकरोमाणि सर्षपाः सवचाः।
द्विगुणवास्थि मरिचाः समभागाः छागमूत्रसंपिष्टाः॥ ६०६॥

धूपनविधिना शमयन्त्येते सर्वान् ज्वरान्नियतम् ।
ग्रहडाकिनीपिशाचप्रेतविकारानयं धूपः ॥ ६०७ ॥

इति माहेश्वरधूपः ।

ज्वरवेगस्य कालञ्च चिन्तयन् ज्वर्य्यते तु यः ।
तस्येष्टै रङ्गतैर्वापि विषयैर्नाशयेत् स्मृतिम् ॥ ६०८ ॥
सततं विषमं वापि क्षीणस्य सुचिरोत्थितम् ।
ज्वरं सभोजनैः पथ्यैः ज्वरघ्नैः समुपाचरेत् ॥ ६०९ ॥
ज्वराः कषायैर्वमनैर्लङ्घनैर्लघुभोजनैः ।
रूक्षस्य ये न शाम्यन्ति सर्पिस्तेषां भिषङ्मतम् ॥ ६१०
बलाग्निमन्यत्रिफला क्वाथेदंशाष्टतं पचेत् ।
तिल्वका वापमेतद्धि विषमज्वरनाशनम् ॥ ६११ ॥
चन्दनं चित्रकं सिंही वत्सकं मुस्तनागरे ।
कटुका त्रायमाणा च धान्यूशीरे हिमारिवे ॥ ६१२ ॥
द्राक्षाऽर्द्धपलमात्राणि सौम्यवारेषु संहरेत् ।
क्षीराढकसमायुक्तां सर्पिषोऽर्द्धतुलां पचेत् ॥ ६१३ ॥
चातुर्थिकं हरेत्शीतमुन्मादं विषमज्वरम् ।
त्र्याहिकं श्वासकासौ च सर्वापस्मारमेव च ॥ ६१४ ॥

इति चन्दनाद्यं घृतम् ।

विडङ्ग मुस्तत्रिफला मञ्जिष्टा दाड़िमोत्पलैः ।
श्यामैलवालुकैर्लाभिः चन्दनामरदारुभिः ॥ ६१५ ॥
वर्हिष्ट कुष्टरजनी पर्णिनीशारिवाद्वयैः ।
हरेणुका त्रिवृद्दन्तीवर्चातालीशनागरैः ॥ ६१६ ॥
बला विशालाद्वदन्ती मालती पृष्टिपर्णिभिः ।
एतैश्च कार्षिकैः कर्ष्ये घृतप्रस्थं विपाचयेत् ॥ ६१७ ॥

चतुर्गुणेन पयसा द्विगुणेन जलेन च।
एतत्कल्याणकं नाम सर्पिः पक्कं त्रिदोषनुत्।
विषमज्वरश्वासकासगुल्मोन्मादज्वरापहम् ॥ ६१८ ॥

इति कल्याणघृतम्।

एतदेव हविः पक्कं जीवनीयोपसंस्कृतम्।
द्विपञ्च मूलकाथेन शतावर्य्याः रसेन च ॥ ६१९ ॥
चतुर्गुणेन पयसा महाकल्याणमुच्यते।
अपस्मारग्रहं शोषं क्लैब्यं कार्श्यमजीवितम् ॥ ६२० ॥
घृतमेतन्निहन्त्याशु ये चापि विषमज्वराः।
जीवनीयगणत्वेन काकोल्यादिर्गणग्रहः।
महाकल्याणके कार्य्यो घृते तु दशकार्षिकः ॥ ६२१ ॥

इति महाकल्याणकं घृतम्।

शुण्ठीकणा चित्रकञ्च चव्यं ग्रथिकमेव च।
कुर्य्यात्पञ्चपलान् भागानेकैकस्य तु कुट्टितान् ॥ ६२२ ॥
जलद्रोणे विपक्तव्यं यावत्पादावशेषितम्।
एतैस्तु पलिकैः कल्कैः सैन्धवेन समन्वितैः ॥ ६२३ ॥
षट्पलं नाम विख्यातं विषमज्वरनाशनम्।
श्वासकासाग्निदौर्बल्य प्रतिश्यायित्वमेव च।
प्लीहोर्ध्ववातश्वयथुपाण्डुरोगांश्च नाशयेत् ॥ ६२४ ॥

इति षट्पलं घृतम्।

नागरञ्चविकाचारः पिप्पलीमूलचित्रकम्।
कृष्णा च पलिकान् भागान् घृतप्रस्थे विपाचयेत् ॥ ६२५ ॥
शृङ्गवेररसं प्रस्थं मस्तुप्रस्थं तथैव च।
एकाह्विकं द्व्याह्विकञ्च त्र्याह्विकञ्च चतुर्थकम् ॥ ६२६ ॥

एतान् सर्वज्वरान् हन्ति स्थूलत्वं कुरुते भृशम्।
दुर्नाम श्वासकासघ्नं बलवर्णाग्निवर्द्धनम्॥ ६२७॥

इत्यमृतषट्पलं घृतम्।

सुवर्चिका नागरकुष्टमूर्व्वा
लाक्षा निशालोहितयष्टिकाभिः।
तैलं ज्वरे षड्गुण तक्रसिद्ध-
मभ्यञ्जनाच्छीतविदाहनुत्स्यात्॥ ६२८॥
दध्नः स सारकस्यात्र तक्रं कट्वरमिष्यते।

इति षट्कट्वरतैलम्।

शुक्तारनालैर्दधिमस्तु तक्रैः
फलाम्बुभागेन समं हि तैलम्।
क्षाथादिकल्कैर्मृदुवह्निसिद्ध-
मभ्यञ्जनं वातकफज्वराणाम्॥ ६२९॥
ऐकाहिकद्वित्रिचतुर्थकानां
मासार्द्धमासद्वयमासिकानाम्।
निवारणं तद्विषमज्वराणां
तैलन्तु षट्कट्वरकं महत्स्यात्॥ ६३०॥

—०—

## कल्को क्षाथादिगणो यथा।

क्षाथा चित्रकषड्ग्रन्था वासकं विषकाघनम्।
ग्रन्थिकैले घातिविषारेणुकश्च कटुत्रयम्॥ ६३१॥
यवानी गोस्तनी व्याघ्री भूनिम्बं विल्वचन्दनम्।
भार्गी श्यामा शिवा धात्री स्थिरामूर्वा सजीरका॥ ६३२॥

सर्षपं हिंगुकटुकी विड़ङ्गञ्च समांशकम्।
एषः लाक्षादिको नाम्ना गणो ज्वरविनाशनः॥ ६३३॥

इति महाषट्कट्वरतैलम्।

लाक्षारसाढके प्रस्थं तैलस्य विपचेद्भिषक्।
मस्त्वाढकं समादाय पिष्ट्वा चात्र विनिक्षिपेत्॥ ६३४॥
शतपुष्पा हरिद्रा च मूर्वा कुष्टं हरेणुकम्।
कटुकं मधुकं रास्ना अश्वगन्धा च दारु च॥ ६३५॥
समुस्तं चन्दनं चैव पृथगच्च समानकैः।
*द्रव्यैरेतैस्तु तत्सिद्धमभ्यङ्गं मारुतापहम्॥ ६३६॥*
विषमाख्यान् ज्वरान् सर्वानाश्वेव प्रशमं नयेत्।
कासं श्वासं प्रतिश्यायं कण्डूं दौर्गन्ध्य गौरवम्॥ ६३७॥
त्रिकपृष्टग्रहं शूलं गात्राणां स्फुटनं तथा।
पामा लक्ष्मीप्रशमनं सर्वग्रहनिवारणम्॥ ६३८॥
अश्विभ्यां निर्मितं सम्यक् तैलं लाक्षादिकं शिवम्॥

इति लाक्षादितैलम्।

सोमं सानुचरं देवं स मातृगणमीश्वरम्।
पूजयन् प्रयतः शीघ्रं मुच्यते विषमज्वरात्॥ ६३९॥
त्रिदोषजे ज्वरे ह्ये तदन्तर्वेगे च धातुगे।
लक्षणं मोक्षकाले स्यादन्यस्मिन् स्वेददर्शनम्॥ ६४०॥

इति विषमज्वरः।

नित्यं मन्दज्वरो रूक्षः शूनः कृच्छ्रेण सिध्यति।
स्तब्धाङ्गः श्लेष्मभूयिष्टो नरो वातवलासकी॥ ६४१॥
प्रलिंपन्निव गात्राणि धर्मेण गौरवेण च।
मन्दज्वरविलेपी च स शीतः स्यात्प्रलेपकः॥ ६४२॥

कफवातज्वरप्रोक्तां क्रियां वातवलासके।
प्रयुञ्जीत भिषक् श्लेष्मज्वरघ्नीन्तु प्रलेपके॥ ६४३॥
विदग्धे ज्वरसे देहे श्लेष्मपित्ते व्यवस्थिते।
तेनार्द्ध शीतलं देहमर्द्धमुष्णं प्रजायते॥ ६४४॥
कायेदुष्टं यदा पित्तं श्लेष्मा चान्ते व्यवस्थितः।
तेनोष्णत्वं शरीरस्य शीतत्वं करपादयोः॥ ६४५॥
काये श्लेष्मा यदा दुष्टः पित्तं चान्ते व्यवस्थितम्।
शीतत्वं तेन गात्राणामुष्णत्वं हस्तपादयोः॥ ६४६॥
त्वक्स्थौ श्लेष्मानिलौ शीतमादौ जनयतो ज्वरम्।
तयोः प्रशान्तयोः पित्तमन्ते दाहं करोति च॥ ६४७॥
करोत्यादौ तथा पित्तं त्वक्स्थं दाहमतीव च।
तस्मिन् प्रशान्ते त्वितरौ कुरुतः शीतमन्ततः॥ ६४८॥
द्वावेतौदाहशीतादि ज्वरौ संसर्गजौ मतौ।
दाह पूर्वस्तयोः कष्टः कृच्छ्रसाध्यतमश्च सः॥ ६४९॥
इति दाहशीतादिनिदानम्।

शुण्ठीवराब्दौ शीरैश्च पिबेत्तोयं सुसाधितम्।
दाहशीतज्वरहरं पाचनं भिषजां मतम्॥ ६५०॥
शीताभिभूते पुरुषे कुर्य्याच्छीतहरीं क्रियाम्।
दाहाभिभूते तु विधिं कुर्य्याद्दाहविनाशनम्॥ ६५१॥
मधुफाणितमिश्रेण निम्बपत्राम्भसापि वा।
दाहज्वरार्त्तं मतिमान् वामयेत् क्षिप्रमेव च॥ ६५२॥
उत्तानसुप्तस्य गभीरताम्रकांस्यादिपात्रं प्रणिधायनाभौ
तत्राम्बुधारा वहुला पतन्ती निहन्ति दाहं त्वरितं सुशीता॥
वाप्यः कमलहासिन्यो जलयन्त्रगृहाः शुभाः।
नार्य्यश्चन्दनदिग्धाङ्ग्यो दाहदैन्यहरामताः॥ ६५४॥

शतधौतघृताभ्यक्तं दिह्याद्वा यवशक्तुभिः।
कौलामलकसंयुक्तैः शूकधान्याम्लसंयुतैः॥ ६५५॥
अम्लपिष्टैः सुशीतैश्च फेनिलापल्लवैस्तथा।
अम्लपिष्टैः सुशीतैश्च पलाशतरुजैर्दिहेत्॥ ६५६॥
वदरीपल्लवोत्थेन फेनेनारिष्टकेन वा।
लिप्तेऽङ्गे दाहतृण्मूर्च्छासर्वथैव प्रशाम्यति॥ ६५७॥
दाड़िमं वदरं लोध्रं कपित्थं वीजपूरकम्।
पिष्ट्वा मूर्ध्निप्रलेपोऽयं पिपासादाहनाशनः॥ ६५८॥
कालीयवदरानन्ता यष्टीचन्दनकाञ्जिकैः।
स घृतैः स्याच्छिरोलेपस्तृष्णादाहविनाशनः॥ ६५९॥
स्वरसं मातुलुङ्गस्य संयुक्तं मधुसर्पिषा।
तालुशोषे प्रदेहोऽयं मूर्ध्निदाहे स सैन्धवः॥ ६६०॥
करवीरस्य पत्राणि चन्दनं सारिवातिलाः।
तृष्णाघ्नः शिरसाऽऽलेप आरणालेन पेषितः॥ ६६१॥
वारिशीतं मधुयुतमाकण्ठाद्वापिपासितम्।
वामयेत्पाययित्वा तु तेन तृष्णाप्रशाम्यति॥ ६६२॥
पद्मकोत्पलकह्लारमृणालविसपौष्करैः।
कुमुदोशीरमञ्जिष्ठा पद्मगैरिककट्फलैः॥ ६६३॥
शारिवाद्वयलोध्राब्द क्षीरीखर्जूरमुस्तकैः।
धात्रीशतावरीयुक्तैः क्वाथे कल्के प्रयोजितैः॥ ६६४॥
स लाक्षाम्भः पयः शुक्तस्वच्छकाञ्जिमस्तुभिः।
पक्वं तैलमिदन्नस्यं तृष्णादाहज्वरापहम्॥ २६५॥
पद्मप्रभृति यत्र स्युर्द्रव्याणि स्वेच्छसन्निधौ।
तत्र स्वेच्छसमान्याहुरर्वाक्स्याच्च चतुर्गुणम्॥ ६६६॥

इति पद्मकतैलम्।

शीतस्तस्य तु वातघ्नं सुखोष्णाम्भोऽवगाहनम्।
पट्टकौषेय वासोभिः पत्रोर्णादिभिरावृतः।
निवाते मन्दिरे स्थाप्य कृष्णागुरुसुधूपिते ॥ ६६७ ॥
कायस्थानाकुलीतिक्ता वयस्थापुरचोरकैः।
सहदेवी वचा कुष्टैः शीतघ्नैर्धूपलेपनैः ॥ ६६८ ॥
एतैरेवौषधैः पिष्टैर्लवणक्षारसंयुतैः।
साम्लैर्विपाचितं तैलमभ्यङ्गाच्छीतनाशनम् ॥ ६६८ ॥
सुखोष्णं मस्तु गोमूत्रशक्तैः सेकोऽति शीतहा।
सुरसार्जकशिग्रूणां प्रलेपो दलसम्भवः ॥ ६७० ॥

इति दाहशीतादियुक्तज्वरविधिः।

गुरुताहृदयोत्क्लेशः सदनं छर्द्यरोचकौ।
रसस्थे तु ज्वरे लिङ्गं दैन्यञ्चास्योपजायते ॥ ६७१ ॥
रक्तनिष्ठीवनं दाहो मोहः छर्द्दनविभ्रमौ।
प्रलापः पिडिकास्तृष्णा रक्तप्राप्ते ज्वरे नृणाम् ॥ ६७२ ॥
पिण्डिकोद्वेष्टनं तृष्णासृष्टमूत्रपुरीषता।
उष्मान्तर्दाहविक्षेपौ ग्लानिः स्यान्मांसगे ज्वरे ॥ ६७३ ॥
भृशं स्वेदस्तृषा मूर्च्छा प्रलापः छर्द्दिरेव च।
दौर्गन्ध्यारोचकौ ग्लानिर्मेदः स्थेचासहिष्णुता ॥ ६७४ ॥
भेदोऽस्थ्नां कूजनं श्वासो विरेकश्छर्द्दिरेव च।
विक्षेपणञ्च गात्राणामेतदस्थिगते ज्वरे ॥ ६७५ ॥
तमः प्रवेशनं हिक्का कासः शैत्यं वमिस्तथा।
अन्तर्दाहो महाश्वासो मर्म्मभेदश्च मज्जगे ॥ ६७६ ॥
मरणं प्राप्नुयात्तत्र शुक्रस्थानगते ज्वरे।
शेफसस्तब्धतामोक्षः शुक्रस्य तु विशेषतः ॥ ६७७ ॥

रसरक्ताश्रितः साध्यो मांसमेदो गतश्चयः ।
अस्थिमज्जगतः कृच्छ्रः शुक्रस्थोऽपि न जीवति ॥ ६७८ ॥

—०—

## अथ चिकित्सामाह ।

रसस्थे तु ज्वरे तस्मिन् कुर्य्याद्वमनलङ्घने ।
सेकः संशमनो लेपो रक्तमोक्ष मसृग्गते ॥ ६७९ ॥
तीक्ष्णं विरेकञ्च तथा कुर्य्यान्मांसगते ज्वरे ।
मेद स्थे मेदसो नाशमस्थिस्थे वातनाशनम् ॥ ६८० ॥
बस्तिकर्म्म प्रयोक्तव्यमभ्यङ्गोद्वर्त्तनं तथा ।
मज्जाशुक्रे क्रियानोक्ता मरणं तत्र भाषितम् ॥ ६८१ ॥
कटुकारोहिणी मुस्ता पिप्पलीमूलमेव च ।
हरीतकी च तत्तोयमामाशयगते ज्वरे ॥ ६८२ ॥

इति सप्तधातुगतचिकित्सा ।

वर्षा शरद्वसन्तेषु वाताद्ये. प्राकृतः क्रमात् ।
वैकृतोन्य. सदु साध्य' प्राकृतश्चानिलोद्भव. ॥ ६८३ ॥
वर्षासु मारुतो दुष्ट' पित्तश्लेष्मान्वितो ज्वरम् ।
कुर्य्यात्पित्तंञ्च शरदि तस्य चानुबलः कफः ॥ ६८४ ॥
तत्प्रकृत्या विसर्गाच्च तत्र नानशनाद्भयम् ।
कफो वसन्ते तमपि वातपित्तं भवेदनु ॥ ६८५ ॥
काले यथास्वं सर्व्वषां प्रवृत्तिर्वृद्धिरेव च ।
निदानोक्तानुपशयो विपरीतोपशायिता ॥ ६८६ ॥
अन्तर्दाहोऽधिका तृष्णा प्रलापः श्वसनं भ्रमः ।
सन्ध्यस्थि शूलमस्वेदो दोषवर्चो विनिग्रहः ॥ ६८७ ॥

अन्तर्वेगस्य लिङ्गानि ज्वरस्यैतानि लक्षयेत् ॥ ६८८ ॥
सन्तापो ह्यधिको वाह्य तृष्णादीनाञ्च मार्दवम् ।
वहिर्वेगस्य लिङ्गानि सुखसाध्यत्वमेव च ॥ ६८९ ॥
वलवत् स्वल्पदोषेषु ज्वर साध्योऽनुपद्रव ॥ ६९० ॥
ज्वरे तुल्यर्त्तु दूष्यत्वं प्रमेहे तुल्यदूष्यता ।
रक्तगुल्मे पुराणत्वं सुखसाध्यस्य लक्षणम् ॥ ६९१ ॥
न शाम्यति ज्वरो यस्य पश्चादूर्ध्वं शरीरिणाम् ।
मन्दवेगानुचारी च स ज्ञेयो जीर्णता गतः ॥ ६९२ ॥
त्रिसप्तरात्रात्तरुणं ज्वरमाहुर्मनीषिणः ।
मध्यं चतुर्दशाहन्तु पुराणमत उत्तरम् ॥ ६९३ ॥
पुराणेपिज्वरे दोषा यथपथ्यै: पुनस्तथा ।
लङ्घयेत्तत्र तु पश्चाद्यथोक्ता कारयेत् क्रियाम् ॥ ६९४ ॥

निदग्धिका नागरिकामृतानां
तोयं पिबेन्मिश्रितपिप्पलीकम् ।
जीर्णज्वरारोचक कासशूल-
श्वासाग्निमान्द्यार्दितपीनसे तु ॥

हन्त्यूर्ध्वजान् गदान् प्राय सायन्तिनोपयुज्यते ॥ ६९५ ॥
पिप्पलीचूर्णसंयुक्त क्वाथ छिन्नोद्भवोद्भवः ।
जीर्णज्वरकफध्वंसी पञ्चमूलकृतोऽथवा ॥ ६९६ ॥
पिप्पली मधुसंमिश्रं गुडूची स्वरसं पिबेत् ।
जीर्णज्वरकफप्लीहकासारोचकनाशनम् ॥ ६९७ ॥
जीर्णज्वरेऽग्निमान्द्ये च शस्यते गुडपिप्पली ।
कासाजीर्णारुचिश्वास हृत्पांडु कृमिरोगनुत् ॥ ६९८ ॥
अमृतायाः कषायन्तु शृतं चैव सुशीतलम् ।
मधुपादयुतं पीतं जीर्णज्वरहरं परम् ॥ ६९९ ॥

घनन्तं वालकं मुस्तं नागरं कटुरोहिणीम्।
सुखाम्बुना प्रागुदयात् पिबेद्यसमं रवे.।
एष सर्वज्वरं हन्ति दीपयत्याशु चानलम्॥ ७००॥
द्राक्षामृता शठी शृङ्गी मुस्तकं रक्तचन्दनम्।
नागरं कटुका पाठा भूनिम्बं सदुरालभम्॥ ७०१॥
उशीरं धान्यकं पद्मं वालकं कण्टकारिका।
पुष्करं पिचुमन्दश्च दशाष्टाङ्गमिति स्मृतम्॥ ७०२
जीर्णज्वरारुचिश्वासकासक्षययुनाशनम्॥ ७०३॥
इति द्राक्षादिक्काथ।

शिरोगौरवशूलघ्नमिन्द्रियप्रतिबोधनम्।
जीर्णज्वरे रुचिकरं दद्याच्छीर्षविरेचनम्॥ ७०४॥
मधुना वाथ तैलेन ज्वरघ्नेन प्रयोजयेत्॥ ७०५॥
रक्तकरवीरपुष्पं कुष्टं धात्रीफलं सधान्याम्बु।
कल्कः सुखोष्णो लेपो ज्वरेषु शिरसोरुजं जयति॥ ७०६॥
हिङ्गुसैन्धवसंयुक्तं नस्यं स्यादनवं घृतम्॥ ७०७॥
कणामधुकमृद्वीकावलाचन्दनशारिवा।
निःक्वाथ्य पयसा पीतो जीर्णज्वरविनाशन॥ ७०८॥
श्वेतजयन्तीमूलं विधिना बद्धं शिखान्तरे हन्ति।
जीर्णज्वरं नराणां खल इव दुरितेन चात्मानम्॥ ७०९॥
तिक्ता पर्पटभूनिम्बं मुस्तच्छिन्नरुहा पिबेत्।
अभ्यासेन जयत्येष ज्वरमामृत्युमातुर॥ ७१०॥
भावनं लङ्घनं चिन्ता व्यवायः शोकभीक्रुधः।
एभिरेव च निद्राया नाशः श्लेष्मातिसंचयात्॥ ७११॥
गुडं पिप्पलीमूलस्य चूर्णेनालोडितं लिहन्।
चिरादपि च सन्नष्टां निद्रामाप्नोति मानव॥ ७१२॥

सायं स्निग्धमशेषं क्षत्वा वार्त्ताकमेव पूर्वाह्ने ।
मधुयुतमश्नन् चिरानष्टामप्याप्नुया निद्राम् ॥ ३१३ ॥
वायसजङ्घामूलं मूलं वा शिरसिकाकमाच्याश्च ।
विष्टतं निद्राकरणं स्नुह्मूलं वाऽशितं सगुड़म् ॥ ३१४ ॥
निद्रानाशे प्रकर्त्तव्यं पादयोर्मृदुमर्दनम् ।
तिलतैलारनालाभ्यां शतधौतघृतेन च ॥ ३१५ ॥
छागक्षीरेण विजयां पिष्टापादौ प्रलेपयेत् ।
तेनायाति पुनर्निद्रा चिरकालगतापि वा ॥ ३१६ ॥
सुस्वरं श्रावयेद्वापि संगीतं मधुरस्वनम् ।
कर्णसंपूरणाद्वापि निद्रामाप्नोति मानवः ॥ ३१७ ॥
मरिचं मालया दृष्टा वास्तुर्थां जनमिच्छते ।
त्रिरात्रादपि सविष्टां निद्रामाप्नोति मानवः ॥ ३१८ ॥
रक्तकरवीरपुष्पं कुष्टं धात्रीफलं सधान्याम्बु ।
कल्कः सोष्णो लेपो ज्वरेषु शिरोरुजं हन्ति ॥ ३१९ ॥
क्षीणे कफे ज्वरे जीर्णे स्वल्पदोषे पिपासिते ।
दाहार्त्ते च पयो योज्यं तत्र वैत्तु विषं भवेत् ॥ ३२० ॥
श्वासात्कासाच्छिरः शूलात् पार्श्वशूलात्स पीनसान् ।
मुच्यते ज्वरितः पीत्वा पञ्चमूली शृतं पयः ॥ ३२१ ॥
द्रव्यादष्टगुणं क्षीरं क्षीरात्तोयं चतुर्गुणम् ।
क्षीरावशेषः कर्त्तव्यः क्षीरपाके त्वयं विधिः ॥ ३२२ ॥
सिताद्यविश्वखर्जूरीमृद्वीकाभिः शृतं पयः ।
शीतं मधुयुतं पीतं तृड्दाहज्वरनाशनम् ॥ ३२३ ॥
त्रिकण्टकबलाव्याघ्री गुड़नागरसाधितम् ।
वर्चो मूत्र विबन्धघ्नं शोथज्वरहरं पयः ॥ ३२४ ॥
पृश्नी च विल्वपर्णीमूपयोदकमेव च ।

क्षीरावशिष्टं तत्पीतं तद्धि सर्वज्वरापहम् ॥ ७२५ ॥
चूर्णं पिप्पलीकणा श्यामा त्रिफलानां सिता समम्।
भेदि कोष्ठरुजादाहगौरवज्वरनाशनम् ॥ ७२६ ॥
साधितं बिल्वपेशिभिर्मूलेनाऽमण्डकस्य च।
सद्यो हन्ति पयः पीतं ज्वरं सम्परिवर्त्तिकम् ॥ ७२७ ॥
मधुकारग्वधद्राक्षा त्रिफलायास फलत्रिकैः।
सपटोलैर्जलं भेदि ज्वरं हन्ति त्रिदोषजम् ॥ ७२८ ॥
ज्वरक्षीणस्य न हितं वमनं न विरेचनम्।
कामन्तु पायसं तस्य निरूहैर्वाहरेन्मलान् ॥ ७२९ ॥
अरोचके गात्र सादे वैव ऐर्यं शमलादिषु।
शान्तज्वरेपि शोध्यः स्यादनुबन्धभयान्नरः ॥ ७३० ॥
ज्वरोष्मणा ज्वरेऽजीर्णे वायुः कुप्यति रूक्षिते।
घृतं संशमनं तस्य दोषस्येवाम्बु वेश्मनः ॥ ७३१ ॥
कल्याणकं कटफलकं घृतं जीर्णज्वरे पिबेत् ॥ ७३२ ॥
कुक्कुटं तरुणं सद्यः हत्वा पादान्त वर्जितम्।
तस्य मांसस्य कुर्वीत शृतं पलशतं भिषक् ॥ ७३३ ॥
बृहती कण्टकारी च शृङ्गीकर्कटकस्य च।
बदराणि कुलित्थानि भार्ङ्गी ह्यामलिकी तथा ॥ ७३४ ॥
शठीपुष्करमूलञ्च पञ्चमूलं महत्तथा।
एतत्तुलाञ्च संगृह्य द्विद्रोणे त्वम्भसः पचेत् ॥ ७३५ ॥
पादशेषं परिस्राव्यकषायं ग्राहयेद्भिषक्।
षड्गुणं क्षीरमाहृत्य विपचेत्तु घृताढकम् ॥ ७३६ ॥
तत्र कल्कीकृतं दद्यादल्पं पञ्चमूलकम्।
तत्साधुसिद्धं विज्ञायशुभे भाण्डे निधापयेत् ॥ ७३७ ॥
तस्य काले पिबेन्मात्रां बलं दोषमवेक्ष्य च।

जीर्णे तस्मिंस्तु भुञ्जीतरक्तशाल्योदनं तथा ॥ ७३८ ॥
जीर्णज्वरोपसृष्टानां शुष्यतां श्वासकासिनाम्।
प्रयोज्यं कौक्कुटं सर्पियक्षिणां विषमज्वरे ॥ ७३९ ॥
लेखनं बृंहणीयञ्च बलवर्णाग्निवर्धनम्।

इति कौक्कुटं घृतम्।

वासां गुडूचीं त्रिफलां त्रायमाणां दुरालभाम्।
पक्काऽनेन कषायेण पयसा द्विगुणेन च ॥ ७४० ॥
पिप्पलीमुस्तमृद्वीकाचन्दनोत्पलनागरैः।
कल्कीकृतैश्च विपचेद् घृतं जीर्णज्वरापहम् ॥ ७४१ ॥

इति वासादिघृतम्।

अत्र चाष्टगुणे तोये कथिते क्वाथदुग्धयोः।
प्रत्येकं द्विगुणं भागं पृथक् सर्पिषु निक्षिपेत् ॥ ७४२ ॥
कल्काच्चतुर्गुणः स्नेहः स्नेहात्काथश्चतुर्गुणम्।
क्वाथाच्चतुर्गुणं वारि क्वाथ्यक्वाथ्य समो मतः ॥ ७४३ ॥
मृदौ चतुर्गुणं देयं कठिनेऽष्टगुणं तथा।
कठिनात्कठिने द्रव्ये देयं षोडशिकं जलम् ॥ ७४४ ॥
मृद्वादि क्वाथ्यसङ्घाते मानं उक्तं चिकित्सकाः।
मध्यस्थोभयभागित्वादिच्छन्त्यष्टगुणं जलम ॥ ७४५ ॥

सिद्धमेतद् घृतं सद्यो जीर्णज्वरमपोहति ॥ ७४९ ॥
क्षयं कासं शिरःशूलं पार्श्वशूलमरोचकम्।
अङ्गाभितापमग्निञ्च विषमं सन्नियच्छति ॥ ७५० ॥
जलस्नेहौषधानान्तु प्रमाणं यत्र नेरितम्।
तत्र स्यादौषधात् स्नेहः स्नेहात्तोयं चतुर्गुणम् ॥ ७५१ ॥

इति पिप्पल्याद्यं घृतम्।

पिप्पल्याद्यमिदं क्वापि तन्त्रे चीरेण पच्यते।
यत्राधिकरणेनोक्तिर्गणे स्नेहस्य सन्निधौ।
तत्रैव कल्कनिर्यूहाविष्येते स्नेहवेदिना ॥ ७५२ ॥
एतद्वाक्यबलेनैव कल्कसाध्यपरं घृतम् ॥ ७५३ ॥

—०—

चीरवृक्षासनारिष्टजम्बूसमच्छदार्जुनैः।
शिरीषखदिरास्फोतामृतवल्याटरूषकैः ॥ ७५४ ॥
कटुकापर्पटोशीरवचातिजोवतीघनैः।
साधितं तैलमभ्यङ्गादाशुजीर्णज्वरं जयेत् ॥ ७५५ ॥

इति चीरवृक्षाद्यं तैलम्।

चन्दनाद्यं हितं तैलं शोथाधिकारकीर्त्तितम्।
तथा नारायणं तैलं जीर्णज्वरहरं परम् ॥ ७५६ ॥
जीर्णज्वरेषु सर्वेषु दोषे पक्वाशयाश्रिते।
स्नेहबस्तिः प्रयोक्तव्यः सनिरूहो यथा विधिः ॥ ७५७ ॥

इति जीर्णज्वरः ॥

गुडूचीरसकल्काभ्यां त्रिफलायाद्रवस्य वा।
मृद्वीकायाबलायाश्च सिद्धाः स्नेहाज्ज्वरच्छिदः ॥ ७५८ ॥

इति गुडूच्यादिघृतम्।

जीर्णे तस्मिंस्तु भुञ्जीतरक्तशाल्योदनं तथा ॥ ७३८ ॥
जीर्णज्वरोपसृष्टानां शुष्यतां श्वासकासिनाम्।
प्रयोज्यं कौक्कुटं सर्पिर्यक्ष्मिणां विषमज्वरे ॥ ७३९ ॥
लेखनं वृंहणीयञ्च बलवर्णाग्निवर्धनम्।

इति कौक्कुटं घृतम्।

वासां गुडूचीं त्रिफलां त्रायमाणां दुरालभाम्।
पक्त्वाऽनेन कषायेण पयसा द्विगुणेन च ॥ ७४० ॥
पिप्पलीमुस्तमृद्वीकाचन्दनोत्पलनागरैः।
कल्कीकृतैश्च विपचेद् घृतं जीर्णज्वरापहम् ॥ ७४१ ॥

इति वासादिघृतम्।

अत्र चाष्टगुणे तोये क्वथिते क्वाथदुग्धयोः।
प्रत्येकं द्विगुणं भागं पृथक् सर्पिषि निक्षिपेत् ॥ ७४२ ॥
कल्काच्चतुर्गुणः स्नेहः स्नेहात्क्वाथश्चतुर्गुणम्।
क्वाथाच्चतुर्गुणं वारि क्वाथः क्वाथ्यः समो मतः ॥ ७४३ ॥
मृदौ चतुर्गुणं देयं कठिनेऽष्टगुणं तथा।
कठिनात्कठिने द्रव्ये देयं षोड़शिकं जलम् ॥ ७४४ ॥
मृद्वादि क्वाथ्यसङ्घाते मान उक्तो चिकित्सकाः।
मध्यस्थोभयभागित्वादिच्छन्त्यष्टगुणं जलम् ॥ ७४५ ॥
पलैः षोड़शभिः प्रस्थं शुष्काणां तद्विदो विदुः।
द्विगुणं स्वरसार्द्राणां तैलक्षारघृताम्भसाम् ॥ ७४६ ॥
न लभ्यते रसो येषां क्वाथस्तेषान्तु निक्षिपेत्।
त्रिफलाव्यतिरेकेण मतमेतत्पतञ्जलेः ॥ ७४७ ॥
पिप्पल्यश्चन्दनं मुस्तमुशीरं कटुरोहिणी।
कलिङ्गकास्तामलकी शारिवातिविषे स्थिरा ॥ ७४८ ॥
द्राक्षामलकबीजानि त्रायमाणानिदिग्धिका।

सिद्धमेतद् घृतं सद्यो जीर्णज्वरमपोहति ॥ ७४८ ॥
क्षयं कासं शिरःशूलं पार्श्वशूलमरोचकम्।
अङ्गाभितापमग्निञ्च विषमं सन्नियच्छति ॥ ७५० ॥
जलस्नेहौषधानान्तु प्रमाणं यत्र नेरितम्।
तत्र स्यादौषधात् स्नेहः स्नेहात्तोयं चतुर्गुणम् ॥ ७५१ ॥

इति पिप्पल्याद्यं घृतम्।

पिप्पल्याद्यमिदं क्वापि तन्त्रे क्षीरेण पच्यते।
यत्राधिकरणेनोक्तिर्गणे स्नेहस्य सन्निधौ।
तत्रैव कल्कनिर्यूहाविष्येते स्नेहवेदिना ॥ ७५२ ॥
एतद्वाक्यबलेनैव कल्कसाध्यपरं घृतम् ॥ ७५३ ॥

—०—

क्षीरवृक्षासनारिष्टजम्बूसप्तच्छदार्जुनैः।
शिरीषखदिरास्फोतामृतवल्याटरूषकैः ॥ ७५४ ॥
कटुकापर्पटोशीरवचातिजीवतीघनैः।
साधितं तैलमभ्यङ्गादाशुजीर्णज्वरं जयेत् ॥ ७५५ ॥

इति क्षीरवृक्षाद्यं तैलम्।

चन्दनाद्यं हितं तैलं शोषाधिकारकीर्त्तितम्।
तथा नारायणं तैलं जीर्णज्वरहरं परम् ॥ ७५६ ॥
जीर्णज्वरेषु सर्वेषु दोषे पक्वाशयाश्रिते।
स्नेहवस्तिः प्रयोक्तव्यः सनिरूहो यथा विधिः ॥ ७५७ ॥

इति जीर्णज्वरः॥

गुडूच्यारसकल्काभ्यां त्रिफलायाश्रयस्य वा।
मृद्वीकायाबलायाश्च सिद्धाः स्नेहाज्वरच्छिदः ॥ ७५८ ॥

इति गुडूच्यादिघृतम्।

पञ्चकोलैः ससिन्धूत्थैः पलिकैः पयसासमम् ।
सर्पिः प्रस्थं शृतं प्लीह विषमज्वरनाशनम् ॥ ७५८ ॥

इति चीरषट्पलं घृतम् ।

अत्र द्रवान्तरानुक्तौ चीरमेव चतुर्गुणम् ।
द्रवान्तरेण योगे हि चीरं स्नेहसमं भवेत् ॥ ७६० ॥

—०—

दशमूलीरसे सर्पिः सचीरे पञ्चकोलकैः ।
सक्षारैर्हन्ति तत्सिद्धं ज्वरकासाग्निमन्दताः ॥ ७६१ ॥
वातपित्तकफव्याधीन् प्लीहानं चापकर्षति ।

इति दशमूलीचीरषट्पलं घृतम् ।

बलां श्वदंष्ट्रां बृहतीं कलशीं धावनीं स्थिराम् ।
निम्बं पर्पटकं मुस्तं त्रायमाणां दुरालभाम् ॥ ७६२ ॥
कृत्वा कषायं कल्कार्थं दद्यादामलकीं शठीम् ।
द्राक्षापुष्करमूलञ्च मेदामामलकानि च ॥ ७६३ ॥
घृतं पयश्च तत्सिद्धं सर्पिर्ज्वरहरं परम् ।
क्षयकासप्रशमनं शिरःपार्श्वरुजापहम् ॥ ७६४ ॥

इति बलाद्यं घृतम् ।

अत्राप्यष्टगुणैस्तोयैः क्वथितः क्वाथदुग्धयोः ।
प्रत्येकं द्विगुणो भागः कर्त्तव्यो भिषजा घृते ॥ ७६५ ॥

—०—

वासामृतारिष्टभार्गी पञ्चमूलफलत्रिकैः ।
सपाठमधुद्राक्षा काश्मर्यैं रचसम्मितैः ॥ ७६६ ॥
घृतप्रस्थं विपक्वव्यमेभिर्मात्रामतः पिबेत् ।
वृहद्वासाघृतं प्रोक्तमेतत्सर्वज्वरापहम् ॥ ७६७ ॥

इति वृहद्वासाद्यं घृतम् ।

मञ्जिष्ठातिविषापथ्या वचानागररोहिणी।
देवदारुहरिद्रा च द्रोणेऽपांपालिकान्पचेत्॥ ७६८॥
कार्येऽस्मिन् साधयेत्तिष्टेद्घृतप्रस्थं पिचून्मितैः।
शृङ्गवेरकणाहिङ्गुविस्तारपटुपञ्चकैः॥ ७६९॥
तत्काथाहृतसर्वकज्वरिणाममृतोपमम्।
वक्ष्यं हिध्मारुचिश्वास पाण्डुरोगविकारिणाम्॥ ७७०॥
मलग्रहप्रमेहार्शः प्लीहापस्मारशोषिणाम्।
उदावर्त्तपरीतानां मन्दाग्निक्रमिकुष्ठिनाम्॥ ७७१॥

इति मञ्जिष्ठाद्यं घृतम्।

कुलित्थकोलत्रिफलादशमूलयवान् पचेत्।
द्विपलान् सलिलद्रोणे घृते पिष्ठाऽक्षकान् क्षिपेत्॥ ७७२॥
पञ्चकोलकसमाह्वा वयस्थाहिङ्गुतुम्बुरु।
शठीपुष्करमूलार्कमूलं प्रतिविषा वचा॥ ७७३॥
किराततिक्तकं मुस्तं कर्कटाख्यां दुरालभा।
नक्तमाल शुभे पाठे कटुकाग्निग्रु तेजनी॥ ७७४॥
सोमवल्कं द्विरजनी कटुकीकण्टकारिका।
पटोलनिम्बगोजिह्वाकम्बुका मदनी जटाः॥ ७७५॥
लवणानि पलांशानि क्षारानर्द्धपलोन्मितान्।
प्रस्थं चाज्यस्य तत्सिद्धं दीपनं कफवातजित्॥ ७७६॥
हृत्प्लीहग्रहणीगुल्मश्वासकासार्शसांहितम्।
दीर्घज्वराभिभूतानां ज्वरिणाममृतोपमम्॥ ७६७॥

इति कुलित्थाद्यं घृतम्।

लाक्षामधुकमञ्जिष्ठा मूर्वाचन्दनसारिवा।
तैलं षट्चरणं नाम ह्यभ्यङ्गाज्ज्वरनाशनम्॥ ७७८॥

इति षट्चरणं तैलम्।

लाक्षानिशाकुष्ठशुण्ठी मञ्जिष्ठा च सुवर्चिका।
वचाचन्दनससिद्धं तैलं तक्रेऽथ षड्गुणे॥ ७७९॥
अभ्यङ्गेन प्रशाम्येत दाहं शीतज्वरापहम्।

इति षट्तक्रं तैलम्।

मूर्वालाक्षाहरिद्रे द्वे मंजिष्ठासेन्द्रवारुणी।
बृहतीसैन्धवं कुष्ठं रास्नामांसीशतावरी॥ ७८०॥
आरनालाढकेनात्र तैलप्रस्थं विपाचयेत्।
तैलमङ्गारकं नाम सर्वज्वरविनाशनम्॥ ७८१॥

इत्यङ्गारकं तैलम्।

लाक्षारससमं तैलं तैलान्मस्तु चतुर्गुणम्।
अश्वगन्धानिशादारु कौन्तीकुष्ठाब्दचन्दनैः॥ ७८२॥
समूर्वारोहिणीरास्ना शताह्वामधुकैः समैः।
सिद्धं लाक्षादिकं नाम तैलमभ्यंजनादिना॥ ७८३॥
सर्वज्वरक्षयोन्माद सर्वापस्मारवातनुत्।
यक्षराक्षसभूतघ्नं गर्भिणीनां प्रशस्यते॥ ७८४॥

इति लाक्षादितैलम्।

लाक्षाहरिद्रामंजिष्ठा फेनिलं मधुकं बला।
लामज्जकं चन्दनञ्च गैरिकं नीलमुत्पलम्॥ ७८५॥
एषां भागान् समान् कृत्वा पक्कातोये चतुर्गुणे।
चतुर्भागावशेषे च गर्भे चैनं समावपेत्॥ ७८६॥
रेणुकापद्मकञ्चैव वाजिगन्धा तथैव च।
श्वेतसं चोरकं कुष्ठं देवदारुनखत्वचम्॥ ७८७॥
शतपुष्पापुण्डरीकं मांसीमधुकमेव च।
एभिरक्षसमैः कल्कैः पापाणेनैव पेषितैः॥ ७८८॥
मस्तुशुक्तारनालानामाढकाढकमावपेत्।

क्षीराढ़कसमायुक्तं तैलप्रस्थं विपाचयेत्।
तदभ्यंगात् नयति तैलं दाहं न संशयः॥ ७८८॥
वातपित्तभवं क्षिप्रं ज्वरमेतन्नियच्छति।
सप्रलापश्च तृष्णाञ्च तालुशोषणमुल्वणम्॥ ७६०॥
ग्रहोपसृष्टा ये बाला रक्षःसन्दूषिताश्च ये।
तेषां कष्टं प्रशमयेत्तैलं लाक्षादिकं महत्॥ ७८१॥

इति महालाक्षादितैलम्।

स्वर्जिकाकुष्टमञ्जिष्ठा लाक्षा मूर्वा महौषधैः।
सक्षीरैः साधितं तैलमभ्यङ्गाद्दाहशीतनुत्॥ ७८२॥

इति स्वर्जिकाद्यं तैलम्।

बलामधुकमञ्जिष्ठा पद्म पद्मकचन्दनैः।
समुद्रफेन ह्रीवेर रजनीगैरिकोत्पलैः॥ ७८३॥
पिष्टैरेतैः पचेत्तैलं मस्तुक्षीरं चतुर्गुणम्।
वातपित्तज्वराज्जीर्णात्तेनाभ्यक्तः प्रमुच्यते॥ ७८४॥

इति बलाद्यं तैलम्।

पटोलपिचुमन्दाभ्यां गुडूच्यामलकेन च।
मदनैश्च शृतः स्नेहो ज्वरघ्नमनुवासनम्॥ ७८५॥

इति पटोलादिस्नेहः।

पटोलमदनारिष्ट गुडूचीमधुकैः शृतम्।
श्वदंष्ट्रा मदनं शृङ्गी मधुकारिष्टवासकैः॥ ७८६॥
अश्वगन्धेति तैलस्य कार्षिकैराढ़कं पचेत्।
अनुवासनकं तैलं सर्वज्वरविनाशनम्।
सत्वान्वातविकारांश्च नाशयेदपि चोत्थितान्॥ ७८७॥

इति पटोलाद्यनुवासनम्।

क्रियायास्तु गुणालाभे क्रियामन्यां प्रयोजयेत्।
पूर्वस्यां शान्तवेगायां न क्रियासंकरोहितः ॥ ७९८ ॥
षड्भिः केचिदहोरात्रैः केचिदष्टाभिरेव च।
वदन्ति मुनयः प्राप्यो रसस्य परिवर्त्तनम् ॥ ७९९ ॥
परिहृत्या रसस्यैव शान्तवेगा क्रिया भवेत्।
गुणा लाभे तु कर्त्तव्या विरामान्तरिते यथा।
सैव न स्याद्यथा तस्यां पूर्ववत्संकराद्भयम् ॥ ८०० ॥
ज्वरे पुराणे संक्षीणे कफपित्ते दृढाग्नये।
रूक्षवद्ध पुरीषाय प्रदद्यादनुवासनम् ॥ ८०१ ॥
चन्दनोत्पलकाश्मर्यमधुकागुरुकल्ककैः।
सिद्धं तैलं विधातव्यं वस्तौ सर्वज्वरापहम् ॥ ८०२ ॥

इति चन्दनाद्यनुवासनम्।

घृततैलगुड़ादींस्तु चैकाहेनैव साधयेत्।
उषितास्तु प्रकुर्वन्ति विशेषेण गुणान् बहून् ॥ ८०३ ॥
स्नेहकल्को यदाङ्गुल्या वर्त्तितो वर्त्तिवद्भवेत्।
वह्नौ क्षिप्ते तु नोशब्दस्तदा सिद्धिं विनिर्दिशेत् ॥ ८०४ ॥
नस्ये मृदुः स्वरोभ्यङ्गे स्नेहे किट्टन्तु मध्यमम्।
नातिस्थिरं पचेद्वस्तौ खरमभ्यञ्जने पचेत् ॥ ८०५ ॥

—०—

तत्र स्नेहौषधि विवेकमात्रं यत्र भेषजं स मृदुः।
मधूच्छिष्टमिव विशदमविलेपि यत्र भेषजं स मध्यमः॥
कृष्णमवसन्नमीषद्विशदं चिक्कणञ्च यत्र भेषजं सखर॥

इति स्नेहपाकलक्षणम्।

—०—

उक्तञ्च—

खरं इपाकोऽथकल्को स्यान्मृदुरंगुलिलेपिनि।
अस्टहात्यंङ्गुलिं मध्यः शीर्यमाणो खरः स्मृतः॥ ८०६॥
परं पाको मृदुः कार्य्यो द्रव्यस्य न खरो मतः।
किञ्चित् वीर्य्यमादत्ते तज्जहाति खरः पुनः॥ ८०७॥
शब्दस्यो परमे प्राप्ते फेनस्यो परमे तथा।
गन्धवर्णरसादीनां संपत्तौ सिद्धिमादिशेत्॥ ८०८॥
घृतस्यैवं विपक्वस्य जानीयात् कुशलो भिषक्।
फेनोतिमात्रं तैलस्य शेषं घृतवदादिशेत्॥ ८०९॥
पक्वंतैलाद्विहोयं हीनमब्दार्द्धतः परम्।
घृताद्याव्दात्परं पक्वं गुड़ादेस्त्वब्दतः परम्॥ ८१०॥

इति तैलपाकविधिः।

आरग्वधसुशीरञ्च मदनस्य फलानि च।
पर्य्यथतस्तो मधुकं निरूहमुपकल्पयेत्॥ ८२१॥
प्रियङ्गु मदनं मुस्तं मधुकञ्च शताह्वया।
कल्कः सर्पिर्गुड़क्षौद्रे ज्वरघ्नो वस्तिरुत्तमः॥ ८१२॥

इत्यारग्वधनिरूह वस्तिः।

एकादशाष्टौ षट्कञ्च कषायस्य पलं मतम्।
कफपित्तानिलोत्थेषु विकारेषु यथाक्रमम्॥ ८१३॥
खेहस्य त्रिचतुःषट्कायत्वारो मधुनस्तथा।
पलद्वयन्तु कल्कस्य कर्षः स्यात्सैन्धवस्य च॥ ८१४॥
रसचोराम्लमूत्राणामेकेकं प्रक्षिपेत् पलम्।
निरूहकल्पना मात्रा कथितैषा महर्षिणा॥ ८१५॥

इति निरूह मात्रा कल्पना विधिः।

विष्णुं सहस्रमूर्द्धानं चराचरगुरुं विभुम्।
सुवन्नाम सहस्रेण ज्वरान् सर्वान् व्यपोहति ॥ ८१६ ॥
ज्योतिश्चक्रं धनिष्टादि वक्ष्यते दिन निश्चयात्।
दशरात्रं धनिष्टासु ज्वरो भवति देहिनाम् ॥ ८१७ ॥
वारुणेऽपि दशाहेन मृत्युमाप्नोति मानवः।
षडहे द्वादशाहे वा मृत्युर्भाद्रपदासु च ॥ ८१८ ॥
उत्तरासु भवेन्मोक्षो दिवसोर्ध्वं चतुर्दशः।
चतुरात्राष्टरात्रं वा रेवत्यां वर्त्तते ज्वरम् ॥ ८१९ ॥
अश्विनीष्वपि षड्रात्रं सुखं भवति देहिनाम्।
यमदेवे समुत्पन्ने मरणं पञ्चमेऽहनि ॥ ८२० ॥
कृत्तिकासु स्त्रहीलस्य सप्तरात्रं भवेज्ज्वरः।
न मुञ्चेयदि सप्ताहादेकविंशतिमे सुखम्।
अत ऊर्ध्वं विपद्येत त्रिपक्षात् संशयो भवेत् ॥ ८२१ ॥
रोहिण्यामष्टरात्रेण मुच्येदेकादशेऽनि।
मृगे च षडहं ध्येयं नवरात्रमथापि वा ॥ ८२२ ॥
आर्द्रायामुपसृष्टस्य पञ्चाहान् मृत्युमादिशेत्।
ऊर्ध्वं ग्रयपि वर्त्तेत त्रिपक्षात् संशयो भवेत् ॥ ८२३ ॥
पुनर्वसूपसृष्टेन ज्वरेण परिपीडनात्।
त्रयोदशाहान् मुच्येत सप्तविंशेऽथवाहनि ॥ ८२४ ॥
पुष्ये त्रिरात्रं ज्वरितः सप्तरात्रान्निवर्त्तते।
आश्लेषासु भवेन्मृत्युर्दीर्घकालक्रमात्तथा ॥ ८२५ ॥
मघासु द्वादशाहेन मृत्युर्भवति देहिनः।
ऊर्ध्वं याति मघायान्तु पुनरेव सुखी भवेत् ॥ ८२६ ॥
पूर्वासु चोपसृष्टस्य फाल्गुनीषु भवेद्दश।
उत्तरासु तथा चाष्टौ नवरात्रमथापि च।

एकविंशतिरात्राद्वा ज्वरः स्वोऽत्यन्त मृच्छति ॥ ८२७ ॥
हस्ते च सप्तमे मोचयित्वायामष्टमेऽहनि।
ऊर्द्धं प्रपद्यमानो वा मुच्येच्चित्रागमे पुनः ॥ ८२८ ॥
स्वातियोगे दशाहेन मुच्यतेऽथ चयेण वा।
विशाखासु भवेन्मृत्युरेकविंशतिमेऽहनि ॥ ८२९ ॥
ज्वरस्तु दिवसा नऽष्टा वनूराधासु वर्त्तते।
अत ऊर्द्धं न मुक्तं स्यान्नास्ति तस्य चिकित्सितम् ॥ ८३० ॥
ज्येष्ठायां पञ्चमे मृत्युरुर्द्धं वा द्वादशात् सुखम्।
स्वास्थ्यं दशाहान्मूलेन त्रिसप्ताहे तथा गते ॥ ८३१ ॥
अषाढायान्तु पूर्वायो नवमेऽहनि मुच्यते।
उत्तरासु त्वषाढ़ासु मासात् क्लिश्यत्यसंशयः।
अष्टमान्नऽ्ज्ञान्मासात्ततोऽस्य सुखमादिशेत् ॥ ८३२ ॥
श्रवणेनाष्टरात्रन्तु क्लिश्यन्ति ज्वरपीडिताः ॥ ८३३ ॥
एतद्गणत्ः प्रोक्तं नचत्राणां विचेष्टितम्।
य एवं वेत्ति तत्वेन स राज्ञः कर्त्तुमर्हति ॥ ८३४ ॥

—०—

वसुरग्निरिति धनिष्टायां वटशुङ्गमौदुम्बरं वा जुहुयात् ॥ १ ॥
तत्वायामीति शतभिषजिजलपुष्पं जुहुयात् ॥ २ ॥
उत्तरचहिगौहि द्वे इति पूर्वाभद्रपदासु शाल्योदनं जुहुयात् ॥ ३ ॥
अहिरिव भोजं गौरिति उत्तराभद्रपदासु घृतौदनं जुहुयात् ॥४॥
पूर्णो प्राश्वेति रेवत्यां फलान्यचतानि जुहुयात् ॥ ५ ॥
अश्विना तेजसेत्यश्विन्यां गुडौदनं जुहुयात् ॥ ६ ॥
असियम इति भरण्यां तण्डुलान् जुहुयात् ॥ ७ ॥

अग्निर्मूर्द्धा इति कृत्तिकासु घृतं जुहुयात् ॥ ८ ॥
हिरण्यगर्भ इति रोहिण्यां सर्व्ववीजानि जुहुयात् ॥ ९ ॥
त्वम्भसामेति मृगशिरसि पायसं जुहुयात् ॥ १० ॥
अहे पितु मरुतामिति आर्द्रायां कृसरां जुहुयात् ॥ ११ ॥
मही्यूषमातरमिति पुनर्वसौ तण्डुलं जुहुयात् ॥ १२ ॥
वृहस्पते अतियदर्य्य इति पुष्ये घृतपायसं जुहुयात् ॥ १३ ॥
नमोऽस्तु सर्पेभ्यो इति अश्लेषासु सर्व्वौषधीर्जुहुयात् ॥ १४ ॥

कुष्ठ मांसी हरिद्रे द्वे सुरशैलेय पञ्चकैः ।
वचाकर्चूरमुस्तैश्च सर्व्वौषधिकमुच्यते ॥

इति सर्व्वौषधीवर्गः ।

इदं पितृभ्य इति मघासु शालितण्डुलं जुहुयात् ॥ १५ ॥
प्रातर्जितं भागमुग्रे ति पूर्व्वफाल्गुनीष्वक्षतानि जुहुयात् ॥ १६
तत्सवितुर्व्वरेण्यमिति उत्तराफाल्गुनीषु घृतं जुहुयात् ॥ १७ ॥
आन्तरो नेति हस्ते रक्तपुष्पं जुहुयात् ॥ १८ ॥
देवस्य त्वामग्निमिति चित्रायां मधुपायसं जुहुयात् ॥ १९ ॥
वायुरग्नेजा इति स्वातिषु तण्डुलान् जुहुयात् ॥ २० ॥
इन्द्राग्नि आगतमिति विशाखायां यवघृतं जुहुयात् ॥ २१ ॥
अतो मित्रो वरुणेति अनुराधासु मसूरं जुहुयात् ॥ २२ ॥
इन्द्रा सुत्रामेति ज्येष्ठासु कनकं तदभावे पीतपुष्पं जुहुयात् ॥२
मूलाय स्वाहेति मूले तिलव्रीह्याज्यान् जुहुयात् ॥ २४ ॥
अपाघमपकिल्विषमिति पूर्व्वाषाढे घृतौदनं जुहुयात् ॥ २५ ॥
विश्वेऽद्यमिति उत्तराषाढे मधुरान्नं जुहुयात् ॥ २६ ॥
इदं विष्णुरिति श्रवणे मूर्व्वास्तदभावे तण्डुलं जुहुयात् ॥ २७

इति धनिष्ठादि सप्तयन

१ २ ३ ४
उरग वरुण आर्द्रा वासवेन्द्र त्रिपूर्वा

५ ६
यमभहुत विशाखाः पापवारेण युक्ताः ।
तिथि नवमषष्टी द्वादशीभिश्चतुर्थी
मरणसहितयोगा रोगिणां मृत्युरेव ॥ ८३५ ॥

स ज्वरी ज्वरमुक्तो वा विदग्धानि गुरूणि वा ।
असात्म्यान्यन्नपानानि विरुद्धाऽध्यशनानि च ॥ ८३६ ॥
व्यायाममतिचेष्टां वा ऽभ्यङ्गं स्नान विवर्जयेत् ।
तेन ज्वरः शमं याति शान्तश्च न पुनर्भवेत् ॥ ८३७ ॥
व्यायामञ्च व्यवायञ्च स्नानं चक्रमणानि च ।
ज्वरमुक्तो न सेवेत यावन्नो बलवान् भवेत् ॥ ८३८ ॥
वार्यमाणो दिवा स्वप्नं भुंक्ताय. सेवते नरः ।
तस्मात्तन्द्रा जडत्वञ्च मोहश्चाप्युपजायते ॥ ८३९ ॥
न जातु तर्पयेत् प्राज्ञ. सहसा ज्वरकर्शितम् ।
तेन सशमितोऽप्यस्य पुनरेव भवेज्ज्वर. ॥ ८४० ॥
श्वासो मूर्च्छारुचि छर्दिस्तृष्णातिसारविड्ग्रहाः ।
हिक्काकासाङ्गभेदाश्च ज्वरस्योपद्रवा दश ॥ ८४१ ॥
हेतुभिर्बहुभिर्जातो बलिभिर्बहुलक्षणः ।
ज्वरः प्राणान्त कृद्यश्च शीघ्रमिन्द्रियनाशनः ॥ ८४२ ॥
ज्वर. चोणस्य शूनस्य गम्भीरो दैर्घ्यरात्रिकः ।
*असाध्यो बलवान् यश्च केशसीमन्त कृज्ज्वरः ॥ ८४३ ॥*
विसंज्ञस्ताम्यते यस्तु शेते निपतितोऽपि वा ।

---

१ अश्लेषा । २ शतभिषा । ३ धनिष्टा । ४ ज्येष्ठा । ५ भरणी ।
६ कृत्तिका ।

शीतार्दितोऽन्तरुष्णश्च ज्वरेण म्रियते नरः ॥ ८४४ ॥
यो हृष्टरोमा रक्ताक्षो हृदिसंघात शूलवान् ।
वक्त्रेण चैवोच्छ्वसिति तं ज्वरो हन्ति मानवम् ॥ ८४५ ॥
हिक्काश्वासतृषायुक्तं मूढं विभ्रान्तलोचनम् ।
सन्ततोच्छ्वसितं क्षीणं नरं क्षपयति ज्वरः ॥ ८४६ ॥
हतप्रभेन्द्रियं क्षाममरोचक निपीडितम् ।
गम्भीर तीक्ष्णवेगार्त्तं ज्वरितं परिवर्जयेत् ॥ ८४७ ॥
अरोचके गात्र सादेवैवर्ण्येऽङ्गमर्दादिषु ।
शान्तज्वरोपि शोध्यः स्या दनुबन्धभयान्नरः ॥ ८४८ ॥
बलवान् सर्वदोषेषु ज्वरः साध्योऽनुपद्रवः ॥ ८४९ ॥
ज्वरे तुल्यर्त्तुदोषत्वं प्रमेहे तुल्यदूष्यता ।
रक्तगुल्मे पुराणत्वं सुखसाध्यस्य लक्षणम् ॥ ८५० ॥
दाहः स्वेदो भ्रमस्तृष्णा कम्पो विड्भेदसंज्ञिता ।
कूजनं चातिवैगन्ध्यमाकृतिज्वरमोक्षणे ॥ ८५१ ॥
स्वेदो लघुत्वं शिरसः कण्डूपाको मुखस्य च ।
क्षवथुश्चान्न लिप्सा च ज्वरमुक्तस्य लक्षणम् ॥ ८५२ ॥

देहो लघुर्व्यपगतक्लममोहतापः
पाको मुखे करणसौष्टवमव्यथत्वम् ।
स्वेदं क्षवः प्रकृतियोगि मनो ऽन्नलिप्सा
कण्डूश्च मूर्ध्नि विगतज्वरलक्षणम् ॥ ८५३ ॥

इति वङ्गसेने ज्वरनिदानचिकित्साधिकारः समाप्तः ।

—०:::०—

## अथातिसारनिदानमाह ।

गुर्वतिस्निग्ध रूक्षोष्ण द्रवस्थूलातिशीतलैः ।

विरुद्धाध्यशनाजीर्णे रसात्म्यैश्चापि भोजनैः ॥ १ ॥
स्नेहाद्यैरतियुक्तैश्च मिथ्यायुक्तैर्विषैर्भयैः ।
शोकदुष्टाम्बुमद्यातिपानैः सात्म्यर्त्तुपर्ययैः ॥ २ ॥
जलाभिमरणैर्वेगविघातैः क्रमिदोषतः ।
नृणां भवत्यतीसारो लक्षणं तस्य वक्ष्यते ॥ ३ ॥
संशम्यापां धातुरग्निं प्रवृद्धो वर्चो मिश्रो वायुनाधः प्रणुन्नः ।
सरत्यतीवातिसारं तमाहुर्व्याधिं घोरं षड्विधन्तं वदन्ति ॥४॥
एकैकशः सर्वशश्चापि दोषैः शोकेनान्यः षष्टमामेन चोक्तः ॥५॥
हृन्नाभिपायूदरकुक्षितोद गात्रावसादानिलसन्निरोधाः ।
विट्सङ्ग आध्मानमथाऽविपाको भविष्यतस्तस्य पुरःसराणि॥६॥
हितं लङ्घनमेवादौ पूर्वरूपेषु देहिनः ।
कार्यश्चानशनस्यान्ते सद्रवं लघुभोजनम् ॥ ७ ॥
विश्वोदीच्योदकं पानं लङ्घनं चास्य शस्यते ।
हरिद्रादिं वचादिं वा पिबेच्चामेषु मानवः ॥ ८ ॥
खडयूषयवागूभिः पिप्पल्यादि प्रयोजयेत् ।
मुद्गयूषरसं तक्रं धान्यजीरकसंयुतम् ।
खडयूषमिति प्रोक्तं सैन्धवेन समन्वितम् ॥ ९ ॥
अग्निमन्दीपनं प्रोक्तं ग्रहणीदोषनाशनम् ।
अरोचके ज्वरे चैव श्रेष्टमेतत्प्रवाहिके ॥ १० ॥

इति खडयूषः ।

विल्वं सधान्यश्च सजीरकश्च पाठा च शुण्ठीतिलसंयुता च ।
पिष्ट्वा पड्ङ्गः सुकृतो नराणां यूषो ह्यतीसारहरः प्रदिष्टः ॥११
तृष्णापनयनीलघ्वीदीपनीवस्तिशोधनी ।
ज्वरे चैवातिसारे च यवागूः सर्वदाहिताः ॥ १२ ॥
आमपक्वक्रमं हित्वा नातिसारे क्रियाहिता ।

अतः सर्वातिसारेषु ज्ञेयं पक्वामलक्षणम् ॥ १३ ॥

इति यवागूः।

संसृष्टमामदोषैस्तु न्यस्तमप्स्ववसीदति।
पुरीषं भृशदुर्गन्धि पिच्छिलं चामसंज्ञितम् ॥ १४ ॥
एतान्येव तु लिङ्गानि विपरीतानि यस्य वै।
लाघवञ्च विशेषेण तस्य पक्वं विनिर्दिशेत् ॥ १५ ॥
न तु संग्रहणं दद्यात्पूर्वमामातिसारिणे।
दोषाह्यादौ वध्यमाना जनयन्त्यामयान्बहून् ॥ १६ ॥
शोथपाण्ड्वामयप्लीह कुष्ठगुल्मोदरज्वरान्।
दण्डकालसकाध्मान ग्रहण्यर्शो गदास्तथा ॥ १७ ॥
डिम्भोयः स्थविरो वापि वातपित्तात्मकश्च यः।
क्षीणधातुमलार्त्तस्य बहुदोषोऽतिविस्रुतः ॥ १८ ॥
आमोऽपि स्तम्भनीयः स्यात्पाचनान्मरणं व्रजेत् ॥ १९ ॥
स्तोकं स्तोकं विबद्धं वा सशूलं योतिसार्यते।
अभयापिप्पलीकल्कैः सुखोष्णैस्तं विरेचयेत् ॥ २० ॥
दीप्ताग्निर्बहुदोषो विबन्धमतिसार्य्यते।
विडङ्गत्रिफलाक्वाथ्या कषायैस्तं विरेचयेत् ॥ २१ ॥
क्षुत्क्षामस्य विरिक्ते तु पेयां युञ्ज्याद्विचक्षणः।
भेषजैर्मारुतघ्नैश्च दीपनीयैश्च कल्पिताम् ॥ २२ ॥
योतिद्रवं प्रभूतञ्च पुरीषमतिसार्यते।
तस्यादौ वमनं योज्यं पश्चाल्लङ्घनमेव च ॥ २३ ॥
शूलानाहप्रसेकार्त्तं वामयेदतिसारिणम्।
पिप्पलीलवणाभ्याञ्च साधितेन जलेन वा ॥ २४ ॥
पथ्यादारुवचामुस्तैर्नागरातिविषान्वितैः।
आमातिसारनाशाय क्वाथमेभिः पिबेन्नरः ॥ २५ ॥

पाठाहिंग्वजमोदोग्रा पञ्चकोलाब्दजं रजः।
उष्णाम्बु पीतं सरुजं जयत्यामं ससैन्धवम् ॥ २६ ॥
इत्यामपाचनविधिः।

द्रुमपर्णातिविषाहिङ्गु वचा सौवर्चलाभया।
पीतोष्णे नाम्भसाजह्यादामातिसारमुद्धतम् ॥ २७ ॥
वचाविल्वकणाविश्वा कुलकं कुष्ठदीप्यकम्।
सविडङ्गं जयेत्पीत्तमाममुष्णाम्बुना श्रुतम् ॥ २८ ॥
हरीतकी सातिविषाहिङ्गु सौवर्चलं वचा।
सैन्धवं चेति पिष्टानि पाययेदुष्णवारिणा।
आमातिसारं योगोऽय पाचयित्वा चिकित्सति ॥ २९ ॥
आमातिसारं योगेन यद्येतेन न शाम्यति।
न तं योगशतेनापि चिकित्सति चिकित्सकः ॥ ३० ॥
एरण्डरसमपिष्टं पक्वमामञ्च नागरम्।
आमातिसारशूलघ्नं दीपनं पाचनं तथा ॥ ३१ ॥
चित्रकं पिप्पलीमूलं वचाकटुकरोहिणी।
पाठावत्सकबीजानि हरितक्यो महौषधम् ॥ ३२ ॥
एतदामसमुत्थान मतीसारं सवेदनम्।
कफात्मकं सपित्तञ्च सवातं हन्ति वै ध्रुवम् ॥ ३३ ॥
श्वदंष्ट्रैरण्डधान्याम्ल यवपुष्करसाधिता।
पथ्यामधुयुतालीढ़ा शूलग्रन्थिविनाशिनी ॥ ३४ ॥
नागरातिविषामुस्तैः क्वाथः स्यादामपाचनः ॥ ३५ ॥
विल्वं मोचरस पाठा गुडूचीविश्वमुस्तकम्।
गुडतक्रेण दुर्वारं पीतं हन्त्युदरामयम् ॥ ३६ ॥
धान्यनागरमुस्तञ्च वालकं विल्वमेव च।
आमशूलविबन्धघ्नं पाचनं वह्निदीपनम् ॥ ३७ ॥

मित्ते धान्यचतुष्कञ्च मुगृहीत्यामादृदन्ति हि।

इति धान्यपञ्चकम्।

देवदारुवचामुस्त नागरातिविषा भया।
सर्वाजीर्णप्रशमनं पेयमेतैः शृतं जलम्॥ ३८॥
नागरातिविषामुस्तै रथवा धान्यनागरैः।
तृष्णाशूलातिसारघ्नं रोचनं दीपनं लघु॥ ३९॥
धान्यकातिविषोदीच्य यवानीमुस्तनागरे।
बलाद्विपर्णीविल्वञ्च दद्याद्दीपनपाचने॥ ४०॥
अभयानागरं मुस्तं गुडेन सह योजितम्।
चतुःसमेयं गुटिकात्रिदोषघ्नीप्रकीर्त्तिता॥ ४१॥
आमातिसारमानाहं सविबन्धं विसूचिकाम्।
हन्तीनरोचकं हन्याद्दीपयत्याशु चानलम्॥ ४२॥

इति चतुःसमागुटी।

दन्तोत्थः स्वरसः पेयो हिङ्गुलस्य समाचिकः।
जयत्याममतीसारं क्वाथो वा कुटजत्वचः॥ ४३॥
पयस्युत्क्वाथ्यमुस्तानां विंशतिं त्रिगुणेऽम्भसि।
क्षीरावशिष्टं तत्पीतं हन्त्यामं शूलमेव च॥ ४४॥

इति पित्तानुबन्धज्वरपाचनम्।

एरण्डमूले सकणे रारनाले विमिश्रिते सयवैः।
स्त्रिग्धां खादेदभयामामातीसारशूलार्त्तः॥ ४५॥

इति काञ्जिकहरीतकी।

केशराजमुनिपत्र कच्चटं दाडिमस्य फलमर्जुनोद्भवम्।
क्वाथ एषपरिशोलितो नृणां हन्ति सामभयशूलमद्भुतम्॥

कलिङ्गातिविषाहिङ्गु पथ्यामोवर्चलं वचा।
शूलस्तम्भविबन्धघ्नं पेयं दीपनपाचनम् ॥ ४७ ॥

इति कलिङ्गाद्यं चूर्णम्।

स्विन्नामविल्वयवगोक्षुरकोरुवूक
छिन्नोद्भवातुपजलैर्मधुनावलीढ़ा।
बद्धाल्पविट्कमतिसारमसृग्विमिश्र-
मामातिसारमपि हन्ति हरीतकीयम् ॥ ४८ ॥

निरामरूपं शूलार्त्तं लङ्घनाद्यैश्च कर्षितम्।
नरं रूक्षमवेक्ष्याग्निं सक्षारं पाययेत् घृतम् ॥ ४९ ॥

—०—

क्षारनागरचाङ्गेरीकोलदध्यम्लसाधितम्।
सर्पिः पक्वं पिबेद्वापि शूलातिसारशान्तये ॥ ५० ॥
शुण्ठीक्षार सकल्काभ्यां विशिष्टं द्रव्यमिष्यते।

इति चाङ्गेरीघृतम्। इत्यामातिसारः।

अरलुत्वक् प्रियङ्गुश्च मधुकं दाड़िमाङ्कुरान्।
अवाप्य पिष्ट्वा विपचेद्यवागून्दधितां पिबेत्।
एषा सर्वानतीसारान् हन्ति पक्वानऽसंशयः ॥ ५१ ॥
सलोध्रं धातकीविल्वं मुस्ताम्राम्स्थिकलिङ्गकाम्।
पिबेन्माहिषतक्रेण पक्वातिसारनाशनम् ॥ ५२ ॥
अम्बष्ठाधातकीलोध्र समङ्गापद्मकेसरम्।
मधुकाऽरलुविल्वञ्च पक्वातिसारहागणः ॥ ५३ ॥
पद्मं समङ्गामधुकं विल्वं जम्बू सलाटुकम्।
पिबेत्तण्डुलतोयेन सक्षौद्रमगदं करम् ॥ ५४ ॥
पक्वातिसारिणे देयो मुस्ताक्वाथः समाक्षिकः ॥ ५५ ॥

—०—

समङ्गाधातकीपुष्पं मञ्जिष्ठालोध्रमेव च।
शाल्मलीवेष्टकं लोध्रं वृक्षदाड़िमयोस्त्वचौ ॥ ५६ ॥
आम्रास्थिमध्यं लोध्रञ्च विल्वमध्यं प्रियङ्गु च।
मधुकं शृङ्गवेरञ्च दीर्घवृन्तत्वगेव च ॥ ५७ ॥
चत्वार एते योगाः स्युः पितातिसारनाशनाः।
उक्ता य उपयोज्यास्तु सक्षौद्रास्तण्डुलाम्बुना ॥ ५८ ॥
इति समङ्गादिचूर्णम्।

दीर्घवृन्तत्वचं पिष्ट्वा मह्यौषधसमन्वितम्।
पीतं तण्डुलतोयेन पक्कातिसारनाशनम् ॥ ५९ ॥
पथ्याजाजीदुरालभाघोटाफलसमन्वितः।
स्वरसोऽप्यथवा कल्कः पक्कातिसारनाशनः ॥ ६० ॥
नवचूतस्य पर्णानि कपित्थ फलमेव च।
पिष्ट्वा तण्डुलतोयेन पक्कातिसारशान्तये ॥ ६१ ॥
कुटजं वह्निचूर्णञ्च मधुना सह लेहयेत्।
चिरोत्थितमतीसारं पक्कं पितासृजं जयेत् ॥ ६२ ॥
पक्कः शकृदतीसारो ग्रहणीमार्दवाच्यता।
प्रवर्त्तते यदा कार्य्यः क्षिप्रं सांग्राहिको विधिः ॥ ६३ ॥
कथटजम्बूदाड़िम शृङ्गाटकपत्रविल्वह्रीवेरम्।
जलधरनागरसहितं गङ्गामपि वाहिनीं रुन्ध्यात् ॥ ६४ ॥
मोचरसमुस्तानागर पाठाशालूकधातकी कुसुमैः।
चूर्णं मथितसमेतं रुणद्धि गङ्गाप्रवाहमपि ॥ ६५ ॥
मुस्तायक्षकबीजं मोचरसं विल्वधातकीलोध्रम्।
गुडमथितसम्प्रयुक्तं गङ्गामपि वेगवाहिनीं रुन्ध्यात् ॥ ६६ ॥
अङ्कोटमूलकल्कः सक्षौद्रस्तण्डुलाम्बुना पीतः।
सेतुरिव सरिद्वेगं झटितिनिरुन्ध्यादतीसारम् ॥ ६७ ॥

कृत्वालवालं सुदृढ़ं पिष्टैरामलकैर्भिषक्।
आर्द्रकस्वरसेनाशु पूरयेन्नाभिमण्डलम् ॥ ६८ ॥
नदीवेगोपमं घोरं प्रवृद्धं दुर्द्धरं नृणाम्।
सद्योऽतीसारमजयं नाशयत्येष योगराट् ॥ ६९ ॥
सौवीरपिष्टः सहकारकल्को नाभिप्रलेपादतीसारहन्ता ॥७०॥

—०—

अरुणं फेनिलं रूक्षमल्पमल्पं मुहुर्मुहुः।
सकृदामं सरुक् शब्दं मारुते नातिसार्य्यते ॥ ७१ ॥
लङ्घनमेकं मुक्त्वा नान्यदस्तीह भेषजं बलिनः।
समुदीर्णदोषनिचयं शमयति तत्पाचयत्येव ॥ ७२ ॥
यथा दोषौषधैः सिद्धः यूषो मण्डादिकः क्रमात्।
लाजमण्डः कृतो योगैस्तैः कृताऽस्लमण्डिका ॥ ७३ ॥
वस्त्रसुतायवागूर्वा प्रसुतक्षुद्रभक्तकम्।
सर्वेषु मलभेदेषु लवणं न प्रयोजयेत्।
तद्धितैक्ष्णात्सरत्वाच्च दोषः क्षोभाय कल्पते ॥ ७४ ॥
सुनिषन्नकवार्त्ताकं चाङ्गेरं हितमुच्यते ॥ ७५ ॥
कपित्थविल्वचाङ्गेरी तक्रदाड़िमसाधिता।
ग्राहिणीपाचिनीपेया वाते वा पञ्चमूलिका ॥ ७६ ॥
पञ्चमूलीबलाविल्व धान्यकोत्पलविल्वजा।
वातातीसारिणे देया शूक्तेणान्यतमेन च ॥ ७७ ॥
वचाचातिविषामुस्तं बीजानि कुटजस्य च।
श्रेष्ठो वातातीसारे च योगो वैद्येन योजितः ॥ ७८ ॥
पूतिकं मागधीशुण्ठी बलाधान्यं हरीतकी।
पल्काम्बुना पिबेत्क्वाथं वातातीसारशान्तये ॥ ७९ ॥
इति वातातीसारः।

पीतं रक्तासितं नीलं दुर्गन्धिहरितं द्रवम्।
दाहपाकपिपासा च शक्तत्पित्तात्प्रवर्त्तते ॥ ८० ॥
आमान्वयमतिसारं पैत्तिकं लङ्घनैर्जयेत्।
लङ्घितस्य यथा सात्म्यं यवागूमण्डतर्पणैः ॥ ८१ ॥
शृतां चन्दनमुस्ताभ्यां पटोलोदीच्यनागरैः।
पेयामम्लामनम्लां वा पाचनीं ग्राहणीं पिबेत् ॥ ८२ ॥
धान्योदीच्य शृतं तोयं तृष्णादाहातिसारवान्।
ताभ्यामेव सपाठाभ्यां सिद्धमाहारमाचरेत् ॥ ८३ ॥
विल्वशक्रयवाम्भोद वालकातिविषायुतः।
कषायो हन्त्यतीसारं सामं पित्तसमुद्भवम् ॥ ८४ ॥
विल्वविश्वघनोदीच्य धान्यकैः क्वथितं जलम्।
सामपित्तातिसारघ्नं दीपनं धान्यपञ्चकम् ॥ ८५ ॥
रसाञ्जनं सातिविषं कुटजस्य फलत्वचम्।
धातकी शृङ्गवेरञ्च पाययेत्तण्डुलाम्बुना ॥ ८६ ॥
माक्षिकेन युतो हन्यात्पित्तातीसारमुल्बणम्।
मन्दं मन्दीपवेदग्निं शूलं चाशुनिवर्त्तयेत् ॥ ८७ ॥
मधुकं कट्फलं लोध्रं दाडिमस्य फलं त्वचम्।
पित्तातीसारे मध्वाक्तं याययेत्तण्डुलाम्बुना ॥ ८८ ॥
समङ्गा धातकीपुष्पं विल्वं सौवर्चलं विडम्।
मधोद्रं दाडिमश्चैककल्कं तण्डुलवारिणा ॥ ८९ ॥
पीतं पित्तातीसारघ्नं सपैत्तं जठरामयम् ॥ ९० ॥
धान्यकल्केन संसिद्धं चतुर्गुणजले घृतम्।
पित्तातीसारे सरुजे देयं दीपनपाचनम् ॥ ९१ ॥
इति धान्यकं घृतम्।
मुस्तं वत्सकबीजानि भूनिम्बं सरसाञ्जनम्।

दार्वी दुरालभा विल्वं बालकं रक्तचन्दनम् ॥ ८२ ॥
बालकं चन्दनं मुस्तं भूनिम्बं स दुरालभम्।
उशीरं चन्दनं लोध्रं नागरं नीलमुत्पलम् ॥ ८३ ॥
पाठा मुस्तं हरिद्रे द्वे पिप्पली कौटजं फलम्।
फलत्वचं वत्सकस्य शृङ्गवेरं घनं वचा ॥ ८४ ॥
षड़ेते पाठिका योगाः पित्तातीसारनाशनाः।

इति पित्तातीसारः।

पित्तकृन्ति यदात्यर्थं द्रव्याख्यश्नाति पैत्तिके।
तदोपजायतेऽभीक्ष्णं रक्तातीसारमुल्वणम् ॥ ८५ ॥
तत्तूर्णं क्रिया कार्य्या रक्तपित्तनिवर्हिणी ॥ ८६ ॥
छागे चार्द्धोदके चीरे नागरोत्पलबालकैः।
पेया रक्तातिसारघ्नी पृष्टपर्ण्या च साधिता ॥ ८७ ॥
कषायो मधुना पीतस्त्वचो दाडिमवत्सकात्।
सद्यो जयेदतिसारं रक्तजं दुर्निवारकम् ॥ ८८ ॥

—०—

ह्रीवेरातिविषा मुस्ता विल्वधान्यकवत्सकम्।
समंगाधातकी लोध्रं विश्वं दीपनपाचनम् ॥ ८९ ॥
हन्त्यरोचकपिच्छामं विबन्धं सातिवेदनम्।
सशोणितमतिसारं सज्वरं वाथ विज्वरम् ॥ १०० ॥

इति ह्रीवेरादि।

विल्वं छागी पयः सिद्धं सिता मोचरसान्वितम्।
कलिङ्गचूर्णसंयुक्तं रक्तातीसारनाशनम् ॥ १०१ ॥
गुड़ेन भक्षयेद्विल्वं रक्तातिसारनाशनम्।
आमशूलविबन्धघ्नं कुक्षिरोगविनाशनम् ॥ १०२ ॥
धातकीवदरीपत्रं कपित्थरससमाक्षिकम्।

सलोध्रमिकतो दध्ना पिबेन्निर्वाहिकार्दितः ॥ १०३ ॥
पयसा पिप्पली कल्कः पीतो वा मरीचोद्भवः।
त्र्यहान्निर्वाहिकां हन्ति चिरकालानुबन्धिनीम् ॥ १०४ ॥
रसाञ्जनं चातिविषा कुटजस्य फलत्वचम्।
धातकीशृङ्गवेरञ्च पिबेत्तण्डुलवारिणा ॥ १०५ ॥
चौद्रेण युक्तं नुदति रक्तातिसारमुल्वणम् ॥ १०६ ॥

—०—

निःक्वाथ्यमूलममलं गिरिमल्लिकायाः
सम्यक्पलं द्वितयमम्बुचतुःशरावे।
तत्पादशेषसलिलं खलु शोषणीयं
चीरे पलद्वयमिते कुशले रजायाः ॥ १०७ ॥
प्रक्षिप्य माषकानष्टौ मधुनस्तत्र शीतले।
रक्तातिसारी तत्पीत्वा नैरुज्यमिह विन्दति ॥ १०८ ॥
इति गिरिमल्लिकाद्यं घृतम्।

बदरीमूलकल्कान्तु तिलकल्कं तथैव च।
संमृद्य स्वरसं सेधामजाचीरेण योजयेत्।
तत्पिबेन्मधुना युक्तं रक्तातिसारनाशनम् ॥ १०९ ॥
यष्टीमधुतिलाः श्लक्ष्णा पद्मकेसरमुत्पलम्।
चौद्रमत्स्यण्डिका युक्तमाजेन पयसा पिबेत् ॥११० ॥
पीत्वा शतावरी कल्कं पयसा चीरमुज्जयेत्।
रक्तातिसारं पीत्वा वा तया सिद्धं घृतं नरः ॥ १११ ॥
चोरपिष्टं पिबेल्लोध्रं यष्ट्याह्वोत्पलमिश्रितम्।
रक्तातिसारशमनं शर्करा मधुयोजितम् ॥ ११२ ॥
पीतः प्रियङ्गुनः कल्कः सचौद्रस्तण्डुलांबुना।
रक्तस्रावं जयेच्छीघ्रं धन्वमासरसाशितः ॥ ११३ ॥

कल्कस्तिलानां कृष्णानां शर्करा पञ्चभागिकः ।
आजेन पयसा पीतः सद्यो रक्तं नियच्छति ॥ ११४ ॥
सल्लको वदरी जम्बू प्रियालाम्रार्जुनत्वचः ।
पीताः चीरेण मध्वाढ्याः पृथक् शोणितवारणा ॥ ११५ ॥
सुस्विन्न कंचटं बालविल्वं स नवनीतकम् ।
लिह्याद्रक्तातिसारे च स शूले ग्रहणी गदे ॥ ११६ ॥
वयस्या शारिवा लोध्रं शर्करा मधुयष्टिका ।
पीतः शीतेन पयसा सचौद्रो रक्तनाशनः ॥ ११७ ॥
मुस्तकेन्द्रयवैः क्वाथं सुशीतं मधुना युतम् ।
रक्तपित्तातिसारघ्नं ग्रहणीदोषनाशनम् ॥ ११८ ॥
नवनीतं मधुयुतं लिह्येद्वासितया सह ।
नागकेशरचूर्णं वा रक्तसंग्रहणं परम् ॥ ११८ ॥
केशराज समुद्भूता जलेन गुटिका कृता ।
जयेत्साममतीसारं समूलं सास्रमाशु च ॥ १२० ॥
कृष्णाम्नमधुकं शक्रां कौटजं तण्डुलांबुना ।
पीतमेकत्र सचौद्रं रक्तसंग्रहणं परम् ॥ १२१ ॥
पीत्वा सशर्करा चौद्रं चन्दनं तंडुलांबुनां ।
दाहतृष्णाप्रमेहेभ्यो रक्तस्रावाच्च मुच्यते ॥ १२२ ॥
कुटजस्य पलं ग्राह्यमष्टभागे जले शृतम् ।
तथैव विपचेद्भूयो दाडिमोदकसंयुतम् ॥ १२३ ॥
यावच्चलसिकाभासं शृतं तमुपकल्पयेत् ।
तस्यार्धकर्षं तक्रेण पिबेद्रक्तातिसारवान् ।
अवश्य मरणीयोपि मृत्योर्याति न गोचरम् ॥ १२४ ॥
कुटजक्वाथतुल्योऽत्र दाडिमस्य रसो मतः ॥ १२५ ॥
यो रक्तं शकृतः पूर्वं पश्चाद्वा प्रतिसार्यते ।

सपल्लवैर्वटादीनां ससर्पिः साधितं पयः ॥ १२६ ॥
पिबेत्सशर्करा चौद्र मथ चैवातिमन्थितम् ।
नवनीतं पिबेद्युक्त्या तक्रं चानुपिबेन्नरः ॥ १२७ ॥
अल्पाल्पं बहुशो रक्तं सशूलमुपदेक्ष्यते ।
यदा वायुर्विबद्धश्च पिच्छवस्तिस्तदा हितः ॥ १२८ ॥
शाल्मलेरार्द्रपुष्पाणि पुटपाककृतानि च ।
संकुट्योलूखले सम्यग्गृह्णीयात् पयसि शृते ॥ १२८ ॥
मर्द्दित्वा च पलं तस्य त्रिपलं घृततैलयोः ।
युक्तं मधुककल्केन माक्षिक त्रिपलेन च ॥ १२८ ॥
तैलाक्त वपुर्ष दद्याद्वस्तेः प्रत्यागते रसे ।
भोजयेत् पयसा वापि पित्तातिसारपीड़ितम् ॥ १३० ॥

इति पिच्छवस्तिः ।

क्षीरद्रुमाणाञ्च रसे विपक्वं
तच्चैव कल्कैः पयसा च सर्पिः ।
सितोपलार्द्धं मधुपादयुक्तं
रक्तातिसारं शमयत्युदीर्णम् ॥ १३१ ॥

दाहे पाके हितं चाजं पयः चौद्रं सशर्करम् ।
गुदप्रचालने सेके प्रशस्तं पानभोजने ॥ १३२ ॥
स्वेदोऽथ मूषिका मांसैस्तद्रसास्त्रं घृणं तथा ।
गुदनिःसरणे शस्तं चाङ्गेरीघृतमुत्तमम् ॥ १३३ ॥

इति चाङ्गेरीघृतम् ।

शंबूकमांस सुस्विन्नं सतैललवणान्वितम् ।
ईषद् घृतेन चाभ्यज्य स्वेदयेत्तेन यत्नतः ॥ १३४ ॥
गुदभ्रंशमशेषेण नाशयेत् क्षिप्रमेव या ॥ १३५ ॥

मेघनादस्य मूलानि मधुना सितया सह।
निहन्ति शोणितस्रावं तंडुलोदकपानतः॥ १३६॥

इति रक्तातिसारः।

श्वेतं विसद्धनं स्निग्धं शीतलं मन्दवेदनम्।
गौरवाऽरुचि हृल्लासैः पुरीषं सार्यते कफात्॥ १३७॥
श्लेष्मातिसारे प्रथमं हितं लङ्घनपाचनम्।
योज्यश्चामातिसारघ्नो यथोक्तो दीपनो गणः॥ १३८॥
पूतिकव्योष विल्वाग्नि पाठादाड़िमहिंगुभिः।
योजयेत् संस्कृतैर्यूषः श्लेष्मातिसारनाशनः॥ १३९॥
गोकण्टकं गुहा व्याघ्री कषायं सुशृतं पिबेत्।
आमश्लेष्मातिसारघ्नं दीपनं पाचनं परम्॥ १४०॥
पथ्यासौवर्चलं हिंगु सैन्धवातिविषा वचा।
आमातिसारकफजं पीतमुष्णाम्बुना जयेत्॥ १४१॥
चव्यं सातिविषं कुष्ठं बालविल्वं सनागरम्।
वत्सकत्वक्फलं पथ्या छर्दिश्लेष्मातिसारनुत्॥ १४२॥
पथ्याग्नि कटुका पाठा वचा ग्रन्थिकवत्सकैः।
स नागरैर्जयेत् क्वाथः कल्को वा श्लैष्मिकीं स्रुतिम्॥ १४३॥
पाठावचात्रिकटुक कुष्ठं कटुकरोहिणी।
उष्णाम्बुपीतान्येतानि श्लेष्मातिसारनाशनम्॥ १४४॥
हिङ्गुसौवर्चलं व्योषमभयातिविषावचा।
पीतमुष्णाम्बुनाचूर्णं श्लेष्मातिसारनाशनम्॥ १४५॥
कुष्ठं पाठावचामुस्तं चित्रक कटुरोहिणी।
पीतमुष्णाम्बुनाचूर्णं श्लेष्मातिसारनाशनम्॥ १४६॥
चव्यं सातिविषं कुष्ठं पाठाकटुकरोहिणी।
अभयाम्बुधराशुण्ठी विल्वकर्कटिकायुता॥ १४७॥

चित्रकं पिप्पलीमूलं पिप्पलीगजपिप्पली।
क्रमिघ्नतुवचाविल्व पेशीधान्यककट्फलम्॥ १४८॥
श्लोकार्धविहितायोगाश्चत्वारः कण्टकाः स्मृताः।
श्लेष्मातिसारिणे देया घ्नन्ति वर्णबलप्रदाः॥ १४९॥
नागरातिविषामुस्तं यवानीचित्रकं वचा।
शुठीपुष्करमूलञ्च पाठाकटुकरोहिणी॥ १५०॥
भल्लातकास्थीन्यभयाधातकीकौटजं फलम्।
हिङ्गुसौवर्चलं क्षारं विडङ्गं विडसैन्धवम्॥ १५१॥
मूलपिष्टान् समानेतान्वटकानक्षसम्मितान्।
छायाशुष्कांस्तु तान् ज्ञात्वा दद्याच्छ्लेष्मातिसारिणे॥ १५२॥
क्रमिश्वपथुपांडुर्त्ति प्लीहगुल्मोदरापहान्।
ग्रहण्यर्शो विकारघ्नानग्निसन्दीपनान् पिबेत्॥ १५३॥

इति नागराद्यो वटकः। इति श्लेष्मातिसारः।

तन्द्रायुक्तो मोहसादास्य शोषी-
वर्चः कुर्य्यान्नैकरूपं तृषार्त्तः।
सर्वोद्भूतः सर्वलिङ्गोपपत्तिः कृच्छ्रो-
ऽसाध्यो बालवृद्धासहानाम्॥ १५४॥

—o—

शालिपर्णी पृश्निपर्णी बृहती कण्टकारिका।
बलाश्वदंष्ट्राविल्वानि पाठानागरधान्यकम्।
एतदाहारसंयोगे हितं सर्वातिसारिणाम्॥ १५५॥

इति बृहच्छालिपर्ण्यादिः।

यत्र कल्केन संसिद्धा प्रसारिण्याग्निमन्थयोः।
यवागूं पाय्यमानोऽपि वातीसारी सुखी भवेत्॥ १५६॥
अजमोदासमङ्गा च वालकं पद्मकेसरम्।

यवागूं साधयेदेतैः सर्वातीसारनाशिनीम् ॥ १५७ ॥
शावरकभद्रमुस्ता विश्वौषधबिल्वधातकीपुष्पैः ।
सिद्धात्तत्र यवागूर्देया सर्वातिसारिषु च ॥ १५८ ॥
खिन्नं कुतूहलदहने चाङ्गेरीपत्रसञ्चयं युक्त्या ।
सिन्दूरवैन मिश्रं हन्त्यरुचिं जठररोगञ्च ॥ १५९ ॥
कटुङ्गमोचाम्बुघनाम्बुबिल्वैः ससारिवावत्सकनागरैश्च ।
जलं शृतं सर्वभवं नराणां निहन्त्यतीसारमसक्तवेगम् ॥ १६० ॥
पञ्चमूलीबलाबिल्व गुडूचीमुस्तनागरैः ।
पाठाभूनिम्बह्रीवेर कुटजत्वक् फलैः शृतम् ॥ १६१ ॥
हन्तिसर्वानतिसारान् ज्वरदोषं वमिं तथा ।
सशूलोपद्रवं श्वास कासं हन्यात्सुदुस्तरम् ॥ १६२ ॥
पञ्चमूलीति सामान्यात्पित्ते योन्याकनीयसी ।
महतीपञ्चमूली च वातश्लेष्माधिके तथा ॥ १६३ ॥

इति पञ्चमूल्यादिः ।

समङ्गातिविषामुस्तं ह्रीवेरं विश्वधातुकी ।
कुटजत्वक्फलं बिल्वं क्वाथः सर्वातिसारनुत् ॥ १६४ ॥
अभयानागरं मुस्तं गुडेन सह योजितम् ।
चतुःसमेयं गुटिका त्रिदोषघ्नीप्रकीर्त्तिता ॥ १६५ ॥
आमातिसारमानाहं सविविधं विसूचिकाम् ।
क्षमीनरोचकं हन्याद्दीपयत्याशुचानलम् ॥ १६६ ॥
बिल्वाब्दधातुकीपाठा शुण्ठीमोचरसः समं ।
पीतोरुन्ध्यादतीसारं गुडतक्रेण दुर्ज्जयम् ॥ १६७ ॥
दण्डी दीयरकेसराजशिखरी चौराविकादीप्यकम् ।
सूर्य्यावर्त्तकजीरकद्वययुतं भृष्टं मनाक् खर्परे ।
पिष्ट्वा पर्युषिताम्बुनादिनमुखे पीतं निहन्यान्नृणाम् ।

नानावर्णरुजातिसारकगदम्प्रोवाच धन्वन्तरिः ॥ १६८ ॥
पलमङ्कोटमूलस्य पाठादार्ध्यांश्च पेषयेत्।
यष्ट्याम्बुनाचमात्रस्य वटी सर्वातिसारहा ॥ १६९ ॥
अङ्कोटमूलं तक्रेण ह्यतिसारहरं परम्।
माहिषेण तु तक्रेण पाठापत्रं तथैव च ॥ १७० ॥
कुटजत्वक्फलं मुस्तं क्वाथयित्वा जलं पिबेत्।
अतिसारं जयत्याशु शर्करामधुसंयुतम् ॥ १७१ ॥
विभीतकफलं दग्धं हन्याल्लवणसंयुतम्।
महाल्लमप्यतीसारं चक्रपाणिरिवाऽसुरान् ॥ १७२ ॥
वटप्ररोहं संपेष्य श्लक्ष्णं तण्डुलवारिणा।
तं पिबेत्तक्रसंयुक्तमतिसारहरं परम् ॥ १७३ ॥
धातकीनागरं बिल्वं सलोध्रं पद्मकेसरम्।
जम्बूत्वङ्नागरं धान्यं पाठामोचरसं तथा ॥ १७४ ॥
समगा धातकी बिल्वं मध्यजम्ब्वाम्रयोस्त्वचः।
कपित्थानि विडङ्गानि नागरं मरिचानि च ॥ १७५ ॥
चांगेरी तत्र कोलाम्ल चत्वारस्ते कफोत्तरे।
श्लोकार्द्धं विहितान् दद्यान् सस्नेह लवणान् गुडान् ॥ १७६ ॥

इत्यतीसारे च चत्वारो यूषाः।

अवेदनं सुसम्पक्वं दीप्ताग्नेः सुचिरोत्थितम्।
नानावर्णमतीसारं पुटपाकैरुपाचरेत् ॥ १७७ ॥
स्निग्धं घनं कुटजवल्कमजन्त्वऽजग्ध-
मादाय तत्क्षणमतीव च येव पिष्ट्वा।
जम्बूपलाशदलतंडुलतोयसिक्तं
बद्धं कुशेन च बहिर्घनपङ्कलिप्तम् ॥ १७८ ॥

सुखिन्नमेतदवपोड्यरसं गृहित्वा
क्षौद्रेण युक्तमतिसारवते प्रदद्यात्।
स्त्रवानिपुत्रमतिपूजित एष योगः
सर्वातिसारहरणे स्वयमेव राजा ॥ १७९ ॥

इति कुटजपुटपाकः।

काश्मरी पद्मपत्रैश्च पक्का कट्ङ्ग वल्कलम्।
सपद्मकेसरो ग्राह्यो स्याद्रसो मधुसंयुतः ॥ १८० ॥

इतिश्योनाकपुटपाकः।

न्यग्रोधादिगणा पूर्णं पुटपाकस्य तित्तिरेः।
द्रवो मधुसितो पेयः पीतो हन्त्युदरामयम् ॥ १८१ ॥

इति न्यग्रोधादि पुटपाकः॥

शुण्ठीमल्पघृतान्वितां परिवृतां गोधूमपिष्टैस्ततः।
मद्यो गोमयवेष्टितान्तु विपचेन्मन्दाग्निना चातुरः॥
शीतीकृत्यसितासमां प्रतिदिनं भक्षेन्नरः पथ्यभुक्।
सर्वोपद्रवसंयुतानपि जयेद्दीर्घातिसारामयान् ॥ १८२ ॥

इति शुण्ठीपुटपाकः।

पुटपाकस्य पाकोऽयं वह्निरारक्तवर्णता।
भैषजात्वात्पलस्यास्य पानमिष्टं चिकित्सकैः ॥ १८३ ॥

—०—

कुटजत्वक्कृतः क्वाथो घनीभूतः सुशोभनः।
सलोढ्रोऽतिविषायुक्तः सर्वातिसारनुद्भवेत् ॥ १८४ ॥
इच्छन्त्यत्राष्टमांसेन क्वाथादतिविषारजः ॥ १८५ ॥

इति कुटजावलेहः।

मूलं त्वचः पलशतं वत्सस्य कुटजस्य च।
जलद्रोणे विपाच्यैतत्पादशेषमयोद्धरेत् ॥ १८६ ॥

भूयस्तद्दिपचेत्तावद्यावल्लक्षान्त्वमेति च ।
सैन्धवाच्चविडक्षार क्षण्वेन्द्रयवधातकी ॥ १८७ ॥
जीरं चूर्णं समं कृत्वा मध्वक्तं विलिहेत्ततः ।
ततो महिषदध्ना च भोजयेच्च तमातुरम् ॥ १८८ ॥
दुर्निवारमतिसारं जयेदेतदसंशयः ॥ १८८ ॥

—०—

शतं कूटजमूलस्य क्षुण्णं तोयार्मणे पचेत् ।
क्वाथे पादावशेषेऽस्मिंल्लेही भूतः पुनः पचेत् ॥ १८८ ॥
सौवर्चल यवक्षार विडसैन्धव पिप्पली ।
धातकीन्द्रयवा जाजी चूर्णं दत्वा पलद्वयम् ॥ १९० ॥
लिह्याद्दरमात्रन्तु तच्छीतं मधुसंयुतम् ।
पक्वापक्वमतीसारं नानावर्णं सवेदनम् ॥
दुर्वारं ग्रहणी दोषं जयेच्चैव प्रवाहिकाम् ॥ १९१ ॥

इति कुटजावलेहः ।

स्नेहे यत्रास्ति नो भागो निर्दिष्टो द्रव्यकल्कयोः ।
तत्रापि पादिकः कार्य्यो द्रवात्कल्को विजानता ॥ १९२ ॥

—०—

कूटजत्वक्फलशतं कषायमुपकल्पयेत् ।
वस्त्रपूतं पुनः क्वाथ्यं यदा लेहत्वमागतम् ॥ १९३ ॥
भल्लातकं विडङ्गानि त्रिफला त्रिकटु तथा ।
रसाञ्जनं चित्रकञ्च कुटजस्य फलानि च ॥ १९४ ॥
वचा मातिविषा बिल्वं पाठा मोचरसस्तथा ।
वल्कञ्च समङ्गा च प्रत्येकन्तु पलं पलम् ॥ १९५ ॥
विंशत्पलं गुडस्यात्र चूर्णी कृत्य प्रदापयेत् ।
मधुनः कुडवं दत्वा एतस्य कुटज तथा ॥ १९६ ॥

एष लेहस्तु शमयेदर्शो रक्तसमुद्भवम्।
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम्॥ १८७॥
ये च दुर्नामजा रोगा स्तांस्तु सर्वान् व्यपोहति।
रक्तपित्तमतीसारं पांडुरोगमरोचकम्॥ १८८॥
ग्रहणीमार्दवं कार्श्यं श्वयथुं कामलामपि।
अनुपाने च तं दद्याद् दधि तक्रं घृतं पयः॥ १८९॥

इति कुटजावलेहः।

तुलामथार्द्रां गिरिमल्लिकायाः
संकुट्य पक्त्वा रसमाददीत।
तस्मिन् सुतप्ते पलसंमितानि
संचूर्ण्य दद्यात् सह शाल्मलेन॥ २००॥
पाठां समङ्गाऽतिविषां ससुस्तां
बिल्वञ्च पुष्पाणि च धातकीनाम्।
मक्षिप्य भूयो विपचेच्च तावद्
दार्वी प्रलेपः स्वरसस्य यावत्॥ २०१॥
पीतस्त्वसौ कालविदा जलेन
मण्डेन वाऽजापयसाथ वापि।
निहन्ति सर्वं त्वतिसारमुग्रं
कृष्णं सितं लोहितपीतकञ्च॥ २०२॥
दोषञ्च हन्याद्विविधं सरक्तं
पित्तं तथार्शांसि सयोणि तानि।
असृग्दरञ्चैवमसाध्यरूपं
निहन्त्यवश्यं कुटजाष्टकोऽयम्॥ २०३॥

तुला द्रव्ये जलद्रोणो द्रोणे द्रव्य तुला मताः।

इति कुटजाष्टकावलेहः।

जीर्णे त्वपथ्यभोजी स्यादर्शोभ्यः प्रतिमुच्यते ।
रोगानीकविनाशाय कौटजो लेह ईरितः ॥ २०४ ॥

इति कुटजावलेहः ।

मदार्थ्यं कौटपाठानां मूलं त्वक्कुटजस्य च ।
शाल्मलीशालनिर्यासं धातकी लोध्रदाडिमम् ॥ २०५ ॥
पिष्टाक्षसंमितान् कृत्वा वटकांस्तंडुलाम्बुना ।
तेनैव मधुसंयुक्तानेकैकान् प्रातरुत्थितः ॥ २०६ ॥
पिबेदत्ययमापन्नो विड्विसर्गेण मानवः ।
अङ्कोटवटको नाम्ना सर्वातिसारनाशनः ॥ २०७ ॥

इत्यङ्कोटवटकः ।

वत्सकस्याऽन्तृतायाश्च द्वे पले प्रस्थमौदकम् ।
श्रपयित्वा रसे तस्मिन् पादशेषेऽवतारिते ॥ २० ॥
अष्टौ पलानि शक्रस्य यवाचूर्णी कृतानि तु ।
गृहपाकं विदित्वा तु यथा वक्राऽवतारितम् ॥ २०८ ॥
सद्य सर्वातिसारांश्च सर्वांश्च ग्रहणी गदान् ।
नाशयेद्दीपयेच्चाग्निं कृष्णात्रेयस्य शासनात् ॥ २१० ॥

इति वत्सकाद्या गुटिका ।

पलमङ्कोटमूलस्य पाठां दार्वींश्च तत्समाम् ।
पिष्ट्वा तण्डुलतोयेन वटकानक्षसंमितान् ॥ २११ ॥
छाया शुष्कां पिबेत् चिप्रं पिष्ट्वा तंडुलवारिणा ।
वातपित्तकफप्रायान् द्वन्दजान् सान्निपातिकान् ॥
हन्यात् सर्वानतिसारान् गुटिकेऽयं प्रयोजिता ॥ २१२ ॥

इत्यङ्कोटगुटिका ।

पलार्धमरुणायास्तु द्विपलं कुटजस्य च ।
केशराजस्य मूलं तु कर्षं तत्सर्वमेकतः ॥ २१३ ॥

संकुट्य सलिलप्रस्थे पक्वा पादस्थिते रसे।
पूतेऽस्मिनर्धतः खण्डं छागक्षीरं चतुष्पलम्॥ २१४॥
विल्वातिविषयोश्चूर्णं मुस्तस्येन्द्रयवस्य च।
प्रत्येकमक्षमात्रन्तु क्षिप्त्वा पक्वा च भक्षयेत्॥ २१५॥
ग्रहं तदनुभुञ्जीत काञ्जीकाम्लप्रसाधितम्।
माषगोक्षुरसिद्धं वा छागक्षीरं पिबेन्नरः॥
ग्रहण्यतिसारहरो लेहोऽयमपराजितः॥ २१६॥

इत्यपराजितावलेहः।

वत्सकस्य च बीजानि दार्व्याश्चैव त्वगुत्तमा।
पिप्पली शृङ्गवेरञ्च लाक्षा कटुकरोहिणी॥ २१७॥
षड्भिरेतैर्घृतं सिद्धं पेयं मण्डविमिश्रितम्।
अतिसारं जयेच्छीघ्रं त्रिदोषमपि दारुणम्॥ २१८॥

इति षडङ्गघृतम्।

कुटजत्वक्फलं लोध्रं कृष्णादार्वीमहौषधम्।
कटुका चेति तैः सिद्धं घृतं सर्वातिसारनुत्॥ २१९॥

इति कुटजाद्यं घृतम्।

दार्वी सलाक्षाकटुका सविश्वा त्वक्कौटजाश्चक्रयवः सकृष्णः।
एभिर्विपक्वं घृतमाशु हन्ति मण्डेन पीतं सकलातिसारम्॥२२०॥

इति सप्ताङ्गघृतम्।

तुलां संकुट्य विल्वस्य पचेत्पादावशेषिताम्।
सक्षीरं साधयेत् तैलं श्लक्ष्णपिष्टैरिमैः समैः॥ २२१॥
धातकी विल्वकुष्ठञ्च रास्नाशुण्ठीपुनर्नवा।
देवदारुवचामुस्तं लोध्रं मोचरसान्वितम्॥ २२२॥

मृदग्निना साधितञ्च ग्रहण्यर्शोऽतिसारनुत् ।
विल्वतैलमिति ख्यातं मुहुदात्रेय पूजितम् ॥ २२३ ॥

इति महाविल्वतैलम् ।

ग्रहण्यर्शोविकारे ये स्नेहाद्या उपकल्पिता ।
तेपि चात्र प्रयोक्तव्या यथा दोष विजानता ॥ २२४ ॥

इति सर्वातिसारम् ।

कट्वादिभोरसै. क्रुद्धै. प्रवृद्धौ पित्तमारुतौ ।
व्यामाद्य ग्रहणी नृणामतीसारकरौ स्मृतौ ॥ २२५ ॥
सशब्दं फेनिलं रूक्षं कषायोदकसन्निभम् ।
पक्वाम्लरसवर्णाभं हरिद्राप्रतिमं घनम् ॥ २२६ ॥
विसृजत्र क्षपा सृजति सशूलं दाहपाकवान् ।
विद्यात्तद्दाहयोपान्त वातपित्तातिसारिणाम् ॥ २२७ ॥

—०—

लघुता पञ्चमूलेन पिप्पल्या सह धान्यया ।
आहारी भिषजा योज्य. सर्वदा हितमिच्छता ॥ २२८ ॥
कट्फलं मधुकं लोध्रं त्वग्दाडिमफलस्य च ।
वातपित्तातिसारघ्नं पिबेत्तण्डुलवारिणा ॥ २२९ ॥
कलिङ्गकं वचा मुस्तं दारु सातिविषा समम् ।
कल्कं तण्डुलतोयेन पिबेत्पित्तानिलामयी ॥ २३० ॥
फेनिलं बहुशो रक्तं सकलं वेदनान्वितम् ।
विविधं स्रावमाचष्टे वातपित्तातिसारिणाम् ॥ २३१ ॥

इति वातपित्तातिसारः ।

कट्वम्ललवणस्निग्धगुरुमिष्टोपसेवनात् ।
श्लेष्मपित्ते प्रकुपिते वह्निं संछाद्य देहिनाम् ॥ २३२ ॥
कषायन्तं द्रवं स्निग्धं मन्दवेगं सवेदनम् ।

घनं शाल्मली पिच्छाभं पद्मपत्रनिभ क्वचित् ॥ २३३ ॥
पिच्छिल शङ्खवर्णाभ रक्तविन्दुभिराचितम् ।
क्षुत्तृषो चातिबहुले श्लेष्मपित्तातिसारिणाम् ॥ २३४ ॥

—०—

यथा दोषप्रशमनी दद्याद्दीपनपाचनी ।
यवागूर्वदोषाणां श्लेष्मपित्तातिसारिणाम् ॥ २३५ ॥
शालिपर्णी बला बिल्वं पृथक् पर्णी च साधिता ।
दाडिमाम्लयुता पेया श्लेष्मपित्तातिसारिणाम् ॥ २३६ ॥
कुटजातिविषा मुस्तं हरिद्रा पर्णिनीद्वयम् ।
सक्षौद्रशर्करं शस्तं श्लेष्मपित्तातिसारिणाम् ॥ २३७ ॥
मुस्ता सातिविषा मूर्वा वचा च कुटज समा ।
एषा कषाय सक्षौद्र श्लेष्मपित्तातिसारहृत् ॥ २३८ ॥
मुस्तं हरिद्रे मधुकं पृष्टपर्णी सहस्तकम् ।
मधुयुक्त निहन्त्याशु श्लेष्मपित्तसमुद्भवम् ॥ २३९ ॥
सवेदन सरक्तञ्च पुरीषं मन्दधाति च ।
श्लेष्मपित्तातिसारघ्न रक्तं चाशु नियच्छति ॥ २४० ॥
पाठा वत्सकबीजानि चित्रकं विश्वभेषजम् ।
पिबेन्नि क्षाय्यचूर्णानि कृत्वा चोष्णेन वारिणा ॥ २४१ ॥
पित्तश्लेष्मातिसारघ्न ग्रहण्या शूलनुदितम् ॥ २४२ ॥
लोध्र चन्दनयष्ट्याह्व दार्वी पाठाऽनिलोत्पलम् ।
तण्डुलोदकसपिष्टं दीर्घवृन्त त्वगन्वितम् ॥ २४३ ॥
पूर्ववत् क्वथितादस्माद्रसमादाय शीतलम् ।
मध्वक्त पाययेच्चैतत्-कफपित्तोत्तरामये ॥ २४४ ॥

इति लोध्रादिपुटपाक । इति श्लेष्मपित्तातिसार ।

रसै. स्वादुकटुम्लायैर्भी वातकफौ.नृणाम् ।

कुरुतस्तावतीसार क्रुद्धौ वह्नि निरस्य च ॥ २४५ ॥
द्रव सफेनं पुरीष तत्तुल्यमामगन्धिकम ।
सशब्द वेदनावन्त न चामं परिपच्यते ॥ २४६ ॥
निल्य गुडगुडायन्त तन्द्रा मूर्च्छा भ्रमक्लमै ।
प्रसक्त सन्धिकट्यूरूजानुपृष्टास्थिशूलिन ॥ २४७ ॥
धान्यपञ्चकससिद्धो धान्यविश्वकृतोऽथवा ।
आहारो भिषजा योज्यो वातश्लेष्मातिसारिणाम् ॥ २४८ ॥
चिरविल्व वचा दारुपञ्चकोल पुनर्नवा ।
विदारी गन्धाद्दहती विल्वाद्य खण्डितान्यवान् ।
क्वाथो यवागूर्यप वा वातश्लेष्मातिसारिणाम् ॥ २४९ ॥
विल्व विल्ववानीजानि पाठाहिङ्गुशिवान्विता ।
वातश्लेष्मातिसारिषु कषाय पाचनं पिवेत् ॥ २५० ॥
चित्रकातिविषा मुस्त बालविल्व सनागरम् ।
वत्सकत्वक् फल पथ्या वातश्लेष्मातिसारनुत् ॥ २५१ ॥
पूति दारुत्वच रोध्र कट्वङ्गमथ नागरम् ।
दाडिमाम्लयुत दद्याद्वातश्लेष्मातिसारिणाम् ॥ २५२ ॥
वातातिसारे यच्चोक्त पाचन ग्राहि भेषजम् ।
तदत्रापि प्रयुञ्जीत सपित्तकफमारुते ॥ २५३ ॥

इति वातश्लेष्मातिसार ।

विल्वचूतास्थि निर्यूह पीत' सचोद्रशर्कर' ।
निहन्याच्छर्दतीसारं वैश्वानर इवाहुतिम् ॥ २५४ ॥
पटोलयवधान्याकक्काथ' पेय' सुशीतल' ।
शर्करा मधुसंयुक्त छर्दतीसारनाशन ॥ २५५ ॥
प्रियङ्ग्वञ्जनमुस्ताक्ष पाययेत्तु यथा बलम् ।
तृष्णातीसारछर्दिघ्न सचौद्र तण्डुलाम्बुना ॥ २५६ ॥

कषायो भृष्टमुद्गस्य सलाजमधुशर्करः।
छर्द्यतीसारतृट्दाहज्वरघ्नः संप्रकाशितः॥ २५७॥
जम्ब्वाम्रपल्लवोशीरवटशुङ्गावरोहकम्।
रसः क्वाथोऽथवा चूर्णं क्षौद्रेण सह योजितम्॥ २५८॥
छर्दिज्वरमतीसारं मूर्च्छां तृष्णाञ्च दुर्जयाम्।
नियच्छत्यचिराद्रक्तच्युतिं वाऽनेकहेतुकाम्॥ २५९॥
इति छर्द्यतीसारः।

विड्ङ्गातिविषा मुस्तं दारुपाठा कलिङ्गकम्।
मरिचेन समायुक्तं शोथातीसारनाशनम्॥ २६०॥
किराताब्दामृतोदीच्य मुस्तचन्दनधान्यकैः।
शोथातिसारहृल्लासतृट्दाहज्वरनाशनः॥ २६१॥
विश्वौषधस्य गर्भेण दशमूलजले शृतम्।
घृतं निहन्त्यतीसारं ग्रहणीं पाण्डुकामलाम्॥ २६२॥
इति शोथातीसारः।

तैस्तैर्भावैः शोचतोऽल्पाशनस्य
बाष्पोष्मावेवह्निमाविश्य जन्तोः।
कोष्ठं गत्वा क्षोभयेत्तस्य रक्तं
तच्चाधस्तात् काकणन्ती प्रकाशम्॥ २६३॥
निर्गच्छेद्वै विड्विमिश्रं ह्यविड् वा
निर्गन्धं वा गन्धवच्चातिसारः।
शोकोत्पन्नो दुश्चिकित्स्योऽति मात्र
रोगो वैद्यैः कष्ट एष प्रदिष्टः॥ २६४॥
भयशोकसमुद्भूतौ ज्ञेयौ वातातिसारवत्।
तयोर्वातहरी कार्य्या हर्षणाश्वासनैः क्रिया॥ २६५॥
इति भयशोकजावतीसारौ।

विपाशः क्रमिसंभूते हिता चोभयशर्मदा ॥ २६६ ॥
शर्करा धातकी लोध्रैः पाठारलुकपिप्पली ।
समङ्गाभिर्मोचरसपद्मकेसरसंयुतैः ॥ २६७ ॥
अर्शः प्रभावक्रमिजं विरुद्धपानान्न दोषसम्भूतम् ।
अतिसारभयं शमयति लेहः कल्याणको नाम्ना ॥ २६८ ॥
इति कल्याणावलेहः ।

दीप्ताग्निर्वद्धदोषो यो विबन्धं चातिसार्य्यते ।
विड़ङ्गत्रिफला कृष्णा कषायैस्तं विरेचयेत् ॥ २६९ ॥
क्षुत्क्षामस्य विरिक्तस्य युञ्ज्यात्पेयां विचक्षणः ।
भेषजैर्मारुतघ्नैश्च दीपनैः संप्रकल्पिताम् ॥ २७० ॥

अन्नाजीर्णात्प्रद्रुताः क्षोभयन्तः
कोष्टं दोषा धातुसङ्घान्मलांश्च ।
नानावर्णं नैकशः सारयन्ति
शूलोपेतं षष्ठमेनं वदन्ति ॥ २७१ ॥

तत्रापि वमनं कार्य्यं लङ्घनञ्च यथाक्रमम् ।
शूलानाह प्रसेकान्तं वामयेदतिसारिणाम् ॥ २७२ ॥
पिप्पली लवणाभ्याञ्च साधितेन जलेन वा ।
विशोदीच्योदकं पानं लङ्घनं वापि शस्यते ॥ २७३ ॥
पिप्पल्यादिः प्रयोक्तव्यो यूषः सह षड़ादिभिः ॥ २७४ ॥

—०—

नागरातिविषा मुस्तं हिंगुवत्सकचित्रकाः ।
घनतेजोवती पाठा पिप्पलीन्द्रयवाः समम् ॥ २७५ ॥
सैन्धवं कौटजं बीजं वचा कटुकरोहिणी ।
विडं पाठामतिविषां कुटजं विश्वभेषजम् ॥ २७६ ॥
एलाकुटजबीजानि लोध्रं मायरकं न्यसेत् ।

वत्सकातिविषा शुण्ठी विल्वहिंगुयवांबुदाः ॥ २७७ ॥
श्लोकार्द्धे विहिता योगाः षडेते पाचना मताः।
उष्णाम्बुमद्यधान्याम्लैः पीता वा श्लक्ष्णचूर्णिताः ॥ २७८ ॥

इत्यामपाचनविधिः।

वायुः प्रवृद्धो निचितं वलासन्नुदत्यधस्तादहिताशनस्य।
प्रवाहतोऽल्पं बहुशो मलाक्तं
प्रवाहिकान्तां प्रवदन्ति तज्ज्ञाः ॥ २७९ ॥
प्रवाहिका वातकृता सशूला
पित्तात्सदाहा सकफा कफाच्च।
सशोणिता शोणितसम्भवाच्च
ताः स्नेहरूक्षप्रभवामतास्तु ॥ २८० ॥
तासामतीसारवदादिशेच्च लिङ्गं क्रमं चामविपक्वताञ्च ॥२८१॥
तैलं सर्पिर्दधिक्षौद्रं सिता विश्वं सफाणितम्।
सर्वमालोड्य पातव्यं सद्यो निर्वाहिकां जयेत् ॥ २८२ ॥
कल्कः स्याद्वालविल्वानां तिलकल्कश्च तत्समः।
दध्नः सारोऽम्लस्नेहाढ्यः सद्यो हन्यात् प्रवाहिकाम् ॥ २८३ ॥
वलाविल्वं गुड़ं तैलं पिप्पली विश्वभेषजम्।
लिह्याद्वातप्रतिहते सशूले सप्रवाहिके ॥ २८४ ॥
विल्वपेशी गुड़ं लोध्रं तैलं मरिचयोजितम्।
लीढ्वा प्रवाहिकाक्रान्तः क्षिप्रं सुखमवाप्नुयात् ॥ २८५ ॥
पयसा पिप्पली कल्कः पीतो वा मरिचोद्भवः।
त्र्यहान्निर्वाहिकां हन्ति चिरकालानुबन्धिनीम् ॥ २८६ ॥
धातकी बदरीपत्रं कपित्थरससाधितम्।
सलोध्रमेकालो दध्ना पिबेन्निर्वाहिकार्दितः ॥ २८७ ॥

—०—

शूरपण त्रिफला मुस्तं चित्रको हस्तिपिप्पली ।
विल्व कर्कटिका हिंगु विडङ्ग सनिदग्धिकम् ॥ २८८ ॥
घृतप्रस्थ पचेदेभिर्गवां मूत्रे चतुर्गुणे ।
तत्प्रयोग पिबेत्कोल हन्यात्तेन प्रवाहिकाम् ॥ २८९ ॥

इति शूरपणाद्य घृतम् । इति प्रवाहिका

यवा सक्तुश्च लाजाना मूल पुष्पञ्च शाल्मले ।
न्यग्रोधोडुम्बराश्वत्थशुङ्गाश्च द्विपलोन्मिता ॥ २९० ॥
त्रिप्रस्थे सलिलस्यैतत् क्षीरप्रस्थ विपाचयेत् ।
क्षीरशेष कषायञ्च पूत कृत्वा विमिदयम् ॥ २९१ ॥
कल्क शाल्मलि निर्य्यास, समङ्गा चन्दनोत्पलम् ।
वत्सकस्य च बीजानि प्रियगु पद्मकेशरम् ॥ २९२ ॥
पिच्छावस्तिरियं सिद्धा सघृतक्षौद्रशर्करा ।
प्रवाहिका गुदभ्रंश रक्तस्राव ज्वरापहा ॥ २९३ ॥

इति पिच्छावस्ति ।

दीप्ताग्निर्निष्पुरीषो य सार्यते फेनिल शकृत् ।
स पिबेत् फाणित शुण्ठी दधितैलसमन्वितम् ॥ २९४ ॥

दध्ना ससारेण समाक्षिकेन
भुञ्जीत नि सारिकपीडितस्तु ।
सुतप्तकुप्य क्वथितेन वापि
क्षीरेण शीतेन मधुप्लुतेन ॥ २९५ ॥

बला विश्वसृत क्षीर गुडतैलानुयोजितम् ।
दीप्ताग्नि पाययेप्रात सुखद वर्चस क्षये ॥ २९६ ॥
शशमांस सरुधिर समगा सघृत दधि ।
विपाच्य खादेत् मेवेच स्रदन शकृता क्षये ॥ २९७ ॥

इति पुरीषक्षय ।

विबन्धवातविट्शूलपरीतः सप्रवाहिकः।
सरक्तपित्तश्च पयः पिबेत्तृष्णासमन्वितः॥ २९८॥
जीर्णेऽमृतोपमं क्षीरं मतीसारे सुयोजितम्।
स्वचिरोत्थे च तत्पेयमपांभागैस्त्रिभिः शृतम्॥ २९९॥

—०—

## अथासाध्यलक्षणमाह।

पक्वजाम्ववसंकाशं यकृत् पिण्डनिभन्तनु।
घृततैलवसा मज्जा वेशवारं पयोदधि॥ ३००॥
मांसधावन तोयाभं कृष्णं नीलारुणप्रभम्।
कर्वुरं मेचकं स्निग्धं चन्द्रकोपगतं घनम्॥ ३०१॥
कुणपं मस्तुलुङ्गाभं सगन्धं क्वथितं बहु।
तृष्णादाहभ्रमश्वासहिक्कापार्श्वास्थि शूलिनम्॥ ३०२॥
सम्मूर्च्छाऽरतिमोहैश्च युक्तं पक्ववलीगुदम्।
प्रलापयुक्तञ्च भिषग्वर्जयेदतिसारिणम्॥ ३०३॥
असंवृत्तगुदं क्षीणं शूलाध्मानमुपद्रुतम्।
गुदे पक्वे गतोष्माणमतिसारिणमुत्सृजेत्॥ ३०४॥
श्वासशूलपिपासार्त्तं क्षीणं ज्वरनिपीडितम्।
विशेषेण नरं वृद्धमतिसारो विनाशयेत्॥ ३०५॥

लिंगैरसाध्यो ग्रहणीविकारो
यैस्तैरतिसाररुगदो न सिध्येत्।
वृद्धस्य नूनं ग्रहणीविकारो
हत्वा तनुं नैव निवर्त्तते तु॥ ३०६॥

शोथं शूलं ज्वरं मूर्च्छां श्वासं कासमरोचकम्।
छर्दिं तृष्णाञ्च हिक्काञ्च दृष्ट्वातिसारिणं त्यजेत्॥ ३०७॥

हस्तपादांगुली सन्धि प्रपाको मूत्रबिट्ग्रहः ।
पुरीषस्योष्णतातीव कोष्ठभेदी न जीवति ॥ ३०८ ॥
यस्योच्चारं विना मूत्रं सम्यग्वायुश्च गच्छति ।
दीप्ताग्नेर्लघुकोष्ठस्य स्थितस्तस्योदरामयः ॥ ३०९ ॥
स्नानावगाहमभ्यंगं गुरुस्निग्धञ्च भोजनम् ।
व्यायाममग्निसन्तापमतीसारे विवर्जयेत् ॥ ३१० ॥

इत्यतिसारनिदानचिकित्साधिकारः।

—०—

## अथ ज्वरातिसारमाह ।

ज्वरातिसारयोरुक्तं निदानं यत् पृथक् पृथक् ।
तस्माज्ज्वरातिसारस्य तेन नात्रोदितः पुनः ॥ ३११ ॥
च्यवमानं ज्वरोत्सृष्ट सुपेचितमलं सदा ।
प्रतिभवसंमानन्तु साधयेत् स चिकित्सकैः ॥ ३१२ ॥
ज्वरातिसारयोरुक्तं भेषजं यत् पृथक् पृथक् ।
न तन्मिलितयोः कार्यं मन्योन्यं वर्द्धते यतः ॥ ३१३ ॥
अतस्तौ प्रतिकुर्वीत विशेषोक्तचिकित्सकैः ॥ ३१४ ॥
लङ्घनमुभयोर्युक्तं मिलिते कार्य्यं विशेषतस्तदनु ।
उत्पलषष्टिकमिदं लाजामण्डादिकं पेयम् ॥ ३१५ ॥
पृश्णीपर्णी बलाबिल्वनागरोत्पलधान्यकैः ।
ज्वरातिसारे पेयां वा पिवेत् साम्लां शृतां नरः ॥ ३१६ ॥
धातकी क्वाथसंसिद्धा विजमेषजसंस्कृता ।
दाडिमाम्लयुता पेया ज्वरातिसारशूलिनाम् ॥ ३१७ ॥
एरण्डमूलयवगोक्षुरकारनालैः
सिद्धां निहन्ति विजयां मधुना युतां ये ।

तेषां प्रणाशमुपयान्त्युदरामयास्तु
सर्वे सशूलविषमज्वरकासयुक्ताः ॥ ३१८ ॥
कथा कणिका लाजा गणो मधुसिता युतः।
पीतो ज्वरातिसारस्य तृष्णावम्योश्च नाशनः ॥ ३१९ ॥
पाठेन्द्रयवभूनिम्ब मुस्त पर्पटकामृता।
जयत्याममतीसारं ज्वरञ्च समहौषधम् ॥ ३२० ॥

—०—

नागरातिविषा मुस्तं भूनिम्बामृतवत्सकैः।
सर्वज्वरहरः क्वाथः सर्वातिसारनाशनः ॥ ३२१ ॥
इति नागरादिः।

ह्रीवेरातिविषा मुस्त बिल्वनागरधान्यकम्।
पिबेत्पिच्छा विबन्धघ्नं शूलदोषामपाचनम्।
सरक्तं हन्त्यतीसारं सज्वरं वाथ विज्वरम् ॥ ३२२ ॥
इति ह्रीवेरादिः।

गुडूच्यतिविषा धान्य शुण्ठी बिल्वाब्द वालकैः।
पाठा भूनिम्बकुटजचन्दनोशीरपर्पटैः ॥ ३२३ ॥
पिबेत्कषायं सक्षौद्रं पिपासा दाहनाशनम्।
ज्वरातिसारसन्तापं नाशयेदविकल्पतः ॥ ३२४ ॥
इति गुडूच्यादिः।

वत्सकस्य फलं दारु रोहिणी गजपिप्पली।
श्वदंष्ट्रा पिप्पली धान्यं बिल्वं पाठा यवानिका ॥ ३२५ ॥
द्वावेतो सिद्धयोगी तौ श्लोकार्द्धेनाभिभाषितौ।
ज्वरातिसारशमनौ विशेषाद्दाहनाशनौ ॥ ३२६ ॥
उत्पलं दाडिमत्वचं पद्मकेसरमेव च।
पिबेत्तण्डुलतोयेन ज्वरातिसारनाशनम् ॥ ३२७ ॥

उशीरं वालकं मुस्तं धान्यका विश्वमेव च ।
समङ्गा धातकी लोध्रं विल्वं दीपनपाचनम् ॥ ३२८ ॥
हन्त्यरोचकपिच्छाम विविध सातिवेदनम् ।
सशोणितमतीसारं सज्वरं वाथ विज्वरम् ॥ ३२९ ॥
विल्वबालकभूनिम्ब गुडूची धान्यनागरैः ।
कुटजाब्दयुतः क्वाथो ज्वरातिसारशूलनुत् ॥ ३३० ॥
समङ्गा धातकीपुष्पं केशरं नीलमुत्पलम् ।
तण्डुलोदकसयुतं ज्वरातिसारनाशनम् ॥ ३३१ ॥
नागरातिविषा मुस्ता गुडूची विश्ववत्सकैः ।
कषायः पाचनः शोथज्वरातिसारवारणः ॥ ३३२ ॥
मुस्तकातिविषा शुण्ठी वत्सकाभयतिक्तकैः ।
सर्वातिसारहृल्लास सर्वशोफज्वरापहः ॥ ३३३ ॥
क्वाथेन दशमूलस्य विश्वमक्षयुगं पिवेत् ।
ज्वरे चेवातिसारे च सशोथे ग्रहणीगदे ॥ ३३४ ॥
मुस्तकविश्वातिविषा गोपी भूनिम्बवत्सकक्वाथः ।
मकरन्दगर्भयुक्तो ज्वरातिसारं जयेद्घोरम् ॥ ३३५ ॥
नागरामृतभूनिम्ब विल्वामलकवत्सकैः ।
समुस्तातिविषोशीरैर्ज्वरातिसारहृज्जलम् ॥ ३३६ ॥

—०—

व्योष वत्सकवीजञ्च निम्बभूनिम्बमार्कवम् ।
चित्रक रोहिणी पाठां दार्वीमतिविषां वचाम् ॥ ३३७ ॥
श्लक्ष्ण चूर्णीकृतं सर्वं तत्तुल्यां वत्सकत्वचम् ।
सर्वमेकत्र संयोज्य प्रपिबेत्तंडुलाम्बुना ॥ ३३८ ॥
सक्षौद्रं वा पिबेदेतत्पाचन ग्राहि दीपनम् ।
ह्न्यादरुचिप्रशमन ज्वरातिसारनाशनम् ॥ ३३९ ॥

कामला ग्रहणीदोषान् गुल्मं प्लीहानमेव च।
प्रमेहं पाण्डुरोगञ्च श्वयथुञ्चापकर्षति ॥ ३४० ॥

इति व्योषाद्यं चूर्णम्।

दाड्व्रबिल्वजम्बाम्रकपित्थं सरसाञ्जनम्।
खाम्बां हरिद्रे ह्रीबेरं कट्फलं शुकनासिकाम् ॥ ३४१ ॥
लोध्रं मोचरसः शङ्खं धातकी वटशृङ्गकम्।
पिष्ट्वा तण्डुलतोयेन बटकानक्षसम्मितान् ॥ ३४२ ॥
छाया शुष्कान् पिबेत्प्रातर्ज्वरातीसारशान्तये।
रक्तपित्तज्वरहराञ्छूलातिसारनाशनान् ॥ ३४३ ॥

इति कट्वङ्गाद्यो बटकः।

पाठामतिविषा निम्ब समङ्गा चन्दनं जलम्।
धातकी मुस्त भूनिम्बं जटामांसी सनागरम् ॥ ३४४ ॥
दार्वीं च समभागानि घृतप्रस्थं विपाचयेत्।
सज्वरेऽस्मिन्नतिसारे ग्रहण्यां पाण्डुरोगिणि।
मूत्रकृच्छ्रे गुदस्रावे विपूच्यामलसे हितः ॥ ३४५ ॥

इति पाठाद्यं घृतम्। इति ज्वरातिसारनिदानम्।

## इति वङ्गसेनेऽतिसाराधिकारः समाप्तः ॥ २ ॥

—०—

### अथ ग्रहणीनिदानमाह।

अतिसारे निवृत्तोऽपि मन्दाग्ने रहिताशनः।
भूयः सन्दूषितो वह्निर्ग्रहणीमभिदूषयेत् ॥ १ ॥
तस्मात्कार्यः परिहारस्त्वतिसारे विरक्तवत्।
यावन्न प्रकृतिस्थः स्याद्दीपतः प्राणतस्तथा ॥ २ ॥
मांसासृङ्मेदसं तिस्रश्चतुर्थी श्लेष्मधारिणी।

पञ्चमी च मलं धत्ते षष्टी चाग्निधरा मता ।
रेतोधरासप्तमी स्यादिति सप्तकला स्मृताः ॥ ३ ॥
षष्टी पित्तधरा नाम या पूर्वं समुदाहृता ।
पक्कामाशयमध्यस्था ग्रहणी सा प्रकीर्त्तिता ॥ ४ ॥
अन्यधिष्ठानमन्नस्य ग्रहणाद् ग्रहणी मता ।
नाभेरुपरि सा ह्यग्निर्बलोपस्तम्भबृंहिता ॥ ५ ॥
अपक्वं धारयत्यन्नं पक्वं सृजति चाप्यधः ॥ ६ ॥
ग्रहण्यावलमग्निर्हि स चापि ग्रहणीं श्रितः ।
तस्मात् सन्दूषिते वह्नौ ग्रहणी दूष्यते नृणाम् ॥ ७ ॥
एकैकशः सर्वशश्च दोषैरत्यर्थं मूर्च्छितैः ।
सा दुष्टा बहुशो भुक्तमाममेव विमुञ्चति ॥ ८ ॥
पक्वं वा सरुजं पूति मुहुर्बद्धं मुहुर्द्रवम् ।
ग्रहणीरोगमाहुस्तमायुर्वेदविदो जनाः ॥ ९ ॥
पूर्वरूपन्तु तस्येदं तृष्णालस्यं बलक्षयः ।
विदाहोऽन्नस्य पाकश्च चिरात् कायस्य गौरवम् ॥ १० ॥
कटुतिक्तकषायातिरूक्ष शीताम्लभोजनैः ।
प्रमितानशनात्यध्व वेगनिग्रह मैथुनैः ॥ ११ ॥
मारुतः कुपितो वह्निं संछाद्य कुरुते गदान् ॥ १२ ॥
तस्यान्नं पच्यतेदुःखं शुक्तपाकं खरां गता ।
कंठास्यशोषः क्षुत्तृष्णा तिमिरं कर्णयोः स्वनः ॥ १३ ॥
पार्श्वोरुवं क्षणग्रीवा रुगभीक्ष्ण विषूचिका ।
हृत्पीडाकार्श्यदौर्बल्यं वैरस्यं परिकर्त्तिका ॥ १४ ॥
गृद्धिः सर्वरसानाञ्च मनसः सदनं तथा ।
जीर्णे जीर्यति चाध्मानं भुङ्क्ते स्वास्थ्यमुपैति च ॥ १५ ॥
सवातगुल्म हृद्रोग प्लीहाशङ्की च मानवः ॥

चिराद्दुःखं द्रवं शुष्कं तन्वामं शब्दफेनवत्।
पुनः पुनः सृजेद्दर्चः कासश्वासार्दितोनिलात्॥ १६॥
ग्रहणीमाश्रितं दोष मजीर्णवदुपाचरेत्।
लङ्घनैर्दीपनीयैश्च सामातीसारभेषजैः॥ १७॥
दोषं सामं निरामञ्च विद्यादत्रातिसारवत्।
अतिसारोक्त विधिना तस्यामञ्च विपाचयेत्॥ १८॥
विशुद्धामाशयायास्मै पञ्चकोलक संस्कृतम्।
दद्यात्पेयादि लघ्वन्नं योजयेत् पुनःदीपनम्॥ १९॥
पञ्चकोलकयूपस्तु मूलकानां रसोऽथवा।
सुस्निग्धो दाड़िमाम्लश्च वातनुद्भोजने हितः॥ २०॥
पेयादि पटुलघन्नं पञ्चकोलादिभिर्युतम्।
दीपनानि च तक्रं च ग्रहण्यान्तु प्रयोजयेत्॥ २१॥
कपित्थ विल्वचाङ्गेरी तक्रादादिमसाधिता।
यवागूः पाचयत्यामं शकृत् संवर्त्तयत्यपि॥ २२॥
ग्रहणीदोषिणां तक्रं दीपनं ग्राहिलाघवम्।
पथ्यं मधुरपाकत्वा न्न चपित्तं प्रकोपयेत्॥ २३॥
कषायोष्णविकाशित्वा द्रौक्ष्याच्चैव कफेहितम्।
वाते स्वाद्वम्लसान्द्रत्वात् सद्यस्कमविदाहितम्॥ २४॥
शुण्ठीससुस्तातिविषां गुडूचीं पिवेत् समांशां क्वथितां जलेन।
मन्दानलत्वे सततामताया सामानुवन्धे ग्रहणीगदे च॥२५॥

—o—

पिप्पली वृहतीव्याघ्री यवक्षार कलिङ्गकाः।
चित्रकं शारिवापाठाशठी लवणपञ्चकम्॥ २६॥
तच्चूर्णं पाययेदम्ना सुरयोष्णांभसापिवा।

मारुतग्रहणीदोषे शमनं परमं मतम् ॥ २७ ॥

इति पिप्पल्यादि चूर्णम् ।

धान्यकातिविषोदिच्य यवानी मुस्तनागरम् ।
बलाद्विपर्णीबिल्वं च दद्याद्दीपनपाचनम् ॥ २८ ॥
कलिंग हिङ्गवतिविषा वचासौ वर्चलाभया ।
दार्वी ग्रन्थिकमूलेन पातव्योष्णेन वारिणा ॥ २९ ॥
नागरं कीटनं बीजं पिप्पली बृहतीद्वयम् ।
चित्रकं शारिवापाठा क्षारं लवणपञ्चकम् ॥ ३० ॥
चूर्णयित्वा सुरामण्डं दधिकोष्णा बुकाञ्जिकैः ।
पिबेदग्नि विवृद्ध्यर्थं कोष्टवातहरं परम् ॥ ३१ ॥

—o—

यवानी, व्योषसिन्धूत्थ जीरकद्वयहिंगुजम् ।
आद्यग्रासाशितं साज्यं चूर्णं वातनुदग्निकृत् ॥ ३२ ॥

इति हिंग्वष्टकम् ।

कृष्णाविड विजयानां गुटिका सर्पिष्मतीपाने ।
ग्रहणीदोषे स्वरुचिमन्दाग्नि ग्रन्थविबन्धे च ॥ ३३ ॥

—o—

चित्रकं पिप्पलीमूलं द्वौक्षारौ लवणानि च ।
व्योषं हिंग्वजमोदाञ्च चव्यं चैकत्रचूर्णयेत् ॥ ३४ ॥
गुटिकामातुलुङ्गस्य दाडिमस्य रसेनवा ।
कृताविपाचयत्याम न्दीपयत्याशुचानलम् ॥ ३५ ॥
सौवर्चलं सैन्धवञ्च विडमौद्भिदमेवच ।
सामुद्रेणसमं पञ्च लवणान्यत्रयोजयेत् ॥ ३६ ॥

इति चित्रकादिगुटिका ।

घातात्तु परिपक्वं च वातजं ग्रहणीगदम् ।

दीपनैर्भेषजैः पक्वैः सर्पिर्भिः समुपाचरेत् ॥ ३७ ॥
धान्यबिल्व बलाशुण्ठी तालपर्णी शृतं जलं।
स्याद्वातग्रहणी दोषे सानाहे सपरिग्रहे ॥ ३८ ॥
द्विपञ्चमूले सरलं देवदारु सनागरम्।
पिप्पली पिप्पलीमूलं चित्रकं हस्तिपिप्पलीम् ॥ ३९ ॥
शणबीज यवान् कोलान् कुलित्थानाकुलीकृतान्।
पाचयेदारणालेन दध्ना सौवीरकेण च ॥ ४० ॥
चतुर्भागावशेषेण पचेत्तेन घृताढकम्।
स्वर्जिका यावशूकानां चारौ दत्वा च युक्तितः ॥ ४१ ॥
सैन्धवोद्भिदसामुद्रबिडानां रोमकस्य च।
ससौवर्चलपाकानां भागान् द्विपलिकान् पृथक् ॥ ४२ ॥
विनीय चूर्णितांस्तस्मात् पाययेत् प्रसृत बुधः।
करोत्यग्निबलं वर्ण्यं वातघ्नं भुक्तपाचनम् ॥ ४३ ॥

—०—

अत्र शुष्कमानेन द्विपञ्चमूलादीनां षट्पञ्चाशत्पलाधिकः
पलशतद्वयमारणालादीनामन्यतमस्य च।
चतुर्भिर्द्रोणैर्निःक्वाथ्य द्रोणावशेष इष्यते ॥
स्वर्जीकाचार यवचारयोरपि द्विपलिकात्वम् ॥

इति द्विपञ्चमूलाद्यं घृतम्।

पञ्चमूल्यभया व्योष पिप्पलीमूलसैन्धवैः।
रास्नाचारद्वयाऽजाजी विडङ्गशठिभिर्घृतम् ॥ ४४ ॥
शुक्तेन मातुलुङ्गस्य स्वरसेनार्द्रकस्य च।
शुष्कमूलककोलाम्बु चुक्रिका दाडिमस्य च ॥ ४५ ॥
तक्रमस्तु सुरामण्ड सौवीरक तुषोदकैः।
काञ्जिकेन च तत्पक्वं पीतमग्निकरं परम् ॥ ४५ ॥

शूलगुल्मोदरानाह कासानिलगदापहम् ॥ ४७ ॥
पञ्चमूलं कनीयांसमत्र । इति पञ्चमूलाद्यं घृतम्।
चव्यचित्रकपाठानां तेजोवत्यास्तथैव च।
कणापिप्पलीमूलानां भागान् दद्याच्चतुष्पलान् ॥ ४८ ॥
पलानि चाष्टौ मुस्तायाः सुनिशासुष्टयस्त्विह।
आस्फोतायाः प्रबालानां मालती करवीरयोः ॥
सप्तपर्णकरञ्जार्कतापसाऽऽचोटकस्य च ॥ ४९ ॥
एतान् संकुट्य विपचेत् जलद्रोणचतुष्टये। ·
चतुर्भागावशेषन्तु कुर्य्यान्मन्देन वह्निना ॥ ५० ॥
कटुकातिविषे स्यातां प्रत्येकं त्रिपलोन्मिते।
पिप्पलीनाञ्च कुड़वं विड़ङ्गानां घनस्य च ॥ ५१ ॥
तथा वत्सकबीजानां कल्कार्थं सम्प्रदापयेत् ॥ ५२ ॥
क्षारस्य यावशूकस्य स्वर्जिकायास्तथैव च।
विडसैन्धवयोश्चैव दद्याद् द्वे द्वे पले शृते ॥ ५३ ॥
ततस्तेन कषायेन कल्कैरेभिश्च पेषितैः।
दधिमस्त्वम्लयुक्तैश्च पचेद्वैद्यो घृताढ़कम् ॥ ५४ ॥
साम्लकल्कं पिबेत् कर्षं विष्टम्भे द्विगुणं पिबेत्।
उष्णोदकानुपानञ्च कुर्य्याज्जीर्णेऽथ भोजनम् ॥ ५५ ॥
अनेन ग्रहणी दोषाः सर्वे नश्यन्ति देहिनाम्।
कफवातात्ययश्चैव गुल्मश्चैव चतुर्विधः ॥ ५६ ॥
अर्शांसि नाशयत्येव प्लीहानं शमयत्यपि।
महदग्निघृतन्त्वेतद्विपक्वं परिदृश्यते ॥ ५७ ॥
स्निग्धं भुञ्जीत चाप्यन्नं मांसं खादेच्च मेदुरम्।
अल्पाग्निनाशनार्थाय भक्षयेन्मधुना सह ॥ ५८ ॥
इति महदग्निघृतम्।

घृतं नागरकल्केन सिद्धं वातानुलोमनम् ।
ग्रहणी पाण्डुरोगघ्नं प्लीहकासज्वरापहम् ॥ ५८ ॥
बिल्वौषधस्य गर्भेण दशमूलजले शृतम् ।
घृतं निहन्याच्छ्वयथुं ग्रहणीं सामवातजाम् ॥ ५९ ॥

इति शुण्ठीघृतम् ।

नागरं पिप्पलीमूलं चित्रकं हस्तिपिप्पली ।
श्वदंष्ट्रा पिप्पली धान्यं बिल्वं पाठा यवानिका ॥ ६० ॥
चाङ्गेरी स्वरसे सर्पिः कल्कैरेतैर्विपाचयेत् ।
चतुर्गुणेन दध्ना च तद्घृतं कफवातनुत् ॥ ६१ ॥
अर्शांसि ग्रहणी दोषं मूत्रकृच्छ्रं प्रवाहिकाम् ।
गुदभ्रंशार्त्तिमानाहमेतत्सर्पिर्व्यपोहति ॥ ६२ ॥

इति वृहच्छाङ्गेरीघृतम् ।

वस्तिकर्म्म भिषक् कुर्य्यान्मन्दाग्नेः सक्तवर्चसः ॥

इति वातग्रहणी ।

कट्वजीर्णविदाह्यम्ल क्षाराद्यैः पित्तमुल्वणम् ।
संप्लावयेद्धन्त्यनिलं जलं तप्तमिवानलम् ॥ ६३ ॥
सोऽजीर्णं नीलपीताभं पीताभः सार्य्यते द्रवम् ।
पूत्यम्लोद्गारहृत्कण्ठदाहारुचितृडर्दितः ॥ ६४ ॥
यत्नैः प्रदूषणं पित्तं विरेकैर्वमनेन वा ।
हृत्वा भोज्यैर्लघुग्राह्यै दीपनैरविदाहिभिः ॥ ६५ ॥
त्रिभिः संधुक्षयेदग्निं चूर्णस्निग्धैश्च तिक्तकैः ॥ ६६ ॥

---

रसाञ्जनमतिविषा वत्सकस्य फलत्वचम् ।
नागरं धातकी चैव सक्षौद्रं तण्डुलाम्बुना ॥

पित्तग्रहणीदोषार्शो रक्तपित्तातिसारनुत् ॥ ६७ ॥
इति रसाञ्जनादि चूर्णम्।

पाठावत्सकबीजानि चित्रक विश्वभेषजम्।
पिबेन्निष्काथ्य चूर्णानि कृत्वा चोष्णेन वारिणा ॥ ६८ ॥
पित्तश्लेष्माभिभूताना ग्रहण्यां शूलनुजितम् ॥ ६९ ॥
इति पाठादिक्वाथचूर्णम्।

नागरातिविषा मुस्तं धातुकी सरसाञ्जनम्।
वत्सवात्वक्फलं विल्वं पाठातिक्तकरोहिणी ॥ ७० ॥
पिबेत् समांशं तच्चूर्णं सक्षौद्रं तण्डुलाम्बुना।
पैत्तिके ग्रहणी दोषे रक्तं यच्चोपवेश्यते ॥ ७१ ॥
अर्शास्यथ गुदे शूलं जयेच्चैव प्रवाहिकाम्।
नागराद्यमिदं चूर्णं कृष्णात्रेयेण पूजितम् ॥ ७२ ॥
इति नागराद्यं चूर्णम्।

जलमष्टगुणं दद्यात् पलं कण्डित तण्डुलान्।
भावयित्वा ततो देयं तण्डुलोदककर्माणि ॥ ७३ ॥
इति तडुलोदकविधिः।

भूनिम्बकटुका व्योषं मुस्तकेन्द्रयवान् समान्।
द्वौ चित्रकाद्वत्सकत्वग्भागान् षोडशचूर्णयेत् ॥ ७४ ॥
गुडशीताम्बुना पीतं ग्रहणी दोष गुल्मनुत्।
कामला ज्वरपाण्डुत्व मेहारुच्यतिपाण्डुनुत् ॥ ७५ ॥
गुडयोगाद् गुडांबुस्याद् गुडवर्णं रसान्वितम्।
इति भूनिम्बाद्यं चूर्णम्।

पाठा बिल्वानल व्योष जम्बु दाडिमधातकी।
कटुकातिविषा मुस्ता दार्वी भूनिम्बवत्सकैः ॥ ७६ ॥
सर्वैरेतैः समं चूर्णं कौटजं तण्डुलाम्बुना।

सचौद्रेण पिबेच्छर्दि ज्वरातिसारशूलनुत् ॥ ७७ ॥
कुग्दाहग्रहणी दोषाऽरोचकानलसादनुत् ।

इति पाठाद्यं चूर्णम् ।

चन्दनं पद्मकोशीरं पाठा मूर्वा कुटं नटम् ।
षड्ग्रन्था शारिवाऽऽस्फोता सप्तपर्णाटरूषकम् ॥ ७८ ॥
पटोलोदुम्बराश्वत्थ वटप्लक्षकपित्थकान् ।
कटुका रोहिणी मुस्तं निम्बञ्च द्विपलांशकम् ॥ ७९ ॥
द्रोणेऽपां साधयेत्पादशेषे प्रस्थं घृतं पचेत् ।
किराततिक्तेन्द्रयव वीरा मागधिकोत्पलैः ॥ ८० ॥
कल्कैरक्षसमैः पेयं तत्पित्तग्रहणी गदे ।

इति चन्दनाद्यं घृतम् ।

किराततिक्तं षड्ग्रन्था त्रायमाणा कटु त्रिकम् ।
चन्दनं पद्मकोशीरं दार्वी त्वक्कटुरोहिणी ॥ ८१ ॥
कुटजत्वक्फलं मुस्तं यवानी देवदारु च ।
पटोलनिम्बपत्रैला सौराष्ट्रतिविषा वचा ॥ ८२ ॥
मधुशिग्रोश्च बीजानि मूर्वा पर्पटकं तथा ।
तच्चूर्णं मधुना लेह्यं पेयं सर्वैर्घृतेन वा ॥ ८३ ॥
हृत्पाण्डुग्रहणीदोष शूलगुल्मारुचि ज्वरान् ।
कामलां सन्निपातञ्च मुखरोगञ्च नाशयेत् ॥ ८४ ॥

इति किराताद्यं चूर्णम् ।

मसूरस्य कषायेण बिल्वगर्भं पचेद् घृतम् ।
हन्ति कुक्ष्यामयान् सर्वान् ग्रहणी पांडुकामलान् ॥ ८५ ॥

इति मसूराद्यं घृतम् ।

मसूराणां पलशतं जलद्रोणे विपाचयेत् ।
पादशेषे रसे तस्मिन् दद्याद्बिल्वं पलाष्टकम् ॥ ८६ ॥

घृतप्रस्थं पचेद्धीमान् शास्त्रविन्मृदुनाग्निना।
प्रवाहिकामतिसारं ग्रहणी दोषमेव च॥ ८७॥
हन्यात् क्षिप्रमसन्देह कृष्णात्रेयस्य शासनात्।
भिन्न विट्के प्रसशन्ति मसूरघृतमुत्तमम्॥ ८८॥

इति तन्त्रान्तरोक्तं मसूरघृतम्।

व्रीहि प्राण्यङ्गयोः क्वाथ सुपितं परिवर्जयेत्।
नवं धान्यमभिष्यन्दि लघुसंवत्सरोषितम्।
विदाहि गुरुविष्टम्भि विरूढ़ं वातकोपनम्॥ ८९॥

—०—

कलिङ्गफलकल्केन घृतप्रस्थं प्रसाधितम्।
कफपित्तसमुद्भूतां ग्रहणीं हन्यान्न संशयः॥ ९०॥

इति कलिङ्गघृतम्। इति पित्तग्रहणीनिदानम्।

गुर्वतिस्निग्धशीतादि भोजनादतिभोजनात्।
भुक्तमात्रस्य च स्वप्नाद्धन्त्यग्निं कुपितः कफः॥ ९१॥
तस्यान्नं पच्यते दुःखं हृल्लास छर्द्यरोचकाः।
आस्योपदेह माधुर्य्य कासष्ठीवनपीनसाः॥ ९२॥
हृदयं मन्यतेस्त्यानमुदरं स्तिमितं गुरुम्।
दुष्टो मधुर उद्गार सदनं स्त्रीष्वहर्षणम्॥ ९३॥
भिन्नामश्लेष्मसंसृष्टगुरुवर्चः प्रवर्त्तनम्।
अकृशस्यापि दौर्बल्यमालस्यञ्च कफात्मके॥ ९४॥

तस्याश्चिकित्सामाह।

ग्रहण्यां कफदुष्टायां तीक्ष्णैः प्रच्छर्दने कृते।
लवणाम्लकटुक्षारैः क्रमादग्निं विवर्द्धयेत्॥ ९५॥
शुण्ठी सुस्तं विडङ्गञ्च सुरातक्रोष्णवारिणा।

श्लैष्मिकं ग्रहणीदोषं पीतं ह्यग्निविवर्द्धनम् ॥ ९६ ॥
पालाशं चित्रकं चव्यं मातुलुङ्गहरीतकी।
पिप्पली पिप्पलीमूलं पाठा धान्यकनागरम् ॥ ९७ ॥
कर्षिकानुदकप्रस्थे पक्का पादावशेषिते।
पानीयार्थं प्रयुञ्जीत यवागूं तैश्च साधिताम् ॥ ९८ ॥

इति यवागूविधिः

समूलां पिप्पलीं चारौ द्वौ पञ्च लवणानि च।
मातुलुङ्गाभया रास्ना शठी मरिच नागरम् ॥ ९९ ॥
कृत्वा समांशं तच्चूर्णं पिबेत्प्रातः सुखांबुना।
श्लैष्मिके ग्रहणीदोषे बलमांसाग्निवर्द्धनम् ॥ १०० ॥

इति पिप्पलाद्यं चूर्णम्।

व्योषं साम्लत्वचं वल्कं चूर्णयेत्तंडुलाम्बुना।
निपीतं ग्रहणीदोषं कामला पाण्डुरोगजित् ॥ १०१ ॥
प्रमेहारुच्यतीसार गुल्म शोथज्वरापहः ॥ १०२ ॥

---

भल्लातकं त्रिकटुकं त्रिफला लवणत्रयम्।
अन्तर्धूमं द्विपलिकं गोपुरीषाग्निना दहेत् ॥ १०३ ॥
सक्षारः सर्पिषा पीतो भोज्यैर्वाप्यथ चूर्णितः।
हृत्पाण्डुग्रहणीदोष गुल्मोदावर्त्त शूलनुत् ॥ १०४ ॥

इति भल्लातकक्षारः।

दुरालभाकरञ्जौ द्वौ सप्तपर्णं सवत्सकम्।
षड्ग्रन्था मदनं मूर्वा पाठा चारग्वधं तथा ॥ १०५ ॥
गोमूत्रे च समांशानि कृत्वा चूर्णानि दापयेत्।

दग्ध्वा तच्च पिबेत् क्षारं बलवर्णाग्निवर्द्धनम् ॥ १०६ ॥

इति दुरालभादि क्षारः।

भूनिम्ब रोहिणी तिक्ता पटोलं निम्बपर्पटम् ।
दहेन्माहिषमूत्रेण क्षार एषोऽग्निवर्द्धनः ॥ १०७ ॥

इति भूनिम्बाद्यः क्षारः।

द्वे हरिद्रे वचा कुष्टं चित्रकं कटुरोहिणी ।
मुस्तकं वत्समूत्रेण सिद्धः क्षारोऽग्निवर्द्धनः ॥ १०८ ॥

इति हरिद्राद्यः क्षारः।

यवक्षारं दशपलं सैन्धवं द्विगुणं भवेत् ।
भल्लातकानि त्रिवृता चित्रकं त्रिफलात्वचः ॥ १०९ ॥
स्नुह्यर्कयोश्च दुग्धञ्च तैलस्य च घृतस्य च ।
प्रस्थं प्रस्थं समावाप्य चूर्णैरेतैर्विमिश्रयेत् ॥ ११० ॥
तद्दाहयेन्महाक्षारं पाययेच्च सुखाम्बुना ।
ग्रहणी दीपने श्रेष्ठो गुल्मार्शो कृमिनाशनः ॥ १११ ॥

इति महाक्षारः।

चतुष्पलं सुधाकाण्डात्त्रिपलं लवणत्रयात् ।
वार्त्ताकात् कुडवश्चार्काद्बिल्वे द्वे चित्रकात्पले ॥ ११२ ॥
दग्धानि वार्त्ताकरसे गुड़िका भोजनोत्तराः ।
भुक्ताभुक्तं पचन्त्याशु कासश्वासार्शसां हिताः ।
विसूचिका प्रतिश्याय हृद्रोगघ्नाश्च ता मताः ॥ ११३ ॥

इति वार्त्ताकगुटिका।

नवपिप्पली मध्वाक्ते कामगेऽगुरुधूपिते ।
मध्वार्द्रकं जलसमं चूर्णानोमानि दापयेत् ॥ ११४ ॥

कुड़वार्धं विड़ङ्गस्य पिप्पल्याः कुडवं तथा।
चतुर्थकांशं त्वक्क्षीरं केसरं मरिचानि च॥ ११५॥
त्वगेलापत्र कर्पूरं क्रमुकाऽतिविषा घनान्।
हरेणुले तु तेजोह्वा पिप्पलीमूल चित्रकान्॥ ११६॥
कर्षिकं संस्थितं मांसमेतद्दूर्ध्वं नियोजयेत्।
मन्दं सन्दिपयत्यग्निं करोति विषमं समम्॥ ११७॥
हृत्पाण्डुग्रहणीरोग कुष्ठार्शः श्वयथुज्वरान्।
वातश्लेष्मामयांश्चान्या नरिष्टोयं व्यपोहति॥ ११८॥

इति मध्वारिष्टः।

द्रोणं मधुकपुष्पाणां विडङ्गस्य ततोऽर्धतः।
चित्रकस्य ततोर्ध्वञ्च तथा भल्लातकाढकम्॥ ११९॥
मञ्जिष्टाष्टपलं चैव द्रोणेऽपाञ्च विपाचयेत्।
द्रोणावशेषं तच्छीतं मध्वाढकसमन्वितम्॥ १२०॥
एला मृणाल सुरभिः चन्दनागुरुधूपिते।
कुम्भे मासि स्थिते तापे मासान्ते तं वियोजयेत्॥ १२१॥
ग्रहणी दीपयेत्येष बृंहणी रक्तपित्तनुत्।
शोथकुष्ठकिलासानां प्रमेहानाञ्च नाशनः॥ १२२॥

इति मधुपुष्पासवः।

द्विपञ्चमूलरजनी जीवकर्षभचित्रकान्।
पृथक् पञ्चपलैर्भागै चतुर्द्रोणेऽम्भसः पचेत्॥ १२३॥
द्रोणशेषे रसे पूते गुड़स्य कुड़वं क्षिपेत्।
चूर्णितान् पलिकान् सर्वान् दद्याच्चात्र समाक्षिकान्॥१२४॥
प्रियङ्गुपुष्प मञ्जिष्टा विडङ्गं मधुकं कणा।
लोध्रं सावरकं चैव मासार्द्धं स्थापयेत् क्षितौ॥ १२५॥

दशमूलासवः सिद्धो दीपनो रक्तपित्तनुत् ।
आनाह कफ हृद्रोग पाण्डुरोगाङ्गसादनुत् ॥ १२६ ॥

इति दशमूलासवः ।

प्राक्षिकी पिप्पलीप्रस्थं गुडं प्रस्थं विभीतकम् ।
उदकप्रस्थसंयुक्तं यवप्रस्थं निधापयेत् ॥ १२७ ॥
तस्मात् सुजातात्तुपलं मस्विनाऽञ्जलिसंयुतम् ।
पिबेत् पिण्डासवो ह्येष रोगानो क्वविनाशनः ॥ १२८ ॥
स्वस्थोऽपि यः पिबेन्मास नरः स्निग्धरसाशनः ।
तस्याग्निं दीपयत्येष आरोग्याय प्रकीर्त्तितः ॥ १२९ ॥

इति पिण्डासवः ।

बृहतीचित्रकक्षारः सप्तवारपरिस्रुतः ।
द्विगुणेन घृत पक्वं वर्द्धयत्याशु पावकम् ॥ १३० ॥

इति बृहतीचित्रकक्षारघृतम् ।

आमाय जठरस्याग्ने र्यस्य स्यान्न मलच्युतिः ।
तस्य वह्निकरैः पक्वं युक्तियुक्त हितं घृतम् ॥ १३१ ॥

इति श्लेष्मग्रहणी निदानम् ।

पृथग्वातादिनिर्दिष्टहेतुलिङ्ग समागमे ।
त्रिदोषं निर्दिशेदेवं तेषां वक्ष्यामि लक्षणम् ॥ १३२ ॥
त्रिदोषविधिवद्वैद्यः पञ्चकर्म्माणि कारयेत् ।
सर्वजायां ग्रहण्यान्तु सामान्यो विधिरीच्यते ॥ १३३ ॥
दीपनान्यन्नपानानि चूर्णारिष्ट घृतानि च ।
प्रविभज्य यथाऽवस्थं सर्वजे वह्निकर्म च ॥ १३४ ॥
घृतक्षाराऽऽसवाऽरिष्टान् दद्यादग्निविवर्द्धनान् ॥ १३५ ॥

शतावरी चन्दनपद्मकोत्पलं
प्रियं गुपाठामगधास्थिराभिः ।

बिल्वाजमोदातिविषा समंगा
जीवन्ति वह्नीन्द्रयवैः सुपिष्टैः॥ १३६ ॥
घृतं कषाये तु कलिंगकानां
पक्वं निहन्याद्ग्रहणीं त्रिदोषाम्।
पित्तातिसारं रुधिरप्रवाहं
तथार्शसो दोषसमूहं वन्ध्यम्॥ १३७ ॥

इति शतावरीघृतम्।

आरुष्करं हिंगुकणा सयष्टी
पूतिक शुण्ठी मरीचं गजाह्वा।
अजाजी चव्यारुचकं सवह्नि-
मूलं विडङ्गं सह दीप्यकञ्च॥ १३८ ॥
सक्षारहिंगुत्रिकटूग्रगन्धा
पलार्धभागैर्विपचेद्विधिज्ञः॥ १३९ ॥
अत्र धान्यकचांगेरी दशमूली समं पृथक्।
हविः प्रस्थं निहन्त्याशु ग्रहणीं सर्वजां नृणाम्॥ १४० ।
विष्टम्भमामजान् रोगान् क्रिमिजान् कुक्षिजांस्तथा।
मन्दानल भवान् सर्वान्नभ्राणिव वारिदम्॥ १४१ ॥

इत्यारुष्कारं घृतम्। इति सर्वजा ग्रहणी निदानम्।

अन्त्रकूजनमालस्यं दौर्बल्यं सदनं तथा।
द्रवं घनं सितं स्निग्धं सकटीवेदनं सकृत्॥ १४२ ॥
आमं बहुसपैच्छिल्यं सशब्दं मन्दवेदनम्।
पक्षान्मासाद्दशाहाद्वा नित्यं वापि विमुञ्चति॥ १४३ ॥
दिवाप्रकोपो भवति रात्रौ शान्तिं व्रजेच्च सा।
दुर्विज्ञेया दुर्निवारा चिरकालानुबन्धिनी।

सा भवेदामवातेन संग्रहग्रहणीमता ॥ १४४ ॥

चिकित्सामाह ।

मसूरयूषः संपीतः क्वाथो नागरविल्वजः ।
संग्रहग्रहणीं हन्ति तक्रेण हृहती तथा ॥ १४५ ॥
विश्वाजाजी विल्वपेशी कल्कसिद्धं घृतं हरेत् ।
मसूरस्य कषायेण संग्रहग्रहणीगदम् ॥ १४६ ॥

इति मसूरघृतम् । इति संग्रहग्रहणी ।

## अथ गोतक्रस्य गुणाः ।

ग्रहणीरोगिणां तक्रं संग्राही लघुदीपनम् ।
सेवनीयं सदा गव्यं त्रिदोषशमनं हितम् ॥ १४७
दुःसाध्यो ग्रहणी दोषो भेषजैर्नैव शाम्यति ।
सहस्रशोऽपि विहिते विना तक्रस्य सेवनात् ॥ १४८ ॥
यथा तृणचयं वह्नि स्तमांसि सविता यथा ।
निहन्ति ग्रहणीरोगं तथा तक्रस्य सेवनम् ॥ १४९ ॥
संग्राह्या धेनवः श्रेष्टा स्तक्रपानाय रोगिणाम् ।
तासां पयस्तत्रगुणा जायन्ते वर्णभेदतः ॥ १५० ॥
पीताया मारुतं हन्ति श्वेतायाः पित्तजान् गदान् ।
रक्तायाः गोः कफं हन्ति कृष्णायाः गोस्त्रिदोषजित् ॥ १५१
चरण्ये चारयेद्धेनू नातिष्टपलतान्विते ॥ १५२ ॥
पीतोदकाया विस्रभात् मन्दं मन्दं प्रचारयेत् ।
तासां दुग्धं परिग्राह्यं तक्रार्थं भिषजां वरैः ॥ १५३ ॥
दुग्धमक्वथितं वाते पित्ते त्वोपक्वतं हितम् ।
कफे त्रिदोषजे रोगे पादोन क्वथितं स्मृतम् ॥ १५४ ॥

सदोषदल संयोगात् कठिन दधि ग्रस्यते।
तदल्पजलसंयुक्तं मथनं मथितं भवेत् ॥ १५५ ॥
तक्रमुद्धृतसारन्तु शुण्ठीचूर्णयुतं पिबेत्।
तक्रेण निर्बले जाते त्यक्ते चान्नादि भोजने ॥ १५६ ॥
शरीरे जातं रूक्षत्वं शुक्लत्वं मूत्र नेत्रयोः।
किञ्चित् स्निग्धं पिबेत्तक्रं ततश्चाधिकसारवत् ॥ १५७ ॥
तक्रं सनवनीतञ्च पिबेन्नागरसंयुतम्।
शनैः शनैः हरेदन्नं तक्रन्तु परिवर्द्धयेत् ॥ १५८ ॥
तक्रमेव यथाहारो भवेदन्नविवर्जित.।
तक्रसात्म्यं यथा कुर्या न्नैवान्नं तत्र भक्षयेत् ॥ १५९ ॥
बुभुक्षाया पिपासाया पिबेत्तक्रं सनागरम्।
श्रमं न कुर्य्याद्द्वहुशो न कुर्य्याद्बहुभाषणम् ॥ १६० ॥
न कुर्य्यान्मैथुनं तक्रं पाने क्रोधं विवर्जयेत्।
एवं यः सेवते तक्रं ग्रहणी तस्य नश्यति।
शीघ्रमेव न सन्देहः यौर्यथा द्यूतकारिणः ॥ १६१ ॥
प्रशान्ते ग्रहणीरोगे अन्नं गृह्लाति योगतः।
अन्नत्यागविधानेन गृह्णीयाच्च शनैः शनैः ॥ १६२ ॥
ग्रहणीरोगिणां तक्रं हितं दोषत्रयापहम्।
कालकूटविषं साक्षादन्यथा परिसेवितम् ॥ १६३ ॥
तस्माद्यत्नेन संसेव्यं तक्रं संग्रहणीगदे।
शस्तं नातःपरं किञ्चिद् ग्रहणीरोगशान्तये ॥ १६४ ॥

इति सर्वग्रहण्यां तक्रसेवनविधिः।

आम्रातकाम्रजम्बूत्थे कषाये पादशेषिते।
शालिसिद्धा यवागूस्तु भुक्ता कुक्ष्यामयं जयेत् ॥ १६५ ॥
अङ्कोटमूलं धातक्यो विल्वपेशी.मह्यौषधम्।

क्थितं शीतलं पेयं कुक्षिरोगहरं परम् ॥ १६६ ॥
अङ्कोटस्य त्रयोभागा, भागश्चैकोऽरुणा भवः ।
तण्डुलोदकसपीत सर्वकुक्ष्यामयापहः ॥ १६७ ॥
तक्रेण वल्कलं पीतं स्निग्धं पथ्यान्तरद्रवम् ।
ग्रहणी नाशयेत् क्षिप्रमामरक्ताश्रितां ध्रुवम् ॥ १६८ ॥
खिन्नानि बालबिल्वानि खादेत् क्षौद्रेण मानवः ।
तक्रेणाऽनलगर्भेण साद्धं तद् ग्रहणीं जयेत् ॥ १६९ ॥
बालबिल्व बला शुण्ठी धातकी मुस्तधान्यकैः ।
कषायै, साधिता हन्ति यवागूर्ग्रहणीगदम् ॥ १७० ॥
जम्बू दाड़िम शृङ्गाट पाठाकच्छटपल्लवैः ॥ १७१ ॥
पक्व पर्युषित बालबिल्वं स गुडनागरम् ।
हन्ति सर्वानतिसारान् ग्रहणीमतिदुस्तराम् ॥ १७२ ॥

—०—

चाङ्गेरी स्वरसे दद्याद् घृतप्रस्थं चतुर्गुणम् ।
अजाक्षीरस्य च प्रस्थं पिबेत्सर्पिरिहौषधैः ॥ १७३ ॥
व्योष बिल्व कपित्थानि समङ्गा धातकी घनम् ।
अजाम्ब्यतिविषा मोचा धान्यकोत्पलवालकम् ॥ १७४ ॥
बला यवानिकाग्निश्च पाठा ग्रन्थिकदाडिमम् ।
अचममाणैरेतैस्तु सर्पि. सिद्धं महागुणम् ॥ १७५ ॥
ग्रहण्यर्शो विकारघ्नं शूलगुल्मज्वरापहम् ।
कफवातारुचिहरं बलवर्णाग्निवर्धनम् ॥ १७६ ॥
क्रमिदोषगुदभ्रंश यकृत् प्लीहामयापहम् ।
सर्वातिसारशमनं ग्रहणीदीपनं परम् ॥ १७७ ॥

इति चाङ्गेरी घृतम् ।

पिप्पली नागरं पाठा श्वदंष्ट्रा च पृथक् पृथक् ।

भागांस्त्रिपलिकान् दत्वा कषायमुपकल्पयेत् ॥ १७८ ॥
गंडारी पिप्पलीमूलं व्योषं चव्यकचित्रकम् ।
पिष्ट्वा कल्कं क्षिपेत् क्वाथे द्रव्यैरर्धपलैः पृथक् ॥ १७९ ॥
पलानि सर्पिषश्चात्र चत्वारिंशत्प्रदापयेत् ।
चांगेरी स्वरसं तुल्यं सर्पिषा दधिषड्गुणम् ॥ १८० ॥
मृदग्निना साधयेत्तत् सर्पिः सिद्धं निधापयेत् ।
तदाहारे विधातव्यं पाने च योगिकैर्बुधैः ॥ १८१ ॥
ग्रहण्यर्शो विकारघ्नं गुल्महृद्रोगनाशनम् ।
शोथप्लीहोदरानर्शो मूत्रकृच्छ्रज्वरापहम् ॥ १८२ ॥
कासहिक्कारुचिश्वास सूदनं पार्श्वशूलनुत् ।
बलपुष्टिवर्णकरमग्निसन्दीपनं परम् ॥ १८३ ॥
अत्र गण्डार्यादिचित्रकान्तैस्त्रिपलिकैरेभिः षोड़शगुणै-र्जलैस्तथा क्वाथयेद्यथा कषायः स्वे इहसमत्वं भवतीति ।

इति वृहच्चाङ्गेरी घृतम् ।

मुस्तकातिविषा बिल्व चूर्णितं कौटजं तथा ।
मधुना वापि संलीढ़ं ग्रहणीं हन्ति सर्वजाम् ॥ १८४ ॥
पञ्चकोलक सुस्विन्नं बालबिल्वं गुड़ान्वितम् ।
पेयाद्रवानुपानं स्यात् संग्रहण्यतिसारनुत् ॥ १८५ ॥
श्वेतो वा यदि वा रक्तः प्रपक्वो ग्रहणी गदः ।
गुड़ेनाधिकसंस्विन्न भक्षितेनाशु नश्यति ॥ १८६ ॥

बिल्वाब्द शक्रयवबालकमोचसिद्धं
माजं पयः पिबति यो दिवसत्रयञ्च ।
सोऽतिप्रवृद्ध चिरजं ग्रहणीविकारं
शेषं समोत्थितमसाध्यमपि क्षिणोति ॥ १८७

भोजनार्थं समुद्रानां वर्चो वेगविनाशनम् ।

आरनालोदकैः पिष्टं प्रातः पिष्टकभक्षणम् ॥ १८८ ॥
कैथराजोर्जुनक्षारं प्रातः पीतञ्च मस्तुना ।
निहन्ति साममत्यर्थ मचिराद् ग्रहणीरुजम् ॥ १८८ ॥

इति सिद्धोऽयं योगः।

कपित्थमधिलीढ्वं व सव्योषं चौद्रशर्करम् ।
कट्फलं मधुसंयुक्तं मुच्यते जठरामयात् ॥ १९० ॥
चूपणत्रिफला कल्के विल्वमात्रे गुड़ात्पले ।
सर्पिषोऽष्टपले पक्वा मात्रां मन्दानलः पिवेत् ॥ १९१ ॥

इत्यष्टपलकं घृतम्।

विल्वाग्नि चव्यार्द्रकशृङ्गवेरैः
क्वाथेन कल्केन च सिद्धमाज्यम् ।
सच्छागदुग्धं ग्रहणीगदोत्थे
शोथाग्नि सादा ऽरुचिनुदरिष्टम् ॥ १९२ ॥

इति विल्वाद्यं घृतम्।

मसूरस्य तुला क्वाथे घृतप्रस्थं विपाचयेत् ।
पिप्पली पिप्पलीमूलं चव्यचित्रकनागरम् ॥ १९३ ॥
तत्सिद्धं द्विगुणे चीरे ग्रहणीघ्नं त्रिदोषनुत् ।
दुर्नामानिलविष्टम्भं जयेच्चैव प्रवाहिकाम् ॥ १९४ ॥
बलवर्णकरं हृद्यमग्निसन्दीपनं परम् ।

इति वृहन्मसूराद्यं घृतम्।

यवानी पिप्पलीमूलं चतुर्जातकनागरैः ।
मरिचाग्निजलाजाजी धान्यसौवर्चलैः समैः ॥ १९५ ॥
वृक्षाम्लधातकी कृष्णाविल्व दाड़िम दीप्यकैः ।
त्रिगुणैः षड्गुणसितैः कपित्थाष्टगुणैः कृतः ॥ १९६ ॥

चूर्णोऽतिसारग्रहणी क्षयगुल्मगुदामयान् ।
श्वासकासाऽरुचि हिक्कां कपित्थाष्टमिदं जयेत् ॥ १९७ ॥

इति कपित्थाष्टकम् ।

मधूकपुष्पस्वरसं शृतमन्दक्षयी क्षतम् ।
क्षौद्रपादयुतं शीतं पूर्ववत्सन्निधापयेत् ॥ १९८ ॥
तं पिवा ग्रहणी दोषान् जयेत् सर्वाग्निताशन ॥ १९९ ॥

इति मधूकपुष्पासव ।

प्रस्थ त्रयेणामलकी रसस्य
शुद्धस्य दत्वार्धतुला गुडस्य ।
चूर्णीकृतैर्ग्रन्थिक जीर चव्य
व्योषेभ कृष्णाहवुषाजमोदैः ॥ २०० ॥
विडङ्गसिन्धुत्रिफला यवानी
पाठाग्नि धान्यैश्च पलप्रमाणैः ।
दत्वा त्रिवृच्चूर्ण पलानि चाष्टा
वष्टौ च तैलस्य पचेद्यथावत् ॥ २०१ ॥
तं भक्षयेदक्षफलप्रमाणं
यथेष्टचेष्टस्त्रिसु गन्धियुक्तम् ।
अनेन सर्वे ग्रहणीविकारा
सश्वासकास स्वरभेदशोथा ॥ २०२ ॥
शाम्यन्ति चाऽयं चिरमन्तरग्ने
र्हतस्य पुंस्त्वस्य च वृद्धिहेतुः ।
स्त्रीणाञ्च वन्ध्यामयनाशनः स्यात्
कल्याणको नाम गुडः प्रसिद्धः ॥ २०३ ॥
तैले विष्वमनाक् भ्रष्टं त्रिसु गन्धि पलं पलम् ।

सुसिद्धे निक्षिपेदत्र गुडे कल्याणपूर्वके ॥

इति कल्याणगुडः ।

पिप्पली पिप्पलीमूलं चित्रको हस्तिपिप्पली ।
धान्यकञ्च विडङ्गानि यवानी मरिचानि च ॥ २०४ ॥
त्रिफला चाजमोदा च नीलिनी जीरकं तथा ।
सौवर्चलं सैन्धवञ्च सामुद्रं रुचकं विडम् ॥ २०५ ॥
आरग्वधश्च त्वक्पत्रं सूक्ष्मैला चोपकुञ्चिका ।
नागरेन्द्रयवाश्चैव षड्विंशत्येककार्षिकम् ॥ २०६ ॥
मृद्वीकायाः प्रधानाया दद्यात्पलचतुष्टयम् ।
त्रिवृतायाः पलान्यष्टौ गुडस्यार्धं तुलां तथा ॥ २०७ ॥
तिलतैलं पलान्यष्टौ चामलक्या रसस्य तु ।
प्रस्थत्रयमिदं सर्वं शनैर्मृदग्निना पचेत् ॥ २०८ ॥
औदुम्बरं चामलकं वादरं वा यथा फलम् ।
तावन्मात्रं प्रयुञ्जीत भिषक् दृष्ट्वा यथा बलम् ॥ २०९ ॥
सर्वांश्च ग्रहणीरोगान् प्रमेहांश्चैकविंशतिम् ।
उरोघातं प्रतिश्यायं दौर्बल्यं वह्निसंचयम् ॥ २१० ॥
ज्वरानपि हरेत्सर्वान् कुर्य्यात्कान्तिं मतिं स्वरम् ।
पिचुपाठान्वयाद्धन्ति रक्तपित्तञ्च विड्ग्रहम् ॥ २११ ॥
धातुक्षीणो वयः क्षीणः क्षीण. स्त्रीभि. क्षयी तथा ।
तेभ्यो हितश्च सर्वेभ्यो वन्ध्यानाञ्चैव पुत्रदम् ॥ २१२ ॥
रूपौदार्य्यं स्वरौदार्य्यं मेधामावहति स्थिराम् ।
महाकल्याणकं नाम रसायणमनुत्तमम् ॥ २१३ ॥

इति महाकल्याणगुड़ः ।

विडङ्ग पिप्पलीमूल त्रिफला धान्यचित्रकान् ।
मरिचेन्द्रयवा जाजी पिप्पली हस्तिपिप्पलीः ॥ २१४ ॥

लवणान्यजमोदाञ्च चूर्णितं कार्षिकं पृथक्।
तिलतैलं त्रिवृच्चूर्णं भागो चाष्टपलोन्मितौ ॥ २१५ ॥
धात्रीफलरसप्रस्थान् गुडानर्धतुलास्तथा।
पक्वा मृद्वग्निना खादेद्वदरोदुम्बरोन्मितम् ॥ २१६ ॥
गुरोर्भुक्तं न चावस्था विहाराहारयन्त्रिणा।
मन्दाग्नित्वं ज्वरं मूर्च्छां मूत्रकृच्छ्रमरोचकम् ॥ २१७ ॥
श्वयथुं गात्रशूलञ्च कासं श्वासं भ्रमत्रयम्।
कुष्टार्शः कामला मेहान् गुल्मोदरभगन्दरान् ॥ २१८ ॥
ग्रहणी पाण्डुरोगाश्च हन्ति सर्वामयास्त्वयम्।
कल्याणकोगुड स्यात सर्वास्तृतुषु योजित. ॥ २१९ ॥

इति कल्याणको गुडः।

चित्रकामृत चागेरी चव्ययन्थिकनागरम्।
विल्वञ्च धातकी पाठा ह्रीवेरं सपुनर्नवा ॥ २२० ॥
कुटजत्वक्फलं लोध्रं पृथक् पञ्चपलांशकम्।
जले चतुर्गुणे सिद्ध यावत्पादावशेषितम् ॥ २२१ ॥
आर्द्रकस्वरसं मुस्तं प्रसन्न चाम्लकाञ्जिकम्।
तुलार्धञ्च पृथग् दद्यात् गुडस्यार्धतुला पचेत् ॥ २२२ ॥
तन्तुमत्तद्य तोये प्रक्षिप्तं न विसर्पति।
शूर्पपर्णं त्रिफला मुस्त यवानी जीरकद्वयम् ॥ २२३ ॥
चूर्णमष्टपलैरेतै सिद्धशीते प्रदापयेत्।
मात्रामग्निबलं ज्ञात्वा उपयुञ्जीत बुद्धिमान् ॥ २२४ ॥
मन्दाग्न्युग्रपहता केचिद्ये च वातकफामये।
हतास्तेभ्यो हितं चेदं वह्निवृद्धिकरं परम् ॥ २२५ ॥
ग्रहणीदोषशूलघ्नं शोथपाण्डामयापहम्।
श्वासकासज्वरार्शोघ्नं प्लीहगुल्मोदरापहम् ॥ २२६ ॥

दीर्घकालोत्थितञ्चैव हन्ति रोगगणन्त्विदम् ।
दृष्टं वारसहस्रेण किं पुनश्चाचिरोत्थितम् ॥ २२७ ॥
गुड़ं कल्याणकं नाम वृष्यं पौष्यं बलप्रदम् ।

इति कल्याणकं गुड़म् ।

मल्लारणाल चाङ्गेरी शृङ्गवेररसं तथा ।
तुलार्धन्तु पृथक् दद्यादामलक्याः शताढकम् ॥ २२८ ॥
तिलतैलपलान्यष्टौ गुडस्यार्धतुलां पचेत् ।
तन्तुमत्स्यष्टं तोये प्रक्षिप्तं न विसर्पति ॥ २२९ ॥
वत्सकातिविषा कुष्टं धातकी च रसाञ्जनम् ।
सव्योषं पिप्पलीमूलं दारुचव्यं सचित्रकम् ॥ २३० ॥
मल्लारलवणं चूर्णं दद्यादर्धपलांशकम् ।
मात्रामग्निबलापेक्षी चोपयुञ्जीत बुद्धिमान् ॥ २३१ ॥
दुर्नामश्वासकासघ्नो ग्रहणीदोषमेहनुत् ।
गुल्मोदावर्त्तहृद्रोग शोफपाण्डामयापहः ॥ २३२ ॥
कफवातामदोषघ्नः पाचनो वह्निदीपनः ।
गुडकल्याणको नाम्ना वृष्यः पुष्टिबलप्रदः ॥ २३३ ॥

इति गुडकल्याणकः ।

कूष्माण्डकानां पक्वानां खिन्नानां निष्कुलत्वचाम् ।
सर्पिष्प्रस्थे पलशतं ताम्रपात्रे शनैः पचेत् ॥ २३४ ॥
पिप्पलीपिप्पलीमूल चित्रको हस्तिपिप्पली ।
धान्यकानि विडङ्गानि नागरं मरिचानि च ॥ २३५ ॥
त्रिफला चाजमोदा च कलिङ्गाजाजिसैन्धवम् ।
एकैकस्य पलञ्चैकं त्रिवृदष्टपलं तथा ॥ २३६ ॥
तैलस्य च पलान्यष्टौ गुडात् पञ्चाशदेव तु ।
प्रस्थैस्त्रिभिः समेतस्तु रसैनामलकस्य च ॥ २३७ ॥

तावत्पाकं प्रकुर्वीत मृदुनाग्निना भिषक् ।
यावद्दर्वीप्रलेपः स्यात्तदैनमवतारयेत् ॥ २३८ ॥
औदुम्बरं चामलकं वादरं वा प्रमाणतः ।
यथा बलं तु कायस्य भक्षयेत्तु गुडं नरः ॥ २३९ ॥
अनेनैव विधानेन प्रयुक्तश्च दिने दिने ।
प्रसह्य ग्रहणीदोषान् कुष्ठानर्शो भगन्दरान् ॥ २४० ॥
ज्वरमानाहहृद्रोग गुल्मोदरविसूचिकाः ।
कामलापाण्डुरोगांश्च प्रमेहांश्चैक विंशतीन् ॥ २४१ ॥
वातशोणितवीसर्प राजयक्ष्माहलीमकान् ।
कफपित्तानिलान् सर्वान् प्रवृद्धांश्चापि नाशयेत् ॥ २४२ ॥
व्याधिक्षीणावयः क्षीणाः स्त्रीषु क्षीणाश्च ये नराः ।
तेषां हितश्च बल्यश्च वयःस्थापन एव च ।
गुडकल्याणको नाम्ना वन्ध्यायाः पुत्रदः परः ॥ २४३ ॥

इति कुष्माण्डकल्याणगुडः ।

त्रिवृत्सिता निकुम्भा च श्वदंष्ट्रा चित्रकं शठी ।
विशालामुस्तकं शुण्ठी क्रमिघ्नश्च हरीतकी ॥ २४४ ॥
द्विपलांशाः पलान्यष्टौ भल्लातकफलानि च ।
सूरणं द्वादशप्रोक्तं पथ्यलं वृद्धदारकम् ॥ २४५ ॥
एतानि खण्डशः कृत्वा द्विद्रोणेऽपां विपाचयेत् ।
पादशेषन्तु कुर्वीत पचेद्गुडतुलां भिषक् ॥ २४६ ॥
कन्दत्रिकत्रिवृद्दन्तिमुस्तैलामरिचत्वचम् ।
नागकेशरचूर्णश्च श्लोकैकं द्विपलोन्मितम् ॥ २४७ ॥
एतानि सूक्ष्मचूर्णानि गुडमध्ये विनिक्षिपेत् ।
भक्षयेद्गुटिकां प्रातः कर्षांशां पथ्यभुङ्नरः ॥ २४८ ॥
वातपित्तकफप्रायां द्विदोषां सान्निपातिकाम् ।

ग्रहणीं नाशयत्याशु चक्रपाणिर्यथाऽसुरान् ॥ २४९ ॥
कामलाकुष्ठमेहार्शः पाण्डुरोगभगन्दरान् ।
क्षययूदरगुल्मांश्च जयेत्सम्यक् प्रयोजित: ॥ २५० ॥
सर्वास्वृतुषु कर्त्तव्यो गुडोऽयं बहुशालिकः ।

इति बहुशालिगुडः ।

आलिप्यतापीकरवीरकाभ्यां[1]
वैश्वानरे प्रज्वलिते निधाय ।
तप्तं सुतप्तं विनियोज्य तक्रे
निर्वाप्य वारान् बहुशः सुलोहम् ॥ २५१ ॥
एभिः प्रकारैः सुमृताच्च लोहा-
च्चूर्णीकृताच्चापि पलानि चाष्टौ ।
सर्पिष्पलं तैलपले पलानि
चत्वारि चादाय वरारसस्य ॥ २५२ ॥
तक्रस्य चोम्लस्य चतुष्पलानि
कर्षश्च कार्यं पृथगौषधानाम् ।
व्योषाजमोदा चविकानलानां
मूलं महत्याश्च पिप्पलीनाम् ॥ २५३ ॥
सिन्धुप्रभूतं सविडङ्गचूर्णं
तक्रेण हन्याद्ग्रहणीं समस्ताम् ।
पाण्डुमेहं परिणामजं
शूलञ्च दीप्तिं प्रकरोति वह्नेः ॥ २५४ ॥

इति सारकल्पोऽयम् ।

पलार्धमकणायान्तु द्विपले कुटजस्य च ।

---

१ करवीरका मनःशिला ।

केशराजस्य मूलानि कर्षं तत्सर्वमेकतः ॥ २५५ ॥
संकुट्य सलिलप्रस्थे पादावशेषितमेकतः ।
दत्वा सप्तपलं तस्मिंश्छागक्षीर चतुष्पलम् ॥ २५६ ॥
गोष्य' पक्वरसं भूय' पचेद्दार्वीप्रलेपनम् ।
विश्वातिविषयोश्चूर्णं मुस्तस्येन्द्रयवस्य च ॥ २५७ ॥
प्रत्येकमक्षमात्रन्तु चिप्रायटक्षमात्रकम् ।
तदशित्वानुभुञ्जीत, काञ्जिकाम्लप्रसाधितान् ॥ २५८ ॥
मत्स्यान् गोपुच्छसंज्ञांस्तु छागक्षीरं तत पिबेत् ।
ग्रहण्यतिसारहरो लेहोऽय मपराजित' ॥ २५९ ॥
इत्यपराजितो लेहः ।

## इति वङ्गसेने ग्रहणीनिदानचिकित्साधिकारः समाप्तः ॥ ३ ॥

## अथाऽर्शो निदानमाह ।

पृथग्दोषै समस्तैश्च शोणितात्सहजानि च ।
अर्शांसिषट्प्रकाराणि विद्याद्गुदवलित्रये ॥ १ ॥
दोषास्त्वङ्मांसमेदांसि सदूष्य विविधाकृतीन् ।
मांसाङ्कुरानपानादौ कुर्वन्त्यर्शांसितान् जगु' ॥ २ ॥
कषाय कटुतिक्तानि रूक्षशीतलघूनि च ।
प्रमिताल्पाशन तीक्ष्णमद्यमैथुनसेविनम् ॥ ३ ॥
लङ्घन देशकालौ च शीतौ व्यायामकर्म च ।
शोको वातातपस्पर्शो हेतुर्वातार्शसामत' ॥ ४ ॥
कट्वम्ललवणोष्णानि व्यायामाग्न्यातपप्रभाः ।
देशकालावशिशिरौ क्रोधो मद्यमसूयनम् ॥ ५ ॥
विदाहि तीक्ष्णमुष्णञ्च सर्वपानान्न भेषजम् ।

पित्तोल्बणानां विज्ञेयः प्रकोपे हेतुरर्शसाम् ॥ ६ ॥
मधुरस्निग्धशीतानि लवणाम्लगुरूणि च ।
अव्यायामदिवास्वप्न शय्यासनसुखे रतिः ॥ ७ ॥
प्राग्वातसेवाशीतौ च देशकालावचिन्तनम् ।
श्लैष्मिकानां समुद्दिष्टमेतत्कारणमर्शसाम् ॥ ८ ॥
हेतुलवणसंसर्गाद्विद्याद्वन्द्वोल्बणानि च ।
सर्वो हेतुस्त्रिदोषाणां सहजैर्लक्षणैः समम् ॥ ९ ॥
विष्टम्भोऽन्नस्य दौर्बल्यं कुक्षेराटोप एव च ।
कार्श्यमुद्गारबाहुल्यं सक्थिसादोऽल्पविट्कता ॥ १० ॥
ग्रहणी दोषपांड्वर्त्तेराशङ्का चोदरस्य च ।
पूर्वरूपाणि निर्दिष्टान्यर्शसामभिवृद्धये ॥ ११ ॥

—०—

गुदाङ्कुराबह्वनिलाः शुष्काश्चिमिचिमान्विताः ।
म्लानाः श्यावारुणाः स्तब्धाविषदाः परुषाः खराः ॥ १२ ॥
मिथो विसदृशावक्रास्तीक्ष्णाविस्फुटिताननाः ।
बिम्बीकर्कन्धुखर्जूर कर्पासीफलसन्निभाः ॥ १३ ॥
केचित्कदम्बपुष्पाभाः केचित्सिद्धार्थकोपमाः ।
शिरः पार्श्वांशकट्यूरु वङ्क्षणाभ्यधिकव्यथाः ॥ १४ ॥
क्षवथूद्गारविष्टम्भ हृद्ग्रहाऽरोचकप्रदाः ।
श्वासकासाग्निवैषम्य कर्णनादभ्रमावहाः ॥ १५ ॥
तैरार्त्तो ग्रथितं स्तोकं सशब्दं सप्रवाहिकम् ।
रुक्फेनपिच्छानुगतं विबद्धमुपवेश्यते ॥ १६ ॥
कृष्णत्वङ्नखविण्मूत्र नेत्रवक्त्रश्च जायते ।
गुल्मप्लीहोदराष्ठीला सम्भवस्तत एव च ॥ १७ ॥

इति निदानम् ।

## अथ तस्य चिकित्सामाह।

तत्र वातप्रायेषु स्नेहस्वेदवमनविरेचनानुस्थापनानुवासनमतिसिद्धमिति। वातजे स्नेहस्वेदादीति।
लवणान्यर्कपत्राणि विनीयतरुणानि च।
तैलेनाम्लेन युक्तानि युक्त्याचारं दहेद्भिषक्॥ १८॥
उष्णोदकेन मद्यैर्वा रसैरन्यैस्तु लाभतः।
पीतः प्रशमयत्येष चारोऽर्शो वातसम्भवम्॥ १९॥

इति लवणादिचारः।

---

## अथ पित्तार्शो निदानम्।

पित्तोत्तरानीलमुखा रक्तपीतासितप्रभाः।
तन्वस्रस्राविणो विस्रा स्तनवो मृदवस्तथा॥ २०॥
शुकजिह्वायकृत्खण्ड जलौकावक्त्रसन्निभाः।
दाहपाकज्वरस्वेद तृण्मूर्च्छाऽरतिमोहदाः॥ २१॥
सोष्माणो द्रवनीलोष्णपीतरक्तामवर्चसः।
यवमध्याहरित्पीतहारिद्रत्वङ्नखादयः॥ २२॥

---

## अथ चिकित्सामाह।

पित्तजेषु विरेचनमिति।
वालकं शृङ्गवेरञ्च याययेत्तण्डुलाम्बुना।
मधुयुक्तं प्रशमये दर्शः पित्तसमुद्भवम्॥ २३॥

---

## अथ कफार्शो निदानम् ।

श्लेष्मोल्वणा महामूला घना मन्दरुजः सिताः ।
उत्सन्नोपचिताः स्निग्धा स्तब्धवृत्तगुरुस्थिराः ॥ २४ ॥
पिच्छिलाः स्तिमिताः श्लक्ष्णाः कण्ड्वाढ्याः स्पर्शनप्रियाः ।
करीरपनसास्थ्याभास्तथा गोस्तनसन्निभाः ॥ २५ ॥
वङ्क्षणानाहिनः पायुवस्तिनाभिविकर्षिणः ।
सकासश्वासहृल्लास प्रसेकारुचिपीनसाः ॥ २६ ॥
मेहकृच्छ्रशिरोजाड्य शिशिरज्वरकारिणः ।
क्लैव्याग्निमार्दवच्छर्दि रामप्रायविकारदाः ॥ २७ ॥
वसाभासकफप्राज्य पुरीषाः स प्रवाहिकाः ।
न स्रवन्ति न भिद्यन्ते पाण्डुस्निग्धत्वगादयः ॥ २८ ॥

—०—

## अथ चिकित्सा ।

कफजे शृङ्गवेरस्य क्वाथो नित्योपयौगिकः ।

## अथ निदानम् ।

सर्वैः सर्वात्मकान्याहुर्लक्षणैः सहजानि च ॥ २९ ॥

—०—

## अथ चिकित्सामाह ।

यथास्वौषधसंयुक्तं पाययेत्सहजेषु च ।
सर्वाण्यर्शांसि मतिमान् पूर्वमालेपनादिभिः ।
स्वेदरक्तावसेकैश्च जयेच्च हितभोजनैः ॥ ३० ॥
त्रयो विकाराः प्रायेण ये परस्परहेतवः ।
अर्शांसि चातिसारश्च ग्रहणी गुद एव च ॥ ३१ ॥

एषामग्निबले हीने हद्धि वृद्धे परिक्षयः।
तस्मादग्निं सदा रक्षे देषुविषु विशेषतः ॥ ३२ ॥
यद्वायोरनुलोम्याय यद्दग्निबलहृद्धये।
अन्नपानौषधं सर्वं तत्सेव्यं नित्यमार्शसैः ॥ ३३ ॥
यदतो विपरीतं स्यान्निदाने यत्प्रदर्शितम्।
गुदजाऽविपरीतेन न तत्कार्य्यं कदाचन ॥ ३४ ॥
शालि षष्टिकगोधूमयवान्नं संस्कृतं घृतैः।
अजाक्षीरेण वा निम्ब पटोलानां रसेन वा ॥ ३५ ॥
मांसैर्मांसरसैर्वापि कन्दवार्त्ताकमूलजैः।
जीवन्त्युपोदकाशाकै स्तण्डुलीयकवास्तुकैः ॥ ३६ ॥
अन्यैश्च सृष्टविण्मूत्र मरुद्भिर्वह्निदीपनैः ॥ ३७ ॥
वातातिसारवद्भिन्नवर्चांस्यऽर्शांस्युपाचरेत्।
उदावर्त्तविधानेन गाढविट्कानि वाऽसकृत् ॥ ३८ ॥
प्रवृत्तबहुलाऽस्राणि पित्तशोणितनाशनैः।
योगैरुपाचरेत्तत्तु विड्बन्धे बन्धनाशनैः ॥ ३९ ॥

—०—

कृष्णसर्प वराहोष्ट्र जम्बूक वृषदंशकाः।
वसामभ्यञ्जनं दद्याद्धूपनं वार्शसां हितम् ॥ ४० ॥
इति कृष्णसर्पादि वसाया अभ्यञ्जनं धूपनञ्च।
दुर्नाम्नां साधनोपायश्चतुर्धा परिकीर्त्तितः।
भेषजक्षारशस्त्राग्निसाध्यत्वं यात्यसुच्यते ॥ ४१ ॥

—०—

नृकेशं सर्पनिर्मोकं वृषदंशस्य चर्म च।
अर्कमूलं शमीपत्र मर्शसां धूपनं परम् ॥ ४२ ॥
इति नृकेशादि धूपनम्।

निशा कोशातकीचूर्णं विशुष्कं सैन्धवान्वितम् ।
गोमूत्रेण समायुक्तं लेपो दुर्नामनाशनः ॥ ४३ ॥

इति निशादि लेपः ।

कृष्णानिशा शङ्खसुवर्चिका च
करञ्जबीजं सदलञ्च सिन्धुः ।
गुञ्जाफलं केशरमध्यबीजं
समूलकन्तुल्यकहैमवाक्यम् ॥ ४४ ॥
दक्षस्य वर्चः कनकं यवानी
कोशातकीबीजरसश्च तुल्यः ।
स्नुह्यर्कदुग्धेन च भावयित्वा
पश्चात्प्रभाव्यं सुरभीरसेन ॥ ४५ ॥
छित्वा विशुष्काय विशुष्कयोज्यं
लेपं विदध्याद्गुदजक्षयाय ।
ग्रन्थ्यर्बुदं पूयवहाश्च नाडीं
सगण्डमालामपचीं प्रहन्ति ॥ ४६ ॥
शास्त्रादिभिर्ये च जिताः प्रलेपा-
स्तेऽपि प्रणश्यन्त्यधिमांसदोषाः ।

इति सिद्धयोगोऽयम् ।

गुदश्वयथुशूलार्त्तं मन्दाग्निं पाययेत्तु तम् ।
सूरणं पिप्पलीमूलं पाठा हिंगु सचित्रकम् ॥ ४७ ॥
सौवर्चलं पुष्कराख्यं मजाजी विल्वपेशिकम् ।
विडं यवानी हवुषा विडङ्गं सैन्धवं वचाम् ॥ ४८ ॥
तिन्तिडीकञ्च मण्डेन मद्येनोष्णोदकेन च ।
तथार्शो ग्रहणीदोषाच्छूलानाहाच्च मुच्यते ॥ ४९ ॥

इति सूरणाद्यं चूर्णम् ।

पूतीकमभया मुस्तं भूनिम्बाऽसितवत्सकाः।
सूरणाग्निकमिन्धूत्थं देवदारु च चूर्णिताः ॥ ५० ॥
तक्रेण पिबतस्तानं तक्रेणैव समश्नतः।
माध्वात्पक्कफलानीव पतन्त्यर्शांस्यसंशयः ॥ ५१ ॥
इत्यर्शः पातनम्।

'विडङ्गसारामलकञ्च पिष्टं
भल्लातककाथमधुप्रगाढम्।
अर्शांसि जन्तुंश्च जयत्यजीर्णा-
ऽऽमयञ्च सन्धुक्षयति चर्णेन ॥ ५२ ॥
कठिनं यः पुरीषन्तु कृच्छ्रान्मुञ्चति मानवः।
सघृतं लवणैर्युक्तं नरोऽपानजहं पिबेत् ॥ ५३ ॥
सक्तुर्दधिरसोपेतो दधिसर्पिः समायुतः।
त्वक्पत्रैला विड्व्योपजीरकद्वयमिश्रितः।
विड्विबन्धामशूलघ्नो रोचनो गुदजे हितः ॥ ५४ ॥
विड्विबन्धे हितं तक्रं यवानी विडसंयुतम् ॥ ५५ ॥
सैन्धवं नागरं पाठा दाडिमस्य रसं गुडम्।
सतक्रलवणं दद्याद्वातवर्चानुलोमनम् ॥ ५६ ॥

—०—

गुडभल्लातकं शुण्ठी विडङ्गं द्वददारुकम्।
त्रिगुणं दीपनं ह्यत्र अर्शसो विड्विबन्धनुत् ॥ ५७ ॥
इति गुडाद्यं चूर्णम्।

न च रोहन्ति गुदजाः पुनस्तक्रं समाहृताः।
तक्राभ्यासोऽर्शसां कार्यो बलवर्णाग्निवृद्धये।
स्रोतःसु तक्रशुद्धेषु रसः सम्यगुपैति यः ॥ ५८ ॥

तेन पुष्टिर्बलं वर्णं प्रहर्षश्चोपजायते ।
वातश्लेष्मविकाराणां शतञ्च विनिवर्त्तयेत् ॥ ५९ ॥
चिरबिल्वाग्निदिन्भूत्य नागरेन्द्रयवारलून् ।
तक्रेण पिबतोऽर्शांसि निपतन्त्यसृजा सह ॥ ६० ॥

—०—

हरिद्रा जालिनीचूर्णं कटुतैलसमायुतम् ।
एष प्रलेपकः प्रोक्तो ह्यर्शसामन्तकारकः ॥ ६१ ॥

इति हरिद्रादि प्रलेपः ।

स्वेदो गोमयपिण्डेन सक्तुनामलकेन च ।
शणपुष्पेन वा कार्यो गुदजानां निवृत्तये ॥ ६२ ॥

इति गुदस्वेदः ।

सगुड़ां पिप्पलीयुक्ता मभयां घृतभर्जिताम् ।
त्रिवृद्दन्तीयुतां वापि भक्षयेदनुलोमिकीम् ॥ ६३ ॥
अम्बुना वाप्यपामार्ग मूलं वा तण्डुलाम्बुना ।
तिलारुष्करसंयोगं भक्षयेदग्निवर्धनम् ॥ ६४ ॥
कुष्टरोगहरश्चैष्ट मर्शसां नाशनं परम् ॥ ६५ ॥
तिलभल्लातकं पथ्यां गुड़श्चेति समांशकम् ।
दुर्नाम श्वासकासघ्नं प्लीहपांडुज्वरापहम् ॥ ६६ ॥
मृल्लिप्तं सूरणं कन्दं पक्वाग्नौ पुटपाकवत् ।
दद्यात्तैललवणं दुर्नाम विनिवृत्तये ॥ ६७ ॥
असितानां तिलानां प्राक् प्रकुञ्चं शीतवारिणा ।
खादतोऽर्शांसि शाम्यन्ति द्विजदार्ढ्यङ्गपुष्टिदम् ॥ ६८ ॥

—०—

सिक्तं वार्त्ताकफलं व्योषायाः क्षारकेन सलिलेन ।
तद्घृतभृष्टं भुक्तं गुड़ेन दलितां याति ॥ ६९ ॥

पिबति च तक्रं नूनं तस्यान्वेवसुखहगुदजानि।
नाशं प्रयान्ति पुंसां सहजान्यपि सत्वरात्रेण ॥ ७० ॥

इति वार्त्ताकपुटपाकः।

पित्तश्लेषप्रशमनीकच्छुकंडूरुजापहा।
गुदजान्नाशयत्याशु योजिता सगुड़ाभया ॥ ७१ ॥
त्वचं चित्रकमूलस्य पिष्ट्वा कुम्भं प्रलेपयेत्।
तक्रं वा दधि वा तत्र जातमर्शो हरं पिबेत् ॥ ७२ ॥
दुस्पर्शकेन बिल्वेन यवान्या नागरेण च।
एकैकेनापि संयुक्ता पाठा हन्त्यर्शसां रुजम् ॥ ७३ ॥
प्रातः प्रातरहृद्यार्शो ब्रह्मचारी गुडाभयाम्।
गोमूत्रद्रोणसंसिद्धां भक्षयेदनुलोमिकीम् ॥ ७४ ॥
कुशमूलं वलायुक्तं पानं तंडुलधावनम्।
रुणद्धि गुदजास्रावं प्रदरं वापि सर्वजम् ॥ ७५ ॥

—o—

शस्त्रैर्वापि जलौकाभिः प्रोच्छूनकठिनार्शसः।
शोणितं सञ्चितं दृष्ट्वा हरेत्प्राज्ञः पुनः पुनः ॥ ७६ ॥

इति शोणितस्रावविधिः।

रुगर्तं कफवातेन अत्यर्थं गुदकीलकम्।
स्वेदयेद्वा हपा पिंडैराशुया वाथ शिग्रुभिः ॥ ७७ ॥

—o—

नागरं ग्रन्थिकं चव्यं पिप्पली क्षार चित्रकम्।
एतैश्च पलिकैः सर्वैः घृतप्रस्थं विपाचयेत् ॥ ७८ ॥
उदकस्य त्रयो भागाः क्षीरस्यैकं तदेकतः।
दुर्नाम श्वास कासघ्नं ग्रीष्मा पाण्डामयापहम् ॥ ७९ ॥

विषमज्वरशान्त्यर्थं तृष्णारोचकनाशनम्।
एतत् षट्पलकं नाम बलवर्णाग्निवर्द्धनम्॥ ८०॥

इत्युदकषट्पलं घृतम्।

व्योषगर्भं पलाशस्य त्रिगुणे भस्मवारिणि।
साधितं पिबतः सर्पिः पतत्यर्शांस्यसंशयम्॥ ८१॥

इति पलाशक्षारघृतम्।

चव्यं त्रिकटुकं पाठा क्षारं कुस्तुंबुरूणि च।
यवानी पिप्पलीमूलमुभे च विड्सैन्धवे॥ ८२॥
चित्रकं बिल्वमभयां पिष्ट्वा सर्पिर्विपाचयेत्।
सकृद्वातानुलोम्यार्थं जातेदध्नि चतुर्गुणे॥ ८३॥
प्रवाहिकां गुदभ्रंशं मूत्रकृच्छ्रं परिस्रवम्।
गुदवङ्क्षणशूलञ्च घृतमेतद्व्यपोहति॥ ८४॥

इति चव्याद्यं घृतम्।

ह्रीवेरमुत्पलं लोध्रं समङ्गा चित्रचव्यकम्।
पाठा सातिविषा बिल्वं धातकी देवदारु च॥ ८५॥
दार्वीत्वङ्नागरं मांसी मुस्तं क्षारो यवाग्रजः।
चित्रकश्चेति पेष्याणि चाङ्गेरी स्वरसे घृतम्॥ ८६॥
एकत्र साधयेत्सर्वं तत्सर्पिः परमौषधम्।
अर्शोऽतिसारग्रहणी पांडुरोगेऽरुचौ तथा॥ ८७॥
मूत्रकृच्छ्रे गुदभ्रंशे वस्त्यानाहे प्रवाहिके।
पिच्छास्रावेऽर्शसां शूले योज्यमेतत्त्रिदोषनुत्॥ ८८॥

इति ह्रीवेराद्यं घृतम्।

पिप्पली पिप्पलीमूलं चित्रको हस्तिपिप्पली।
हिंगु चव्याजमोदा च पञ्चैव लवणानि च॥ ८९॥

द्वौ चारौ हवुषा चैव दद्यादर्द्धपलोन्मितान्।
दधिकाञ्जिकशुक्तानि स्नेहमात्रा समानि च ॥ ८० ॥
आर्द्रकस्वरसप्रस्थं घृतप्रस्थं विपाचयेत्।
एतदग्निघृतं नाम मन्दाग्नीनां प्रशस्यते ॥ ८१ ॥
अर्शसां नाशनं श्रेष्ठं तथा गुल्मोदरापहम्।
ग्रन्थ्यर्बुदापची कास कफमेदोऽनिलानपि ॥ ८२ ॥
नाशयेद् ग्रहणीदोषं श्वयथुं स भगन्दरम्।
ये च वस्तिगता रोगा ये च कुक्षिसमाश्रिताः ॥ ८३ ॥
सर्वांस्तान्नाशयत्याशु सूर्यस्तम इवोदितः।

इत्यग्निघृतम्।

भल्लातक सहस्रार्धं जलद्रोणे विपाचयेत्।
अष्टभागावशिष्टन्तु कषायमवतारयेत् ॥ ८४ ॥
घृतप्रस्थं समावाप्य कल्कानीमानि दापयेत्।
त्र्यूषणं पिप्पलीमूलं चित्रको हस्तिपिप्पली ॥ ८५ ॥
हिंगु चव्याजमोदा च पञ्चैव लवणानि च।
द्वौ चारौ हवुषा चैव दद्यादर्द्धपलोन्मितान् ॥ ८६ ॥
दधिकाञ्जिकशुक्तानि स्नेहमात्रा समानि च।
आर्द्रकस्वरसञ्चैव शोभाञ्जनरसं तथा ॥ ८७ ॥
तत्सर्वमेकतः कृत्वा शनैः मृदग्निना पचेत्।
एतदग्निघृतं नाम मन्दाग्नीनां प्रशस्यते ॥ ८८ ॥
अर्शसां नाशनं श्रेष्ठं मूढवातानुलोमनम्।
कफवातोद्भवे गुल्मे श्लीपदोदरदकोदरे ॥ ८९ ॥
शोफं पांडुामयं कासं ग्रहणी श्वासमेव च।
एतान् विनाशयत्याशु सूर्यस्तम इवोदितः ॥ १०० ॥

इति बृहदग्निघृतम्।

उदावर्त्तपरिता ये ये चात्यर्थनिरूचिताः ।
विलोमवातशूलार्त्ता सेविष्टमनुवासनम् ॥ १०१ ॥
पिप्पली मधुकं बिल्वं शताह्वा मदनं वचा ।
कुष्टं शठी पुष्कराह्वं चित्रकं देवदारु च ॥ १०२ ॥
पिष्ट्वा तैलं विपक्तव्यं द्विगुणक्षीरसंयुतम् ।
अर्शसां दृढ़वातानां तच्छ्रेष्टमनुवासनम् ॥ १०३ ॥
गुदनिस्सरणं शूलं मूत्रकृच्छ्रं प्रवाहिकाम् ।
कट्यूरुपृष्टदौर्बल्यमानाहं वङ्क्षणामयम् ॥ १०४ ॥
पिच्छास्रावं गुदे शोथं वातवर्चो विनिग्रहम् ।
उत्थानं बहुशो यच्च जयेत्तच्चानुवासनात् ॥ १०५ ॥

इति पिप्पल्याद्यं घृतम् ।

कासीस दन्तीमिन्धूत्थ करवीरानले पचेत् ।
तैलमर्कपयो मिश्यमभ्यङ्गात्पायुकीलनुत् ॥ १०६ ॥

इति कासीसाद्यं घृतम् ।

कासीसं सैन्धवं कृष्णा शुण्ठी कुष्टञ्च लाङ्गली ।
शिलाभिदश्वमारञ्च जन्तुघ्नं दन्तीचित्रकम् ॥ १०७ ॥
हरितालं तथा स्वर्णक्षीरी चैतैः पचेत्समैः ।
तैलं स्नुह्यर्कपयसा गवां मूत्रं चतुर्गुणम् ॥ १०८ ॥
एतदभ्यङ्गतोऽर्शांसि क्षारवत् पातयेद् ध्रुवम् ।
क्षारकर्मकरं ह्येतन्न च सन्दूषयेद्वलिम् ॥ १०९ ॥

वृहत्कासीसाद्यं तैलम् ।

दन्त्यश्वमारकासीस विड़ङ्गाग्निसैन्धवैः ।
मार्कक्षीरैः पचेत्तैलमभ्यङ्गात्पायुकीलनुत् ॥ ११० ॥

इति दन्त्याद्यं तैलम् ।

लवणोत्तमवह्नि कलिङ्गयवान्-
चिरबिल्वमहापिचुमन्दयुतान् ।
पिबसप्तदिनं मथितालुलितान्
यदि मर्दितु मिच्छसि पायुरुहान् ॥ १११ ॥

इति लवणोत्तमाद्यं चूर्णम् ।

कटुत्रयं वचाहिङ्गु पाठाक्षारौ विषद्वयम् ।
चव्यतिक्तकलिङ्गानि गजाह्वालवणानि च ॥ ११२ ॥
ग्रन्थिबिल्वाजमोदा च गणो द्वाविंशको मतः ॥ ११३ ॥
एतानि समभागानि सूक्ष्मचूर्णानि कारयेत् ।
एरण्डतैलसंयुक्तं सदा लिह्यात्ततो नरः ॥ ११४ ॥
बिडालपदकं वापि पिबेदुष्णेन वारिणा ।
क्षारं हन्यात्तथा शोथमर्शांसि च भगन्दरम् ॥ ११५ ॥
हृच्छूलं पार्श्वशूलञ्च सक्थिशूलमरोचकम् ।
प्लीहानं सप्रमेहञ्च कामलां पाण्डुरोगताम् ॥ ११६ ॥
आमवातमुदावर्त्तमन्त्रवृद्धिगुदक्रमीन् ।
हन्याच्च ग्रहणीरोगान्ये मया परिकीर्त्तिताः ॥ ११७ ॥

इति कटुत्रयाद्यं चूर्णम् ।

भल्लातकञ्च त्रिफलां दन्तीचित्रकमेव च ।
एतानि समभागानि सैन्धवं द्विगुणं भवेत् ॥ ११८ ॥
कपालपुटसम्पक्कं मृदुना गोमयाग्निना ।
एतत्कल्याणलवणं श्रेष्ठमर्शो विकारिणाम् ॥ ११९ ॥

इति कल्याणलवणम् ।

शुण्ठिकणामरिचनागदलत्वगेला
चूर्णीकृतं क्रमविवर्धितमूर्ध्वमन्त्यात् ।

खादेदिदं समसितं गुदजाग्निमान्द्य
गुल्माऽरुचिश्वसन कण्ठहृदामयेषु ॥ १२० ॥
इति समशर्कराचूर्णम्।

व्योषाऽग्न्यऽरुष्करविडङ्गतिलाभयानां
चूर्णं गुडेन सहितं सततं प्रयोज्यम्।
दुर्नामशोथगर कुष्टशकृद्विबन्धमग्ने-
र्जयत्य बलतां क्षमिपाण्डुतां वा ॥ १२१ ॥
इति व्योषाद्यं चूर्णम्।

तिक्ततुम्बुरुद्भवं तैलं तैलमलसि सम्भवम्।
आचोटकरसञ्चैव रसं निगुण्डिगोमयैः ॥ १२२ ॥
प्रत्येकैकन्तु सर्वेषां ग्राह्यं पलचतुष्टयम्।
कर्षकं सैन्धवं दद्याद्दन्तीमूलं द्विमाषकम् ॥ १२३ ॥
द्विमाषं सर्जिकाक्षारमेतत्तैल विपाचयेत्।
तिक्ततुम्बीफलावर्त्तीर्यैवेन्द्रस्वरसेन च।
तैलेनाभ्यञ्जनेनैव दद्यादुर्नामशान्तये ॥ १२४ ॥
इति फलवर्त्तितैलम्।

त्रिकनयं वचाहिङ्गु पाठाक्षारौ निशाद्वयम्।
चव्यतिक्ताकलिङ्गानि शताह्वालवणानि च ॥ १२५ ॥
ग्रन्थिबिल्वाजमोदा च गणोऽष्टाविंशतिर्मतः।
एतानि समभागानि श्लक्ष्णचूर्णानि कारयेत् ॥ १२६ ॥
ततो बिडालपदकं पिबेदुष्णेन वारिणा।
एरण्डतैलसंयुक्तं सदा लिह्यात्ततो नरः ॥ १२७ ॥
श्वासं हन्यात्तथा शोथमर्शांसि च भगन्दरान्।
हृच्छूलं पार्श्वशूलञ्च वातगुल्मं तथोदरम् ॥ १२८ ॥

हिक्काश्वासं प्रमेहांश्च कामलापांडुरोगताम् ।
आमवातमुदावर्त्तं मन्त्रवृद्धिगुदक्रमीन् ॥ १२९ ॥
अन्ये च ग्रहणीदोषा ये मया परिकीर्त्तिताः ।
महाज्वरोपसृष्टानां भूतोऽपहृत्तचेतसाम् ॥ १३० ॥
अप्रजानाञ्च नारीणां प्रजावर्द्धनमेव च ।
विजयो नाम चूर्णोऽयं महाव्याधिहरः परः ॥ १३१ ॥

इति विजयचूर्णम् ।

त्रिफलाद्यमूलाग्नि निकुम्भानां पलं पलम् ।
वारिद्रोणे शृत पाद शेषे गुडतुलायुतम् ॥ १३२ ॥
आज्यभाण्डे स्थितं मासं दन्त्यरिष्टो निसेवितः ।
गुदजक्रम्युदावर्त्तं ग्रहणीपांडुरोगनुत् ॥ १३३ ॥
अरिष्टादेस्तु सन्धानं धातकीलिप्तभाजने ।
पानमानमरिष्टादेः क्वाथपानसमं जगुः ॥ १३४ ॥
भैषजत्वात्मलत्त्वैकं प्रथम मदलक्षणम् ।

इति दन्त्यरिष्टः ।

सनागराऽरुष्करवृद्धदारकम्
गुडेन यो मोदकमत्त्युदारकम् ।
अशेषदुर्नामकरोगदारकं
करोति वृद्धिं सह सैव दारकाम् ॥ १३५ ॥

इति चतुस्समो मोदकः ।

मरिचमहौषधिचित्रक सूरणभागाः यथोत्तरं द्विगुणाः ।
सर्वसमो गुडभागः सेव्योऽय मोदकः प्रसिद्धफलः ॥ १३६ ॥
ज्वलयतिज्वलनं जाठर मुन्मूलयतिशूलगुदगुल्मगदान् ।
निःशेषयति श्लीपदमर्शांसि प्रणाशयत्याशु ॥ १३७ ॥

इति स्वल्पसूरणमोदकः ।

चूर्णीकृता: षोड़शसूरणस्य भागास्ततोऽर्धेन च चित्रकस्य।
महौषधाऽर्धौ मरिचस्य चैको गुड़ेन दुर्नामजयाय पिण्डी॥१
इति सूरणपिण्डी।

षोड़शसूरणभागा वह्नेरष्टौ महौषधस्याथ।
अर्धेन भागयुक्तिर्मरिचस्य ततो पिचार्धेन॥१३९॥
त्रिफलाकणासमूलातालीसाऽरुष्करक्रिमिघ्नानां
भागामहौषधसमा दहनांशातालमूली च॥१४०॥
भाग: सूरणतुल्यो दातव्यो वृद्धदारकस्यापि।
भृङ्गैले मरिचांशे सर्वाण्येकत्र संचूर्ण्य॥१४१॥
द्विगुणेन गुड़ेन युत: सेव्योऽयं मोदक: प्रकामधनै:।
गुरुहृत्यभोज्यरहितैरितरैपूपद्रवं कुर्यात्॥१४२॥
भषकमनेन जनितं पूर्वमगस्त्यस्य योगराजेन।
भीमस्य मारुतेरपि महाग्नी तेन तौ जातौ॥१४३॥
अग्निबलमात्रहेतुर्नकेवलं सूरणो महावीर्य्य:।
प्रभवति शस्त्रं क्षारा ग्निभिर्विनाप्यर्शसामेष:॥१४४॥
श्वयथुश्लीपदगदजित् ग्रहणीञ्च तथा कफानिलजाम्।
नाशयति वलिपलितं मेधाङ्कुरुते वृषत्वञ्च॥१४५॥
हिक्कां श्वासं कासञ्च मराजयक्ष्मप्रमेहांश्च।
प्लीहानञ्च तथोग्रं हन्त्याशु रसायनं पुंसाम्॥१४६॥
इति वृहत्सूरणमोदक:।

हरीतकीनां विपलं त्रिपलं कटुकत्रयम्।
त्वक्पत्रं सार्द्धपलकं गुड़स्यार्द्ध पलं मतम्॥१४७॥
अगस्त्यमोदकाद्यं ते कल्पितान् परिभक्षयेत्।
शोथार्शो ग्रहणीदोष कासोदावर्त्तनाशनान्॥१४८॥
इत्यगस्त्यमोदक:।

त्रिपलं शृङ्गवेरस्य चतुष्कं मरिचस्य च।
पिप्पल्याः कुड़वार्धञ्च चव्यस्य पलमेव च ॥ १४८ ॥
तालीशपत्रस्य पलं पलार्द्धं केशरस्य च।
द्वे पले पिप्पलीमूलादर्द्धकर्षञ्च पत्रकात् ॥ १५० ॥
सूक्ष्मैलाकर्षमेकञ्च कर्षञ्च त्वङ्मृणालयोः।
अजमोदाद्विजाज्योश्च सूक्ष्माख्येकत्र चूर्णयेत् ॥ १५१ ॥
गुड़ात्पलानि त्रिंशच्च चूर्णमेकत्र कारयेत्।
अक्षप्रमाणागुड़िका प्राणदेति च साम्मृता ॥ १५२ ॥
पूर्वं भक्षेत्तु पश्चाच्च भोजनस्य यथा बलम्।
मद्यं मांसरसं यूषं क्षीरं तोयं पिबेदनु ॥ १५३ ॥
हन्यादर्शांसि सर्वाणि सहजान्यस्रजानि च।
वातपित्तकफोत्थानि सन्निपातोद्भवानि च ॥ १५४ ॥
पानात्यये मूत्रकृच्छ्रे वातरोगे गलग्रहे।
विषमज्वरपित्ते च पांडुरोगे तथैव च ॥ १५५ ॥
कृमिहृद्रोगिणाञ्चैव गुल्मशूलार्त्तिनां तथा।
छर्द्यतीसाररोगाणां कामलाहिक्किनां हिता ॥ १५६ ॥
गुड्यः स्थानेऽभयादेया विट्गुड़े वातपित्तजे।
प्राणदेयं सितां दत्वा चूर्णमानाच्चतुर्गुणाम् ॥ १५७ ॥
अम्लपित्ताग्निमान्द्यादौ प्रयोज्यागुदजातुरे।
अनुपानं प्रयोक्तव्यं व्याधौ श्लेष्मभवे पलम्।
"परुद्धयपर्व्यतिल्ले, पिप्न्ले, नु, परुत्तरयम्," । १५८ ।
स्लधान्याम्लरसोदकञ्च मद्यं मरुद्रोगिणि चानुपानम्।
रसः क्षीरहिमाम्बु पित्ते उष्णाम्बुयूषं कफजे विदध्यात् ॥१५९॥
गंडूषमात्रयादेयं मृदौ क्रूरे च पञ्च च।
अनुपानं प्रयोक्तव्यं देशकालमवेक्ष्य च ॥ १६० ॥

यथा जलगतं तैलं तत्क्षणादेवसर्पति ।
तथा भैषज्यमङ्गेषु प्रसर्पत्यनुपानतः ॥ १६१ ॥

इति प्राणदागुटिका ।

पथ्यापञ्चपलान्ये कमजाज्यामरिचस्य च ।
पिप्पली पिप्पलीमूलं चव्यचित्रकनागराः ॥ १६२ ॥
पलाभिवृद्धयाक्रमशो यवक्षारपलद्वयम् ।
भल्लातकपलान्यष्टौ कन्दस्तु द्विगुणो मतः ।
द्विगुणेन गुडेनैषां वटकानक्षसम्मितान् ॥ १६३ ॥
खादेन भक्षयेत्प्रातस्तक्रमम्भोऽनु वा पिबेत् ।
मन्दाग्निं दीपयत्येष ग्रहणीपाण्डुरोगनुत् ॥ १६४ ॥
काङ्कायणेन शिष्येभ्यः शस्त्रक्षाराग्निभिर्विना ।
भिषग्जितमिदं प्रोक्तं श्रेष्ठमर्शो विकारिणाम् ।

इति काङ्कायणो मोदकः ।

भल्लातकसहस्रे द्वे जलद्रोणे विपाचयेत् ।
पादशेषे रसे तस्मिन् पचेद् गुडतुलां भिषग् ॥ १६६ ॥
भल्लातकसहस्रार्द्धं छित्वा तत्रैव दापयेत् ।
सिद्धेऽस्मिंस्त्रिफला व्योषं यवानी मुस्तसैन्धवम् ॥ १६७ ॥
कर्षांश चूर्णितं दद्यात्त्वगेलापत्रकेसरम् ।
खादेदग्निबलापेक्षी प्रातरुत्थायमानवः ॥ १६८ ॥
कुष्ठार्शः कामलामेहान् ग्रहणीं पांडुतामपि ।
हन्यात् प्लीहोदरं कासं क्रिमिदोषं भगन्दरम् ॥ १६९ ॥
भल्लातकगुडो ह्येषश्रेष्ठयार्शो विकारिणम् ॥ १७० ॥

इति भल्लातकगुडः ।

शीतभूतेन्यसेत्तत्र व्योषं पञ्चपलोन्मितम् ।
पलत्रय त्रिजातस्य दत्वा सङ्घट्टयेत् पुनः ॥ १७८ ॥
ततो यथा बलं खादेत्पलार्द्धं पिचुमेव च ।
नाहारे यन्त्रणा काचि न्नविहारे तथैव च ॥ २८० ॥
विबन्धाध्मानगुल्मार्शः पाण्डुरोगकफक्रमीन् ।
कुष्टमेहारुचिं हन्ति ह्यन्त्रवृद्धिषु शस्यते ॥ १८१ ॥

इति पटोलाद्योऽवलेह

मोदकं वटकं लेहं कर्षमात्रं प्रयोजयेत् ।
कर्षद्वयं पलं वापि देयं रोगाऽग्न्यपेक्षया ॥ १८२ ॥

—०—

बीजं भल्लातकस्यैकं पूते निःक्काथ्यवारिणि ।
क्कथयेत् षोड़शगुणे शुक्तिशेषं हि तं पिवेत् ॥ १८३ ॥
एकैक वर्द्धयेद्वीजमापञ्चाशद्विचक्षणः ।
श्रामप्तति पञ्चवृद्ध्या वर्द्धयेन्मतिमांस्ततः ॥ १८४ ॥
शुक्तिवृद्ध्या कषायञ्च वर्धयेदातुरः पलान् ।
स कषायानि बीजानि वर्द्धितानि यथाक्रमम् ॥ १८५ ॥
पुनः क्रमेण तेनैव ह्रासयेदात्मवान्नरः ।
इत्युत्कर्षापकर्षाभ्यां सहस्रं यावदादरात् ॥ १८६ ॥
उपयुक्तं जयत्येतद् गुदजानि क्रमीस्तथा ।
भल्लातकस्य विधान मिदं गोपुररचितम् ॥ १८७ ॥

इति भल्लातकविधानम् ।

पिप्पली पिप्पलीमूल चव्यचित्रकनागरैः ।
पाठा विडङ्गेन्द्रयव हिंगुभागवचान्वितैः ॥ १८८ ॥
सर्षपाऽतिविषा जाजी चित्रकैरण्डकट्फलैः ।
तजकुष्टाजमोदाह्वा कटुका तेजनी समैः ॥ १८९ ॥

भागैः संचूर्णितैरेषां त्रिफला द्विगुणा भवेत् ।
सर्वेषामेव द्रव्याणां समो देयोऽत्र गुग्गुलुः ॥ १८० ॥
एकीकृत्य शुभे भाण्डे मधुना सुपरिप्लुतः ।
योगराज इति ख्यातो योगोऽयममृतोपमः ॥ १८१ ॥
एष निष्परिहारस्तु पानभोजनमैथुनैः ।
रेतो दोषाश्च ये पुंसां योनिदोषास्तु योषिताम् ॥ १८२ ॥
निहन्ति सर्वान् दुर्वारान् नात्र कार्या विचारणा ।
अर्शांसि वातगुल्मञ्च वातरोगमरोचकम् ॥ १८३ ॥
नाभिशूलमुदावर्त्तं हृद्रोगं ग्रहणीं तथा ।
क्षयं कुष्टमपस्मारं प्रमेहं वातशोणितम् ॥ १८४ ॥
मन्दाग्निमग्निमान्द्यञ्च कासं श्वासं भगन्दरम् ।
सर्वव्याधि विनिर्मुक्तो जीवेद्वर्षशतद्वयम् ॥ १८५ ॥
क्षीराज्यरसयूषान्नं दोषधात्वनलोचितम् ।
बुभुक्षितो मात्रयाऽश्न मद्याद् गुग्गुलुसेवकः ॥ १८६ ॥
वातं स्थिरादिक्काथेन पित्तं काकोलिकादिना ।
आरग्वधादेन कफं पीतो जयति गुग्गुलुः ॥ १८७ ॥
दार्वीक्काथेन मेहं जयति मधुयुतो मेदसयापि वृद्धिं •
पाण्डुत्वं मूत्रयुक्तः क्षपयति चितं छागदुग्धेन सिद्धम् ।
निम्बक्काथेन कुष्टं श्वयथुमतिबलं मूलकक्कायपीतः
क्षिप्रं कुम्भीकहृचस्वरसपरिगतो मूषकग्रामदोषान् ॥ १८८ ॥
इति योगराजगुग्गुलुः ।

विह्नत्तेजोवती दन्ती श्वदंष्ट्राचित्रकं शठी ।
गवाक्षी मुस्तविश्वाम्रा विडङ्गानि हरीतकी ॥ १८९ ॥
पलोन्मितानि चैतानि पलान्यष्टावरुष्करात् ।
देवदारुपलान्यष्टौ सूरणस्य च षोड़श ॥ २०० ॥

जलद्रोणे पचेत् क्वाथं चतुर्भागावशेषितम् ।
पूतन्तु तं रसं भूयः क्वाथेभ्यो द्विगुणो गुडः ॥ २०१ ॥
लेहं पचेत्तु तं तावद्यावद्दार्वी प्रलेपनम् ।
अवतार्य ततः पश्चा च्चूर्णानी मानि दापयेत् ॥ २०२ ॥
त्रिवृत्तेजोवती कन्द चित्रकान् द्विपलांशिकान् ।
एला त्वङ्मरिचं चापि गजाह्वाश्चापि षट्पलम् ॥ २०३ ॥
द्वात्रिंशच्च पलञ्चैव चूर्णयित्वा निधापयेत् ।
ततो मात्रां प्रयुञ्जीतजीर्णे चीररसाशनः ॥ २०४ ॥
पञ्चगुल्मान् प्रमेहांश्च पांडुरोग हलीमकम् ।
जयेदर्शांसि सर्वाणि तथा सर्वोदराणि च ॥ २०५ ॥
दीपयेद् ग्रहणीं मन्दां यक्ष्माणं चापकर्षति ।
पीनसे च प्रतिश्याय आमवाते तथैव च ॥ २०६ ॥
अय सर्वगदेष्वेव कल्याणो लेह उत्तमः ।
दुर्नामाग्निकरश्चासौ दृष्टो वारसहस्रशः ॥ २०७ ॥
भवन्त्यनेन पुरुषाः शतवर्षा निरामयाः ।
दीर्घायुषः प्रजननो वलीपलितनाशनः ॥ २०८ ॥
रसायनवरश्चैष मेधाजनन उत्तमः ।
गुड़श्रीबाहुशालोऽयं दुर्नामारिः प्रकीर्त्तितः ॥ २०९ ॥
इति श्रीबाहुशालो गुडः ।
मार्धं पलं पलं चार्धं विदध्याद्गुडखण्डयोः ।
श्रेष्ठमध्यमहीनेषु मात्रेय मुनिना स्मृता ॥ २१० ॥
तोयपूर्णे यदा पात्रे चिप्तो न प्लवते गुड ।
चिप्तस्तु निश्चलस्तिष्ठेत्पतितस्तु न शीर्यते ॥ २११ ॥
यदा दार्व्यां प्रलेपः स्यात्तावद्दातव्यस्तुनो भवेत् ।
एष पाको गुडादीनां सर्वेषां परिकीर्त्तितः ॥ २१२ ॥

सुखमर्दः सुखस्पर्शी गन्धवर्णरसान्वितः।
पीडितो भजते मुद्रां गुड़ः पाकमुपागतः॥ २१३॥

—०—

## अथ लोहभेदानाह।

मुण्डं तीक्ष्णञ्च कान्तञ्च त्रिप्रकारमयः स्मृतम्।
मृदुकुण्ठञ्च कण्डारं त्रिविधं मुण्डमेव च॥ २१४॥
द्रुतद्रावमविस्फोटं मृदु कृष्णद्युतं च यत्।
घट्टने प्रसरं दुःखात्तत्कुण्ठं मध्यमं स्मृतम्॥ २१५॥
विहृतं भज्यते भङ्गं कृष्णं स्यात्तु कण्डालकम्॥ २१६॥

मुण्डं वरं मृदुलकं कफवातशूल
शूलाममेहगुदजामय पाण्डुहारि।
गुल्मामवातजठरार्त्तिहरं प्रदीपि
शोफापहं रुधिरकृत् खलु कोष्टशोधि॥ २१७॥

खराख्यं योगरं सारं कार्णकं द्रावकं तथा।
रोमकं षड्विधं तीक्ष्णं मुनिभिः परिकीर्त्तितम्॥ २१८॥
हुन्तालमपरं तारं वट्टं वाजरकालकम्।
कान्तं सप्तविधं प्रोक्तं भ्रामकं चुम्बकं तथा॥ २१९॥
नीलं कृष्णमतिस्निग्धं सूक्ष्मं सारमयः शुभम्।
न नमेद्भङ्गुरं यत्तत् खरलोहमुदाहृतम्॥ २२०॥
कृष्णपाण्डुर कच्छुर बीजतुल्यन्तु योगरम्।
विक्लेदनेऽतिपरुषं हुन्तालमिति कथ्यते॥ २२१॥
योगरैर्वज्रसङ्काशैः सूक्ष्मैर्युक्तैश्च सान्द्रकैः।
निर्मितं श्यामलाङ्गञ्च वाजरं तत्प्रकीर्त्तितम्॥ २२२॥

नीलं कृष्णप्रभं सान्द्रं मसृणं गुरुतारकम् ।
अयः पारशव त्तीक्ष्णमस्त्रं कालायसं खरम् ॥ २२३ ॥
रूक्षं स्यात् खरलोहकं समधुरं पाके च वीर्य्यं हिमम्
तिक्तोष्णं कफवातपित्तजनित प्लीहामपांडूर्त्तिनुत् ।
सद्यः शूलयकृत् गदक्षयजरामोहामवातापहम्
दीप्तं चातिरसायनं कफहरं दुर्नामभेदापहम् ॥ २२४ ॥
खरलोहात्परं सर्वमेकैकं स्याच्छतोत्तरम् ॥ २२५ ॥
गुडूचीहंसपादी च रक्तमालाफलत्रयम् ।
(१) (२)
गोपालिका गोरसना तुम्बुरुं लोहतप्तकाम्
एषां रसैः सिञ्चयेत्त क्लिरिदोषनिवृत्तये ॥ २२६ ॥

इति तीक्ष्णशोधनम् ।

---

## अथ लोहवर्णनम् ।

तत्तदाऽऽकरसम्भूतं तत्तद्रोगविनाशनम् ।
तेन तस्य परीक्षायां यतेमहि महेतुकम् ॥ २२७ ॥
कल्लक तंडुलाङ्गं स्या दार्यवंशलयोपरि ।
क्षशताडं क्षशाङ्गञ्च शूलाग्रञ्चोग्रदेशजम् ॥ २२८ ॥
पाण्डिजं द्विविध कृष्णं शुक्लञ्च समदाडिमम् ।
भद्रमेरण्डबीजाङ्गं सुदीपत्तनिभ शुभम् ॥ २२९ ॥
वज्रदमर्कपत्राङ्ग मिपत्सुवर्णच्छविद्विधा ।
कान्तं मृदुतरं ताडं रुचं कान्ति गितीकरम् ॥ २३० ॥
क्षुद्राङ्गं गुरुतारं स्यात् कलिङ्गजमयः स्मृतम् ।

---

(१)गोपालिका गोपीवल्ली । (२)गोरसना गोजिह्वा ।

रूचं रुक्मप्रतिकाशं तीक्ष्णं मृदुफलं स्मृतम् ॥ २३१ ॥
यकृत्प्लीहशिरःशूलमम्लपित्तानिलोद्भवम्।
पार्श्वरोगहरं वातं हन्याद्वातकफोद्भवम् ॥ २३२ ॥
छर्द्यतीसारशूलानि परिणामोद्भवं तथा।
वातं सर्वाङ्गिकं पित्तं निहन्याच्चोषदेशजम् ॥ २३३ ॥
भेदनं दीपनं वह्नेर्दुर्नामाख्यं त्रिदोषजम्।
गात्रभेदं वार्फं वातं हन्ति वज्रोद्भवं तु यत् ॥ २३४ ॥
गुल्मञ्च पांडुरोगञ्च ज्वरांश्च विषमोद्भवान्।
अर्शांसि श्वासशोथांश्च प्रमेहांश्च विशेषतः ॥ २३५ ॥
गलग्रहं रक्तपित्तं मरुद्रोगं भयानकम्।
निद्रालस्यावरोधञ्च निहन्यात् पाणिदेशजम् ॥ २३६ ॥
रक्तौघं चापि चोषाणं रक्तपित्तं सुदारुणम्।
मूर्च्छाछर्दिहरं दाहं वज्रं शमयति ध्रुवम् ॥ २३७ ॥
सर्वान् रोगान्निहन्त्याशु कुष्टाष्टादशसम्मितान्।
पावनं पुत्रजननं वन्ध्याया वीर्य्यवर्द्धनम्।
वल्यं चयापहं धातुबृंहणं स्यात् कलिङ्गजम् ॥ २३८ ॥

एतानि सर्वाणि विचेष्टितानि
हितानि रोगोपशमाय सन्ति।
वयो विशेषेषु विशेषविज्ञै-
र्विधायदत्तानि च देशकाले ॥ २३९ ॥

सामान्याद्द्विगुणञ्चौरं तस्मादष्टगुणं कलिः।
कलेर्दशगुणं भद्रं भद्राद्वज्रं सहस्रधा ॥ २४० ॥
वज्रात् षष्टिगुणं पाणिर्निरचिर्दशभिर्गुणैः।
ततः कोटिसहस्रेण त्वयः कान्तं महागुणम् ॥ २४१ ॥

इति लौहवर्णनम्।

त्रिवृच्चित्रकनिर्गुण्डी स्नुहीमुण्डितकाजटा।
प्रत्येकशोऽष्टपलिका जलद्रोणे विपाचयेत् ॥ २४२ ॥
पादशेषे रसे तस्मिन् पुनस्तेन विपाचयेत्।
पलद्वयं विडङ्गस्य व्योषात्कर्षद्वयं पृथक् ॥ २४३ ॥
त्रिफलायाः फलं पञ्च शिलाजतु पलं न्यसेत्।
दिव्योषधहतस्यापि वैङ्कतेन हतस्य वा ॥ २४४ ॥
पलद्वादशकं देयं रुक्मलोहस्य चूर्णितम्।
मधुशर्करयोर्युक्तं चतुर्विंशतिभिः पलैः ॥ २४५ ॥
घनीभूते सुशीते च दापयेदवतारयेत्।
एतदग्निमुखं नाम दुर्नामान्तकरं परम् ॥ २४६ ॥
मन्दमग्निं करोत्याशु कालाग्निसमतेजसम्।
पर्वतोऽप्यवजीर्येत प्रासादादस्य देहिनाम् ॥ २४७ ॥
गुरुपिष्टान्नपानानि पयो मांसरसाहिताः।
दुर्नामपांडु श्वयथु प्लीहकुष्ठोदरापहम् ॥ २४८ ॥
नसरोगोऽस्त्रियश्चापि न निहन्यादिदं क्षणात्।
करीरकाञ्जिकादीनि ककारादीनि वर्जयेत्।
सवल्लतोऽन्यया लोहो देहात्किट्टश्च दुर्जयम् ॥ २४९ ॥
इत्यग्निमुखलोहः।

पलद्वादशकं कृत्वा कृष्णलोहस्य खण्डशः।
भार्ग्यम्बष्ठा मण्डूर मूलैः पिण्डं प्रलेपयेत् ॥ २५० ॥
दत्वा प्रधमयेत्तावद्यावत्सर्वमृतं भवेत्।
घृतस्य षट्पलं देयं शर्करायास्तथैव च ॥ २५१ ॥
सूर्यावर्त्तरसप्रस्थे त्रिफला मर्हिते शुभे।
प्रक्षिप्य विपचेद्भूयो यावत्सान्द्रत्वमेति च ॥ २५२ ॥
सिद्धे रात्रुपिते योज्य सूर्यावर्त्तस्य दापयेत्।

कर्षं त्रिकटुकस्यापि त्रिकर्षं चूर्णसंयुतम् ॥ २५३ ॥
मधुत्रिपलसंयुक्तं यथाग्निं चोपयोजयेत् ।
अर्शांसि कामला कुष्ठपाण्डुरोग क्रमींस्तथा ॥ २५४ ॥
वृद्धिं गुल्मोदरं शोथं विशेषात्परिणामजम् ।
शूलान्निहन्ति सर्वांस्तु विकारान्नात्र संशयः ॥ २५५ ॥
एतल्लोहाष्टकं नाम सर्वदोषहरं परम् ।

इति लोहाष्टकम् ।

चव्यं पलाष्टकं देयं खदिरं चार्द्रमेव च ।
चित्रकस्य पलं पञ्च ताम्रमूली च तत्समा ॥ २५६ ॥
त्रिफलाप्रस्थसंयुक्तं जलद्रोणे विपाचयेत् ।
अष्टभागावशेषेण कषायमवतारयेत् ॥ २५७ ॥
आज्यात्पलाष्टकं देयं रुक्मलोहस्य षोड़शः ।
पचेत्ताम्रमये पात्रे सुशीते चावतारयेत् ॥ २५८ ॥
त्रिवृद्दन्ती विडङ्गानि पथ्या चामलकानि च ।
शुण्ठी बिभीतकं कृष्णा एषां चूर्णं पलाधिकम् ॥ १५९ ॥
शर्करा मधु चत्वारि स्निग्धे भाण्डे निधापयेत् ।
गुरुहृद्यान्नपानानि पयो मांसरसो हितः ॥ २६० ॥
दुर्नाम कुष्ठक्षयपाण्डुप्लीहोदराणि च ।
गुदशूले कुक्षिशूले परिणामकृते हितः ॥ २६१ ॥
बलवर्णकरं हृद्यमग्निसन्दीपनं परम् ।
करीरं काञ्जिकञ्चैव काकमाचीञ्च वर्जयेत् ॥ २६२ ॥

इति चव्याद्यं लोहम्

—०—

## अथातः शङ्करलोहमाह ।

प्रणम्य शङ्करं देवं दण्डपाणिं महेश्वरम् ।

जीवितारोग्यमन्विच्छन्नारदः पृच्छते गुरुम् ॥ २६३ ॥
सुखोपायेन हे नाथ ! शस्त्रक्षाराग्निभिर्विना ।
दुर्बलानाञ्च भीरूणां चिकित्सां वक्तुमर्हसि ॥ २६४ ॥
सशिष्यवचनं श्रुत्वा लोकानां हितकाम्यया ।
अर्शसां नाशनं श्रेष्टं भैषज्यमिदमीरितम् ॥ २६५ ॥
पांडिवज्रादिलोहाना मादायान्यतमं शुभम् ।
कृत्वा निर्मलमादौ तु कुनव्या माक्षिके न च ॥ २६६ ॥
पत्तूरमूलकल्केन स्वरसेन दहेत्ततः ।
वह्नौ निक्षिप्य विधिवत् स्थूलाङ्गारेण निर्धमेत् ॥ २६७ ॥
ज्वाला च तस्य रोद्धव्या त्रिफलाया रसेन तु ।
ततो विज्ञायगलितं शङ्कुनोर्ध्वं विनिःक्षिपेत् ॥ २६८ ॥
त्रिफलाया रसे पूते तदाकृष्य विनिर्वपेत् ।
न सम्यक् गलितं यत्तु तेनैव विधिना पुनः ॥ २६९ ॥
ध्मातं निर्वापयेत्तस्मिं ल्लोहं तत्त्रिफलारसे ।
यल्लोहं न मृत तत्त पाच्यं भूयोऽपि पूर्ववत् ।
मारणान्न मृतं यच्च तत्पक्तव्यमलोहवत् ॥ २७० ॥
तदनुलोहवत् लोह पात्रे कालायसमुद्गरेण संचूर्ण ।
हत्वा बहुशः सलिले प्रक्षाल्याङ्गारादुद्धृतन्तदयः ॥ २७१ ॥
केवलमग्नौ शुष्कौ कृत्वाऽऽतपेऽथवा भिषक् यत्नात् ।
लोहशिलायां पिष्ट्वा तस्मिंश्चर्मिनि तदप्राप्तौ ॥ २७२ ॥
ततः संशोध्य विधिव चूर्णं येल्लोहभाजने ।
लोहेनैव तथा यत्नात् दृषदा सूक्ष्मचूर्णितम् ॥ २७३ ॥
कृत्वा लोहमये पात्रे मार्दे वा निसरम्भके ।
रसैः पङ्कोपमं कृत्वा पचेल्लोमय वह्निना ॥ २७४ ॥
पुटानि क्रमशो दद्यात् पृथगेषां विधानतः ।

त्रिफलार्द्रकभृङ्गाणां केशराजस्य बुद्धिमान् ॥ २७५ ॥
मानकन्दकभल्लातवह्नीनां सूरणस्य च।
हस्तिकर्णपलाशस्य कुलिशस्य तथैव च ॥ २७६ ॥
पुटे पुटे चूर्णयित्वा लोहात् षोड़शिकं पलम्।
तन्मानं त्रिफलायाश्च पलेनाधिकमाहरेत् ॥ २७७ ॥
अष्टभागावशेषेण रसे तस्याः पचेद्बुधः।
अष्टौ पलानि दत्त्वा च सर्पिषो लोहभाजने ॥ २७८ ॥
ताम्रे वा लोहदार्व्या तु चालयेद्विधिपूर्वकम्।
ततः पाकविधानज्ञः स्वच्छे चोर्द्धे च सर्पिषि ॥ २७९ ॥
मृदुमध्यादिभेदेन गृह्णीयात्पाकमादृतः।
आरभेत विधानज्ञः कृतकौतुकमङ्गलः ॥ २८० ॥
भ्रामरं घृतसंयुक्तं लिह्याद्वा रक्तिका क्रमात्।
वर्धमानानुपानञ्च गव्यं क्षीरोत्तमं मतम् ॥ २८१ ॥
मद्यान्नाभिष्यजायाश्च स्निग्धपथ्यादिभोजनम्।
सद्यो वह्निकरञ्चैव भस्मकञ्च नियच्छति ॥ २८२ ॥
हन्ति वातं तथा पित्तं कुष्ठानि विषमज्वरम्।
गुल्मशूलाश्चिरोगांश्च निद्रालस्यमरोचकम् ॥ २८३ ॥
शूलञ्च परिणामञ्च प्रमेहमपबाहुकम्।
श्वयथुं रक्तस्रावञ्च दुर्नामञ्च विशेषतः ॥ २८४ ॥
वलग्रहं हणञ्चैव कान्तिदं स्वरबोधनम्।
लाघवञ्च मनोग्राह्य आरोग्यं पुष्टिवर्द्धनम् ॥ २८५ ॥
आयुष्यं श्रीकरञ्चैव यशस्तेजस्करं शुभम्।
स्त्रीकं पुत्रजननं वन्ध्यापन्नितनाशनम् ॥ २८६ ॥
दुर्नामारिरियं नाम्ना दृष्टो वारसहस्रशः।
निर्मूलं दहति शीघ्रं यथा तूलकमग्निना ॥ २८७ ॥

सौकुमार्य्याऽल्पकायत्वान्मद्यसेवी यदा नरः ।
जीर्णमद्यादियुक्तानि भोजनैः सह पाययेत् ॥ २८८ ॥
लावतित्तिरिवार्त्ताक मयूरशशकादयः ।
चटकः कालविद्धश्च वर्त्तिश्च हरिणैणकः ॥ २८८ ॥
श्येनः काकः वृहल्लावो वनविष्किरिकादयः ।
पारावतमृगादीनां मांसं जाङ्गलजं शुभम् ॥ २८० ॥
महुरो रोहितः श्वेटः शकुलश्च विशेषतः ।
मत्स्यराज इमे प्रोक्ता हितमत्स्याश्च ये नराः ॥ २८१ ॥
प्रशस्तं वार्त्ताकफलं पटोलं वृहतीफलम् ।
प्रलंबा भीरुवेतायं ताडकं तंडुलीयकम् ॥ २८२ ॥
वास्तुकं धान्यशाकञ्च क्रमुकं चक्रवर्त्तनम् ।
नारिकेलञ्च खर्जूरं दाडिमं लवलीफलम् ॥ २८३ ॥
शृङ्गाटकञ्च पक्वाम्रं द्राक्षा तालफलानि च ।
जातिकोशं लवङ्गञ्च पूगतांबूलपत्नकम् ॥ २८४ ॥
हितान्येतानि वस्तूनि लोहमेतत्समश्नताम् ।
नाश्नीयाल्लकुचं कोलं कर्कन्धुबदराणि च ।
जम्बीर बीजपूरञ्च करमर्दकतिन्तिडीः ॥ २८५ ॥
आनुपानि च मांसानि क्रकरं पुंड्रकादयः ।
हंससारसदात्यूह शङ्कु कंकबलाहकाः ॥ २८६ ॥
माणकन्दकरीराणि कतकञ्च कलिङ्गकम् ।
कुष्माण्डञ्च कर्कोटं केसुकञ्च विशेषतः ॥ २८७ ॥
कटुकं कालशाकञ्च कसेरु कर्कटीं तथा ।
विदलानि च सर्वाणि ककारादींश्च वर्जयेत् ॥ २८८ ॥
लोहराजस्तथा चायं स्वयं रुद्रेण भाषितः ।
जगतामुपकाराय दुर्नामारिरयं ध्रुवम् ॥ २८८ ॥

स्थानादपैति मेरुश्च पृथ्वीपर्य्येति वा पुनः।
पतन्ति चन्द्रताराश्च मिथ्या नैव वदाम्यहम् ॥ ३०० ॥
ब्रह्मघ्नाश्च कृतघ्नाश्च क्रूराश्चेऽसत्यवादिनः।
वर्जनीया विशेषेण भिषजाः गुरुनिन्दकाः ॥ २०१ ॥
मुनिरसपिष्टविडङ्गं मुनिरसलीढं चिरस्थितं घर्मे।
द्रावयति लोहदोषान् वह्निर्नवनीतपिण्डमिव ॥ ३०२ ॥
काले मलप्रवृत्ति लाघवमुदरे विशुद्धिमुद्गारे।
अङ्गे चानवसादो मनःप्रसादोऽस्य परिपाके ॥ ३०३ ॥
क्रिमिरिपुचूर्णं लीढं सहितं स्वरसेन वङ्गसेनस्य।
क्षपयत्यचिरान्नियतं लोहाजीर्णद्भवं शूलम् ॥ ३०४ ॥
कुर्य्यात्कनकबीजैश्च रेचनं किट्टशान्तये।
भवेद्यद्यतिसारश्च पित्वा दुग्धन्तु तं जयेत् ॥ ३०५ ॥
गुञ्जाद्वादशकादूर्ध्वं वृद्धिरस्य भयप्रदा।

इति शङ्करप्रणीतलोहः।

—०—

## अथ सामान्यविधिः।

रक्तोल्वणाः गुदे कीलाः पित्ताकृतिसमन्विताः।
वटप्ररोहसदृशा गुञ्जा विद्रुमसन्निभाः ॥ ३०६ ॥
तेऽत्यर्थं दुष्टमुष्णञ्च गाढ़विट्क प्रपीड़िताः।
स्रवन्ति सहसा रक्तं तस्य चातिप्रवृत्तितः ॥ ३०७ ॥
भेकाभः पीड्यते दुःखैः शोणितक्षयसम्भवैः।
हीनवर्णबलोत्साहो हतौजा कलुषेन्द्रियः ॥ ३०८ ॥
विट्श्यावं कठिनं रूक्षमधो वायुर्न वर्त्तते ॥ ३०९ ॥

—०—

## वाताद्यनुबन्धमाह ।

तनुचारुणवर्णञ्च फेनिलं चासृगर्शसाम् ।
कट्यूरुगुदशूलञ्च दौर्बल्यं यदि चाधिकम् ।
तत्रानुबन्धो वातस्य हेतुर्यदि च रूक्षणम् ॥ ३१० ॥
शिथिलं श्वेतपीतञ्च विट् स्निग्धं गुरुशीतलम् ।
यद्यर्शसां घनं चासृक् तन्तुमत्पाण्डुपिच्छिलम् ॥ ३११ ॥
गुदं सपिच्छंस्तिमितं गुरुस्निग्धञ्च कारणम् ।
श्लेष्मानुबन्धो विज्ञेयस्तत्र रक्तार्शसां बुधैः ॥ ३१२ ॥
रक्तार्शसामुपेक्षेत रक्तमादौ स्रवेद्भिषक् ।
दुष्टास्रे निगृहीते हि शूलानाहाद्यसृग्गदाः ॥ ३१३ ॥
चन्दनकिराततिक्तक धन्वयवासाः सनागराः क्वथिताः ।
रक्तार्शसां प्रशमना दार्वीत्वगुशीरनिम्बाश्च ॥ ३१४ ॥
नवनीततिलाभ्यासात्केसर नवनीत शर्कराभ्यासात् ।
दधिरसमथिताभ्यासाद् गुदजाः शाम्यन्ति रक्तवाहाः ॥३१५॥
सपद्मकेशरक्षौद्रं नवनीतं नवं लिहन् ।
सिता केशरसंयुक्तं रक्तार्शः स सुखी भवेत् ॥ ३१६ ॥
लाजैः पेया पीता चुक्रिका केशरोत्पलैः सिद्धा ।
हन्त्याशुरक्तरोगं तथा बला पृष्टपर्णीभ्याम् ॥ ३१७ ॥
पयसा शृतेन यूषैः सतीनमुद्गाढ़कीमसूराणाम् ।
भोजनमद्यादर्शैः शालिश्यामाककौ द्रवाणाम् ॥ ३१८ ॥
शशहरिणलावमांसैः कपिञ्जलैः पेयकैः सुसिद्धैश्च ।
भोजनमद्यादर्शैः मधुरैरौपस्रुमधुरैर्वा ॥ ३१८ ॥
ज्योत्स्निका बीजकल्केन लेपो रक्तार्शसां हितः ।
तद्वद्गोमरजोयुक्तं नवनीतं प्रलेपयेत् ॥ ३२० ॥

समङ्गोत्पलमोचाख्य तिरीटतिलचन्दनैः।
छागक्षीरं प्रयोक्तव्यं गुदजे शोणितात्मके ॥ ३२१ ॥
सातिविषा कुटजत्वक् फलञ्च रसाञ्जनञ्च मधुयुतानि।
रक्तापहानि दद्यात्पिपासवेत्तंडुलजलेन ॥ ३२२ ॥
यवानीन्द्रियवं पाठा विल्वं शुण्ठी रसाञ्जनम्।
चूर्णं शूले हितं पेयं प्रवाहे वातशोणिते ॥ ३२३ ॥
कुटजफलवल्ककेशरनीलोत्पललोध्रधातकी कल्कैः।
सिद्धं घृतं विधेयं शूले रक्तार्शसां भिषजा ॥ ३२४ ॥
इति कुटजाद्यं घृतम्।
चवाकपुष्पी बला दार्वी पृष्टपर्णी त्रिकण्टकम्।
न्यग्रोधोदुम्बराश्वत्थ शुङ्गाश्च द्विपलोन्मिताः॥ ३२५ ॥
कषाय एष पेयस्तु जीवन्ती कटुरोहिणी।
पिप्पली पिप्पलीमूलं मरिचं देवदारु च ॥ ३२६ ॥
कलिङ्गं शाल्मलीपुष्पं वीरा चन्दनकुङ्कुमम्।
कटफलं चित्रकं मुस्तं प्रियंग्वतिविषे स्थिरा ॥ ३२७ ॥
पद्मोत्पलानां किञ्जल्कं समङ्गा स निदग्धिका।
विल्वं मोचरसं पाठा भागाः स्युः कार्षिकाः पृथक् ॥ ३२८ ॥
चतुष्प्रस्थं घृतप्रस्थे कषायमुपकल्पयेत्।
त्रिंशत्पलानि तु प्रस्थो विज्ञेयो द्विपलाधिकः ॥ ३२९ ॥
सुनिषण्णकचाङ्गेर्याः प्रस्थौ द्वौ स्वरसस्य च।
सर्वैरेतैर्यथोद्दिष्टैर्घृतप्रस्थं विपाचयेत् ॥ ३३० ॥
एतदर्शःस्वतीसारे त्रिदोषे रुधिरस्रुतौ।
प्रवाहणे गुदभ्रंशे पिच्छासु विविधासु च ॥ ३३१ ॥
उत्थाने चातिबहुशः शोथे शूले गुदाश्रिते।
मूत्रग्रहे मूढवाते मन्दाग्नावरुचावपि ॥ ३३२ ॥

प्रयोज्यं विधिवत्सर्पिर्बलवर्णाग्निवर्द्धनम् ।
विविधेष्वन्नपानेषु केवलं वा निरत्ययम् ॥ ३३३ ॥
द्रव्याण्यष्टाविहावाप्य जलषोडशके क्वथेत् ।
निःक्वाथ्यप्रस्थशेषन्तु गृह्णीयात्प्रस्रुतं भिषक् ॥ ३३४ ॥
इत्यवाक्पुष्पीघृतम् ।

न्यग्रोधोदुम्बराश्वत्थ बदरी प्लक्षवेतसाः ।
एभ्यः प्रवालांस्तरुणांस्त्रिपलांश्च समाहरेत् ॥ ३३५ ॥
अवाक्पुष्प्याः पलान्यष्टौ द्वौ च दार्व्यास्तथैव च ।
शालपर्ण्याः पलेद्वे तु सर्वमेतत् समावपेत् ॥ ३३६ ॥
द्वे पले कालशाकस्य सर्वमेतत्समावपेत् ।
द्विद्रोणे सलिले साध्यमष्टभागावशेषितम् ॥ ३३७ ॥
घृतस्याऽर्धाढ़कञ्च स्यात् सकषायं सुखाग्निना ।
कुचांगेर्य्याम्लिकाभ्याञ्च स्वरसः स्नेहसम्मितः ॥ ३३८ ॥
देवदारु च मुस्तञ्च चित्रकं बिल्वपेशिका ।
कट्फलं शृङ्गवेरञ्च पिप्पली चन्दनं तथा ॥ ३३९ ॥
सौविरमञ्जनं मूलं पिप्पल्याः कटुरोहिणी ।
गन्धप्रियंगुपुष्पञ्च शाल्मली जीवकाह्वया ॥ ३४० ॥
वत्सकस्य च बीजानि तथा चातिविषाभया ।
एषामक्षसमा भागाः पृथग्दत्वा विपाचयेत् ॥ ३४१ ॥
वातगुल्ममतीसारं शूलं ज्वरमरोचकम् ।
स्त्रोणामसृग्दरं सर्वं रक्तपित्तप्रवाहिकाम् ॥ ३४२ ॥
पांडुरोगं तथा कासं क्रमिदोषांश्च नाशयेत् ।
छर्दिं माक्षिकसंयुक्तं शमयेद्दीपनं परम् ॥ ३४३ ॥
गर्भाधानञ्च वन्ध्यानां करोत्यर्शो निवारणम् ।
चाङ्गेरीघृतमित्युक्तं स्यातमर्शो निवारणम् ॥ ३४४ ॥

बलमांसकरञ्चैतद्रक्तगुल्महरं तथा ।
अर्शसां पित्तजातानां हितं तद्रक्तजेष्वपि ॥ ३४५ ॥
सन्निपातसमुत्थेषु सर्वतो भिषजः क्रमः ।

इति मद्याचांगेरीघृतम् ।

कुटजत्वचो विपाच्य पलशतमर्धं महेन्द्र सलिलेन ।
यावत्सान्द्ररसत द्रव्यं स्वरसस्ततो ग्राह्यः ॥ ३४६ ॥
मोचरसः ससमङ्गा फलिनी च पलांशकैस्त्रिभिस्तैश्च ।
वत्सकबीजं तुल्यं चूर्णीकृतमत्रदातव्यम् ॥ ३४७ ॥
पूतः क्वथितः सान्द्रः स्वरसो दार्वीप्रलेपनो ग्राह्यः ।
मात्राकालोपहिता रसक्रियैषा जयत्य सृक् स्रावम् ॥ ३४८ ॥
छागक्षीरप्रयुक्ता पेया मण्डेन वा यथाग्निबलम् ।
जीर्णौषधस्तु शालीन् पयसा छागेन भुञ्जीत ॥ ३४९ ॥
रक्तगुदजातीसारं सास्रशुजो निहन्त्याशु ।
बलवच्च रक्तपित्तं रसक्रियैषाह्युभयमार्गगम् ॥ ३५० ॥
अत्राष्टभागावशिष्टा कर्त्तव्या क्वाथकल्पना ॥ ३५१ ॥

इति कुटजरसक्रिया ।

कुटजत्वक् पलशतं जलद्रोणे विपाचयेत् ।
अष्टभागावशिष्टन्तु कषायमवतारयेत् ॥ ३५२ ॥
वस्त्रपूतं ततः क्वाथं पचेल्लेह त्वमागतम् ।
मुस्तं मोचरसं लोध्रं कपित्थफलधातकी ॥ ३५३ ॥
भल्लातकं विडङ्गानि त्रिकटुं त्रिफलां तथा ।
रसाञ्जनं चित्रकञ्च कुटजस्य फलानि च ॥ ३५४ ॥
वचामतिविषां बिल्वं प्रत्येकन्तु पलं पलम् ।
त्रिंशत्पल गुडस्याथ चूर्णीकृत्य निधापयेत् ॥ ३५५ ॥

मधुनः कुड़वं दद्याद्घृतस्य कुड़वं तथा ।
एषलेहः शमयति चार्शोरक्तसमुद्भवम् ॥ २५६ ॥
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम् ।
ये च दुर्नामजारोगास्तान् सर्वान् नाशयत्यपि ॥ २५७ ॥
अम्लपित्तमतिसारं पाण्डुरोगमरोचकम् ।
ग्रहणीमार्दवं कार्श्यं श्वयथुं कामलामपि ॥ २५८ ॥
अनुपानं घृतं दद्यान्मधुतक्रं जलं पयः ।
यथा सात्म्यं निषेवेत पानाहारविचक्षणः ॥ २५९ ॥
रोगानीकवधार्थाय कौटजो लेह उच्यते ।

इति कुटजलेहः ।

चित्रकं त्रिफलामुस्तं ग्रन्थिकञ्चविकान्तता ।
हस्तिपिप्पल्यपामार्गं दण्डोत्पलकुठेरकाः ॥ २६० ॥
एषां चतुष्पलान् भागान् जलद्रोणे विपाचयेत् ।
भल्लातकसहस्रे द्वे छित्वा तत्रैव दापयेत् ॥ २६१ ॥
तेन पादावशेषेण लोहपात्रे पचेद्भिषक् ।
तुलार्धं तीक्ष्णलोहस्य घृतस्य कुडवद्वयम् ॥ २६२ ॥
त्र्यूषणं त्रिफलावह्नि सैन्धवं विडमौद्भिदम् ।
सौवर्चलं विडङ्गानि पलिकांशानि कल्पयेत् ॥ २६३ ॥
कुड़वं वृद्धदारस्य तालमूल्यास्तथैव च ।
सूरणस्य पलान्यष्टौ चूर्णं कृत्वा विनिक्षिपेत् ॥ २६४ ॥
सिद्धशीते प्रदातव्यं मधुनः कुड़वद्वयम् ।
प्रातर्भोजनकाले वा ततः खादेद्यथा बलम् ॥ २६५ ॥
अर्शांसि ग्रहणीरोगं पाण्डुरोगमरोचकम् ।
क्रमिगुल्माश्मरीमेह शूलञ्चाशु व्यपोहति ॥ २६६ ॥
करोति शुक्रोपचयं वलीपलितनाशनम् ।

रसायनमिदं श्रेष्ठं सर्वरोगहरं परम् ॥ २६७ ॥

इति चित्रकादि भल्लातकावलेहः ।

असाध्यतामेव मेषां दाहादिकम दृश्यते ॥ २६८ ॥

—o—

भावितं रजनीचूर्णं स्नुहीक्षीरैः पुनः पुनः ।
बन्धनात् सुदृढ़ं सूत्रं छिनत्त्यर्शो भगन्दरम् ॥ २६९ ॥

इति सूत्रबन्धनम् ।

स्नुहीकाण्डगते क्षीरे भल्लातकसमन्विते ।
ज्योतिष्मत् त्रिफलादन्ती कोशातक्यऽग्निसैन्धवैः ॥ २७० ॥
चूर्णैरेतैः समघृतैः बन्धयेत् सूत्रकं दृढ़म् ।
सूत्रं तस्पातयेदर्शः छिन्नमूल इव द्रुमः ॥ २७१ ॥

इति क्षारसूत्रम् ।

श्वेतपुष्पः कालपुष्पो रक्तपुष्पस्तथैव च ।
पीतपुष्पो वरस्तेषु कालपुष्पः प्रकीर्त्तितः ॥ २७२ ॥
प्रशस्ते ह्नि नक्षत्रे कृतमङ्गलपूर्वकम् ।
कालपुष्पकमाहृत्य दग्ध्वाभस्मसमाहरेत् ॥ २७३ ॥
आढकन्तु समादाय जलद्रोणे विपाचयेत् ।
चतुर्भागावशिष्टेन वस्त्रपूतेन वारिणा ॥ २७४ ॥
शङ्खचूर्णस्य कुड़वं प्रक्षिप्य विपचेत्पुनः ।
शनैः शनैर्मृदावग्नौ यावत्सान्द्रतनुर्भवेत् ॥ २७५ ॥
स्वर्जिकायावशूके च शुण्ठीमरिचपिप्पली ।
वचातिविषा चैव हिङ्गुचित्रकयोस्तथा ॥ २७६ ॥
एषां चूर्णानि निक्षिप्य पृथगेवाऽष्टमापकम् ।
दर्व्यासंघट्टितश्चैव स्थापयेदायसे घटे ॥ २७७ ॥
एषः वह्निसमः क्षारः कीर्त्तितः काश्यपादिभिः ।

नातितीक्ष्णो न च मृदुः शिवः शीघ्रं सपिच्छलः ।
शुक्लः श्लक्ष्णोऽत्यभिष्यन्दी क्षारस्याष्टाविमे गुणाः ॥ ३७८ ॥
इति कालपुष्पादिक्षारः ।

करीषराशिमध्यस्थं ज्ञात्वा कर्म्मसुयोजयेत् ।
क्षारं क्षारोदकं कोष्णं न्यसेन्मन्दप्रवाहिनीम् ॥ ३७९ ॥
तोये कालकमुष्ककस्य विपचेद्भस्माढ़कं षड्गुणे ।
पात्रे लोहमये दृढ़े विपुलधीर्दर्व्या शनैर्घट्टयेत् ॥
दग्धाग्नौ बहुशङ्खनाभिशकलान्पूतावशेषे क्षिपेत् ।
यद्येरण्डजनालमेव दहति क्षारो वरीवाक् शतात् ॥ ३८० ।
पानीयं प्रतिसारिणीयमिति च क्षारो द्विधा शस्यते ।
तत्राद्यो गरगुल्मकादिशमने दुर्नामकादौ परः ॥ ३८१ ॥
पानीयं भावयित्वा तु स्रावयेच्च चतुर्गुणे ।
द्विगुणे षड्गुणे वारि तद्वारानेकविंशतिम् ॥ ३८२ ॥
प्रायस्त्रिभागशिष्टेऽस्मिन्नच्छपैच्छिल्यरक्तता ।
सञ्जायते तदा स्राव्यं क्षाराम्भो ग्राह्यमिष्यते ॥ ३८३ ॥
तूर्य्यं शाष्टमकेन,शोडशगुणे नांशेन संव्यूहिमौ ।
मध्यः श्रेष्ट इतिक्रमेण विहितः क्षारोदकः शङ्कः ॥ ३८४ ॥
इति क्षारः ।

हरीतकीनां प्रस्थार्धं प्रस्थमामलकस्य च ।
कपित्थानां दशपलं तदर्धा चेन्द्रवारुणी ॥ ३८५ ॥
विड़ङ्गं पिप्पलीलोध्रं मरिचं सैलवालुकम् ।
द्विपलांशं जलस्यैत चतुर्द्रोणे विपाचयेत् ॥ ३८६ ॥
द्रोणशेषे रसे तस्मिन् पूतशेषे प्रदापयेत् ।
गुड़स्य द्विशतं तिष्टेन्मासार्धं घृतभाजने ॥ ३८७ ॥
पक्षादूर्ध्वं भवत्येवं ततो मात्रा यथा बलम् ।

अस्याभ्यासादरिष्टस्य गुदजायान्ति सङ्क्षयम् ॥ ३८८ ॥
ग्रहणी पाण्डुरोगघ्नः प्लीहगुल्मोदरापहः ।
कुष्ठशोथारुचिहरो बलवर्णाग्निवर्द्धनः ॥ ३८९ ॥
सिद्धोयमभयारिष्टः कामलाश्वित्रनाशनः ।
क्रिमिग्रन्थ्यर्वुदव्यङ्ग राजयक्ष्मज्वरान्तकृत् ॥ ३९० ॥
पानमानमरिष्टादेः क्वाथपानसमं जगुः ।
भिषजस्त्वात्पलं केचित्प्रथमं मदलक्षणम् ॥ ३९१ ॥

इत्यभयारिष्टः ।

षडगुलं सकर्णीकं कुर्य्याद्यन्त्रस्य मण्डलम् ।
अङ्गुष्ठोदरविस्तीर्णं छिद्रं स्यादङ्गुलायतम् ॥ ३९२ ॥
पञ्चांगुलं वालकानां वयस्थानां षडगुलम् ।
अर्शसान्तत् प्रयोक्तव्यं लुप्तोष्टन्तु भगन्दरे ॥ ३९३ ॥
यन्त्रं सप्ताङ्गुलं स्त्रीणामायतं चतुरंगुलम् ।

इति यन्त्रप्रमाणाद्युपदेशः ।

तत्र स्थूलान्त्रप्रतिवद्धमर्धपञ्चांगुलं गुदमाहुः ।
तस्मिन् वलयस्तिस्त्रोऽध्यर्ध्वांगुलान्तरसंभूताः ॥
प्रवाहिणी विसर्जनी सम्वरणी चेति ।
रोमान्तेभ्यो यवाध्यर्धो गुदोष्टः परिकीर्त्तितः ॥ ३९४ ॥
प्रथमा तु गुदोष्टादंगुलमात्रा तत्राऽचिरकाल
जातान्यल्पदोषलिंगोपद्रवाणि भेषजसाध्यानि ।
मृदुमसृतावगाढान्युच्छ्रिताग्राणि चारेण ।
कर्कशस्थिरपृथु कठिनान्यग्निना ॥
तनु मूलान्युच्छ्रिताग्राणि क्लेदवन्ति च शस्त्रेण ।

—०—

क्षारेण वह्निना वापि वातश्लेष्मसमुद्भवम् ।
क्षारेणैव दहेद्दर्शः पित्तरक्तसमुद्भवम् ॥ १८५ ॥

तत्र बलवन्तमातुरमर्शो भिरुपद्रुतमुपस्निग्धं परिस्विन्नमनिल वेदम्प्रहर्षुपशाम्त्यर्थं स्निग्धमुष्णमल्पमन्नं द्रवप्रायं भुक्तवन्तमुप वेश्य शुचौ देशे साधारणे व्यभ्रे काले समे फलके शय्यायां वा शत्वादित्यगुदमन्यस्योत्सङ्गे निषण्णपूर्वकायमुत्तानं किञ्चिदुन्नत टिकं वस्त्रकम्बलकोपविष्टं यन्त्रशाटकेन परिक्षिप्तग्रीवासक्थि परिकर्म्मभिः सुपरिगृहीत मस्पन्दनशरीरं कृत्वा ततोऽस्मिन् घृत भ्यक्तं यन्त्रनल्वणमुखं पायौ शनैः शनैः प्रवाह्यमानस्य प्रणिधाय प्रविष्टं चार्शो वीक्ष्यशलाकयोत्पीड्य पिचुवस्त्रयोरन्यतरेण प्रमृज्य क्षारं पातयेदिति।

—०—

पद्मपत्रसमः पित्ते क्षारलेपः प्रशस्यते ।
हेमन्ते क्षुद्रते सूर्ये वसन्तेऽस्तागते मतः ॥ १८६ ॥

पातयित्वा च पाणिना यन्त्रद्वारं पिधाय वाक्शतमात्रमुपेक्षेत ततः प्रमृज्य क्षारप्यापिबलं चावेक्ष्य पुनः पातयेत् यथार्श पक्व जाम्बवसंकाशमभिवीक्ष्यावसन्नमोपहतमुपावर्त्तयेत् क्षारं प्रक्षाल्य धान्याम्लदधिमस्तुशुक्तानामन्यतमेन ततो यष्टिमधुकमिश्रितसर्पिषा निर्वाप्य यन्त्रमपनीयोत्थाप्यातुरमुष्णोदककोष्ठेऽवगाह्य शीतामि रद्भिः परिषिञ्चेत्। शयीताभिरित्येके ततो निर्वातमागारं प्रवेश्या ऽऽचारिकमादिशेत् ।

—०—

कल्कः—
युक्त्यात्पाकाय लघुकं मापसक्तुसमन्वितम् ।

अथ चेत् स्थिरमूलत्वात् क्षारदग्धं न शीर्यते ॥ ३९७ ॥
इदमालेपनं तत्र समग्रमवचारयेत् ॥ ३९६ ॥
भल्लीकाद्धिकबीजानि तिलान् मधुकमेव च ।
सर्पिषा सममात्राणि तथैवमनुलेपयेत् ॥ ४९७ ॥
तिलकल्कः समधुको घृताक्तो व्रणरोपणः ।
सावशेषं पुनर्दाह्येदेकैकं समुपक्रमेत् ॥ ३९८ ॥
प्रागदक्षिणं ततो वामं ततः पृष्ठाग्रजं पुनः ।
ज्वलनेनाथ सन्दग्धः पक्वजंबुफलोपमः ॥ ३९९ ॥
तत्र लेपं प्रयुञ्जीत पथ्याम्लक्षारचन्दनैः ।
दार्व्विवस्त्यादिजे लेपः शतधौतेन सर्पिषा ॥ ४०० ॥
विषदेवाह्व सुरसा कुष्ट गुड़पुनर्नवैः ।
कल्कैः क्षतैरधो नाभेर्लेपयेदस्ति बन्धनम् ॥ ४०१ ॥
छायां सुशोषिता गोविट् पिंडैः सौवीरपाचितैः ।
स्वेदयेद्गुददेशन्तु दाहादि क्लेशशान्तये ॥ ४०२ ॥
क्षारमुष्णाम्बुनाऽवाप्या विबन्धे मूत्र वर्चसे ।
पिबेद्व्रणविशुद्ध्यर्थं वरा क्वाथं सगुग्गुलुम् ॥ ४०३ ॥
आहारमुद्दिशेच्चापि स्वेदनं वेदनासु च ।
जीर्णशाल्यन्नमुद्गादि पथ्यं सिक्ताज्यसैन्धवैः ॥ ४०४ ॥
गुदेष्वर्शःसु सर्वेषु तद्देशे पूर्वजन्मनि ।
जलौकाभिर्हरेच्चासृक् पुनर्जन्मनिवृत्तये ॥ ४०५ ॥

तत्र वातानुलोम्यमन्नरुचिरग्निदीप्तिर्लाघवं बलवर्णोत्पत्तिर्मन-स्तुष्टिरिति सम्यग्दग्धलिङ्गानि । अतिदग्धे तु गुदावदरणं दाहो ज्वरः पिपासा शोणितातिप्रवृत्तिस्तन्निमित्ताश्चोपद्रवा भवन्ति । ग्राम्याब्जणता कण्डुरनिलवैगुण्यमिन्द्रियाणामप्रसादो विकारस्य चाशान्तिर्हीनदग्धे तु लक्षणमिति ।

स्वरसे तु कपित्थाम्लदाड़िमामलकोद्भवे ।
हिमस्थे सर्पिषः प्रस्थं पचेत् चारार्त्तिदाहनुत् ॥ ४०६ ॥

इति कपित्थाद्यं घृतम् ।

रूढ़ सर्वव्रणं वैद्यः चारं दत्वानुवासयेत् ।
पिप्पल्याद्येन तैलेन सेवेद्दीपनभेषजम् ॥ ४०७ ॥

—०—

मेढ्रादिष्वपि जायन्ते यथा स्वन्नाभिजानि तु ।
गण्डूपदास्यरूपाणि पिच्छलानि मृदुनि च ॥ ४०८ ॥
नाभिकर्णाचिनासासु जातिष्वर्शःसुयोजयेत् ।
लेपं तैलञ्च पूर्वोक्तं घ्राणजे शस्त्रकर्म त्र ॥ ४०९ ॥

—०—

प्रतिसारणेन च सैन्धवनिशायुगागारधूमकासीसलवण प्रलेपानि नासाभिन्नगुदजानि शमयन्तीति ।

—०—

प्रतिसारणमुद्दिष्टं चूर्णं कल्कश तत्त्रिधा ।
कोलास्थिमात्र पिंडेन धर्मेण नवसप्तपट् ॥ ४१० ॥
श्रेष्टमध्यमहीनेषु कवलोक्तं च लक्षणम् ।

इति प्रतिसारणमात्रा ।

नासाजार्शःसु कुर्वीत चारेण प्रतिसारणम् ।
नासास्रोतः प्रमाणेन यन्त्रं सौवर्णराजतम् ॥ ४११ ॥
षडंगुलं कार्यं कोपेतमर्धांगुलमथायतम् ।
उत्तानशायिनः चारं दद्यात् पिचु शलाकया ॥ ४१२ ॥

व्यानो गृहीत्वा श्लेष्माणं करोत्यर्शस्त्वचो वहिः।
कीलोपमं स्थिरखरं चर्मकीलन्तु तद्विदुः॥ ४१३॥
वातेन तोदपारुष्यं पित्तादसित रक्तता।
श्लेष्मणा स्निग्धता तस्य ग्रन्थितत्वं सवर्णता॥ ४१४॥
चर्मकीलं दहेच्छित्वा क्षारेण दहनेन वा॥ ४१५॥

—०—

पञ्चात्मा मारुतः पित्तं कफो गुदवलित्रये।
सर्व एव प्रकुप्यन्ति गुदजानां समुद्भवे॥ ४१६॥
तस्मादर्शांसि सर्वाणि बहुव्याधि कराणि च।
सर्वदेहोपतापीनि प्रायः कृच्छ्रतमानि च॥ ४१७॥
वाह्यायान्तु वलौ जातान्येकदोषोल्वणानि च।
अर्शांसि सुखसाध्यानि न चिरोत्पत्तितानि च॥ ४१८॥
द्वन्द्वजानि द्वितीयायां वलौ यान्याश्रितानि च।
कृच्छ्रसाध्यानि तान्याहुः परिसम्वत्सराणि च॥ ४१९॥
सहजानि त्रिदोषाणि यानि चाभ्यन्तराम्वलिम्।
जायन्तेऽर्शांसि संश्रित्य तान्यसाध्यानि निर्दिशेत्॥ ४२०॥
शेषत्वादायुषस्तानि चतुष्पाद समन्विते।
याप्यन्ते दीप्तिकायाग्नेः प्रत्याख्येयान्यतोऽन्यथा॥ ४२१॥
हस्ते पादे मुखे नाभ्यां गुदे वृषणयोस्तथा।
शोथो हृत्पार्श्वशूलञ्च यस्या साध्योऽर्शसो हि सः॥ ४२२॥
हृत्पार्श्वशूलं संमोहः छर्दिरङ्गस्य रुग्ज्वरः।
तृष्णा गुदस्य पाकश्च निहन्युर्गुदजातुरम्॥ ४२३॥
तृष्णारोचकशूलार्तं मतिप्रसुतशोणितम्।
शोथातीसारसंयुक्तं मर्शांसि क्षपयन्ति हि॥ ४२४॥

वेगावरोधः स्त्री पृष्ठयान मुत्कटकासनम् ।
यथास्वं दोषलक्षान्न मर्शसां परिवर्जयेत् ॥ १२५ ॥

## इति वङ्गसेनेऽर्शो निदानचिकित्साधिकारः समाप्तः ॥ ४ ॥

—०—

## अथाऽजीर्णनिदानमाह ॥

मन्दस्तीक्ष्णोऽथ विषमः समश्चेति चतुर्विधः ।
कफपित्तानिलाधिक्यात् तत्साम्याज्जाठरोऽनलः ॥ १ ॥
विषमो वातजान् रोगां स्तीक्ष्णः पित्तनिमित्तजान् ।
करोत्यग्निस्तथा मन्दो विकारान् कफसम्भवान् ॥ २ ॥
समा समाग्नेरशिता मात्रा सम्यग्विपच्यते ।
स्वल्पापि नैव मन्दाग्ने र्विषमाग्नेस्तु देहिनः ॥ ३ ॥
कदाचित् पच्यते सम्यक् कदाचि न्न विपच्यते ।
मात्रातिमात्राप्यऽशिता सुखं यस्य विपच्यते ॥ ४ ॥
तीक्ष्णाग्निरिति तं विद्यात् समाग्निः श्रेष्ठ उच्यते ॥ ५ ॥
समाग्निं रक्षयेन्नित्य मन्नपानै र्धनैर्हितैः ।
मन्दाग्निं कटुतिक्तैश्च वायाय वमनैर्हितैः ॥ ६ ॥
तीक्ष्णाग्निं मधुरस्निग्धैः विरेकगुरुशीतलैः ।
स्नेहाम्ललवणाद्यैश्च विषमाग्नि मुपाचरेत् ॥ ७ ॥

—०—

### अथ चिकित्सामाह ।

प्रम मण्डं पिबेदुष्णं हिंगुसौवर्चलान्वितम् ।
विषमोऽपि समस्तेन मन्दोदीप्येत पावकः ॥ ८ ॥

सुतण्डुलानां प्रसृतद्वयञ्च तदर्धमुद्गः कटुकत्रयञ्च।
कुस्तुम्बुरुसैन्धवहिंगुतैलै मेभिश्च सर्वैः क्रियते च मण्डः॥९॥
क्षुद्बोधनो वस्ति विशोधनश्च प्राणप्रदः शोणितवर्धनश्च।
ज्वरापहारी कफपित्तहन्ता वायुञ्जयेदष्टगुणो हि मण्डः॥१०॥
हरीतकी भक्ष्यमाणा नागरेण गुडेन वा।
सैन्धवोपहितां वापि सातत्ये नाग्निदीपनी॥११॥
सेन्धूत्थ हिंगु त्रिफला यवानी व्योषैर्गुडांशैर्गुडकान् प्रकुर्यात्।
ऐर्भक्षितैस्तृप्ति मवाप्नुवन्ना भुञ्जीतः मन्दाग्निरपि प्रभूतम्॥१२॥
गुडेन शुण्ठीमथचोपकुल्यां पथ्यां तृतीयामथ दाडिमं वा।
आमे त्वजीर्णेपु गुदामयेपु वर्चो विबंधेपु च नित्यमद्यात्॥१३॥
विडम भल्लातक चित्रकामृता सनागरा तुल्यगुडेन सर्पिषा।
लिहन्ति ये मन्दहुताशना नरा भवन्ति ते वाडवतुल्यवह्नय॥१४॥
अभयानिम्ब संयुक्ता भक्षितानलवृद्धिकृत्।
दद्रुविस्फोटकांश्चैव नाशयत्याशुदेहिनाम्॥१५॥
दहनाजमोद सैन्धव नागरमरिचाम्लतक्रेण।
सप्ताहादग्निकरं पाण्ड्वर्शो विनाशनं परम्॥१६॥
हरीतकी धान्यतुषोदसिद्धा सपिप्पली सैन्धवहिंगु युक्ता।
सोद्गारधूमं भृशमप्यजीर्णं विजित्य सद्यो जनयेत् क्षुधां च॥१७॥
शुण्ठीचूर्णं समायुक्तं यवक्षारं समालिहेत्।
सर्पिषा प्रातरुत्थाय ततो वह्निप्रदीपनम्॥१८॥
*विजया पिप्पली शुण्ठी त्रिसमं परिकीर्तितम्।*
अग्निसन्दीपन नृणां त्रुटदोषमयनाशनम्॥१९॥
नागरान्तु सदा पथ्यं जीर्णाऽजीर्णं विशंकिनाम्॥२०॥
किञ्चिदामेन मन्दाग्नि रभयागुडनागरम्।
अथ्वातक्रेण भुञ्जीत युक्तमन्नं षडूषणैः॥२१॥

बिल्वाभया गडूचीनां कषायेण षडूषणम्।
पिबेच्छ्रेष्ठमपि मन्दाग्नौ त्वक्पत्रसुरभीकृतम् ॥ २२ ॥
कणामरीचशुण्ठीभि ग्रन्थिकानल चव्यकैः।
भिषग्भिरार्त्तौ राव्यात्तं चतुष्पञ्च षडूषणम् ॥ २३ ॥
उपवासादि मन्दाग्नि यवागूभिः पिबेद्घृतम्।
रौचः मन्दे पिबेत् सर्पिः तैलम्वा दीपनैर्युतम् ॥ २४ ॥
चूर्णारिष्टासवैर्मन्द मभिन्ने ह्यादुपाचरेत्।
भिन्ने गुदोपलेपास्तु मले तैलसुरासवाः ॥ २५ ॥
उदावर्त्ते तु मन्दाग्नौ निरूहाः सानुवासनाः।
व्याधियुक्तस्य मन्दाग्नौ सर्पिरेवाग्निदीपनम् ॥ २६ ॥

इत्यग्निमान्द्यम्।

अजीर्णानाह।

आमं विदग्धं विष्टब्धं कफपित्तानिलैस्त्रिभिः।
अजीर्णं केचिदिच्छन्ति चतुर्थं रसशेषतः ॥ २७ ॥
अजीर्णं पञ्चमं केचिन्निर्दोषं दिनपाकि च।
वदन्ति षष्ठं चाजीर्णं प्राकृतं प्रतिवासरम् ॥ २८ ॥
कफे क्षीणे यदा पित्तं स्वस्थाने मारुतानुगम्।
तीव्रं प्रवर्द्धयेदग्निं तदात्तं भस्मकं वदेत् ॥ २९ ॥
तृड्दाहश्वासमूर्च्छादीन् कृत्वैवात्यग्निसम्भवान्।
पक्का रसादिकान् धातू नाशयेदाशु जीवितम् ॥ ३० ॥
अत्यम्बुपानाद्विषमाशनाच्च सन्धारणात् स्वप्नविपर्ययाच्च।
कालेऽपि सात्म्यं लघु चापि भुक्तं मन्नं न पाकं भजते नरस्य ॥
ईर्ष्याभयक्रोधपरिक्षितेन लुब्धेन रुग्दैन्यनिपीड़ितेन।
प्रद्वेषयुक्ते नच सेव्यमान मन्नं न सम्यक् परिपाकमेति ॥ ३२
ग्लानिर्गौरवमाटोप भ्रमो मारुतमूढ़ता।

विबन्धोऽति प्रवृत्तिर्वा सामान्याज्जीर्ण लक्षणम् ॥ ३३ ॥
तत्रामे गुरुतोत्क्लेद: शोथो गण्डाक्षि कूटग: ।
उद्गारश्च यथाभुक्तमविदग्ध: प्रवर्त्तते ॥ ३४ ॥

—०—

विदग्धे भ्रमतृण्मूर्च्छा पित्ताच्च विविधा रुज: ।
उद्गारश्च सधूमाम्ल: स्वेदोदाहश्च जायते ॥ ३५ ॥.

—०—

विष्टब्धे शूलमाधानं विविधा वातवेदना: ।
मलवाताऽप्रवृत्तिश्च स्तंभो मोहोऽङ्गसादनम् ॥ ३६ ॥

—०—

रसशेषेऽन्नविद्वेषो हृदयाशुद्धिगौरवे ।
अनात्मवन्त: पशुवद्भुञ्जते चेऽप्रमाणत: ॥
रोगानीकस्य ते मूलमजीर्णं प्राप्नुवन्ति हि ॥ ३७ ॥
प्रायेणाहार वैषम्यादजीर्णं जायते नृणाम् ।
तन्मूलो रोगसङ्घात स्तद्विनाशाद्विनश्यति ॥ ३८ ॥

—०—

मूर्च्छा प्रलापो वमथु: प्रसेक: सदनं भ्रम: ।
उपद्रवा भवन्त्येते मरणञ्चाप्यजीर्णत: ॥ ३८ ॥

—०—

वचा लवणतोयेन वान्तिरामे प्रशस्यते ।
धान्य नागरसिद्धं वा तोयं दद्याद्विचक्षण: ॥ ४० ॥
आमाजीर्ण प्रशमनं शूलघ्नं वस्तिशोधनम् ॥ ४१ ॥
अन्नं विदग्धं हि नरस्य शीघ्रं शीताम्बुना वै परिपाकमेति ।
तदास्य शैत्येन निहन्ति पितमाक्लेदिभावाच्च नयत्यधस्तात् ॥४२॥
विष्टब्धे स्वेदनं कार्थं पेयं वा लवणोदकम् ।

रसशेषे दिवास्वप्नं लङ्घनं वातवर्ज्जनम् ॥ ४३ ॥
आनिम्य जठरं प्राज्ञो हिङ्गु,त्र्यूषणसैन्धवैः ।
दिवास्वप्नं प्रकुर्वीत सर्वाजीर्णप्रणाशनम् ॥ ४४ ॥
व्यायामप्रमदाध्ववाहनरतान् क्लान्तानतिसारिणः
शूलश्वासवतस्तृषापरिगतान् हिक्कामरुत्पीडितान् ।
चीणान् चीणकफान्शिशून्मदहतान् वृद्धान्रसाजीर्णिनो ।
रात्रौ जागरितान्नरान्निरशनान् कामन्दिवास्वापयेत् ॥ ४५ ॥
पथ्यापिप्पलीसंयुक्तं चूर्णं सौवर्चलं पिबेत् ।
मस्तुनोष्णोदकेनाथ मत्वा दोषगतिं भिषक् ॥ ४६ ॥
चतुर्विधमजीर्णञ्च मन्दानलमथारुचिम् ।
आध्मानं वातगुल्मञ्च शूलञ्चाशु नियच्छति ॥ ४७ ॥
भवेदजीर्णं प्रतियस्य शङ्का स्निग्धस्य जन्तोर्बलिनोऽन्नकाले ।
पूर्वं सशुण्ठीमभयामशङ्को भुञ्जीतसंप्राश्य हितं हितार्थी ॥ ४८ ॥
विदह्यते यस्य तु भुक्तमात्रं दह्येत हृत्कोष्टगलञ्च यस्य ।
द्राचासितामाचिकसंप्रयुक्तां लीढ़ाऽभयां वै स सुखं लभेत ॥ ४९ ॥
चित्रकचविकानागर मागधिकाग्रन्थिकैर्यवागूः स्यात् ।
गुल्मानिलशूलहरी रुचिप्रदा वह्नि जननी च ॥५०॥
वत्सकं सप्तपर्णञ्च करञ्जञ्च दुरालभाम् ।
पाठामारग्वधं मूर्वां षड्ग्रन्थां मदनं टहेत् ॥ ५१ ॥
गोमूत्रे णोपयुक्तस्तु चारोऽयं वह्निदीपनः ।
शूले निरत्नकोष्टेऽद्भिः कोष्णाभिश्चूर्णितं पिबेत् ॥ ५२ ॥
हिङ्गु,प्रतिविषाव्योष सौवर्चल वचाभया ।
तीव्रात्तिरपि नाऽजीर्णी पिबेच्छूलघ्नमौषधम् ।
दोषच्छन्नोऽनलो नालं पक्तुं दोषौषधाशनम् ॥ ५३ ॥
प्रातराशित्वजीर्णे तु सायमाशो न दुष्यति ।

अजीर्णे सायमाशे तु प्रातराशे विषी भवेत् ॥ ५४ ॥

त्रिकटुकमजमोदा सैन्धवं जीरके द्वे
समधरणधृतानामष्टमो हिङ्गुभागः।
प्रथमकवलभोजी सर्पिषा चूर्णमेतत्
जनयति जठराग्निं वातरोगांश्च हन्ति ॥५५॥

इति हिंग्वष्टकम्।

हिङ्गुभागो भवेदेको वचा च द्विगुणा भवेत्।
पिप्पलीत्रिगुणा देया शृङ्गवेरं चतुर्गुणम् ॥ ५६ ॥
यवानिकापञ्चगुणा षड्गुणा च हरीतकी।
चित्रकं सप्तगुणितं कुष्टं चाष्टगुणं भवेत् ॥ ५७ ॥
एतद्वातहरं चूर्णं पीतमात्रं प्रशस्यते।
पिवेद्दध्ना मस्तुनावा सुरया कोष्णवारिणा ॥ ५८ ॥
सोदावर्त्तमजीर्णञ्च प्लीहानमुदरं तथा।
अङ्गानि यस्य शीर्य्यन्ति विषं वा येन भक्षितम् ॥ ५९ ॥
अर्शो हरो दीपनश्च श्लेष्मघ्नो गुल्मनाशनः।
चूर्णो ह्यग्निमुखो नाम्ना न क्वचित् प्रतिहन्यते ॥ ६० ॥

इत्यग्निमुखचूर्णम्।

चित्रकत्रिवृता ग्रन्थिक पिप्पलीमौरचैलाजमोदाभिः।
धान्यशठीयवपुष्कर क्षाराजाजितिन्तिडीकैश्च ॥ ६१ ॥
चव्ययवानीदाड़िम मृद्वीकैलाम्लवेतसैश्च समैः।
अग्निमुखोऽयं चूर्णः काञ्जिकेन मस्तुना मधुना ॥ ६२ ॥
पीतोऽन्यतमेन नृभिः गुल्मारुचिवह्निसादशूलानि।
दुर्नामप्लीहोदर कफवातगदान्विनाशयति ॥ ६२ ॥

इति द्वितीयमग्निमुखचूर्णम्।

पिप्पली पिप्पलीमूलं धान्यकं कृष्णजीरकम् ।
सैन्धवञ्च विड़ञ्चैव पत्रं तालीशकेशरम् ॥ ६४ ॥
एषां द्विपलिकान् भागान् पञ्च सौवर्चलस्य च ।
मरिचाजाजीशुण्ठीनामेकैकस्य पलं पलम् ॥ ६५ ॥
त्वगेले चार्द्धभागे च सामुद्रात् कुड़वद्वयम् ।
दाड़िमात् कुड़वञ्चैकं द्वेपले चाम्लवेतसात् ॥ ६६ ॥
एतच्चूर्णीकृतं श्लक्ष्णं गन्धाढ्यममृतोपमम् ।
लवणं भास्करं नाम्ना भास्करेण विनिर्मितम् ॥ ६७ ॥
जगतोऽस्य हितार्थाय वातश्लेष्मामयापहम् ।
तक्रमस्तुसुरायुक्तं मल्लकाञ्जिकयोजितम् ॥ ६८ ॥
जाङ्गलानूपमांसेषु रसेषु विविधेषु च ।
मन्दाग्निनाश्वादयतां शक्तो भवति पावकः ॥ ६९ ॥
अर्शांसिग्रहणीदोषं शोथकुष्ठभगन्दरान् ।
हृद्रोगमामदोषांश्च विविधानुदरे स्थितान् ॥ ७० ॥
प्लीहानं वातरक्तञ्च श्वासकासोदरक्रिमीन् ।
शूलञ्च नाशयत्येतद्दृष्टं नृपसिवापदः ॥ ७१ ॥

इति भास्करलवणम् ।

सैन्धव समूलमगधा चव्यानल नागरहरीतक्यः ।
क्रमवृद्धमग्निवर्द्धनं करोति वड़वानलं चूर्णम् ॥ ७२ ॥

इति वड़वानलचूर्णम् ।

हिंगुसैन्धव कृष्णानां कृष्णामूलककोलयोः ।
यवान्याश्च हरीतक्या दाड़िमाम्लिकयोस्तथा ॥ ७३ ॥
वह्निनागरकोष्ठाणां भागाः सम्वर्धिताः क्रमात् ।
हिंगु द्वादशकं नाम चूर्णं ब्रह्मविनिर्मितम् ॥ ७४ ॥

अरुचिं पञ्चगुल्मांश्च हृद्रोगं संनियच्छति ।
अष्ठीलाध्मानशूलानां हन्त्यर्शांसि नाशयेत् ॥ ७५ ॥
इति हिंग्वाद्यकं चूर्णम् ।

द्वौ क्षारौ चित्रकं पाठा करञ्ज लवणानि च
सूक्ष्मैलापत्रकं भार्ङ्गी कृमिघ्नं हिंगु पुष्करम् ॥ ७६ ॥
शठीदार्वी त्रिवृन्मुस्तं वचा चेन्द्रयवास्तथा ।
धात्री जीरकवृक्षाम्लं श्रेयसीचोपकुञ्चिका ॥ ७७ ॥
अम्लवेतसमम्लीका दाड़िमं सकटुत्रिकम् ।
भल्लातकाजमोदा च यवानी सुरदारु च ॥ ७८ ॥
अभयातिविषा श्यामा हपुषारग्वधं समम् ।
तिलमुष्ककशिग्रूणां कोकिलाक्षपलाशयोः ॥ ७९ ॥
क्षाराणि लोहकिट्टञ्च तप्तं गोमूत्रसेचितम् ।
सूक्ष्मचूर्णानि कृत्वा तु सम भागानि कारयेत् ॥ ८० ॥
मातुलुङ्गरसेनैव भावयेद्दिवसत्रयम् ।
दिनत्रयञ्च शुक्तेन आर्द्रकस्वरसेन च ॥ ८१ ॥
अत्यग्निकारकं चूर्णं प्रदीप्ताग्निसमप्रभम् ।
उपयुक्तं विधानेन नाशयत्यचिरादिदम् ॥ ८२ ॥
अजीर्णक मथो गुल्मं प्लीहानं जठराणि तु ।
उदराण्यन्त्रवृद्धिञ्च अष्ठीलां वातशोणितम् ॥ ८३ ॥
प्रणुदत्युल्वणान् दोषान् नष्टमग्निंच दीपयेत् ।
समस्तव्यञ्जनोपेतं भक्तं दत्वा च भाजने ।
दापयेदस्य चूर्णस्य विडालपदमात्रकम् ॥ ८४ ॥
गोदोहमात्रात्तत्सर्वं द्रवी भवति सोष्णकम् ॥ ८५ ॥
इति वृहदग्निमुखं चूर्णम् ।

पथ्या नागर कृष्णा करञ्जविल्वादिभिः सिता तुल्यैः ।

वड़वामुख इव जरयति बहुगुर्वपि भोजनम् ॥ ८५ ॥

इति समस्तं वड़वामुखं चूर्णम्।

हिंग्वाम्लवेतसकटुत्रिकचित्रकेभ्यः
सक्षार पौष्करफलत्रिकदाडिमेभ्यः।
कार्यः पृथग्गुडपलान्यवलुप्यचूर्णः
ज्वालामुखोऽयमनलस्य करोति दीप्तिम् ॥ ८६ ॥

इति ज्वालामुखं चूर्णम्।

पिप्पल्यतिविषा हिंगु नागरेन्द्रयवाः वचा।
पाठाजमोदकटुका ह्यपसौवर्चलाभयाः ॥ ८७ ॥
द्वपदा दशकं चूर्णमजीर्णनाह गुल्मनुत्।
भगन्दरश्वासकास मूत्रकृच्छ्रार्शसां हितम् ॥ ८८ ॥

इति द्वपदा दशकं चूर्णम्।

एलालवङ्गागपुष्पाणां माषोत्तर विवर्द्धिता।
मरिचं पिप्पली शुण्ठी चतुर्थ्यश्च पडुत्तराः ॥ ८९ ॥
द्रव्याण्येतानि यावन्ती तावन्ती सितशर्करा।
चूर्णमेतत्प्रशस्यमग्निसन्दीपनं परम् ॥ ९० ॥

इति समशर्करं चूर्णम्।

मरिचाग्निकणा पथ्या दाड़िमश्च महौषधम्।
हिंगु सौवर्चलोपेतं चूर्णमग्निकरं परम् ॥ ९१ ॥

इति मरिचाद्यं चूर्णम्।

नागरं कौटजं बीजं पिप्पली बृहती द्वयम्।
चित्रकं शारिवा पाठा क्षारं लवणपञ्चकम् ॥ ९५ ॥
चूर्णं पिबेत् सुरा मण्ड दधिकोष्णांबु काञ्जिकैः।
पिबेदग्निविवृद्ध्यर्थं कोष्ठवातहरं परम् ॥ ९९ ॥

इति नागराद्यं चूर्णम्।

पलिकैः पञ्चकोलैस्तु घृतं मस्तु चतुर्गुणम्।
सक्षारसिद्धमन्नाग्निं कफगुल्मञ्च नाशयेत् ॥ ८४ ॥

इति मस्तुषट्पलं घृतम्।

शृङ्गवेररसप्रस्थं घृतप्रस्थञ्च तत्समम्।
चुक्रप्रस्थे न संयोज्यं तथा काञ्जिकमस्तुनोः ॥ ८५ ॥
पिप्पली मरिचं हिंगु साजमोदं सजीरकम्।
हपुषाऽजाजि कृष्णा च सैन्धवं विड़मौद्भिदम् ॥ ८६ ॥
सौवर्चलं यवक्षारं चित्रको हस्तिपिप्पली।
चविका पिप्पलीमूलं यवानी धान्यनागरम् ॥ ८७ ॥
एतैः कर्षसमैर्भागै विपचेन्मृदुनाग्निना।
कफजान् हन्ति रोगांश्च वातजान् क्रिमिसम्भवान् ॥ ८८ ॥
अजीर्णं जरयत्याशु नराणां वलवर्धनम्।
गुल्मप्लीहोदरं शूलं ज्वरं हिक्कां प्रमीलिकाम् ॥ ८९ ॥
महाषट्पलमित्येतज्ज्वलनं दाववह्निवत्।
क्षिप्रमेव तथा रोगा न्नाशयत्यग्निर्यथा ॥ १०० ॥

इति महाषट्पलं घृतम्।

मरिचं पिप्पलीमूलं नागरं पिप्पली तथा।
भल्लातकं यवानीञ्च विड़ङ्गं हस्तिपिप्पली ॥ १०१ ॥
हिंगु सौवर्चलञ्चैव विड़सैन्धव चव्यकम्।
सामुद्रञ्च यवक्षारं चित्रको वचया सह ॥ १०२ ॥
एतैरर्धपलैर्भागैर्घृतप्रस्थं विपाचयेत्।
दशमूलरसे सिद्धं पयसा द्विगुणेन च ॥ १०३ ॥
मन्दाग्नीनां हितं सिद्धं ग्रहणीदोषनाशनम्।
विष्टम्भमामदौर्बल्यं प्लीहानमपकर्षति ॥ १०४ ॥
कासं श्वासं क्षयञ्चापि दुर्नाम सभगन्दरम्।

कफजान् हन्ति रोगांश्च वातजान् क्रिमिसम्भवान् ॥ १०५॥
तान् सर्वान्नाशयत्याशु शुष्कं दावानलो यथा ॥ १०६ ॥
इति मरिचाद्यं घृतम्।

धान्यजीरकसंसिद्धं घृतमग्निविवर्धनम्।
रोचनं दोषशमनं छर्दिदाह विनाशनम् ॥ १०७॥
इति धान्यजीरकघृतम्।

धान्यकं निस्तुषं कृत्वा जले चाष्टगुणे पचेत्।
तेन पादावशेषेण तत्कल्के विपचेद् घृतम् ॥ १०८ ॥
वातरोगेषु सर्वेषु पैत्तिकेषु च शस्यते।
कफजेषु च रोगेषु सर्पिरेतद्यथामृतम् ॥ १०९ ॥
इति धान्यघृतम्।

द्वे जीरके चित्रकं चव्यं यवानी नागरं तथा।
पलिकानि च तत्सर्वं पञ्चैव लवणानि च ॥ ११० ॥
आरनालाढ़कं दत्वा घृतप्रस्थं विपाचयेत्।
एतदग्निविवृद्ध्यर्थमर्शसां नाशनं परम् ॥ १११ ॥
इति जीरकघृतम्।

धान्यकस्य तु शुद्धस्य चतुःषष्टिपलानि च।
जलद्रोणे विपक्तव्यं यावत्पादावशेषितम् ॥ ११२ ॥
घृतप्रस्थं पचेत्तेन शनैर्मृद्वग्निना भिषक्।
जीरकस्य पलान्यष्टौ कल्कौ कृत्यनिधापयेत् ॥ ११३ ॥
अग्निमन्दीपनं हृद्यं पिबेच्छ्लेष्म निबर्हणम्।
आमशूलं गुदे शूलं शूलं वङ्क्षणयोनिजम् ॥ ११४ ॥
आमवातमुदावर्त्तं मर्शरोगांश्च नाशयेत्।
इति धान्यकघृतम्।

पिप्पली पिप्पलीमूलं चित्रको हस्तिपिप्पली ।
हिंगु चव्याजमोदा च पञ्चैव लवणानि च ॥ ११५ ॥
द्वौ चारौ हपुषा चैव दद्यादर्धपलोन्मितान् ।
दधिकाञ्जिकशुक्तानि घृतमात्रा समानि च ॥ ११६ ॥
आर्द्रकस्य रसप्रस्थे घृतप्रस्थं विपाचयेत् ।
एतदग्निमुखं नाम मन्दाग्निनां प्रशस्यते ॥ ११७ ॥
अर्शसां नाशनं श्रेष्ठं तथा गुल्मोदरापहम् ।
ग्रन्थ्यर्बुदापचीकास कफमेदो निलानपि ॥ ११८ ॥
नाशयेद् ग्रहणीदोषं श्वयथुं सभगन्दरम् ।
ये च वस्तिगता रोगा ये च कुक्षि समाश्रिताः ।
सर्वांस्तान्नाशयत्याशु सूर्यस्तम इवोदितः ॥ ११९ ॥

इति अग्निघृतम् ।

यन्मस्त्वादि शुचौ भाण्डे सक्षौद्र गुड़काञ्जिकम् ।
धान्यराशौ त्रिरावस्थं शुक्तं चुक्रं तदुच्यते ॥ १२० ॥

इत्यल्पचुक्रम् ।

गुड़क्षौद्रारणालानि समस्तुनि यथोत्तरम् ।
शंसन्ति द्विगुणान् भागान् सम्यक् चुक्रस्य सिद्धये ॥ १२१ ॥

इति चुक्रसन्धानविधानम् ।

प्रस्थं तंडुलतोयत स्तुपजलात्प्रस्थत्रयं चाम्लतः ।
प्रस्थार्धं दधितोऽम्लमूलकफलान्यष्टौ गुड़ान्मानिके ॥
मान्यौ शोधितशृङ्गवेर सकलात् द्वे सिन्धजाज्योः पले ।
द्वे कृष्णोपणयोर्निशापलयुगं निचिप्यभाण्डे दृढ़े ॥ १२२ ॥
स्निग्धे धान्ययवादि राशिनिहितं चीन्वासरान् स्थापयेद् ।
ग्रीष्मे तोयधरात्यये च चतुरो वर्षासु पुष्पागमे ॥

पट् शीतेऽष्टदिनान्यतः परिमितं विस्राव्यसंस्थापयेत्।
चातुर्जातपलेन संहितमिदं शुक्राच्च चुक्राच्च यत्॥ १२३॥
हन्याद्वातकफामदोषजनिता न्नानाविधानामयान्।
दुर्नामानि च शूलगुल्मजठरान् हत्वाऽनलं दीपयेत्॥ १२४॥
इति वृहच्चुक्रसन्धानविधानम्।

वह्नेर्द्विपञ्चमूलस्य क्वाथे पलशतद्वये।
अमृताया रसस्यैके पूतेऽस्मिन्नभयाढ़के॥ १२५॥
पचेद् गुड़तुलां ताव द्यावदाऽऽपाकलक्षणम्।
अन्येद्युस्तत्र मधुनः सुशीते कुड़वद्वयम्॥ १२६॥
प्रक्षिपेत्त्रिसुगन्धस्य त्रिकटोश्च पलं पलम्।
प्रत्येकं स्याद्यवक्षाराच्छुक्तिस्तस्मिन् रसायने॥ २२७॥
उत्तमं कथितं पुंसामश्विभ्यामग्निवृद्धये।
जीर्य्यत्यपि हि काष्टानि कासश्वासं क्षयं क्रमीन्॥ १२८॥
गुल्मोदरार्शः कुष्टानि सान्त्रवृद्धिं निहन्ति च।
योगशतैरप्यजितां स्त्यहाज्जयति पीनसान्॥ १२८॥

—०—

चित्रकहरीतक्यमृतेत्यत्र चित्रकादीनां त्रयाणामभः प्रत्ये पञ्चाशत्पलं दत्वा विस्राव्य सार्द्धद्वादशवासराः स्थापयितव्यम्।
इति चित्रकगुड़ः।

द्वे पाठे दशमूलार्क कट्फलातिविषाविहृत्।
भागैर्दशपलान् दत्वा जलद्रोणे विपाचयेत्॥ १३०॥
पादशेषे गुड़तुलां दत्वा पक्के गुड़े ततः।
चूर्णितां पञ्चपलिकां चव्यव्योषहरीतकीम्॥ १३१॥
त्रिवर्गं सयवक्षारं द्विगुणं तत्र दापयेत्।
दर्व्याः प्रलेपनं वापि ततस्तमवतारयेत्॥ १३२॥

हिंग्वम्लवेतसं चव्यं विड़तस्तु पलं तथा।
चित्रा चैकीकृतं सर्वं स्थापयेद्भाजने शुभे ॥ १३३ ॥
ततः चारगुड़ं खादेदजीर्णारुचिनाशनम्।
प्लीहार्शः शोथपांडुत्व मेहकुष्टगरापहम् ॥ १३४ ॥
इति चारगुड़ः।

द्वे पञ्चमूले त्रिफला बिल्वमूलं शतावरी।
दन्तीचित्रकमास्फोता रास्ना पाठा सुधा शठी ॥ १३५ ॥
पथ्या दशपलान् भागान् दग्ध्वाम्लसिसमाहरेत्।
त्रिसप्तकृत्वस्तद्भस्म जलद्रोणे च गालयेत् ॥ १३६ ॥
तद्रोणं साधयेदग्नौ चतुर्भागावशेषितम्।
ततो गुड़तुलां दत्वा साधयेन्मृदुनाग्निना ॥ १३७ ॥
सिद्धं गुड़न्तु विज्ञाय चूर्णानीमानि दापयेत्।
द्वयिकालीं द्विकाकोल्यौ यवक्षारं समावपेत् ॥ १३८ ॥
एतत्पञ्चपलान् भागान् पृथक्पञ्चपलानि च।
हरीतकीं त्रिकटुकं सर्जिकां चित्रकं वचाम् ॥ १३९ ॥
हिंग्वाम्लवेतसाभ्याञ्च द्वे पले तत्र दापयेत्।
अक्षप्रमाणां गुटिकां कृत्वा खादेद्यथा बलम् ॥ १४० ॥
अजीर्णं जरयत्येष जीर्णं सन्दीपयत्यपि।
भुक्तं भुक्तञ्च जीर्य्यंत पाण्डुत्वमपकर्षति ॥ १४१ ॥
प्लीहार्शांसि क्षयथुञ्च श्लेष्मकासमरोचकम्।
मन्दाग्निञ्च विषाग्निञ्च कफं काण्ठोरसस्तथा ॥ १४२ ॥
कुष्टानि च प्रमेहांश्च गुल्मं चाशु व्यपोहति।
ख्यातः चारगुड़ोह्येष रोगग्रस्ते प्रयोजयेत् ॥ १४३ ॥
इति चारगुड़ः।

इत्यजीर्णाग्निमान्द्यनिदानचिकित्साधिकारः।

# अथ निदानमाह ।

स्वल्पं यदा दोषविबद्धमामं लीनं न तेजःपथमावृणोति ।
भवत्यजीर्णेऽपि तदा बुभुक्षा सामन्दबुद्धिं विषवन्निहन्ति ॥१४४॥
प्रायेणाहारवैषम्यादजीर्णं जायते नृणाम् ।
तन्मूलो रोगसंघातस्तद्विनाशाद्विनश्यति ॥ १४५ ॥
अजीर्णमामं विष्टब्धं विदग्धञ्च यदीरितम् ।
विसूच्यलसकौ तस्माद्भवेच्चापि विलम्बिका ॥ १४६ ॥
सूचीभिरिव गात्राणि तुदन् सन्तिष्ठतेऽनिलः ।
यस्याजीर्णेन सा वैद्यैर्विसूचीति निगद्यते ॥ १४७ ॥
न तां परिमिताहारा लभन्ते विदितागमाः ।
मूढास्तामजितात्मानो लभन्तेऽशनलोलुपाः ॥ १४८ ॥
मूर्च्छातिसारौ वमथुः पिपासा शूलं भ्रमोद्वेष्टनजृम्भदाहाः ।
वैवर्ण्यकम्पौ हृदये रुजश्च भवन्ति तस्य शिरसश्च भेदः ॥ १४९ ॥
कुक्षिरानह्यतेऽत्यर्थं प्रताम्येत प्रकूजति ।
निरुद्धो मारुतश्चैव कुक्षावुपरि धावति ॥ १५० ॥
वायुः कम्पभ्रमानाह शूल्यादीन् प्रकरोति वा ।
पित्तं ज्वरातिसारौ च दाहादि खेदनानि च ॥ १५१ ॥
श्लेष्माङ्गगुरुताछर्दिं वाग्भङ्गष्ठीवनानि च ॥ १५२ ॥
वातवर्च्चो निरोधश्च यस्यात्यर्थं भवेदनु ।
तस्यालसकमाचष्टे तृष्णोद्गारौ च यस्य वै ॥ १५३ ॥
नाधो गच्छति यो नोर्द्ध्वमाहारो न विपच्यते ।
तेन सोऽलसको नाम्ना शीघ्रं देहविनाशकृत् ॥ १५४ ॥
दोषास्त्वलसके प्रोक्तास्त्वत्यतीसारवर्जिताः ।
कारकास्तीव्रशूलादेः स्रोतसः सविरोधकाः ॥ १५५ ॥

तिर्य्यमातास्ततस्त्वधाः स्तम्भवंत्स्तम्भयन्ति च।
सदण्डालसकस्त्याज्यः शीघ्रं देशविनाशकृत्॥ १५६॥

दुष्टञ्च भुक्तं कफमारुताभ्यां
प्रवर्त्तते नोर्ध्वमधश्च यस्य।
बिलंविकान्तां भृशदुश्चिकित्स्या-
माचक्षते शास्त्रविदः पुराणाः॥ १५७॥

यत्रस्थमामं विरुजे त्तमेव देशं विशेषेण विकारजातैः।
दोषेण येनावततं शरीरं तल्लक्षणैरामसमुद्भवैश्च॥ १५६॥
यः श्यावदन्तौष्टनखोऽल्पसंज्ञो वम्यर्दितोऽभ्यन्तरजातनेत्रः।
क्षामस्वरः सर्वविमुक्तसन्धिर्यायान्नरोऽसौ पुनरागमाय॥१५७॥
उद्गारशुद्धिरुत्साहो वेगोत्सर्गो यथोचितः।
लघुता क्षुत्पिपासा च जीर्णाहारस्य लक्षणम्॥ १५८॥
निद्रानाशोऽरतिः कम्पो मूत्राघातो विसंज्ञता।
अमी उपद्रवा घोरा विषूच्यां पञ्चदारुणाः॥ १५९॥
विसूच्यां सर्वरूपाणि सन्नियम्य चिकित्सकः।
वमनं कारयेत् क्षिप्रं मुष्णेन लवणाम्बुना॥ १६०॥
यावत्सन्तिष्टते दुष्टो नरस्याऽन्नरसो हृदि।
तावन्मर्म्माणि भिद्यन्ते विषं पीतवतो यथा॥ १६१॥
विषूच्यामतिवृद्धायां पार्ष्णयोर्दाहः प्रशस्यते।
तद्दिने लङ्घनं कार्यं विरक्तावदुपाचरेत्॥ १६२॥
जातिफलञ्च चुक्रञ्च मिष्टतैलेन पाचयेत्।
तेन मर्दनमात्रेण खल्लीशूलं निवारयेत्॥ १६३॥
कुष्टसैन्धवयोः कल्कं चुक्रतैलसमन्वितम्।
विषूच्यां मर्दनं कोष्णं खल्लीशूलनिवारणम्॥ १६४॥

चुक्राभावेऽत्र काञ्जिकन्देयमिति।

अर्कपत्ररसप्रस्थं प्रस्थं धत्तूरकस्य च ।
श्वेतसुहीरसप्रस्थं प्रस्थ शोभाञ्जनार्द्रकात् ॥ १६५ ॥
कुष्टसैन्धवयोः कल्कं पले द्वे द्वे प्रमाणतः ।
एकीकृत्य समस्तं तु द्विगुणं चाम्लकाञ्जिकम् ॥ १६६ ॥
तैलप्रस्थं समावाप्य पचेन्मृद्वग्निना शनैः ।
खल्लीं निवारयत्येत द्विपूचीरोगसम्भवाम् ॥ १६७ ॥
पक्षाघातामवातांश्च गृध्रसीं खञ्जपङ्गुताम् ।

इत्यर्करसादितैलम् ।

करञ्जनिम्बशिखरी गुडूच्यर्जुनवल्कलैः ।
पीतः कषायो वमनाद् घोरां हन्ति विषूचिकाम् ॥ १६८ ॥
हन्ति दन्त्यग्निकल्कस्तु पिप्पलीकल्कसयुतः ।
पीतः कोष्णेन तोयेन क्षिप्रं हन्याद्विषूचिकाम् ॥ १६९ ॥
व्योषं करंजस्य फलं हरिद्रे मूलं समावाप्य च मातुलुङ्ग्याः ।
छाया विशुष्का वटिका तु कार्या हन्याद्विषूचीं नयनाञ्जनेन ॥१७०॥

इत्यञ्जनम् ।

गुडपुष्पसारशिखरी तण्डुल गिरिकर्णिका हरिद्रे द्वे ।
अञ्जनगुटिका विलयति विषूचिका त्रिकटुक मनाया ॥ १७१ ॥

इति द्वितीयमञ्जनम् ।

त्वक्पत्ररास्नाऽगुरुशिग्रु कुष्टैरम्लप्रपिष्टैः सवचा शताह्वैः ।
उद्वर्त्तनं खल्लिविषूचिकाघ्नं तैलं विपक्वञ्च तदर्थ कारि ॥१७२॥
पिपासायामयोत्क्लेशे लवङ्गस्याम्बु शस्यते ।
जातीफलस्य वा शीतं शृतं भद्रघनस्य च ॥ १७३ ॥
सकृत्पाऽञ्जनमुदर मत्स्नपिष्टैः प्रलेपयेत् ।
दारुहैमवती कुष्टशताह्वा थिग्नसैन्धवैः ॥ १७४ ॥

तक्रेण युक्तं यवचूर्णमुष्णं सचारमार्त्तिं जठरस्य हन्यात्।
स्वेदो घटैर्वा बहुवाष्पपूर्णैं रूक्षैस्तथान्यैरपि पाणितापैः ॥१७५
विलंविकाऽलसकयो रवमेव क्रिया क्रमः ॥ १७६ ॥
उद्गारशुद्धिरुत्साहो वेगोत्सर्गो यथोचितः।
लघुता क्षुत्पिपासा च जीर्णाहारस्य लक्षणम् ॥ १७७ ॥
सुरसादिकरञ्जादि सहकाररसं तथा।
हिंगुसौवर्चलं चुक्रं मधुमद्यानि यानि च ॥ १७८ ॥
एतेषामूर्ध्वभागित्वात् सम्यग्जिर्णेऽपि देहिनाम्।
अजीर्णतामिवोद्गारो गन्धतो ह्युपलक्ष्यते ॥ १७९ ॥

## इति वङ्गसेनेऽग्निमान्द्याजीर्णविषूचिकाऽलसकविलम्बिकानिदानचिकित्साधिकारः समाप्तः ॥ ५ ॥

—०—

## अथ भस्मकनिदानमाह।

कफे क्षीणे यदा पित्तं स्वस्थाने मारुतानुगम्।
तीव्रं प्रवर्द्धयेदग्निं तदा तं भस्मकं वदेत् ॥ १ ॥
तृड्दाह श्वास मूर्च्छादीन् कृत्वैवात्यग्निसम्भवान्।
पक्वान्नमाशुधात्वादीन् संचयन्नाशयेत्तनुम्।
घणाद्युक्तं भवेद्भस्म सरोगो भस्मकः स्मृतः ॥ २ ॥
तं भस्मकं गुरुस्निग्ध सान्द्रमण्डहिमस्थिरैः।
अन्नपानैर्नयेच्छान्तिं पित्तघ्नैश्च विरेचनैः ॥ ३ ॥
अत्युद्धताग्निशान्त्यै माहिषदधिदुग्धतक्रसर्पींषि।

संसेवेत यवागूं समधुच्छिष्टां ससर्पिष्काम् ॥ ४ ॥
असक्तात्पित्तहरणं पायसं प्रतिभोजनम् ।
श्यामात्रिवृद्विपक्वं वा पयो दद्याद्विरेचनम् ॥ ५ ॥
यत्किञ्चिन्मधुरं सेव्यं श्लेष्मलं गुरुभोजनम् ।
सर्वं तदत्यग्निहितं भुक्त्वा प्रस्वपनं दिवा ॥ ६ ॥
कफे पूर्वं जिते पित्ते मारुते वाऽनलः समः ।
सम धातौ पचत्यन्नं पुष्ट्यायुर्बलवर्धनम् ॥ ७ ॥
मुहुर्मुहुरजीर्णेऽपि भोज्यान्यन्नान्युपहारयेत् ।
निरिन्धनो रसं लब्ध्वा यथैवान्नेन पाचयेत् ॥ ८ ॥
कोलास्थि मज्जा कल्कस्तु पीतो वाप्युदकेन वै ।
अचिराद्विनिहन्त्येष प्रयोगो भस्मकं नृणाम् ॥ ९ ॥
नारीक्षीरेण संयुक्तां पिबेदौदुम्बरीं त्वचम् ।
ताभ्यां वा पायसं सिद्धं पिबेदत्यग्निशान्तये ॥ १० ॥
सिततण्डुलसितकमलं छागक्षीरेण पायसं सिद्धम् ।
भुक्त्वा घृतेन पुरुषो द्वादशदिवसान् बुभुक्षितो न भवेत् ॥११॥
विदारी स्वरसं क्षीरे पचेदष्टगुणं घृतम् ।
माहिषं जीवनीयेन कल्केनात्यग्निनाशनम् ॥ १२ ॥

## इति वङ्गसेने भस्मकनिदानचिकित्साधिकारः समाप्तः ॥ ६ ॥

—०—

## अथ क्रिमिनिदानमाह ।

क्रिमयस्तु द्विधाः प्रोक्ता वाह्याभ्यन्तरभेदतः ।
वहिर्मल कफाऽसृग्विट् जन्मभेदाच्चतुर्विधाः ॥ १ ॥

नामतो विंशतिविधा वाह्यास्तत्र मलोद्भवाः ।
तिलप्रमाणसंस्थानवर्णाः केशाम्बराश्रयाः ॥ २ ॥
बहुपादाश्च सूक्ष्माश्च यूकालिख्याश्च नामतः ।
द्विधा ते कोठपिटिकाः कण्डूगण्डान् प्रकुर्वते ॥ ३ ॥
अजीर्णभोजी मधुराम्लसेवी द्रवप्रियः पिष्टगुड़ोपभोक्ता ।
व्यायामवर्जी च दिवाशयी च विरुद्धभोजी लभते क्रमींस्तु ॥४॥
माषपिष्टान्नलवणगुड़शाकैः पुरीषजाः ।
मांसमाषगुड़क्षीर दधि शुक्तैः कफोद्भवाः ॥ ५ ॥
विरुद्धाजीर्णशाकाद्यैः शोणितोत्था भवन्ति हि ॥ ६ ॥

—०—

ज्वरो विवर्णता शूलं हृद्रोगः छर्दनं भ्रमः ।
भक्तद्वेषातिसारश्च सञ्जातक्रमिलक्षणम् ॥ ७ ॥

—०—

कफादामाशये जाता वृद्धाः सर्पन्ति सर्वतः ।
पृथुवर्ध्मनिभाः केचित् केचित् गण्डूपदोपमाः ॥ ८ ॥
रूढ़धान्याङ्कुराकारा स्तनुदीर्घास्तथाऽणवः ।
श्वेतास्ताम्रावभासाश्च नामतः सप्तधातु ते ॥ ९ ॥
अन्त्रादा उदरावेष्टा हृदयादामहागुदाः ।
चुरवो दर्भकुसुमाः सुगन्धास्ते च कुर्वते ॥ १० ॥
हृल्लासमास्यस्रवण मविपाकमरोचकम् ।
छर्दिशूलज्वरानाह कार्श्यश्वयथुपीनसान् ॥ ११ ॥

—०—

रक्तवाहिशिरास्थाना रक्तजा जन्तवोऽणवः ।
अपादाश्चतताम्राश्च सौक्ष्म्यात्केचिददर्शनाः ॥ १२ ॥

केशादालोमविध्वंसा रोमद्वीपा उदुम्बराः।
षडेते कुष्टकर्माणः सहस्रौरसमातरः॥ १३॥
पक्वाशये पुरीषोत्था जायन्तेऽधो विसर्पिणः।
संवृद्धाश्च भवेयुश्च ते यदामाशयोन्मुखाः॥ १४॥
तदास्योद्गारनिःश्वासविड्गन्धानुविधायिनः।
पृथुवृत्ततनुस्थूलाः श्यावाः पीताः सिताऽसिताः॥ १५॥
ते पञ्च नामभिः ख्याताः ककेरुकमकेरुकाः।
सौसुरादाः सशूलाख्या लेलिहा जनयन्ति च॥ १६॥
विड्भेदशूलविष्टम्भ कार्श्यपारुष्यपाण्डुताः।
रोमहर्षाग्निसदन गुदकण्डूर्विमार्गगाः॥ १७॥

—०—

## अथ चिकित्सामाह।

तेषामन्यतमं वैद्यो जिघांसुः स्निग्धमातुरम्।
सुरसादि विपक्केन सर्पिषा वाऽवमादिशेत्॥ १८॥
विरेचयेत्तीक्ष्णसमैः योगैरास्थापयेद्धि च॥ १९॥
विड़ङ्ग तण्डुलव्योषपिप्पलीमूलैर्मरिचैन च।
तक्रसिद्धा यवागूः स्यात् क्रमिघ्नी ससुवर्चिका॥ २०॥
विड़ङ्गव्योषमंयुक्त मन्नमण्डं पिबेन्नरः।
दीपनं क्रमिनाशाय वह्निश्च कुरुते भृशम्॥ २१॥
सक्षौद्रः क्रमिजिद्भिः पीतः क्रमिहरशिग्रुजः क्वाथः।
पीतं मूत्रमजायाः ग्रन्थिकचूर्णान्वितं वापि॥ २२॥
पुष्कराह्वाग्निनिर्यामं क्रमिघ्नार्द्धेन संयुतम्।
निम्बार्द्रमर्दयित्वा प्रातः सर्वक्रमिनिवारणम्॥ २३॥

पारसीय यवानी पीता पर्युषिता वारिणा प्रातः।
गुड़पूर्वा क्रमिजालं कोष्टगतं पातयत्याशु ॥ २३ ॥
पारिभद्रकपत्रोत्थं रसं चौद्रयुतं पिबेत्।
किंशुकस्य रसं वापि धत्तूरस्यापि वा रसम् ॥ २४ ॥
ता सुपर्णीफलदारुशिग्रू क्वाथः सकृष्णाक्रमिशत्रु कल्कः।
गंद्वयेनापि चिरप्रवृत्तान् क्रमीन्निहन्ति क्रमिजांश्च रोगान् ॥२५॥
आखुपर्णीदलैः पिष्टैः पिष्टकेन तु पूपिकाः।
जग्ध्वासौवीरकं चानु पिबेत् क्रमिहरं परम् ॥ २६ ॥
पलाशबीजस्वरसं पिबेद्वा चौद्रसंयुतम्।
पिबेत्तद्बीजकल्कं वा तक्रेण क्रमिनाशनः ॥ २७ ॥
लिह्याच्चौद्रेण वैड़ङ्गं चूर्णं क्रमिविनाशनः।
सुरसादिगणं वापि सर्वथैवोपयोजयेत् ॥ २८ ॥
प्रत्यहं कटुकं तिक्तं भोजनञ्च हितं भवेत्।
क्रमीणां नाशनं रुच्य मग्निसन्दीपनं परम् ॥ २९ ॥

—०—

फलत्रयं वचादन्ती त्रिहृत्कम्पिल्लकैः समैः।
सिद्धं सर्पिर्गवांमूत्रे पीतं क्रमिविनाशनम् ॥ ३० ॥
इति त्रिफलाद्यं घृतम्।

त्रिफलायाः त्रयः प्रस्थाः विड़ङ्गं प्रस्थमेव च।
दीप्यञ्च दशमूलञ्च लाभतः समुपाहरेत् ॥ ३१ ॥
पादशेषे जलद्रोणे पूते सर्पिर्विपाचयेत्।
प्रस्थोन्मितं सिन्धुयुतं तत्परं क्रमिनाशनम् ॥ ३२ ॥
विडङ्गघृतमित्येतल्लेह्यं शर्करया सह।
सर्वक्रमीन् प्रणुदति वज्रं सुक्रमिवासुरान् ॥ ३३ ॥
इति विड़ङ्गाद्यं घृतम्।

पिप्पली पिप्पलीमूलं सैन्धवं कृष्णजीरकम् ।
चव्यचित्रकतालीसपत्रकं नागकेशरम् ॥ ३४ ॥
एषां द्विपलिकान् भागान् पञ्चसौवर्चलस्य च ।
मरिचाजाजिशुण्ठीनामेकैकस्य पलं पलम् ॥ ३५ ॥
दाडिमात् कुडवञ्चैव द्वे पले चाम्लवेतसात् ।
सर्वमेकत्र संहृत्य योजयेत्कुशलो भिषक् ॥ ३६ ॥
पिप्पल्याद्यमिदं ख्यात नष्टवह्नेः प्रदीपनम् ।
अर्शांसि ग्रहणीगुल्म मुदरं सभगन्दरम् ॥ ३७ ॥
कृमिकंडूऽरुचिहरं सुरयोष्णोदकेन वा ।
नात.परतर किञ्चिद्दामशोथनिषूदनम् ॥ ३८ ॥

इति पिप्पल्याद्यं चूर्णम् ।

पलद्वयापले द्वे तु कृष्णायसपलद्वयम् ।
पथ्यामृताच धात्रीणां पृथगेकैकशः पलम् ॥ ३९ ॥
पूतीकचव्यव्योषाग्नि कारवीकृमिनाशनैः ।
चूर्णितैरर्धपलिकैस्तिलतैलं पलद्वयम् ॥ ४० ॥
त्रिफलायारसप्रस्थे खडं प्रस्थयुगं पचेत् ।
दार्वीप्रलेपात्पाकश्च चातुजातकसंयुतम् ॥ ४१ ॥
माक्षिकवटकाह्येते यथाग्निबलभक्षिताः ।
कृमिकोष्टाग्निदौर्बल्य शोथगुल्मोदरव्रणान् ॥ ४२ ॥
कामलापाण्डुरोगार्शो भगन्दरगदज्वरान् ।
निहन्युर्वा तु मन्दिहाः पयःस्थैर्यबलप्रदाः ॥ ४३ ॥
वातप्रमेहगमनाः पचृथा. पुष्टिवर्द्धनाः ।
भवन्त्यतिस्निग्धभुजां वातातपनिषेविनाम् ॥ ४४ ॥

इति माक्षिकवटकः ।

रसेन्द्रेण समायुक्तो रसो धत्तूरपत्रजः ।
ताम्बूलपत्रजो वापि लेपनं यूकनाशनम् ॥ ४५ ॥
ककुभकुसुमं विडङ्गं लाङ्गली भल्लातकं तयोशीरम् ।
श्रीवेष्टकं सर्जरसं मदमश्वैवाष्टमं दद्यात् ॥ ४६ ॥
एषसुगन्धो धूपो मशकानां नाशनः श्रेष्ठः ।
शय्यासुमत्कुणानां शिरसि वस्त्रे च यूकानाम् ॥ ४७ ॥
इति मशकहरो धूपः ।

भण्डीपिष्टाऽऽरनालेन गोमूत्रेणाभिपिष्टकाः ।
कुनटीकटुतैलेन योगायूकापहास्त्रयः ॥ ४८ ॥

—०—

लाचाभल्लातकश्च श्रीवासः श्वेताऽपराजिता ।
अर्जुनस्य फलं पुष्पं विडङ्गं सर्जगुग्गुलुः ॥ ४९ ॥
एभिः कृतेन धूपेन शाम्यन्ति नियतं गृहे ।
भुजङ्गमूषकादंशा घुणामशकमत्कुणा ॥ ५० ॥
इति गृहे भुजङ्गादिनाशको धूपः ।

—०—

सविडङ्गं गन्धशिलया सुसिद्धं सुरभीजलेन कटुतैलम् ।
निखिला नयति विनाशं लिख्यासहिताश्च वै यूकाः ॥ ५१ ॥
इति विडङ्गतैलम् ।

चीराणि मांसानि घृतानि चैव दधीनि शाकानि च पर्णवन्ति ।
समासतोयाम्लमधुरान्नसांश्च क्रमीन् जिघांसुः परिवर्ज्जयेत्तु ॥ ५१ ॥

## इति वङ्गसेने क्रमीनिदानचिकित्साधिकारः समाप्तः ॥ ७ ॥

—०—

## अथ पाण्डुरोगनिदानमाह।

पांडुरोगाः स्मृताः पञ्च वातपित्तकफैस्त्रयः ।
चतुर्थः सन्निपातेन पञ्चमो भक्षणात् मृदः ॥ १ ॥
पिपासारुचिह्रल्लासैररुदाहोऽङ्गगौरवम् ।
रक्तलोचनता तस्य पूर्वरूपस्य लक्षणम् ॥ २ ॥
व्यवायमम्लं लवणानि मद्यं मृदं दिवास्वप्नमतीवतीक्ष्णम् ।
निषेव्यमाणस्य समेत्य रक्तं कुर्वन्ति दोषास्त्वचि पांडुताञ्च ॥३॥
त्वक्स्फोटनिष्ठीवनगात्रसादौ मृद्भक्षणप्रेक्षणकूटशोथाः ।
विण्मूत्रपीतत्वमथाविपाको भविष्यतस्तस्य पुरस्सराणि ॥ ४ ॥
त्वङ्मूत्र नयनादीनां रूक्षकृष्णारुणाभता ।
वातपांड्वामये कम्प तोदानाहभ्रमादयः ॥ ५ ॥
पीतमूत्रशकृन्नेत्रो दाहतृष्णाज्वरान्वितः ।
भिन्नविट्कोऽतिपीताभः पित्तपांड्वामयी नरः ॥ ६ ॥
कफप्रसेकश्वयथु तन्द्रालस्यातिगौरवैः ।
पांडुरोगी कफाच्छुक्ल त्वङ्मूत्रनयनाननैः ॥ ७ ॥
सर्वान्नसेविनः सर्वे दुष्टा दोषास्त्रिदोषजम् ।
त्रिदोषलिङ्गं कुर्वन्ति पांडुरोगं सुदुःसहम् ॥ ८ ॥
ज्वरारोचकहृल्लास छर्दितृष्णाक्लमान्वितः ।
पांडुरोगी त्रिभिर्दोषैस्त्याज्यः क्षीणो हतेन्द्रियः ॥ ९ ॥
मृत्तिकादनशीलस्य कुप्यत्यन्यतमो मलः ।
कषाया मारुतं पित्त मूषरा मधुरा कफम् ॥ १० ॥
कोपयेन्मृद्रसादींश्च रौक्ष्याद्भुक्तञ्च रूक्षयेत् ।
पूरयत्यविपक्वैव स्रोतांसि निरुणद्धि च ॥ ११ ॥
इन्द्रियाणां बलं हत्वा तेजो वीर्यौजसी तथा ।

पांडुरोगं करोत्याशु बलवर्णाग्निनाशनम् ॥ १२ ॥
शूनाचिकूटगण्डभ्रूः शूनपान्नाभिमेहनः।
कृमिकोष्टोऽतिसार्येत मलं सासृक्कफान्वितम् ॥ १३ ॥
पांडुरोगश्चिरोत्पन्नः खरीभूतो न सिद्दति।
कालप्रकर्षाच्छूनांगो यो वा पीतानि पश्यति ॥ १४ ॥
बद्धुलं विठ् सुहरितं सकफं योऽतिसार्य्यते।
दीनः श्वेदादिदिग्धाङ्गः छर्दिमूर्च्छाढड्न्वितः ॥ १५ ॥
सनास्यऽसृक्चयाद्यस्तु पाण्डुः श्वेतत्वमाप्नुयात्।
पाण्डु दन्तनखो यस्तु पाण्डु नेत्रश्च यो नरः ॥
पाण्डु संघातदर्शी च पाण्डु रोगी विनश्यति ॥ १६ ॥
अन्तेषु शूनं परिहीनमध्यं म्लानं तथान्तेषु च मध्यशूनम्।
गुदे च शेफस्यथ मुष्कयोश्च शूनं प्रताम्यंतमसंज्ञकल्पम् ॥१७॥
विवर्जयेत्पाण्डु किनं यशोर्थी तथातिसारज्वरपीडितञ्च ॥१८॥
साध्यञ्च पाण्डु ामयिनं समीक्ष्य स्निग्धं घृतेनोर्ध्वमधश्च शुद्धम्।

—o—

## अथ चिकित्सामाह।

सम्पादयेत् चौद्रघृतप्रगाढैर्हरीतकीचूर्णमयैः प्रयोगैः।
पिवेद्घृतं वा रजनीविपक्वं यत्त्रैफलं तिल्वकमेव चापि ॥१९॥
विरेचनद्रव्यकृतं पिवेद्वा योगांश्च वैरेचनिकान् घृतेन ॥ २० ॥
विधिः स्निग्धोऽय वातोत्थे तिक्तः शीतस्तु पैत्तिके।
श्लैष्मिके कटुरूचणाः कार्यो मिश्रस्तु मिश्रके ॥ २१ ॥
द्विपञ्चमूलीकथितं सविश्वं कफात्मके पांडुगदे पिवेत्तत्।
ज्वरेऽतिसारे श्वयथौ ग्रहण्यां श्वासेऽरुचौ कण्ठहृदामयेषु ॥२२॥
अयस्तिलत्र्यूषणकोलभागैः सर्वैःसमं माचिकधातुचूर्णम्।

तैर्मोदकः क्षौद्रयुतः सुभुक्तः पाण्ड्वामयेदूरगतेऽपि शस्तम् ॥२३॥

इत्ययश्चादिमोदकम्।

दहनाजमोदसैन्धव नागरमरिचाम्लतक्रेण।
सप्ताहादग्निबलं पाण्डुशों विमर्दनं परम् ॥ २४ ॥
सप्तरात्रं गवां मूत्रे भावितं चाप्ययोरजः।
पाण्डुरोगप्रशान्त्यर्थं पयसा वा पिवेन्नरः ॥ २५ ॥
गोमूत्रसिद्धमण्डूरचूर्णं सगुड़मभ्यसेत्।
पाण्डुरोगं जयेत्सर्वं पक्तिशूलञ्च दारुणम् ॥ २६ ॥
अयोमलन्तु सन्तप्तं भूयो गोमूत्रसाधितम्।
मधुसर्पियुतं लीढ्वा पाण्डुरोगी सुखी भवेत् ॥ २७ ॥
दीपनं चाग्निजननं शोथपाण्ड्वामयापहम्।
कल्याणकाह्वयं दद्या इचयेद्वा गुडं नरः ॥ २८ ॥
मृत्तिकां भावितां दद्या त्तुल्यां निम्बरसेन वा।
वार्त्ताक्या कटुरोहिण्या गोमूत्रेण च भावयेत् ॥ २८ ॥
मृद्दोषकरणार्थन्तु भिषक् पथान्नियोजयेत्।

—•—

मूर्वातिक्तानिशायास कृष्णाचन्दनपर्पटैः।
त्रायन्ती वत्सभूनिम्ब पटोलाम्बुददारुभिः ॥ ३० ॥
अक्षमात्रैर्घृतप्रस्थं सिद्धं क्षीरचतुर्गुणे।
पाण्डुताज्वरविस्फोट शोफार्शो रक्तपित्तनुत् ॥ ३१ ॥

इति मूर्वाद्यं घृतम्।

कटुकां रोहिणीं मुस्तां हरिद्रां वत्सकत्वचम्।
पटोलं चन्दनं मूर्वां त्रायमाणां दुरालभाम् ॥ ३२ ॥
सपिप्पलीं कर्कटिकां पूतिकं देवदारु च।
पिष्ट्वाक्षमात्रं तैः सर्पिः प्रस्थं क्षीराढ़के पचेत् ॥ ३३ ॥

रक्तपित्तं ज्वरं दाहं श्वयथुं सभगन्दरम् ।
अर्शांस्यसृग्दरञ्चैव हन्याद्विस्फोटकांस्तथा ॥ ३४ ॥

इति कटुकाद्यं घृतम् ।

व्योषं विल्वं द्विरजन्यौ त्रिफला द्विपुनर्नवा ।
मुस्ता चायोरजः पाठा विडङ्गं देवदारु च ॥ ३५ ॥
वृश्चिकाली च भार्गी च सक्षीरैस्तैः शृतं घृतम् ।
सर्वान् प्रशमयत्याशु विकारान् मृत्तिकोद्भवान् ॥ ३६ ॥

इति व्योषाद्यं घृतम् ।

देवद्रु त्रिफला व्योषं वृश्चिकाली ह्ययोरजः ।
हरिद्रे चित्रकं भार्गी पाठे द्वे च पुनर्नवा ॥ ३७ ॥
विडङ्गं पिप्पली लोध्रं पचेन्मूत्रे चतुर्गुणे ।
घृतं तत्पाण्डुहृद्रोग ग्रहणीगुददोषनुत् ॥ ३८ ॥

इति देवदार्वाद्यं घृतम् ।

रजनीक्वाथकल्काभ्यां घृतं पाण्डुमयापहम् ।
त्रिफलाकल्कगोमूत्र सिद्धं वा माहिषं घृतम् ॥ ३९ ॥

इति रजनी त्रिफलाद्यं घृतम् ।

दन्त्याश्चतुष्पलरसे पिष्टैर्दन्तीशलाटुभिः ।
तद्वत्प्रस्थो घृतात्गुल्म प्लीहहृद्रोगपाण्डुनुत् ॥ ४० ॥

—o—

दन्ती कुडवोऽत्राष्टपलिकः षोड़शभिः सलिलकुड़वैः निःक्वाथ्य पादावशेषः कृतः ।

इति दन्तीघृतम् ।

ताम्ररजतरूप्यायो मलाः पञ्चपलाः पृथक् ।
चित्रकत्रिफलाव्योष विड़ङ्गैः पलिकैः सह ॥ ४१ ॥
शर्कराष्टपलोन्मिश्रा चूर्णिता मधुनाप्लुता ।

उदुम्बरसमां मात्रां मतः खादेद्यथाग्निमान् ॥ ४२ ॥
दिने दिने प्रयोगेन जीर्णे भुञ्जीयाथेप्सितम् ।
वर्जयित्वा कुलित्थांश्च काकमाचीकपोतकान् ॥ ४३ ॥
योगराज इति ख्यातो योगोऽयममृतोपमः ।
रसायनमिदं श्रेष्ठं सर्वरोगहरं परम् ॥ ४४ ॥
पांडुरोगं विषं कासं यक्ष्माणं विषमज्वरम् ।
कुष्टानि गरजं मेहं श्वासं हिक्कामरोचकम् ॥ ४५ ॥
विशेषाद्धन्त्यपस्मारं कामलां गुदजानि च ॥ ४६ ॥
सुवर्णमथवा रूप्यं योगे यत्र न सम्भवेत् ।
तत्र लोहेन कर्माणि भिषक्कुर्य्यादतन्द्रितः ॥ ४७ ॥

इति योगराजः ।

कुटजत्रिफलानिम्ब पटोलघननागरैः ।
भावितानि दशाहानि रसैर्द्विगुणितानि च ॥ ४८ ॥
शिलाजतु पलान्यष्टौ तावती सितशर्करा ।
त्वक्क्षीरी पिप्पली धात्री कर्कटाख्या पलोन्मिता ॥ ४९ ॥
निदग्धीफलमूलाभ्यां पलं युञ्ज्यात्त्रिजातकात् ।
मधुत्रिपलसंयुक्ता कुर्य्यादक्षसमा गुटी ॥ ५० ॥
दाडिमाम्लपयःक्षीर रसयूषसुरासवान् ।
तान्भक्षयित्वाऽनुपिवेत् निरन्नो हितभक्ष्यभाक् ॥ ५१ ॥
पांडुकुष्टगरप्लीह कामलार्शोभगन्दरान् ।
ग्रन्थिदकृच्छ्रमूत्राग्नि दोषशोथगदोदरान् ॥ ५२ ॥
कासासृग्वातपित्तास्रक् शूलगुल्मगलग्रहान् ।
नेत्रवक्त्रगदान् हन्ति सर्वरोगहरा शुभा ॥ ५३ ॥

इति शिवगुटिका ।

चूर्णपर्णं त्रिफला दारु हरिद्रे नीलिनीफलम्।
द्राक्षा चेन्द्रयवं मुस्ता मञ्जिष्ठा कटुरोहिणी ॥ ५४ ॥
शतावरी शिग्रुबीज चित्रकं गजपिप्पली।
शालिपर्णी पृष्टपर्णी बृहती कण्ठकारिका ॥ ५५ ॥
पाठाभल्लातक दन्ती विशाला सदुरालभा।
शठीमधुरसा रास्ना विषङ्गञ्च समाक्षिकम् ॥ ५६ ॥
एतैश्चूर्णैः समैर्वापि लौहं द्विगुणमावपेत्।
यावशूकञ्च संभृत्य गवां मूत्रेण पाचयेत् ॥ ५७ ॥
ततोऽक्षमात्रां गुटिकां पाययेत्तण्डुलाम्बुना।
पाण्डुरोगं जयत्याशु ब्रह्मदण्ड इवासुरान् ॥ ५८ ॥
कृमिकुष्ठप्रमेहार्शो ग्रहणीदोषशोथहा।
भगन्दरश्वासकास प्लीहगुल्मोदरापहा ॥ ५९ ॥
इति चूर्णपर्णादिगुटी ॥

—०—

## अथ निदानम्।

पाण्डुरोगी तु योऽत्यर्थं पित्तलानि निसेवते।
तस्य पित्तमसृङ्मांसं दग्ध्वारोगाय कल्पते ॥ ६० ॥
हारिद्रनेत्रः सभृश हारिद्रत्वङ्नखाननः।
रक्तपीतशकृन्मूत्रो भेकवर्णो हतेन्द्रियः ॥ ६१ ॥
दाहाऽविपाकदौर्बल्य सदनाऽरुचिकर्षितः।
कामला बहुपित्तैषा कोष्ठशाखा श्रयामता ॥ ६२ ॥
कालान्तरात् खरीभूता कृच्छ्रा स्यात् कुम्भकामला ॥ ६३ ॥
कृष्णो पीतशकृन्मूत्रो भृश शूनश्च मानव।
सरक्ताक्षिमुखच्छर्दि विण्मूत्रो यश्च ताम्यति ॥ ६४ ॥
दाहारुचिवृडानाह तन्द्रामोहसमन्वित.।

नष्टाग्निर्सन्न: क्षिप्रं हि कामलावान्विपद्यते ॥ ६५ ॥
छर्द्यरोचकहृल्लास ज्वरक्लमनिपीड़ित: ।
नश्यति श्वासकासार्तो विड्भेदी कुम्भकामली ॥ ६६ ॥

—०—

## अथ चिकित्सामाह ।

रेचनं कामलार्त्तस्य स्निग्धस्यादौ प्रयोजयेत् ।
तत: प्रशमनी कार्य्या क्रिया वैद्येन जानता ॥ ६७ ॥
त्रिफलाया गुडूच्या वा दार्व्या निंवस्य वा रस: ।
प्रातर्माक्षिकसंयुक्त: शीलित: कामलापह: ॥ ६८ ॥
अञ्जनं कामलार्त्तानां द्रोणपुष्पीरसं शुभम् ।
निशागैरिकधात्रीणां चूर्णं वा संप्रकल्पयेत् ॥ ६९ ॥
नस्यं कर्कोटमूलस्य घ्रेयं वा जालिनीफलम् ॥
गुडूचीपत्रकल्कं वा पिबेत्तक्रेण कामली ।
भक्तं तक्रेण भुञ्जीत सजहात्याशु कामलाम् ॥ ७० ॥
लोहचूर्णं निशायुग्मं त्रिफलां कटुरोहिणीम् ।
प्रलिह्य मधुसर्पिभ्यां कामलार्त: सुखी भवेत् ॥ ७१ ॥
किराततिक्तं सुरदारु दार्वी मुस्ता गुडूची कटुकापटोलं
दुरालभा पर्पटकं सनिम्बं कटुत्रिकं वापि फलत्रिकञ्च ॥
विड़ङ्गसारञ्च समांशकानि सर्वै: समं चूर्णमथात्र लौहम्
सर्पिर्मधुभ्यां गुटिका विधेया तक्रानुपानं भिषजा प्रयोज्य

लीढ़ा निवारयत्याशु कामलामुद्धतामपि ॥ ७६ ॥
तुल्यां वायोरजःपथ्याहरिद्रां क्षौद्रसर्पिषा।
चूर्णितां कामलीलिह्याद् गुडक्षौद्रेण चाभयाम् ॥ ७७ ॥

—०—

हरिद्रात्रिफलानिम्ब वलामधुकसाधितम्।
सक्षीरं माहिषं सर्पिः कामलाहरमुत्तमम् ॥ ७८ ॥

इति हरिद्राद्य घृतम् ॥

गुडूचीरसकल्काभ्यां सिद्धं क्षीरचतुर्गुणे।
माहिषं घृतमेवाशु कामलाहरमुत्तमम् ॥ ७९ ॥

इति गुडूचीघृतम् ॥

अयोरजो हरिद्रे द्वे त्रिफला कटुरोहिणी।
चूर्णं कामलिनां श्रेष्ठं घृतमाक्षिकसंयुतम् ॥ ८० ॥
सकफो मारुतः पित्तं कामलायां वहिः क्षिपेत्।
तस्य स्युः पीतमूत्रत्वक् श्वेतविट्दशनानि च ॥ ८१ ॥
विष्टम्भगौरवाटोप हिक्काश्वासज्वरादयः ॥ ८२ ॥
तं हि कटुस्तरुक्षैश्च शिखितित्तिरदक्षजैः।
रसैर्यूषैश्च कौलित्थै मुद्गजैरपि भोजयेत्।
व्योषाढ्यं वीजपूराम्लं पिवेद् वातप्रशांतये ॥ ८३ ॥
कुम्भाव्यकामलायान्तु हितः कामलिको विधिः ॥ ८४ ॥
गोमूत्रेण पिवेत् कुम्भ कामलायां शिलाजतु ॥
मासं माक्षिकधातुं वा किट्टं वाथहिरण्यजम् ॥ ८५ ॥
दग्धाक्षकाष्ठैर्मलमायसन्तु गोमूत्रनिर्वापितमष्टवारम्।
विचूर्ण्य लीढं मधुनाऽचिरेण कुम्भाह्वय पाण्डुगद निहन्ति ॥८६॥

इति कुम्भकामला चिकित्सा।

—•—

कामलार्तः स्रजेद्यस्तु तैलपिष्टनिभम्मलम् ।
कफवद्वगुदस्तस्य श्लेषघ्नैः कामलां हरेत् ॥ ८७ ॥
इति कामला चिकित्सा ॥

—०—

## अथ निदानम् ।

यदा तु पाण्डोर्वर्णः स्याद्धरितः श्यावपीतकः ।
बलोत्साहक्षयस्तन्द्रा मन्दाग्निर्त्वं मृदुज्वरः ॥ ८८ ॥
स्त्रीष्वहर्षोऽङ्गमर्दश्च श्वासस्तृष्णाऽरुचिर्भ्रमः ।
हलीमकन्तदातस्य विद्यादनिलपित्ततः ॥८९ ॥
सन्तापो भिन्नवर्चश्च वहिरंतश्च पीतता ।
पांडुता नेत्रयोर्यस्य पानकीलक्षणं वदेत् ॥ ९० ॥

—०—

## अथ चिकित्सामाह ।

पिवेत् खदिरतोयेन मद्यं लोहरजांसि च ॥ ९१ ॥

—०—

सिता तिक्ता वला यष्टी त्रिफला रजनीयुगैः ।
लेहं लिह्यात् समध्वाज्यं हलीमक प्रशांतये ॥ ९२ ॥
इति सिताद्यो लेहः ।

मधुरै रन्नपानैस्तं वातपित्तहरैर्हरेत् ।
कामलापांडुरोगोक्तां क्रियां चात्र प्रयोजयेत् ॥ ९३ ॥

—०—

अमृतलतारसकल्क प्रसाधितं तुरगविद्दिया सर्पिः ।
क्षीरचतुर्गुणमेत द्वितरेच हलीमकार्तेभ्यः ॥ ९४ ॥
इत्यमृताद्यं घृतम् ॥ इति हलीमकचिकित्सा ।

फलत्रिका मृतावासा तिक्ता भूनिम्ब निम्बकैः।
क्वाथः चौद्रयुतो हन्यात् पांडुरोगं सकामलम् ॥ ९५ ॥
दार्व्वीतिक्ताभयारिष्ट वर्षाभू सुपटोलजः।
क्वाथः शोथोदरश्वास कामला पांडुरोगनुत् ॥ ९६ ॥
त्र्यूषणं त्रिफलामुस्तं विड़ङ्गश्चित्रकं समम्।
लोहचूर्णं नवगुणं कृत्वाचूर्णं पिबेन्नरः ॥ ९७ ॥
मासं तक्रेण गोमूत्रे लिह्याद्वा मधुसर्पिषा।
षजयेत् पांडुहृद्रोग कुष्टशोथ भगन्दरान् ॥ ९८ ॥
कृमीनर्शांसि जयति मन्दाग्नित्व मरोचकम्।
युक्तितोऽभ्यसनाच्चैव जरां न लभतेऽबलम् ॥ ९९ ॥
इन्द्रियाणां विशुद्धिश्च वलवर्णप्रसादनम्।
मासेन लभते जन्तु रेतच्चूर्णं नवायसम् ॥ १०० ॥

इति नवायसं चूर्णम् ॥

पुनर्नवात्रिवृद्व्योष विडङ्गं दारुचित्रकम्।
कुष्टं हरिद्रे त्रिफला दन्ती चव्यं कलिंगकाम् ॥ १०१ ॥
कटुका पिप्पलीमूलं मुस्तश्चेति पलोन्मितम्।
मंडूरं द्विगुणं चूर्णाद् गोमूत्रार्धाढके पचेत् ॥ १०२ ॥
गुड़वद्वटकान् कृत्वा तक्रेणाऽऽलोड्यतान् पिबेत्।
ते पांडुरोगं प्लीहान मर्शांसि विषमज्वरम् ॥ १०३ ॥
श्वयथुं ग्रहणीदोषं हन्युः कुष्टकृमींस्तथा ॥

इति मंडूरवटकः ॥

त्र्यूषणं त्रिफलामुस्तं विडङ्गं चव्य चित्रकौ।
दार्व्वीत्वङ्माक्षिकं धातु ग्रन्थिकं देवदारु च ॥ १०४ ॥
एषां द्विपलिकान् भागान् कृत्वा चूर्णं पृथक् पृथक्।
मंडूरं द्विगुणं चूर्णा च्छुद्धमञ्जनसन्निभम् ॥ १०५ ॥

मूत्रे चाष्टगुणे पक्त्वा तस्मिंस्तु प्रक्षिपेत्ततः ।
उदुम्बरसमान् कुर्यात् वटकांस्तान्यथाग्निवान् ॥ १०६ ॥
उपयुञ्जीततक्रेण सात्म्यं जीर्णे च भोजयेत् ।
मंडूरवटका ह्येते प्राणदाः पांडुरोगिणाम् ॥ १०७ ॥
कुष्टानि गरजं शोथ मूरुस्तम्भं कफामयान् ।
अर्शांसि कामलां मेहान् प्लीहानं शमयत्यपि ॥ १०८ ॥
इति वृहन्मंडूरवटक ।

निम्बं पटोलं कुटजं त्रिफला मुस्तनागरम् ।
पचेज्जलाढ़के पाद शेषे दद्याच शीतले ॥ १०९ ॥
शिलाजतु पलान्यष्टौ मासं संस्थापयेच्च तम् ।
उद्धृत्य तं शिलातुल्यं सितांश्चापि पलोन्मितान् ॥ ११० ॥
मोचधात्रीफलतुगा कर्कट्यादिनिदग्धिकाः ।
त्रिवर्णपादसयुक्तं क्षौद्रं त्रिपलसंयुतम् ॥ १११ ॥
पयोनुपानं गुटिकां कृत्वा खादेद्यथा वलम् ।
कामलापांडुरोगार्श. शोथज्वरनिपीडितः ॥ ११२ ॥
इति निम्बादिगुटिका।

विडङ्गमुस्तत्रिफला देवदारु षडूषणैः ।
निर्वाप्य सप्तधा मूत्रे मंडूरं ग्राह्यमिष्यते ॥ ११३ ॥
तुल्यमात्रमयश्चूर्णं गोमूत्रेऽष्टगुणे पचेत् ।
तैरचमात्रां गुटिकां कृत्वा खादेद्दिने दिने ॥ ११४ ॥
कामला पांडुरोगार्त्तः सुखमापद्यते क्षणात् ।
इति मंडूरगुटिका ।

बिभीतकाऽयोमलनागराणां चूर्णं तिलानां गुडसम्प्रयुक्तम् ।
तक्रानुपानं गुटिका निहन्ति ह्यतिप्रवृद्धानपि पांडुरोगान् ॥
इति बिभीतकाद्या गुटिका।

पञ्चकोलं समरिचं देवदारुफलत्रिकम्।
द्विगुमुस्तसमायुक्ता भागास्त्रिपलसम्मिताः ॥ ११६ ॥
यावन्त्येतानि चूर्णानि मंडूरं द्विगुणं ततः।
पक्वा चाष्टगुणे मूत्रे घनीभूतं तमुद्धरेत् ॥ ११७ ॥
ततोऽचमात्रान्वटकान् पिबेत्तक्रेण तक्र भुक्।
पांडुरोगं जयत्येष मन्दाग्निलमरोचकम् ॥ ११८ ॥
अर्शांसि ग्रहणीं शोथ मुरुस्तंभं हलीमकम्।
क्रमिं प्लीहानमुदरं गलरोगञ्च नाशयेत् ॥ ११९ ॥
मंडूरो वज्रनामायं रोगानीकप्रणाशनः ॥ १२० ॥
निर्वाप्य सप्तधा मूत्रे मंडूरं ग्राह्यमिष्यते।
आहयेदष्टगुणितं गोमूत्रं सर्वचूर्णतः ॥ १२१ ॥

इति मंडूरवज्रवटकः।

विडङ्गं त्रिफला व्योषं दार्वी कृष्णमयोरजः।
कामला पांडुरोगघ्नं लिह्यात् चौद्रघृतप्लुतम् ॥ १२२ ॥

इति विडङ्गाद्यं लोहम्।

रसमामलकीनान्तु संगृह्य यन्त्रपीडितम्।
द्रोणं पचेत्तु मृद्वग्नौ तत्र चेमानि दापयेत् ॥ १२३ ॥
चूर्णितं पिप्पलीप्रस्थं मधुकं द्विपलं तथा।
प्रस्थं गोस्तनिकायाश्च द्राक्षायाः कल्कपेषितम् ॥ १२४ ॥
शृङ्गवेरपले द्वे च तुगाक्षीर्याः पलद्वयम्।
तुलार्धं शर्करायाश्च घनीभूतं समुद्धरेत् ॥ १२५ ॥
मधुप्रस्थ समायुक्तं लेहयेत्पलसम्मितम्।
हलीमकं कामलाञ्च पांडुत्वं चापकर्षति ॥ १२६ ॥

इत्यामलक्यऽवलेहः।

पचेत् खदिरनिःक्वाथे विडङ्गधान्ययोरजः ।
बलातिबासिता यष्टी त्रिफला रजनीद्वयम् ॥ १२७ ॥
लेहं लिह्यात्समध्वाज्यैः पांडुरोगी हलीमकी ।
सलेहः कामलां हन्या दपि सम्वत्सरोत्थिताम् ॥ १२८ ॥
इति खदिरलेहः ।

कृष्णे द्वे ग्रन्थिकं वह्नि र्दीप्यकोषणसैन्धवम् ।
क्रमिघ्नं त्रिफला धान्य काजाजामजमोदकम् ॥ १२८ ॥
पलिकानि त्रिवृत्पच्च तैलं सर्पिः पलाष्टकम् ।
रसप्रस्थत्रयं धात्र्या गुडस्यार्द्धशतं पचेत् ॥ १३० ॥
एतत्कल्याणकं पाण्डु कामलाऽर्शोज्वरापहम् ।
मेहकुष्टक्षयश्वास ग्रहणीघ्नद्रसायनम् ॥ १३१ ॥
इति कल्याणगुडः ।

पुनर्नवा निम्बपटोलशुण्ठी तिक्तामृता दार्व्यभया कषाय ।
सर्वाङ्गशोथोदरकासशूल श्वासान्वितं पांडुगदं निहन्ति ॥१३२॥
यवगोधूमशाल्यन्न रसैर्जाङ्गलजैः समैः ।
मुद्गाढ़कीमसूराद्यै र्यूषो भोजनमिष्यते ॥ १३३ ॥

इति वङ्गसेने पाण्डुरोगकामलाकुम्भकामलाहलीमक निदानचिकित्साधिकारः समाप्तः ॥ ८ ॥

—०—

## अथ रक्तपित्तनिदानमाह ।

घर्मव्यायामशोकाध्व व्यवायैरतिसेवितैः ।
तीक्ष्णोष्णक्षारलवणै रम्लैः कटुभिरेव च ॥ १ ॥

पित्तं विदग्धं स्वगुणैर्विदहत्याशु शोणितम्।
ततः प्रवर्त्तते रक्तं मूर्ध्वञ्चाधो द्विधापि वा॥ २॥
ऊर्ध्वं नासाक्षिकर्णास्यै मेढ्रयोनिगुदैरधः।
कुपितं रोमकूपैश्च समस्तैस्तत्प्रवर्त्तते॥ ३॥
केचिच्चैव यकृत्प्लीह्रा प्रवदन्त्यसृजोगतिम्॥ ४॥
सदनं शीलकामित्वं कण्ठधूमायनं वमिः।
लोहगन्धश्च निःश्वासो भवत्यस्मिन् प्रविष्यति॥ ५॥
सांद्रं सपांडुसस्नेहं पिच्छिलञ्च कफान्वितम्।
श्यावारुणं सफेनञ्च तनुरूक्षञ्च वातिकम्॥ ६॥
रक्तपित्तं कषायाभं कृष्णं गोमूत्रसन्निभम्।
मेचकाऽऽगारधूमाभ मञ्जनाभञ्च पैत्तिकम्॥ ७॥
संसृष्टलिङ्गं संसर्गात् त्रिलिङ्गं सान्निपातिकम्।
ऊर्ध्वङ्गं कफसंसृष्ट मधोगं मारुतानुगम्।
द्विमार्गं कफवाताभ्या मुभाभ्यां तत्प्रवर्त्तते॥ ८॥
ऊर्ध्वं साध्यमधो याप्य मसाध्यं युगपद्गतम्॥ ८॥
एकमार्गं बलवती नातिवेगं नवोत्थितम्।
रक्तपित्तं सुखे काले साध्यं स्यान्निरुपद्रवम्॥ १०॥
एकदोषानुग साध्यं द्विदोषं याप्यमुच्यते।
यत्त्रिदोषमसाध्यं त न्मन्दाग्नेरतिवेगवत्॥ ११॥
व्याधिभि. क्षीणदेहस्य वृद्धस्यानश्नतश्च यत्॥ १२॥
दौर्बल्यं श्वासकास ज्वर वमथुमदा पांडुता दाहमूर्च्छाः।
भुक्ते घोरो विदाहस्त्वधृतिरपि सदा हृद्यतुल्या च पीड़ा।
तृष्णाकोष्टस्य भेदः शिरसि च तपनं पूतिनिष्ठीवनञ्च।
भक्तद्वेषाविपाकौ विकृतिरपि भवेद्रक्तपित्तोपसर्गाः॥ १३॥
मांसप्रक्षालनाभं क्वथितमिव च यत् कर्दमाम्भोनिभं वा।

मेदः पूयासकल्पं यकृदिव यदि वा पक्वजम्बूफलाभम् ॥
यत् कृष्णं यच्च नीलं भृशमतिकुणपं यत्र चोक्ता विकाराः ।
तद्वर्ज्यं रक्तपित्तं सुरपतिधनुषा यच्च तुल्यं विभाति ॥ १४ ॥
येन चोपहतो रक्तं रक्तपित्तेन मानवः ।
पश्येद्दृश्यं वियच्चैव तच्चासाध्यमसंशयः ॥ १५ ॥
लोहितं छर्दयेद्यस्तु बहुशो लोहितेक्षणः ।
लोहितोद्गारदर्शी च म्रियते रक्तपैत्तिकः ॥ १६ ॥
पित्तास्रं शमयेन्नादौ प्रवृत्तं बलिनोऽश्नतः ।
हृत्पाण्डु, ग्रहणीदोष प्लीहगुल्मज्वरादिकृत् ॥ १७ ॥
गलग्रहं पूतिनस्यं मूर्च्छाञ्च ह्यरुचिं तथा ।
कुष्ठानर्शांसि वीसर्पं वर्णनाशं भगन्दरम् ।
बुद्धीन्द्रियोपरोधञ्च कुर्यात् स्तम्भितमादितः ॥ १८ ॥
क्षीणमांसबलं बालं वृद्धं शोषानुबन्धिनम् ।
अवाम्यमविरेच्यञ्च शमनीयैरुपाचरेत् ॥ १९ ॥
ऊर्ध्वं प्रवृत्तदोषस्य पूर्वं लोहितपित्तिनः ।
अक्षीणबलमांसाग्नेः कर्त्तव्यमपतर्पणम् ॥ २० ॥

—o—

## अथ चिकित्सामाह ।

ऊर्ध्वगे तर्पणं पूर्वं कर्त्तव्यञ्च विरेचनम् ।
प्रागधोगमने पेयं वामनञ्च यथा बलम् ॥ २१ ॥
आरग्वधेन धात्र्या वा त्रिवृता पथ्ययाऽथवा ।
विरेचनं प्रयोक्तव्यं शर्करा माक्षिकोत्तरम् ॥ २२ ॥
मुस्तेन्द्रयवयष्ट्याह्व मदनाह्वं पयो मधु ।
शिशिरं वमनं योज्यं रक्तपित्तहरं परम् ॥ २३ ॥

शालिपर्ण्यादिना सिद्धा पेया पूर्वमधोगते।
रक्तातिसारहन्ता च योज्यो विधिरशेषतः॥ २४॥
शालिषष्टिकनीवारकोरदूषमसाधिता।
श्यामाकश्च प्रियंगूश्च भोजनं रक्तपित्तिनाम्॥ २५॥
मसूरमुद्गचणकाः समुकुष्टाढ़कीफलाः।
प्रशस्ताः सूपयूषार्थं कल्पिता रक्तपित्तिनाम्॥ २६॥
दाड़िमामलकं कोलं मम्लार्थं चापि दापयेत्॥
पटोलनिम्बवेत्राग्र प्लक्षवेतसपल्लवाः।
शाकार्थं शाकसात्म्यानां तण्डुली यादयो हिताः॥ २७॥
पारावतकपोतांश्च लावरक्ताक्षवर्त्तकान्।
शशान् कपिञ्जलानेणान् हरिणान् कालपुच्छकान्॥ २८॥
रक्तपित्तहरान् दद्या द्रसांस्तेषां प्रयोजयेत्॥ २९॥
ईषदम्लानऽनम्लांश्च घृतभ्रष्टान् ससैन्धवान्।
कफानुगे यूपशाकं दद्याद्वातानुगे रसम्॥ ३०॥
पथ्यं सतीनयूषेण ससितैर्लाजसक्तुभिः।
जलं खर्जूरमृद्वीका मधुकैः सपरूषकैः॥ ३१॥
ह्रीवेरमुत्पलं धान्यं चन्दनं यष्टिकामृता।
ह्रपोशीरयुतः काथः शर्करामधुसंयुतः॥ ३२॥
रक्तपित्तं जयत्युग्रं तृष्णां दाहं ज्वरं तथा॥ ३३॥
पद्मोत्पलानां किञ्जल्कं पृश्निपर्णी प्रियंगुका।
जले साध्यरसे तस्मिन् पेयास्याद्रक्तपित्तिनाम्॥ ३४॥
चन्दनोशीरलोध्राणां रसे तस्मिन् सनागरे।
किराततिक्तकोशीर मुस्तानां तद्वदेव तु॥ ३५॥
शशः सवास्तुकः शस्तो विबन्धे रक्तपित्तजे।
वातोत्तरे तित्तिरिःस्या दुदुम्बररसे शृतः॥ ३६॥

मयूरस्य च निर्यूहः न्यग्रोधस्य च कुक्कुटः ।
रसो विषो पलादीनां वार्त्ताकशकारी हितो ॥ ३७ ॥
लप्यते तिलसरिद्ध लप्याघ्नं वा कपोदकम् ।
सिद्धं विदारीगन्धाद्यैः शृतशीतमथापि वा ॥ ३८ ॥
प्रियङ्ग्वञ्जनमृल्लोध्रः श्लक्ष्णचूर्णावचूर्णितः ।
वासाक्वाथो रसो वाऽसृक् पित्तजित्ससितामधुः ॥ ३९ ॥
वृषपत्राणि संपीड्य रसं समधुशर्करम् ।
पिबेत्तेन समं याति रक्तपित्तं सुदारुणम् ॥ ४० ॥
पत्रं त्वगेलानतचन्दनानां श्यामासशुण्ठीमधुकोत्पलानाम् ।
श्वाद्वावीवासादिगुणोत्तराणां चूर्णं सिताक्षौद्रसमन्वितानाम् ॥४१॥
दाहे ज्वरे लोहितपित्तयुक्ते कासे क्षये शोणित मूत्रकृच्छ्रे ।
रक्तोऽतिमात्रं पतति मुखेन गुदेऽथ नासाश्रुतिमेढ्योनौ ॥ ४२ ॥
प्रोक्तं पुरा रक्तविनिग्रहार्थं चूर्णं वशिष्टेन महागदघ्नम् ॥
इति पत्रकादिचूर्णम् ।

उत्पलं कुसुमं पद्मं कह्लारं लोहितोत्पलम् ।
मधुकश्चेति पित्तासृक् तृष्णाछर्दिहरो गणः ॥ ४३ ॥
तथा वृषाकषायस्य शर्करा मधुसंयुतम् ।
पाययेत्तेन सद्यो हि रक्तपित्तं प्रशाम्यति ॥ ४४ ॥
आटरूषकनिर्यूहे प्रियंगुमृत्तिकाञ्जने ।
विनीय लोध्रं सक्षौद्रं रक्तपित्तहरं पिबेत् ॥ ४५ ॥
वासाकषायोत्पलमृत्प्रियङ्गु लोध्राञ्जनाम्भोरुहकेशराणि ।
पीत्वा सिताक्षौद्रयुतानि हन्यात् पित्तासृजो वेगमुदीर्णमाशु ॥
वासायां विद्यमानायां साशायां जीवितस्य च ।
रक्तपित्ती क्षयी कासी किमर्थमवसीदति ॥ ४७ ॥
तालीशचूर्णयुक्तः पेयः क्षौद्रेण वासकस्वरसः ।

कफपित्तश्वासतमक स्वरभेदरक्तपित्तहृत्‌ः ॥ ४८ ॥
पाटरूपकन्दिका पथ्या क्वाथः सशर्करम्।
क्षौद्राढ्यः कसनश्वास रक्तपित्तनिबर्हणः ॥ ४९ ॥
शतावरीवराराास्ना काश्मर्यं सपरूपकम्।
पाययेद्रक्तपित्तघ्न सद्यः शूलहरं परम् ॥ ५० ॥
चन्दनेन्द्रयवाः पाठा कटुका सदुरालभा।
गडूचीवासकं लोध्रं पिप्पलीक्षौद्रसंयुतम् ॥ ५१ ॥
कफान्वितं जयेद्रक्तं तृष्णाकासज्वरापहम् ॥ ५१ ॥
पिबेच्छीतकषायं वा जम्ब्वाम्रार्जुनसम्भवम्।
उदुम्बरफलानाञ्च रसं समधुपाययेत् ॥ ५२ ॥
त्रिवृतात्रिफलाश्यामा पिप्पलीशर्करामधु।
मोदकः सन्निपातोर्ध्वं रक्तपित्तज्वरापहः ॥ ५३ ॥
अतसीकुसुमसमङ्गा वटप्ररोहत्वगम्भसा पीता।
प्रशमयति रक्तपित्तं यदि भुङ्क्ते मुद्गयूषेण ॥ ५४ ॥
उशीरकालीयकलोध्रपद्मकं प्रियंगुकाकट्फलशङ्खगैरिकम्।
पृथक् पृथक् चन्दनतुल्यभागिकं सशर्करास्तंडुलधावनप्लुतम् ॥५५॥
रक्तं सपित्त तमकं पिपासा दाहश्च पित्त शमयन्ति सद्यः ॥ ५६ ॥
हृषस्य स्वरसं कृत्वा द्रवैरेभिः प्रयोजयेत्।
प्रियंगुमृत्तिकालोध्र मञ्जनञ्चेति चूर्णयेत् ॥
एतच्चूर्णन्तु पातव्यं रसक्षौद्रसमन्वितम् ॥ ५७ ॥
नासिकामुखपायूभ्यो योनि मेढ्राच्च वेगतः।
रक्तपित्तं स्रवन्ति सिद्ध एष प्रयोगराट् ॥ ५८ ॥
यस्य प्रस्वसनेनैव रक्तं स्रवति वेगतः।
तदप्यनेन चूर्णेण तिष्ठत्येवावचूर्णितम् ॥ ५९ ॥
अभयामधुसंयुक्ता पाचनी दीपनी मता।

श्लेषाणं रक्तपित्तञ्च हन्ति शूलातिसारनुत् ॥ ६० ॥
इक्षूणां मध्यकाण्डानि सकन्दनीलमुत्पलम् ।
केसरं पुण्डरीकस्य मोचं मधुकपद्मके ॥ ६१ ॥
वटप्ररोहशुङ्गाश्च द्राक्षाखर्जूर एव च ।
एतानि समभागानि कषायमवतारयेत् ॥ ६२ ॥
व्युषितं मधुसंयुक्तं पाययेच्छर्करान्वितम् ।
सप्रमेह रक्तपित्तं चिप्रमेतन्नियच्छति ॥ ६३ ॥
लोहगन्धिनि निःश्वासे उद्गारे धूमगन्धिनि ।
पृथ्विकां प्राणमात्रान्तु खादेद्विगुणशर्कराम् ॥ ६४ ॥
कषायैर्विविधैर्योगै र्दीप्ते ऽग्नौ विजिते कफे ।
रक्तपित्तं नचेच्छाम्ये तत्र वातोल्वणं पयः ॥ ६५ ॥
छागं पयः स्यात्परमं प्रयोगे गव्यं शृतं पञ्चगुणे जले वा ।
सशर्करं माक्षिकसम्प्रयुक्तं विदारी गन्धादिगणे शृतं वा ॥ ६६ ॥
यष्टीमधुकार्जुनजीवनीय द्राक्षा बला गोक्षुरकैः शृतं वा ॥ ६७ ॥
द्राक्षायाः फलिनोभिर्वा बलाया मधुकेन वा ।
श्वदंष्ट्रया शतावर्या रक्तजित्साधितं पयः ॥ ६८ ॥
पक्वोदुम्बरकाश्मर्य पथ्या खर्जूरगोस्तनी ।
मधुनाहन्ति संलीढ़ा रक्तपित्तं पृथक् पृथक् ॥ ६९ ॥
खदिरस्य प्रियंगूनां कोविदारस्य शाल्मलेः ।
पुष्पचूर्णन्तु मधुना लिहन्नारोग्यमश्नुते ॥ ७० ॥
वासकस्य रसे पथ्या सप्तधा परिभाविता ।
कृष्णा वा मधुना पीता रक्तपित्तं द्रुतं जयेत् ॥ ७१ ॥

—०—

स्वरसः सरसः प्रोक्तः कल्को दृषदिपेषितः ।
क्वथितस्तु शृतः शीतः शर्वरीसुषितो हिमः ॥ ७२ ॥

द्रव्येण यावता द्रव्य मेकीभूयाऽऽर्द्रतां व्रजेत् ।
तावत्प्रमाणं निर्दिष्टं भिषग्भिर्भावना विधौ ॥ ७३ ॥
क्षीरेण लाक्षां मधुमिश्रितेन प्रपीयजीर्णे पयसान्न मद्यात् ।
उरो निहन्यादुधिरं चतोत्थं कान्तार्जुनानामथवापि कल्कम् ॥७४॥
कल्कं मधूकत्रिफलार्जुनानां निशिस्थितं लोहमये सुपात्रे ।
प्राज्यं विलिह्यानुपिबेत्सुशीतं सशर्करं छागपयः क्षुधार्त्तः ॥ ७५ ॥
अतिनिस्सृतरक्तो वा चौद्रयुक्तं पिबेदनु ।
यकृद्वा भक्षयेदाजं मांसं पित्तसमायुतम् ॥ ७६ ॥
पारावतस्य मांसं वा घृतसिद्धं सशर्करम् ।
भक्षयेन्मधुना शीतं रक्तपित्तनिवारणम् ॥ ७७ ॥
सकफे ग्रथिते रक्ते चारः सचौद्रसर्पिषा ।
मृणालोत्पलपद्मानां किंशुकासनयोस्तथा ॥ ७८ ॥
मधुकस्य प्रियंगूना मवलेहः पृथक् पृथक् ।
प्रायेणोपहृताग्नित्वात् सपित्तमतिसार्य्यते ॥ ७९ ॥
प्राप्नोति चास्यवैरस्यं नवान्नमभिनन्दति ।
नागरेन्द्रयवौ तत्र पातव्यौ तण्डुलांवुना ॥
सिद्धा यवागूर्जीर्णे वा चाङ्गेरीतक्रदाडिमैः ॥ ८० ॥
नासाप्रवृत्तरुधिरं घृतभ्रष्टं सुचूर्णपिष्टमामलकम् ।
सेतुरिव तोयवेगं रुणद्धि मूर्द्धिप्रलेपेन ॥ ८१ ॥
घ्राणप्रवृत्ते जलमाशुदेय सशर्करं नासिकया पयो वा ।
द्राचारसं चीरघृतं पिबेद्वा सशर्करं चेक्षुरसं पिबेद्वा ॥८२॥
रसो दाडिमपुष्पोत्थो रसो पूर्वाभवोऽथवा ।
आम्रास्थिजः पलाण्डोर्वा नासिकास्रुतरक्तजित् ॥ ८३ ॥
रसो दाडिमपुष्पस्य दूर्वारससमन्वित. ।
आलक्तकरसोपेतः पथ्या रससमन्वितः ॥ ८४ ॥

योजितौ नासयोः क्षिप्रं त्रिदोषमपि दारुणम्।
नासारक्तं प्रवृत्तन्तु हन्यादिति किमद्भुतम् ॥ ८५ ॥
दूर्वाभयादाड़िमपुष्पकानां लाक्षामलक्याः स्वरसेन नस्यम्।
दिनत्रयं यः कुरुते प्रभाते नासाऽसृजं नाम रुजं निहन्ति॥

—०—

श्यामाऽश्व मोरटानन्ता शर्कराभिः शृतं घृतम्।
सर्वदोषहरं हृद्यं नस्यं नासागतेऽसृजि ॥ ८७ ॥

इति श्यामाघृतम्।

दूर्वाभव्यफलं माष कुलित्थौ वंशपत्रिका।
जलस्थलोद्भवौ कर्ण मोचकौ खरमञ्जरी ॥ ८८ ॥
दण्डोत्पलस्य मूलन्तु निःक्वाथ्याष्टगुणेऽम्भसि।
तत्पादशेषितं तैलं तुल्यं कृत्वा विपाचयेत्।
तत्तैलं प्रतिमर्षेन आनाहाख्यं गदं जयेत् ॥ ८८ ॥

इति दूर्वाद्यं तैलम्।

रक्तातिसारिकं कर्म रक्ते स्यात्पायुगामिनि।
पित्तप्रमेहिकं कर्म मेढ्रगे विनियोजयेत् ॥ ९० ॥

—०—

शृतं क्षीरं पिवेच्चापि पञ्चमूल्या तृणाह्वया।
गोकण्टकाना स्वरसैः पर्णिनीभिस्तथा पयः ॥ ९१ ॥
हन्त्याशुरक्तं सरुजं विशेषान्मूत्रमार्गगम्।
मेढ्रगे विहितश्चापि बस्तिरुत्तरसंज्ञिकः ॥ ९२ ॥

इति तृणपञ्चमूलीक्षीरम्।

—०—

चन्दनं नलदं लोध्रं मुशीरं पद्मकेशरम्।
नागपुष्पञ्च विल्वञ्च भद्रमुस्तं सशर्करम् ॥ ९३ ॥

ह्रीवेरञ्चैव पाठा तु कुटजोत्पलमेव च।
शृङ्गवेरं सातिविषा धातकी सरसाञ्जनम् ॥ ८४ ॥
आम्रास्थि जम्बूसारास्थि तथा मोचरसोऽपि च।
नीलोत्पलं समङ्गाञ्च सूक्ष्मैला दाड़िमत्वचम् ॥ ८५ ॥
चतुर्विंशतिरेतानि समभागानि कारयेत्।
तण्डुलोदकसंयुक्तं मधुना सह योजयेत् ॥ ८६ ॥
योगो लोहितपित्तानां मर्शिणां ज्वरिणां तथा।
मूर्च्छामेदोपसृष्टानां तृष्णार्त्तानां प्रदापयेत् ॥ ८७ ॥
अतीसारं तथा छर्दिं स्त्रीणाञ्च रजसो ग्रहम्।
प्रच्युतानाञ्च गर्भाणां स्थापनं परमुच्यते ॥ ८८ ॥
अश्विनोः सम्मतो योगो रक्तपित्तनिवर्हणः ॥

इति चन्दनाद्यं चूर्णम्।

दूर्वासोत्पलकिञ्जल्कं मञ्जिष्ठा सैलवालुकम्।
शिवा लोध्रमुशीरञ्च मुस्तं चन्दनपद्मकम् ॥ ८९ ॥
विपचेत्कार्षिकैरेतैः सर्पिराजं सुखाग्निना।
तण्डुलाम्बु त्वजाक्षीरं दद्यादेवं चतुर्गुणम् ॥ १०० ॥
द्राक्षायष्ट्याह्वमधुकं काश्मरी चन्दनं सितम्।
पिष्ट्वा तत्कार्षिकैर्द्रव्यैः घृतप्रस्थं विपाचयेत् ॥ १०१ ॥
तत्पानं वमतो रक्तं नावनं नासिकागते।
कर्णाभ्यां यस्य गच्छेच्च तस्य कर्णौ प्रपूरयेत् ॥ १०२ ॥
चक्षुः स्राविणि रक्ते च पूरयेत्तेन चक्षुषी।
मेढ्रपायुप्रवृत्ते च वस्तिकर्म च तद्धितम् ॥
रोमकूपप्रवृत्ते च तदभ्यङ्गे प्रयोजयेत् ॥ १०३ ॥

इति दूर्वाद्यं घृतम्।

दूर्वासेन्दीवरं पद्मं मञ्जिष्ठा शैलवालुका।

रास्नामुस्ता तयोशीरं चन्दनं मधुकाह्वयम् ॥ १०४ ॥
पद्मकं लोध्रकुष्ठञ्च चन्दनं रजनीद्वयम् ।
काकोल्यौ शारिवे चेति कल्कैरेभिश्च कार्षिकैः ॥ १०५ ॥
घृतप्रस्थमजाक्षीरं तंडुलोदकसंयुतम् ।
दूर्वायाः स्वरसेनापि साधितं मृदुनाग्निना ॥ १०६ ॥
तत्पानं वमतो रक्तं नावनं नासिका गते ।
कर्णाभ्यां यस्य गच्छेच्च तस्य कर्णौ प्रपूरयेत् ॥ १०७ ॥
रक्तस्राविणि चार्शांसि लेपयेत्तेन सर्पिषा ।
मेढ्रपायुप्रवृत्ते तु तदभ्यङ्गे प्रयोजयेत् ॥ १०८ ॥
पित्तजेषु विकारेषु स्फोटादिषु च बुद्धिमान् ।
विषेषु कीटदोषेषु विसर्पेषु प्रयोजयेत् ॥ १०९ ॥

इति महादूर्वाद्यं घृतम् ।

न्यग्रोधो दुम्बराश्वत्थ शुङ्गानाऽऽपोथ्य वासयेत् ।
अहोरात्रं जले तस्मिं घृतं तेनाम्भसा पचेत् ॥ ११० ॥
तदर्द्धं शर्करायुक्तं लिह्येत् क्षौद्रपादिकम् ।
अधो वा यदि वा चोर्द्ध्वं रक्तं यस्य प्रवर्त्तते ॥ १११ ॥
सुस्त तस्याशु युज्येत अग्निवेश्मवचो यथा ॥

इति शुङ्गाद्य घृतम् ।

शतावरीदाडिमतिन्तिडीकं काकोलीमेदे मधुकं विदारीम् ।
पिष्ट्वा तु मूलं फलपूरकस्य घृतं पचेत् क्षीरचतुर्गुणञ्च ॥ ११२ ॥
कासज्वरानाह विबन्धशूलं तद्रक्तपित्तञ्च घृतं निहन्ति ॥११३॥

इति शतावरीघृतम् ।

शतावर्यास्तु मूलानां रसं प्रस्थद्वय मतम् ।
तत्समञ्च भवेत् क्षीरं घृतप्रस्थं विपाचयेत् ॥ ११४ ॥
जीवकर्षभकौ मेदा महामेदा तथैव च ।

काकोलीक्षीरकाकोली स्वदंष्ट्रामधुकं तथा ॥ ११५ ॥
मुद्गपर्णी माषपर्णी विदारीरक्तचन्दनम्।
शर्करामधुसंयुक्तं सिद्धं विस्रावयेद् घृतम् ॥ ११६ ॥
रक्तपित्तविकारेषु वातरक्तगदेषु च।
क्षीणशुक्रे प्रदातव्यं वाजीकरणमुत्तमम् ॥ ११७ ॥
अङ्गदाहं शिरोदाहं ज्वरं पित्तसमुद्भवम्।
योनिशूलञ्च दाहञ्च मूत्रकृच्छ्रञ्च पैत्तिकम् ॥ ११८ ॥
एतान् रोगान्निहन्त्याशु छिन्नाभ्राणीव मारुतः।
शतावरीसर्पिरिदं बलवर्णाग्निवर्द्धनम् ॥ ११९ ॥
शतावर्यादिके चाज्ये शर्करामधुयादिकम्।

इति बृहच्छतावरीघृतम्।

वासां सशाखां सपलाशमूलां कृत्वा कषायं कुसुमानि चास्याः।
प्रदाय कल्कं विपचेद् घृतं तत् सक्षौद्रमाश्वेव निहन्ति रक्तम् ॥१२०॥
शाणस्य कोविदारस्य वृषस्य ककुभस्य च।
कल्कान् कृत्वा प्रशंसन्ति पुष्पकञ्च चतुष्पलम् ॥ १२१ ॥

इति वासाद्यं घृतम्।

समूलपत्रशाखन्तु वृषं धौतं सुकुट्टितम्।
स्वरसं तस्य निष्काश्य कषायं वा जले शृतम् ॥ १२२ ॥
चतुर्गुणे जले तस्मिन् घृतप्रस्थं विपाचयेत्।
कुसुमैर्मञ्जरीभिश्च कल्कयेद्भिः शुभाग्निना ॥ १२३ ॥
विघट्टयेत् काष्ठदर्व्या पात्रे लोहमये दृढे।
अनेन विधिना पक्वं मधुपादसमायुतम् ॥ १२४ ॥
पिबेत्कासे क्षये श्वासे रक्तपित्ते हलीमके।
शिरोपघाते तिमिरे तथा मन्दे च पावके ॥ १२५ ॥

न तुल्यमस्तिभैषज्यं विशेषाद्रक्तपित्तिनाम्।

इति वासाघृतम्।

वासाकल्करसे सर्पिः पयसा सह पाचयेत्।
कल्कैर्भूनिम्बकुटज मुस्तयष्ट्याह्वचन्दनैः॥ १२६॥
उशीरमधुकानन्ता शारिवोत्पलपद्मकैः।
त्रायन्त्युत्पलमूर्वाभि र्मदयन्त्याश्च पल्लवैः॥ १२७॥
सिताक्षौद्रयुतं हन्या द्रक्तपित्तं सुदारुणम्।
पैत्तिकं वातिकं गुल्मं स्वरभेदं हलीमकम्॥ १२८॥
ये चान्ये कीर्त्तितारोगा रक्तपित्तकफाश्रया।
तान् सर्वान्नाशयत्येतत्पीयमानं हिताशिना॥ १२९॥

इति महावासाद्यं घृतम्।

अश्वगन्धापलशतं तदर्द्धं गोक्षुरस्य च।
शतावरीविदारी च शालिपर्णीबलामृता॥ १३०॥
अश्वत्थस्य च शुङ्गानि पद्मबीजं पुनर्नवा।
काश्मर्याश्च फलञ्चैव माषबीजं तथैव च॥ १३१॥
पृथग्दशपलान् भागा श्चतुर्द्रोणेऽम्भस पचेत्।
द्रोणशेषे रसे तस्मिन् पूतशीते प्रदापयेत्॥ १३२॥
मृद्वीकापद्मकं कुष्ठं पिप्पलीरक्तचन्दनम्।
पत्रकं नागपुष्पञ्च आत्मगुप्ताफलं तथा॥ १३३॥
नीलोत्पलं शारिवे द्वे जीवनीयान्यशेषत।
पृथक्कर्षसमाभागा शर्करायाः पलद्वयम्॥ १३४॥
रसः स्यात्पौण्ड्रकेक्षूणा माढकाढकमाहरेत्।
चतुर्गुणेन पयसा घृतप्रस्थं विपाचयेत्॥ १३५॥
रक्तपित्तं क्षतक्षीणं कामलां वातशोणितम्।
हलीमकं पाण्डुरोगं वर्णभङ्गं स्वरक्षयम्॥ १३६॥

मूलकृच्छ्रसुरोदाहं पार्श्वशूलञ्च नाशयेत्।
एतद्राज्ञां प्रदातव्यं बह्वन्तः पुरचारिणाम् ॥ १३७ ॥
स्त्रीणाञ्चैवाप्रजातानां दुर्बलानाञ्च देहिनाम्।
क्लीवानामल्पशुक्राणां जीर्णानामल्परेतसाम् ॥ १३८ ॥
श्रेष्टं बलकरं धन्यं हृद्यं हृष्यं रसायणम्।
ओजस्तेजस्करं स्वर्यमायुष्यं प्राणवर्द्धनम् ॥ १३९ ॥
सद्यंहयति शुष्कांश्च पुरुषान्दुर्बलेन्द्रियान्।
सर्वरोगविनिर्मुक्त स्तोयसिक्तो यथा द्रुमः।
कामदेव इति ख्यातं सर्पिरुक्तं महागुणम् ॥ १४० ॥

इति कामदेवघृतम्।

अनन्ताशारिवापद्मं सलोध्रं नीलमुत्पलम्।
कल्कैरेतैः पचेत्सर्पिः सक्षीरं नावनं परम् ॥ १४१ ॥
रक्तपित्तं प्रशमयेन्नारीणां प्रदरं तथा ॥ १४२ ॥

इत्यनन्ताद्यं घृतम्।

हस्तपादाङ्गदाहेषु ज्वरे रक्ते तथोर्ध्वगे।
वासाघृतं शतावर्य्या सिद्धं वा परमं हितम् ॥ १४३ ॥

—०—

दूर्वामधुकमञ्जिष्ठा द्राक्षेक्षुरसचन्दनैः।
शारिवाद्वयनक्ताह्वैस्तैलप्रस्थं विपाचयेत् ॥ १४४ ॥
क्षीरं चतुर्गुणं दत्वा सिद्धमभ्यञ्जने हितम्।
रक्तपित्तहरं ह्येतद्वल्यं वातघ्नमुत्तमम्।
दूर्वातैलमितिख्यातं शशिवर्णकरं महत् ॥ १४५ ॥

इति दूर्वाद्यं तैलम्।

मधुकं मधुकं द्राक्षात्वक्षीरीपिप्पली तथा।
त्रिजातस्य त्रयः कर्षाः शर्करायाः पलद्वयम् ॥ १४६ ॥

द्राचामधुकखर्ज्जूरं पलांश श्लक्ष्णचूर्णितम् ।
मधुनागुटिकावद्धाः घ्नन्तीह पित्तशोणितम् ॥ १४७ ॥
कासश्वासारुचिच्छर्दि मूर्च्छाहिक्कामदभ्रमान् ।
चतक्षयं स्वरभ्रंशं प्लीहान दीर्घमारुतान् ॥ १४८ ॥
रक्तनिष्टीव हृत्पार्श्वं रुक्पिपासाज्वरानपि ।

इति मधुकाद्यागुटिका ।

ह्रद्यं पुरातनं वापि कुष्माण्डं कठिनं दृढम् ।
त्वक्सिराभिविनिर्मुक्तं मन्त्रबीजैर्विवर्जितम् ॥ १४९ ॥
स्विन्नं सुपिष्टं दृषदि वस्त्रेणैव तु पीडितम् ।
विशुष्कमातपे किञ्चिद् गृह्णीयात्तुतुला तत ॥ १५० ॥
औदुम्बरे कटाहे तु पचेत्प्रस्थं तु सर्पिष ।
कृत्वा चौद्रनिभं तस्मिन् चिपेत् खण्डशत भिषक् ॥ १५१ ॥
कूष्माण्डपीडनात्तोयं तेनैव विपचेत्पुन ।
सुतसर्पिर्यदा पश्ये त्तदा पक्वं विनिर्दिशेत् ॥ १५२ ॥
सुस्विन्नपाके निष्पन्ने सर्पिरर्द्धं चिपेन्मधु ।
कणापलद्वयं चूर्णं जीरकञ्च सनागरम् ॥ १५३ ॥
त्रिसुगन्धं सधान्याकं मरिचं शुक्तिपाणिकम् ।
खादेदग्निबलापेची पथ्यभुक्तानया नर ॥ १५४ ॥
कासं श्वासं चतचीणं यक्ष्माणं हृदये रुजम् ।
रक्तपित्तं ज्वरं दाहं तृट्छर्दिश्च विसुञ्चति ॥ १५५ ॥
वैस्वर्यं पीनसं कार्श्यं जीमूतमिव मारुत ।

इति खण्डकूष्माण्डकम् ।

कूष्माण्डकात्पलशतं सुस्विन्नं निष्कुलीकृतम् ।
पचेत्तप्ते घृतप्रस्थे शनैस्ताम्रमये कटे ॥ १५६ ॥
यदा मधुनिभः पाक स्तदा खण्डशतं न्यसेत् ।

पिप्पलीशृङ्गवेराभ्यां द्वेपले जीरकस्य तु।
त्वगेलापत्रमरिचं धान्यकानां पलार्द्धकम् ॥ १५७ ॥
न्यसेच्चूर्णीकृतं तत्र दर्व्यासंघट्टयेत्ततः।
ततपक्वं स्थापयेद्भाण्डे दत्वा चौद्रं घृतार्द्धकम् ॥ १५८ ॥
तद्यथाऽग्निबलं खादेद्रक्तपित्तीक्षतक्षयी।
कासश्वासतमश्छर्द्दि तृष्णाज्वरनिपीड़ितः ॥ १५९ ॥
हृद्यं पुनर्नवकरं बलवर्णप्रसादनम्।
उरःसन्धानकरणं बृंहणं स्वरबोधनम् ॥ १६० ॥
अश्विभ्यां निर्मितं श्रेष्ठं कुष्माण्डकरसायनम्।

इति खण्डकूष्माण्डकः।

पञ्चाशच्च पलं खिन्नं कूष्माण्डात्तस्यमाज्यतः।
पक्वं प्रस्थगतं खंडं वासाक्वाथाढके पचेत् ॥ १६१ ॥
शुभाधात्रीघनैर्भार्गी त्रिसुगन्धं च कर्षिकैः।
शैलेयं विश्वधान्याकं मरिचैश्च पलांशकैः ॥ १६२ ॥
पिप्पलीकुडवश्चैव मधुमानी प्रदापयेत्।
कासं श्वासं चयं हिक्कां रक्तपित्तं हलीमकम्।
हृद्रोगमम्लपित्तञ्च पीनसञ्च व्यपोहति ॥ १६३ ॥

---

युक्तसर्पिपिकूष्माण्डे पाके वन्धेनुमुद्रया ॥ १६४ ॥

इति वासाकूष्माण्ड।

कूष्माण्डकविधानेन सूरणं परिकीर्त्तितं।
अर्शसां मूढवातानां मन्दाग्निनां विशेषतः ॥ १६५ ॥

इति सूरणपाकः।

क्षीरमिक्षुरसं यूषं पञ्चमूलीकषायजम् ।
अनुपाने प्रयोक्तव्यं खण्डकूष्माण्डकादिषु ॥ १६६ ॥

—०—

तुलामादाय वासायाः पचेदष्टगुणे जले ।
तेन पादावशेषेण पाचयेदाढकं भिषक् ॥ १६७ ॥
चूर्णानामभयानाञ्च खण्डाच्छुद्धाच्छतं तथा ।
द्वे पले पिप्पलीचूर्णात् सिद्धशीते च माक्षिकात् ॥ १६८ ॥
कुडवं पलमात्रन्तु चातुर्जातन्तु चूर्णितम् ।
क्षिप्त्वा विलोडितं खादेद्रक्तपित्ती यथानलम् ॥ १६९ ॥
कासश्वासक्षतोरस्क यक्ष्मणा च प्रपीडितः ॥ १७० ॥

इति वासाखण्ड ।

—०—

वासाकुटजकूष्माण्ड शतपत्त्रा सहासुता ।
नित्यमार्द्राः प्रयोक्तव्या मानतो द्विगुणा मताः ॥ १७१ ॥

—०—

क्षीरं चतुर्गुणं लेह्यात् घृतं द्विगुणमुत्तमम् ।
चूर्णपादञ्च वैङ्गं दद्यान्मधुसिते समे ॥ १७२ ॥
एकीकृत्य पचेल्लेहं खादेदग्निबलं यथा ।
रक्तपित्तं जयत्युग्रं खण्डखाद्यं रसं स्मृतम् ॥ १७३ ॥

इति शर्करासमं लेहम् ।

अमृता त्रिवृता दन्ती त्रायमाणी खदिरो हय ।
चित्रको भृङ्गराजश्च कोकिलाक्ष मपुष्कर ॥ १७४ ॥
पुनर्नवाबलाकाया: शिग्रुमोरटदारका: ।

क्षुद्रीरविरसो दर्भः कुशास्थि सह पीवरी ॥ १७५ ॥
गवाक्षीवरुणः कन्द स्वविकातालमूलिका।
नागबलाकणामूलं कुष्टं ब्राह्मणयष्टिका ॥ १७६ ॥
पलोन्मितानि सर्वाणि जलद्रोणे विपाचयेत्।
अष्टभागावशिष्टन्तु कषायमुपकल्पयेत् ॥ १७७ ॥
त्रिफलायास्तथा प्रस्थं जलाष्टगुणपाचितम्।
तस्मादष्टावशेषस्तु कषायस्तु परिस्रुतः ॥ १७८ ॥
माक्षिकेन हतस्यापि पुटितस्य यथाविधिः।
आयसं चूर्णितं पूतं पलं शोड़शसम्मितम् ॥ १७९ ॥
पलान्यभ्रस्य चत्वारि तावन्ति गन्धकस्य च।
द्वे पले च रसस्यापि पुटितस्य यथाविधिः ॥ १८० ॥
गुड़स्य च पलान्यष्टौ सितायाश्चाथ पैत्तिके।
रक्तपित्तेऽथ खण्डस्य मत्स्यण्ड्या वाथ कार्यिके ॥ १८१ ॥
गुग्गुलोर्द्विपलं दत्वा प्रस्थार्धं सर्पिषस्तथा।
एवं पाकविधिज्ञस्तु पचेल्लौहे समाहितः ॥ १८२ ॥
शीतेऽवतार्यमधुनः क्षिपेदष्टपलं भिषक्।
माक्षिकस्य विशुद्धस्य द्विपलं रजसः क्षिपेत् ॥ १८३ ॥
शिलाजतोस्तथा चूर्णं पलार्द्धं सम्मितं भिषक्।
अथैषां प्रक्षिपेच्चूर्णं पलमात्रं पृथक् पृथक् ॥ १८४ ॥
त्रिकटुत्रिफलादन्ती त्रिवृता जीरकद्वयम्।
शायतिसारं तालीशं धान्यकं मधुयष्टिका ॥ १८५ ॥
यमारसांजनं शृङ्गी चित्रकं चव्यमुस्तकम्।
चातुर्जातककाङ्कोलं लवङ्गं जातिकं फलम् ॥ १८६ ॥
द्राक्षाखर्जूरकं चूर्णं पलार्धं सम्मितं भिषक्।
एषः लोहवरः श्रीमान् सर्वव्याधिप्रणाशनः ॥ १८७ ॥

यत्र यत्र प्रयुञ्जीत तत्तदाशु विनाशयेत्।
रक्तपित्तेऽम्लपित्ते च क्षये कुष्ठे ज्वरेऽरुचौ ॥ १८८ ॥
दुर्नाम्नि चोदरे शूले ग्रहण्यामामवातके।
वातरक्ते मूत्रकृच्छ्रे प्रमेहे शर्करागदे ॥ १८९ ॥
अस्योपयोगान्मनुजा स्तारुण्यमधिगच्छति।
ब्रह्मचर्येण कुर्वीत भुतं माक्षिकसर्पिषा ॥ १९० ॥
माषकं रत्तिका ह्यग्रा यावदष्टौ च माषकाः।
वर्जयेद् द्विदलं सूपं मांसं चानूपसम्भवम् ॥ १९१ ॥
ककारपूर्वकं सर्वं प्रयत्नेन विवर्जयेत्।
अमृताख्यो वरो लोहः सर्वत्रैवोपयुज्यते ॥ १९२ ॥
अनेन जन्तवः स्वस्था नीरुजः सन्ति नान्यथा।

इत्यमृताख्यं लोहरसायनम्।

शतावरीछिन्नरुहा वृषमण्डतिकाबला।
तालमूली च गायत्री त्रिफलायास्त्वचस्तथा ॥ १९३ ॥
भार्गीपुष्करमूलस्य पृथक् पञ्चपलानि तु।
जलद्रोणे विपक्तव्य मष्टभागावशेषितम् ॥ १९४ ॥
दिव्यौषधि हतस्यापि माक्षिकेन हतस्य च।
पलद्वादश देयं रुक्मलौहस्य चूर्णितम् ॥ १९५ ॥
खण्डतुल्यं घृतं देयं पलषोडशकं बुधैः।
पचेत्ताम्रमये पात्रे गुडादेः पाकवद्यथा ॥ १९६ ॥
मस्यार्द्धं मधुनो देयं शुभाश्मजतुकं त्वचम्।
शृङ्गं विडङ्ग कृष्णाच शुण्ठ्यजाजी पलं पलम् ॥ १९७ ॥
त्रिफलाधान्याकं पत्र द्वयं मरिचकेशरम्।
चूर्णं दत्वा समथितं स्निग्धभाण्डे निधापयेत् ॥ १९८ ॥

यथा कालं प्रयुञ्जीत विड़ालपदकं ततः।
गव्यचीरानुपानञ्च सेव्य मांसरसं पयः॥ १८८॥
गुरुवृष्यान्नपानानि स्निग्धं मांसादि वृंहणम्।
रक्तपित्तं प्रदुष्टञ्च चयं कासं विशेषतः॥ २००॥
वातरक्तं प्रमेहञ्च शीतपित्तं वमिं क्लमम्।
श्वयथुं पाण्डुरोगञ्च कुष्टं प्लीहोदरं तथा॥ २०१॥
आनाहं रक्तस्रावञ्च अम्लपित्तं निहन्ति च।
चक्षुष्यं वृंहणं वृष्यं माङ्गल्यं प्रीतिवर्धनम्॥ २०२॥
आरोग्यं पुत्रदं श्रेष्ठं कायाऽग्निबलवर्द्धनम्।
श्रीकारं लाघवकरं खण्डखाद्यं प्रकीर्त्तितम्॥ २०३॥
छागं पारावतं मांसं तित्तिरिक्रकराः शशाः।
कुलिङ्गाः कृष्णसाराये तेषां मांसानि योजयेत्॥ २०४॥
नारिकेरपयः पानं सुनिषण्णकवास्तुकम्।
शुष्कमूलकजीवाख्य पटोलं वृहतीफलम्॥ २०५॥
फलं वार्त्ताकुपक्वाम्र खर्जूरं स्वादुदाडिमम्।
ककारपूर्वकं यच्च मांसं चानूपसम्भवम्॥ २०६॥
वर्जनीयं विशेषेण खण्डखाद्य समश्नता।

इति खण्डखाद्यो लेहः।

यच्च पित्तज्वरे प्रोक्तं वहिरन्तश्च भेषजम्।
रक्तपित्ते हितं तच्च चीणचतहितं च यत्॥ २०७॥
शीतावगाहसेकाद्याः प्रशस्तारक्तपित्तिनाम्।
दाडिमामलकं विद्वानम्लसात्म्याय दापयेत्॥ २०८॥
शालिषष्टिकनीवार चणमुद्गमसूरकाः।
श्यामाकाश्च प्रियङ्गवश्च भोजनं रक्तपित्तिनाम्॥ २०८॥
पटोलनिम्बवेत्राग्र तण्डुलीयादयो हिताः।

पारावतकपोतांश्च लावान् रक्ताक्षवर्त्तकान् ॥ २१० ॥
शशान्कपिञ्जलानैणा हरिणान् कालपुच्छकान् ।
रक्तपित्तहरान्विद्या द्रसांस्त्वेषां प्रयोजयेत् ॥
ईषदम्लाननम्लांश्च घृतभृष्टान् सशर्करान् ॥ २११ ॥
सामान्यो हितयोगेषु द्रव्यशक्तिं समीक्ष्य हि ।
प्रयोज्यो रक्तपित्तादौ योगो वातादिजे गदे ॥ २१२ ॥

## इति वङ्गसेने रक्तपित्तनिदानचिकित्साधिकार समाप्तः ॥ ८ ॥

---

## अथ राजयक्ष्मनिदानमाह ।

वेगरोधात् क्षयाच्चैव साहसाद्विषमाशनात् ।
त्रिदोषो जायते यक्ष्मा गदो हेतु च तुष्टयात् ॥ १ ॥
कफप्रधानैर्दोषैस्तु रुद्धेषु रसवर्त्मसु ।
अतिव्यवायिनो वापि क्षीणेरेतस्यऽनन्तराः ।
क्षीयन्ते धातवः सर्वे ततः शुष्यति मानवः ॥ २ ॥

श्वासाङ्गसादकफसंस्रवतालुशोष
वम्यग्निसादमदपीनसकासनिद्राः ।
शोषे भविष्यति भवन्ति स चापि जन्तुः
शुक्ले क्षणो भवति मांसपरोरिरं सः ॥ ३ ॥
स्वप्नेषु काकशुकशल्लकिनीलकण्ठ
गृध्रास्तथैव कपयः कृकलासकाश्च ।
तं वाहयन्ति सनदीर्विजलाश्च पश्ये-
च्छुष्कांस्तरूनपवनधूमदवार्दितांश्च ॥ ४ ॥

अंसपार्श्वाभितापश्च सन्तापः करपादयोः।
ज्वरः सर्वाङ्गगश्चेति लक्षणं राजयक्ष्मणः॥ ५॥
कासो ज्वरः पार्श्वशूलं स्वरभेदो मद्यारुचिः।
अग्निमान्द्यं विजानीया लक्षणं राजयक्ष्मणः॥ ६॥
स्वरभेदोऽनिलाच्छूलं सङ्कोचश्चांसपार्श्वयोः।
ज्वरो दाहोऽतिसारश्च पित्ताद्रक्तस्य चागमः॥ ७॥
शिरसः परिपूर्णत्व मभक्तच्छन्द एव च।
कासः कण्ठस्य चोद्धंसो विज्ञेयः कफकोपतः॥ ८॥
भक्तद्वेषो ज्वरः कासः श्वासः शोणितदर्शनम्।
स्वरभेदश्च जायन्ते षड्रूपे राजयक्ष्मणि॥ ९॥
एकादशभिरेभिर्वा षड्भिर्वापि समन्वितम्।
कासातिसारपार्श्वार्त्ति स्वरभेदारुचिज्वरैः॥ १०॥
त्रिभिर्वा पीडितं लिङ्गैः ज्वरकासासृगामयैः।
जह्याच्छोषार्दितं जन्तुं इच्छन् विपुलं यशः॥ ११॥
सर्वैरर्द्धैस्त्रिभिर्वापि लिङ्गैर्मांसबलक्षयैः।
युक्तो वर्ज्यश्चिकित्स्यस्तु सर्वरूपोऽप्यतोऽन्यथा॥ १२॥
महाशनं क्षीयमाण मतिसारप्रपीडितम्।
शूनमुष्कोदरञ्चैव यक्ष्मिणं परिवर्जयेत्॥ १३॥
शुक्लाक्षमन्नद्वेष्टार मूर्ध्वश्वासनिपीड़ितम्।
कृच्छ्रेण बहुमेहंतं यक्ष्माहन्तीह मानवम्॥ १४॥
परं दिनसहस्रन्तु यदि जीवति मानवः।
सुभिषग्भिरुपक्रान्तस्तरुणः शोषपीडितः॥ १५॥
उपक्रमेदात्मवन्तं दीप्ताग्निमकृशं नरम्॥ १६॥
व्यवायशोकवार्धक्य व्यायामाध्वप्रशोषितान्।
व्रणोरःक्षतसंज्ञौ च शोषिणो लक्षणैः शृणु॥ १७॥

व्यवायशोषी शुक्रस्य चयलिङ्गैरुपद्रुतः।
पांडुदेहो यथा पूर्वं क्षीयन्ते चास्य धातवः॥ १८॥
प्रध्यानशीलः स्रस्ताङ्गः शोकशोष्यपि तादृशः।
विना शुक्रक्षयक्षतै र्विकारैरुपलक्षितः॥ १९॥
जराशोषी कृशो मन्दो नष्टबुद्धिबलेन्द्रियः।
कम्पनोऽरुचिमान् भिन्न कांस्यपात्रहतस्वरः॥ २०॥
ष्ठीवति श्लेष्मणाहीनो गौरवारुचिपीडितः।
संप्रस्रुतास्यनासाक्षः शुष्करूक्षमलच्छविः॥ २१॥
अध्वशोषी च स्रस्ताङ्गः संभृष्टपरुषच्छविः।
प्रसुप्तगात्रावयवः शुष्कक्लोमगलाननः॥ २२॥
व्यायामशोषीभूयिष्ट मेभिरेव समन्वितः।
लिङ्गैरुरःक्षतकृतैः संयुक्तश्च क्षतं विना॥ २३॥
रक्तक्षयाद्वेदनाभि स्तथैवाहारयन्त्रणात्।
व्रणितस्य भवेच्छोषः स चासाध्यतमो मतः॥ २४॥

—०—

## अथ चिकित्सामाह।

व्यवायशोषिणां क्षीररसमांसान्यभोजनैः।
सकलैर्मधुरैर्हृद्यैः जीवनीयैरुपाचरेत्॥ २५॥
हर्षणाश्वासनैः क्षीरैः स्निग्धैर्मधुरशीतलैः।
दीपनैर्लघुभिश्चान्नैः शोकशोषमुपाचरेत्॥ २६॥
आस्यासुखैर्दिवास्वप्न शीतैर्मधुरबृंहणैः।
तक्रमांसरसाहारै रध्वशोषिणमाचरेत्॥ २७॥
व्रणशोषं जयेत् स्निग्धै र्दीपनैः स्वादुशीतलैः।
ऐणदक्षैरनम्लैर्वा यूषमांसरसादिभिः॥ २८॥

व्यायामशोषिणं स्निग्धैः क्षतघ्नप्रहितैर्हिमैः।
उपाचरेज्जीवनीयै विधिना श्लैष्मिकेन तु॥ २९॥
बलिनो बहुदोषस्य पञ्चकर्माणि कारयेत्।
यक्ष्मिणः क्षीणदेहस्य तत्कृतं स्याद्विषोपमम्॥ ३०॥
शुक्रायत्तं बलं पुंसां मलायत्तञ्च जीवितम्।
अतो विशेषात् संरक्षेद् यक्ष्मिणो मलरेतसी॥ ३१।
शालिषष्टिकगोधूम यवमुद्गादयः शुभाः।
मद्यानि जाङ्गलाः पक्षि मृगाः शस्ताविशोषिताः॥ ३२॥
मूलकानां कुलित्थानां यूषैर्वा सूपसंस्कृतैः।

—०—

सपिप्पलीकं सयवं सकुलित्थं सनागरम्।
दाडिमामलकोपेतं स्निग्धमाजं रसं पिबेत्॥ ३३॥
येन षड्विनिवर्त्तन्ते विकाराः पीनसादयः॥ ३४॥
द्रव्यतो द्विगुणं मांसं सर्वतोऽष्टगुणं जलम्।
पादस्थं संस्कृतं चाज्यं षडङ्गो यूष उच्यते॥ ३५॥

इति षडङ्गयूषः।

धान्यकं पिप्पली विश्व दशमूलीजलं पिबेत्।
पार्श्वशूलज्वरश्वास पीनसादि निवर्त्तये॥ ३६॥
अश्वगन्धामृता भार्गी दशमूलीवचाह्वया।
पुष्करातिविषैर्घ्नन्ति क्षयं क्षीररसाशिनः॥ ३७॥
कपिमांसं समादाय स्वच्छचूर्णन्तु कारयेत्।
तत्पिबेत् क्षीरसंयुक्तं क्षयरोगहरं परम्॥ ३८॥
छागिनं छागमांसन्तु शुद्धचूर्णीकृतं शुभम्।
अलाचीरेण पातव्यं क्षयव्याधिविनाशनम्॥ ३९॥
दशमूलवचारास्ना पुष्करसुरदारुनागरैः क्वथितम्।

पेयं पार्श्वशिरोरुक् चयकासादि शान्तये सलिलम् ॥ ४० ॥
ककुभत्वङ्नागबला वानरिबीजानि चूर्णितं पयसि ।
पक्वं मधुघृतयुक्तं ससितं यक्ष्मादिकासहरम् ॥ ४१ ॥
स्थिरा पुनर्नवैरण्ड वासर्षभाः सजीवकाः ।
श्वदंष्ट्राभीरुलांगूली विदारीहंसपादिका ॥ ४२ ॥
बृहत्यौ वृश्चिकाली च द्वे मेदे मर्कटी तथा ।
शोषगुल्मानिलश्वास कासपित्तहरो गणः ॥ ४३ ॥
हिपञ्चमूलीमगधा धान्यनागरजं जलम् ।
चातुर्जातकसंयुक्तं पिबेन्नित्यं चयातुरः ॥
कासज्वरादिशमनं बलपुष्टिविवर्द्धनम् ॥ ४४ ॥
समूलपत्रच्छदपल्लवाया रसः प्रयोज्यो मदयन्तिकायाः ।
मासोपयोगेन समस्तलिङ्गं यक्ष्माणमुग्रं हरति प्रसह्य ॥ ४५ ॥
छागमांसं पयः छागं छागं सर्पिः सनागरम् ।
छागोपसेवाशयनं छागमध्ये तु यक्ष्मनुत् ॥ ४६ ॥
कूष्माण्डकफलोत्थेन रसेन परिपेषितम् ।
लाक्षाकर्षद्वयं पीत्वा जयेद्रक्तचयं नरः ॥ ४७ ॥
व्योषं शतावरीत्रीणि फलानि द्वे बले तथा ।
सर्वामयहरो योगः सेव्यो लोहरजोन्वितः ॥ ४८ ॥
एतद्वचः घृतं हन्ति कण्ठजां विविधां रुजम् ।
राजयक्ष्माणमत्युग्रं वाक्स्तम्भमयार्दितम् ॥ ४९ ॥
मधुनाढ्या विडङ्गाश्म जतुलोहघृताभयाः ।
घ्नन्ति यक्ष्माणमत्युग्रं सेव्यमाना हिताशिनः ॥ ५० ॥
पथ्याव्योषविडङ्गानि चूर्णं कृत्वा लिहेन्नरः ।
सर्पिर्मधुभ्यां मुच्येत चयरोगान्न संशयः ॥ ५१ ॥
दिनकरदीधितिशोषित पारावतमांसमनुदिनं नियतम् ।

यो लेढ़िमधुघृताभ्यां सजयति यक्ष्माणमत्युग्रम् ॥ ५२ ॥
कृष्णाद्राक्षासितालेहः क्षयहा क्षौद्रतैलवान्।
मधुसर्पियुतो वाश्वगन्धा कृष्णासितोद्भवः ॥ ५३ ॥
शर्करामधुसंयुक्तं नवनीतं लिहेत् क्षयी।
क्षीराशी लभते पुष्टिं मतुल्ये चाज्यमाक्षिके ॥ ५४ ॥
शतपुष्पा नतं कुष्टं मधुकं देवदारु च।
पिष्ट्वा लेपःससर्पिष्कः पृष्टपार्श्वांशरुक् च ॥ ५५ ॥
चूर्णं काकुभमिष्टं वासकरसभावितं बहुन्वारान्।
मधुघृतसितोपलाभि र्लिह्यं क्षयकासरक्तपित्तहरम् ॥ ५६ ॥

—०—

जीवन्ती शतवीजा च विकसा सुपुनर्नवा।
अश्वगन्धाभयाभार्गी तर्कारीमधुकं बला ॥ ५७ ॥
विदारीसर्षपा कुष्टं तंडुलीयाऽतसीफलम्।
माषास्तिलाश्च किट्टञ्च सर्वमेकत्र चूर्णयेत् ॥ ५८ ॥
यवचूर्णञ्च द्विगुणं दध्नायुक्तं समाक्षिकम्।
एतदुद्वर्त्तनं कार्य्यं पुष्टिवर्णबलप्रदम् ॥ ५९ ॥
पुष्टये शोषिणां कार्य्यं मभ्यङ्गोद्वर्त्तनादिकम्।

इति जीवन्त्याद्युद्वर्त्तनम्।

पिवेन्नागवलामूलं सार्धं कर्षं विमर्दितम्।
पलं क्षीरयुतं मासं क्षीरवर्त्तीरनन्नभुक् ॥ ६० ॥
एष प्रयोगः पुष्ट्यायुः बलारोग्यकरः परः ॥ ६१ ॥

—०—

सितोपलातुगाक्षीरी पिप्पली बहुला त्वचः।
अन्त्यादूर्ध्वं द्विगुणितं लेहयेन्मधुसर्पिषा ॥ ६२ ॥
चूर्णितं प्राशयेदेत च्छ्वासकासज्वरापहम्।

पार्श्वशूलञ्च मन्दाग्निं सुप्तजिह्वामरोचकम् ।
हस्तपादाङ्गदाहेषु ज्वरे रक्ते तथोर्ध्वगे ॥ ६३ ॥

इति सितोपलादिलेहः ।

तालीसपत्रं मरिचं नागरं पिप्पली शुभा ।
यथोत्तरं भागवृद्धा त्वगेला चार्द्धभागिके ॥ ६४ ॥
पिप्पल्यष्टगुणा चात्र प्रदेया सितशर्करा ।
कासश्वासारुचिहरं तच्चूर्णं दीपनं परम् ॥ ६५ ॥
हृत्पाण्डुग्रहणीदोष प्लीहशोषज्वरापहम् ।
छर्द्यतीसारशूलघ्नं मूढवातानुलोमनम् ॥ ६६ ॥
कल्पयेद् गुटिकाश्चैव चूर्णं पक्त्वा सितो पलम् ।
गुटिका ह्यग्निसंयोगा चूर्णाल्लघुतरा स्मृता ॥ ६७ ॥

इति तालीसादिचूर्णगुटिका ।

तालीशं चित्रकं व्योषं दाडिमं तिन्तिडीयकम् ।
एतेषां पलिकान् भागान् दीप्यको गजपिप्पली ॥ ६८ ॥
यवानी शतभेदश्च कृमिघ्नं ग्रन्थिकं तथा ।
चव्यञ्च केशरश्चैव हपुषाजाज्यधान्यकम् ॥ ६९ ॥
जातीफलं लवङ्गञ्च त्रिसुगन्धं कणा शुभा ।
एतेषां कर्षमेवान्तु द्विगुणा शर्करा भवेत् ॥ ७० ॥
पीनसं राजयक्ष्माणं हृद्रोगं वातपैत्तिकम् ।
मूत्रकृच्छ्रान्वैवरोगान् पांडुरोगं हलीमकम् ॥ ७१ ॥
अशीतिं वातजान् रोगांश्चत्वारिंशच्च पैत्तिकान् ।
विंशतिं श्लैष्मिकांश्चैव ह्येकादशगलग्रहान् ॥ ७२ ॥
ज्वराष्ठीलानि चार्शांसि भगन्दरांश्च शोषकान् ।
वैस्वर्यं वमनञ्चैव अरुच्यञ्च हनुग्रहम् ॥ ७३ ॥

महातालीशमित्येतत् सर्वान् व्याधीन् व्यपोहति ॥ ७४ ॥

इति महातालीशादिचूर्णम् ।

तालीसमरिचनागर पिप्पलीतन्मूलत्रुटिफलत्वचः ।
जातिफलमृणालं त्वक्क्षीरीमुस्ततुल्यांशम् ॥ ७५ ॥
चूर्णं त्रिगुणसितोपल मेतद्रुच्यं प्रदीपनं हृद्यम् ।
ज्वररक्तपित्तकास श्वासक्षयगुल्मशूलघ्नम् ॥ ७६ ॥
छर्द्यतिसारग्रहणी हृद्रोगा मूढमारुतं दाहम् ।
करचरणादिषु शमयति पांडुमदं कण्ठरोगश्च ॥ ७७ ॥

इति तालीशाद्यं चूर्णम् ।

कर्पूरचोचकं कोल जातीफलदलैः समैः ।
लवङ्गमांसीमरिचैः कृष्णाशुण्ठीविवर्धितैः ॥ ७८ ॥
चूर्णं सिता समं हृद्यं रोचनं क्षयकासजित् ।
वैस्वर्यश्वासगुल्मार्शः छर्दिकण्ठामयापहम् ॥ ७९ ॥
प्रयुक्तं चान्नपानेषु भैषज्यहेषिणां हितम् ॥ ८० ॥

इति कर्पूराद्यं चूर्णम् ।

जातिफलं विडङ्गानि चित्रकं तगरं तिलाः ।
तालीसं चन्दनं शुण्ठी लवङ्गं चोपकुञ्चिका ॥ ८१ ॥
कर्पूरं चाभयाधात्री मरिचं पिप्पलीतुगा ।
एषामक्षसमा भागा चातुर्जातकसंयुताः ॥ ८२ ॥
पलानि सप्तभङ्गायाः शर्करा सम योजिताः ।
जयेत्कासं क्षयं श्वासं ग्रहणीमग्निमार्दवम् ॥ ८३ ॥
वातश्लेष्मोद्भवांश्चान्यान् प्रतिश्यायानऽरोचकान् ।
एतानेव रुजो हन्ति हच्चमिन्द्राशनिर्यथा ॥ ८४ ॥

इति जातिफलादिचूर्णम् ।

शृङ्गार्जुनाश्वगन्ध नागवलापुष्कराह्वयाक्षिवहा: ।
तालीसादिसमेता लेह्या मधुसर्पिभ्यां यक्ष्महरा: ॥ ८५ ॥
शृङ्गाद्यं चूर्णम्।

यवानीतित्तिडीकञ्च नागरञ्चाम्लवेतसम् ।
दाडिमं वदिरञ्चाम्लं कार्षिकानुपकल्पयेत् ॥ ८६ ॥
धान्यसौवर्चलाजाजी वराङ्गं चार्द्धकार्षिकम् ।
पिप्पलीनां पलञ्चैकं द्वे पले मरिचस्य च ॥ ८७ ॥
शर्करायाश्च चत्वारी पलान्येकत्र चूर्णयेत् ।
जिह्वासंशोधनं हृद्यं तच्चूर्णं भक्तरोचकम् ॥ ८८ ॥
हृत्प्लीहपार्श्वशूलघ्नं विबन्धानाह नाशनम् ।
कासश्वासहरं ग्राही ग्रहण्यर्शो विवन्धनुत् ॥ ८९ ॥
इति यवान्याद्यं चूर्णम्।

सूक्ष्मैलाकेसरं त्वक् च पत्रं तालीशजं तुगा ।
धृष्विका दाड़िमं धान्यं जीरकञ्च द्विकार्षिकम् ॥ ९० ॥
पिप्पली पिप्पलीमूल चव्यचित्रकनागरम् ।
मरिचं दीप्यकञ्चैवं हृचाम्ल चाम्लवेतसम् ॥ ९१ ॥
अजमोदाजगन्धा च दधित्यश्चेति कार्षिकम् ।
प्रदेयमिह शुद्धाया: शर्करायाश्चतुष्पलम् ॥ ९२ ॥
चूर्णमस्मि प्रदातव्यं परमं रुचिवर्धनम् ।
शोफकामसमशोर्शांसि श्वासं शूलं ज्वरं वमिम् ॥ ९३ ॥
निहन्ति दीपयत्यग्निं बलवर्णप्रदं परम् ।
वातानुलोमनं हृद्यं कण्ठजिह्वाविशोधनम् ॥ ९४ ॥
इति सूक्ष्मैलाद्यं चूर्णम्।

गडूचीगोक्षिवाह्मया पञ्चमूलीवलाहयम् ।
समूलपत्रशाखस्तु पृथग्दशपलानि च ॥ ९५ ॥

जलद्रोणे विपक्तव्यं यावत्पादावशेषितम्।
पिप्पलीचन्दनं लोध्रं ह्रीवेरोशीरपर्पटम्॥ ९६॥
पाठाभूनिम्बयष्ट्याह्व त्रायन्ती नीलमुत्पलम्।
मुस्तकेन्द्रयवाः शुण्ठी कटुकं सदुरालभम्॥ ९७॥
त्वक्पत्रं द्रुपमूलञ्च कल्कैरर्धपलैर्भिषक्।
अजाक्षीरेण तत्तुल्यं घृतमस्य विपाचयेत्॥ ९८॥
हन्ति यक्ष्माणमत्युग्रं रक्तपित्तं त्रिदोषजम्।
श्वासकासक्षतक्षीण दाहशोथरुजापहम्॥ ९९॥

इत्यमृताद्यं घृतम्।

वासामृतारिष्टनिदिग्धिकानां रसेऽश्वगन्धेभबलार्जुनाम्।
सिद्धं सपञ्चोपणपुष्कराणां कल्कैर्घृतं छागपयस्सु शोषे॥ १००॥

इति वासाद्यं घृतम्।

बलाविदारिगन्धाभ्यां विदार्य्यामलकेन च।
सिद्धं सलवणं सर्पिर्नस्यं पेयमनुत्तमम्॥ १०१॥

इति बलाद्यं घृतम्।

घृतं खर्जूरमृद्वीका मधुकैः सपरुषकैः।
सपिप्पलीकैर्वैस्वर्य्ये कासश्वासज्वरापहम्॥ १०२॥

इति खर्जूराद्यं घृतम्।

एलाजमोदामलकाभयाक्ष गायत्रिनिम्बाशनसालसारान्।
विडङ्गभल्लातकचित्रकाश्च कटुत्रिकाम्भोदसुराह्विकांस्तु॥ १०३॥
पक्त्वा जले तेन पचेत्तु सर्पिस्तस्मिंस्तु सिद्धे त्ववतारिते च।
त्रिंशत्पलान्यत्र सितोपलायाद्द्यात्तुगाक्षीरिपलानि षड् च॥१०४॥
प्रस्थे घृतस्य द्विगुणञ्च दद्यात् क्षौद्रं ततो मन्थहतं विदध्यात्।
पलं पलं प्रातरतो लिहेच्च पश्चात्पिबेत् क्षीरमतन्द्रितश्च॥ १०५॥
एतद्विधेयं परमं पवित्रं दोषघ्नमायुष्यतमं तथैव।

यक्ष्माणमाशुव्यपहन्ति नूनं पाण्ड्वामयञ्चैव भगन्दरञ्च ॥ १०६ ॥
न चात्र किञ्चित्परिवर्जनीयं रसायनञ्चैतदुपास्य मानम् ।
इत्यैलामन्यघृतम्

अत्र चतुर्गुणक्काथेन कल्कमिदं पाच्यम् ।

—०—

दशमूलीशृतात् चीरात् सर्पिर्यदुदियान्नवम् ।
सपिप्पलीकं सचौद्रं घृतं स्वरविशोधनम् ॥ १०७ ॥
शिरः पार्श्वांशशूलघ्नं कासश्वासज्वरापहम् ॥ १०८ ॥
इति दशमूलीशृतं घृतम् ।

पिप्पली पिप्पलीमूल चव्यचित्रकनागरैः ।
सयावशूकैः सचीरैः स्रोतसां शोधनं घृतम् ॥
कल्कोऽत्रपादिकः कार्य्यः चीरञ्चापि चतुर्गुणम् ॥ १०९ ॥
इति षड़ङ्गघृतम् ।

जीवन्ती मधुकं द्राचा फलानि कुटजस्य च ।
शटीपुष्करमूलञ्च व्याघ्रीगोचुरकं बला ॥ ११० ॥
नीलोत्पल चामलकी त्रायमाणा दुरालभा ।
पिप्पली च समश्लिष्टा घृतं वैद्यो विपाचयेत् ॥ १११ ॥
एतद् व्याधिसमूहस्य रोगेशस्य समुत्थितम् ।
रूपमेकादशविधं सर्पिरग्र्यं व्यपोहति ॥ ११२ ॥
इति जीवन्त्याद्यं घृतम् ।

पिप्पलीगुडसंयुक्तं छागचीरयुतं घृतम् ।
एतदग्निं विवर्धयं सर्पिः चयकासिनाम् ॥ ११३ ॥
इति पिप्पलीघृतम् ।

यष्टीदन्तागुडूच्यस्य पञ्चमूलतुलां पचेत् ।
द्रोणेऽपामष्टभागस्थे तत्र पात्रं पचेद् घृतम् ॥ ११४ ॥

धात्रीविदारीक्षुरसे त्रियामे पयसोऽर्मणे।
सुपिष्टैर्नीवनीयैश्च पाराशरमिदं घृतम्॥ ११५॥
ससैन्यं राजयक्ष्माणं मुन्मूलयति शीलितम्॥

इति पाराशरघृतम्।

श्वदंष्ट्रां सदुरालभां चतस्रः पर्णिनीं बलाम्।
भागानेतान्मितान् कृत्वा पलं पर्पटकस्य च॥ ११६॥
पचेदष्टगुणे तोये चतुर्भागावशेषिते।
रसे तु पूते द्रव्याणा मेषां कल्कं समाचरेत्।
शठीपुष्करमूलानां पिप्पली त्रायमाणयोः॥ ११७॥
आमलक्याः किरातस्य तिक्तस्य कुटजस्य च।
फलानां शारिवायाश्च सुपिष्टानक्षरमन्मितान्॥ ११८॥
तैः साधयेद् घृतप्रस्थं क्षीरं द्विगुणितं भिषक्।
ज्वरं दाहं भ्रमं शोषं मंशपार्श्वशिरोरुजम्॥ ११८॥
तृष्णाच्छर्दिमतिसारं मेतत्सर्पिर्व्यपोहति।
पचेदष्टगुणेनात्र घृतं ज्ञेयं चिकित्सकैः॥ १२०॥

इति श्वदंष्ट्राद्यं घृतम्।

छागमांसं तुलां गृह्य साधयेत्सल्वणेऽम्भसि।
पादशेषेण तेनैव सर्पिः प्रस्थं विपाचयेत्॥ १२१॥
ऋद्धिर्वृद्धिश्च मेदे द्वे जीवकर्षभकौ तथा।
काकोलीक्षीरकाकोली कल्कैः पृथक् पलोन्मितैः॥ १२२॥
सम्यक् सिद्धे चावतार्य्य शीते तस्मिन् प्रदापयेत्।
शर्करायाः पलान्यष्टौ मधुनः कुडवं क्षिपेत्॥ १२३॥
पलं पलं लिहेत्प्रात र्यक्ष्माणं हन्ति दुस्तरम्।
क्षतक्षयञ्च कासञ्च पार्श्वशूलमरोचकम्॥ १२४॥
स्वरक्षयमुरोरोगं श्वासं हन्यात् सुदुस्तरम्।

बलमांसकरं ह्यथ मग्निसन्दीपनं परम् ॥ १२५ ॥
स्त्रिषु चतुष्पदे श्रेष्ठं पुंसु, वै विहगी मतम् ।

इति छागलाद्यं घृतम् ।

द्विपञ्चमूलस्य पचेत्कषाये प्रस्थद्वयं मांसरसस्य चैकम् ।
कल्कं बलायाः सुनियोज्यगर्भे सिद्धं पयः प्रस्थयुत घृतञ्च ॥१२
सर्वाभिघातोत्थितयक्ष्मशूल क्षतक्षयोत्कासहरं प्रदिष्टम् ॥ १२

इति बलागर्भं घृतम् ।

चन्दनाम्बुनखं वाप्यं यष्टीशैलेयपद्मकम् ।
मञ्जिष्टा सलिलं दारु कट्फलं पूतिकेशरम् ॥ १२८ ॥
पत्रैले च सुरामांसी कङ्कोलं वनितांबुदम् ।
हरिद्रे शारिवे तिक्ता लवङ्गागुरुकुङ्कुमम् ॥ १२८ ॥
त्वगेणु नलिका चैभि स्तैलं मस्तुचतुर्गुणम् ।
लाक्षरससमं सिद्धं ग्रहघ्नं बलवर्णकृत् ॥ १३० ॥
अपस्मारज्वरोन्माद कृत्या लक्ष्मीविनाशनम् ।
आयुः पुष्टिकरश्चैव वशीकरणमुत्तमम् ॥ १३१ ॥

इति चन्दनाद्यं तैलम् ।

क्षीरे चतुर्गुणे तैलं मस्थं सिद्धं तिलोद्भवम् ।
शतशः पाचितं यष्टी पलकल्केन यत्नतः ॥ १३२ ॥
पाननस्यादिभिर्यक्ष्म हृद्गुदामयपांडुजित् ।
ऊर्ध्वजत्रुगुदोन्माद रक्तपित्तविसर्पनुत् ॥ १३३ ॥

इति शतपाकतैलम् ।

ज्वरमस्तापदोर्वम्ये लाक्षातैलं प्रयोजयेत् ।
श्वासरोगाधिकारोक्तं पारम्पर्य्योपदेशतः ॥ १३४ ॥

वासकस्य रसप्रस्थं मानिका सितशर्करा ।
पिप्पलीद्विपलं सर्पि र्दत्वा मृद्वग्निना पचेत् ॥ १३५ ॥
लेहीभूते ततः पश्चात् शीते क्षौद्रपलाष्टकम् ।
दत्वावतारयेद्वैद्यो मात्रया लेहमुत्तमम् ॥ १३६ ॥
निहन्ति राजयक्ष्माणं श्वासकासञ्च दारुणम् ।
पार्श्वशूलञ्च हृच्छूलं रक्तपित्तं ज्वरं तथा ॥ १३७ ॥

इति वासावलेहः ।

त्वक्क्षीरीश्रावणीद्राक्षा मूर्वर्षभकजीवकैः ।
वीरर्द्धीक्षीरकाकोली बृहतीकपिकच्छुभिः ॥
खर्जूरविपमेदाभिः क्षीरपिष्टैः पलोन्मितैः ॥ १३८ ॥
धात्रीविदारीक्षुरस प्रस्थैः प्रस्थं घृतात्पचेत् ।
शर्करायास्तुलां शीते क्षौद्रार्धप्रस्थमेव च ॥ १३९ ॥
दत्वा सर्पिर्गुड़ान् कुर्य्यात् कासहिक्का ज्वरामयम् ।
यक्ष्माणन्तमकं श्वासं रक्तपित्तं हलीमकम् ॥ १४० ॥
शुक्रनिद्राक्षयं तृष्णां हन्युः कार्श्यं सकामलाम् ।

इति सर्पिर्गुड़ः ।

विल्वाग्निमन्थश्योनाक काश्मर्य्यः पाटलाबला ।
पर्ण्यश्चतस्रः पिप्पल्यः श्वदंष्ट्रा बृहतीद्वयम् ॥ १४१ ॥
शृङ्गीतामलकीद्राक्षा जीवन्ती पुष्करागुरु ।
अमृता चाभया वृद्धि र्जीवकर्षभकौ शठी ॥ १४२ ॥
मुस्तं पुनर्नवा मेदा सूक्ष्मैलोत्पलचन्दने ।
विदारीवृषमूलानि काकोलीकाकनासिका ॥ १४३ ॥
एषां पलोन्मितान् भागान् शतान्यामलकस्य च ।
पञ्चदद्यात्तदैकध्यं जलद्रोणे विपाचयेत् ॥ १४४ ॥
ज्ञात्वा रसगतानेता नौषधानथ तद्रसान् ।

तत्रामलकमुद्धत्य निष्कुलं तैलसर्पिषोः ॥ १४५ ॥
पलद्वादशके भृष्ट्वा दत्त्वा चार्धतुलां भिषक्।
मत्स्यण्डिकायाः पूतायाः लेहवत्साधु साधयेत् ॥ १४६ ॥
षट्पलं मधुनश्चात्र सिद्धसिते प्रदापयेत्।
चतुष्पलं तुगाक्षीर्याः पिप्पल्या द्विपलं तथा ॥ १४७ ॥
पलमेकं निदध्याच्च त्वगेलापत्रकेशरात्।
इत्ययं च्यवनप्राशः परमुक्तो रसायनः ॥ १४८ ॥
कासश्वासहरश्चैव विशेषेणोपदिश्यते।
क्षीणक्षतानां वृद्धानां बालानां चाङ्गवर्द्धनम् ॥ १४९ ॥
स्वरक्षयमुरोरोगं हृद्रोगं वातशोणितम्।
पिपासां मूत्रशुक्रस्थान् दोषांश्चैवापकर्षति ॥ १५० ॥
अस्य मात्रां प्रयुञ्जीत योऽपरुन्ध्यान्नभोजनम्।
अस्य प्रयोगाच्च्यवनः सुवृद्धोऽभूत् पुनर्युवा ॥ १५१ ॥
मेधां स्मृतिं कान्तिमनामयत्व मायुः प्रहर्षं बलमिन्द्रियाणां
स्त्रीषु प्रहर्षं परमग्निवृद्धिं वर्णप्रसादं पवनानुलोम्यम् ॥ १५
रसायनस्यास्य नरः प्रयोगाल्लभेतजीर्णोऽपि कुटीप्रवेशात्।
जराकृतं रूपमपास्य पूर्वं विभर्त्तिरूपं नवयौवनानाम् ॥ १५
केचिदिच्छन्ति मत्स्यण्ड्याः स्थाने तु सितशर्करा।
मृद्कल्क समः पाको भृष्टधात्र्या प्रशस्यते ॥ १५४ ॥
चतुर्भागजले प्रायो द्रव्यं गत रसं भवेत्।
अयन्तु च्यवनप्राशः पित्तोद्रेके प्रशस्यते ॥ १५५ ॥
चत्वारः षड्यवायास्य दीयते प्रथमं किल।
इति च्यवनप्राशावलेहः ॥
उपरिष्टाद्रसः चौद्रं तुगाक्षीर्यां च बुद्धिमान्।
प्रस्थ प्रस्थं पृथग्गृह्य शर्करार्धतुलान्तया ॥ १५६ ॥

आमगुप्ताफलानाञ्च कुडवं मरिचस्य च।
त्रिसुगन्धिकृतावापं मन्थानेन विमन्थयेत्॥ १५७॥
पलिकान्मोदकान् कृत्वा स्थापयेद्भाजने वरे।
एतद्दिकालमेकं वा खादेदग्निबलं प्रति॥ १५८॥
वटकान्नियताहारो ब्रह्मचारी जितेन्द्रियः।
सहन्याद्यक्ष्मिणः सद्य एकादशविधं क्षयम्॥ १५९॥
स्वरवर्णबलौदार्य्यं तुष्टिपुष्टिविवर्धनम्।
आयुष्यं पौष्टिकं चाग्र्यं भूतोपहतचेतसाम्।
व्याकुलीकृतदेहानां वृद्धानां क्षीणरेतसाम्॥ १६०॥
वाजीकरणमप्येवं वन्ध्यानां पुत्रदं परम्।
धनुः स्त्रीमद्यभाराध्व खिन्नानां बलवर्धनम्॥ १६१॥
हृत्प्लीह्ग्रहणीदोष मूत्रकृच्छ्रायतन्त्रकम्।
अपस्मारविषोन्माद नाशनं तद्रसायनम्॥ १६२॥

इत्युचटाद्यो मोदकः॥

ज्वराणां शमनीयो यः पूर्वमुक्तः क्रियाविधिः।
यक्ष्मिणां ज्वरदाहेषु ससर्पिष्कः प्रशस्यते॥ १६३॥
नित्यं स्वदेवपूजा भक्ति भैषज्य देवता गुरुषु।
छागलमांसपयोऽश्नन् जीवति यक्ष्मी चिरं धृतिमान्॥ १६४॥
पद्रवान् सत्ववैकृतादीन् जयेद्यथाक्षिप्रमवेक्ष्यशास्त्रम्।
र्जेत् कुवैद्यप्रतिपादितानि बुद्धेर्विरुद्धानि च भेषजानि॥१६५॥

## इति वङ्गसेनेराजयक्ष्मनिदानचिकित्साधिकारः समाप्तः॥ १०॥

---

## अथ क्षतक्षयनिदानमाह।

धनुषाऽऽयस्यतोऽत्यर्थं भारमुद्वहतो गुरुम्।
युध्यमानस्य बलिभिः पततो विषमोच्चतः॥ १॥
वृषं हयं वा धावन्तं दम्यं चान्यं निगृह्णतः।
शिलाकाष्ठाश्मनिर्घातान् क्षिपतो निघ्नतः परान्॥ २॥
अधीयानस्य वाल्युच्चैर्दूरं वा व्रजतो द्रुतम्।
महानदीं वा तरतो हयैर्वा सह धावतः॥ ३॥
सहसोत्पततो दूरं तूर्णं वापि प्रनृत्यतः।
तथान्यैः कर्मभिः क्रूरैर्भृशमभ्याहतस्य वा॥ ४॥
विक्षते वक्षसि व्याधिर्बलवान् समुदीर्यते॥ ५॥
स्त्रीषु चातिप्रसक्तस्य रूक्षाल्पमिताशनः।
उरो विरुध्यतेऽत्यर्थं भिद्यतेऽथ विदह्यते॥ ६॥
प्रपीड्यते ततः पार्श्वे शुष्यत्यङ्गं प्रवेपते।
क्रमाद्वर्णं बलं वीर्यं रुचिरग्निश्च क्षीयते॥ ७॥
ज्वरो दाहो मनोदैन्यं विड्भेदोऽग्निवधावपि।
दुष्टः श्यावः सुदुर्गन्धः पीतो विग्रथितो बहु॥ ८॥
कासमानस्य वाऽभीक्ष्णं कफः सास्रश्च जायते।
स क्षतः क्षीयतेऽत्यर्थं तथा शुक्रौजसः क्षयात्॥ ९॥
अव्यक्तं लक्षणं तस्य पूर्वरूपमिति स्मृतम्॥ १०॥
उरोरुक् शोणितच्छर्दिः कासो वैशेषिकः क्षते।
क्षीणे सरक्तमूत्रत्वं पार्श्वपृष्ठकटीग्रहः॥ ११॥
क्रियाक्षयकरत्वाच्च क्षय इत्यभिधीयते।
संशोषणाद्रसादीनां शोष इत्युच्यते बुधैः॥ १२॥
अल्पलिङ्गस्य दीप्ताग्नेः साध्यो बलवतो नवः।

परिसम्वत्सरो याप्यः सर्वलिङ्गं विवर्जयेत् ॥ १३ ॥
भक्तद्वेषो ज्वरः श्वासः कासश्शोणितदर्शनम्।
स्वरभेदश्च जायन्ते षड्रूपे राजयक्ष्मणि ॥ १४ ॥
परं दिनसहस्रन्तु यदि जीवति मानवः।
सुभिषग्भिरुपक्रान्त स्तरुणः शोषपीड़ितः ॥ १५ ॥

—०—

## अथ चिकित्सामाह।

प्राणरोधात् क्षयाद्वापि कोष्ठात्पूतियुतात्तथा।
क्षतोरस्योऽवपाकेन निःश्वासो वाऽतिपूतिकः ॥ १६ ॥
उरो मत्वा क्षतं लाक्षां पयसामधुसंयुताम्।
सद्य एव पिबेज्जीर्णे पयोऽद्याच्च सशर्करम् ॥
पार्श्ववस्तिरुजि चाल्प पित्ताग्निस्तां सुरायुताम् ॥ १७ ॥
भिन्नविट्कः ससुस्ताभि र्विषापाठा सवत्सका।
बलाश्वगन्धा श्रीपर्णी बहुपत्नीपुनर्नवा ॥ १८ ॥
पयसा नित्यमभ्यस्ताः शमयन्ति क्षतक्षयम् ॥ १९ ॥
शर्करायवगोधूमं जीवकर्षभकौ मधु।
शृतं क्षीरानुपानञ्च लिह्यात् क्षीणः क्षतः कृशः ॥ २० ॥
इक्ष्वालिका विसग्रन्थि पद्मकेशरचन्दनैः।
शृतं पयो मधुयुतं संधानार्थं पिबेत् क्षती ॥ २१ ॥
रक्तष्ठीवी पिबेत्सिद्धं लाक्षारसपयो घृतैः।
वर्षाभूशर्करासुस्त शालितण्डुलजं रजः ॥ २२ ॥
लाक्षाचूर्णन्तु सुकृतं क्षौद्राज्येन समन्वितम्।
सक्षौद्रं शमयति शोषोद्भूतां वमिं तथा ॥ २३ ॥

—०—

एलापत्रं त्वचो द्राक्षा पिप्पल्यर्धं पलं तथा।
सितामधुकखर्जूर मृद्विकाश्च पलोन्मिताः ॥ २४ ॥
संचूर्ण्य मधुना युक्ता गुटिकाः संप्रकल्पयेत्।
अक्षमात्रास्ततश्चैकां भक्षयेच्च दिने दिने ॥ २५ ॥
कासं श्वासं ज्वरं हिक्कां छर्दिं मूर्च्छां मदं भ्रमम्।
रक्तनिष्ठीवनं तृष्णां पार्श्वशूलमरोचकम् ॥ २६ ॥
शोषप्लीहाढ्यवातांश्च स्वरभेदं क्षतक्षयम्।
गुटिकातर्पणीवृष्या रक्तपित्तञ्च नाशयेत् ॥ २७ ॥

इत्येलाद्यागुटिका।

यष्ट्याह्व नागवलयोः क्वाथे क्षीरसमे घृतम्।
पयसापिप्पलीमांसी कल्कैः सिद्धं क्षये हितम् ॥ २८ ॥

इति यष्ट्याद्यं घृतम्।

घृतं वलानागवलार्जुनांबु सिद्धं सयष्टीमधुकल्कपादम्।
हृद्रोगशूलक्षतरक्तपित्तं कासानिलोत्थान् शमयत्तु दोषान् ॥२९॥

इति वलाद्यं घृतम्।

श्वदंष्ट्रोशीरमञ्जिष्ठा वलाकाश्मर्यकत्तृणम्।
दर्भमूलं पृष्टपर्णी वलासर्षभका स्थिरा ॥ ३० ॥
पलिकान् साधयेत्तेषां रसे क्षीरचतुर्गुणे।
कल्कैः स्वगुप्तवर्षाभू मेदा जीवन्ति जीवकैः ॥ ३१ ॥
शतावर्य्यादिमृद्वीका शर्कराश्रावणीद्वयैः।
प्रस्थं सिद्धं घृताद्वात पित्तहृद्रोगगुल्मनुत् ॥ ३२ ॥
मूत्रकृच्छ्रप्रमेहार्शः कासशोषक्षयापहम्।
धनुः स्त्रीमद्यभाराध्व खिन्नानां वलमांसदम् ॥ ३३ ॥

इति श्वदंष्ट्राद्यं घृतम्।

द्राक्षायाः सम्मितं प्रस्थं मधुकस्य पलाष्टकम्।
पचेत्तोयाढ़के शुद्धे पादशेषेण तेन तु॥ ३४॥
पलिके मधुकद्राक्षे पिष्टे कृष्णापलद्वयम्।
प्रदायसर्पिषः प्रस्थं पचेत् क्षीरे चतुर्गुणे॥ ३५॥
सिद्धे शीते पलान्यष्टौ शर्करायाः प्रदापयेत्।
एतद्द्राक्षाघृतं सिद्धं क्षीणक्षतसुखावहम्॥ ३६॥
वातपित्तज्वरश्वास सविस्फोटहलीमकान्।
प्रदरं रक्तपित्तञ्च हन्यान्मांसबलप्रदम्॥ ३७॥

इति द्राक्षाद्यं घृतम्।

क्षीरे धात्रीविदारीक्षु क्षीरीणाञ्च तथा रसे।
पचेत्समे घृतप्रस्थं मधुकैरिक्षुकान्वितैः॥ ३८॥
द्राक्षादिचन्दनोशीर शर्करोत्पलपद्मकैः।
मधूककुसुमानन्ता काश्मरीतृणसंज्ञकैः॥ ३८॥
प्रस्थार्धं मधुनः शीते शर्करार्धतुलां तथा।
पलार्धकांश संचूर्ण्य त्वगेलापत्रकेसरान्॥ ४०॥
विनीयतस्य संलिह्यान् मात्रां नित्यं सुयन्त्रितः॥ ४१॥
अमृतप्राशमित्येतदश्विभ्यां परिकीर्त्तितम्।
क्षीरमांसाशिनां हन्ति रक्तपित्तं क्षतक्षयम्॥ ४२॥
तृष्णारुचिश्वासकास छर्दिमूर्च्छाप्रमर्दनम्।
मूत्रकृच्छ्रज्वरघ्नञ्च बलं स्त्रीरतिवर्द्धनम्॥ ४३॥

इत्यमृतप्राश.।

बलाविदारीह्रस्वा च पञ्चमूलीपुनर्नवा।
पञ्चाना क्षीरवृक्षाणां शुङ्गाः मुष्टंशिकाः पृथक्॥ ४४॥
विपाच्य सलिलद्रोणे पूते पादावशेषिते।
पादांशे छागगोक्षीरे विदार्य्या. स्वरसे पृथक्॥ ४५॥

...प्यतां क्षीणशुक्राणां रक्ते क्षीरसर्पिसंस्थिते ॥ ५६ ॥
...यदुर्बलभीरूणां पुष्टिवर्णबलार्थिनाम्।
...निदोषक्षतस्राव दुर्बलानाञ्च योषिताम् ॥ ५७ ॥
...र्भार्थिनीनां गर्भञ्च स्रवेद्यासां म्रियेत च।
...न्याबल्या हितास्तासां शुक्रशोणितवर्धनाः ॥ ५८ ॥

इति सर्पिर्मोदकः।

...द्यञ्च तर्पणं शीत मविदाही हितं लघु।
...अन्नपानं निषेव्यन्तु क्षतक्षीणे सुखार्थिभिः ॥ ५९ ॥

शोकं स्त्रियः क्रोधमसूयताञ्च
त्यजेदुदारान्विषयान् भजेत्तु।
तथा द्विजातींस्त्रिदशान् गुरूंश्च
वाचश्च पुण्याः शृणुयाद्द्विजेभ्यः ॥ ६० ॥

...ति वङ्गसेने क्षतक्षयनिदानचिकित्साधिकारः

समाप्तः ॥ ११ ॥

—०—

## अथ कासनिदानमाह।

...धूमोपघाताद्रजसस्तथैव व्यायामरूक्षान्ननिषेवणाच्च। ...
...मार्गगत्वादपि भोजनस्य वेगावरोधात् क्षवथोस्तथैव ॥ १ ॥
...णोर्ध्व दानानुगतः प्रदुष्टः सभिन्नकांस्यस्वनतुल्यघोषो।
...रेति वक्त्रात्सहसा सदोषो मनीषिभिः कास इति प्रदिष्टः ॥२॥
पञ्चकासाः स्मृता वात पित्तश्लेष्मक्षतक्षयैः।
क्षयायोपेक्षिताः सर्वे बलिनश्चोत्तरोत्तरम् ॥ ३ ॥

पूर्वरूपं भवेत्तेषां शूकपूर्णगलास्यता ।
कण्ठे कण्डूश्च भोज्याना मवरोधश्च जायते ॥ ४ ॥
हृच्छङ्खमूर्द्धोदरपार्श्व शूलीक्षामाननः क्षीणबल. स्वरौजा ।
प्रसक्तवेगस्तु समीरणेन भिन्नस्वरः कासतिशुष्कमेव ॥ ५ ॥

—०—

## अथ चिकित्सामाह ।

रूक्षस्या निलजं कास मादौ स्नेहैरुपाचरेत् ।
सर्पिभिर्वस्तिभिः पेया क्षीरयूपरसादिभि ॥ ६ ॥
वास्तुको वायसीशाकं मूलकं सुनिषण्णकम् ।
स्नेहास्तैलादयो भक्ष्याः क्षीरेक्षुरसगौडिकाः ॥ ७ ॥
दध्यारनालाम्लफल प्रसन्नापानमेव च ।
शस्यते वातकासेषु स्वाद्वम्ललवणानि च ॥ ८ ॥
ग्राम्यानूपोदकैः शालियवगोधूमषष्टिकान् ।
रसैः मांसात्मगुप्तानां यूषैर्वा भोजयेद्धितान् ॥ ९ ॥
दशमूलीशृता कास श्वासहिक्कारुजापहा ।
यवागूर्दीपनीपथ्या वातरोगविनाशिनी ॥ १० ॥
पञ्चमूलीकृत. क्वाथः पिप्पलीचूर्णसंयुतः ।
रसाशमश्नतो नित्यं वातकासमुदस्यति ॥ ११ ॥
रसं कर्कटकानां वा घृतभृष्टं सनागरम् ।
वातकासप्रशमनं शृङ्गीमत्स्यस्य वा पुनः ॥ १२ ॥
शठीशृङ्गीकणाभार्गी गुडवारिदवासकैः ।
सतैलैर्वातकासघ्नो लेहोयमपराजितः ॥ १३ ॥
भार्गीद्राक्षाशठीशृङ्गी पिप्पलीविश्वभेषजैः ।
गुडतैलयुतो लेहो हितो मारुतकासिनाम् ॥ १४ ॥

चूर्णिता विश्वदुःस्पर्शा शृङ्गीद्राक्षाशठीसिता।
लीढ़ा तैलेन वातोत्थं कासं जयति दुस्तरम्॥ १५॥

—o—

दशमूलीकषायेण भार्गीकल्कै र्घृतं पचेत्।
दशतित्तिरीनिर्यूहे तत्परं वातकासनुत्॥ १६॥

इति दशमूलाद्यं घृतम्।

भार्गीकल्कै र्घृतञ्चाथ पचेदग्निचतुर्गुणे।
भार्गीरसं द्विगुणितं वातकासहरं परम्॥ १७॥

इति भार्ग्यादिघृतम्।

द्रोणेऽपां साधयेद्रास्नां दशमूलीं शतावरीम्।
पलिकां मानिकांशांस्त्रीन् कुलित्थान्वदरान् यवान्॥ १८॥
तुलार्द्धं राजमाषस्य पादशेषेण तेन तु।
घृताढ़कं सम क्षीरं जीवनीयैः पलोन्मितैः॥ १९॥
सिद्धं तद्दशभिः कल्कैः नस्यपानानुवासनैः।
समीक्ष्यवातरोगेषु यथावस्थं प्रयोजयेत्॥ २०॥
पक्षकासाञ्छिरःकम्पं शूलं वङ्क्षणयोनिजम्।
सर्वाङ्गैकाङ्गरोगाय सप्लीहोर्ध्वानिलं जयेत्॥ २१॥
जीवकर्षभकौ मेदे काकोल्यौ मधुकं सह।
जीवन्तीजीवनीयोऽयं मधुरो जीवनो गणः॥ २२॥
मुद्गपर्णी विना केचि दष्टवर्गमिमं विदुः।
ऋद्धिवृद्धियुतं चान्ये जीवन्ती मधुकं विना॥ २३॥

इति रास्नाद्य घृतम्।

चित्रकं पिप्पलीमूलं व्योषं मुस्तं दुरालभाम्।
शठीपुष्करमूलञ्च श्रेयसी सुरसावचा॥ २४॥
भार्गीछिन्नरुहारास्ना कर्कटाख्या च कार्षिकाम्।

कल्कान्निदग्धिकार्धस्य कषाये पलविंशतिः ॥ २५ ॥
मत्स्यण्डिकाया दत्वा तु सर्पिषः कुड़वं पचेत् ।
सिद्धशीते पृथक् चौद्र पिप्पली कुड़वान्वितम् ॥ २६ ॥
चतुष्पलं तुगाचीर्य्याः चूर्णितं तत्र दापयेत् ।
लेहयेत्कासहृद्रोग श्वासगुल्मनिवारणम् ॥ २७ ॥
इति कण्टकार्य्यावलेहः । इति वातकासनिदानम् ।

उरोविदाहज्वरवक्त्रशोषै रभ्यर्दितस्तिक्तमुखस्तृषार्तः ।
पित्तेन पीतानि वमेत्कटूनिकासेत्सपाण्डुः परिदह्यमानः ।२८।
काकोलीबृहतीमेदा युग्मैः सवृषनागरैः ।
पित्तकासे रसचीर यूपांश्चाप्युपकल्पयेत् ॥ २८ ॥
बलाद्विबृहतीद्राक्षा वासाभिः क्वथितं जलम् ।
पित्तकासापहं पेयं शर्करा मधुयोजितम् ॥ ३० ॥
शठोक्षीविरबृहती शर्करा विश्वभेषजम् ।
पञ्चारसं पिबेत्पूतं सघृतं पित्तकासनुत् ॥ ३१ ॥
शरादिपञ्चमूलस्य पिप्पलीद्राक्षयोस्तथा ।
कषायेण शृतं चीरं पिबेत्समधुशर्कराम् ॥ ३२ ॥
द्राक्षामधुकखर्जूर पिप्पलीमरिचान्वितम् ।
पित्तकासहरं ह्येतल्लिह्यान्माक्षिकसर्पिषा ॥ ३४ ॥

—०—

मह्यिथजाविगोचीर धात्रीफलरसैः समैः ।
सर्पिःप्रस्थं पचेद्युक्त्या पित्तकासनिवारणम् ॥ ३५ ॥
इति षट्प्रस्थं घृतम् ।

पायोथचीरिणां शृङ्गान् पचेत् चीरचतुर्गुणे ।
द्राक्षाकल्के घृतं सिद्धं लिह्यातत्पित्तकासनुत् ॥ ३६ ॥
इति चीरघृतम् ।

क्षीरवृक्षाङ्कुरक्वाथं पक्वं क्षीरसमं घृतम्।
पाययेत्पित्तकासघ्नं मधुना चावलेहयेत्॥ ३७॥
इति द्वितीयं क्षीरघृतम्। इति पित्तकासः।

प्रलिप्यमानेन मुखेन सीदन् शिरोरुजार्त्तः कफपूर्णदेहः।
अभक्तरुग्गौरवसादयुक्तः कासेद्भृशं सान्द्रकफः कफेन॥ ३८॥

कफजे छर्दनं कार्यं मासि लङ्घनमेव च।
शस्तं यवान्नविकृतियूषाय कटुतिक्तकान्॥ ३९॥

मुद्गामलाभ्यां यवदाड़िमाभ्यां कर्कन्धुनामूलकशुण्ठिकेन।
शुण्ठीकणाभ्यां सकुलित्थकेन यूषो नवाङ्गः कफरोगहर्त्ता॥४०॥
इति नवाङ्गयूषः।

शठीसातिविषा मुस्तं शृङ्गीकर्कटस्य च।
अभयाशृङ्गवेरञ्च समानृष्पद्पिपयेत्॥ ४१॥
हिङ्गुसैन्धवसंयुक्तं सुखोदकपरिप्लुतम्।
काले पानाय दातव्यं श्लेष्मकर्मनिवर्हणम्॥ ४२॥
तैलभृष्टञ्च पिप्पल्याः कल्काक्षं ससितोपलम्।
पिबेद्वा कफवातघ्नं कुलित्थं सलिलप्लुतम्॥ ४३॥
पार्श्वशूले ज्वरे श्वासे कासे श्लेष्मसमुद्भवम्।
पिप्पलीचूर्णसंयुक्तं दशमूलीजलं पिबेत्॥ ४४॥
पौष्करं कट्फलं भार्गी विश्वपिप्पलीसाधितम्।
पिबेत्क्वाथं कफोद्रेके कासश्वासे च हृद्ग्रहे॥ ४५॥
देवदारुशठीरास्ना शृङ्गीधन्वयवासकम्।
तैलक्षौद्रयुतं लिह्याच्छ्लेष्मकासे सुदारुणे॥ ४६॥
श्योपपुष्करशृङ्गीका त्रिफलाशठिचित्रकैः।
मधुतैलयुतो लेहः श्लेष्मकासनिवर्हणः॥ ४७॥
समूलपत्रशाखायाः कण्टकार्यारसाढ़के।

घृतप्रस्थं बलाव्योष विडङ्गशठिचित्रकैः ॥ ४८ ॥
सौवर्चलयवक्षार बिल्वामलकपुष्करैः ।
वृश्चीव वृहतीपथ्या यवानीदाडिमादिभिः ॥ ४९ ॥
द्राक्षापुनर्नवाचव्य दुरालभाम्लवेतसैः ।
शृङ्गीतामलकीभार्गी रास्नागोक्षुरकैः पचेत् ॥ ५० ॥
कल्कैस्तु सर्वकासेषु हिक्काश्वासे च शस्यते ।
कण्ठकारीघृत सिद्धं कफकासनिषूदनम् ॥ ५१ ॥
इति वृहत्कण्ठकारीघृतम् ।

व्योषाजमोदचित्रक जीरकपड्ग्रन्थिकचव्यकल्कितम् ।
सर्पिः कफकासघ्नं वासकरसाधित समधु ॥ ५२ ॥
इति व्योषाद्यं घृतम् ।

निर्गुण्डिपत्रस्वरसेन सिद्धं
सर्पिः कफोत्थं विनिहन्ति कासम् ॥ ५३ ॥
इति निर्गुण्डीघृतम् ।

विभीतकं घृताभ्यक्तं गोमलत्परिवेष्टितम् ।
स्विन्नमग्नौ हरेत्कास ध्रुवमास्यविधारितम् ॥ ५४ ॥
इति श्लेषकासः ।

कट्फलं कत्तृणं भार्गी मुस्तं धान्यं वलाभया ।
शुण्ठीपर्पटकं शृङ्गी सुराह्वञ्च जले शृतम् ॥ ५५ ॥
मधुहिङ्गुयुतं पेयं कासे वातकफात्मके ।
कण्ठरोगे मुखे शूले श्वासे हिक्काज्वरेषु च ॥ ५६ ॥
इति कट्फलादिः क्वाथः ।

लवङ्गजातीफलपिप्पलीनां भागान् प्रकल्प्याक्षसमानमीषाम् ।
कर्षार्धमेकं मरिचस्य दद्यात्पलानि चत्वारि महौषधस्य ॥ ५७ ॥

तासमं चूर्णमिदं प्रसह्य रोगानि मांस्तु प्रबलांश्चिहन्ति।
मज्वरारोचकमेहगुल्म श्वासाग्निमान्द्यग्रहणीगदेषु॥ ५८॥

इति लघुलवङ्गादिसमशर्करं चूर्णम्।

सिंहास्यामृतसिंहीना क्वाथं मधुसमायुतम्।
पिबेत्सपित्ते कफजे कासे श्वासे ज्वरे क्षये॥ ५९॥
वासकः स्वरसः पेयो मधुयुक्तो हिताशिना।
पित्तश्लेष्मकृते कासे रक्तपित्ते विशेषतः॥ ६०॥
वातश्लेष्मकृते कासे तालीसाद्यं प्रयोजयेत्।
पित्तयुक्ते भवेच्छ्रेष्टं वंशरोचनयायुतम्॥ ६१॥

—०—

दशमूलाढके प्रस्थं घृतस्याक्षसमैः पचेत्।
पुष्कराक्षशठीबिल्व सुरसाव्योषहिङ्गुभिः॥ ६२॥
पेयानुपोन तत्पेयं कासे वातकफात्मके।
श्वासरोगेषु सर्व्वेषु कफवातात्मकेषु च॥ ६३॥

इति दशमूलाद्यं घृतम्।

भृङ्गराजरसप्रस्थं शृङ्गवेररसं तथा।
कटुतैलस्य च प्रस्थं गोमूत्रप्रस्थसंयुतम्॥ ६४॥
दशमूलकुलित्थाश्च शुष्कमूलकशिग्रुकम्।
भार्ङ्गी च कुडवांशानि क्वाथयेत्सलिलाढके॥ ६५॥
पादशेषेण तेनापि कल्कं दत्वा विपाचयेत्।
देवदारुवचाकुष्टं शताह्वालवणत्रयम्॥ ६६॥
हिङ्गुतुम्बुरुणीव्योष यवानीजीरकद्वयम्।
चित्रकं पिप्पलीमूलं वरा भृङ्गरसस्तथा॥ ६७॥
कट्फलं चित्रकञ्चैव सम भागानि कारयेत्।
सम्यक् सिद्धञ्च विज्ञाय पाने नस्ये प्रयोजयेत्॥ ६८॥

घृतप्रस्थं बलाव्योष विडङ्गशठिचित्रकैः ॥ ४८ ॥
सौवर्चलयवक्षार बिल्वामलकपुष्करैः ।
वृश्चीव वृहतीपथ्या यवानीदाडिमादिभिः ॥ ४६ ॥
द्राक्षापुनर्नवाचव्य दुरालभाम्लवेतसैः ।
शृङ्गीतामलकीभार्गी रास्नागोक्षुरकैः पचेत् ॥ ५० ॥
कल्कैस्तु सर्वकासेषु हिक्काश्वासे च शस्यते ।
कण्ठकारीघृत सिद्धं कफकासनिषूदनम् ॥ ५१ ॥

इति वृहत्कण्ठकारीघृतम् ।

व्योषाजमोदचित्रक जीरकपड्ग्रन्थिकचव्यकल्कितम् ।
सर्पिः कफकासघ्नं वासकरसाधित समधु ॥ ५२ ॥

इति व्योषाद्यं घृतम् ।

निर्गुण्डिपत्रस्वरसेन सिद्धं
सर्पिः कफोत्थं विनिहन्ति कासम् ॥ ५३ ॥

इति निर्गुण्डीघृतम् ।

विभीतकं घृताभ्यक्तं गोशकृत्परिवेष्टितम् ।
स्विन्नमग्नौ हरेत्कासं ध्रुवमास्यविधारितम् ॥ ५४ ॥

इति श्लेष्मकासः ।

कट्फलं कत्तृणं भार्गी मुस्तं धान्यं बलाभया ।
शुण्ठीपर्पटकं शृङ्गी सुराह्वञ्च जले शृतम् ॥ ५५ ॥
मधुहिङ्गुयुतं पेयं कासे वातकफात्मके ।
कण्ठरोगे मुखे शूले श्वासे हिक्काज्वरेषु च ॥ ५६ ॥

इति कट्फलादिः क्वाथः ।

लवङ्गजातीफलपिप्पलीनां भागान् प्रकल्प्याक्षसमानमीषाम् ।
कर्षार्धमेकं मरिचस्य दद्यात्पलानि चत्वारि महौषधस्य ॥ ५७

तासमं चूर्णमिदं प्रसह्य रोगानि मांस्तु प्रबलाविहन्ति।
ासज्वरारोचकमेहगुल्म श्वासाग्निमान्द्यग्रहणीगदेषु ॥ ५८ ॥

इति लघुलवङ्गादिसमशर्करं चूर्णम्।

सिंहास्यामृतसिंहीनां क्वाथं मधुसमायुतम्।
पिबेत्सपित्ते कफजे कासे श्वासे ज्वरे क्षये ॥ ५९ ॥
वासकः स्वरसः पेयो मधुयुक्तो हिताग्निना।
पित्तश्लेष्मकृते कासे रक्तपित्ते विशेषतः ॥ ६० ॥
वातश्लेष्मकृते कासे तालीसाद्यं प्रयोजयेत्।
पित्तयुक्ते भवेच्छ्रेष्टं वंशरोचनयायुतम् ॥ ६१ ॥

—०—

दशमूलाढ़के प्रस्थं घृतस्याक्षसमैः पचेत्।
पुष्कराक्षशठीबिल्व सुरसाव्योषहिंगुभिः ॥ ६२ ॥
पेयानुपानं तत्पेयं कासे वातकफात्मके।
श्वासरोगेषु सर्वेषु कफवातात्मकेषु च ॥ ६३ ॥

इति दशमूलाद्यं घृतम्।

भृङ्गराजरसप्रस्थं शृङ्गवेररसं तथा।
कटुतैलस्य च प्रस्थं गोमूत्रप्रस्थसंयुतम् ॥ ६४ ॥
दशमूलकुलित्थाय शुष्कमूलकशिग्रुकम्।
भार्गी च कुड़वांशानि क्वाथयेत्सलिलाढ़के ॥ ६५ ॥
पादशेषेण तेनापि कल्कं दत्वा विपाचयेत्।
देवदारुवचाकुष्टं शताह्वालवणत्रयम् ॥ ६६ ॥
हिंगुतुम्बुरुणीव्योषं यवानीजीरकद्वयम्।
चित्रकं पिप्पलीमूलं वरा भृङ्गरसस्तथा ॥ ६७ ॥
कट्फलं चित्रकञ्चैव सम भागानि कारयेत्।
सम्यक् सिद्धञ्च विज्ञाय पाने नस्ये प्रयोजयेत् ॥ ६८ ॥

सितासमं चूर्णमिदं प्रसह्य रोगानि मांस्तु प्रबलाविहन्ति।
कासज्वरारोचकमेहगुल्म श्वासाग्निमान्द्यग्रहणीगदेषु ॥ ५८ ॥

इति लघुलवङ्गादिसमशर्करं चूर्णम्।

सिंहास्यामृतसिंहीनां क्वाथं मधुसमायुतम्।
पिबेत्सपित्ते कफजे कासे श्वासे ज्वरे चये ॥ ५९ ॥
वासकः स्वरसः पेयो मधुयुक्तो हिताशिना।
पित्तश्लेष्मकृते कासे रक्तपित्ते विशेषतः ॥ ६० ॥
वातश्लेष्मकृते कासे तालीसाद्यं प्रयोजयेत्।
पित्तयुक्ते भवेच्छ्रेष्टं वंशरोचनयायुतम् ॥ ६१ ॥

—o—

दशमूलाढ़के प्रस्थं घृतस्याक्षसमैः पचेत्।
पुष्कराह्वशठीविल्व सुरसाव्योषहिंगुभिः ॥ ६२ ॥
पेयानुपानं तत्पेयं कासे वातकफात्मके।
श्वासरोगेषु सर्वेषु कफवातात्मकेषु च ॥ ६३ ॥

इति दशमूलाद्यं घृतम्।

भृङ्गराजरसप्रस्थं शृङ्गवेररसं तथा।
कटुतैलस्य च प्रस्थं गोमूत्रप्रस्थसंयुतम् ॥ ६४ ॥
दशमूलकुलित्थाय शुष्कमूलकशिग्रुकम्।
भार्गी च कुड़वांशानि क्वाथयेत्सलिलाढ़के ॥ ६५ ।
पादशेषेण तेनापि कल्कं दत्वा विपाचयेत्।
देवदारुवचाकुष्टं शताह्वालवणत्रयम् ॥ ६६ ॥
हिंगुतुम्बुरुशोव्योषं यवानीजीरकद्वयम्।
चित्रकं पिप्पलीमूलं वरा भृङ्गरसस्तथा ॥ ६७ ॥
कट्फलं चित्रकश्चैव सम भागानि कारयेत्।
सम्यक् सिद्धञ्च विज्ञाय पाने नस्ये प्रयोजयेत् ॥ ६८ ।

वातश्लेष्मात्मके कासे प्रतिश्याये च पीनसे ।
श्वासरोगेषु सर्वेषु कफवातात्मकेषु च ॥ ६८ ॥
तैलं लिहं भृङ्गराजं कफव्याधिविनाशनम् ॥

इति भृङ्गराजतैलम् । इति वातपित्तश्लेष्माधिकारः ।

—०—

## अथ निदानम् ॥

अतिव्यवायभाराऽध्व युद्धाऽश्व गजनिग्रहैः ।
रूक्षस्योरः क्षतं वायुः गृहीत्वा कासमावहेत् ॥ ७० ॥
सपूर्वं कासते शुष्कं ततः ष्ठीवेत्सशोणितम् ।
कण्ठेन रुजताऽत्यर्थं विभिन्नेनेव चोरसा ॥ ७१ ॥
सूचिभिरिव तीक्ष्णाभिः स्तुद्यमानेन शूलिना ।
दुःखस्पर्शेन शूलेन भेदपीडाभितापिना ॥ ७२ ॥
पर्वभेदज्वरश्वासः तृष्णा वैस्वर्य्यपीडितः ।
पारावत इवाकूजन् कासवेगात् क्षतोद्भवात् ॥ ७३ ॥

—०—

## अथ चिकित्सामाह ।

कासे तु क्षतजे वल्यै र्जीवनीयैर्घृतैरपि ।
शमनैः पित्तकासघ्नैः रक्तैश्च मधुरौषधैः ॥ ७४ ॥
यवागूं वा पिबेत्सिद्धां क्षतोरस्कः सुशीतलाम् ॥ ७५ ॥
द्राक्षेक्षुवालिकोत्पद्म मृणालोत्पलचन्दनैः ।
शृतं पेयां मधुयुतां सन्धानार्थं पिबेत् क्षती ॥ ७६ ॥

—०—

इक्षिक्षुवालिकापद्मसृणालोत्पलचन्दनैः।
मधुकं पिप्पलीद्राक्षा लाक्षाशृङ्गीशतावरी ॥ ७७ ॥
द्विगुणा च तुगाक्षीरी सिता सर्व्वचतुर्गुणा।
लिह्यात्तम्मधुसर्पिर्भ्यां क्षतकासनिवृत्तये ॥ ७८ ॥

इतीक्ष्वाद्यावलेहः।

पिप्पलीपद्मकं द्राक्षा सुपक्वं वृहतीफलम्।
घृतक्षौद्रयुतो लेहः क्षयकासनिवर्हणः ॥ ७९ ॥
मञ्जिष्ठमूर्वानतवह्निपाठाः श्यामां हरिद्रां विलिहेद्विचूर्ण्य।
क्षौद्रेण कासे क्षतजे क्षयोत्थे पिबेद् घृत चेक्षुरसे विपक्वम् ॥८०॥

—०—

इक्षिक्षुवालिकापद्म मृणालोत्पलचन्दनैः।
शृतं पयो मधुयुत सन्धानार्थं पिबेत् क्षती ॥ ८१ ॥

इतीक्ष्वादिभिर्क्षीरपाकः।

—०—

पञ्चाशच्च पलं स्विन्नं कूष्माण्डात् प्रस्थमाज्यतः।
पक्वं पलशतं खण्डं वासा क्वाथाढके पचेत् ॥ ८२ ॥
शुण्ठ्याधात्रीघनो भार्गी त्रिसुगन्धैश्च कार्षिकैः।
पिप्पलीकुडवश्चैव मधुमानं प्रदापयेत् ॥ ८३ ॥
कासं श्वास क्षय हिक्कां रक्तपित्त हलीमकम्।
हृद्रोगमम्लपित्तञ्च पीनसञ्च व्यपोहति ॥ ८४ ॥
युक्तसर्पिषु कूष्माण्डे पाके गन्धेन मुद्रया ॥

इति वासाकूष्माण्डकं। इति क्षतकासः।

विषमासात्म्यभोज्यातिव्यवयातिप्रजागरैः।
दूषिनां शोचता नृणां व्यापन्नेऽग्नौ त्रयोमलाः ॥ ८५ ॥

कुपिता चयज कास कुर्युर्देहचयप्रदम् ॥ ८६ ॥
सगात्रशूलज्वरदाहमोहान् प्राणचयं चोपलभेत कासी ।
शुष्कञ्च निष्ठीवति दुर्बलश्च प्रक्षीणमासो रुधिर सपूयम् ॥ ८७ ॥
त सर्वलिङ्ग भृशदुश्चिकित्स्य चिकित्सितज्ञा चयजं वदन्ति ॥८८.
इत्येष चयज कास चीणाना देहनाशन ।
साध्यो बलवता वास्या द्याप्यस्त्वेव चतोत्थित ॥ ८८ ॥
नवौ कदाचित सिध्येता मपि पादगुणान्वितौ ।
स्थविराणा जराकास सर्वो याप्य प्रकीर्त्तित ॥ ९० ॥
त्रीन् पूर्वान् साधयेत् साध्यान् पथ्यैर्याप्यास्तु यापयेत् ॥ ९१ ॥

---

## अथ चिकित्सामाह ।

पिप्पलीपद्मक लाचा सपक्व बृहतीफलम् ।
घृतचौद्रयुतो लेह चयकासनिवर्हण ॥ ९२ ॥
चूर्ण काकुभनिष्क वासकरसभावितं बहुवारान् ।
मधुघृतसितोपलाभि र्लेह्य चयकासपित्तहरम ॥ ९३ ॥

---

पिप्पलीगुडससिद्ध छागचीरयुतं घृतम ।
एतदग्निविवृद्धयर्थ सर्पिश्च चयकासिनाम् ॥ ९४ ॥
इति पिप्पल्याद्य घृतम् ।

कुलीरशृङ्गीघटकैर्बलावान्नि काथ्यवर्गैर्मधुरैस्तथान्यै ।
पचेद्घृत तत्तु निषेव्यमानं हन्यात् चयोत्थ चतजञ्च कासम् ॥९५॥
इति कुलीराद्य घृतम् ।

द्विपञ्चमूलीत्रिफला भार्गीशुण्ठी सचित्रके ।
कुलित्थपिप्पलीमूल पाठाकोलयवैर्जले ॥ ९६ ॥

शृते नागरदुस्पर्शं शठीपिप्पलीपौष्करैः।
कल्कैः कर्कटशृङ्ग्या च समैः सर्पिर्विपाचयेत् ॥ ९७ ॥
सिद्धेऽस्मिन् चूर्णितौ क्षारौ द्वौ पञ्चलवणानि च।
दत्वा युक्त्या पिबेन्मात्रां क्षयकासनिपीडितः ॥ ९८ ॥
इति द्विपञ्चमूलाद्यं घृतम्।

शुभेऽह्निसुदेशसंभूतं मूलशतं सम्यगश्वगन्धायाः।
पुष्ये ऽहनि स क्षुण्णं विपचेद् द्रोणेऽम्भसि च विद्वान् ॥ ९९ ॥
ज्ञात्वाष्टभागसिद्धं गृह्णीयात्तद्रसं सुपरिपूतम्।
द्वे चैवात्र पलशते दद्याच्छागस्य मांसस्य ॥ १०० ॥
सर्पिःप्रस्थमथैकं गव्यञ्च पयश्चतुर्गुणं दद्यात्।
कल्कानचसमाना नूर्ध्वमतः संप्रवक्ष्यामि ॥ १०१ ॥
काकोलीद्वयमृद्धी मेदे द्वे जीवकं स्वयं गुप्ताम्।
ऋषभकमेलां मधुकं मृद्वीकां यासपिप्पल्यौ ॥ १०२ ॥
जीवन्तीमुपकुल्यां वला विदारीं शतावरी चात्र।
दत्वा सम्यग्विपचेत् सर्पिरथोद्धृत्यखिला च ॥ १०३ ॥
मधुशर्करयोः कुडवं दत्वा भाण्डे शुभे स्थितं स्मृतिम्।
लीढ्वा तत्पाणितले यथेष्टमाहारमश्नीयात् ॥ १०४ ॥
क्षीणक्षतशिशुवृद्धाः क्षीणेन्द्रियहीनवलवर्णमासाद्य।
मासमुपकुर्यात् सद्यः पुष्टिवलारोग्य तेजांसि ॥ १०५ ॥
उपयुज्यसर्पिरेतत् सप्ततिवर्षो युवेव पुनर्भूत्वा।
बहुशः स्त्रियोऽधिगच्छेत् न चात्र शुक्रक्षयं लभते ॥ १०६ ॥
पुत्रार्थिनीचनारी लभते पुत्रान्वयस्यतीतेऽपि।
वन्ध्यालभते पुत्रं प्राश्येदश्वाश्वगन्धाद्यम् ॥ १०७ ॥
उपभुंक्ते य पुरुषो मासत्रयं द्विमासं मासं वा।
नारीशतं संगच्छेन्नैव भजेद्योषिता तृप्तिम् ॥ १०८ ॥

खालित्यवलीपलितैर्नचास्य देहोऽभिभूयते क्षिप्रम् ।
वातव्याधिभिरार्त्तस्तथैव हृद्बस्तिरोगार्त्तः ॥ १०८ ॥
न चिरादपि रोगार्त्ता भुञ्जानाः सर्पिररोगा भवन्ति ।
अतोजगद्धितार्थं सर्पिरिदं वाजिगन्धायाः ॥ ११० ॥
श्रेष्टं वाजीकरणं निर्दिष्टश्चाश्विभ्यां पूर्वं बहुशः ।
प्रोक्तं हृद्यं बल्यं क्षयकासहरं पुष्टिकरञ्च ॥ १११ ॥

इत्यश्वगन्धाद्यं घृतम् ।

पिप्पलीमधुकं वापि कार्षिकञ्च सितोपलम् ।
प्रस्थिकं गव्यमाज्यञ्च क्षीरमिक्षुरसस्तथा ॥ ११२ ॥
यवगोधूममृद्वीका चूर्णमामलकाद्रसम् ।
तैलञ्च प्रसृतांशानि तत्सर्वं मृदुनाग्निना ॥ ११३ ॥
पचेल्लेहं घृतक्षौद्र युक्तः सश्वासकासनुत् ।
क्षयहृद्रोगकासघ्नो हितो वृद्धाऽल्परेतसाम् ॥ ११४ ॥

इति पिप्पल्याद्योऽवलेहः ।

सन्निपातभवो ह्येष क्षयकासः सुदारुणः ।
सन्निपातहितं तस्मात् कार्य्यमत्र चिकित्सितम् ॥ ११५ ॥

इति क्षयकासः ।

अमृतानागरं फञ्जी व्याघ्रीपर्णी सुसाधितः ।
क्वाथः पिप्पलीचूर्णाढ्यः कासश्वासौ जयत्यलम् ॥ ११६ ॥
भार्गी सनागरासिंही कुलित्थं मूलकं तथा ।
पिबेत्पिप्पलीचूर्णेन कासश्वासं व्यपोहति ॥ ११७ ॥
स्वरसं शृङ्गवेरस्य माक्षिकेन समन्वितम् ।
पाययेत्कासश्वासघ्नं प्रतिश्यायकफापहम् ॥ ११८ ॥
पथ्या शुण्ठीघनगुडै गुटिकां धारयेन्मुखे ।
सर्वेषु श्वासकासेषु केवलं वा बिभीतकम् ॥ ११९ ॥

नागरेणाभया तद्वत् कासमाश्वपोहति ॥ १२० ॥
सपिप्पलीपुष्करमूलपथ्या शुण्ठीशठीमुस्तकसूक्ष्मचूर्णैः ।
गुड़ेन युक्ता गुटिकाः प्रयोज्याः श्वासेषु कासेषु च वर्धितेषु ॥१२१॥
अष्टाङ्गचूर्णसंयुक्तं पक्वा चीरं प्रयोजयेत् ।
कासं श्वासान्वितं घोरं हन्यादेतन्नःसंशयः ॥ १२२ ॥
पञ्चकोलैः शृतं चीरं कफघ्नं लघुशस्यते ।
श्वासकासारुचिहरं बलवर्णाग्निवर्धनम् ॥ १२३ ॥

इति कासश्वासः ।

वाम्यमानस्य कासेन नासास्रावे स्वरे जडे ।
क्षवथौ गन्धनाशे च धूमपानं प्रयोजयेत् ॥ १२४ ॥

---

## अथ कासे धूमानां पानम् ।

मनःशिलैलामरिचं मांसीमुस्तं सगुग्गुलम् ।
धूमन्तस्यानु च पयः सुखोष्णं सगुडं पिबेत् ॥ १२५ ॥
पञ्चकासान् चयहन्द सर्वदोषसमुत्थितान् ।
शतैरपि प्रयोगानां साधयेदप्रसाधितान् ॥ १२६ ॥

इति मनःशिलादिधूमपानम् ।

मनःशिलालिप्तदलं वदर्य्याघर्मशोषितम् ।
सचीरं धूमपानन्तु महाकासनिवारणम् ॥ १२७ ॥
पिष्ट्वा त्रिपुटधत्तूर मूलव्योषमनःशिलाः ।
तेन प्रलिप्यवसनं धूमवर्त्तिः प्रयोजयेत् ॥ १२८ ॥
धूमं तस्याः पिबेद्यस्तु त्र्यहात् कासमुदस्यति ॥ १२९ ॥
अर्कचीरशिले तुल्ये तदर्द्धञ्च कटुत्रिकम् ।
चूर्णितं वह्निनिक्षिप्तं पिबेद्धूमन्तु योगवित् ॥ १३० ॥

जातीदन्तरदिङ्गुल शिलैलागुग्गुलुः समः ।
अजामूत्रेण पिष्टोय धूमं कासहरः परः ॥ १११ ॥
भक्षयेदथ तच्चूर्णं पिवेद्दुग्धमथांवुना ।
कासाः पञ्चविधायान्ति शान्तिमाशु न संशयः ॥ ११२ ॥

—०—

कण्टकारीकृत. क्वाथ सकृष्णः सर्वकासहा ।
कण्टकार्य्याः कषायाय चूर्णं मधुयुतं लिहेत् ॥ १३३ ॥
देवदारुबलारास्ना त्रिफलाव्योषपद्मकैः ।
सविडङ्गै. शिलातुल्यं तच्चूर्णं सर्वकासनुत् ॥ १३४ ॥

—०—

कुनटीसैन्धवव्योष विडङ्गामलहिंगुभिः ।
लेहस्साज्यमधु. कास श्वासहिक्कानिवारणः ॥ १३५ ॥

इति कुनट्यादिलेहः ।

हरीतकीकणाशुण्ठी मरिचं गुडसयुतम् ।
कासघ्नो मोदक प्रोक्त. पर चाऽनलदीपन. ॥ १३६ ॥

इति हरीतक्यादो मोदकः ।

शुण्ठीकणामरिचनागदलत्वगेलं
चूर्णीकृतं क्रमविवर्द्धितमूर्ध्वमन्त्यात् ।
खादेदिद समसितं गुदजाग्निमान्द्य
गुल्मारुचिश्वासगलकण्ठहृदामयेषु ॥ १३७ ॥

इति शर्करासमचूर्णम् ।

लवङ्गजातीफलपिप्पलीनां भागान् प्रकल्प्याक्षसमानमीषाम् ।
पलार्धमात्रं मरिचस्य दद्यात्पलानि चत्वारि महौषधस्य ॥१३८॥

सितासमं चूर्णमिदं प्रसह्य रोगानि मानाग्नुबलान्निहन्यात्।
कासज्वरारोचकमेहगुल्मश्वासाग्निमान्द्य ग्रहणीप्रदोषान् ॥१३८॥

इति हरीतक्यादि समचूर्णम्।

कर्षः कर्षार्द्धमथो पलं पलद्वयं तथार्द्धकर्षश्च।
मरिचस्य पिप्पलीनां दाड़िमगुड़यावशूकानाम् ॥ १४० ॥
सर्वौषधैरसाध्या ये कासाः सर्ववैद्यविनिर्मुक्ताः।
अपि पूयं छर्दयतां तेषामिदमौषधं पथ्यम् ॥ १४१ ॥
अत्र दाड़िमं दाड़िमफलत्वक् च।

इति मरिचाद्य चूर्णम्।

प्रस्थं विभीतकाना मस्थि विहायसाधयेदजामूत्रे।
लेहयेदवलेहोऽयं मधुयुक्तः श्वासकासघ्नः ॥ १४२ ॥

इति विभीतकावलेहः।

जीवन्तीं मधुकं पाठां त्वक्क्षीरं त्रिफलां शठीम्।
मुस्तैलां पिप्पलीं द्राक्षां द्वौ बृहत्यौ विभीतकम् ॥ १४३ ॥
शारिवां पौष्करं मूलं कर्कटाख्यां रसाञ्जनम्।
पुनर्नवां लोहरज स्त्रायमाणां यवानिकाम् ॥ १४४ ॥
भार्गीं तामलकीमृद्धिं विडङ्गं धन्वयासकम्।
क्षारं चित्रकहिंग्वम्लवेतसं देवदारु च ॥ १४५ ॥
चूर्णीकृत्यपलांशानि लेहयेन्मधुसर्पिषा।
चूर्णं पाचितलं पञ्चकासान्वै तद्व्यपोहति ॥ १४६ ॥

इति जीवन्त्याद्यं चूर्णम्।

पद्मकं त्रिफलां व्योषं विड़ङ्गं सुरदारु च।
चूर्णीकृत्यपलांशानि लेहयेन्मधुसर्पिषा ॥ १४७ ॥
एतैश्चूर्णैः समैः सर्वैः पृथक् क्षौद्रं घृतं सिताम्।

लिह्यालेहं विपचैतत् सर्वकासहरं परम् ॥ १४८ ॥

इति पद्मकाद्यं चूर्णम् ।

सर्पिर्गुडूचीवृषकण्टकारी क्वाथेन कल्केन च सिद्धमेतत् ।
पेयं पुराणज्वरकासशूल श्वासाग्निमान्द्यं ग्रहणीगदेषु ॥१४९॥

इति सिंहामृतं घृतम् ।

घृतं रास्नाबलापथ्या श्वदंष्ट्रा कल्कपाचितम् ।
कण्टकारीरसे सर्पिः पञ्चकासनिसूदनम् ॥ १५० ॥

इति कण्टकारीघृतम् ।

समूलपत्रशाखायाः कण्टकार्यास्तुलां शुभाम् ।
क्षुण्णां पचेज्जलद्रोणे चतुर्भागावशेषिते ॥ १५१ ॥
मिश्रितैस्तत्कषायेऽस्मिन् घृतप्रस्थं विपाचयेत् ।
कल्कान्बिल्वप्रमाणांश्च तत्रेमानि प्रदापयेत् ॥ १५२ ॥
पिप्पली पिप्पलीमूलं चित्रको हस्तिपिप्पली ।
सौवर्चलं यवक्षारो रास्नात्रिकटुकं वचा ॥ १५३ ॥
एतत्सर्पिः प्रशंसन्ति पञ्चकासनिवारणम् ।
श्वासं कासं प्रतिश्यायं श्लेष्मकासञ्च नाशयेत् ॥ १५४ ॥
निदिग्धिकाघृतमिदं न व्याधिरतिवर्त्तते ।
जातशूलोऽपि संवृद्धो देवसेनामिवासुरः ॥ १५५ ॥

इति कण्टकारीघृतम् ।

कण्टकार्यास्तुलां क्षुण्णां कृत्वा द्रोणेऽम्भसि पचेत् ।
तेनाढ़केन क्वाथेन घृतप्रस्थं विपाचयेत् ॥ १५६ ॥
रास्नादुःस्पर्शषड्ग्रन्था पिप्पलीद्वयचित्रकैः ।
सौवर्चलयवक्षार कणामूलैश्च तं जयेत् ॥ १५७ ॥
कासश्वासकफष्ठीव हिक्कारोचकपीनसान् ॥ १५८ ॥

इति कण्टकारीघृतम् ।

समूलपत्रशाखन्तु श्वदंष्ट्रां कृत्वाटरूपकम्।
तस्य कुर्य्यात्पलशतं द्वौ प्रस्थौ पञ्चमूलयोः॥ १५९॥
हरीतकी विभीतक्योर्वल्कलं कुड़वद्वयम्।
दद्यादामलकानाञ्च कुड़वञ्च त्रिभागशः॥ १६०॥
निःक्वाथ्य सलिलद्रोणे चतुर्भागावशेषिते।
भेषजानि सुपिष्टानि तत्रेमानि प्रदापयेत्॥ १६१॥
द्वे मेदे द्वे हरिद्रे च जीवकर्षभकावुभौ।
काकोलीक्षीरकाकोली चन्दनं मधुकं तथा॥ १६२॥
मुद्गपर्णीमाषपर्णी पयस्या चापि पिप्पली।
मरिचं चाश्वगन्धा च सशुण्ठीकाकनासिका॥ १६३॥
सूक्ष्मैला शतपुष्पा च मृद्वीका च शतावरी।
एतैः सर्पिर्विपक्तव्यं गवां क्षीरे चतुर्गुणे॥ १६४॥
सर्वकासापहं सर्पिः क्षीणक्षतसुखावहम्।
हिक्काश्वासहरञ्चैव स्वररक्तप्रसादनम्॥ १६५॥

इति वृहद्दासकाद्यं घृतम्।

कण्टकार्य्यास्तुलां सम्यग् जलद्रोणे विपाचयेत्।
पादावशेषिते तस्मिन् कल्कानेतान् प्रदापयेत्॥ १६६॥
दुरालभाच्छिन्नरुहा भार्गीकर्कटाह्वया।
रास्नामुस्तं शठी चव्यं चित्रकं व्रूषणं तथा॥ १६७॥
पलांशानि पलान्यत्र शर्करायास्तु विंशतिः।
घृततैलपलान्यस्मिन्नष्टावष्टौ प्रदापयेत्॥ १६८॥
कल्को कृत्वा घृते शीते मधुनोऽष्टपलं क्षिपेत्।
चतुःपलं पिप्पलीनां तुगाक्षीर्य्याश्चतुःपलम्॥ १६९॥
एषः लेहः शमयति पञ्चकासांश्चिरोत्थितान्॥

इति कण्टकारीलेहः।

समूलपुष्पच्छदकण्टकार्य्यास्तुलां जलद्रोणपरिसुताञ्च ।
हरीतकीनाञ्च शतं निदध्यादेतत्तु पक्वा चरणावशेषम् ॥ १७० ॥
गुडस्य दत्त्वा शतमेतदग्नौ विपक्वसुतार्थं ततः सुशीते ।
कटुत्रिकञ्च त्रिपलप्रमाणं पलानि षट् पुष्परसस्य चापि ॥ १७१ ॥
क्षिपेच्चतुर्जातपलं यथाग्निप्रयुज्यमानो विधिनावलेहः ।
वातात्मकं पित्तकफोद्भवञ्च द्विदोषकासानपि च त्रिदोषान् ॥१७२॥
क्षतोद्भवं च क्षयजञ्च हन्यात् सपीनसश्वासमुरःक्षतञ्च ।
यक्ष्माणमेकादशरूपं भृगूपदिष्टं हि रसायनं स्यात् ॥१७३॥

इति व्याघ्रीहरीतकी ।

दशमूलीस्वयं गुप्ता शङ्खपुष्पीशठीबला ।
हस्तिपिप्पल्यपामार्गं पिप्पलीमूलचित्रकान् ॥ १७४ ॥
भार्गीपुष्करमूलञ्च द्विपलांशं यवाढकम् ।
हरीतकीशतञ्चैकं जले पञ्चाढ़के पचेत् ॥ १७५ ॥
यवैः स्विन्नैः कषायन्तु पूतं तच्चाभयाशतम् ।
पचेद् गुडतुलां दत्त्वा कुडवञ्च पृथग् घृतम् ॥ १७६ ॥
तैलात्पिप्पलीचूर्णाच्च सिद्धे शीते च माक्षिकात् ।
कुडव पलमान च चातुर्जातविचूर्णितम् ॥ १७७ ॥
लिह्याद् द्वे चाभये नित्य मतः खादेद्रसायनम् ।
तद्वलीपलित हन्याद्वर्णायुर्बलवर्धनम् ॥ १७८ ॥
पञ्चकासक्षयश्वासान् हिक्काः सविषमज्वरान् ।
हन्यात् गुल्मग्रहण्यर्शो हृद्रोगारुचिपीनसान् ॥ १७९ ॥
अगस्त्यविहित धन्य मिद श्रेष्ठं रसायनम् ।
संख्या पलानां शतसो मतागस्त्यहरीतकी ॥ १८० ॥

इत्यगस्त्यहरीतकी ।

यथोद्दिष्टगुणं कुर्वन् पित्तञ्च कुरुते यदि।
तथा सायं गुडो योज्य एष एवाल्पमात्रया॥ १८१॥
आर्द्रद्रव्यद्रवद्रव्य पलैरष्टाभिरेव च।
शुष्कद्रव्यचतुष्केण कुडवः समुदाहृतः॥ १८२॥
यवगोधूममाषाद्य तिलाद्यापि नवा हिताः।
पुराणा विरसा रूक्षा न तदर्थकराः स्मृताः॥ १८३॥
हरीतक्योऽपि नवा ग्राह्याः।

—०—

अभयानां शतं दारु शङ्खपुष्पीं मधूलिकाम्।
स्वयं गुप्तां पञ्चमूल्यौ द्वे शठीं पुष्कराह्वयम्॥ १८४॥
पञ्चकोलबला हस्ति पिप्पली साश्मभेदकान्।
भार्गीं पुनर्नवाञ्चैव द्विपलांशां यवाढकम्॥ १८५॥
पचेत्पञ्चाढके तोये पादशेषं तयोद्धरेत्।
विनीय चाभयां तत्र पुनश्चाम्नावधि न्ययेत्॥ १८६॥
दत्वा गुड़तुलां तत्र कषाये कुडवं पृथक्।
तैलात् पिप्पलीचूर्णाच्च घृतात्क्षौद्रात्तथैव च॥ १८७॥
पक्वा तत्तं द्रवत् स्थाप्य घृतभाण्डे विधानतः।
पथ्यभुङ् नियताहारः खादेद्द्वे द्वे हरीतकी॥ १८८॥
हन्याच्च ग्रहणीगुल्म पाण्डुर्त्ति विषमज्वरान्।
यक्ष्मार्श. प्लीह वैस्वर्य श्वासकासारुचिच्चयान्॥ १८९॥
बलवर्णाग्निजनन बलीपलितनाशनम्।
रसायनमिदं सिद्ध मगस्त्यविहित मतम्॥ १९०॥
इति वृहदगस्त्यहरीतकी।

यवाढ़के साजलाढकानि हरीतकीनान्तु शतं गुरूणाम्।

लौहे कटाहे समधिश्रयित्वा द्रव्याणि चैतानि समाधीत ॥१८१॥
दन्त्यश्वगन्धाचिरबिल्वमूलं भल्लातकं विल्वफलं नतञ्च ।
उभे हरिद्रे गजपिप्पली च पञ्चानि मूलानि च चित्रकस्य ॥१८२॥
पिप्पल्यपामार्गमथाम्रगुप्ता सर्वाणि कुर्यात्पलसम्मितानि ।
एकत्र सर्वाणि भिषग्विदध्याद् द्विपञ्चमूलीं च यवप्रमाणाम् ॥१८३
मृदूनि सुस्विन्नयवान् विदित्वा शनैः प्रयत्नादवतारयेच्च ।
विस्राव्यतेनैव जलेन सार्द्धं पचेत्पुराणस्य शतं गुडस्य ॥ १८४ ॥
भूयो गुरूणामपि तत्र दद्याद्धरीतकीनाञ्च सहस्रमन्यत् ।
प्रस्थं पुराणस्य घृतस्य दद्यात्नवस्य तैलस्य च तावदेव ॥ १८५ ॥

शीते मधु स्नेहसमन्तु दद्यात्
पलानि चाष्टावथ पिप्पलीनाम् ।
सा कल्कमिश्रा त्वथ सेव्यमाना
सर्वान् ज्वरान्नाशयतीह मासात् ॥ १८६ ॥

मासद्वयेनैव च नेत्ररोगान्विहन्त्यपूर्वाञ्च करोति दृष्टिम् ।
कुष्ठानि मासत्रयतो निहन्ति प्रभिन्नकर्णांगुलिनासिकानि ॥१८७॥

भगन्दरं श्लीपदवातगुल्मं
श्वासं तथा मासचतुष्टयेन ।
संभक्षिता पञ्चभिरेव मासैः
करोति केशान् भ्रमराञ्जनाभान् ॥ १८८ ॥
षड्भिस्तु मासैः खलु सापि कुर्यात्
केशान् सुशीतान् घनकुञ्चिताग्रान् ।
सहस्रपथ्यामिथ चोपयुज्य
बलं भवेदुत्तमकुञ्जरस्य ॥ १८९ ॥

स्वरं मयूरस्य हयस्य वेगं शरच्छशाङ्कस्य पराञ्च कान्तिम् ।
सौभाग्यमेधास्मृतिसत्वयुक्तो बलान्वितः पद्मदलायताक्षः ॥२००॥

जीवेत्समानाञ्च सहस्रमर्थं प्रयोगकालादिति सत्यवाक्यम्।
समीक्ष्यकल्पांस्तु चकारयोगं हिताय लोकस्य मुनिर्वसिष्ठः॥२०१।

इति वशिष्ठहरितकी।

कुलित्थानां पलशतं दशमूलपलं तथा।
शतं ब्राह्मणयष्ट्याश्च चतुर्गुणजले शृतम्॥ २०२॥
पादावशेषे पूते च गुडस्यार्धतुलां पचेत्।
पाकं ज्ञात्वावतार्यैव सुशीते श्लक्ष्णचूर्णितम्॥ २०३॥
षट्पलञ्च तुगाक्षीर्याः पिप्पल्या द्विपलं तथा।
कुडवं मधुनो दद्यात् स्थापयेत् स्निग्धभाजने॥ २०४॥
खादेदग्निबलापेक्षी नाशयेदचिरादयम्।
यक्ष्माणं पीनसं कासं श्वासं जीर्णमजीर्णकम्॥ २०५॥
जीर्णज्वरं पाण्डुरोगं हृद्रोगं श्लेष्ममारुतम्।
कुलित्थ गुड़ इत्युक्तः सर्वोपद्रवनाशन.॥ २०६॥

इति कुलुत्थगुडः।

चतुष्पलं मूलकशुण्ठिकस्य तथैव शुद्धस्य कुलित्थकस्य।
तुल्यं प्रदद्याद्दशमूलतश्च द्रोणेऽम्भसः सर्वमिदं पचेत्तु॥ २०७॥
दत्वा हविस्तैलपलाष्टकञ्च गुडस्य शुद्धस्य तुलां तथैव।
तावत्पचेद्यावदिदं समस्तं सद्व्यदार्व्या गुडपाकमेति॥ २०८॥
चूर्णीकृतैर्जीरकचव्यशृङ्गी भार्गीविसीगन्धिककट्फलैश्च।
मुस्तायवानीशठिपुष्करैश्च मध्येपकैरर्धपलप्रमाणैः॥ २०९॥
सार्धं क्षिपेन् माक्षिकप्रस्थमात्रं दद्यात् सुशीतेऽथ वक्रपिस्त्राम्।
मात्रां ततो लेहवदालिहेच्च पथ्याशनश्च ह्ययोगकाले॥ २१०॥
कफोद्भवा ये च विकारजाला सश्वासकासाहृदयचतश्च।
हृत्पार्श्वशूलज्वरछर्दि तृष्णा स्वरक्षयारोचकवह्निसादाः

तेनाश्मसमायांत्युपयोगतश्च कुलित्थसंज्ञस्य गुडस्य शीघ्रम् ॥२११॥

इति द्वितीयः कुलित्थगुडः।

खादिरवासकपल्लव छाया शुष्कांश्च संचूर्ण्य।
त्रिभागपिप्पलीयुक्तं कटुत्रयं मधुनावलिह्यात् ॥ ११२ ॥

इति कासश्लेष्मघ्नचूर्णम्।

## इति वङ्गसेने कासनिदानचिकित्साधिकारः समाप्तः ॥ १२ ॥

—०—

## अथ हिक्कानिदानमाह

विदाहि गुरुविष्टम्भि रूक्षाभिष्यन्दिभोजनैः।
शीतपानाशनस्नान रजो धूमातपानिलैः ॥ १ ॥
व्यायामकर्मभाराध्व वेगाघातापतर्पणैः।
हिक्काश्वासश्च कासश्च नृणां समुपजायते ॥ २ ॥
मुहुर्मुहुर्वायुरुदेति सस्वनो
यकृत् प्लीहांत्राणि मुखादि वा क्षिपन्।
सघोषवानाशु हिनस्ति यस्मा-
त्ततस्तु हिक्केत्यभिधीयते बुधैः ॥ ३ ॥
प्राणोदकान्नवाहीनि स्रोतांसि विकृतानिलः।
हिक्कां करोति संरुध्य तासां लिङ्गं शृणु पृथक् ॥ ४ ॥
अन्नजां यमलां क्षुद्रां गम्भीरां महतीं तथा।
वायुः कफेनानुगतः पञ्चहिक्का :करोति च ॥ ५ ॥

कण्ठोरसो गुरुत्वञ्च वदनस्य कषायता।
हिक्कानां पूर्वरूपाणि कुक्षेराटोप एव च ॥ ६ ॥
पानान्नैरतिसंयुक्तैः सहसा पीडितोऽनिलः।
हिक्कयत्यूर्ध्वगोभूत्वा तां विद्यादन्नजां भिषक् ॥ ७ ॥
चिरेण यमलैर्वेगैर्या हिक्का संप्रवर्त्तते।
कम्पयन्तीशिरोग्रीवां यमलाख्यां विनिर्दिशेत् ॥ ८ ॥
विकृष्टकालैर्या वेगै र्मन्दैः समभिवर्त्तते।
क्षुद्रिकानामसाहिक्का जत्रुमूलात्प्रधावति ॥ ९ ॥
नाभिप्रवृत्तायाहिक्का घोरागम्भीरनादिनी।
अनेकोपद्रववती गम्भीरानाम सा स्मृता ॥ १० ॥
मर्म्माण्यापीडयन्तीव सततं या प्रवर्त्तते।
महाहिक्केति सा ज्ञेया सर्वगात्रप्रकम्पिनी ॥ ११ ॥

आयम्यते हिक्कतो यस्य देहो
दृष्टिश्चोर्ध्वंभ्राम्यते यस्य नित्यम्।
क्षीणोन्नद्विट्क्षौति यश्चातिमात्रं
तौ द्वौ चान्त्यौ वर्जयेद्धिक्कमानौ ॥ १२ ॥

अतिसंचितदोषस्य भक्तहेयकृतस्य च।
व्याधिभिः क्षीणदेहस्य वृद्धस्यातिव्यवायिनः ॥ १३ ॥
आयासाद्यासमुत्पन्ना हिक्काहन्त्याशु जीवितम्।
यमिकायाप्रलापार्त्ति मोहतृष्णासमन्विता ॥ १४ ॥
अक्षीणश्चाप्यदीनस्य स्थिरधात्विन्द्रियस्य यः।
तस्य साधयितुं शक्या यमिकाहन्त्यतोऽन्यथा ॥ १५ ॥
आसां क्षुद्रान्नजासाध्या शेषाः प्राणहरामताः ॥ १६ ॥
यथाग्निरिन्धोः पवनानुवृद्धो वज्रं यथा वा सुरराजसृष्टम्।
रोगास्तथैते खलु दुर्निवाराः श्वास सहिक्का च विलम्बिका च ॥१७॥

प्राणावरोधतर्जनविस्मापनभयभावकैश्च घोरैः ।
कथाप्रयोगैः शमयेद्धिक्कां घोरां मनोघातैः ॥ १८ ॥
हिक्कार्त्तस्य पयः छागं हितं नागरसाधितम् ।
रसान् पिबेत् फलिन्याश्च लाजसक्तून् ससैन्धवान् ॥ १९ ॥
मधुकं मधुसंयुक्तं पिप्पलीशर्करान्विता ।
नागरं गुडसंयुक्तं हिक्काघ्नं नावनत्रयम् ॥ २० ॥
स्तन्येन मक्षिकाविष्टा नस्यं बालकवाम्बुना ।
योज्यं हिक्काभिभूताय स्तन्यं वा चन्दनान्वितम् ॥ २१ ॥
मधुसौवर्चलो पेतं मातुलुङ्गरसं पिबेत् ।
अप्यसाध्यानयत्यस्तं हिक्कान्वोद्गावलेहनात् ॥ २२ ॥
सद्य एव महायोगः काशमूलभवं रजः ।
हिक्कार्त्तो मधुना लिह्याच्छुण्ठीधात्री कणान्वितम् ॥ २३ ॥
प्रवालत्रिफलाशङ्ख चूर्णं मधुघृतप्लुतम् ।
पिप्पलीगैरिकं चेति लेह्यो हिक्कानिवारणः ॥ २४ ॥
कोलमज्जाञ्जनं लाजा तिक्ता काञ्चनगैरिकम् ।
कृष्णाधात्रीसिताशुण्ठी कासीसन्दधिनाम च ॥ २५ ॥
पाटल्याः सफलं पुष्पं कृष्णाखर्जूरमुस्तकम् ।
षडेते पादिकालेह्या हिक्काघ्नामधुसंयुताः ॥ २६ ॥
नैपाल्यागोविषाणाभ्यां कुष्ठसर्जरसस्य च ।
धूमं कुशस्य वासाज्यं पिबेद्धिक्कोपशान्तये ॥ २७ ॥
निर्धूमाङ्गारनिक्षिप्त श्लक्ष्णमाषरजोद्भवः ।
हिक्कापञ्चनिहन्त्याशु धूमः पीतो न संशयः ॥ २८ ॥
सुपूतिकीटं लसुनोग्रगन्धाहिङ्ग्वन्वितं चूर्णमिदं सुभावितम् ।
अजाविमूत्रेण च सप्तकृत्वा प्राणानिपीतं विनिहन्ति हिक्काम् ॥२९॥
इति सुपूतिकीटाद्यं चूर्णम् ।

हरेणवोऽथ पिप्पल्यः क्वाथहिंगुसमायुतः ।
हिक्काप्रशमनः श्रेष्ठो धन्वन्तरिवचो यथा ॥ ३० ॥
कुकूलानलसंस्विन्न इक्षुवाल्यप्रसम्भवः ।
रसः समाक्षिकः पीतो हिक्कामाशु नियच्छति ॥ ३१ ॥

---

नारीक्षीरेण वा सिद्धं सर्पिर्मधुरकैरपि ।
नासानिसिक्तं पीतं वा सद्यो हिक्कां नियच्छति ॥ ३२ ॥

इति नारीक्षीराद्यं घृतम् ।

यत्किञ्चित्कफवातघ्नं मुष्णं वातानुलोमनम् ।
भेषजं पानमन्नं वा हिक्काश्वासेषु तद्धितम् ॥ ३३ ॥
हिक्काश्वासे पिबेद्भार्गीं सविश्वामुष्णवारिणा ।
नागरं वा सिताभार्गीं सौवर्चलसमन्वितम् ॥ ३५ ॥
अभयानागरकल्कं पौष्करयावशूकमरिच कल्कं वा ।
तोयेनोष्णेन पिबेच्छ्वासी हिक्की च तच्छान्त्यै ॥ ३६ ॥
तृषितो दशमूलस्य क्वाथं वा देवदारुजम् ।
मदिरां वा पिबेद्युक्त्या हिक्काश्वासनिपीडितः ॥ ३७ ॥

---

दशमूलीरसे सर्पिः दधिमण्डेन साधयेत् ।
कृष्णासौवर्चलक्षार वयस्थाहिंगुरोचकैः ।
कायस्थयाचतत्पानाद्धिक्काश्वासौ नियच्छति ॥ ३८ ॥

इति दशमूलाद्यं घृतम् ।

वासाघृतं वाथपिबेत्त्रिवेवृद्धघृतमेव वा ।
वातपित्तानुबन्धे तु गुड़विश्वसमन्वितम् ॥ ३९ ॥

छागचीरं प्रयोक्तव्यं शृतं तोये चतुर्गुणे ।
श्वासघ्नं भेषजं यच्च तच्च कार्य्यं प्रयत्नतः ॥ ४० ॥

## इति वङ्गसेने हिक्कानिदानचिकित्साधिकारः समाप्तः ॥ १३ ॥

—०—

## अथ श्वासनिदानम् ।

यैरेव कारणैर्हिक्का बहुभिः संप्रवर्त्तते ।
तैरेव कारणैः श्वासः सद्यो भवति देहिनाम् ॥ १ ॥
महोर्ध्वछिन्नतमकक्षुद्रभेदैस्तु पञ्चधा ।
भिद्यते समहाव्याधिः श्वास एको विशेषतः ॥ २ ॥
प्राग्रूपं तस्य हृत्पीडा शूलमाध्मानमेव च ।
आनाहो वक्रवैरस्यं शङ्खनिस्तोद एव च ॥ ३ ॥
यदा स्रोतांसि संरुध्य मारुतः कफमूर्च्छितः ।
विष्वग्व्रजति संरुद्ध स्तदाश्वासान् करोति सः ॥ ४ ॥
उद्धूयमानवातो यः शब्दवद्दुःखितो नरः ।
उच्चैः श्वसति संरुद्धो मत्तर्षभ इवानिशम् ॥ ५ ॥
प्रनष्टसञ्ज्ञाविज्ञान स्तथा विभ्रान्तलोचनः ।
विवृताचाननो बद्ध मूत्रवर्चाविशीर्णवाक् ॥ ६ ॥
दीर्घं प्रश्वसित चास्य दूराद्विज्ञाय ते भृशम् ।
महाश्वासोपसृष्टस्तु क्षिप्रमेव विपद्यते ॥ ७ ॥
ऊर्ध्वं श्वसति यो दीर्घं न च प्रत्याहरत्यधः ।
श्लेष्माहृतमुखस्रोताः क्रुद्धगन्धवहार्दितः ॥ ८ ॥

ऊर्ध्वदृष्टिर्विपश्यंश्च विभ्रान्ताक्ष इतस्ततः।
प्रमुह्यन्वेदनार्त्तश्च शुष्कास्योरतिपीड़ितः॥९॥
ऊर्ध्वश्वासे प्रकुपिते चाधः श्वासो निरुध्यते।
मुह्यतस्ताम्यतश्चोर्ध्वं श्वासस्तस्यैव हन्त्यसून्॥१०॥
यस्तु श्वसितिविच्छिन्नं सर्वप्राणैर्निपीडितः।
न वा श्वसिति दुःखार्त्तो मर्म्मच्छेदरुगर्दितः॥११॥
आनाहः स्वेदमूर्च्छार्त्तो दह्यमानेन वस्तिना।
विप्लुताक्षः परिक्षीणः श्वसन्रक्तैक लोचनः॥१२॥
विचेताः परिशुष्कास्योविवर्णः प्रलपन्नरः।
छिन्नश्वासेन विच्छिन्नः सशीघ्रं विजहात्यसून्॥१३॥
प्रतिलोमं यदा वायुः स्रोतांसि प्रतिपद्यते।
ग्रीवां शिरश्च सगृह्य श्लेष्माणं समुदीर्य्य च॥१४॥
करोति पीनसं तेन रुद्धो घुर्घुरकं तथा।
अतीव तीव्रवेगञ्च श्वासं प्राणप्रपीड़कम्॥१५॥
प्रताम्यति सवेगेन त्रस्यते सनिरुध्यते।
प्रमोहं कासमानश्च सगच्छति मुहुर्मुहुः॥१६॥
श्लेष्मण्यमुच्यमानेन भृशं भवति दुःखितः।
तस्यैव च विमोक्षान्ते मुहूर्त्तं लभते सुखम्॥१७॥
तथास्योद्ध्वंसते कण्ठः कृच्छ्राच्छक्नोऽतिभाषितुम्।
न चापि निद्रां लभते शयानः श्वासपीडितः॥१८॥
पार्श्वे तस्यावगृह्णाति शयानस्य समीरणः।
आसीनो लभते सौख्यमुष्णञ्चैवाभिनन्दति॥१९॥
उच्छ्रिताक्षो ललाटेन स्विद्यताभृशमार्त्तिमान्।
विशुष्कास्यो मुहुश्वासो मुहुश्चैवावधम्यते॥२०॥
मेघांबुशीतप्राग्वातैः श्लेष्मलैश्च प्रवर्द्धते।

मयाप्यस्तमकः श्वासः साध्यो वा स्यान्नवोत्थितः ॥ २१ ॥
ज्वरमूर्च्छापरीतस्य विद्यात्प्रतमकन्तु तम् ।
उदावर्त्तरजोऽजीर्णक्लिन्नकायनिरोधजः ॥ २२ ॥
तमसा वर्धतेऽत्यर्थं शीतैश्चाशु प्रताम्यति ।
मज्जतस्तमसीवास्य विद्यात्प्रतमकन्तु तम् ॥ २३ ॥
रूक्षायासोद्भवः कोष्टे क्षुद्रो वातमुदीरयेत् ।
क्षुद्रश्वासेन सोऽत्यर्थं दुःखेनाङ्गप्रबाधकः ॥ २४ ॥
हिनस्ति न स गात्राणि न च दुःखं यथोत्तरे ।
न च भोजनपानानां निरुणद्धि चिताङ्गतिम् ॥ २५ ॥
नेन्द्रियाणां व्यथाञ्चैव काञ्चिदापादयेद्रुजम् ।
स साध्य उक्तो बलिनः सर्वो वाऽव्यक्तलक्षणः ॥
क्षुद्रः साध्यतमस्तेषां तमकः कृच्छ्र उच्यते ॥ २६ ॥
त्रयः श्वासा न सिध्यन्ति तमको दुर्बलस्य च ॥ २७ ॥
काम प्राणहरारोगा बहवो न तु ते तथा ।
यथा श्वासश्च कासश्च हरते प्राणमाशु हि ॥ २८ ॥
वाताधिको भवेत्क्षुद्रस्तमकस्तु कफोत्तरः ।
कफाद्वाताधिकात्पित्त संसृष्टः छिन्नसञ्ज्ञकः ॥
श्वासो मारुतसंसृष्टो महानूर्ध्वस्तथा मतः ॥ २९ ॥

—०—

## अथ चिकित्सामाह ।

स्नेहवस्ति कृते केचिदूर्ध्वं चाधश्च शोधनम् ।
मृदुप्राणवतां श्रेष्टं श्वासिनामादिशन्ति हि ॥ ३० ॥
दशमूलीशठीरास्ना पिप्पली विश्वपौष्करैः ।
शृङ्गीतामलकीभार्गी गुडूचीनागराग्निभिः ॥ ३१ ॥

यवागूं विधिना सिद्धं कषायं वा पिवेन्नरः।
कासहृद्ग्रहपार्श्वार्त्तिं हिक्काश्वासप्रशान्तये ॥ ३२ ॥
कुलित्थयवकोलाम्लं दशमूलबलाजलम्।
पानार्थं कल्पयेत् कासं हिक्काश्वासनिवृत्तये ॥ ३३
कुलित्थनागरव्याघ्री वासाभिः क्वथितं जलम्।
पीतं पौष्करसंयुक्तं श्वासकासनिवारणम् ॥ ३४ ॥
दशमूलस्य वा क्वाथः पौष्करेणावचूर्णितः।
श्वासकासप्रशमनः पार्श्वशूलविनाशनः ॥ ३५ ॥
रम्भाकुन्दशिरीषाणां कुसुमं पिप्पलीयुतम्।
पिष्ट्वा तण्डुलतोयेन पीत्वा श्वासमपोहति ॥ ३६ ॥
देवदारुवचाभार्गीं विश्वपौष्करकट्फलैः।
कृत्वा क्वाथो जयत्याशु श्वासकासानशेषतः ॥ ३७ ॥

शृङ्गीमहौषधिकणा घनपुष्कराणां
चूर्णं शठीमरिचयोश्च सिताविमिश्रम्।
क्वाथेन पीतममृता हयपञ्चमूल्याः
श्वासं त्र्यहेन विनिहन्ति हि घोररूपम् ॥ ३८ ॥

कूष्माण्डकसिता चूर्णं पीतं कोष्णेन वारिणा।
शीघ्रं शमयति श्वासं कासञ्चैव सुदारुणम् ॥ ३९ ॥
व्याघ्रीदुरालभाशृङ्गी बिल्वमध्यत्रिकण्टकैः।
सामृताग्निकुलत्थैस्तैः यूषः स्याच्छ्वासनुत्परः ॥ ४० ॥
कुलित्थदशमूलानां क्वाथे स्युर्जाङ्गला रसाः।
कासमर्दकपत्राणां यूषः शोभाञ्जनस्य च ॥ ४१ ॥
शुष्कमूलकयूषश्च हिक्काश्वासनिवारणः ॥ ४२ ॥
द्राक्षां हरीतकीं कृष्णां कर्कटाख्यां दुरालभाम्।
विलिहन्मधुसर्पिर्भ्यां श्वासान् हन्ति सुदारुणान् ॥ ४३ ॥

गुड कटुकतैलेन मिश्रयित्वा समं लिहन् ।
त्रिसप्ताहप्रयोगेन श्वास निर्मूलतां नयेत् ॥ ४४ ॥
श्वाविध सूचका दग्धा सक्षौद्रघृतशर्करा ।
श्वासकासहरा वर्त्तिपाद्धौ वा मधुसर्पिषा ॥ ४६ ॥
हरिद्रा मरिच द्राक्षां गुड रास्ना कणा शठिम् ।
तैलेन विलिहन् हन्या च्छ्वासान् प्राणहरानपि ॥ ४७ ॥
हरिद्रापत्रमैरण्ड मूल लाक्षां मन शिलाम् ।
देवदारुघनं मांसी पिष्ट्वा वर्त्तिं प्रकल्पयेत् ॥ ४८ ॥
तां घृताक्ता पिबेद्धूम श्वास हन्ति सुदारुणम् ।
श्वासहिक्कापरिगत स्निग्धं स्वेदैरुपाचरेत् ॥ ४८ ॥
युक्तैर्लवणतैलाभ्यां तैरस्य ग्रथित कफ ।
श्वासो विलयन याति मारुतश्च प्रशाम्यति ॥ ४८ ॥
स्निग्ध ज्ञात्वा ततश्चैन भोजयित्वा रसौदनम् ।
वातश्लेष्मविबन्धे वा मिश्रधूम प्रयोजयेत् ॥ ५० ॥

शृङ्गीकटुत्रयफलत्रयकण्टकारी
भार्गी सपुष्करजटालवणानि पञ्च ।
चूर्णं पिबेदशिशिरेण जलेन हिक्का
श्वासोर्ध्ववातकसनारुचिपीनसेषु ॥ ५१ ॥

इति शृङ्ग्यादि चूर्णम् ।

निदग्धिका चामलकप्रमाणा हिम्वार्द्रयुक्तां मधुनाशयुक्ताम् ।
लिहन्नर श्वासतिपीडितो हि श्वास जयत्यथ बलावाहैण ॥५२॥
भल्लातकमधुपर्णी पथ्यादशमूलनागरक्वाथ ।
तमके कफप्रधाने शस्त श्वासे च मारुतजे ॥ ५३ ॥
पथ्या कषायमथवा पिबेद्रस मार्कवस्य मधुना ।
तमके पुष्करजस्वा सनागर चोरमेकाद्य ॥ ५४ ॥

शठीपुष्करजीवन्ती त्वक्षुस्त पुष्कराह्वयम् ।
सुरसा तामलकी वा पिप्पल्यगुरुनागरम् ॥ ५५ ॥
वालकञ्च समं चूर्णं कृत्वाष्टगुणशर्करम् ।
सर्वथा तमके श्वासे हिक्कायाञ्च प्रयोजयेत् ॥ ५६ ॥
यचैकस्माद्द्रव्यादष्टगुणा शर्करा ॥ सर्वथेति पानभोजनादिषु ॥

इति शव्याद्यं चूर्णम् ।

हिंस्राविडङ्गपूतिक त्रिफलाव्योषचित्रकैः ।
द्विचीरं सर्पिषः प्रस्थं चतुर्गुणजले श्रुतम् ॥ ५७ ॥
कर्षमात्रैः पचेत्तद्धि श्वासकासौ व्यपोहति ।
अर्शांस्यरोचकं गुल्मं शकृद्भेदं चयं तथा ॥ ५८ ॥

इति हिंस्राद्यं घृतम् ।

सौवर्चलयवक्षार कटुकाव्योषचित्रकैः ।
घृतं वर्चाविडङ्गैश्च साधितं श्वासशान्तये ॥ ५९ ॥

इति सौवर्चलघृतम् ।

कुलित्थरससयुक्तं पञ्चकोलशृतं घृतम् ।
दीपनं श्वासकासघ्नं कफव्याधिहरं परम् ॥ ६० ॥

इति कुलित्थाद्यं घृतम् ।

तिक्तासौवर्चलक्षार पथ्यात्रिकटुहिंगुभि. ।
समातुरैर्घृतं मिद्ध सचीरं श्वासकासनुत् ॥ ६१ ॥
गुल्मानाहप्लि शमयेत् प्रवृद्धान् गुदजानपि ।

इति तिक्ताद्यं घृतम् ।

कुलित्थदशमूलानि तथा ब्राह्मणयष्टिका ।
प्रस्थं प्रस्थञ्च सङ्गृह्य दारिद्रोणेन साधयेत् ॥ ६२ ॥
पादशेषे रसे तस्मिन् घृतप्रस्थं विपाचयेत् ।
चीरकं द्विगुणं दत्वा कल्किते पञ्चकोलकैः ॥ ६३ ॥

सक्षारैः पलिकैः सर्वैः शनैर्मृदग्निना पचेत्।
कासश्वासहरञ्चैव हिक्काञ्च विषमज्वरम् ॥ ६४ ॥
हन्यात्तथार्शो ग्रहणी हृद्रोगारुचिपीनसान्।
गुल्मं प्लीहामयं हन्यादलवर्णाग्निवर्धनम् ॥ ६५ ॥
अग्निसन्दीपनञ्चैव कौलित्थं षट्पलं घृतम् ॥ ६६ ॥

इति कुलित्थाद्यं घृतम्।

सुवहाकालिकाभार्गी शुकाख्यं कौचुलं फलम्।
काकादनीशृङ्गवेरं वर्षाभूर्वृहतीद्वयम् ॥ ६७ ॥
पलमात्रैर्घृतप्रस्थं पचेदेतैर्जलाढके।
कटुष्णं पीतमेतद्धि श्वासामयविनाशनम् ॥ ६८ ॥

इति सुवहाद्यं घृतम्।

तैलं दशगुणे सिद्धं भृङ्गराजरसे शुभे।
पीयमानं यथा न्यायं श्वासकासौ व्यपोहति ॥ ६९ ॥

इति भृङ्गराजतैलम्।

तिस्रस्तिस्रस्तु पूर्वाह्णे भुक्ताग्रे भोजनस्य च ॥ ७० ॥
पिप्पल्यः किंशुकक्षार भाविता घृतभाजिताः।
प्रयोज्या मधुसमिश्रा रसायनगुणैषिणा ॥ ७१ ॥
जेतुं कासक्षयश्वास हिक्काशोषगलामयान्।
अर्शांसिग्रहणीदोषं पांडुतां विषमज्वरान् ॥ ७२ ॥
वैस्वर्यपीनसं शोफं गुल्मं वातबलासकम्।
मासमेवाश्नतो युक्त्या माध्विकां पिबतोऽनु च ॥ ७४ ॥
अवधारितवेगस्य यक्ष्मा न भवति ध्रुवम्।

इति क्षारपिप्पली।

शतं संगृह्य भार्ग्यास्तु दशमूल्यास्तथा परम्।
शतं हरीतकीनाञ्च पचेत्तोये चतुर्गुणे ॥ ७५ ॥

पादावशेषे तस्मिंस्तु रसे वस्त्रनिपीडिते।
आलोड्य च तुलां पूतां गुडस्य त्वभयां ततः॥ ७६॥
पुनः पचेत्तु मृद्वग्नौ यावल्लेहत्वमागतम्।
शीते च मधुनश्चात्र षट्पलानि प्रदापयेत्॥ ७७॥
त्रिकटु त्रिसुगन्धञ्च पलिकानि पृथक् पृथक्।
कर्षद्वयं यवक्षारं संचूर्ण्य प्रक्षिपेत्ततः॥ ७८॥
भक्षयेदभयामेकां लेहस्यार्द्धपलं लिहेत्।
श्वासं सुदारुणं हन्ति कासं पञ्चविधं तथा॥ ७९॥
स्वरवर्णप्रदोह्येष जठराग्निप्रदीपनः।
हरीतकीशतस्यात्र प्रस्थत्वादाढकं जलम्॥ ८०॥

इति भार्गीगुडः।

कुलित्थं दशमूलञ्च तथैव द्विजयष्टिका।
शतं शतञ्च संग्राह्य जलद्रोणे विपाचयेत्॥ ८१॥
पादावशेषे तस्मिंस्तु गुडस्यार्धतुला क्षिपेत्॥ ८२॥
शीतीभूते च पक्के च मधुनोऽष्टौ पलानि च॥ ८३॥
षट्पलानि तुगाक्षीर्याः पिप्पल्याश्च पलद्वयम्।
त्रिसुगन्धि सुगन्धञ्च खादेदग्निबलं प्रति॥ ८४॥
श्वासं कासं ज्वरं हिक्कां नाशयेत्तमकं तथा।
योगसन्दर्शनादत्र वृद्धवैद्योपदेशतः॥ ८५॥
जलं चतुर्गुणं देयं स्वल्पत्वाद्द्रोणवारिणा।
मानसान्निध्य संवादाद्द्विपलं त्रिसुगन्धिनः॥ ८६॥

इति कुलित्थगुडः।

## इति वङ्गसेने श्वासनिदानचिकित्साधिकारः समाप्तः॥ १४॥

## अथ स्वरभेदनिदानमाह ।

अत्युच्चभाषणविषाध्ययनाभिघात
सन्दूषणै प्रकुपिता पवनादयस्तु ।
स्रोतस्सु ते स्वरवहेषु गता' प्रतिष्ठां
हन्यु' स्वर भवति चापि हि षड्विध स ॥ १ ॥
वातेन कृष्णनयनाननमूत्रवर्चा
भिन्न शनै भवति गर्दभवत् स्वरश्च ।
पित्तेन पीतनयनाननमूत्रवर्चा
ब्रूयाद्गलेन स च दाहसमन्वितेन ॥ २ ॥
ब्रूयात्कफेन सततं कफरुद्धकण्ठ'
स्वल्पं शनैर्वदति चापि दिवा विशेषात् ।
सर्वात्मके भवति सर्वविकारसंपत्
तं चाप्यसाध्यमृषय स्वरभेदमाहु' ॥ ३ ॥
धूमेत वाक्क्षयकृते क्षयमाप्नुयाच्च
वागेषु चापि हतवाक परिवर्जनीयः ।
अन्तर्गतं स्वरमलक्षपद चिरेण
मेदोन्वयाद्वदति दिग्धगलस्तृषार्त्त ॥ ४ ॥
क्षीणस्य वृद्धस्य कृशस्य चापि
चिरोत्थितो य सहजोऽपि जात ।
मेदस्विन सर्वसमुद्भवश्च
स्वरामयोयो न स सिद्धिमेति ॥ ५ ॥

## अथ चिकित्सामाह ।

स्निग्धान् परं तापनकृच्छधातून्
स योजयेद्वमनवस्ति विरेचनैश्च ।

नस्यावपीड़मुखधावनधूमलेहैः
सम्पादयेत्तु विविधैः कवलग्रहैश्च ॥ ६ ॥
यः श्वासकासविधिरादित एव चोक्त-
स्तञ्चाप्यशेषमवचारयितुं यतेत ॥ ७ ॥
स्वरोपघातेऽनिलजे भुक्तोपरि घृतं पिबेत् ॥ ८ ॥
कासमर्दकवार्त्ताकमार्कवस्वरसैः पचेत्।
पीतं घृतं हन्त्यनिलं सिद्धं वार्त्ताकजे रसे ॥ ९ ॥

इति कासमर्दादिघृतम्।

तथा कोष्णजलं देयं भुक्त्वा घृतगुड़ौदनः।
पैत्तिके तु विरेकस्तु पयश्च मधुरैः शृतम् ॥
लिहेन्मधुरकाणां वा चूर्णं मधुसमायुतम् ॥ १० ॥
अश्नीयाच्च समर्पिष्कं यष्टीमधुकपायकम् ॥ ११ ॥
शृङ्गांस्त्वचं चीरवतां द्रुमाणां संकुथ्य दुग्धे विपचेत्तु तेन।
कल्केन यष्टीमधुकस्य सर्पिः सिद्धं पिबेत्तन्मधुशर्करात्तम् ॥ १२ ॥

इति शृङ्गाद्यं घृतम्।

पिप्पली पिप्पलीमूलं मरिचं विश्वभेषजम्।
पिबेन्मूत्रेण मतिमान् कफजे स्वरसंचये ॥ १३ ॥
अजमोदां निशां धात्रीं चारं वह्निं विचूर्ण्य च।
मधुसर्पियुतं लीढ्वा स्वरभेदं व्यपोहति ॥ १४ ॥
पलविककटुफणयावशूकचूर्णैश्च हन्यात् स्वरभेदमाशु।
किं वा कुलित्थं वदनान्तरस्थं स्वरामयं हन्त्यथ पौष्करं वा ॥१५॥
वाते सलवणं तैलं पित्ते सर्पिः समाक्षिकम्।
कफे सक्षारकटुकं क्षौद्रं केवलमिष्यते ॥ १६ ॥
गले तालुनि जिह्वायां दन्तमूलेषु चाश्रितः।
तेन निष्क्रमते श्लेष्मा स्वरश्चाशु प्रसीदति ॥ १७ ॥

अगुरुसुरदारुदार्वी सम्लिल स्वरभेदहृत्यिवेत्कोष्णम् ।
व्याघ्रीसुरतरुनागर ससिद्दमुखक्काथमथवापि ॥ १८ ॥
तैलाक्तं स्वरभेदे वा खादिरं धारयेन्मुखे ।
पथ्या पिप्पलीसंयुक्त युक्ता वा नागरेण तु ॥ १९ ॥
बदरीपत्रकल्कन्तु घृतभृष्टं ससैन्धवम् ।
स्वरोपघाते कासे च लेहमेनं प्रयोजयेत् ॥ २० ॥
स्वरोपघाते मेदोजे कफवद्विधिरिष्यते ।
क्षयजे सर्वजे वापि प्रत्याख्यामाचरेत् क्रियाम् ॥ २१ ॥

—०—

*निदग्धिकापलशतं तदर्द्धं ग्रन्थिकस्य च ।*
चित्रकस्य तदर्धञ्च दशमूलञ्च तत्समम् ॥ २२ ॥
द्रोणद्वयेऽपां नि क्काथ्यकषायाढकमाहरेत् ।
पूते क्षिपेत्तदर्धन्तु पुराणस्य गुडस्य च ॥ २३ ॥
सर्वमेकत्र कृत्वा च लेहवत्साधुसाधयेत् ।
अष्टौ पलानि पिप्पल्या स्त्रिजातकपलं तथा ॥ २४ ॥
मरिचानां पलञ्चैकं सर्वमेकत्र चूर्णितम् ।
मधुनः कुडवं दत्वा तदश्नीयाद्यथाबलम् ॥ २५ ॥
स्वरभेदहरं मुख्यं प्रतिश्यायहरं परम् ।
श्वासकासाग्निमान्द्यार्शो गुल्ममेहगलामयान् ॥ २६ ॥
आनाहमूत्रकृच्छ्राणि हन्याद् ग्रन्थ्यर्बुदानि च ॥ २७ ॥

इति निदग्धिकादिलेहः ।

शर्करामधुमिश्राणि शृतानि मधुरैः सह ।
पिबेत्पयांसि यस्योच्चैर्वदतोऽभिहत स्वरः ॥ २८ ॥
वातादिजनितश्वास कासघ्ना ये प्रकीर्त्तिताः ।
योगास्तांश्चापि युञ्जीत यथा दोषं चिकित्सकः ॥ २९ ॥

चव्याम्लवेजसकटुत्रयतिन्तिड़ीकं
तालीसजीरकतुगादहनैः समांशैः ।
चूर्णं गुडप्रमृदितं त्रिसुगन्धियुक्तं
वैस्वर्य्यपीनसकफारुचिषु प्रशस्तम् ॥ ३० ॥

इति चव्यादिचूर्णम् ।

व्याघ्रीस्वरसविपक्वं रास्नावाट्यालगोक्षुरव्योषैः ।
सर्पिः स्वरोपघातं निहन्ति कासञ्च पञ्चविधम् ॥ ३१ ॥
शुष्कद्रव्यमुपादाय स्वरसानामसम्भवे ।
वारिण्यष्टगुणे साध्यं ग्राह्यं पादावशेषितम् ॥ ३२ ॥
स्वरसानां चालाभे चूर्णस्याढ़कमाढ़कमुदकस्य च ।
तद्वारिपर्युषितं त्वदितं स्वरसवत् प्रयोज्यम् ॥ ३३ ॥

इति कण्टकारीघृतम् ।

हिक्काश्वासे चये कासे स्वर्य्याणि पठितानि तु ।
सर्वाणितानि योज्यानि भिषग्भिः स्वरसंचये ।

## इति वङ्गसेने स्वरभेदनिदानचिकित्साधिकारः समाप्तः ॥ १५ ॥

---

## अथारोचकनिदानमाह ।

वातादिभिः शोकभयातिलोभक्रोधैर्मनोघ्नाशनरूपगन्धैः ।
अरोचकाः स्युः परिहृष्टदन्तः कषायवक्त्रश्च नरोऽनिलेन ॥ १ ॥
कट्वम्लमुष्णं विरसञ्च पूति पित्तेन विद्याल्लवणञ्च वक्त्रम् ।
माधुर्य्यपैच्छिल्यगुरुत्वशैत्य विबन्धसम्बन्धयुतं कफेन ॥ २ ॥
अरोचके शोकभयातिलोभक्रोधाद्यहृद्याशुचिगन्धजे स्यात् ।

स्वाभाविकञ्चास्यमथारुचिञ्च त्रिदोषजेनैकरसं भवेत्तु ॥ ३ ॥

हृच्छूलपीड़नयुतं पवनेन पित्तात्
तृड्दाहशोषबहुलं सकफप्रसेकम् ।
श्लेष्मात्मकं बहुरुजं बहुभिश्च विद्या-
द्वैगुण्यमोहजडताभिरथापरञ्च ॥ ४ ॥

प्रक्षिप्तन्तु मुखे चान्नं जन्तुर्न खादयेद्यदि ।
अरोचकः स विज्ञेयो भक्तद्वेषमतः शृणु ॥ ५ ॥
चिन्तयित्वा तु मनसा दृष्ट्वा श्रुत्वा तु भोजनम् ।
द्वेषं करोति यो जन्तुः स भक्तद्वेष उच्यते ॥ ६ ॥
यस्य चान्ने भवेच्छ्रद्धा स भक्तच्छन्द उच्यते ।
कुपितस्य भयार्त्तस्य ज्वरितस्य विरोधकः ॥ ७ ॥

---

## अथ चिकित्सामाह ।

वस्तिः समीरणे पित्ते विरेको वमनं कफे ।
कुर्य्याद्धृद्यानुकूलानि हर्षणञ्च मनोघ्नजे ॥ ८ ॥

वार्त्ताकवचाग्निरनिले विधिवत् पिवेच्च
स्नेहोष्णतोयमदिरान्यतमेन चूर्णम् ।
कृष्णाविडङ्गयवभस्महरेणु भार्गी
रास्नैलहिंगुलवणोत्तमनागराणाम् ॥ ९ ॥

पैत्ते गुडांवुमधुकैर्वमनं प्रशस्तं
लेहः समं स्वसितामधुसर्पिरिष्टः ।
निम्बांबुच्छर्दितवतः कफजेऽनुपानं
राजद्रुमांबुमधुना सह दीप्यकाव्यम् ॥ १० ॥

मरिचं मधुना लेह्यं कफजेऽरोचके भिषक् ।

अरुचौ कवलास्तावद्भूमाः सुसुखधावनम्॥
मनोज्ञमन्नपानञ्च हर्षणाऽऽश्वासनानि च॥ ११॥
कुष्ठसौवर्चलाजाजी शर्करामरिचं विड़म्।
धान्यैलापद्मकोशीर पिप्पलीचन्दनोत्पलम्॥ १२॥
लोध्रं तेजोवती पथ्या त्र्यूषणं सयवाग्रजम्।
आर्द्रदाड़िमनिर्य्यासश्चाजाजीशर्करायुतः॥ १३॥
सतैलमाक्षिकाश्चेते चत्वारः कवलग्रहाः।
चत्वारो रोचकान् हन्युर्वातादोकजसर्वजान्॥ १४॥
अम्लिकागुड़तोयञ्च त्वगेला मरिचान्वितम्।
अभक्तच्छन्दरोगेषु शस्तं कवलधारणम्॥ १५॥
शृङ्गवेररसञ्चैव मधुना सह योजयेत्।
अरुचीश्वासकासघ्नं प्रतिश्यायकफापहम्॥ १६॥
भोजनाग्रे सदा पथ्यं जिह्वाकण्ठविशोधनम्।
अग्निसन्दीपनं हृद्यं लवणार्दकभक्षणम्॥ १७॥
कारव्यजाजीपत्रैला व्योषवृक्षाम्लदाड़िमम्।
सक्षौद्रशर्करं हृद्यं रुचिं वह्निप्रदीपनम्॥ १८॥

इच्छाविनाशजनितेषु च बाधकेषु
भावान् भवायवितरेत् खलु शक्यरूपान्।
अर्थेन चातिपतितेषु पुनर्भवाय
पौराणिकैः श्रुतिपथैरनुमानयेत्तम्॥ १९॥
दैन्यं गते मनसि बोधनमत्र शस्तं
दद्यात् प्रियं मनसि सेव्यमरोचकेषु॥ २०॥
सात्म्यान् सुदेशरचितान् विविधांश्च भक्ष्यान्
पानानि मूलफलखाण्डवरागलेह्यान्।
सेवेद्रसांश्च विविधान्विविधैः प्रकारै-

भुञ्जीत चापि लघुरूक्षमन सुखानि ॥ २१ ॥
यस्य यदीप्सितं किञ्चित्तदेयमरुचौ सदा ।
विडङ्गमधुसंयुक्तो रसो दाडिमसम्भव ॥
असाध्यमपि स हन्या दरुचिं वक्त्रधारित ॥ २२ ॥
अष्टादशशिग्रुफलानि दशमरिचानि विंशतिपिप्पल्य ।
आर्द्रकपलं गुडपलं प्रस्थत्रयमारनालस्य ॥ २३ ॥
विडलवणसहितमेतत्खजाहतं सुरभिगन्धाढ्यम् ।
व्यञ्जनसहस्रघाति ज्ञेय कलहसकं नाम्ना ॥ २४ ॥
इति कलहंसकाञ्जिकम् ।
द्वेपले दाडिमादष्टौ खण्डाद्व्योषात्पलत्रयम् ।
त्रिसुगन्धिपलञ्चैकं चूर्णमेकत्र कारयेत् ॥ २५ ॥
दीपन रोचन हृद्य पीनसज्वरकासजित् ।
इति दाडिमाद्यं चूर्णम् ।
पिप्पलीनां शतञ्चैकं द्वेशते मरिचस्य च ।
सितापलचतुष्कञ्च नागरार्धपलं तथा ॥ २६ ॥
धान्यसौवर्चलाजाज्य स्त्वगेलै चार्धकार्षिके ।
कोलदाडिमवृक्षाम्ल यवानी चाम्लवेतसम ॥ २७ ॥
कार्षिकाश्चूर्णयेदेतान् हृद्यमन्नप्ररोचनम् ।
प्लीहहृदग्रहणीदोष पञ्चकासनिबर्हणं ॥ २८ ॥
खाण्डवो नाम गुल्मार्त्ति विबन्धानाह शूलनुत् ।
इति खाण्डवचूर्णम् ।
तालीशोपणचव्यनागलवर्णैस्तुल्यांशकैर्हिस्तत ।
कृष्णाग्रन्थिकतिन्तिडीकहुतभुग्त्वक्क्षीरकाख्यैर्युत ।
विश्वैलावदराम्ल वेतसघनैर्धान्याजमोदायुतै ।
स्य शैर्दाडिमपाद एष विहित श्रेष्ठ सितार्धायुत ॥ २९ ॥

कण्ठास्योदरहृद्विकारशमनः कायाग्निसन्दीपनो।
गुल्माध्मानविसूचिका गुदरुजाश्वासक्रमिच्छर्द्दिहा॥
कासारुच्यतिसारमूढमरुतां वा हृद्रुजांनाशनः।
चूर्णोऽयं भिषजामतीव कथितः ख्यातो महाखाण्डवः॥३०॥
इति महाखाण्डवः।
अतोक्तन्तु यवान्याद्यं चूर्णमत्र प्रयोजयेत्॥ ३१॥

—०—

यवानीतिन्तिडीकञ्च नागरं साम्लवेतसम्।
दाडिमं वादरञ्चाम्लं कार्षिकानुपकल्पयेत्॥ ३२॥
धान्यसौवर्चलाजाजी वराङ्गमर्धकार्षिकम्।
पिप्पलीनां शतञ्चैकं द्वेशते मरिचस्य च॥ ३३॥
शर्करायाश्च चत्वारि पलान्येकत्र चूर्णयेत्।
जिह्वाविशोधनं हृद्यं तच्चूर्णं भक्तरोचकम्॥ ३४॥
हृत्पीड़ापार्श्वशूलघ्नं विबन्धानाह नाशनम्।
कासश्वासहरं ग्राहि ग्रहण्यर्शो विकारनुत्॥ ३५॥
इति यवानीखाण्डवचूर्णम्।

लवङ्गकङ्कोलमुशीरचन्दनं नत सनीलोत्पलकृष्णजीरकम्।
ऐला सकृष्णागुरुभृङ्गकेशरं कणा सविश्वानलद सहांबुना॥३६॥
कर्पूरजातीफलवंशरोचनं सिताष्टभागं समसूक्ष्मचूर्णितम्।
सुरोचन तर्पणमग्निदीपनं बलप्रदं वृष्यतमं त्रिदोषनुत्॥३७॥
उरो विबन्धं तमकं गलग्रह सश्वासयक्ष्मारुचिपीनसं तथा।
ग्रहण्यतीसारमथास्रजः क्षयं प्रमेहरोगञ्च निहन्ति सत्वरम्॥३८॥
इति लवङ्गाद्यं चूर्णम्।

सूक्ष्मैलापत्रकं त्वक् च पत्रं तालिशनन्तुगा।
पृथ्वीकाजीरकं धान्यं दाड़िमं चाद्र कार्षिकम्॥ ३९॥

पिप्पली पिप्पलीमूलं चव्यचित्रकनागरम् ।
मरिचं दीप्यकञ्चैव वृक्षाम्लं चाम्लवेतसम् ॥ ४० ॥
अजमोदाऽश्व गन्धा च दधित्थं चापिकार्षिकान् ।
प्रदेया चातिशुद्धाया: शर्करायाश्चतु:पलम् ॥ ४१ ॥
चूर्णमग्निप्रसादं स्यात्परमं रुचिवर्द्धनम् ।
प्लीहानं काममर्शांसि शूलं श्वासं वमिं ज्वरम् ॥ ४२ ॥
निहन्ति दीपयत्यग्निं बलवर्णप्रदं परम् ।
वातानुलोमनं हृद्यं कण्ठजिह्वाविशोधनम् ॥ ४३ ॥
इति सूक्ष्मैलाद्यं चूर्णम् ।
व्याघ्रीस्वरसविपक्वं रास्नाकट्फलगोक्षुरव्योषैः ।
सर्पिः स्वरोभिघातं हन्यात् कासं च पञ्चविधम् ॥ ४४ ॥

## इति वङ्गसेनेऽरोचकनिदानचिकित्साधिकारः समाप्तः ॥ १६ ॥

—०—

## अथ छर्दिरोगनिदानमाह ।

दुष्टैर्दोषैः पृथक् सर्वै बिभत्सालोकनादिभिः ।
छर्दयः पञ्चविज्ञेया स्तासां लक्षणमुच्यते ॥ १ ॥
अतिद्रवैरतिस्निग्धै रहृद्यैर्लवणादिभिः ।
अकाले चातिमात्रैश्च तथाऽसात्म्यैश्च भोजनैः ॥ २ ॥
श्रमाद्भयात्तथोद्वेगा दजीर्णात् क्रमिदोषतः ।
नार्याश्चापन्नसत्वाया स्तथातिद्रुतमश्नतः ॥ ३ ॥
विभत्सैर्हेतुभिश्चान्यै र्द्रुतमुत्क्लेशितो बलात् ।
छादयन्नाननं वेगैरर्दयन्नङ्गभञ्जनैः ।
निरुच्यते छर्दिरिति दोषो वक्त्रं प्रधावति ॥ ४ ॥

हृल्लासोद्गाररोधैः प्रसेकोलवणस्तनुः।
द्वेषोऽन्नपाने च भृशं वमीनां पूर्वलक्षणम् ॥ ५ ॥
हृत्पार्श्वपीडासुखशोषशीर्षनाभ्यर्त्तिकासस्वरभेदतोदैः।
उद्गारशब्दप्रबलं सफेनं विच्छिन्नकृष्णं तनुकं कषायम् ॥ ६ ॥
कृच्छ्रेण चाऽल्पं महता च वेगेनार्त्तोऽनिलाच्छर्दयतीह दुःखम् ॥७॥
क्षीणस्य या छर्दिरतिप्रवृत्ता सोपद्रवाशोणितपूययुक्ता।
सचन्द्रिकां तां प्रवदन्त्यसाध्यां साध्यां चिकित्सेदनुपद्रवाञ्च ॥८॥

—०—

## अथ चिकित्सामाह।

आमाशयात् क्लेशभवा हि सर्वाः
स्युः छर्दयो लङ्घनमेव तस्मात्।
प्रकारयेन्मारुतजां विना तु
संशोधनं वा कफपित्तहारि ॥ ९ ॥
ससैन्धवं पिबेत्सर्पि र्वातछर्दिनिवारणम्।
लवणत्रयपुक्तेन संयुक्तं चूर्णमेन च।
हन्यात्क्षीरोदकं पीतं छर्दिं पवनसम्भवाम् ॥ १० ॥
मुद्गामलकयूषं वा ससर्पिष्कं ससैन्धवम्।
यवागूं मधुमिश्रां च पञ्चमूलीश्रृतां पिबेत् ॥ ११ ॥
धान्याकविश्वदशमूलकषायसिद्धान्
यूषान्रसान् पवनवम्यरुचिप्रशान्त्यै।
पीत्वा सुखानि लभते मधुमिश्रितां वा
शङ्खाह्वया स्वरसमूषणचूर्णयुक्ताम् ॥ १२ ॥
इति वातछर्दिः।

—०—

## अथ निदानम्।

मूर्च्छापिपासामुखशोषमूर्द्ध ताल्वक्षिसंतापतमो भ्रमार्त्तः।
पीतं भृशोष्णं हरितं सतिक्तं धूम्रञ्च पित्तेन वमेत्सदाहम् ॥१३॥

---

## अथ चिकित्साम्।

छर्द्यां पित्तोद्भवायान्तु श्लक्ष्णकुम्भोद्भवं रजः।
मृद्वीकेक्षुविदारीणां रसोरेकाय शस्यते ॥ १४ ॥
पित्तोपशमनीयानि योज्यानि च हितानि च।
कषाययूषकल्कानि घ्नन्तिपित्तोत्तरं वमिम् ॥ १५ ॥
लाजामसूरयवमुद्गकृता यवागूः
छर्द्यां हिता मधुयुता बहुपित्तजायाम्।
यूषाः सुगन्धिमधुतिक्तरसप्रगाढा
मृद्भृष्टलोष्टभवमंबुहितं तृषायाम् ॥ १६ ॥
हृद्दाहपित्तबहुलेषु वमीगतेषु
द्राक्षारसं पिबति माक्षिकसंयुतञ्च ॥ १७ ॥
सौदीर्च्यं गैरिकं पेयं सेव्यं वा तंडुलांबुना।
शीतं धात्रीरसाद्यं वा पित्तछर्दिनिवृत्तये ॥ १८ ॥
चन्दनेनाक्षमात्रेण संयोज्यामलकीरसम्।
पिबेन्माक्षिकसंयुक्तं छर्दिस्तेन निवार्यते ॥ १९ ॥
चन्दनञ्च मृणालञ्च बालकं तगरं हृपम्।
सतण्डुलोदकक्षौद्रः कल्कः पीतो वमिं जयेत् ॥ २० ॥
कषायो भृष्टमुद्गस्य सलाजमधुशर्करः।
छर्द्यतीसारतृट्दाहज्वरघ्नः संप्रकाशितः ॥ २१ ॥
क्वाथः पर्पटजः पीतः सक्षौद्रः छर्दिनाशनः ॥ २२ ॥

हरीतकीनां चूर्णन्तु लिह्यान्माक्षिकसंयुतम्।
अधोभागीकृते दोषे छर्दिः शीघ्रं निवर्त्तते॥ २३॥
गुडूचीत्रिफलानिम्ब पटोलैः क्वथितं पिबेत्।
क्षौद्रयुक्तं निहन्त्याशु छर्दिं पित्ताम्लसम्भवाम्॥ २४॥
सिताचन्दनमध्वक्तं लिहेद्वा माक्षिकाशकृत्।
सोपद्रवापित्तभवा छर्दिरेतेन शाम्यति॥ २५॥
सर्पिः क्षौद्रसितोपेतान् लाजशक्तून् पिबेत्तथा।
पित्तच्छर्दिश्च तेनाशु प्रशाम्यति सुदुस्तरा॥ २६॥

इति पित्तच्छर्दिः।

---

## अथ निदानम्।

तन्द्रास्यमाधुर्य्यकफप्रसेक सन्तोषनिद्रारुचिगौरवार्त्तः।
स्निग्धं घनं स्वादुकफाद्विशुद्धं सलोमहर्षोऽल्परुजं वमेत्तु॥२७॥

---

## अथ चिकित्साम्।

छर्द्यां कफोद्भवायान्तु वमनं योजयेद्भिषक्।
तोयैः सर्षपसिन्धूत्थहिंगुनिम्बकषायुतैः॥ २८॥
शस्यन्ते शालिगोधूम यवमुद्गमकुष्टकाः।
तक्रकाञ्जिकयूषाश्च पटोलाद्याश्च भोजने॥ २९॥
आरग्वधादिनिर्यूहं दशाङ्गं योग्यमेव च।
पाययेन्मधुसंयुक्तं कफच्छर्दिविनाशनम्॥ ३०॥
मनःशिलायाः फलपूरकस्य रसैः कपित्थस्य च पिप्पलीनाम्।
क्षौद्रेण चूर्णं मरिचैश्च युक्तं लिह्यात्कफच्छर्दिसुदीर्णवेगम्॥ ३१॥
विडङ्गत्रिफलाविश्वा चूर्णं मधुयुतं जयेत्।

विडङ्गप्लवशुण्ठीना मथवा श्लेषजा वमिम ॥ ३२ ॥
सजाम्बवम्बा वदरस्य चूर्णं मुस्तायुत कर्कटकस्य शृङ्गम ।
दुरालभं वा मधुसमयुक्तं लिह्येत्कफच्छर्दिविनिग्रहार्थम् ॥३३॥
इति कफच्छर्दि ।

—०—

## अथ निदानम् ।

शूलाविपाकारुचिदाहतृष्णा श्वासप्रमेहप्रवलाप्रसक्ताम् ।
छर्दिस्त्रिदोषात्लवणाम्लनील सान्द्रोष्णरक्तं वमता नृणा स्यात् ॥३४॥
विट्स्वेदमूत्राम्बुवहानि वायु श्रोतांसि सरुध्य यदोर्ध्वमेति ।
उत्पन्नदोषस्य समाचितन्तु दोष समुद्धूय नरस्य कोष्टात् ॥ ३५ ॥
विण्मूत्रयोस्तत्समगन्धवर्णं तृट्श्वासकासार्त्तियुत प्रसक्ताम ।
प्रच्छर्दयेद् दुष्टमिहाति योगात् तयार्दितश्चाशु विनाशमेति ॥३६॥

—०—

## अथ चिकित्साम् ।

पिष्ट्वाधात्रीफल द्राक्षा शर्कराञ्च पलोन्मिताम् ।
दत्वा मधुपलञ्चैव कुडव सलिलस्य च ।
वाससागालित पीत हन्ति छर्दिं त्रिदोषजाम् ॥ ३७ ॥
मसूरसक्तव चौद्र मर्दिता दाडिमाम्भसा ।
पीता निवारयत्याशुच्छर्दिंदोषत्रयोद्भवाम् ॥ ३८ ॥
श्रीफलस्य गुडूच्या वा कषायो मधुसयुत ।
पेयश्छर्दित्रये शीतो मूर्वा वा तण्डुलाम्बुना ॥ ३९ ॥
समाक्षिका मधुरसा पीता वा तण्डुलाम्भसा ।
तर्पण वा मधुयुत तिसृणामपि भेषजम् ॥ ४० ॥
क्षतं गुडूच्या विधिवत् कषाय हिमसञ्ज्ञितम ।

तिसृष्वपि भवेत्पथ्यं माक्षिकेन समन्वितम् ॥ ४१ ॥
युक्ताम्ललवणः पिष्टा उष्णविर्योऽथवा हितः ॥ ४२ ॥

एलालवङ्गगजकेशरकोलमज्ज
लाजाप्रियङ्गुघनचन्दनपिप्पलीनाम् ।
चूर्णं सितामधुयुतं मनुजो विलिह्य
छर्दिं निहन्ति कफमारुतपित्तजां च ॥ ४३ ॥

इत्येलादिचूर्णम् । इति त्रिदोषच्छर्दिः ।

कोलमज्जाकणाधात्री लाजाबिल्वफलत्रिकम् ।
श्यामाञ्जनाढ्यकौलित्थं मक्षिकाविट्सितायुतम् ॥ ४४ ॥
कणोपणकपित्थन्तु त्वगेलापत्रकं समम् ।
सक्षौद्राः पादिकालेहाः षड़ेते छर्दिनाशनाः ॥ ४५ ॥
कोलामलकमज्जानौ मक्षिकाविट् सितामधु ।
सकृष्णातण्डुलो लेहः छर्दिमाशु नियच्छति ॥ ४६ ॥

लाजाकपित्थमधुमागधिकोषणानां
क्षौद्राभयात्रिकटुधान्यकजीरकाणाम् ।
पथ्याऽमृतामरिचमाक्षिकपिप्पलीनां
लेहास्त्रयः सकलवम्यरुचिप्रशान्त्यै ॥ ४७ ॥

मनःशिलामागधिकोषणानां चूर्णं कपित्थाम्लरसेन युक्तम् ।
लाजैः समांशैर्मधुनावलीढं छर्दिं प्रसक्तामसकृन्निहन्ति ॥ ४८ ॥

अश्वत्थवल्कलं शुष्कं दग्धं निर्वापितं जले ।
तज्जलं पानमात्रेण छर्दिं जयति दुर्जयाम् ॥ ४९ ॥
जात्यारसः कपित्थस्य पिप्पलीमरिचान्वितः ।
क्षौद्रेण युक्तः शमये लेहोऽयं छर्दिमुल्वणाम् ॥ ५० ॥

—०—

१ अत्र जातीशब्देन धात्र्याः ग्रहणम् ।

निम्बाम्रपल्लवगवेधुकधान्यमेव
ह्रीवेरवारिमधुना पिबतोऽल्पमल्पम् ।
छर्दिः प्रयाति शमनं त्रिसुगन्धियुक्ता
लीढानिहन्ति मधुना सदुरालभा वा ॥ ५१ ॥
विदलानि च मुद्गानां पिप्पल्यश्चैव कुट्टिता ।
श्राधृतसलिलं पेयं समधु छर्दिनाशनम् ॥ ५२ ॥
तण्डुलीययुतं खादेत् कपित्थं सूपर्णेन वा ।
सौवर्चलमजाज्यश्च पिप्पलीमरिचानि च ।
युक्तोऽयं मधुना लेहः श्रेष्ठः छर्दिनिवारणः ॥ ५३ ॥
मातुलुङ्गरसो लाजा शर्करामधुसंयुतः ।
पिप्पलीचूर्णसंयुक्तः श्रेष्ठः छर्दिनिवारणः ॥ ५४ ॥
कृष्णोपणमिताचूर्णं लाजतुल्यं समाक्षिकम् ।
कपित्थबीजपूराम्लं कल्कितं छर्दिनाशनम् ॥ ५५ ॥
प्रियंग्वंजनमुस्तानि पाययेत्तु यथाबलम् ।
तृष्णातिसारछर्दिघ्नं सक्षौद्रतण्डुलाम्भुना ॥ ५६ ॥
आम्रास्थिबिल्वनिर्यूहः पीतः समधुशर्करः ।
निहन्याच्छर्द्यतीसारं वैश्वानर इवाहुतिम् ॥ ५७ ॥
जंब्वाम्रफलमध्यं क्षौद्रं दत्वा सुशीतलं सलिलम् ।
मार्जारवचूर्णं पिबेच्छर्द्यतिमारं परं सिद्धम् ॥ ५८ ॥

---

पद्मकामृतनिम्बानां धान्यचन्दनयोः पचेत् ।
कल्के क्वाथे च हविषः श्रेष्ठं छर्दिनिवारणम् ॥ ५९ ॥
तृष्णारुचिप्रशमनं दाहज्वरहरं परम् ।

पद्मकाद्यं घृतम् ।

कल्याणकक्षूषणजीवकानि घृतानि देयानि तु छर्दिरोगे ॥ ६० ॥

इति साधारणविधिः।

—०—

## अथ निदानम्।

वीभत्सजा दौर्हृदजामजा च ह्यसात्म्यतो वा क्रमिजा च या हि।
सा पञ्चमी तां च विभावयेत्तु दोषोच्छ्रयेणैव यथोक्तमादौ ॥ ६१ ॥
शूलहृल्लासबहुला क्रमिजा च विशेषतः।
क्रमिहृद्रोगतुल्येन लक्षणेन च लक्षिता ॥ ६२ ॥

—०—

## अथ चिकित्साम्।

वीभत्सजामवीभत्सै र्हेतुभिः संहरेद्वमिम्।
दौर्हृदोत्थां वमिं हृद्यैः काङ्क्षितैर्वस्तुभिर्जयेत् ॥ ६३ ॥
लङ्घनैर्वमनैर्वापि सात्म्यैर्वा सात्म्यसम्भवाम्।
क्रमिहृद्रोगवच्चापि साधयेत् क्रमिजां वमिम् ॥ ६४ ॥
यथादोषञ्च वितरेच्छस्तं विधिमनन्तरम्।
पवनघ्नी चिरोत्थासु प्रयोज्या छर्दिषु क्रिया ॥ ६५ ॥

—०—

## अथ छर्दितृष्णाचिकित्सामाह।

फल्गुप्रवालं छिन्नाया, मधुकं नीलमुत्पलम्।
सुस्थैः शीतकषायोऽयं तृष्णाछर्दिनिवारणः ॥ ६६ ॥
एतैरेवौषधैः सिद्धां लाजपेयां पिबेन्नरः।
सशर्करां समाक्षीकां तृष्णाछर्दिनिवारणाम् ॥ ६७ ॥

आम्रजम्बुकषायं वा पिबेन्माक्षिकसंयुतम् ।
छर्दिं सर्वां प्रणुदति तृष्णाञ्चैवापकर्षति ॥ ६८ ॥
वटशृङ्गं सितालोध्रं दाडिमं मधुकं मधु ।
पिबेत्तण्डुलतोयेन छर्दितृष्णानिवारणम् ॥ ६९ ॥
ओदनं रक्तशालीनां शीतं माक्षिकसंयुतम् ।
*भोजयेत्तेन शाम्येत छर्दितृष्णे चिरोत्थिते* ॥ ७० ॥
महाकल्याणकं सर्पिः कल्याणकमथापि वा ।
शतावरीघृतं वापि तृष्णाछर्दिनिवारणम् ॥ ७१ ॥
कासश्वासौ ज्वरस्तृष्णा हिक्का वैचित्यमेव च ।
हृद्रोगस्तमकश्चैव ज्ञेया छर्देरुपद्रवाः ॥ ७२ ॥

## इति वङ्गसेने छर्दितृष्णाछर्दिनिदानचिकित्साधिकारः समाप्तः ॥ १७ ॥



## अथ तृष्णानिदानमाह ।

भयश्रमाभ्यां बलसंक्षयाद्वा ऊर्ध्वं चितं पित्तविवर्द्धनैश्च ।
पित्तं सवातं कुपितं नराणां तालुप्रपन्नं जनयेत्पिपासाम् ॥ १ ॥
स्रोतःस्वपांवाहिषु दूषितेषु दोषैश्च तृट् सम्भवतीह जन्तोः ।
तिस्रः स्मृतास्ताः क्षतजा चतुर्थी क्षयात्तथा ह्यामसमुद्भवा च ॥२॥
भक्तोद्भवा सप्तमिकेति तासां निबोधलिङ्गान्यनुपूर्वशस्तु ॥ ३ ॥
क्षामास्यता मारुतसम्भवायां तोदस्तथा शङ्खशिरःसु चापि ।
स्रोतोनिरोधो विरसञ्च वक्त्रं शीताभिरद्भिश्च विवृद्धिमेति ॥ ४ ॥
मूर्च्छान्नविद्वेषविलापदाहा रक्तेक्षणत्वं प्रततश्च शोषः ।
शीताभिनन्दा मुखतिक्तता च पित्तात्मिकायां सुपधूमनञ्च ॥ ५ ॥

वाय्पावरोधात्कफसम्वृतेऽग्नौ तृष्णाबलासेन भवेत्तथातु ।
निद्रागुरुत्व मधुरास्यता च तृष्णार्दित शुष्यति चातिमात्रम् ॥६॥
क्षतस्य रुक् शोणितनिर्गमाभ्यां तृष्णा चतुर्थीक्षतजा मता तु ॥७॥
रसक्षयाद्या क्षयसम्भवासातयाभिभूतस्तु निशादिनेषु ।
प्रेपीयतेऽम्भ ससुख न याति ता सन्निपातादिति केचिदाहु. ।
रसक्षयोक्तानि च लक्षणानि तस्या मशेषेण भिषग् चिकित्सेत् ॥८॥
त्रिदोषलिङ्गामसमुद्भवा च हृच्छूलनिष्ठीवनसादकर्त्री ।
स्निग्ध तथाम्ल लवणञ्च भुक्त गुर्वन्नमेवाशु तृषा करोति ॥ ९ ॥
क्षीनस्वर प्रताम्यन् दीनाननसंशुष्कहृदयगलतालु ।
भवति खलु सोपसर्गा तृष्णा सा शोषिणीकष्टा ॥ १० ॥

ज्वरमोहक्षयकास श्वासाद्युपसृष्टदेहानाम् ।
सर्वास्त्वतिप्रसक्ता रोगक्षशाना वमिप्रसक्तानाम् ॥
घोरोपद्रवयुक्ता तृष्णा मरणाय विज्ञेया ॥ ११ ॥

—०—

## अथ चिकित्सामाह ।

वातघ्नमन्नपान मृदुलघुशीतञ्च वाततृष्णायाम् ।
स्याज्जीवनीयसिद्ध क्षीरघृत वातजतृषे ॥ १२ ॥
तृष्णातिवृद्धावुदरे च पूर्ण त वामयेन्मागधिकोदकेन ।
विलोमनञ्चात्र हित विधेय स्याद्दाडिमाम्रातकमातुलुङ्गै ॥१३॥
सुवर्णरौप्यादिभिरग्नितप्तै लोष्टै कृत वा सिकतोत्करैर्वा ।
जलं सुखोष्ण शमयेत्तु तृष्णा सशर्कर क्षौद्रयुत हित वा ॥ १४ ॥
तृष्णाया पवनोत्थाया सगुड दधिशस्यते ।
रसाय ह तृष्णा शीता गुडूच्यारस एव च ॥ १५ ॥
पञ्चाङ्गका पञ्चगणाय उक्तास्तेष्वम्बुसिद्ध प्रथमे गणे वा ।

पिबेत्सुखोष्णं मनुजोऽल्पशस्तुमुच्येत तृड्तः पवनात्मकासः ॥१६

इति वाततृष्णा।

पित्तोत्थितां पित्तहरैर्विपक्वं निहन्ति तोयं पय एव वापि ॥१७
स्वादुतिक्तं द्रवं शीतं पित्ततृष्णापहं परम्।
काश्मर्यं शर्करायुक्तं चन्दनोशीरधान्यकम्।
द्राक्षामधुकसंयुक्तं पित्ततर्षे जलं पिबेत् ॥ १८ ॥
स्याज्जीवनीयमिद्धं क्षीरं घृतं वा पित्तजे तर्षे।
तद्वद् द्राक्षाचन्दन खर्जुरोशीरमधुसंयुतं तोयम् ॥ १९ ॥
द्राक्षाचन्दनखर्जूरो पीतं मधुयुतं जलम्।
तृष्णाहरं पिबेद्वापि मधुना तंडुलोदकम् ॥ २० ॥

इति पित्ततृष्णा।

तिक्तं द्रवञ्च कट्वम्लं कफतृष्णानिवर्हणम् ॥ २१ ॥
विल्वाढकीधातकीपञ्चकोल दर्भेषु सिद्धं कफजां निहन्ति।
हितं भवेच्छर्दनमेव चात्र तप्तेन निम्बप्रसवोदकेन ॥ २२ ॥
सजीरधान्यार्द्रकशृङ्गवेर
सौवर्चलान्यर्धजलप्लुतानि।
मद्यानि हृद्यानि च गन्धवन्ति
पीतानि सद्यः शमयन्ति तृष्णाम् ॥ २३ ॥
लाजोदकं मधुयुतं शीतं गुडविमर्दितम्।
काश्मर्यशर्करायुक्तं पिबेत्तृष्णार्दितो नरः ॥ २४ ॥
शर्कराकेसरं क्षौद्रं कृष्णाजीरकदाडिमैः।
घ्नन्ति वा तृट्जयी कृष्णा मधुक्षीरद्रुमाङ्कुरैः ॥ २५ ॥
भक्तं दाडिमबीजं पीतं धात्रीफलञ्च धान्याम्लैः।
चार्द्रं पटाम्बरणक्षतमाहतगात्रस्तृषां जयति ॥ २६ ॥

गोस्तनीक्षुरसक्षीर यष्टीमधुमधूत्पलैः।
नियतं नस्यतः पीते तृषा शाम्यति दारुणा ॥ २७ ॥
कर्णे शिरो मुखलेपः चुक्रिकयाम्लदाड़िमरसेन।
तर्पयति शीघ्रमेव जलौघवर्षैकतराशिम् ॥ २८ ॥
कोलदाड़िमवृक्षाम्लचुक्रिकाचुक्रिकारसः।
पञ्चाम्लको मुखे लेपः सद्यस्तृष्णां नियच्छति ॥ २९ ॥
क्षीरेक्षुरसमार्द्वीकं क्षौद्रसिधुगुड़ोदकैः।
वृक्षाम्लाम्लैश्च गण्डूषा स्तालुशोषप्रणाशनाः ॥ ३० ॥
तालुशोषे पिबेत्सर्पि र्घृतमण्डमथापि वा।
धान्याम्लमास्यवैरस्य मलदौर्गन्ध्यनाशनम् ॥
तदेव शृतशीतं हि मुखशोषहरं परम् ॥ ३१ ॥
वैशद्यञ्जनयत्यास्ये सन्दधाति मुखव्रणान्।
दाहतृष्णाप्रशमनं मधुगण्डूषधारणम् ॥ ३२ ॥
जिह्वातालुगलक्लोम शोषे मूर्ध्नि निदापयेत्।
केशरं मातुलुङ्गस्य घृतसैन्धवसंयुतम् ॥ ३३ ॥
दाड़िमं बदरं लोध्रं कपित्थं बीजपूरकम्।
पिष्टा मूर्ध्निप्रलेपश्च पिपासादाहनाशनः ॥ ३४ ॥
वारिशीतं मधुयुक्तं माकण्ठाद्वा पिपासितम्।
पाययेद्वामयेच्चापि तेन तृष्णाप्रशाम्यति ॥ ३५ ॥

बटप्ररोहं मधुकुष्टमुत्पलं
सलाजचूर्णं गुटिकां प्रकल्पयेत्।
सुसंहिता सा वदने विधारिता
तृष्णां प्रवृद्धामपि हन्ति सत्वरम् ॥ ३६ ॥

इति सामान्यविधिः।

अतोऽम्बवाहविनिवारणेन जयेद्रसानामस्त्रजय पानैः।

चयोत्थितां चीरजलं निहन्यान्मांसोदकं वा मधुकोदकं वा ॥३७॥
आमोद्भवां विल्ववचायुतानां जयेत्कषायैरथदीपनानाम्।
छर्दिं खने गुर्वन्नप्रजातां जयेत्त्वतोथा तु विनापिपासाम् ॥३८॥
स्निग्धेऽन्ने भुक्ते या तृष्णास्यात्तां गुडाम्बुनाशमयेत्।
अतिरूक्षदुर्वलानां तर्षां शमयेन्नृणामिहाशु पयः ॥३८॥
छागो वा घृतभृष्टः शीतो मधुरो रसो हृद्यः ॥ ४० ॥
मूर्च्छाछर्दितृषादाह स्त्रीमद्यभृशकर्षितः।
पिबेयुः शीतलं तोयं रक्तपित्ते मदात्यये ॥ ४१ ॥
तृष्यन्मूर्च्छामयीचीणो न लभेत जलं यदि।
मरणं दीर्घरोगञ्च प्राप्नुयात्त्वरितं नरः ॥ ४२ ॥
सात्म्यान्नपानभैषज्यैः तृषार्त्तस्य जयेत्तृषाम्।
तस्याञ्जितायामन्योऽपि व्याधिः शक्यश्चिकित्सितुम् ॥ ४३ ॥
तृषितो मोहमायाति मोहात्प्राणान्विमुञ्चति।
तस्मात्सर्वास्ववस्थासु न क्वचिद्वारिवर्ज्जयेत् ॥ ४४ ॥
अन्नेनापि विना जन्तुः प्राणान्धारयते चिरम्।
तोयाभावे पिपासार्त्तः चणात्प्राणैर्विमुच्यते ॥

## इति वङ्गसेने तृष्णानिदानचिकित्साधिकारः समाप्तः ॥ १८ ॥

---

## अथ मूर्च्छानिदानमाह।

चीणस्य बहुदोषस्य विरुद्धाहारसेविनः।
वेगाघातादभीघाता हीनसत्वस्य या पुनः ॥ १ ॥
करणायतनेषूग्रा बाह्येष्वाभ्यन्तरेषु च।
निविशन्ते यदा दोषा सादा मूर्च्छन्ति मानवाः ॥ २ ॥

संज्ञावहासु नाड़िषु पिहितास्वनिलादिभिः।
तमोऽभ्युपैति सहसा सुखदुःखव्यपोहकृत् ॥ ३ ॥
सुखदुःखव्यपोहाच्च नरः पतति काष्ठवत्।
मोहो मूर्च्छेति तामाहुः षड्विधा सा प्रकीर्त्तिता ॥ ४ ॥
वातादिभिः शोणितेन मद्येन च विषेण च।
षट्स्वप्येतासु पित्तं तु प्रभुत्वेनावतिष्ठति ॥ ५ ॥
हृत्पीड़ाजृम्भणग्लानिः संज्ञादौर्बल्यमेव च।
सर्वासां पूर्वरूपाणि यथा स्वन्तं विभावयेत् ॥ ६ ॥
नीलं वा यदि वा कृष्ण माकाशमथवारुणम्।
पश्यंस्तमः प्रविशति शीघ्रञ्च प्रतिबुध्यते ॥ ७ ॥
वेपथुश्चाङ्गमर्दश्च प्रपीड़ा हृदयस्य च।
कार्श्यं श्यावारुणाच्छाया मूर्च्छाये वातसम्भवे ॥ ८
रक्तं हरितवर्णं च वियत्पीतमथापि वा।
पश्यंस्तमः प्रविशति सस्वेदश्च प्रबुध्यते ॥ ९ ॥
सपिपासः ससन्तापो रक्तपीताकुलेक्षणः।
संभिन्नवर्चाः पीताभो मूर्च्छाये पित्तसम्भवे ॥ १०
मेघसंकाशमाकाश मावृतं वा तमोघनैः।
पश्यंस्तमः प्रविशति चिराच्च प्रतिबुध्यते ॥ ११ ॥
गुरुभिः प्रावृतैरङ्गै र्यथैवार्द्रेण चर्मणाः।
सप्रसेकः सहृल्लासो मूर्च्छाये कफसम्भवे ॥ १२ ॥
सर्वाकृतिः सन्निपाता दपस्मार इवागतः।
स जन्तुं पातयत्याशु विना बीभत्सचेष्टितैः ॥ १३ ॥
पृथिव्यापस्तमोरूपं रक्तगन्धश्च तन्मयः।
तस्माद्रक्तस्य गन्धेन भुवि मूर्छन्ति मानवाः ॥ १४ ॥
द्रव्यस्वभाव इत्येके दृष्ट्वा यदपि मुह्यति ॥ १५ ॥

गुणास्तीव्रतरत्वेन स्थितास्तु विषमद्ययोः ।
स एव तस्मात्ताभ्यान्तु मोहो स्यात्ता यथेरितौ ॥ १६ ॥
श्यावाङ्गदृष्टिस्त्वक्स्रजागूढोच्छ्वासश्च मूर्च्छित. ॥ १७ ॥
मद्येन विलपन् शेते नष्टविभ्रान्तमानसः ।
गात्राणि विक्षिपन् भूमौ जरां यावन्न याति तत् ॥ १८ ॥
वेपथु स्वप्नतृष्णाः स्युस्तमश्च विषमूर्च्छिते ।
वेदितव्यं तीव्रतरं यथास्वं विषलक्षणैः ॥ १९ ॥
मूर्च्छा पित्ततमः प्राया रजः पित्तानिलाद्भ्रमः ।
तमो वातकफात्तन्द्रा निद्रा श्लेष्मतमोभवा ।
अनायासश्रमो देहे प्रवृद्धः श्वासवर्जितः ।
क्लमः स इति विज्ञेय. इन्द्रियार्थप्रबाधकः ॥ २१ ॥
इन्द्रियार्थेष्वसंवित्तिर्गौरवं जृम्भनं क्लमः ।
निद्रार्त्तस्येव यस्यैव तस्य तन्द्रा विनिर्दिशेत् ॥ २२ ॥
इन्द्रियाणान्तु मनसो मोहो निद्रा निगद्यते ।
विमोहस्त्विन्द्रियाणान्तु स तु तन्द्रा विरच्यते ॥ २३ ॥
दोषेषु मदमूर्च्छाया गतवेगेषु देहिनाम् ।
स्वयमेवोपशाम्यन्ति सन्न्यासो नौषधैर्विना ॥ २४ ॥
वाग्देहमनसां चेष्टा माक्षिप्यातिबलामलाः ।
सन्न्यस्यन्त्यबलं जन्तुं प्राणायतनमाश्रिताः ॥ २५ ॥
सन्नासन्नासन्न्यस्तः काष्ठीभूतो मृतोपमः ।
प्राणैर्विमुच्यते शीघ्रं मुक्त्वा सद्यः फलां[1] क्रियाम् ॥ २६ ॥

---

१ सद्यः फलादिकां सूचीव्यधनादिकामिति ।

—०—

## अथ चिकित्सामाह।

सेकावगाहा मणयः सहाराः
शीताः प्रदेहा व्यजनाऽनिलाश्च।
शीतानि पानानि च गन्धवन्ति
सर्वासु मूर्च्छासु निवारितानि॥ २७॥
सिद्धानि वर्गे मधुरे पयांसि
सदाड़िमा जाङ्गलजा रसाश्च।
तथा यवा लोहितशालयश्च
मूर्च्छासु पथ्याश्च सतीनमुद्गाः॥ २८॥
मूर्च्छां प्रशस्ताश्चशिरोविरेकैः
जयेदभीक्ष्णं वमनैश्च तीक्ष्णैः॥ २९॥

कोलमज्जोषणोशीरं केशरं शीतवारिणा।
पीतं मूर्च्छां जयेल्लीढ़ा कृष्णां वा मधुसंयुताम्॥ ३०॥
भ्रमः पित्तस्य सम्बन्धो जायते पवनस्य च।
अतस्तयोः प्रशमनी क्रिया सद्भावचारयेत्॥ ३१॥
महौषधामृता चौद्रं पुष्करं ग्रन्थिकोद्भवम्।
पिबेत्कणायुतं क्वाथं मूर्च्छायाञ्च मदेषु च॥ ३२॥
पिबेद् दुरालभाक्वाथं सघृतं भ्रमशान्तये।
त्रिफलायाः प्रयोगो वा प्रयोगः पयसोऽपि वा॥ ३३॥
कर्पासबीजपाण्डुर तंडुलतक्रैः प्रकल्पिता पेया।
धान्यकहिंगुनागर जीरकलवणैर्विनाशयेद् भ्रमणम्॥ ३४॥
खिन्नमामलकं पिष्टा द्राक्षया सह संसृजेत्।
विश्वभेषजसंयुक्तं मधुना सह लेहयेत्।
तेनास्य शाम्यते मूर्च्छा श्वासः कासस्तथैव च॥ ३५॥

पञ्चमूलकषायञ्च मधुना सितया पिबेत् ।
यथास्वञ्च ज्वरघ्नानि कषायानि प्रयोजयेत् ॥ ३६ ॥
रक्तजायान्तु मूर्च्छायां हितः शीतक्रियाविधिः ।
मद्यजायां पिबेन्मद्यं निद्रां सेवेत वा सुखम् ॥ ३७ ॥
विषजायां विषघ्नानि भेषजानि प्रयोजयेत् ॥ ३८ ॥
कषायशताह्वाशुण्ठीनां साभयानां पलं पलम् ।
गुडस्य षट्पलान्येषा गुटिका भ्रमनाशिनी ॥ ३९ ॥
इति भ्रमनाशिनीगुटी ।

अञ्जनान्यवपीडाश्च धूमाः प्रधमनानि च ।
सूचिभिस्तोदनं शस्तं दाहपीडानखान्तरे ॥ ४० ॥
लुञ्चनं केशलोम्नाञ्च दन्तैर्दशनमेव च ।
आत्मगुप्तावघर्षश्च हितस्तस्यावबोधने ॥ ४१ ॥
उत्थितो लब्धसञ्ज्ञश्च लशुनस्य रसं पिबेत् ।
खादेत्सव्योषलवणं वीजपूरककेशरम् ॥ ४२ ॥
पथ्या क्वाथेन ससिद्धं घृतं धात्रीरसेन च ।
सर्पिः कल्याणकं वापि मदमूर्च्छापहं पिबेत् ॥ ४३ ॥

## इति वङ्गसेने मूर्च्छानिदानचिकित्साधिकारः समाप्तः ॥ १९ ॥

—०—

## अथ मदात्ययनिदानमाह ।

ये विषस्य गुणाः प्रोक्ता मद्येऽपि प्रकीर्त्तिताः ।
तेन मिथ्योपयुक्तेन भवत्युग्रो मदात्ययः ॥ १ ॥
किन्तु मद्यं स्वभावेन यथैवान्नं तथा स्मृतम् ।

अयुक्तियुक्तं रोगाय युक्तियुक्तं तथामृतम् ॥ २ ॥
प्राणाः प्राणभृतामन्नं तदयुक्त्या निहन्त्यसून् ।
विषं प्राणहरं तच्च युक्तियुक्तं रसायनम् ॥ ३ ॥
विधिना मात्रया काले हितैरन्नैर्यथा बलम् ।
प्रहृष्टो यः पिबेन्मद्यं तस्य स्यादमृतोपमम् ॥ ४ ॥
स्निग्धैस्तदन्नैर्मांसैश्च भक्ष्यैश्च सह सेवितम् ।
भवेदायुःप्रहर्षाय बलायोपचयाय च ॥ ५ ॥
काम्यता मनसस्तुष्टिस्तेजो विक्रम एव च ।
विधिना सेव्यमाने तु मद्ये सन्निहिता गुणाः ॥ ६ ॥
तथैवान्नमनन्नेन सेव्यमानममात्रया ।
काम्याग्निना ह्यग्निसमं समेत्य कुरुते गदान् ॥ ७ ॥
मदेन करणानान्तु भावान्यत्वे कृते सति ।
निगूढमपि भावं स्वं प्रकाशं कुरुतेऽवशः ॥ ८ ॥
श्लैष्मिकाश्चाल्पपित्ताश्च स्निग्धाश्चाश्मसेविनः ।
पानं न बाधतेऽत्यर्थं विपरीतांश्च बाधते ॥ ९ ॥

---

## अथ त्रिगुणमदलक्षणमाह ।

बुद्धिस्मृतिप्रीतिकरः सुखश्च पानान्ननिद्रारतिवर्द्धनश्च ।
सपाठगीतस्वरवर्धनश्च प्रोक्तोऽतिरम्यो प्रथमो मदो हि ॥ १० ॥
अव्यक्तबुद्धिस्मृतिवाग्विचेष्टः सोन्मत्तलीलाकृतिरप्रशान्तः ।
आलस्यनिद्राभिहतो मुहुश्च मध्येन मत्तः पुरुषो मदेन ॥ ११ ॥
गच्छेदगम्यानगुरूंश्च मन्येत् खादेदभक्ष्याणि च नष्टसंज्ञः ।
ब्रूयाच्च गुह्यानि हृदिस्थितानि मदे तृतीये पुरुषस्त्वतन्त्रः ॥१२॥
चतुर्थे तु मदे मूढो भग्नदार्विव निष्क्रियः ।
कार्याकार्यविभागाज्ञो मृतादप्यपरो मृतः ॥ १३ ॥

को मदं तादृशं गच्छेत् उन्मत्त इव चापरः ।
बहुदोषमिवारूढः कान्तारं स्ववशः कृती ॥ १४ ॥
निर्भुक्तमेकान्तत एव मद्यं निषेव्यमानं पुरुषेण नित्यम् ।
आपादयेत् कष्टतमान्विकारा नापादयेच्चापि शरीरभेदम् ॥१५॥
क्रुद्धेन भीतेन पिपासितेन शोकाभितप्तेन बुभुक्षितेन ।
व्यायामभाराध्वपरिक्षतेन वेगावरोधाभिहतेन चापि ॥ १६ ॥
अत्यम्लभक्ष्यावततोदरेण सजीर्णभक्तेन तथा बलेन ।
उष्णाभितप्तेन च सेव्यमानं करोति मद्यं विविधान्विकारान् ॥१७
पानात्ययं परमदं पानाजीर्णमथापि वा ।
पानविभ्रमसंज्ञञ्च तेषां वक्ष्यामि लक्षणम् ॥ १८ ॥
हिक्काश्वासशिरःकम्पपार्श्वशूलप्रजागरैः ।
विद्याद्बहुप्रलापस्य वातप्रायं मदात्ययम् ॥ १९ ॥
तृष्णादाहज्वरस्वेदमोहातिसारविभ्रमैः ।
विद्याद्धरितवर्णस्य पित्तप्रायं मदात्ययम् ॥ २० ॥
छर्द्यरोचकहृल्लासतन्द्रास्तैमित्यगौरवैः ।
विद्याच्छीतपरीतस्य कफप्रायं मदात्ययम् ॥ २१ ॥
ज्ञेयस्त्रिदोषजश्चापि सर्वलिङ्गैर्मदात्ययः ॥ २२ ॥
श्लेष्मोच्छ्रयोऽङ्गगुरुता विरसास्यता च
विण्मूत्रसक्तिरथतन्द्रिररोचकश्च ।
लिङ्गं परस्य तु मदस्य वदन्ति तज्ज्ञा-
स्तृष्णारुजा शिरसिसन्धिषु चापि भेदः ॥ २३ ॥
आध्मानमुग्रमथवोद्गिरणं विदाहः
पाने त्वजीर्णमुपगच्छति लक्षणानि ।
ज्ञेयानि तत्र भिषजा सुविनिश्चितानि
पित्तप्रकोपजनितानि च कारणानि ॥ २४ ॥

ह्रासातोदकम्पमंसवक्रकण्ठधूस
मूर्च्छावमिज्वरशिरोरुजनप्रदेहाः ।
हेयः सुरान्नविकृतेषु च तेषु तेषु
तं पानविभ्रमसुशन्त्यखिलेन धीराः ॥ २५ ॥
हीनोत्तरौष्ठमतिशीतममन्ददाहं
तैलप्रभास्यमतिपानहतं त्यजेत्तु ।
जिह्वौष्ठतालुमसितं त्वथवापि नीलं
पित्ते च यस्य नयने रुधिरप्रभे वा ॥ २६ ॥
हिक्काज्वरो वमथुवेपथुपार्श्वशूलाः
कासभ्रमावपि च पानहतं त्यजेत्तु ॥ २७ ॥
ध्वंसको विक्षयश्चैव रोगश्चास्योपजायते ।
श्लेष्मप्रसेकहृत्कण्ठास्यशोषश्च सहिष्णुता ।
तन्द्रानिद्रातियोगश्च ज्ञेयं ध्वंसकलक्षणम् ॥ २८ ॥

—o—

## अथ चिकित्सामाह ।

मद्यं सौवर्चलं व्योषं युक्तं किञ्चिज्जलान्वितम् ।
जीर्णमद्याय दातव्यं वातपानात्ययापहम् ॥ २८ ॥
योजयेन्मातुलुङ्गाम्ल दाडिमैः पानकान्यपि ।
स्निग्धाम्ललवणान्नांश्च रसाञ्जाङ्गलजान् शुभान् ॥ ३० ॥
सूर्ता सौवर्चलं शृङ्गी त्र्यूषणार्द्रकदीप्यकैः ।
मद्यं पीत्वा जयत्युग्रं पवनोत्थं मदात्ययम् ॥ ३१ ॥
पित्तान्विते मधुरवर्गकषायसिद्धं
मद्यं हितं समधुशर्करमिष्टगन्धि ।

पित्वा च मद्यमपि चेचुरसप्रगाढं
किञ्चित् चणस्थितमथोल्लिखितव्यमेव ॥ ३२ ॥
सतीनमुद्गमिश्रान् वा दाडिमामलकान्वितान् ।
द्राक्षामलकखर्जूर परुषकरसेन वा ।
कल्पयेत्तर्पणान् यूषा नृसांश्च विविधात्मकान् ॥ ३३ ॥
पित्ते चौद्रसितायुक्तं मद्यमर्द्धोदकं पिबेत् ।
पित्तपानात्यये योज्या सर्वतश्च क्रिया हिमाः ॥ ३४ ।
वमनद्रव्यसयुक्तं मद्येनोल्लेखनं हितम् ।
पानरोगे कफोद्भूते लङ्घनञ्च यथा बलम् ।
दीपनीयौषधोपेतं पिबेन्मद्यं समाहितः ॥ ३५ ॥
त्रिफलायारसो वाऽपि व्योषचूर्णसमन्वितः ।
शुष्कमूलकजो यूषः कौलित्थो वा मधूल्कटः ॥ ३६ ॥
यवान्न विक्षतिर्योज्या जाङ्गलावक्षतानि च ।

—०—

सौवर्चलमजाजीच वृचाम्लं साम्लवेतसम् ।
त्वगेलामरिचार्द्धांशं शर्कराभागयोजितम् ॥ ३८ ॥
एतल्लवणमष्टाङ्गमग्निसन्दीपनं परम् ।
मदात्यये कफप्राये दद्यात् स्रोतो विशुद्धये ॥ ३८ ॥

—०—

सर्वेकद्रव्यभागात्तु त्वगेलामरिचानामर्धांशकत्वम् । शर्करायाः सौवर्चलादिभिश्च तुल्यो भागः ।

इत्यष्टाङ्गलवणम् ।

सर्वजे सर्वमेवेदं प्रयोक्तव्य चिकित्सकैः ।
याभिः क्रियाभिः सिद्धाभिः शान्तिं याति मदात्ययः ॥४०॥

नचेन्मद्यं क्रमं हित्वा क्षीरमस्य प्रयोजयेत्।
लङ्घनाद्यैः कफे क्षीणे जाते दौर्बल्यलाघवे ॥ ४१ ॥
ओजस्तुल्यगुणं क्षीरं विपरीतञ्च मद्यतः।
क्षीरप्रयोगं मद्यञ्च क्रमेणाल्पाल्पमाचरेत् ॥ ४२ ॥
मन्थः खर्जूरमृद्वीका वृक्षाम्लाम्लिकदाड़िमैः।
परूषकैः सामलकैर्युक्तो मद्यविकारनुत् ॥ ४३ ॥

—०—

चव्यं सौवर्चलं हिङ्गु जीरकं विश्वदीप्यकम्।
चूर्णं मद्येन दातव्यं पानात्ययरुजापहम् ॥ ४४ ॥

इति चव्यादिचूर्णम्।

मधुना हन्त्युपयुक्ता त्रिफलारात्रौ गुडार्द्रकं प्रातः।
सप्ताहात् पथ्यभुजो मदमूर्च्छाकामलोन्मादान् ॥ ४५ ॥

इति मधुत्रिफलागुडार्द्रकयोगौ।

मद्यानि सप्तषष्टी च नृणां पानात्ययं स्मृतम्।
पानं हि भजते जीर्णे मत ऊर्ध्वं विमार्गगम् ॥ ४६ ॥
कुष्माण्डकरसः सगुड़ः। शमयति मदमाशु मदनकोद्रवजम्।
धत्तूरकञ्च दुग्धं सशर्करञ्च पानयोगेन ॥ ४७ ॥
सच्छर्दिमूर्च्छातिसारं मदं पूगफलोद्भवम्।
सद्यः प्रशमयेत्पीत्त माढ्से वारिशीतलम् ॥ ४८ ॥
वन्यकरीषघ्राणाज्जलपानाल्लवणभक्षणादपि च।
शाम्यति पूगफलमदचूर्ण रुजा[१] शर्कराकवलात् ॥ ४९ ॥
मद्यं पीत्वा यदिना तत्क्षणमवलेढि शर्करां सघृताम्।
जातु न मदयति मद्यं मनागपि प्रथितं जीर्णमपि ॥ ५० ॥

---

१ चूर्णभक्षणपीड़ा।

कट्फलमुस्तगुडूची माषैः क्रमविवर्धितैश्च तत्सर्वम् ।
चर्वितमुखधृतमात्रं हन्याद्गन्धं सुराप्रभवम् ॥ ५१ ॥
पथ्याक्वाथेन संसिद्धं घृतं धात्रीरसेन वा ।
सर्पिः कल्याणकं वापि मदमूर्छापहं पिबेत् ॥ ५२ ॥

—०—

शतावरी सहस्रोव यष्टीकल्कैः शृतं घृतम् ।
पयः पुनर्नवाक्वाथे पानात्ययमपोहति ॥ ५३ ॥
घृतं पुष्टिकरं पानान्मद्यपानहृतौजसः ।
इति शतावरीपुनर्नवाद्यं घृतम् ।
ये च तृष्णादयो रोगा स्तेनिवार्याः स्वभेषजैः ॥ ५४ ॥
मद्यप्रक्षीणदेहस्य वस्तयः सानुवासनाः ।
अभ्यङ्गोत्सादनस्नान सर्पिः क्षीरनिषेवणम् ॥ ५५ ॥
जलप्लुतचंदनभूषिताङ्गः स्रग्वी सभक्तां पिशितोपदंशाम् ।
पिबेत्सुरां नैव लभेत्तरोगान् मनोपघातांश्च मद न याति ॥५६॥
यं दोषमधिकं पश्ये त्तमादौ प्रतिकारयेत् ।
कफस्थानानुपूर्व्या वा तुल्यदोषे मदात्यये ॥ ५७ ॥
कान्तिश्च हीना च विहीनकर्णौ जिह्वातिनौलादशनाबलौ च ।
नेत्रे तु रक्ते शकपचपीते कृष्णाधरौ यत्र विवर्जनीयः ॥५८॥

## इति वङ्गसेने पानात्ययपरमदपानाजीर्णपानविभ्रम निदानचिकित्साधिकारः समाप्तः ॥ २० ॥

—०—

## अथ दाहनिदानमाह ।

त्वचं प्राप्तः समानोष्मा पित्तरक्ताभिमूर्छितः ।
दाहं प्रकुरुते घोरं पित्तवत्तत्र भेषजम् ॥ १ ॥

## अथ चिकित्सामाह ।

शतधौतघृताभ्यक्तं दिह्यात्तु यवशक्तुभिः ।
कोलामलकसयुक्तैः दाडिमाम्लेन बुद्धिमान् ॥ २ ॥
छादयेत्तस्य सर्वाङ्गं मारणालार्द्रवाससा ।
लामज्जेनाथ शुक्लेन चन्दनेनानुलेपयेत् ॥ ३ ॥
चन्दनाम्बुकणास्यन्दि तालवृन्तोपवीजितः ।
सुप्याद्दाहार्दितोऽभोज कदलीदलसस्तरे ॥४॥
परिषेकावगाहेषु व्यञ्जनानाञ्च सेवने ।
शस्यते शिशिरं तोयं तृष्णादाहोपशान्तये ॥ ५ ॥
चीरैः चीरकषायैश्च सुशीतैश्चन्दनान्वितैः ।
अन्तर्दाहं प्रशमयेद्देतैश्चान्यैः सुशीतलैः ॥ ६ ॥
फलनीलोत्पलसेव्याम्बु, हैमपद्मं कुटंनटम् ।
कालीयकरसो पैतं दाहे शस्तं प्रलेपनम् ॥ ७ ॥
श्लक्ष्णसूक्ष्मकृतो लेपः चन्दनस्यापि दाहनुत् ।
त्वग्जातस्योष्मणो रोधाच्छीतकृत्त्वमयागुरु ॥ ८ ॥
ह्रीवेरपद्मकोशीर चन्दनचोदवारिणा ।
सम्पूर्णामवगाहेत द्रोणीं दाहार्दितो नरः ॥ ९ ॥

—०—

आमलकाद्य कुडवं सुस्विन्नं निष्कुलीकृतम् ।
प्रस्थेन पयसः पिष्ट्वा पचेत्प्रस्थे च सर्पिषि ॥ १० ॥
प्रस्थं दत्वा सितायाश्च नासापलचतुष्टयम् ।
जीरकं मरिचं लवणं चातुर्जातं चिपेत्पुनः ॥ ११ ॥
कर्षं दत्वा ततः स्निग्धे भाण्डे धृत्वोपभोजयेत् ।

दाहं सुदुर्जयं हन्ति मूर्च्छां छर्दिं चिरोत्थिताम् ॥ १२ ॥

इत्यामलक्यादिखण्डः।

मातुलुङ्गरसक्षौद्र प्रदेहं दाहनाशनम्।
शस्यन्ते चात्र पानानि शीतानि विविधानि च ॥ १३ ॥
शीतवातजलस्पर्शः शीतान्युपवनानि च।
पित्तज्वरहरं यच्च दाहे तत्कार्य्यमिष्यते ॥ १४ ॥
वाप्यः कमलहासिन्यो जलयन्त्रगृहाः शुभाः।
नार्य्यश्चन्दनदिग्धाङ्गो दाहदैन्यहरामताः ॥ १५ ॥

—०—

कुशादिशालिपर्णीभि र्जीवकर्षभसाधितम्।
तैलं घृतञ्च दाहघ्नं वातपित्तविनाशनम् ॥ १६ ॥

इति कुशाद्यं घृतम्।

—०—

## अथ निदानम्।

क्षतस्रदेहानुग रक्तमुद्रिक्तं दहति ध्रुवम्।
संचूर्यते लपते या ताम्राभस्ताम्रलोचनः।
लोहगन्धाङ्गवदनो वह्निनैवावकिर्यते ॥ १७ ॥

—०—

## अथ चिकित्सामाह।

तं त्रिलंघ्यविधानेन मंयष्टाक्षारमाचरेत्।
प्रशाम्यत्यथवा दाहो रसैस्तुष्टस्य जाङ्गलैः ॥ १८ ॥
शाखाश्रयं यथा न्यायं रोहिणीं व्यधयेच्छिराम् ॥ १९ ॥

—०—

## अथ निदानम् ।

पित्तज्वरसमः पित्तात् स चाप्यस्य विधिः स्मृतः ॥ २० ॥
तृष्णानुरोधादप्धातो चीणे तेजस्युद्भवः ।
सबाह्याभ्यन्तरं देहं प्रदहेन्मन्दचेतसः ।
संशुष्कगलताल्वोष्ठो जिह्वां निष्कृष्य वेपते ॥ २१ ॥

—o—

## अथ चिकित्साम् ।

पाययेत् काममम्भश्च शर्कराम्भः पयोऽपिवा ।
चीरमिक्षुरसं वापि वितरेद्धं रितं विधिम् ॥ २२ ॥

—o—

## अथ निदानम् ।

असृजा पूर्णकोष्टस्य दाहोऽन्यः स्यात्सुदुस्तरः ।
विधि सद्योव्रणीयोक्त स्तस्य लक्षणमेव च ॥ २३ ॥
धातुचयोत्थो यो दाह स्तेनमूर्च्छाट्टषान्वितः ।
चामस्वरः क्रियाहीनः स सीदेद्भृशपीड़ितः ॥ २४ ॥
चतजोऽनश्नतश्चान्यः शोचतो वाप्यनेकधा ।
तेनान्तर्दह्यतेत्यर्थं तृष्णामूर्च्छाप्रलापकम् ॥ २५ ॥
मर्माभिघातजोऽप्यस्ति सोऽसाध्यः सप्तमो मतः ।
सर्व एव च वर्ज्याः स्युः शीतगात्रेषु देहिनः ॥ २६ ॥

—o—

## अथ चिकित्सामाह

तमिष्टविषयोपेतं सुहृद्भिरभिसम्मितम् ।
चीरमांसरसाहारं विधिनोक्तेन साधयेत् ॥ २७ ॥

सर्वं एव विवर्ज्यास्तु शीतगात्रेषु देहिषु ।
प्रशान्तोपद्रवो वापि शोधन प्राप्तमाचरेत् ॥ २८ ॥

## इति वङ्गसेने दाहनिदानचिकित्साधिकारः समाप्तः ॥ २१ ॥

—०—

## अथोन्मादनिदानमाह ।

मदयन्त्युद्धता दोषा यस्मादुन्मार्गमाश्रिताः ।
मानसोऽयं मतो व्याधि रुन्माद इति कीर्त्तिता ॥ १ ॥
एकैकशः सर्वशश्च दोषैरत्यर्थमूर्च्छितैः ।
मानसेन च दुःखेन स पञ्चविध उच्यते ॥ २ ॥
विषाद्भवति षष्ठस्तु यथास्वन्तेषु भेषजम् ।
स चाऽप्रवृद्धस्तरुणो मदसंज्ञां बिभर्त्ति च ॥ ३ ॥
विरुद्धदुष्टा शुचि भोजनानि प्रधर्षणं देवगुरुद्विजानाम् ।
उन्मादहेतुर्भयहर्षपूर्वो मनोऽभिघातो विषमाश्च चेष्टाः ॥ ४ ॥
तैरल्पसत्वस्य मलाः प्रदुष्टा बुद्धेर्निवासं हृदयं प्रदूष्य ।
स्रोतांस्यधिष्ठाय मनोवहानि प्रमोहयन्त्याशु नरस्य चेतः ॥ ५ ॥
धीविभ्रमः सत्वपरिप्लवश्च पर्याकुला दृष्टिरधीरता च ।
अबद्धवाक्यं हृदयञ्च शून्यं सामान्यमुन्मादगदस्य लिङ्गम् ॥ ६ ॥
रूक्षाल्पशीतान्नविरेक धातु क्षयोपवासैरनिलोऽतिवृद्धः ।
चिन्तादिदुष्टं हृदयं प्रदूष्य बुद्धिं स्मृतिं चाप्युप हन्ति शीघ्रम् ॥७॥
अस्थानहास्यस्मितगीतनृत्य वागङ्गविक्षेपणरोदनानि ।
पारुष्य कार्श्याऽरुणवर्णता च जीर्णे बलं चानिलजस्य रूपम् ॥८॥
अजीर्णकट्वम्लविदाह्यशीतै र्भोज्यैश्चितं पित्तमुदीर्णवेगम् ।

उन्मादमत्युग्रमनात्मकस्य हृदिस्थितं पूर्ववदाशु कुर्यात् ॥ ९ ॥
अमर्षसंरम्भविनग्नभावाः सन्तर्जनाभिद्रवणौष्ण्यरोषाः ।
प्रच्छायशीतान्नजलाभिलाषाः पीताचभापित्तकृतस्य लिङ्गम् ॥१०॥
संपूरणैर्मन्दविचेष्टितस्य सोऽष्मा कफो मर्मणि संप्रवृद्धः ।
बुद्धिं स्मृतिं चाप्युपहन्ति चित्तं प्रमोहयन् संजनयेद्विकारम् ॥११॥
वाक्चेष्टितं मन्दमरोचकश्च नारीविविक्तप्रियता च निद्रा ।
छर्दिश्च लाला च बलञ्च भुक्ते नखादिशौक्ल्यञ्च कफात्मके स्यात् ॥१२
यः सन्निपातप्रभवोऽपि घोरः सर्वैः समस्तैरपि हेतुभिः स्यात् ।
सर्वाणि रूपाणि बिभर्त्ति तादृग् विरुद्धभैषज्यविधिर्विवर्ज्यः ॥१३॥

चौरैर्नरेन्द्रपुरुषैररिभिस्तथान्यै
र्वित्रासितस्य धनबान्धवसंचयाद्वा ।
गाढं चते मनसि च प्रियया रिरंसो-
र्जायेत चोत्कटतरो मनसो विकारः ॥ १४ ॥
चित्रं ब्रवीति च मनोऽनुगत विसंज्ञो
गायत्यथो हसति रोदति चापि मूढः ।
रक्तेक्षणो हतबलेन्द्रियभाः सुदीनः
श्यावाननो विषकृतेन भवेद्विसञ्ज्ञः ॥ १५ ॥

अवाङ्मुखस्तून्मुखो वा क्षीणमांसबलो नरः ।
जागरूको ह्यसन्देह मुन्मादेन विनश्यति ॥ १६ ॥

—०—

## अथ चिकित्सामाह ।

वातिके स्नेहपानं प्राग्विरेकः पित्तसम्भवे ।
कफजे वमनं कार्य्यं परो वस्त्यादिकः क्रमः ॥ १७ ॥
यच्चोपदिश्यते किञ्चित् अपस्मारचिकित्सिते ।

उन्मादे तच्च कर्त्तव्यं सामान्याद्दोषदूष्ययोः ॥ १८ ॥
द्रुमाग्निजलशैलेभ्यो विषमेभ्यश्च तं सदा ।
रक्षेदुन्मादिनं चैव सद्यः प्राण हरं हि तत् ॥ १९ ॥
ब्राह्मी कुष्माण्डीफल षड्ग्रन्था शङ्खपुष्पिका स्वरसाः ।
उन्मादहृतो दृष्टा पृथगेते कुष्टमधुमिश्राः ॥ २० ॥
धात्रीरसकाञ्जिक गुड़समभागाः सुमथिताः क्रमशः ।
उन्मादरोगशमनाः पीता दिवसत्रयेणैव ॥ २१ ॥
मण्डूकपर्ण्याः स्वरसः कनकदलसंयोजितः समभागः ।
शमयत्युन्मादगदं तृणराजवल्ली रसयुक्तः ॥ २२ ॥

सितकुसुमवलायाः सार्धकार्षत्रयं यः
शिखरिचरणकोलं क्षीरपाकेन पक्वम् ।
पिबति तदनुशीतं प्रातरुत्थाय नित्यम्
जयति झटिति घोर व्याधिमुन्मादमुग्रम् ॥ २३ ॥

—०—

सिद्धार्थको हिंगुवचा करञ्जो देवदारु च
मञ्जिष्ठा त्रिफला श्वेता कटभीत्वक् कटुत्रिकम् ।
समांशानि प्रियङ्गुश्च शिरीषो रजनीद्वयं
वस्तमूत्रेण पिष्टोऽयमगदः पानमञ्जनम् ॥ २४ ॥
नस्यमालेपनञ्चैव स्नानमुद्वर्त्तनं तथा ।
अपस्मार विषोन्माद कृत्या लक्ष्मी ज्वरापहम् ॥ २५ ॥
भूतेभ्यश्च भयं हन्ति राजद्वारे च शस्यते ।
सर्पिरेतेन सिद्धं वा गोमूत्रे च तदर्थतम् ॥ २६ ॥

इति सिद्धार्थकाद्यञ्जनम् ।

दशमूलाद्व सद्घृतं युक्तं मांसरसेन वा ।
ससिद्धार्थकचूर्णं च केवलं नावनं घृतम् ॥ २७ ॥

उन्मादशान्तये पेयो रसो वा तिलमाषजः।
प्रयोज्यं सार्षपं तैलं नस्याभ्यञ्जनयोः सदा॥ २८॥
आश्वासयेत् सुहृद्भिश्च वाक्यैर्धर्मार्थसंहितैः।
ब्रूयादिष्टविनाशं वा दर्शयेदद्भुतानि च॥ २८॥
बद्धं सर्षपतैलाक्तं मुत्तानमातपे न्यसेत्।
कपिकच्छ्वाथ वा तप्तैर्लौहतैलजलैःस्पृशेत्॥ ३०॥
कषाभिस्ताड़यित्वा च सुबद्धं विजने गृहे।
रुन्ध्याच्चेतो हि विभ्रान्तं स्वं तथा व्रजति तत्सुखम्॥ ३१॥
सर्पेणोद्धृतदंष्ट्रेण दान्तैः सिंहैर्गजैश्च तम्।
त्रासयेच्छस्त्रहस्तैश्च शत्रुभिस्तस्करैस्तथा॥ ३२॥
अथवा राजपुरुषा बहिर्नीत्वा सुसंयतम्।
त्रासयेयुर्वधेरेनं तर्जयन्तो नृपाज्ञया॥ ३३॥
देहदुःखभयेभ्यो हि परं प्राणभयं भवेत्।
तेन तस्य शमं याति सर्वतो विप्लुतं मनः॥ ३४॥
सततं धूपयेच्चैनं गोमांसैश्च पूतिभिः॥ ३५॥
इष्टद्रव्यविनाशेन मनो यस्योपहन्यते।
तस्य तत्सदृशप्राप्त्या शान्त्याश्वासैः शमं नयेत्॥ ३६॥
कामशोकभयक्रोध हर्षेर्ष्यालोभसम्भवात्।
परस्परप्रतिद्वन्द्वै रेभिरेव शमं नयेत्॥ ३७॥
बुध्वादोषं वयः सात्म्यं देशकालं बलाबलम्।
चिकित्सितमिदं कुर्य्या दुन्मादे भूतदोषजे॥ ३८॥
महर्षिः पितृगन्धर्वै रुन्मादस्य च बुद्धिमान्।
वर्जयेदञ्जनादीनि तीक्ष्णानि क्रूरकर्म्म च॥ ३८॥
अपस्मारक्रियां वापि ग्रहोद्दिष्टाञ्च कारयेत्।
शान्तिं दोषविशुद्धिञ्च स्वेदवस्तिभिराचरेत्॥ ४०॥

मृदुपूर्वान्तु विपजि क्रियामूहां प्रयोजयेत् ।
शोकशान्तिमपनये दुन्मादे पञ्चमे भिषक् ॥ ४१ ॥
उरोबाहुललाटस्थां शिरां मुक्ता प्रयत्नतः ।
निवाते शमनं युंज्या द्विल्वाद्यम्बुकणान्वितम् ॥ ४२ ॥

—०—

वृषपर्णं हिंगुलवणं वचाकटुकरोहिणी ।
शिरीषनक्तमालानां वीजं श्वेताश्च सर्षपाः ॥ ४३ ॥
गोमूत्रपिष्टैरेतैस्तु वर्त्तिर्नेत्राञ्जने हिता ।
चातुर्थिकमपस्मार मुन्मादं वा नियच्छति ॥ ४४ ॥

इति वृषपर्णाद्या वर्त्तिः ।

कुष्टाश्वगन्धे लवणाजमोदे द्वे जीरके त्रीणि कटूनिपाठा ।
माङ्गल्यपुष्पा च समानचूर्णं कृत्वा च चूर्णेन वचोद्भवेन ॥ ४५ ॥
तुल्येन युक्तं बहुशो रसेन तद्भावितं ब्रह्मविनिर्मितायाः ।
सर्पिर्मधुभ्याश्च ततोऽक्षमात्रं लिह्यान्नरः सप्तदिनं हिताशी ॥४६॥
ऐश्वर्यमिच्छन्मनसश्च धैर्यं मेधां तथैं छन्दिगुणञ्च कालम् ।
पठेन्नरः शोकसहस्रमङ्कस्तद्वत् प्रयोज्यं द्विगुणञ्च कालम् ॥ ४७ ॥
सारस्वतमिदं चूर्णं ब्रह्मणा निर्मितं स्वयम् ।
जगद्धितायलोकानां दुर्मेधानां विचेतसाम् ॥ ४८ ॥

इति सारस्वतं चूर्णम् ।

हिंगुसौवर्चलव्योषै र्द्विपलांशैर्घृताढकम् ।
चतुर्गुणे गवां मूत्रे सिद्धमुन्मादनाशनम् ॥ ४९ ॥

इति हिंग्वाद्यं घृतम् ।

जटिलापूतनाकेशी चारटीमर्कटीवचा ।
त्रायमाणाऽजयावीरा चोरकः कटुरोहिणी ॥ ५० ॥
कायस्थाशूकरीछत्रातिछत्रापलङ्कषा ।

महापुरुषदन्ता च वयस्थानाकुलीद्वयम् ॥ ५१ ॥
कटम्भराहृश्चिकाली स्थिराऽपि च तैर्घृतम्।
सिद्धं चातुर्थिकोन्माद ग्रहापस्मारनाशनम् ॥ ५२ ॥
महापैशाचकं नाम घृतमेतद्यथामृतम्।
मेधाबुद्धिस्मृतिकरं बालानां चाग्निदीपनम् ॥ ५३ ॥

इति महापैशाचिकं घृतम्।

त्रिफलालक्ष्मणाऽनन्ता समङ्गाशारिवामृता।
ब्राह्मीपाठाद्विबृहती द्विस्थिरा द्विपुनर्नवा ॥ ५४ ॥
सहदेवीसूर्यवल्ली वयस्था गिरिकर्णिका।
तोयकुम्भे पचेदेतत् पलांशं पादशेषिते ॥ ५५ ॥
नतंकौन्तीवचाकुष्टं कृष्णासर्षपसैन्धवैः।
निरुक् सवर्णवत्सायाः संसिद्धं पयसा च गोः ॥ ५६ ॥
पुष्ययोगे घृतप्रस्थं सुहेमकलशे स्थितम्।
पानाभ्यञ्जनतो मेधा स्मृत्यायुः पुष्टिवर्धनम्।
रक्षोघ्नश्च विषघ्नश्च सारस्वतमिदं घृतम् ॥ ५७ ॥

इति सारस्वतं घृतम्।

क्वाथ्ये विचूर्णिते चिग्रा ततः षोड़शिकं जलम्।
पादशेषं प्रकर्त्तव्यमेषः क्वाथ विधिः स्मृतः ॥ ५८ ॥

—०—

दशमूली तथा रास्ना वानरीचित्रता बला।
मूर्वा शतावरी चेति क्वाथ्यैस्तु कुडवैः पृथक् ॥ ५८ ॥
कृतक्वाथं पृथक् प्रस्थद्वयं मृद्वग्निना पचेत्।
विशाला त्रिफला कौन्ती देवदार्वेलवालुकम्।
स्थिरानतं द्वे रजन्यौ शारिवे द्वे प्रियङ्गुका ॥ ६० ॥
नीलोत्पलैला मञ्जिष्ठा दन्तीदाडिमकेसरम्।

विड़ङ्गं पृष्टपर्णी च कुष्ठचन्दनपद्मकैः ॥ ६१ ॥
तालीशपत्रं बृहती मालत्याः कुसुमं नवम् ।
अष्टाविंशतिभिः कल्कैः एतैः कर्षसमन्वितैः ॥ ६२ ॥
चतुर्गुणं जलं दत्वा घृतप्रस्थं विपाचयेत् ।
अपस्मारे ज्वरे शोषे कासे मन्दानले क्षये ॥ ६३ ॥
वातरक्ते प्रतिश्याये तृतीयक चतुर्थके ।
कटीशूले मूत्रकृच्छ्रे विसर्पोपहतेषु च ॥ ६४ ॥
कण्डूपाण्ड्वामयोन्माद विषमेह गरेषु च ।
भूतोपहतचित्तानां गद्गदानामचेतसाम् ॥ ६५ ॥
शस्तं स्त्रीणाञ्च वन्ध्यानां धन्यमायुर्बलप्रदम् ।
अलक्ष्मी पापरक्षोघ्नं सर्वग्रहनिवारणम् ॥ ६६ ॥
कल्याणकमिदं सर्पिः श्रेष्ठं पुंसवनेषु च ॥

इति पानीयकल्याणकं घृतम् ।

द्विजलं सचतुः क्षीरं तस्मात् कल्याणकं महत् ।
एभ्य एव स्थिरादीनि जले पक्वैव विंशतिम् ॥ ६७ ॥
रसे तस्मिन् पचेत् सर्पि र्गृष्टिक्षीरं चतुर्गुणम् ।
क्षीरादिमाष काकोली स्वयं गुप्तर्षभर्द्धिभिः ॥ ६८ ॥
मेदया च समैः कल्कै स्तस्मात् कल्याणकं महत् ।
बृंहणीयं विशेषेण सन्निपातहरं परम् ॥ ६९ ॥

इति महाकल्याणकं घृतम् ।

श्यामामधुरसारास्ना देवदार्वमृतावरी ।
मर्दंद्वादशमूलञ्च तैर्युत्वा क्वाथकल्कितैः ॥ ७० ॥
साधितश्चैतसं नाम घृतं चेतो विकारनुत् ।
उन्मादमदमूर्च्छायां ज्वरापस्मारभेषजम् ॥ ७१ ॥

इति चैतसं घृतम् ।

पद्ममूल्या च काश्मर्य्या राम्नैरण्डत्रिवृद्दला।
मूर्वाशतावरी चेति क्वाथैर्द्विपलिकेरिमैः ॥ ७२ ॥
कल्याणकस्य चांशेन चैतसं नाम तद्घृतम्।
सर्वचेतो विकाराणां शमनं परमुच्यते ॥ ७३ ॥

कार्य्यः कषायो द्विगुणाष्टतोयैः
पानीयकल्याणककल्कपाच्यम्।

इति द्वितीयं चैतसं घृतम्।

निशायुक् त्रिफलाश्यामा वचा सिद्धार्थहिंगुभिः।
शिरीषकटभी श्वेता मञ्जिष्ठाव्योषदारुभिः ॥ ७४ ॥
समैः कल्कैर्घृतं मूत्रे सिद्धमुन्मादनाशनम् ॥

इति निशाद्यं घृतम्।

चन्दनाम्बुनखं वाप्यं यष्टीशैलेयपद्मकम्।
मञ्जिष्ठासरलं दारु शठ्येलापूतिकेशरम् ॥ ७५ ॥
पत्रं तैल्वं सुरामांसी कङ्कोलं वनिताम्बुदम्।
हरिद्रे शारिवे तिक्ता लवङ्गागुरुकुङ्कुमम् ॥ ७६ ॥
त्वग्रेणुनलिका चेति तैलान्मस्तु चतुर्गुणम्।
लाक्षारससमं सिद्धं ग्रहघ्नं परमं मतम् ॥ ७७ ॥
अपस्मारग्रहोन्माद कृत्या लक्ष्मीज्वरापहम्।
आयुपुष्टिकरञ्चैव वशीकरणमुत्तमम् ॥ ७८ ॥

इति चन्दनाद्यं तैलम्।

निहतामिषमद्यो यो हिताशोप्रयतः शुचिः।
निजागन्तुभिरुन्मादै र्न कदाचित् स युज्यते ॥ ७९ ॥
प्रसादश्चेन्द्रियार्थानां बुद्धात्ममनसां तथा।
धातूनां प्रकृतिस्थत्वं विगतोन्मादलक्षणम् ॥ ८० ॥

—०—

## अथ भूतोन्मादनिदानमाह ।

अमर्त्यं वाग्विक्रमवीर्य्यचेष्टाज्ञानादिविज्ञानबलादिभिर्यः ।
उन्मादकालो नियतश्च यस्य भूतोत्थमुन्मादमुदाहरेत्तम् ॥ ८१ ॥

सन्तुष्टः शुचिरथ दिव्यमाल्यगन्धो
निस्तन्द्रोऽप्यवितथ संस्कृतभाषी ।
तेजस्वी स्थिरनयनो वरप्रदाता
ब्रह्मण्यो भवति नरः सदेवजुष्टः ॥ ८२ ॥

संस्वेदी द्विजगुरुदेवदोषवक्ता
जिह्माक्षो विगतभयो विमार्गदृष्टिः ।
सन्तुष्टो भवति न चान्नपानजातै
र्दुष्टात्मा भवति च देवशत्रुजुष्टः ॥ ८३ ॥

हृष्टात्मापुलिनवनान्तरोपसेवी
स्वाचारः प्रियपरिगीतगन्धमाल्यः ।
नृत्यन् वै प्रहसतिचारु चाल्पशब्दं
गन्धर्वग्रहपरिपीडितो मनुष्यः ॥ ८४ ॥

ताम्राक्षः प्रियतनु रक्तवस्त्रधारी
गम्भीरोद्रुतमतिरल्पवाक्सहिष्णुः ।
तेजस्वी वदति च किं ददामि कस्मै
यो यक्षग्रहपरिपीड़ितो मनुष्यः ॥ ८५ ॥

प्रेतानां स दिशति संस्तरेषु पिण्डान्
शान्तात्मा जलमपि चापसव्यवस्त्रः ।
मांसेप्सुस्तिलगुडपायसाभिकाम
स्तद्भक्तो भवति पितृग्रहाभिजुष्टः ॥ ८६ ॥

यस्तूर्व्यां प्रसरति सर्पवत् कदाचित्
सृक्किण्यौ विलिहति जिह्वया तथैव ।

क्रोधालुर्गुडमधुदुग्धपायसेप्सु-
र्विज्ञेयो भवति भुजङ्गमेन जुष्टः ॥ ८७ ॥
मांसासृग्विविधसुराविकारलिप्सु-
र्निर्लज्जो भृशमतिनिष्ठुरोऽतिशूरः।
क्रोधालुर्विपुलबलो निशाविचारी-
शौचद्विड्भवति सराक्षसैर्गृहीतः ॥ ८८ ॥
देवविप्रगुरुद्वेषी वेदवेदाङ्गनिन्दकः।
आत्मपीड़ाकरोहासी ब्रह्मराक्षससेवितः ॥ ८९ ॥
अस्वस्थः कृशपुरुषो चिरप्रलापी-
दुर्गन्धो भृशमशुचिस्तथातिलोलः।-
बह्वाशोविजनवनान्तरोपसेवी-
व्याचेष्टन् भ्रमतिरुदन् पिशाचजुष्टः ॥९०॥
स्थूलाक्षो द्रुतमटनः सफेनलेही-
निद्रालुः पतति च कम्पते च योऽति।
यश्चाद्रिद्विरदनगादिविच्युतः सन्
सोऽसाध्यो भवति तथा त्रयोदशाब्दे ॥९१॥
देवग्रहाः पौर्णमास्या मसुराः सन्ध्ययोरपि।
गन्धर्वाः प्रायशोऽष्टम्यां यक्षाश्च प्रति यद्यपि ॥ ९२ ॥
पितरः कृष्णपक्षे स्युः पञ्चम्यामपिचोरगाः।
रक्षांसि रात्रौ पैशाचाः चतुर्दश्यां विशन्ति हि ॥ ९३ ॥
दर्पणादीन्यथाच्छाया शीतोष्णं प्राणिनो यथा।
स्वमणिभास्करार्चिश्च यथा देहञ्च देहधृक्।
विंशति न च दृश्यन्ते ग्रहास्तद्वच्छरीरिणाम् ॥ ९४ ॥

—०—

## अथ चिकित्सामाह ।

सर्पिष्पानादिरागन्तौ मन्त्रादिश्चेष्यते विधिः ॥ ९५ ॥
पूजाबल्युपहारेष्टि होममन्त्राञ्जनादिभिः ।
जयेदागन्तुमुन्मादं तथा विधिः शुचिर्भिषक् ॥ ९६ ॥

रक्तमाल्यानि गन्धश्च बीजानि मधुसर्पिषी ।[1]
भक्ष्याश्च सर्वे सर्वेषां सामान्यो विधिरुच्यते ॥ ९७ ॥
ऋचजम्बुकरोमाणि सप्तकीलसुनं तथा ।
हिंगुमूत्रञ्च वस्तस्य धूपमस्य प्रयोजयेत् ।
एतेन साम्यति क्षिप्रं बलवानपि यो ग्रहः ॥ ९७ ॥
शिरीषबीजं लशुनं शुण्ठीं सिद्धार्थकं वचाम् ।
मञ्जिष्ठां रजनीं कुष्टं वस्तमूत्रेण पेषयेत् ॥ ९८ ॥
वार्त्ताकछायाविशुष्का च सा योज्या नयनाञ्जने ॥ १०० ॥

—o—

कर्पासास्थिमयूरपिच्छबृहतीनिर्म्माल्यपिण्डीतके-
स्त्वङ्मांसी वृषदंशविट् तुषवचाकेशा हि निर्मोचनैः ।
नागेन्द्रद्विजशृङ्गहिंगुमरिचैस्तुल्यैः कृतं धूपनं
स्कन्दोन्मादपिशाचराक्षससुरावेशज्वरघ्नं परम् ॥ १०१ ॥

इति महाधूपवरः ।

कल्याणकं प्रयुञ्जीत महद्वा चैतसंघृतम् ।
तैलं नारायणं वाथ महन्नारायणं तथा ॥ १०२ ॥

---

१ नक्तमालशिरीषादीनाम् ।

न च रौद्रं प्रयुञ्जीत प्रयोगं देवताग्रहे ।
ऋते पिशाचादन्येषु प्रतिकूलं न वा चरेत् ॥ १०३ ॥
वैद्यांस्तु वै निहन्युस्ते ध्रुवं क्रुद्धा महौजसः ।
हिताहितविधानञ्च नित्यमेव समाचरेत् ॥ १०४ ॥

## इति वङ्गसेने उन्मादभूतोन्मादनिदान-चिकित्साधिकारः समाप्तः ॥२२॥

—०—

## अथापस्मारनिदानमाह ।

चिन्ताशोकादिभिर्दोषाः क्रुद्धा हृत्स्रोतसां स्थिताः ।
कृत्वा स्मृतेरपध्वंसमपस्मारं प्रकुर्वते ॥ १ ॥
वातात्पित्तात्कफात्सर्वैः दोषैः स स्याच्चतुर्विधः ।
तमसो दर्शनं ध्यानं हृत्कम्पो नेत्रवैकृतम् ।
भ्रमो हृदयशून्यत्व भाविनस्तस्य लक्षणम् ॥ २ ॥
तमः प्रवेशः संरम्भो दोषोद्रेकहतस्मृतिः ।
अपस्मार इति ज्ञेयो गदो घोरश्चतुर्विधः ॥ ३ ॥
हृत्कम्पशून्यता स्वेदो ध्यान मूर्च्छा प्रमूढता ।
निद्रानाशश्च तस्मिंश्च भविष्यति भवन्त्यथ ॥ ४ ॥
कम्पते प्रदशेद्दन्तान् फेनोद्वामीश्वसित्यपि ।
परुषारुणकृष्णानि पश्येद्रूपाणि चाऽनिलात् ॥ ५ ॥
पीतफेनाङ्गवक्त्राक्षः पीतासृग्रूपदर्शनः ।
सतृष्णोष्णानलव्याप्त लोकदर्शी च पैत्तिकः ॥ ६ ॥
शुक्लफेनाङ्गवक्त्राक्षः शीतहृष्टाङ्गजो गुरुः ।
पश्येच्छुक्लानि रूपाणि श्लैष्मिको मुच्यते चिरात् ॥ ७ ॥

सर्वैरेभिः समस्तैश्च लिङ्गैर्ज्ञेयस्त्रिदोषजः ।
अपस्मारः स चाऽसाध्यो यः चीणस्याऽनवश्च यः ॥ ८ ॥
विस्फुरन्तं सुबहुशः चीण प्रचलितभ्रुवम् ।
नेत्राभ्यां च विकुर्वाणमपस्मारो विनाशयेत् ॥ ९ ॥
पक्षाद्वाद्वादशाहाद्वा मासाद्वा कुपिता मलाः ।
अपस्माराय कुर्वन्ति वेगं चिच्चिदथान्तरम् ॥ १० ॥
देवे वर्षत्यपि यथा भूमौ बीजानि कानिचित् ।
शरदिप्रतिरोहन्ति तथा व्याधिसमुच्छ्रयः ॥ ११ ॥

—o—

## अथ चिकित्सामाह ।

पूर्वं युञ्ज्यादपस्मारे कर्दनादीनि बुद्धिमान् ।
वातिकं बस्तिभिः प्राय पैत्तिकन्तु विरेचनैः ।
कफज वमनैर्धीमा नऽपस्मारमुपाचरेत् ॥ १२ ॥
ततस्तीक्ष्णं प्रयुञ्जीत भिषक् सम्यग्विशोधनम् ।
सर्वत. शुद्धदेहस्य स्यादुन्मादहरीक्रिया ॥ १३ ॥
उपयोगे ग्रहोक्तानां योगानां चाथ शेषत ।
शिग्रुकट्वङ्गकिणिह्वी निम्बत्वग्रससाधितम् ॥
चतुर्गुणे गवां मूत्रे तैलमभ्यजने हितम् ॥ १४ ॥
गोधानकुलनागानां वृषभर्चगवामपि ।
पित्तेषु तैल सिद्धञ्च नस्याभ्यङ्गेषु पूजितम् ॥ १५ ॥
तीक्ष्णैरुभयतो भागे, शिरसापि विरेचयेत् ।
पूजां रुद्रस्य कुर्वीत तद्गणानां विशेषतः ॥ १६ ॥
तैलेन लशुनं सेव्यं पयसा च शतावरीम् ।
ब्राह्मीरसश्च मधुना सर्वापस्मारभेषजम् ॥ १७ ॥

उद्बन्धननरग्रीवा पाशं दग्ध्वा कृतामसी।
शीताम्बुना समं पीता हन्त्यपस्मारमुद्धतम् ॥ १८ ॥
विदग्ध्य निर्द्रवां कृत्वा छागजामन्त्रनालिकाम्।
तामम्लसाधितां खादेदपस्मारमुदस्यति ॥ १९ ॥
निर्गुण्डी भव वन्दाक पाननस्योपयोगतः।
उपैति सहसा नाश मपस्मारो महागदः ॥ २० ॥
मनोह्वातार्क्ष्यजञ्चैव शकृत्पारावतस्य च।
अञ्जनाडन्त्यपस्मार मुन्मादञ्च विशेषतः ॥ २१ ॥
श्वसृगालविडालानां कपीनाञ्च गवामपि।
पित्तानि नस्यतो दद्या दपस्मृतिनिवृत्तये ॥ २२ ॥
यष्टीहिंगुवचादारु शिरीषलशुनामयैः।
साजमूत्रैरपस्मारे सोन्मादे नावनाञ्जने ॥ २३ ॥
कपित्थाव्छारदान्मुद्गान् मुस्तोशीरयवांस्तथा।
सव्योपान वस्तमूत्रेण पिष्टावर्त्ति प्रकल्पयेत् ॥ २४ ॥
अपस्मारे तथोन्मादे सर्पदंष्ट्रे गरार्दिते।
विषपीते जलमृते चैताः सुरमृतोपमाः ॥ २५ ॥

—०—

बद्धपायुं विपर्याचं शीतपादकरोदरम्।
विद्याज्जलमृतं जन्तुं शूनपात्राभिभिन्नम् ॥ २६ ॥

इति जलमृतलक्षणमिदम्।

पुष्योद्धृतं शुनः पित्त मपस्मारघ्नमञ्जनम्।
तदेव सर्पिषायुक्तं धूपनं परमं स्मृतम् ॥ २७ ॥
याभिः क्रियाभिः सिद्धाभिर्हृदयं संप्रबुध्यते।
स्रोतांसि चास्यशुध्यन्ति स्मृतिं संप्राप्य विन्दति ॥ २८ ॥

नकुलोलूकमार्जार ग्टध्रकीटाऽहि काकजैः ।
तुण्डैः पक्षैः पुरीषैश्च धूपनं कारयेद्भिषक् ॥ २९ ॥
गोमूत्रसिद्धार्थकशिग्रुपर्णैरुद्वर्त्तनं तैरथवा प्रलेपः ।
पूतिश्च गोमत्स्यकृतोऽत्र धूमो नस्यञ्च तीक्ष्णैरवबोधनार्थम् ॥ ३० ॥
अपेताराक्षसीकुष्टं पूतनाकेश चोरकैः ।
उत्सादन मूत्रपिष्टै र्मूत्रैरेवावसेचयेत् ॥ ३१ ॥
मूल वर्हिशिखाया गवाक्ष्यालीढं नरेण मासेन ।
नि शेषयत्यपस्मृति मिति सिद्धं नात्र सन्देहः ॥ ३२ ॥
यः खादेत् क्षीरभक्ताशी माक्षिकेन वचारजः ।
अपस्मारं महाघोरं सुचिरोत्थं जयेद्ध्रुवम् ॥ ३३ ॥
उत्तरदिग्गतमुस्तक मूल बुद्ध्या समुद्धृतं पेयम् ।
पीतं पयसा हन्यादपस्मृतिं गो सवर्णवत्सायाः ॥ ३४ ॥
कूष्माण्डकफलोत्थेन रसेन परिपेषितम् ।
अपस्मारविनाशाय यष्ट्याह्व स पिबेत्त्र्यहम् ॥ ३५ ॥
काकोत्तरगतं मूल योगानीत विधूपितम् ॥ ३६ ॥
उग्रमक्षमितं चूर्णं कृतञ्च मधुसर्पिषा ।
भक्षयेत् क्षीरभक्ताशी त्रिदिनेऽपस्मृतिक्षयः ॥ ३७ ॥
सकलासस्य मत्तस्य शीर्षे च जठरे क्षिपेत् ।
विपाटिते च मरिचं शोषे स्थाप्य प्रयत्नतः ।
चूर्णयित्वा प्रधमये दपस्मारनिवृत्तये ॥ ३८ ॥
मदनस्य च बीजानि चूर्णयित्वा तथैव च ।
पिण्डीतकस्य चाल्पस्य कर्षकं पेषयेज्जले ॥
ततोऽस्य पानमात्रेण नश्यतेऽपस्मृतिर्गदः ॥ ३९ ॥
विपाठिना विक्रमेण ह्ययमुक्तो न संशयः ।
दुश्चिकित्स्यो ह्यपस्मार श्चिरकालो महागदः ॥ ४० ॥

तस्माद्रसायणैरेनं प्रायशः समुपाचरेत् ॥ ४१ ॥
हृत्कम्पोऽक्षिरुजा यस्य स्वेदो हस्तादिशीतता।
दशमूलीजलं तस्य कल्याणाज्यञ्च योजयेत् ॥ ४२ ॥

—०—

पञ्चकोलं समरिचं त्रिफलं विडसैन्धवम्।
कृष्णाविड़ङ्गपूतीक यवानीधान्यजीरकम् ॥ ४३ ॥
पीतमुष्णाम्बुनाचूर्णं वातश्लेष्मामयापहम्।
अपस्मारे तथोन्मादे अर्शसां ग्रहणीगदे ॥ ४४ ॥
एतत्कल्याणकं चूर्णं नष्टस्याग्नेश्च दीपनम्।

इति कल्याणकं चूर्णम्।

पलंकषावचापथ्या वृश्चिकाली च सर्षपा।
जटिलापूतनाकेशी नाकुलीहिंगुजीरकैः ॥ ४५ ॥
लसुनातिविषाचित्रा कुष्ठे विड्भिश्च पक्षिणाम्।
मांसाशिनां यथा लाभं वस्तमूत्रे चतुर्गुणे ॥४६॥
सिद्धमभ्यञ्जने तैलमपस्मारविनाशनम् ॥ ४७ ॥

इति पलंकषातैलम्।

त्रिफलाव्योषकुष्टाब्द यवक्षारफणिज्जकैः।
कल्कीकृतैरेभिर्द्रव्यै र्गजमूत्रे चतुर्गुणे ॥ ४८ ॥
साधितं नावनं तैलमपस्मारं विनाशयेत् ॥ ४९ ॥

इति त्रिफलातैलम्।

ब्राह्मीरसवचाकुष्टं शङ्खपुष्पीभिरेव च।
पुराणं पक्वमुन्माद ग्रहापस्मारहृद्घृतम् ॥ ५० ॥

इति ब्राह्मीघृतम्।

कूष्माण्डकरसे सर्पि रष्टादशं गुणे पचेत्।

यस्याङ्गकल्कं तत्पानमपस्मारविनाशनम् ॥ ५१ ॥

इति कूष्माण्डघृतम् ।

गोसकृद्रसदध्याज्य क्षीरमूत्रैः समैर्घृतम् ।
सिद्धं चतुर्थकोन्माद मपस्मारविनाशनम् ॥ ५२ ॥

इति स्वल्पपञ्चगव्यघृतम् ।

द्वे पञ्चमूल्यौ त्रिफला रजन्यौ कुटजत्वचम् ।
सप्तपर्णमपामार्गं नीलिनीकटुरोहिणी ॥ ५३ ॥
शम्याकफलमूलञ्च पौष्करं सदुरालभम् ।
द्विपलानि जलद्रोणे पक्त्वापादावशेषिते ॥ ५४ ॥
भार्गीपाठात्रिकटुकं त्रिवृत्ता निचुलानि च ।
श्रेयसीमाढकीं मूर्वां दन्तीं भूनिम्बचित्रकौ ॥ ५५ ॥
द्वे सारिवे रोहिषञ्च भूतिकं सदयन्तिकाम् ।
क्षिपेत् पिष्टाक्षमात्राणि तैः प्रस्थं सर्पिषः पचेत् ॥ ५६ ॥
गोशकृद्रसदध्याज्य क्षीरमूत्रैश्च तत्समैः ।
पञ्चगव्यमिदं ख्यातं महत्तदमृतोपमम् ॥ ५७ ॥
अपस्मारे तथोन्मादे श्वयथावुदरेष्वपि ।
गुल्मार्शः पांडुरोगेषु कामलायां हलीमके ॥ ५८ ॥
अलक्ष्मीग्रहरक्षोघ्नं चातुर्थिकनिवारणम् ।

इति महापञ्चगव्यं घृतम् ।

जङ्गमानां ययख्यानां चर्मरोमनखादिकम् ।
क्षीरमूत्रपुरीषाणि जीर्णाहारेषु मंहरेत् ॥ ५८ ॥

—०—

शणत्रिवृत्तयैरण्ड दशमूलीशतावरी ।
रास्नामागधिकाशिग्रु काष्यं द्वे द्वे पले पृथक् ॥ ६० ॥
विदारीमधुकं मेदे द्वे काकोल्यौ तथा सिता ।

खर्जूरीभीरुमृद्वीका युञ्जातं गोक्षुरं तथा ॥ ६१ ॥
चैतसस्य घृतस्यांशैः पक्तव्यं सर्पिरुत्तमम्।
महाचैतससंज्ञन्तु ज्वरापस्मारनाशनम् ॥ ६२ ॥
गदोन्मादप्रतिस्याय तृतीयकचतुर्थकान्।
पामालक्ष्मी जयेदेतत्सर्वग्रहनिवारणम् ॥ ६३ ॥
श्वासकासहरञ्चैव शुक्रार्त्तवविशोधनम् ॥ ६४ ॥
द्रव्य आपोथिते क्वाथ्ये दत्वा षोडशिकं जलम्।
पादशेषञ्च कर्त्तव्य मेष क्वाथविधि' स्मृतः ॥ ६५ ॥

इति महाचैतसंघृतम्।

मधूकद्विपले कल्के द्रोणे चामलकीरसे।
तस्मिन् सिद्धं घृतप्रस्थं पित्तापस्मारभेषजम् ॥ ६६ ॥

इति मधूकघृतम्।

मांसचोरेक्षुरसयोः काश्मर्यष्टगुणे घृते।
कार्षिकैर्जीवनीयैश्च सर्पिष्प्रस्थं विपाचयेत्।
वातपित्तोद्भवं क्षिप्र मपस्मारं नियच्छति ॥ ६७ ॥

इति मांसोघृतम्।

वचाशम्याककैरण्ड वयस्थाहिंगुचोरकैः।
सिद्धं पलंकषायुक्तं वातश्लेष्मात्मके घृतम् ॥ ६८ ॥

इति वचाद्यं घृतम्।

कटभीनिम्बकट्वङ्ग मधुशिग्रुत्वचां रसे।
सिद्धं मूत्रसमं तैल मभ्यङ्गार्थे प्रशस्यते ॥ ६९ ॥

इति कटभीतैलम्।

शिग्रुकुष्टशिलाऽजाजी लशुनव्योषहिंगुभिः।
वस्तमूत्रे शृतं तैलं नावनं स्यादपस्मृतौ ॥ ७० ॥

इति शिग्रुतैलम्।

तैलप्रस्थं घृतप्रस्थं जीवनीयैः पलोन्मितैः ।
क्षीरद्रोणे पचेत्सिद्ध मपस्मारविनाशनम् ॥ ७१ ॥

इति जीवनीययमकम् ।

## इति वङ्गसेनेऽपस्मारनिदानचिकित्साधिकारः समाप्तः ॥ २३ ॥

—o—

## अथ वातव्याधिनिदानमाह ।

रूक्षशीताऽल्पलघ्वन्न व्यवायाति प्रजागरैः ।
लङ्घनप्लवनात्यध्व व्यायामादिप्रचेष्टितैः ॥ १ ॥
विषमादुपचाराद्वा दोषासृक् स्रावणादति ।
धातूनां सञ्चयाच्चिन्ता शोकरोगाऽतिकर्षणात् ॥ २ ॥
वेगसन्धारणादामा दभिघातादभोजनात् ।
मर्म्मबाधाद्गजोष्ट्राश्व शीघ्रयानादिसेवनात् ॥ ३ ॥
देहे स्रोतांसि रिक्तानि पूरयित्वाऽनिलो बली ।
करोति विविधान् व्याधीन् सर्वाङ्गैकाङ्गसंश्रयान् ॥ ४ ॥
अव्यक्तं लक्षणं तेषां पूर्वरूपमिति स्मृतम् ॥ ५ ॥
आत्मरूपन्तु यद्व्यक्त मपायो लघुता पुनः ।
सङ्कोचपर्वणां स्तम्भो भङ्गोऽस्थ्नां पर्वणामपि ॥ ६ ॥
लोमहर्षः प्रलापश्च पार्श्वपृष्टकटीग्रहाः ।
खाञ्ज्यपांगुल्यकुब्जत्व शोषोऽङ्गानामनिद्रताम् ॥ ७ ॥
गर्भशुक्ररजो नाशः स्पन्दनं गात्रसुप्तता ।
शिरोनासाक्षिजत्रूणां ग्रीवायाश्चापि हुण्डनम् ॥ ८ ॥
भेदस्तोदार्तिराक्षेपो मोहश्चायास एव च ।

एवं विधानि रूपाणि कुरुते कुपितोऽनिलः।
हेतुस्थानविशेषाच्च भवेद्रोगविशेषकृत् ॥ ९ ॥
तत्र कोष्ठाश्रिते दुष्टे निग्रहो मूत्रवर्चसोः।
व्रध्नहृद्रोगगुल्मार्शः पार्श्वशूलश्च मारुते ॥ १० ॥
सर्वाङ्गकुपिते वाते गात्रस्फुरणभञ्जनम्।
वेदनाभिः परीतश्च स्फुटन्तीवास्थिसन्धयः ॥ ११ ॥
ग्रहो विण्मूत्रवातानां शूलाध्मानाश्मशर्कराः।
जङ्घोरुत्रिकहृत्पृष्ठ रोगशोषा गुदे स्थिते ॥ १२ ॥
रुक्पार्श्वोदरहृन्नाभ्यां तृष्णोद्गारविसूचिकाः।
कासः कण्ठास्य शोषश्च श्वासश्चामाशयस्थिते ॥ १३ ॥
पक्वाशयस्थोऽन्त्रकूजं शूलाटोपौ करोति च।
कृच्छ्रमूत्रपुरीषत्व मानाहन्त्रिकवेदनाम् ॥ १४ ॥
श्रोत्रादिष्विन्द्रियवधं कुर्य्यात् क्रुद्धः समीरणः ॥ १५ ॥
त्वग्रूक्षास्फुटितासुप्ता कृशाकृष्णा च तुद्यते।
आतन्यते सरागा च सर्वरुक् त्वग् गतेऽनिले ॥ १६ ॥
रुजस्तीव्राः ससन्तापा वैवर्ण्यं कृशताऽरुचिः।
गात्रे चारुंषि भुक्तस्य स्तम्भश्चासृग्गतेऽनिले ॥ १७ ॥
गुर्वंगन्तुद्यतेऽत्यर्थं दण्डमुष्टिहतं तथा।
सरुक् स्तिमितमत्यर्थं मांसमेदो गतेऽनिले ॥ १८ ॥
भेदोऽस्थिपर्वणां सन्धि शूलं मांसबलक्षयः।
अस्वप्नं सन्ततारुक् च मज्जास्थिकुपितेऽनिले ॥ १९ ॥
क्षिप्रं मुञ्चति बध्नाति शुक्रं गर्भमथापि वा।
विकृतिं जनयेच्चापि शुक्रस्थः कुपितोऽनिलः ॥ २० ॥
कुर्य्याच्छिरागतः शूलं शिरः कुञ्चनपूरणम्।
बाह्याभ्यन्तरमायामं खल्लीकुब्जत्वमेव च ॥ २१ ॥

सर्वाङ्गैकाङ्गरोगांश्च कुर्य्यात् स्नायुगतोऽनिलः।
हन्ति सन्धिगतः सन्धीन् शूलशोथौ करोति च ॥ २२ ॥
प्राणे पित्तावृत्ते छर्दिर्दाहश्चैवोपजायते।
दौर्बल्यं सदनं तन्द्रा वैरस्यञ्च कफावृते ॥ २३ ॥
उदाने पित्तयुक्ते तु दाहो मूर्च्छा भ्रमः क्लमः।
अस्वेदहर्षौ मन्दाग्निः शीतता च कफावृते ॥ २४ ॥
स्वेददाहौष्ण्यमूर्च्छाः स्युः समाने पित्तसंयुते।
कफेन संगो विण्मूत्रे गात्रहर्षश्च जायते ॥ २५ ॥
अपाने पित्तयुक्ते तु दाहौष्ण्यं रक्तमूत्रता।
अधःकाये गुरुत्वञ्च शीतता च कफावृते ॥ २६ ॥
व्याने पित्तावृते दाहो गात्रविक्षेपं क्लमः।
गुरूणि सर्वगात्राणि स्तम्भनं चास्थिपर्वणाम् ॥ २७ ॥
लिङ्गं कफावृते व्याने चेष्टास्तम्भस्तथैव च।
स्तम्भनात् वेपथश्वास शोफशूलानि सर्वशः ॥ २८ ॥

—०—

## अथ चिकित्सामाह।

नरञ्च शुद्धवातार्त्तं मादौ पानं नियोजयेत्।
वसायाश्चाथ मज्जाया तैलस्याथ घृतस्य च ॥ २९ ॥
अभ्यङ्गं स्वेदनं वस्ति नस्यं स्नेहो विरेचनम्।
स्निग्धाम्ललवणस्वादु हृद्यं वातामयापहम् ॥ ३० ॥
पटोलकफलैर्यूषो हृद्यो वातज्वरो लघुः।
वाय्वाम्लकलतो यूषः परं वातविनाशनः ॥ ३१ ॥
पञ्चमूलीवलासिद्धं चीरं वातामये हितम् ॥ ३२ ॥
कोलं कुलित्था सुरदारुरास्ना माषा उमातैलफलानि

यवाशताह्वायवचूर्णमम्लमुष्णानि वातामयिनां प्रदेहः ॥ ३३ ॥
स्नेहैश्चतुर्भिर्दशमूलमिश्रैर्गन्धौषधैश्चानिलहृत्प्रदेहः।
आनूपमत्स्यामिषवेशवारैरुष्णैः प्रदेहः पवनापहः स्यात् ॥ ३४ ॥

—०—

निरस्थिपिशितं पिष्टं स्विन्नं गुड़घृतान्वितम्।
कृष्णामरिचसंयुक्तं वेशवारमिति स्मृतम् ॥ ३५ ॥

इति वेशवारः।

हृहत् फाणिज्जकोत्थेन रसेन परिलेपयेत्।
प्रदेशं वायुनाग्रस्तं नरः सम्यक् प्रशान्तये ॥ ३६ ॥
तित्तिड़ीकदलैः सिद्धं काललिण्डिकया सह।
पिष्ट्वा सुखोष्णमालेपं दद्याद्वातरुजापहम् ॥ ३७ ॥

—०—

वाजिगन्धाबलातिस्रो दशमूलीमहौषधम्।
हे गृध्रनख्यौ रास्ना च गणो मारुतनाशनः ॥ ३८ ॥

इति वाजिगन्धादिगणः।

सहचराऽमरदारु सनागरं क्वथितमम्भसितैलविमिश्रितम्।
पवनपीडितदेहगतिः पिबन् द्रुतविलम्बितगोभवतीच्छया ॥३९॥
पलमर्धपलञ्चापि रसोनस्य च कुट्टितम्।
हिंगुजीरकसिन्धूत्थ सौवर्चलकटुत्रिकैः ॥ ४० ॥
चूर्णैस्तैर्माषकोन्मानैः स्वचूर्णविलोड़ितम्।
यथाग्निभक्षितं प्रात स्त्वुक् काथानुपानतः ॥ ४१ ॥
दिने दिने प्रयोक्तव्यं मासमेकं निरन्तरम्।
वातरोगान्निहन्त्याशु चार्दितं चापतन्त्रिकम् ॥ ४२ ॥
एकाङ्गरोगिणे दद्यात्तथा सर्वाङ्गरोगिणे।

उरुस्तम्भेषु च गृध्रस्यां क्रमिदोषे विशेषतः ॥ ४३ ॥

इति पेय रसोनम्।

पलमर्द्धपलं वापि रसोनस्य सुकुट्टितम्।
हिंगुजीरकसिन्धूत्थ सौवर्चलकटुत्रिकैः ॥ ४४ ॥
चूर्णितैर्माषकोन्माने स्वचूर्णविलोडितम्।
यथाग्निभक्षितं प्रात स्तुवक् क्वाथानुपानतः ॥ ४५ ॥
दिने दिने प्रयोक्तव्यं मासमेकं निरन्तरम्।
वातामयं निहन्त्येव मर्दितं चापतन्त्रकम् ॥ ४६ ॥
एकाङ्गरोगिणां रोगं तथा सर्वाङ्गरोगिणाम्।
उरुस्तम्भगृध्रसीश्च शूलदन्द्वं क्रमीनपि ॥ ४७ ॥
कटिपृष्टामयं हन्या ज्जाठरञ्च समीरणाम्।

इति स्वल्परसोनपिण्डः।

पिष्ट्वा ससूक्ष्मं लशुनस्य कन्द घृतेन लिह्याद् घृतभोजनाशी।
तस्य प्रणश्यन्ति हि वातरोगाः संस्कारहीनात् पुरुषादिवार्थः॥४८

दशमूलस्य निर्यूहो हिंगुपुष्करचूर्णितः।
शमयेत्परिपीतस्तु वातं मिश्रिणसञ्चितम् ॥ ४८ ॥
वातग्रहप्रदेशे च स्वेद कार्यो विजानता।
सिद्धार्थकविमिश्रैस्तु पत्रैर्मदनमिश्रितैः ॥ ५० ॥
यदा तेन विधानेन सदोषत्वान्न सिद्ध्यति ॥ ५१ ॥
भेषजैः स्नेहसंयुक्तै र्भोज्यैर्हि प्रचितो मलः।
मार्गं रुद्धाऽनिलं हन्यात्तस्मात्तमनुलोमयेत् ॥ ५२ ॥
क्षीणो यस्य विरेकैः स्यात्तं निरूहैरुपाचरेत् ॥ ५३ ॥

शीतोष्णस्निग्धरूक्षाद्यै र्वातश्[१] यो न शाम्यति।

---

१ वातविकारः।

विकारस्तत्र विज्ञेयो दुष्टमेवात्र शोणितम् ॥ ५४ ॥
पिबेत् कुटजबीजानां चूर्णं प्रातः सुखांबुना ।
शुण्ठीचित्रकयुक्तानां कुक्षिवातनिवारणम् ॥ ५५ ॥
प्रातरुत्थाययत्नेन तैलमात्रा समन्वितम् ।
पिबेद्दूपणवातघ्न मार्द्रकस्वरसं बुधः ॥ ५६ ॥
ऊर्ध्ववातविनाशाय वासापत्रसमन्वितम् ।
श्यामामूलं पिबेत्पिष्टं चीरेण परिमिश्रितम् ॥ ५७ ॥
सुप्तवाते त्वसृङ्मोचं कुर्य्याच्च बहुशो भिषक् ।
दिह्याच्च लवणागार धूमैस्तैलसमन्वितैः ॥ ५८ ॥
हृदयानिलनाशाय गुडूचीमरिचान्वितम् ।
पिबेत्प्रातः प्रयत्नेन रुन्यगुष्णाम्भसा सह ॥ ५९ ॥
पिबेदुष्णाम्भसा पिष्टं माखगन्धं विभीतकम् ।
गुड़युक्तं प्रयत्नेन हृदयानिलनाशनम् ॥ ६० ॥
देवदारुसमायुक्तं नागरं परिपेषितम् ।
हृद्वातवेदनार्त्तस्तु पीत्वा सुखमवाप्नुयात् ॥ ६१ ॥
हृदिप्रकुपिते सिद्ध मंशुमत्यादयो हितम् ॥ ६२ ॥

—०—

काकोल्यादिः सवातघ्नः सर्वाम्लद्रव्यसंयुतः ।
सानूपमांसः सुस्विन्नः सर्वस्नेहसमन्वितः ॥ ६३ ॥
सुखोष्णः स्पष्टलवणः साल्वणः परिकीर्त्तितः ।
तेनोपनाहं कुर्वीत सदा वै वातरोगिणाम् ॥ ६४ ॥
काकोल्यादिगणो ग्राह्यो नाष्टवर्गिकसंज्ञिकः ।
वातघ्नो दशमूलादि वर्गोऽम्लो दाड़िमादिकम् ॥ ६५ ॥
सर्वस्ने हश्चतुःस्ने हो लवणं सैन्धवादिकम् ।

अम्लादिभिश्च संस्कार्यं काकोल्यादिश्च विभिः ॥ ६६ ॥

इति साल्वण: स्वेदः।

दशमूलीवलास्थिरास्त्रो विदारीपृष्टिपर्णिका ।
शतावर्य्यश्वगन्धा च जीवनीयगणैः सह ॥ ६७ ॥
श्यामापुनर्नवैरण्ड पृष्टपर्णी च मर्कटी ।
पुण्डरीकं तुगाचीरी शल्लकीसुरदारु च ॥ ६८ ॥
कुष्टशूरणमूलानि कर्कटाख्यामृता निशा ।
आम्रातकोकिलाख्यश्च शठीपाषाणभेदकः ॥ ६९ ॥
अलर्को वसुवरण्टा च सूर्य्यावर्त्तः सकाञ्चनम् ।
यवकोलकुलित्थाश्च तिलोमासर्षपास्तथा ॥ ७० ॥
रास्नाप्रसारणीकुष्ट मातुलुङ्गाम्लवेतसौ ।
चूक्रानूपानि मांसानि स्नेहचत्वार एव च ॥ ७१ ॥
काञ्जिकं दधितक्रञ्च जम्बीरं तित्तिडीफलम् ।
कुक्कुटीबीजपूरञ्च सर्वाणि लवणानि च ॥ ७२ ॥
सुखोष्णैस्तैलयुक्तैस्तु सुपिष्टैर्वातरोगिषु ।
उपनाहः सदा कार्य्यो वातव्याधिनिवृत्तये ॥ ७३ ॥

पयं हि गुल्मञ्च तथान्त्रवृद्धिं हन्यात्तथा शोफमुदग्रमाङ्गम् ।
हन्यात्तरस्यार्दितवातमुग्रमाजानुगोयञ्च तथार्दितं वा ॥ ७४ ॥

इति महाशाल्वनः।

कार्य्यो जठरजे गुल्मात् चारचूर्णादिपाचनम् ।
विशेषतस्तु कोष्टस्थे वातेचिन्नं पिवेन्नरः ॥ ७५ ॥
पाचनीयरमैर्युक्तं स्नेहैर्वा पातयेन्नराम् ।
गुदपक्वाशयस्थे तु कर्मादावर्त्तिकं हितम् ॥ ७६ ॥
आमाशयस्थे त्वनिले प्रशस्तं माभोजनं दीपनपाचनञ्च ।
प्रच्छर्दनं तीक्ष्णविरेचनञ्च पुराणसुदायवशालयश्च ॥ ७७ ॥

भूतीकपथ्या,शठिपुष्कराणि बिल्वं गुडूचीसुरदारुशुण्ठी ।
विडङ्गवासातिविषाग्निणा च क्वाथास्त्रयः मामसमीरणघ्नाः ॥७८॥

आमाशयगते वायौ छर्दिः श्वापो यथाक्रमम् ।
देयः षट्धरणो योगः सप्तरात्रं[1] सुखांबुना ॥ ७९ ॥
चित्रकेन्द्रयवौ पाठा कटुकातिविषाऽभया ।
महाव्याधिप्रशमनो योगः षट्धरणस्मृतः ॥ ८० ॥
योगेऽस्मिन् भिषजा ग्राह्याः मषाः षट्धरणाः पृथक् ।
दिनेषु षट्सुदातव्या स्तेन षट्धरणः स्मृतः ॥ ८१ ॥

इति षट्धरणो योगः ।

वह्नेः संव्रंहणं कार्यं कर्मादावर्त्तिकं तथा ।
पक्वाशयगते वापि देयं स्नेहविरेचनम् ॥ ८२ ॥
वस्त्यः शोधनीयाश्च प्राशाश्च लवणोत्तराः ।
कार्यो वस्तिगते चापि विधिर्वस्तिविशोधनः ॥ ८३ ॥
श्रोत्रादिषु प्रकुपिते कार्य्ययानिलहाक्रमः ।
स्नेहाभ्यङ्गोपनाहाश्च मर्दनालेपनानि च ॥ ८४ ॥
वायौ त्वगाश्रितेऽभ्यङ्गं स्नेहं स्वेदञ्च योजयेत् ।
रक्तस्थे शीतलांलेपान्विरेकं रक्तमोक्षणम् ॥ ८५ ॥
मांसमेदो गते वाते सविरेकं निरूहणम् ।
अस्थिमज्जागते स्नेहं वाह्याभ्यन्तरतो भिषक् ॥ ८६ ॥

---

पीतकोनागबलातिबलानां यद्बहुलेन रसेन विपक्वम् ।

---

१ सप्तरात्रमिति प्रथमदिवसे वमनं कारयित्वा ततो द्वितीयदिनमारभ्य षट्दिनपर्यन्तं पाठक्रमेणैकैकस्य चूर्णं टङ्कमितं क्रमिमित्यर्थः ।

तैलमनल्पतुषोदकसिद्धं मारुतमस्थिगतं विनिहन्ति ॥८७॥

इति केतकाद्यं तैलम् ।

सन्धिस्नायुगते वाते दाहस्नेहोपनाहनम् ।
हर्षोऽन्नपान शुक्रस्थे बलशुक्रकरं हितम् ॥ ८८ ॥
अवगाहकुटीकर्षुः प्रस्तराभ्यङ्गवस्तिभिः ।
जयेत्सर्वगतं वातं शिरामोक्षैश्च बुद्धिमान् ॥ ८९ ॥
एकाङ्गवातं मतिमान् शृङ्गैर्वाऽवस्थितं जयेत् ॥ ९० ॥
वक्षस्त्रिकस्कन्धगतं वायुं मन्यागतं तथा ।
वमनं हन्ति नस्यञ्च कुशलेन प्रयोजितम् ॥ ९१ ॥
सर्वाङ्गगतमेकांग स्थितं वापि समीरणम् ।
कुणह्निकेवलो वस्ति स्तोयवेगमिवाचलः ॥ ९२ ॥
पिबेदैरण्डतैलं वा वस्तिकुक्षिगुदाश्रये ।
दशमूलीकषायेन मातुलुङ्गरसेन वा ॥ ९३ ॥
मूर्द्धस्थे स्नेहकृत्तस्य शिरोवस्तिश्च लेपनम् ॥ ९४ ॥

—o—

बलाबिल्वशृते क्षीरे घृतमण्डं विपाचयेत् ।
तस्य शुक्तिं प्रकुर्वं वा नस्यं शीर्षगतेऽनिले ॥ ९५ ॥

इति बलादिघृतम्...

तैलं संकुचिते त्वंगे माषसैन्धवसाधितम् ।
बाहुशीर्षगते नस्यं पानञ्चोपरिभक्तकम् ॥ ९६ ॥
गर्भे शुष्के तु वातेन बालानाञ्चापि शुष्यताम् ।
सिताकाश्मर्यमधुकै र्हितमुत्थापने पयः ॥ ९७ ॥

## अथ हनुग्रहमाह।

जिह्वानिर्लेखनाच्छुष्क चर्वणादभिघाततः।
कुपितो हनुमूलस्थः स्रंसयित्वाऽनिलो हनुम् ॥९८॥
करोति विवृतास्यत्व मथवा संवृतास्यताम्।
हनुग्रहः स तेनस्यात् कृच्छ्राच्चर्वणभाषणम् ॥ ९९ ॥

## अथ चिकित्सामाह।

संवृतं चिबुक स्विन्ना सुन्नाम्यास्यच्च बुद्धिमान्।
विवृतां नामयित्वा तु कुर्य्यादायामवत्क्रियाम् ॥ १००॥
सगुड़ां पक्वबिल्वोन्तु मर्चिप्यवदनान्तरे।
स्रस्तं सङ्क्रमयेत् स्थानं स्निग्धस्विन्नञ्च नाशयेत् ॥ १०१ ॥
अर्दिते नवनीतेन खादेन्माषेण्डरीं नरः।
अर्दिते शोथयुक्ते तु वमनं रक्तमोचणम् ॥ १०२ ॥
श्लेष्मभागे त्रयं नीते हं हणै. समुपाचरेत्।
रसोनं घृततैलाभ्यां पिवेद्वाप्यर्दितापहम् ॥ १०३ ॥

## अथ जिह्वास्तम्भमाह।

वाग्वाहिनीशिरासंस्थो जिह्वां स्तम्भयतेऽनिलः।
जिह्वा स्तम्भः सतेनाऽन्न,पानवाक्येष्वनीशता ॥ १०४ ॥

## अथ चिकित्सामाह।

जिह्वास्तम्भे यथाऽवस्थं वातव्याधिचिकित्सितम्।

सामान्योक्ताक्रिया चात्र अर्दितस्य हितामता ॥ १०५ ॥

—०—

### अथ मन्यास्तम्भमाह ।

दिवास्वप्नासनस्थान विकृतोर्द्ध निरीक्षणैः ।
मन्यास्तम्भं प्रकुरुते स एव श्लेष्मणाहतः ॥ १०६ ॥

—०—

### अथ चिकित्सामाह ।

पञ्चमूलीकृतः क्वाथो दशमूलीकृतोऽथवा ।
रूक्षं स्वेदं तथा नस्यं मन्यास्तम्भे प्रयोजयेत् ॥ १०७ ॥

—०—

### अथ कुब्जलक्षणमाह ।

हृदयं यदि वा पृष्ठमुन्नतं क्रमशः मरुत् ।
क्रुद्धो वायुर्यदा कुर्य्यात् तदा तं कुब्जमादिशेत् ॥ १०८ ॥

—०—

### अथ चिकित्साम् ।

वातघ्नैर्दशमूल्या च वातकुब्जमुपाचरेत् ।
स्नेहैर्मांसरसैर्वापि प्रवृद्धन्तं विवर्जयेत् ॥ १०९ ॥

—०—

### अथ शिरोग्रहमाह ।

रक्तमाश्रित्य पवनं कुर्य्यान्मूर्द्धधराः शिराः ।
रूक्षाः सवेदनाः कृष्णाः सोऽसाध्यः स्याच्छिरोग्रहः ॥ ११० ॥

—०—

## अथ चिकित्सामाह।

शिरोग्रहे तु कर्त्तव्या शिरोगतमरुत्क्रिया ॥ १११ ॥

—०—

## अथ निदानम्।

अंसदेशस्थितो वायु शोषयित्वाऽसबन्धनम्।
अंसबन्धनशोष स्या द्वाहुशोष सवेदन ।
शिरासंकुच्य तत्रस्थो जनयत्यपबाहुकम् ॥ ११२ ॥
स्फिक्पायुकटिपृष्ठोरु जानुजङ्घापदं क्रमात्।
गृध्रसीस्तम्भरुक् तोदै गृह्णातिस्पन्दते मुहु ॥ ११३ ॥
वाताद्वातकफाभ्यां सा विज्ञेया द्विविधा पुन ।
वातजाया भवेत्तोदो देहस्यातीववक्रता ॥
जानुजङ्घोरुसन्धीना,स्फु,रणा स्तम्भता भृशम् ॥ ११४ ॥
वातश्लेष्मोद्भवायान्तु गौरव वह्निमार्दवम्।
तन्द्रामुखप्रसेकश्च भक्तद्वेषस्तथैव च ॥ ११५ ॥
तलं प्रत्यङ्गुलीना या कण्डरा बाहुपृष्ठत ।
बाह्वो' कर्म्मक्षयकरी विश्वाचीति हि सोच्यते ॥ ११६ ॥

—०—

## अथ चिकित्साम्।

बाहुशोषे पिबेत् भुक्ता सर्पि' कल्याणकं महत्।
वातेऽपबाहुके नस्य स्वेद चोत्तरभक्तिकम ॥ ११७ ॥
बलामूलशृतं तोयं सैन्धवेन समन्वितम।
बाहुशोषगते वायौ मन्यास्तम्भे च शस्यते ॥ ११८ ॥
परमौषधमपबाहुक मन्यास्तम्भोर्ध्वजत्रुगतरोगे।
शीतलजलेन नावन सुपशमने जिङ्गिनी च पुर ॥ ११८ ॥

नस्येन शीतपयसा शुकशिवीमूलशिञ्जिनीं पिष्ट्वा ।
अपबाहुककन्धरपीड़ा मचिराद्विनाशयेद्योगमिदम् ॥ १२०॥
काकोदुम्बरिदुग्धैः सरामठैर्हरेत् सर्वयोगविधः ।
कपिकच्छुमूलयुतैर्नस्यैरपबाहुजां पीड़ाम् ॥ १२१॥
मूलं बलायास्त्वथ पारिभद्रं तथात्मगुप्तास्वरसं पिबेद्वा ।
नस्यन्तु यो मापरसेन दद्यान्मासादसौ वज्रसमानबाहुः ॥१२२॥
दशमूलीबलामाषक्वाथं तैलाज्यमिश्रितम् ।
सायं भुङ्क्त्वा पिबेन्नस्यं विश्वाच्यामपबाहुके ॥ १२३ ॥

—०—

माषसिन्धुबलारास्ना दशमूलकहिंगुभिः ।
वचाजटाशताह्वाभिः सिद्धं तैलं सनागरम् ॥ १२४ ॥
ऊर्ध्वभक्ता शनाद्धन्यादवबाहुकम् ।
पक्षाघातं तथैवाशु विश्वाचीमुद्धतामपि ॥ १२५ ॥

इति माषतैलम् ।

—०—

## अथ निदानम् ।

वायुः कट्याश्रितः सक्थ्नः कण्डरामाक्षिपेद्यदि ।
खञ्जस्तदा भवेज्जन्तुः पङ्गुः सक्थ्नोर्द्वयोर्वधात् ॥ १२६ ॥
कम्पते गमनारम्भे खञ्जन्निव च गच्छति ।
कलायखंजन्तं विद्यान् मुक्तसन्धिप्रबन्धनम् ॥ १२७ ॥
हृष्येते चरणौ यस्य भवेताञ्च प्रसुप्तकौ ।
पादहर्षः स विज्ञेयः कफमारुतकोपजः ॥ १२८ ॥
पादयोः कुरुते दाहं पित्तासृग् सहितोऽनिलः ।
विशेषतश्चक्रमणात् पाददाहं तमादिशेत् ॥ १२९ ॥

वातशोणितजः शोथो जानुमध्ये महारुजः।
ज्ञेयः क्रोष्टुकशीर्षस्तु स्थूलक्रोष्टुकशीर्षवत् ॥ १३० ॥
रुक् पादे विषमे न्यस्ते श्रमाद्वा जायते यदा।
वातेन गुल्फमाश्रित्य तमाहुर्वातकण्टकम् ॥ १३१ ॥
खञ्जपंग्वोः कलायाख्ये विश्वाचीपादहर्षयोः।

---

## अथ चिकित्साम्।

पाददाहे च गृध्रस्यां क्रोष्टुके वातकण्टके ॥ १३२ ॥
शिरा विध्याद् कुर्वीत यथाविधिश्चिकित्सकः।
उपाचरेदभिनवं खञ्जं पंगुमथापि वा।
विरेकाऽऽस्थापनस्वेद गुग्गुलुस्नेहवस्तिभिः ॥ १३३ ॥
पादहर्षे तु कर्त्तव्यः कफव्याधिहरो विधिः।
वातरक्तक्रमं कुर्य्यात् पाददाहे विशेषतः ॥ १३४ ॥
मसूरविदलैः पिष्टैः सृतशीतेन वारिणा।
चरणौ लेपयेत् सम्यक् पाददाहप्रशान्तरे ॥ १३५ ॥
नवनीतेन सलिप्तौ वह्निना परितापितौ।
सुच्यते चरणौ चिप्रं परितापात् सुदारुणात् ॥ १३६ ॥
गुग्गुलुं क्रोष्टशीर्षे तु गुडूची त्रिफलाम्भसा।
चीरेणैरण्डतैलं वा पिबेद्वा व्रह्मदारुकम् ॥ १३७ ॥
रसं तित्तिरिमांसस्य क्रोष्टुके मधुरं पिबेत्।
वातरक्तक्रियाभिश्च जयेज्जांबुकमस्तकम् ॥ १३८ ॥
रक्तावसेचनं कुर्य्या दभीक्ष्णं वातकण्टके।
पिबेदेरण्डतैलं वा दहेत् सूचीभिरेव वा ॥ १३९ ॥
पुनर्नवायाः श्वेताया स्तैलं मूलेन साधयेत्।

वातकण्टकमाहन्यात् पादाभ्यङ्गेन मर्दनात् ॥ १४० ॥

---

## अथ निदानम् ।

नाभेरधस्तात्सञ्जातः सञ्चारी यदि वाऽचलः ।
अष्ठीलावद्घनो ग्रन्थि रूर्ध्वमायत उन्नतः ॥
वाताष्ठीलां विजानीया द्बहिर्मार्गावरोधिनीम् ॥ १४१ ॥
एतामेव रुजायुक्तां वातविण्मूत्ररोधिनीम् ।
प्रत्यष्ठीलामिति वदे ज्जठरे तिर्य्यगुत्थिताम् ॥ १४२ ॥

---

## अथ चिकित्सामाह ।

अष्ठीलायाः क्रिया कार्य्या गुल्मस्यान्तरविद्रधेः ।
चूर्णं हिंग्वादिकञ्चात्र पिवेदुष्णेन वारिणा ॥ १४३ ॥

---

## निदानम् ।

अधो या वेदना याति वर्चोमूत्राशयोत्थिता ।
भिन्दतीवगुदोपस्थं सातूनी नामतो मता ॥ १४४ ॥
गुदोपस्थोत्थिता या तु प्रतिलोमं विधाविता ।
वेगैः पक्वाशयं याति प्रतितूनीति सोच्यते ॥ १४५ ॥

---

## अथ चिकित्साम् ।

तून्याश्च प्रतितून्याश्च प्रशास्ताः स्नेहवस्तयः ।
पिवेद्वा स्नेहलवणं पिप्पल्यादिमयांवुना ॥ १४६ ॥
उष्णेन रामठक्षारं सलोदमयया घृतम् ।

## अथ निदानमाह ।

वाताद्वातकफात्तन्द्रा गौरवारोचकान्विता ॥ १४७ ॥

—०—

पयोरज श्वेतलोध्र मञ्जनं मरिचं तथा ।
गोपित्तेन समायुक्तं तन्द्रानाशनमुत्तमम् ॥ १४८ ॥
पलाण्डुर्हिंगुलशुन वचाकटुकरोहिणी ।
जीवन्तीरससयुक्त तन्द्राविलयनं परम् ॥ १४९ ॥

—०—

## निदानम् ।

साटोपमत्युग्ररुज माध्मानमुदर भृशम् ।
आध्मानमिति जानीयाद् घोरं वातनिरोधजम् ॥ १५० ॥
विमुक्तपार्श्वहृदय तदेवामाशयोत्थितम ।
प्रत्याध्मान विजानीयात् कफव्याकुलिताऽनिलम् ॥ १५१ ॥

—०—

आध्माने लङ्घनं पूर्व दीपन पाचन तत ।
फलवर्त्तिक्रिया कुर्य्या दस्तिकर्म च शोधनम् ॥ १५२ ॥
प्रत्याध्माने समुत्पन्ने कुर्य्या लङ्घनछर्दने ।
दीपनानि प्रयुञ्जीत पूर्ववद्दस्तिकर्म च ॥ १५३ ॥

—०—

## निदानम् ।

सर्वाङ्गकम्प शिरसो वायुर्वेपथुसञ्ज्ञक ।
खल्ली तु पादजङ्घोरु करमूलावमोटिनी ॥ १५४ ॥

—०—

वायु वेपथु नामार्न स्वेदाभ्यङ्गानुवासनैः।
उपाचरेन्निरूहैश्च शिरोवस्तिविरेचनम् ॥ १५५॥
कुष्टसैन्धवयोः कल्कः शुक्ततैलसमन्वितः।
सुखोष्णो मर्दने योज्यः खल्लीशूलनिवारणः ॥ १५६ ॥
भल्लातकानि सिन्धूत्थ मधूच्छिष्टमथौषधम्।
अम्लेन पयसा वाऽपि घृतमेतद्विपाचयेत् ॥ १५७ ॥
एतेनोद्वर्त्तनं कार्यं प्रदेहश्चैव शाम्यति।
अतिप्रवृद्धां खल्लीं तु तत्क्षणादेव नाशयेत् ॥ १५८ ॥

इति भल्लातकाद्यं घृतम्।

—०—

## अथ निदानमाह।

आहत्यवायुः सकफो धमनीः शब्दवाहिनीः।
नरान् करोत्यवचनान् मूकमिन्मिणगद्गदान् ॥ १५९ ॥

—०—

## अथ चिकित्सामाह।

प्रस्थं घृतस्य पलिकैः शीघ्रुवचाधातकीलोध्रलवणैः।
आजे पयसि सपाठैः सिद्धं सारस्वतं नाम्ना ॥ १६० ॥
विधिवदुपयुज्यमानं जड़गद्गदमूकतां क्षणाज्जित्वा।
स्मृतिमतिमेधाप्रतिमाः कुर्य्यात् सम्यगिष्टवाग्भवति ॥ १६१ ॥

इति सारस्वतं घृतम्।

सहरिद्रावचाकुष्टं पिप्पलीविश्वभेषजम्।
अजाजी चाजमोदा च यष्टिमधुकसैन्धवम् ॥ १६२ ॥
एतानि समभागानि श्लक्ष्णचूर्णानि कारयेत्।

तच्चूर्णं सर्पिषालोड्य प्रत्यहं भक्षयेन्नरः॥ १६३॥
एकविंशतिरात्रेण भवेच्छ्रुतिधरो नरः।
मेघदुन्दुभिनिर्घोषो मत्तकोकिलनिःस्वनः॥ १६४॥
अड़गद्गदमूकत्वं लेहः कल्याणको जयेत्॥

इति कल्याणको लेहः।

—०—

## अथ निदानम्।

मारुते प्रगुणे,वस्तौ मूत्रं सम्यक् प्रवर्त्तते।
विकारान्विविधान्वापि प्रतिलोमे भवन्ति च॥ १६५॥
स्थान नामानुरूपैश्च लिङ्गैः शेषान्विनिर्दिशेत्।
सर्वेष्वेतेषु संसर्गं पित्तादेरुपलक्षयेत्॥ १६६॥
यदा तु धमनीः सर्वाः कुपितोऽभ्येति मारुतः।
तदा क्षिपत्याशु मुहुर्मुहुर्देहं मुहुश्चरः॥ १६७॥
मुहुर्मुहुस्तदाऽऽक्षेपा दाक्षेपक इति स्मृतः॥ १६८॥
क्रुद्धः स्वैः कोपनैर्वायुः स्थानादूर्ध्वं प्रवर्त्तते।
पीडयन् हृदयं गत्वा शिरः शङ्खौ च पीड़येत्॥ १६९॥
धनुर्वन्नामयेद्गात्राण्याक्षिपेन्मोहयेत्तथा।
अकाच्छ्रादुच्छ्सेच्चापि स्तब्धाक्षो वा निमीलिका॥
कपोत इव कूजेच्च निःसञ्ज्ञः सोऽपतन्त्रकः॥ १७०॥
दृष्टिं संस्तभ्य संज्ञाञ्च हत्वा कण्ठेन कूजति।
हृदिमुक्ते नरः स्वास्थ्यं याति मोहं हृते पुनः॥ १७१
वायुना दारुणं प्राहुरेकेतमपतानकम्॥ १७२॥
कफान्वितो यदा वायु धमनीष्वेव तिष्ठति।
सदण्डवत् स्तम्भयति सच्छो दण्डापतानकः॥ १७३।

धनुस्तुल्यो नमेद्यस्तु सधनुस्तम्भसञ्ज्ञितः।
विवर्णवद्ववदनः स्रस्तांगो नष्टचेतनः।
प्रखिद्यश्च धनुस्तम्भे दशरात्रं न जीवति ॥ १७४ ॥
अंगुलीगुल्फजठर हृद्वक्षोगलसंश्रितः।
स्नायुप्रतानमनिलो यदा क्षिपतिवेगवान् ॥ ७५ ॥
विष्टब्धाक्षः स्तब्धहनु भंग्नपार्श्वः कफं वमन्।
अभ्यन्तरं धनुरिव यदानमतिमानवः ॥ १७६ ॥
तदा सोऽभ्यन्तरायामं कुरुते मारुतो बली ॥ १७७ ॥
वाह्यस्नायुप्रतानस्थो वाह्यायामं करोति च।
तमसाध्यं बुधाः प्राहुः पृष्टकव्युरुभञ्जनम् ॥ १७८ ॥
कफपित्तान्वितो वायु र्वायुरेव च केवलः।
कुर्य्यादाक्षेपकन्त्वन्यं चतुर्थमभिघातजम् ॥ १७९ ॥
गर्भपातनिमित्तश्च शोणितप्रसवाश्रयः।
अभिघातनिमित्तश्च न सिद्ध्यत्यपतानकः ॥ १८० ॥
गते वेगे भवेत्स्वास्थ्यं सर्वेष्वाक्षेपकादिषु।

---

## अथ चिकित्सामाह।

अथापतानके नार्त्तं मस्रस्ताक्षमवेपनम्।
अस्तब्धमेढ्रमस्वेदं वहिरायामवर्जितम् ॥ १८१ ॥
अखट्वापातिनश्चैव त्वरितं समुपाचरेत् ॥ १८२ ॥
तत्र प्रागेव सुस्निग्धं स्निग्धाङ्गे तीक्ष्णनावनम्।
स्रोतो विशुद्धये युञ्ज्यात् दन्नपाने ततो घृतम् ॥ १८३ ॥
विदार्य्यादिगणक्वाथे दधिक्षीररसैः शृतम्।
नातिमात्रं ततो वायुं व्याप्नोति सहसैव च ॥ १८४ ॥

वेगान्तरेऽम्बुमूर्द्धान मसक्तच्चास्य रेचयेत्।
अवपीडैः प्रधमनैः स्तीक्ष्णैः श्लेष्मनिवर्हणैः॥ १८५॥

श्वसनासु[1] विमुक्तासु तथा संज्ञां न विन्दति।
सौवर्चलाभयाव्योष सिद्धं सर्पिश्चले कफे॥ १८६॥
अपतानकिने शस्तं दशमूलोश्रृतं जलम्।
पिप्पलीचूर्णसंयुक्तं जीर्णे मांसरसौदनम्॥ १८७॥
हन्त्यभुक्तवतापीत मल्लं दध्यपतानकम्।
मरिचेन समायुक्तं स्नेहवस्तिरथापि वा॥ १८८॥

—o—

कुलित्थयवकोलानि भद्रदार्व्यादिकं गणम्।
निष्क्वाथ्यानूपमांसञ्च तैनाम्लैः पयसाऽथवा॥ १८९॥
स्वादुकन्दयुतं चेमं महास्नेहं विपाचयेत्।
स्वेदाभ्यङ्गावगाहेष नस्यपानानुवासनै।
सहन्तिवातं तेनैव स्नेहस्वेदान् प्रयोजयेत्॥ १९०॥

इति महास्नेहः।

पलाष्टकं तिल्वकतो वचायाः प्रस्थं पलं शिग्रु च पञ्चमूलम्।
सैरण्डसिंहीविहृत्तं घटेऽपां पक्वापचेत्पादश्रृतेन तेन॥ १९१॥
दध्नोपेतं यावशूकाग्निविल्वैः सर्पिःप्रस्थं हन्ति तत्सेव्यमानम्।
दुष्टान्वातानेकसर्वाङ्गसंस्थान् योनिव्यापद्गुल्मोदरञ्च॥१९२॥

इति तिल्वकघृतम्।

चिकित्सितमिदं कुर्या च्छुद्धवातेऽपतानके।

---

१ श्वसना. प्रश्वासोच्छ्वासवहाधमन्यस्ताश्विति।

संसृष्टदोषे संसृष्टं कुर्य्याद्येन क्रियापथम् ॥ १९३ ॥
दोषमाधिपके ज्ञात्वा शिरां विद्ध्या यथा क्रमम् ।
समीरणहरं कर्म कारयेत् कुशलं भिषक् ॥ १९४ ॥
वाह्ये चाभ्यन्तरायामे योज्या चार्दितवत् क्रिया ।
अथापतन्त्रकेनार्त्तं मातुरं नापतर्पयेत् ।
निरूहवस्तिं वमनं सेवयेन्न कदाचनः ॥ १९५ ॥
श्वसनाः कफवाताभ्यां रुद्धास्तस्य विमोचयेत् ।
तीक्ष्णैः प्रधमनैः सञ्ज्ञां तासु मुक्तासु विन्दति ॥ १९६ ॥

---

मरिचं शिग्रुबीजानि विगङ्गञ्च फणिज्जकम् ।
एतानि श्लक्ष्णचूर्णानि दद्याच्छीर्षविरेचनम् ॥ १९७ ॥
इति मरिचादिनस्यम् ।

हिंगवम्लवेतसं शुण्ठी ससौवर्चलदाडिमम् ।
पिबेद्दातकफघ्नञ्च वातहृद्रोगनुदितम् ॥ १९८ ॥
हरीतकीवचारास्ना सैन्धवं चाम्लवेतसम् ।
घृतमार्द्रकसंयुक्त मपतन्त्रकनाशनम् ॥ १९९ ॥
विभीतकं सातिविषं भद्रमुस्तञ्च पिप्पली ।
*भार्गी मस्तृङ्गवेरञ्च सूक्ष्मचूर्णानि कारयेत् ॥ २०० ॥*
चूर्णान्येतानि मद्येन पीतान्युष्णोदकेन वा ।
नाशयन्ति नृणां शीघ्रं कासश्वासापतानकम् ॥ २०१ ॥
इति विभीतकादिचूर्णम् ।

---

## अथ निदानम् ।

गृहीत्वार्धतनो वायुः शिरास्नायुर्विशोध्य च ।
पचमन्यतमं हन्ति सन्धियन्धान् विमोक्षयन् ॥ ८८ ॥

सन्तर्पोधकाय तस्य स्यात्कर्म्मणो विचेतनः ।
एकाङ्गरोगम्तं केचिदन्ये पचवधं विदुः ॥ २०३ ॥
सर्वाङ्गरोगम्तं केचित् सर्वकायस्थितेऽनिले ॥ २०४ ॥
दाहसन्तापमूर्च्छाः स्युं वायौ पित्तसमन्विते ।
शैत्यशोफगुरुत्वानि तस्मिन्नेव कफावृते ॥ २०५ ॥
शुद्धवातहतं पचं कृच्छ्रसाध्यतमं विदुः ।
साध्यमन्येन संयुक्तमसाध्यं चयहेतुकम् ॥ २०६ ॥

—०—

## अथ चिकित्सामाह ।

पचघातिनमभ्यौर्ण स्निग्धं स्विन्नं विरेचितम् ।
वस्तिभिः संप्रयुञ्जीत क्रमेणाक्षेपकस्य च ॥ २०७ ॥
माषात्मगुप्तामैरण्ड शृतं वाट्यालकं तथा ।
हिंगुसैन्धवसंयुक्तं पचाघातं विनाशयेत् ॥ २०८ ॥
माषात्मगुप्ताबलामाप विश्वैरण्डशृतं जलम् ।
ससैन्धवं पिबेन्नासा रन्ध्रे णाशु व्यपोहति ॥
पचाघातं शिरोरोगं नेत्ररोगहरं परम् ॥ २०९ ॥

—०—

माषबलाशुकशिम्बी कटृणरास्नोरुबूकाश्वगन्धानाम् ।
क्वाथो नस्यनिपीतो रामठलवणान्वितः कोष्णं ॥ २१० ॥
अपहरति पचवातं मन्यास्तम्भंसकर्णनादरुजम् ।
दुर्जयमर्दितवातं पचाद्वाज्जयति चावश्यम् ॥ २११ ॥
माषिके हिंगुसिन्धूत्थे जरणाद्यास्तु शाणिकाः ।

इति माषादिनस्यम् ।

ग्रन्थिकाऽग्निकणागुण्ठी, रास्नासैन्धवकल्कितम् ।
मापक्वाथानुगतैलं पक्षाघातं व्यपोहति ॥ २२२ ॥

इति ग्रन्थिकादितैलम् ।

मापात्मगुप्तातिविषोरुवूक रास्नागताह्वालवणैः सुपिष्टैः ।
चतुर्गुणे मापबलाकषाये तैलं कृतं हन्ति हि पक्षवातम् ॥ २१३॥

इति मापतैलम् ।

पृथक् पञ्चांशत्रिफला पिप्पली चेति चूर्णितम् ।
दशमूलाम्बुनाभाव्य त्वगेलार्धपलान्वितम् ॥ २१४ ॥
दत्वा पलानि पञ्चैव गुग्गुलोर्वटकीकृत ।
एव मासरसाभ्यासा द्वातरोगानशेषत ॥
हन्ति सन्ध्यस्थिमज्जः स्थान् हचमिन्द्राशनिर्यथा ॥ २१५ ॥
लिहवद् द्विगुणेनायमालोड्यालोड्य चातपे ।
दशमूलाम्बुना शोष्य सप्तवारान् सुगुग्गुलु ॥ २१६ ॥

इत्यादित्यपाकगुग्गुलुवटक. ।

शुण्ठीरखण्डस्य मूलानि युग्मं सहचरस्य च ।
मुस्तादुरालभादीप्या देवाह्वं कटुका शठी ॥ २१७ ॥
पञ्चकोलं बलापथ्या क्षुद्रे द्वे च पुनर्नवा ।
विपौषा वाजिगन्धा च शतावर्याटरूपकम् ॥ २१८ ॥
धान्यं छिन्नरुहा चैव विडङ्गं व्याधिघातकम् ।
गोक्षुर हृद्दारु च दीप्यको मिशयुक्तकम् ॥ २१९ ॥
चतुर्विंशतिको भागः पीतः कौशिकसंयुत ।
सर्ववातविकारघ्न पाचनो दीपनो लघु ॥ २२० ॥
आमवातस्य शोषस्य स्रोतसां शोधनागन ।

इत्येरण्डादिगुग्गुलुयुतः क्वाथः

गोशकृद्भिर्दाहयेत् एतत्पञ्चलवणमुपदिशति वातरोगिणामिति पञ्च लवणम्। एवञ्च होकाण्डवार्त्ताकुशिग्रुलवणानि संक्षुद्य घटे सर्पिस्तैलवसामज्जानं प्रक्षिप्यावलिप्यावलिप्य पूर्ववद्दहेत् एतत् स्नेहलवणमुपदिशति हि वातरोगेषु। इति स्नेहलवणम्।

---

त्रिफलाग्निमन्थोदन्ती विडङ्गं त्रिवृता सुधा।
कार्षिकाणि पचेत्तानि तिल्वकस्य पलेन च॥ २३०॥
दध्नि च त्रिवृताक्वाथे घृतप्रस्थं चतुर्गुणम्।
तिल्वकाख्यं घृतं तत्स्याद्विरेके वातरोगिणाम्॥ २३१॥

इति तिल्वकाख्यं घृतम्।

रास्नापुष्करविल्वाग्नि शिग्रुसैन्धवगोक्षुरैः।
कृष्णां पिष्ट्वा पचेत्सर्पिः कृतघ्नं वातार्त्तिनाशनम्॥ २३२॥

इति रास्नादिघृतम्।

अश्वगन्धाकषाये च कल्कैः क्षीरे चतुर्गुणम्।
घृतं पक्वन्तु वातघ्नं हृद्यं मांसविवर्धनम्॥ २३३॥

इत्यश्वगन्धाद्यं घृतम्।

द्रोणेऽम्भसः पचेद्भागान् दशमूलांशतुष्पलान्।
यवकोलकुलित्थानां भागैः प्रस्थोन्मितैः सह।
क्षीरेण च घृतं पक्वं तर्पणं पवनार्त्तिजित्॥ २३४॥

इति दशमूलाद्यं घृतम्।

छागं चर्मविनिर्मुक्तं त्यक्तान्त्रशृङ्गखुरादिकम्।
पञ्चमूलीद्वयञ्चैव जलद्रोणे विपाचयेत्॥ २३५॥
तेन पादावशेषेण घृतप्रस्थं विपाचयेत्।
जीवनीयैः सयष्ट्याह्वैः क्षीरञ्चैव शतावरीम्॥ २३६॥

छागल्याद्यमिदं नाम्ना सर्ववातविकारनुत्।
अर्दिते कर्णशूले च बाधिर्य्ये मूकमिम्मिणे॥ २३७॥
जडगद्गदपङ्गूनां खञ्जे गृध्रसि कुब्जयोः।
अपतानापतन्त्रे च सर्पिरेतत् प्रशस्यते॥ २३८॥
द्वाविंशच्च पलान्येव देयानि दशमूलतः।
घृते तैले च योगे च यद्द्रव्यं पुनरुच्यते।
तज्ज्ञातव्यमिहार्य्येण भागतो द्विगुणं भवेत्॥ २३९॥
इति छागल्याद्यं घृतम्।
बलानिष्क्वाथकल्काभ्यां तैलपक्वं पयोन्वितम्।
सर्ववातविकारघ्नमेवं शैरीयपाचितम्॥ २४०॥
इति बलाशैरीयतैलम्।
बलाग्निमन्यमैरण्ड बृहतीद्वयगोक्षुरम्।
बिल्वनागबलाभीरु श्योनाक पारिभद्रकम्॥ २४१॥
पाटला साश्वगन्धा च केतकी च प्रसारणी।
पृष्टपर्णी स्थिरा चैव बृहतीसहचरद्वयम्॥ २४२॥
एषां दशपलान् भागान् वारिद्रोणद्वये पचेत्।
पादशेषं परिस्राव्य तैलं प्रस्थद्वयं पचेत्॥ २४३॥
कल्कानि जीवनीयानि रास्नासैन्धवदारु च।
कुष्टं मांसीवचाग्रन्थि मञ्जिष्ठासरलानि च॥ २४४॥
त्वक्पत्रक वराङ्गञ्च एलामुस्तकबालकम्।
एतैः कल्कैः सुपिष्टैश्च पाचयेन्मृदुनाग्निना॥ २४५॥
क्षीरञ्च द्विगुणं दद्याच्छतावर्य्यारसस्य च।
एतत्तैलवरं तेषां रोगाणां वातजन्मनाम्॥ २४६॥
नाशयेद्वातरक्तञ्च आमवातं सुदारुणम्।
गृध्रसीपीठसर्पेषु चाध्यवाते सदाहितम्।

पाने वस्तौ तथाभ्यङ्गे नस्ये चैव प्रयोजयेत् ॥ २४७ ॥

इति महाबलातैलम्।

बलामूलीकषायस्य दशमूलीह्रतस्य च।
यवकोलकुलित्थानां क्वाथस्य पयसस्तथा ॥ २४८ ॥
अष्टावष्टौ शुभाभागा स्तैलादेकस्तदेकत:।
पचेदथाप्यमधुरं गणं सैन्धवसंयुतम् ॥ २४९ ॥
तथाऽगुरुं सर्जरसं सरलं देवदारु च।
मञ्जिष्ठां पद्मकं कुष्ट मेलां कालानुशारिवाम् ॥ २५० ॥
मांसीं शैलीयकं पत्रं तगरं शारिवां वचाम्।
शतावरीमश्वगन्धां शतपुष्पां पुनर्नवाम् ॥ २५१ ॥
तत्साधुसिद्धं सौवर्णे राजते मृण्मये पिवा।
प्रक्षिप्यकलसे सम्यक् तत्तगुप्तं निधापयेत् ॥ २५२ ॥
बलातैलमिदं नाम्ना सर्ववातविकारनुत्।
यथा बलमतो मात्रां सूतिकायै प्रदापयेत् ॥ २५३ ॥
या च गर्भार्थिनीनारी क्षीणशुक्रश्च य: पुमान्।
क्षीणे वाते मर्महते मथितेऽभिहते तथा ॥ २५४ ॥
भग्ने श्रमाभिपन्ने च सर्वथैवोपयुज्यते।
सर्वानाक्षेपकादींश्च वातव्याधीन् व्यपोहति ॥ २५५ ॥
हिक्काश्वासमधीमन्थं गुल्मं कासं मदुस्तरम्।
षण्मासादुपयुञ्जीत दन्त्रवृद्धिं व्यपोहति ॥ २५६ ॥
प्रत्ययधातु: पुरुषो भवेच्चास्थिरयौवन:।
एतद्धिराज्ञाकर्त्तव्यं राजमान्याश्च ये नरा:।
सुखिन: सुकुमाराश्च धनिनश्चापि मानिन: ॥ २५७ ॥

इति महाबलातैलम्।

साधयित्वा जलद्रोणे तुलां सहचरस्य च।
पादशेषे पचेत्तैलं दत्वा क्षीरं चतुर्गुणम् ॥ २५८ ॥
चन्दनाऽगुरुयष्ठ्याह्व शठीदेवद्रुमं घनम्।
सैन्धवञ्चाजमोदा च काकोल्यौ जीरकावुभौ ॥ २५९ ॥
कुष्टं सौवर्चलं व्योषं रास्ना भार्गीत्रिकण्टकम्।
एतैः रक्षसमैर्भागैः शर्करायाः पलाष्टकम् ॥ २६० ॥
पक्कं प्रयोजयेत्पाना दभ्यङ्गे नावनेऽपि वा।
ऊर्ध्ववाते ह्यधोवाते पक्षाघातेऽपवाहुके ॥ २६१ ॥
कर्णवाते शिरःकम्पे शिरोरोगे तथार्दिते।
सर्ववातक्षते दोषे कफमेदः क्षतेऽनिले ॥ २६२ ॥

इति सहचराद्यं तैलम्।

सत्वक्कां सहचरादेकां क्षत्वा जर्जरितां तुलाम्।
काश्मरीपाटलाविल्वं तुलात्रिभिरथापरम् ॥ २६३ ॥
अश्वगन्धां बलां तद्वत् मूलं शतावरं वचाम्।
चतुर्द्रोणे विपक्तव्यं चतुर्भागावशेषितम् ॥ २६४ ॥
शताह्वाहिंगुयष्ठ्याह्व देवदारु सचित्रकम्।
त्वगेला क्रमिहन्ता च रास्नातगरसैन्धवाः ॥ २६५ ॥
महासहचरं तैलं वातश्लेष्महरं परम्।
पाने नस्ये तथाभ्यङ्गे वस्तिकर्म्मणि शस्यते ॥ २६६ ॥
अशीतिं वातजान् रोगांश्चत्वारिंशच्च पैत्तिकान्।
विंशतिं श्लैष्मिकांश्चैव पानादेवापकर्षति ॥ २६७ ॥

इति महासहचराद्यं तैलम्।

शालिपर्णी पृष्टपर्णी वला च बहुपुत्रिका।
एरण्डस्य च मूलानि वृहत्याः पूतिकस्य च ॥ २६८ ॥
गवेधुकस्य मूलानि तथा सहचरस्य च।

एतेषां पलिकान् भागान् तैलप्रस्थं विपाचयेत् ॥ २६८ ॥
आजञ्चैवाथ गव्यञ्च क्षीरं दद्याच्चतुर्गुणम् ।
अस्य पक्वस्य तैलस्य शृणु वीर्य्यमतः परम् ॥ २७० ॥
अश्वानां वातभग्नानां कुञ्जराणां तथैव च ।
तैलमेतत्प्रयोक्तव्यं सर्ववातनिवारणम् ॥ २७१ ॥
आयुष्मांश्च नरः पीत्वा निश्चयेन दृढो भवेत् ।
हृच्छूलं पार्श्वशूलञ्च तथैवार्द्धञ्च भेदकम् ॥
कामलापाण्डुरोगञ्च शर्करामश्मरीं हरेत् ॥ २७२ ॥
क्षीणेन्द्रिया नरा ये च जरया जर्जरीकृताः ।
येषां चापि क्षयोव्याधि रन्त्रवृद्धिश्च दारुणा ॥ २७३ ॥
अर्दितं गलगण्डञ्च वातशोणितमेव च ।
स्त्रियो या न प्रसूयन्ते तासाञ्चैव प्रयोजयेत् ॥ २७४ ॥
गर्भमश्वतरीविन्द्यात् न च मृत्युवशं नयेत् ।
एतदङ्गवरं तैलं विष्णुना परिकीर्त्तितम् ॥ २७५ ॥

इति विष्णुतैलम् ।

बलाश्वगन्धामरदारुरास्ना स्थिरावचानागबला सलोहम् ।
आरुष्करं चन्दनपुष्कराख्यं नतं गुडूचीलवणोत्तमं च ॥ २७६ ॥
काकोलिमेदे मधुकं विदारी सचविकं गुग्गुलुजीरकञ्च ।
द्राक्षाऽगुरुर्नागरधान्यकञ्च एतानि सर्वाणि समानि कृत्व ॥२७७॥
कल्कं कषायैर्विधिना प्रयुक्तैस्तैलं पचेत्तोयचतुर्गुणञ्च ।
अम्लारणालं दधिदुग्धयुक्तं दत्वा समांसं विधिवद्विधिज्ञः ॥२७८॥
तदावनाभ्यञ्जननस्यपाने निघ्नन्ति घोरानचिरेण रोगान् ।
कल्याणकं नाम महच्च तैलं मतम् जयेत्कार्मुकनामधेयम् ॥२७९॥
दण्डापतानार्दितवेपमाना सुपिण्डिता, पिण्डितकुब्जखञ्जा ।
पुनर्युवानोऽतिमनोऽभिरामाभवन्ति ते तैलवरेण सर्वे ॥ २८० ॥

अश्वोऽपि भग्नः सकृदेव दन्ती भग्नो भवेन्मारुतविक्रमश्च ।
वन्ध्यापि पुत्रं लभते वराभं दीर्घायुषं सर्वगुणैरुपेतम् ॥ २८१ ॥
अस्य प्रवाताहतचञ्चलोर्मिं महोदधिर्लङ्घयतीह वेलाम् ।
सवातजा एव हि तैलराज रोगा न वै लङ्घयितुं समर्थाः ॥२८२॥

इति महाकल्याणक तैलम् ।

शतावरी चांशुमती पृश्निपर्णी शटी बला ।
एरण्डस्य च मूलानि बृहत्याः पूतिकस्य च ॥ २८३ ॥
गवेधुकस्य मूलानि तथा सहचरस्य च ।
एषां दशपलान् भागान् जलद्रोणे विपाचयेत् ॥ २८४ ॥
पादावशेषे पूते च गर्भं चैनं समाचरेत् ।
पुनर्नवा वचा दारु शताह्वा चन्दनागुरु ॥ २८५ ॥
शैलेयं तगरं कुष्टमेलामांसीस्थिराबला ।
अश्वाह्वासैन्धवं रास्ना पलार्द्धानि च पेषयेत् ॥ २८६ ॥
गव्याजपयसोः प्रस्थौ द्वौ द्वावत्र प्रदापयेत् ।
शतावर्य्यारसप्रस्थं तैलप्रस्थं विपाचयेत् ॥ २८७ ॥
अस्य तैलस्य सिद्धस्य शृणुवीर्य्यमतः फलम् ।
अश्वाना वातभग्नानां कुञ्जराणां नृणां तथा ॥ २८८ ॥
तैलमेतत्प्रयोक्तव्यं सर्ववातविकारनुत् ।
आयुष्मांश्च नरः पीत्वा निश्चयेन पुमान् भवेत् ॥ २८९ ॥
गर्भमश्वतरी विन्द्यात् किं पुनर्मानुषी तथा ।
हृच्छूलं पार्श्वशूलञ्च तथैवार्धावभेदकम् ॥ २९० ॥
अपची गण्डमालाञ्च वातरक्तं हनुग्रहम् ।
कामला पाण्डुरोगञ्च अश्मरीञ्चापि नाशयेत् ॥ २९१ ॥
तैलमेतद्भगवता विष्णुना परिकीर्त्तितम् ।

नारायणमितिख्यातं वातान्तकरणं तथा ॥ २८२ ॥

इति स्वल्पनारायणं तैलम् ।

बिल्वोऽग्निमन्थ श्योनाकं पाटलापारिभद्रकं ।
प्रसारण्यश्वगन्धा च बृहतीकण्टकारिका ॥ २८३ ॥
बला चातिबला चैव श्वदंष्ट्रा सपुनर्नवा ।
एषां दशपलान् भागांश्चतुर्द्रोणेऽम्भस पचेत् ॥ २८४ ॥
पादशेषं परिस्राव्य तैलप्रस्थं पचेच्छनै ।
शतपुष्पादेवदारु मांसीशैलेयकं वचा ।
चन्दनं तगरं कुष्टं मेला पर्णीचतुष्टयम् ॥ २८५ ॥
रास्नातुरगगन्धा च सैंधवञ्च पुनर्नवा ।
एषां द्विपलिकान् भागान् पेषयित्वा विनिक्षिपेत् ॥ २८६ ॥
शतावरीरसञ्चैव तैलतुल्यं प्रदापयेत् ।
आजं वा यदि वा गव्यं चीरं दत्त्वा चतुर्गुणम् ॥ २८७ ॥
पाने वस्तौ तथाऽभ्यङ्गे भोज्ये नस्ये प्रदापयेत् ।
अश्वो वा वातसम्भग्नो गजो वा यदि वा नर ॥ १८८ ॥
पङ्गुलं पीठसर्पि च तैलेनानेन सिद्धति ।
अधोभागे च ये वाता शिरोमध्यगताश्चये ॥ २८९ ॥
मन्यास्तम्भे हनुस्तम्भे दन्तरोगे गलग्रहे ।
यस्य शुष्यति चैकाङ्गं गतिर्यस्य च विह्वला ॥ ३०० ॥
क्षीणेन्द्रियानष्टशुक्रा ज्वरक्षीणाश्चये नरा ।
वधिरालक्षजिह्वाश्च मन्दमेधस एव या ॥ ३०१ ॥
मन्दप्रजा च या नारी या च गर्भं न विन्दति ।
वातार्त्ता वृषणौ येषां मन्त्रहृदिश दारुणा ।
एतत्तैलवरं तेषां नाम्ना नारायणं स्मृतम् ॥ ३०२ ॥

इति मध्यमनारायणं तैलम् ।

बिल्वाश्वगंधाबृहती श्वदंष्ट्रा श्योनाकवाट्यालकपारिभद्राः।
क्षुद्राकटिल्लातिबलाग्निमन्थं प्रत्येकमेकं प्रवदन्ति तज्ज्ञाः ॥३०३॥
सपादप्रस्थं विधिनोद्धृतानां विल्वा सुयत्नात्सरणीयुतानाम्।
मूलं विदध्यादथपाटलीनां द्रोणैरपामष्टभिरेव पक्का ॥३०४॥
पादावशेषेण रसेन तेन तैलाढकाभ्यां सममेव दुग्धम्।
आजं विदध्यादथवाऽपि गव्यं दद्याद्रसं वापि शतावरीणाम् ॥३०५
तैलेन तुल्यं पुनरेव तत्र रास्नाश्वगन्धाऽमरदारुकुष्टम्।
पर्णीचतुष्कागुरुकेसराणि सिन्धूत्थमांसीरजनीद्वयञ्च ॥ ३०६ ॥
शैलेयकं चन्दनपुष्कराणि एला सयष्टीतगराब्दपत्रम्।
भृङ्गाष्टवर्गाऽम्बु वचापलाशं पृथ्वी च थौणेयक चोरकाख्यम्॥३०७॥
एतैः समस्तैः द्विपलप्रमाणैः कर्पूरकाश्मीरमृगाण्डजानाम्।
दद्यात्सुगन्धाय वदन्ति केचित् प्रस्वेददौर्गन्ध्यविनाशनाय ॥३०८॥
चूर्णीकृतानां द्विपलप्रमाणैरालोड्य सर्वं विधिना विपक्वम्।
नारायणं नाम महच्च तैलं सर्वैं प्रकारैर्विधिवत्प्रयोज्यम् ॥३०९॥
अश्वेभपुंसां पवनार्दितानां ये पङ्गवः पीठविसर्पिणश्च।
एकाङ्गशुष्कार्दितवेपमाना वाधिर्य शुक्रक्षयपीडिताश्च ॥३१०॥
मन्याहनुस्तम्भगलग्रहार्त्ताः त्वक्तामयास्ते बलवर्णयुक्ताः।
संसेव्यतैलं सहसा भवन्ति वन्ध्यापि नारी लभते सुपुत्रम्।
देवोपमं सर्वगुणोपपन्नं सुमेधसं श्रीविजयान्वितश्च ॥ ३११ ॥
शाखाश्रिते कोष्ठगते च वाते हृदी विधेयं पवनार्दितानाम्।
जिह्वाऽनिले दन्तगते च शूले वातापहं तैलवरं प्रसिद्धम् ॥ ३१२ ॥
उन्मादकुब्जज्वरकम्पितानां नातःपरं तैलवरं प्रदिष्टं
वातामये वैद्यवरेणयोज्यवायुः प्रकर्षं प्रमदाप्रियत्वम् ॥३१३॥
प्राप्नोति लक्ष्मीविजयश्च नित्यं रक्षांसि दुष्टानि निहन्ति नूनम्।
तैलोपजीवीजरयाविमुक्तो जीवेन्नरो वर्षशतानि पञ्च ॥ ३१४ ॥

देवासुरे युद्धवरे समीक्ष्य सुरांस्त्रि भग्नानसुरैः सुरांश्च ।
नारायणोक्तं सुरवृन्दहर्षार्थं नारायण तेन वदन्ति तज्ज्ञाः ॥३१५॥

इति महानारायणं तैलम् ।

माषप्रस्थं समादाय पचेत्सम्यक् जलाढके ।
पादशेषे रसे तस्मिन् क्षीरं दत्त्वा चतुर्गुणम् ॥ ३१६ ॥
प्रस्थञ्च तिलतैलस्य कल्कं दत्त्वाक्षसम्मितम् ।
जीवनीयानि यान्यष्टौ शतपुष्पा ससैन्धवा ॥ ३१७ ॥
रास्नात्मगुप्ताकटुका मधुकं कुष्टमेव च ।
पक्षाघातार्दिते वाते कर्णशूले च दारुणे ॥ ३१८ ॥
मन्दश्रुतौ चाऽश्रवणे तिमिरे च त्रिदोषजे ।
हस्तकम्पे शिरःकम्पे विश्वाच्यामवबाहुके ॥ ३१९ ॥
कलायखञ्जे शस्तं स्यात् पानाभ्यञ्जनवस्तिभिः ।
माषतैलमिदं श्रेष्टं मूर्द्धजत्रुगदापहम् ॥ ३२० ॥
यवमाषतिलानाञ्च प्रस्थ. षोड़शभि पलै. ॥

इति माषतैलम् ।

माषक्वाथे बलाक्वाथे रास्नाया दशमूलजे ।
यवकोलकुलित्थानां छागमांसरसे पृथक् ॥ ३२१ ॥
प्रस्थे तैलस्य च प्रस्थं क्षीरं दत्त्वा चतुर्गुणम् ।
रास्नात्मगुप्तासिन्धूत्थ शताह्वैरण्डमुस्तकैः ॥ ३२२ ॥
जीवनीयबलाव्योषैः पचेदक्षसमैः पृथक् ।
हस्तकम्पे शिरःकम्पे बाहुशोषेऽवबाहुके ॥ ३२३ ॥
बाधिर्यं कर्णशूले च कर्णनादे च दारुणे ।
विश्वाच्या मर्दिते कुब्जे गृध्रस्यामपतानके ॥ ३२४ ॥
वस्त्यभ्यञ्जनपानेषु नावनेषु प्रयोजयेत् ।

मापतैलमिदं श्रेष्ठं मूर्ध्वजत्रुगदापहम् ॥ ३२५ ॥

इति बृहन्माषादितैलम् ।

माषस्यार्द्धाढकं देयं तुलार्धं दशमूलतः ।
छागमांसपलं त्रिंश ज्जलद्रोणे विपाचयेत् ॥ ३२६ ॥
चतुर्भागावशेषन्तु कषायमवतारयेत् ।
प्रस्थञ्च तिलतैलस्य पयो दत्वा चतुर्गुणम् ॥ ३२७ ॥
जीवनीयानि मञ्जिष्ठा चव्यचित्रककट्फलम् ।
सव्योषं पिप्पलीमूलं रास्नामलकगोक्षुरम् ॥ ३२८ ॥
आत्मगुप्ता तथैरण्डः शताह्वालवणत्रयम् ।
अश्वगन्धामृताभीरु यवानी सवचाशठी ॥ ३२९ ॥
एतैरक्षसमैः कल्कैः साधयेन्मृदुनाग्निना ।
पक्षवातादिभिः सर्वैरर्दिते च हनुग्रहे ॥ ३३० ॥
कर्णमूले च बाधिर्ये तिमिरे च त्रिदोषजे ।
पाणिपादशिरोग्रीवा श्रवणे मन्द एव च ॥ ३३१ ॥
कलायखञ्जे पङ्गौ च गृध्रस्यामपबाहुके ।
पाने वस्तौ तथाभ्यङ्गे नस्ये कर्णाक्षिपूरणे ॥ ३३२ ॥
एतत्तैलं प्रशंसन्ति सर्ववातविकारनुत् ।

इति महामाषतैलम् ।

माषद्रोणं समावाप्य चाश्वगंधां शतावरीम् ।
प्रसारणीं सातिबलां तथा गंधर्वहस्तकम् ॥ ३३३ ॥
सहचरस्य मूलन्तु केतकीनां तथैव च ।
आत्मगुप्ता च वाट्याल दशमूलमथापि वा ॥ ३३४ ॥
एषां दशपलान् भागान् कौक्कुटं मांसमेव च ।
वस्तु षष्टिपलं दत्वा जलसूर्पे विपाचयेत् ॥ ३३५ ॥
तेन पादावशेषेण शास्त्रविन्मृदुनाग्निना ।

चीरद्रोणसमायुक्तं तैलप्रस्थं विपाचयेत् ॥ २३६ ॥
अतः कल्कानिमान्दद्यात् पलिकान् श्लक्ष्णपेषितान्।
जीवनीयानि यान्यष्टौ यष्टीचन्दनसैन्धवम् ॥ २३७ ॥
देवदारुबलाकुष्टं रास्नां लाक्षाकशिम्बिका।
मांसीवचाशतपुष्पा विदारी च प्रसारिणी ॥ २३८ ॥
शुद्धदार्व्यर्कमूलञ्च विडङ्गं सरलं तथा।
शतावर्यश्वगंधा च शठीतूर्यपर्णमेव च ॥ २३९ ॥
अम्लवेतसदार्वी च भागं देयं पृथक् पृथक् ॥ २४० ॥
पाने वस्तौ तथाऽभ्यङ्गे नस्ये कर्णाचिपूरणे।
अर्दिते कर्णशूले च शिरोरोगे हनुग्रहे ॥
मुखरोगेषु सर्वेषु मन्यास्तम्भेऽपबाहुके ॥ २४१
कर्णस्रावे च बाधिर्ये तिमिरे च त्रिदोषजे।
हृद्रोगे चैव गृध्रस्यां मामवातेकटिग्रहे ॥ २४२
कलायखञ्जे विश्वाच्यां हितमेतद्विशेषतः।
जङ्घोरुपादपृष्ठे च पार्श्वे शूलमतीव च ॥ २४३
अग्रवृद्धा(?)हृद्विषु वातरक्ते सुदारुणम्।
योनसं कुब्जपंगू वा चाशीतिं वातजान् गदान् ॥ २४४ ॥
वलिपलितखालित्यान् केशानां पतनं हरेत्।
बलमांसप्रदश्चैव शुक्रवृद्धिकरं परम् ॥ २४५ ॥
अपत्यजननं श्रेष्ठं गर्भिण्याः परमं हितम्।
हस्त्यश्वोष्ट्रादिव्यायामे श्रेष्ठमग्निप्रसादकम् ॥ २४६ ॥
तैलमात्रोपयोगेन व्याधिनिर्मूलतां नयेत्।
सर्ववातविनाशाय दृष्टमिन्द्राग्निदैवतैः(?) ॥
महामाषमिदं तैलं कृष्णात्रेयेण पूजितम् ॥ २४७ ॥

इति माषप्रमहामाषतैलम्।

चीराढ़कं शतावर्य्या रसप्रस्थद्वयं पृथक् ।
शृङ्गवेरस्य तैलस्य प्रस्थं साध्यञ्च कार्षिकैः ॥ ३४८ ॥
शताह्वादारुशैलेयमांसीचन्दनवालकैः ।
त्वगेलांशुमतीरास्ना नगरैरण्डसैन्धवैः ॥ ३४९ ॥
अश्वगन्धासमङ्गोग्रा मूर्वामरिचनागरैः ।
तन्मासपीतं विधिवत्तैलं सिद्धार्थकं जयेत् ॥ ३५० ॥
कुब्जवामनपङ्गुत्व-बाधिर्य्यभग्नावकुञ्चनम् ।
सर्व्वाङ्गिकाङ्गरोगांश्च हनुमन्यागलामयान् ॥ ३५१ ॥
वातरक्तञ्च कुष्ठानि कंडूपामाविचर्चिकाः ।
गण्डमालापचिवक्त्र पाकोदरभगन्दरान् ॥ ३५२ ॥
कुष्ठव्रणान् सविषमा नारम्भान् विविधान् ज्वरान् ।
सन्निपातांश्च शूलानि विषमद्वंद्वमामयान् ॥ ३५३ ॥
वातगुल्मं बहून् मेहा नन्त्रह्वद्धिञ्च शर्कराम् ।
कामलां पांडुरोगञ्च शूलं नेत्रगदोद्भवम् ॥ ३५४ ॥
मूढ़गर्भांश्च भग्नांश्च योनिवंध्यामयान् बहून् ।
ह्वद्वानामल्पशुक्रादक् स्मृतीनां चयरेतमाम् ॥ ३५५ ॥
रसायनं बलारोग्य वर्णान्यायुर्विवर्द्धनम् ॥ ३५६ ॥

—०—

ॐ नारायणाय स्वाहा उत्तराभिमुखः स्थित्वा खदिरकीलकेन खन्यते । शतावरी औषधी च सर्वासां साधनार्थोत्पाटनायायं मन्त्रः ।

ॐ कुमारवीजनाय स्वाहा । इत्युत्पाटनमन्त्रः । इति शतावरीतैलम् ।

माषस्यार्द्धाढकं देयं दशमूलं तुलार्द्धतः ।
बलामूलन्तु तस्यार्द्धं केतकीनां तथैव च ॥ २५७ ॥
दद्यमास पलं त्रिंश च्छटिका पञ्चविंशतिः ।
जलद्रोणद्वये पक्त्वा पादशेषेऽवतारिते ॥ २५८ ॥
तिलतैलस्य च प्रस्थं पयो दत्वा चतुर्गुणम् ।
जीवनीयानि यान्यष्टौ मञ्जिष्ठाचव्यकट्फलम् ॥ २५९ ॥
व्योषं रास्नाकणामूलं मधुकं पुष्करं तथा ।
माषात्मगुप्तकैरण्ड शताह्वालवणत्रयम् ॥ २६० ॥
कुष्टाश्वगन्धा ह्यम्लां यवानी सवचाशठी ।
नागरं मागधीमुस्तं वर्षाभूरजनीद्वयम् ॥ २६१ ॥
शतावरीबृहत्यौ च एतैरचसमन्वितैः ।
पक्षाघातेषु सर्वेषु ह्यर्दिते च हनुग्रहे ॥ २६२ ॥
मन्दस्मृतौ च श्रवणे तिमिरे च त्रिदोषजे ।
हस्तकम्पे शिरःकम्पे गात्रकम्पे शिरोग्रहे ॥ २६३ ॥
शस्तं कलायखञ्जे च गृध्रस्यामपबाहुके ।
बाधिर्य्ये कर्णनादे च सर्ववातविकारनुत् ॥ २६४ ॥
दण्डापतानके चैव मन्यास्तम्भे विशेषतः ।
हनुस्तम्भे प्रशस्तं स्यात् सूतिकावातनाशनम् ॥ २६५ ॥
त्वच्यं मांसप्रदश्चैव शुक्राग्निबलवर्द्धनम् ।
अण्डवृद्धिमन्त्रवृद्धिं वातरक्तञ्च नाशयेत् ॥ २६६ ॥

इति महामाषतैलम् ।

माषप्रस्थं बलाप्रस्थं दशमूलास्तथा परम् ।
प्रस्थं सहचरस्यैकं सम्यग्द्वाप्रसमेव च ॥ २६७ ॥
जलद्रोणद्वये पक्त्वा चतुर्भागावशेषिते ।

तैलप्रस्थं पचेच्छाग क्षीरं दत्वा चतुर्गुणम् ॥ २६८ ॥
कल्कैः सिन्धूत्थयष्ट्याह्वरास्नाव्योषाग्निगन्धकैः ।
शतपुष्पासमायुक्तैः स्तत्सिद्धं सर्ववातनुत् ॥ २६९ ॥

इति माषतैलम् ।

शतद्वयं प्रसारिण्या द्वे च पीतसहाचरात् ।
अश्वगन्धैरंडबला वरीरास्नापुनर्नवा ॥ ३७० ॥
केतकीदशमूलञ्च पृथक् त्वक् पारिभद्रतः ।
प्रत्येकमिषान्तु तुलां तुलार्धं किलिमं तथा ॥ ३७१ ॥
तुलार्धं स्याच्छिरीषस्य लाक्षायाः पञ्चविंशतिः ।
पलानि लोध्राच्च तथा सर्वमेकत्र साधयेत् ॥ ३७२ ॥
द्रोणद्वयं काञ्जिकञ्च षड्विंशत्याढ़कान्वितम् ।
क्षीरदध्नोः पृथक् प्रस्थौ दश मस्त्वाढ़कं तथा ॥ ३७३ ।
इक्षोरसाढ़के चैव छागमांसतुलां नयेत् ।
जलं पञ्चचत्वारिंशत्प्रस्थे पक्वे तु शेषयेत् ॥ ३७४ ॥
सप्तदश रसप्रस्थान् मञ्जिष्टाक्वाथ एव च ।
कुड़वोनाढ़कोन्मानैं द्रवैरेभिस्तु साधयेत् ॥ ३७५ ॥
सुशुद्धतिलतैलस्य द्रोणप्रस्थेन संयुतम् ।
आद्य एभिर्द्रवैः पाकः कल्कैर्भल्लातकं कणा ॥ ३७६ ॥
नागरं मरिचं चैव प्रत्येकं षट्पलोन्मितम् ।
भल्लातकाऽसद्भिावे तु रक्तचन्दनमिष्यते ॥ ३७७ ॥
पथ्याधधात्रः सरलं शताह्वाकर्कटीवचा ।
चोरपुष्पीशटीमुस्तं द्वयं पद्मञ्च सोत्पलम् ॥ ३७८ ॥
पिप्पलीमूलमञ्जिष्टा साश्वगन्धापुनर्नवा ।
दशमूलं समुदिष्टं चक्रमर्दी रसाञ्जनम् ॥ ३७९ ॥

गन्धद्रव्यं हरिद्राच जीवनीयगणस्तथा ।
एतेषां पलिकैर्भागैः राद्यः पाको विधीयते ॥ ३८० ॥
देवपुष्पीबोलपत्रे ग्रन्थिकीरसंशैलजे ।
प्रियंगूशीरमधुरी मांसीदारुबलावचा ॥ ३८१ ॥
श्रीवासो नलिकाख्येति सूक्ष्मैलाकुन्दुरुसुरा ।
नखोदयश्च त्वक्पत्री सुमना पूतिचम्पकम् ॥ ३८२ ॥
मदनं रेणुकाष्टका मातुलुङ्गं पलत्रयम् ।
प्रत्येकं गन्धतोयेन द्वितीयः पाक इष्यते ॥ ३८३ ॥
गंधोदकी च त्वक्पत्री पत्रकोशीरमुस्तकम् ।
प्रत्येकं सबलामूलं पलानि पञ्चविंशतिः ॥ ३८४ ॥
कुर्य्याद्भागोऽत्र जल प्रस्थास्तु पञ्चविंशतिः ।
अर्द्धावशिष्टाः कर्त्तव्याः पाके गन्धांबुकर्मणि ॥ ३८५ ॥
गन्धांबुचन्दनांबुभ्यां तृतीयः पाक इष्यते ।
कल्कोऽत्र केशरं कुष्टं त्वक्कालीयककुङ्कुमम् ॥ ३८६ ॥
भद्रश्रियं ग्रन्थिपर्णं लताकस्तूरिका तथा ।
लवङ्गागुरुकङ्कोल जातीकोषफलानि च ॥ ३८७ ॥
एलालवङ्गकं च प्रत्येकं त्रिपलीम्मिता ।
कस्तूरीपट्पलाचन्द्रा त्पलं सार्धञ्च गृह्यते ॥ ३८८ ॥
वेधार्थञ्च पुनयर्द्धं मेदो देयौ तयोम्मितौ ।
महाप्रसारणीसेयं राजभोग्याप्रकीर्त्तिता ॥ ३८९ ॥
गुणान् प्रसारणीनान्तु वक्ष्येयां बलोत्तमान् ॥ ३९० ॥

---

अत्र शुक्तिविधिमेण्डः प्रस्थपञ्चाढ़कोम्मितम् ।
काञ्जिकं कुड़वी दध्नो गुड़प्रस्थोऽम्बुमूलकात् ॥ ३९१ ॥
पलान्यष्टौ गोधितार्द्रां त्पलषोड़शकं तथा ।

कणाजीरकसिन्धूत्थ हरिद्रामरिचं पृथक् ॥ ३८२ ॥
द्विपलं भाविते भांडे घृतस्वाष्टदिनस्थितम्।
सिद्धं भवति तच्छुक्तं यदावतार्य्यते
तदा देयं चतुर्जातं पृथक्कर्षत्रयीन्मितम् ॥ ३८३ ॥

इति शुक्तविधिः।

—०—

पञ्चपल्लवतोयेन गंधानां चालनं तथा
शोधनं चात्र संस्कारो विशेषश्चात्र वच्यते ॥ ३८४ ॥
आम्रजंबूकपित्थानां बीजपूरकबिल्वयोः।
गधकर्म्मणि सर्वत्र पत्राणि पञ्चपल्लवम् ॥ ३८५ ॥
चण्डीगोमयतोयेन यदि वा तिन्तिडीजलैः।
नख सक्षाययेदेभिः र्भाण्डेन मृण्मयेन तु ॥ ३८६ ।
पुनरुद्धृत्य प्रक्षाल्य भर्जयित्वा निषेचयेत्।
गुडपथ्यांबुनाप्येवं शुध्यते नात्र संशयः ॥ ३८७ ॥

इति नखशुद्धिः।

गोमूत्रे चालवुपके पक्षापञ्चदलोदके।
पुनः सुरभितोयेन वाष्पस्वेदेन स्वेदयेत् ॥ ३८८ ॥
गधोग्राशुध्यते ह्येवं रजनी च विशेषतः ॥ ३८९ ॥

इति हरिद्रावचाशुद्धिः।

मुस्तकन्तु मनाक् क्षुण्णं काञ्जिके त्रिदिनोषितम्।
पञ्चपल्लवपानीये स्विन्नमातपशोषितम् ॥ ४०० ॥
गुडाम्बुना सिच्यमानं भर्जयेच्चूर्णयेत्ततः।
आजक्षीराञ्जनजले भावयेदिति शुध्यति ॥ ४०१ ॥

इति मुस्तकशुद्धिः।

काञ्जिके क्वथितं शैलं भृष्टा पथ्या गुडांबुना ।
सिञ्चेदेवं ततः पुष्पैर्विविधैरधिवासयेत् ॥ ४०२ ॥

इति शैलजशुद्धिः ।

यथालाभमपामार्गस्नुह्यादि चारलेपितम् ।
वाष्पस्वेदेन संस्वेद्य पूतिं निर्लोमतां नयेत् ॥ ४०३ ॥
दोलापाकं पचेत्पश्चात् त्वक्चपल्लववारिणि ।
खलः साधुमिवोत्पोथ्य ततो निःस्नेहतां नयेत् ॥ ४०४ ॥
आजसौभांजनजले भावयेच्च पुनः पुनः ।
शिग्रुमूले च केतक्याः पुष्पपत्रपुटे च तम् ।
पचेदेवं विशुद्धश्च मृगनाभिसमो भवेत् ॥ ४०५ ॥

इति खाटासीशुद्धिः ।

तुरुष्कं मधुना भाव्य काश्मीरश्चापि सर्पिषा ।
रुधिरेणायसं प्राज्ञे गोमूत्रैर्न्यपर्णिकम् ॥ ४०६ ॥
मधूदकेन मधुरी पक्वं तंडुलांबुना ।
ईषत्चारानुगंधा तु दग्धायाति न भस्मताम् ॥ ४०७ ॥
पीताकेतकीगंधा वा लघुस्निग्धामृगोत्तमा ॥ ४०८ ॥
पक्वात् कर्पूरतः प्राहु रपक्वं गुणवत्तरम् ।
तत्रापि स्याद्यदचुद्रं स्फटिकाभं तदुत्तमम् ॥ ४०८ ॥
पक्वश्च मदलं स्निग्धं हरितद्युति चोत्तमम् ।
भङ्गे मनागपि नचे विपतन्ति ततः कणाः ॥ ४१० ॥
मृगशृङ्गोपमं कुष्ठ चन्दनं रक्तपीतकम् ।
वाकत्तुडाकृतिः स्निग्धोगुरुर्येवोत्तमोऽगुरुः ॥ ४११ ॥
स्निग्धाल्पकेशरं तस्तं शैलजो हृतमांसलः ।
मुगपीताय राम्रोक्ता मांसीपिङ्गजटाकृतिः ॥ ४१२ ॥

रेणुकामुद्गसंस्थाना शस्तमानूपजङ्गनम् ।
जातीफलं समव्यञ्च स्निग्धं गुरु च शस्यते ॥ ४१३ ॥
एलासूक्ष्मफलाश्रेष्टा प्रियंगुः श्यामपाण्डुरा ।
नखमश्वखुरं हस्ति कर्णञ्चैवात्र शस्यते ।
एतेषामपरेषाञ्च नवताम्रवरो गुणः ॥ ४१४ ॥

इति चतुर्विंशतिकाप्रसारणीतैलम् ।

माषद्रोणं समादाय अश्वगन्धाप्रसारणी ।
द्विपञ्चमूल्यात्मगुप्ता बलागन्धर्वहस्तकः ॥ ४१५ ॥
एषां दशपलान् भागान् वारिद्रोणे चतुष्टये ।
क्वाथमेभिः प्रकुर्वीत चतुर्भागावशेषितम् ॥ ४१६ ॥
यष्ट्याह्वदारुकुष्टैला रास्नामांसीबलावचा ।
शताह्वा चात्मगुप्ता च चाश्वगन्धा च चन्दनम् ॥ ४१७ ॥
मञ्जुरवुकाह्वचाम्ल न्नूपणागुरुष्टविकाम् ।
सिन्धूद्भवं विदारी च प्रसारिणी शतावरी ॥ ४१८ ॥
हवदारुकातिबला विड़ङ्गसरलानि च ।
कल्कैरेतैः पलैर्भागैः स्तैलाढ़कसमायुतैः ॥ ४१९ ॥
क्षीरतुल्यसमायुक्तं शनैर्मृद्वग्निना पचेत् ।
पाने वस्तौ तथाभ्यङ्गे नस्ये भोज्ये च पूजितम् ॥ ४२० ॥
अर्दिते कर्णशूले च शिरोरोगे हनुग्रहे ।
मुखरोगेषु सर्वेषु मन्यास्तम्भेऽपबाहुके ॥ ४२१ ॥
मन्दश्रवणबाधिर्य्ये कर्णरोगातिपीनसे ।
हृद्रोगं गृध्रसीञ्चैव आमवातकटिग्रहम् ॥ ४२२ ॥
जङ्घोरुपादपृष्टेषु पार्श्वशूलमतीव च ।
अन्त्रवृद्ध्यण्डवृद्धिञ्च वातरक्तं सुदारुणम् ॥ ४२३ ॥
विश्वाचीखञ्जपंगुर्वा सर्वोरिं वातजान् हरेत् ॥ ४२४ ॥

वलीपलितखालित्यं केशानां पतनं परम्।
बलमांसकरञ्चैव शुक्रवृद्धिकरं परम् ॥ ४२५ ॥
अपत्यजननं श्रेष्ठं गर्भिणीनां परं हितम्।
इत्यश्वोष्ट्रादिव्यायामे भग्नसन्धिप्रसाधनम् ॥ ४२६ ॥
तैलमात्रोपयोगेन व्याधिर्निर्मूलतां नयेत्।
सर्वातङ्कविनाशाय वृत्रमिन्द्राशनिर्यथा।
महामाषमिदं तैलं हारीतेयेण पूजितम् ॥ ४२७ ॥

इति महामाषतैलम्।

प्रसारणीशतक्काथे तैलप्रस्थं पयः समम्।
जीवकर्षभकौ मेदे काकोल्यौ कुष्टचन्दने ॥ ४२८ ॥
शताह्वादारुमञ्जिष्ठा रास्नापिष्ठा विपाचयेत्।
वस्तिपानादिभिर्युक्तमेतन्मारुतरोगनुत् ॥ ४२९ ॥

इति शतकप्रसारणीतैलम्।

प्रसारण्यास्तुलामश्वगन्धायादशमूलतः।
तुलां तुलां पृथग्वारि द्रोणे पादांशशेषिते।
तैलाढकं चतुःक्षीरं दधितुल्यं द्विकाञ्जिकम् ॥ ४३० ॥
द्विपलैर्ग्रन्थिकक्षार प्रसारिण्यश्वसैन्धवैः।
समञ्जिष्ठाग्नियष्ट्याह्वैः पलिकैर्जीवनीयकैः ॥ ४३१ ॥
शुण्ठ्याः पञ्चपलान्दत्वा विंशद्भल्लातकानि च।
पचेदश्वादिनावातं हन्ति सन्धिशिरास्थिगम् ॥ ४३२ ॥
पुंस्त्वोत्साहस्मृतिप्रज्ञा बलवर्णाग्निवृद्धये।
प्रसारिणीयं विंशतीत्यर्थं सौवर्चलन्विह ॥ ४३३ ॥

इति विंशतीप्रसारणीतैलम्।

प्रसारणीशतं क्षुस्रं पचेत्तोयाऽर्मणे शुभे।
पादशिष्टे समं तैलं दधिदद्यात्सकाञ्जिकम् ॥ ४३४ ॥
द्विगुणञ्च पयो दत्वा कल्कान् द्विपलिकांस्तथा।
चित्रक पिप्पलीमूलं मधुकं सैन्धवं वचाम् ॥ ४३५ ॥
शतपुष्पां देवदारु रास्नां वारणपिप्पलीम्।
प्रसारिण्याश्च मूलानि मांसीभल्लातकं तथा ॥ ४३६ ॥
पचेन्मृद्वग्निनातैलं वातश्लेष्मामयान् जयेत्।
अशीतिं नरनारीणान् वातरोगान् व्यपोहति ॥ ४३७ ॥
कुब्जस्तिमितपंगुत्वं गृध्रसीखञ्जकार्दितम्।
हनुपृष्ठशिरोग्रीवा स्तम्भश्चाशु नियच्छति ॥ ४३८ ॥

इति कुब्जप्रसारणीतैलम्।

समूलपत्रामुत्पाट्य शरत्काले प्रसारिणीम्।
शतं ग्राह्यं सहचरा च्छतवर्य्याः शत तथा ॥ ४३९ ॥
वलात्मगुप्ताश्वगन्धा केतकीनां शतं शतम्।
चतुर्गुणेन तोयेन द्रवैस्तैलाढकं पचेत् ॥ ४४० ॥
मस्तुमांसरसं चुक्रं पयश्चाढकमाढकम्।
दद्यादर्क समायुक्तं पाचयेन्मृदुनाग्निना ॥ ४४१ ॥
द्रव्याणान्तु प्रदातव्या मात्रा चार्धपलाम्रिका।
तगरं चन्दनं कुष्टं केशरं मुस्तकं त्वचम् ॥ ४४२ ॥
रास्नासैन्धवपिप्पल्यो मांसीमञ्जिष्टयष्टिका।
जीवकर्षभकौ मेदा महामेदा तथा पुनः ॥ ४४३ ॥
शतपुष्पा व्याघ्रनखं शुण्ठीदेवाह्नमेव च।
काकोलीक्षीरकाकोल्यौ वचाभल्लातकं तथा ॥ ४४४ ॥
पेषयित्वा समानेतान् साधनीया प्रसारणी।
नातिपक्कं नातिहीनं सिद्धपूतं निधापयेत् ॥ ४४५ ॥

यत्र यत्र प्रदातव्यं तन्मे निगदतः शृणु ।
कुब्जानामथ पङ्गूनां वामनानां तथैव च ॥ ४४६ ॥
यस्य शुष्यति चैकाङ्गं ये च भग्नास्थिसन्धयः ॥ ४४७ ॥
वातशोणितदुष्टानां शातोपहतचेतसाम् ।
श्लीपदक्षीणशुक्रानां वाजीकरणमुत्तमम् ॥ ४४८ ॥
पाने बस्तौ तथाभ्यङ्गे नस्ये चैव प्रदापयेत् ।
प्रयुक्तं शमयत्याशु वातजान् विविधान् गदान् ॥ ४४९ ॥

इति सप्तशतिका महाप्रसारणीतैलम् ।

प्रसारणीपलशतं गुडूचीसहचरं बला ।
एरण्डमश्वगन्धा च दशमूलीशतावरी ॥ ४५० ॥
कुट्टयित्वा पलशतं साधयेत् सलिलार्मणे ।
चतुर्भागावशेषञ्च कषायमवतारयेत् ॥ ४५१ ॥
तैलं मांसरसं क्षीरं दधिशुक्तं तथैव च ।
एतानि समभागानि द्विगुणं चाम्लकाञ्जिकम् ॥ ४५२ ॥
कल्के पेष्याणि भागानि तानीमानि प्रदापयेत् ।
नागरातिविषामुस्तं शठी चैलांशुपञ्चकम् ॥ ४५३ ॥
धन्वनं तगरं कुष्टं पुष्कराह्वं ससैन्धवम् ।
त्र्यूषणं कटुकं क्षारं मञ्जिष्ठाकटुकागुरु ॥ ४५४ ॥
शताह्वापिप्पलीमूलं मांसीचन्दनमेव च ।
प्रसारणीमूलमपि जीवनीयानि यानि च ॥ ४५५ ॥
एतैस्तु पलिकैर्भागैः सोऽलपाये विपाचयेत् ।
भग्नं वा वातसंभग्नं गजं वा जर्जरीकृतम् ॥ ४५६ ॥
एकाङ्गं पयपुं कम्पमपतानकमेव च ।
इत्यादीतान् गदान् सर्वान् मयल्पेया प्रसारणी ॥

बलवर्णकरी ह्येषा नित्यमात्रेयपूजिता ॥ ४५७ ॥

इति महाप्रसारणीतैलम् ।

समूलपत्रशाखायाः प्रसारण्याः शतत्रयम् ।
सहचरस्य शतं द्वे च शतावर्य्यश्वगन्धयोः ॥ ४५८ ॥
गुडूच्येरण्डमूलानां वानरीत्तुरकस्य च ।
पुनर्नवायाः केतक्याः पञ्चमूलद्वयस्य च ॥ ४५९ ॥
त्रिफलाचित्रकं बिल्वं बलातिबलयोरपि ।
शिरीषमूलं पञ्चाश द्राक्षादारुतदंशिके ॥ ४६० ॥
सर्वमेतत् सुसंक्षुद्य कटाहे समधिक्षिपेत् ।
वारिद्रोणे शते क्वाथ्यं दशभागस्थितेन वै ॥ ४६१ ॥
व्यक्ताम्लेनारनालेन द्रोणद्वययुतेन च ।
मस्तुक्षीरेक्षुनिर्यासं छागमांसरसैस्तथा ॥ ४६२ ॥
आढ़काढ़कसंयुक्तं तथा शुक्ताढ़केन च ।
तेन द्रोणसमायुक्तं दृढे भाण्डे निधापयेत् ॥ ४६३ ॥
द्रव्याणि यानि पेयाणि तानि वक्ष्याम्यतः शृणु ।
भल्लातकं नतं शुण्ठि क्षणाश्वत्थभयावचा ॥ ४६४ ॥
बलाप्रसारिणी चैव कणामूलन्तु चोरकम् ।
लवङ्गं शतपुष्पा च सूक्ष्मैलात्वक् च बालकम् ॥ ४६५ ॥
कुष्टं व्याघ्रनखं मांसी सैन्धवं मदनं वचा ।
कस्तूर्य्यगुरुमञ्जिष्टा तुरुष्कनखकुङ्कुमम् ॥ ५६६ ॥
तुम्बुरं चन्दनं पूति कङ्कोलं त्रिसुगन्धिकम् ।
पद्मकोत्पलकालीय दार्व्यग्निसितचन्दनम् ॥ ४६७ ॥
शठीरेणुकशैलेय श्रीवासं कंडुरं नलम् ।
जातीकोषं वरी भीरु सरलं पद्मकेसरम् ॥ ४६८ ॥
प्रियंगूशीरतगरं नलिकाजीवनं गणम् ।

लवङ्गं नागपुष्पञ्च तथा कर्पूरमञ्जनम् ॥ ४६८ ॥
कटुकापूगजातीनां फलानि ताडिकीफलम् ।
भागांस्त्रिपलिकान् कृत्वा शनैर्मृद्वग्निना पचेत् ॥ ४७० ॥
इष्टवर्गरसस्पर्शं गंधेनापि समन्वितम् ।
स्वभागशेषं तत्सिद्धं तत्तु गुप्तं निधापयेत् ॥ ४७१ ॥
पानाभ्यङ्गे तथा नस्ये निरूहे चानुवासने ।
एतद्धि वडवाश्वानां किशोराणां यथामृतम् ॥ ४७२ ॥
एतदेव कुमाराणां कुञ्जराणां गवामपि ।
वृद्धोप्येतन्नरः पीत्वा पुनश्च तरुणो भवेत् ॥ ४७३ ॥
एतेनैव च तैलेन शुष्यमाणा महाद्रुमाः ।
मूले सिक्ताः प्ररोहन्ति घनालक्तदपल्लवाः ॥ ४७४ ॥
अप्रसूता च या नारी सम्यक् पीत्वा प्रसूयते ।
अप्रजः पुरुषो यश्च सोऽपि पीत्वा सुतं लभेत् ॥ ४७५ ॥
अशीतिर्वातजान् रोगां चत्वारिंशच्च पैत्तिकान् ।
विंशतिः श्लैष्मिकांश्चापि संसृष्टान् सान्निपातिकान् ॥ ४७६ ॥
क्षिप्रं विनाशयत्येव तैलमेतत् प्रयोजितम् ।
पूर्वस्माद्विशिष्टतरं गन्धहस्तीति लक्षणम् ॥ ४७७ ॥

इति गन्धहस्तीप्रसारिणीतैलम् ।

समूलपत्रशाखायाः प्रसारण्याः शतत्रयम् ।
शतमेकं शतावर्या अश्वगन्धाशतं तथा ॥ ४७८ ॥
केतकीनां शतञ्चैकं दशमूलाच्छतं शतम् ।
शतं बाट्यालकस्यापि शतं सहचरस्य च ॥ ४७९ ॥
जलद्रोणशतं दत्वा शतभागावशेषितम् ।
ततस्तेन कषायेण कषायद्विगुणेन च ॥ ४८० ॥
सुश्यक्तेनारनालेन दधिमस्त्वाढकेन च ।

क्षीरशुक्तेक्षुनिर्यासैः छागमांसरसेन च ॥ ४८१ ॥
तैलं द्रोणसमायुक्तं दृढे भांडे निधापयेत्।
द्रव्याणि यानि पेष्याणि तानि वक्ष्याम्यतः शृणु ॥ ४८२ ॥
भल्लातकं नतं शुण्ठी चित्रकं पिप्पलीशठी।
वचास्पृक्काप्रसारिण्यः पिप्पलीमूलमेव च ॥ ४८३ ॥
देवदारुशताह्वा च सूक्ष्मैलात्वक् च वालकम्।
कुष्टं व्याघ्रनखं मांसी वीरचन्दनशारिवाः ॥ ४८४ ॥
कस्तूर्यगुरुमञ्जिष्टा तुरुष्कनखकुङ्कुमम्।
कर्पूरकन्दुरुनिशालवङ्गध्यामसैंधवम् ॥ ४८५ ॥
कङ्कोलनलिकामुस्ता कालीयोत्पलपद्मकम्।
शठीहरेणुशैलेय श्रीवासश्च कशेरुकम् ॥ ४८६ ॥
त्रिफलाकच्छुराभीरु सरलापद्मकेसरम्।
प्रियंगुशीरजलदं जीवकाद्यं पुनर्नवा ॥ ४८७ ॥
दशमूलाश्वगंधा च नागपुष्पं रसांजनम्।
कटुकाजातिपूगानां फलानि सल्लकीरसम् ॥ ४८८ ॥
भागांस्त्रिपलिकान् दत्वा शनैर्मृदग्निना पचेत्।
आयसे वाथ ताम्रे वा सुदृढे मृन्मयेऽपि वा ॥ ४८९ ॥
प्रयोगः षड्विधश्चापि रोगार्त्तानां विधीयते।
अभ्यङ्गात्त्वग्गतं हन्ति पानात्कोष्टगतं तथा ॥ ४९० ॥
भोजनात् सूक्ष्मनाड़ीस्था न्स्यादूर्ध्वगतांस्तथा।
आमाशयगते वस्ति निरूहः सर्वकायिके ॥ ४९१ ॥
एतद्धि वड़वाश्वानां किशोराणां यथामृतम्।
एतदेव मनुष्याणां कुञ्जराणां गवामपि ॥ ४९२ ॥
अनेनैव च तैलेन शुष्यमाणा महाद्रुमाः।
सिक्ताः पुनः प्ररोहन्ति भवन्ति फलशालिनः ॥ ४९३ ॥

वृद्धोऽप्यनेन पीतेन पुनश्च तरुणो भवेत्।
अप्रसूता च या नारी सा पीत्वाऽपि प्रसूयते ॥ ४८४ ॥
अप्रजः पुरुषो यश्च सोऽपि पीत्वा लभेत् सुतम्।
अशीतिं वातजान् रोगान् पैत्तिकान् श्लैष्मिकानपि ॥ ४८५ ॥
सन्निपातसमुत्थांश्च नाशयेत् क्षिप्रमेव च।
एतेनांधकवृष्णीनां कृतं पुंसवनं महत् ॥
पुष्टिवर्णबलस्थाग्र्य तैलमेतत्प्रदापयेत् ॥ ४८६ ॥

इत्यष्टादशशतकं प्रसारणीतैलम्।

शरत्सुसंपक्वसुजातसारं प्रसारणीमूलशतं विशुद्धम्।
दशैव मूलानि बलाश्वगंधा शतावरीसाहचरं श्वदंष्ट्रा ॥ ४८७ ॥
रास्नात्मगुप्तामृतहंसिकानां
शतं शतश्चापि सुकुट्टितश्च।
पृथक् पृथक् त्वाढ़कसमितानां
कुलुत्थकोलांश्च यवांश्च दद्यात् ॥४८८॥
द्रोणैस्तु षड्भिर्विपचेज्जलस्य द्रोणावशेषे विपचेद्धि तत्र।
तैलाढकं मांसरसाढ़कञ्च दध्याढकं क्षीरचतुर्गुणञ्च ॥४८९॥
शुक्ताढ़कं मूलरसाढ़कञ्च मस्त्वाढकञ्चाढ़ककाञ्जिकञ्च।
द्रव्यैः समैरर्द्धपलांशिकैश्च सुसूक्ष्मपिष्टैर्दृषदि प्रयत्नात् ॥५००॥
रास्नामृताह्वाऽगुरुदारुयुक्तं मञ्जिष्टयष्टीमधुकं नताब्दम्।
मांसीवचामैन्धवचित्रकञ्च क्षारं यवानां सरलं कृमिघ्नम्॥५०१॥
चारुष्करं पुष्करमूलकुष्टं सपिप्पली पिप्पलीमूलचव्यम्।
मेदायुगञ्चार्षभका शुभौ च काकोल्युिगमं मरिचं त्वगेलम् ॥५०२
शृङ्गीशठीव्याघ्रनखं सचोचं पृक्कागजाह्वामदनं सशष्ठी।

स्कैशरं चन्दनपत्र चोरं त्रिकण्टश्रृङ्गाटककोलकञ्च ॥ ५०३ ॥

ऋद्धिं सवृद्धिं रजनीमृणालं
यवान्यजाजीत्वजमोदकञ्च ।
पल्लाशतन्तानऽधिकांश्चतुर्भि:
र्भिन्ना विपाच्यं मृदुनाग्निना च ॥५०४॥
सपूज्यविप्रान् भिषजोऽवतार्य
शान्तिं तथा स्वस्थवधार्यकुम्भे ।
भिन्ना च संपूज्यगृहे सुगुप्ते
तत् स्थापयेत्तैलवरं प्रयत्नात् ॥ ५०५ ॥
यान्यान्विकारान्विनिहन्ति युक्तं
नियुज्यते यत्र यथा निबोधमे ।
ये पङ्गव. पीठविसर्पिणश्च
सङ्कोचितस्नायुशिराश्च कुब्जाः ॥ ५०६ ॥
गतिप्रणष्टाविनताश्च खञ्जाः
सन्ध्यस्थि संपीडितभग्नगात्राः ।
मन्यासुपृष्टे भुजकण्ठकट्यां
स्तम्भ न्टणां मारुतजं निहन्ति ॥ ५०७ ॥
एकाङ्ग सर्वाङ्गजमप्यशेषं
वात जयेदर्दितशोथकंडू ।
स्तम्भं जयेद्यापक्रताभिधानं
बाह्यान्तरायामहनुग्रहञ्च ॥ ५०८ ॥
ये वातसंग्राह्यतिजर्जिताङ्गा-
विश्लिष्टजान्वस्थिकटीकपालाः ।
सन्धिच्युता. स्तब्धतमः शिराश्च
भवन्ति सर्वेऽपि पुनर्नवास्ते ॥ ५०८ ॥

स्नायुस्थिसन्ध्यूरुगवातशूलं
शिरोभवं गात्रभवं निहन्ति ।
कर्णायथार्थप्रभवञ्च शूलं
सर्वाङ्गमेकाङ्गगमाशु हन्ति ॥ ५१० ॥
स्त्रीणाञ्च योन्युद्भववस्तिशूलं
क्रुद्धेन वातेन च रक्तजञ्च ।
पुंसाञ्च शुक्रचयमागते च
शूलं तथा मेढ्रगतं निहन्ति ॥ ५११ ॥
क्षीणेन्द्रिया ये विकलाश्च गद्गदाः
स्मृत्याविहीनाः पुनरुक्तवाचः ।
निरुद्धवाचस्त्वथकश्मलाये
स्त्रियश्च याः स्युः प्रजयाविहीनाः ॥ ५१२ ॥
दुष्टेन्द्रिया ये पुरुषाश्च तेषां
प्रसारणी चैव हिताक्रियासु ।
विशोधयेदार्त्तवशुक्रदोषान्
प्रजाकरीस्यात् स्मृतिदाप्रदिष्टा ॥ ५१३ ॥
प्रत्याध्मानाध्मानमाह्वार्त्तिकोष्टं
जृम्भोद्गारं कर्णनादं घतञ्च ।
वातोन्मादं वातजापस्मृतिञ्च
शाखावातं स्वेधर्मौ चापि हन्ति ॥ ५१४ ॥
रोगान् जयेद्वातभवानशीतिं
मिश्रांस्तथा वातकफोद्भवांश्च ।
सेवन्ति ये शूलजितां प्रसारणी-
मभ्यङ्गपानाशननस्य वस्तिभिः ॥ ५१५ ॥
भवन्ति ते चाप्यजिताः सदामयैर्विष्णुर्यथाऽभूदजितः सुरारिभिः॥

अजितानामतः ख्याता वातरोगैर्न जीयते।
क्षीणजर्जरिताङ्गानां वातसङ्कोचितात्मनाम् ॥ ५१७ ॥
प्रसारयति चाङ्गानि तेन प्रोक्ता प्रसारणी।
अभ्यंगैस्त्वग्गतं हन्ति पाने नाड़ीगतं तथा ॥ ५१८ ॥
भोजनेन तु कोष्ठस्था नस्ये नोर्ध्वगतान् गदान्।
अधोगान्वस्तिदानेन सर्वान् हन्ति प्रसारणी ॥ ५१९ ॥

सकलभुवनरोगानुग्रवीर्य्यान्निहन्ति
प्रतिहतविषमाग्नीरूपर्स पक्वभावः।
उपचितसमगात्र. कान्तिलावण्ययुक्तो
भवति च बलवान् वा जाठरेऽग्नौ प्रदीप्ते ॥ ५२० ॥

तुरगजवसमं स्याद् गृध्रदृष्टिर्वपुष्मान्।
श्रुतिमयूरसमं स्या द्वारयेत् विश्रुतञ्च ॥
स्मृतिमतिधृतियुक्तः स्पष्टवाक् स्पष्टचित्त.।
स्फुरपटुगुणयुक्तः शुद्धशुक्रः प्रजावान् ॥ ५२१ ॥
विषगदविनिहन्ता यद्वदेवादरः स्यात्।
पवनगदनिहन्ता तद्वदेवाशु दृष्टिः ॥
अमृतमिव सुराणां नागराजं सुधेव।
भवति च पुरुषाणां तद्वदेतद्धि तैलम् ॥ ५२२ ॥
प्रसारण्यश्वगन्धा च नागराख्या बला तथा।
नित्यमार्द्रप्रयोक्तव्या भागतो द्विगुणा मता ॥ ५२३ ॥

इत्यजितप्रसारणीतैलम्।

रसोनकल्कस्वरसेन सिद्धं तैलं पिबेद्यस्त्वनिलामयार्त्तः।
तस्याशु नश्यन्ति च वातरोगाग्रन्था विशाला इव दुर्गृहीता.॥५२॥

इति रसोनतैलम्।

बालमूलकमापोथ्य तैलं दध्यम्लकाञ्जिकम् ।
चोरश्चैवाढ़कं दद्यात्पचेत्कल्कैः पलोन्मितैः ॥ ५२५ ॥
रास्नाभल्लातकं शिग्रु सैन्धवं गजपिप्पली ।
बला चातिबलाशुण्ठी पिप्पलीचित्रकं वचा ॥ ५२६ ॥
श्वदंष्ट्रा चेति तत्पक्वं वातश्लेष्मामयापहम् ।
ब्रध्नाष्ठीलार्दितं गुल्मं खञ्जं वै सापतानकम् ॥ ५२७ ॥
कण्ठूरुस्तम्भनं शोथं पर्वस्तम्भप्रकम्पनम् ।
हन्याद् गुल्मञ्च वातोत्थं बलवर्णाग्निवर्धनम् ॥
वन्ध्यानां पुत्रदश्चैव तैलमूलकसाह्वयम् ॥ ५२८ ॥

इति मूलकाद्य तैलम् ।

दशमूलं बलारास्ना चाश्वगन्धापुनर्नवा ।
गुडूच्येरण्डपूतीकभार्गीवृषकरोहिषम् ॥ ५२९ ॥
शतावरीसहचरकाकनासापलोन्मिता ।
यवमाषातसीकोल कुलत्थाः प्रसृतोन्मिताः ॥ ५३० ॥
चतुर्द्रोणेऽम्भसः पक्ता द्रोणशेषेण तेन तु ।
तैलाढकं समचीरं जीवनीयैः पचेच्छनैः ॥ ५३१ ॥
अनुवासनमेतद्धि सर्ववातविकारनुत् ।

इति दशमूलाद्यं तैलम् ।

शतं पक्वाश्वगन्धाया जलद्रोणेऽंशशेषितम् ।
विस्राव्यविपचेत्तैलं चीरं दत्वा चतुर्गुणम् ॥ ५३१ ॥
कल्कैर्मृणालशालूक विशकिञ्जल्कमालती ।
पुष्पैर्ह्रीवेरमधुक शारिवा पद्मकेसरैः ॥ ५३३ ॥
मेदापुनर्नवाद्राक्षा मञ्जिष्ठाहस्तीद्वयैः ।
एलेन्वालुत्रिफला सैस्तचन्दनपद्मकैः ॥ ५३४ ॥

पक्कं रक्ताश्रयं वातं रक्तपित्तमसृग्दरम्।
हन्यात्पुष्टिबलं कुर्य्यात् कृशानां मांसवर्धनम्॥ ५३५॥
रेतो योनिविकारघ्नं व्रणशोथापकर्षणम्।
खण्डानपि वृषान् कुर्य्यात् पानाभ्यंगानुवासनैः॥ ५३६॥

इत्यश्वगन्धाद्यं तैलम्।

शतावरीरसप्रस्थं क्षीरप्रस्थसमन्वितम्।
तैलप्रस्थं प्रचेदेभिः समस्तैर्गोमयाग्निना॥ ५३७॥
शतावरी सांशुमती पृष्टपर्णीबलाद्वयम्।
अश्वगन्धा च बिल्वञ्च श्वदंष्ट्रा पौड्रकं तथा॥ ५३८॥
निष्क्वाथ्यमूलमेतेषां तस्मिंस्तैले विनिक्षिपेत्।
शतपुष्पादेवदारु मांसी शैलेयकं बला॥ ५३९॥
चन्दनं तगरं कुष्ठ मेलाचांशुमती वचा।
वृद्धिजीवककाकोलि मेदामधुकमुत्पलम्॥ ५४०॥
सर्वमेतत्समाहृत्य कल्कै रचसमन्वितैः।
पाने वस्तौ तथाऽभ्यङ्गे नस्ये चैव प्रदापयेत्॥ ५४१॥
अङ्गशूलं शिरःशूलं मेहदण्डापतानकम्।
वातरक्तं सदाहञ्च वातपित्तार्दितं गदम्॥ ५४२॥
शोथपाण्ड्वामयप्लीह कामलागरगृध्रसीः।
योनिशूलमसृग्दोष माध्मानं विनिहन्ति च॥ ५४३॥
क्षीणशुक्रौजसां पुंसां शस्तं वन्ध्यासुतप्रदम्।
शतावरीतैलमिदं कृष्णात्रेयेण पूजितम्॥ ५४४॥

इति शतावरीतैलम्।

सर्पिस्तैलवसामज्जा पानाभ्यञ्जनवस्तयः।
स्वेदोऽग्निनानिवातञ्च स्थानं प्रावरणानि च॥ ५४५॥

रसः पयांसिभोज्यानि स्वाद्वम्ललवणानि च ।
द्रंहणं यच्च तत्सर्वं प्रशस्तं वातरोगिणाम् ॥ ५४६ ॥

—०—

## अथ निदानम् ।

हनुस्तम्भार्दिताक्षेप पक्षघातापतानकाः ।
कालेन महताबाता यत्नात्सिध्यन्ति वा न वा ॥ ५४७ ॥
नवान् बलवतश्चैतान् साधयेन्निरुपद्रवान् ॥ ५४८ ॥
विसर्पदाहरुक्सङ्ग मूर्च्छारुच्यग्निमार्दवैः ।
क्षीणमांसबलं बाता घ्नन्तः पक्षवधादयः ॥ ५४९ ॥
क्षीणं सुप्तत्वच भग्नं कम्पाध्मानिनिपीडितम् ।
रुजार्त्तिमन्तञ्च नरं वातव्याधिर्विनाशयेत् ॥ ५५० ॥
अव्याहतगतिर्यस्य स्थानस्थः प्रकृतिस्थितः ।
वायुः स्यात्सोऽधिकं जीवे द्वीनरोगः समा. शतम् ॥ ५५१ ॥

—०—

## अथार्दितनिदानमाह ।

उच्चैर्व्याहरतोऽत्यर्थं खादतः कठिनानि च ।
हसतो जृम्भतो भारा द्विषमाच्छयनासनात् ॥ ५५२ ॥
शिरोनासौष्टचिवुक ललाटे क्षणसन्धिग. ।
अर्दयत्यनिलो वक्त्र मर्दितं जनयत्यत: ॥ ५५३ ॥
वक्री भवति वक्त्रार्द्धं ग्रीवाश्चाप्यपवर्त्तते ।
शिरश्चलति वाक्सङ्गो नेत्रादीनाञ्च वैकृतम् ॥ ५५४ ॥
ग्रीवाचिबुकदन्तानां तस्मिन्पार्श्वे च वेदना ।
तमर्दितमिति प्राहुर्व्याधिं व्याधिविचक्षणाः ॥ ५५५ ॥

वातात्पित्तात्कफाच्च स्या त्रिविधः सः समासतः।
लालास्रावो व्यथाकम्पः स्फुरणं वाग्घनुग्रहः।
ओष्ठयोः श्वयथुः शूल मर्दिते वातजे भवेत् ॥ ५५६ ॥
पीतमास्यं ज्वरस्तृष्णा पित्तजे मोहधूपने।
गण्डे शिरसि मन्यायां शोफः स्तम्भः कफात्मके ॥ ५५७ ॥
भाविनो लक्षणं तस्य वेपथुर्नेत्रमाविलम् ॥ ५५८ ॥
क्षीणस्याऽनिमिषाक्षस्य प्रशस्ताव्यक्तभाषिणः।
न सिध्यत्यर्दितं गाढं त्रिवर्षं वेपनस्य च ॥ ५५८ ॥

—०—

## अथ चिकित्सामाह।

स्नेहपानानि नस्यञ्च भोज्यान्यनिलहानि च।
उपनाहाश्च शस्यन्ते स्वेदनं क्स्तयो हिताः ॥ ५६० ॥
दशमूलीकषायेण मातुलुङ्गरसेन च।
बलायाः पञ्चमूल्या वा क्षीरं वातात्मके हितम् ॥ ५६१ ॥
माषपिष्टकृतं जग्ध्वा नवनीतेन सोऽर्दिती।
क्षीरं मांसरसैर्भुक्त्वा दशमूलीरसं पिबेत् ॥ ५६२ ॥
वस्त्रावभ्यंगनस्ये च स्वेदयेत्तत्परः पुमान्।
पिबेदुपरिभुक्त्वाज्य मर्दितं सव्यपोहति ॥ ५६३ ॥
अर्दिते पित्तजे शीतान् स्नेहांश्चैव विनिर्दिशेत्।
घृतवस्तिप्रसेकञ्च क्षीरसेकन्तथैव च ॥ ५६४ ॥
जिह्मीभूताननोमूको दाहवान्योऽर्दितो भवेत्।
कुर्य्यात्प्रतिक्रियां तस्य वातपित्तविनाशिनीम् ॥ ५६५ ॥
शिरसो रेचनं कार्य्यं द्रव्यैः पित्तहरैस्तथा।
सतीक्ष्णनस्यपानेन पुराणस्यैव सर्पिषः ॥ ५६६ ॥

श्लेष्मभागे क्षयं नीते हृद्यैस्तमुपाचरेत् ।
अर्दिते शोथसंयुक्ते वमनं सम्प्रशस्यते ॥ ५६७ ॥
दाहेन च समायुक्ते शिरसारक्तमोक्षणम् ॥ ५६८ ॥
रसोनकल्कं तिलतैलमिश्रं खादेन्नरो योऽर्दितरोगयुक्तः ।
तस्यार्दितं नाशमुपैति शीघ्रं वृन्दं घनानामिव वायुवेगात् ॥५६९॥
दशमूलीरसक्षीरं जीवनीयविपाचितम् ।
तैलं हन्त्यर्दितं नस्यं पानाभ्यङ्गानुवासनैः ॥ ५७० ॥

इति दशमूलाद्यं तैलम् ।

—०—

सवणमहापञ्चमूलमाहृत्य । द्विगुणोदके क्षीरे निष्क्वाथ । क्षीरावशिष्टमवतार्य । विस्राव्यतैलप्रस्थेन सहोन्मिश्य । पुनरस्मावधिश्रृत्य । विपाचयेत्, ततस्तैलानुगतमवतार्य, शीतीभूतमश्नीयात्, तदेतत् क्षीरतैलमर्दितानां पानादिषु प्रयोज्यम् । इति क्षीर तैलम ।

—०—

वातव्याधिविधानमिहकुर्य्याद्विचक्षण ।

—०—

## अथ गृध्रसीनिदानम् ।

स्फिक्पायूरुकटीपृष्ठ जानुजङ्घापदं क्रमात् ।
गृध्रसीस्तम्भरुक् तोदैः गृह्णातिस्पन्दते मुहुः ।
वाताद्वातकफाभ्यां विज्ञेया साद्विधा पुनः ॥ ५७१ ॥
वातजायां भवे तोदो देहस्यातीव वक्रता ।
जानुजङ्घोरुसन्धीनां स्फुरणं स्तब्धताभृशम् ॥ ५७२ ॥

वातश्लेष्मोद्भवायान्तु स्तैमित्यं वह्निमार्दवम्।
तन्द्रा मुखप्रसेकश्च भक्तद्वेषस्तथैव च ॥ ४७३ ॥

—०—

## अथ चिकित्सामाह।

सर्वथाकर्षणं दुष्टा दृष्टदीपनपाचनम्।
तप्ततैलेष्टकास्वेद मर्दनं चोपनाहनम् ॥ ५७४ ॥
गृध्रस्यानन्तरं सम्यक् रेकेन वमनेन वा।
ज्ञात्वा निरामदीप्ताग्निं वस्तिभिः समुपाचरेत् ॥ ५७५ ॥
नादौ वस्ति विधिं कुर्य्यात् यावदूर्ध्वं न गृह्णाति।
स्नेहो निरर्थकस्तस्य भस्मन्येव हुतं यथा ॥ ५७६ ॥
दशमूलीबलारास्ना गुडूचीविश्वभेषजम्।
पिबेदेरण्डतैलेन गृध्रसीखञ्जपंगुषु ॥ ५७७ ॥

इति रास्नादशमूलम्।

पञ्चमूलीकषायन्तु सुखोष्णं त्रिवृतायुतम्।
गृध्रसीं गुल्मशूलञ्च सद्यः पीतं नियच्छति ॥ ५७८ ॥
द्विविस्थानेषु गृध्रस्यां शिरां प्रच्छन्नवेधिताम्।
गुञ्जाकल्केन लिप्ता च सद्यस्त्यजति वेदनाम् ॥ ५७९ ॥

—०—

यद्येवं तथापि ग्रन्थान्तरमवलोकनीयम्।

—०—

तैलमेरण्डजं वापि गोमूत्रेण पिबेन्नरः।
मासमेकं प्रयोगोऽयं गृध्रस्यूरुग्रहापहः ॥ ५८० ॥
तैल घृतं सार्द्रकमातुलुङ्गं रसं सचुक्रं सगुडं पिबेद्वा।

कट्यूरुपृष्ठत्रिकगुल्मशूलं गृध्रसुदावर्त्तहरः प्रयोगः ॥ ५८१ ॥
विशोध्यैरण्डबीजानि पिष्ट्वा क्षीरे विपाचयेत् ।
तत्पायसं कटीशूले गृध्रस्यां परमौषधम् ॥ ५८२ ॥
पञ्चमूलीकषायन्तूरुबुतैलत्रिवृद्युतम् ।
गृध्रसीगुल्मशूलञ्च पीतं सद्यो नियच्छति ॥ ५८३ ॥
मेषशृङ्गीविडङ्गानि खदङ्गा चाश्वगन्धजम् ।
एरण्डमूलबिल्वञ्च बृहतीकण्टकारिका ॥ ५८४ ॥
कषायोरुबुकोपेतः पीतो वंक्षणबस्तिजम् ।
शूलं गृध्रसीजं हन्ति चिरकालानुबन्धि वा ॥ ५८५ ॥
गोमूत्रैरण्डतैलाभ्यां कृष्णा पीतासुचूर्णिता ।
दीर्घकालोत्थितां हन्ति गृध्रसीं कफवातजाम् ॥ ५८६ ॥
सिंहास्यगुण्ठीकृतमालकानां पिबेत्कषायं रुबुतैलमिश्रम् ।
यो गृध्रसीनष्टगतिश्च सुप्तः सवीतरुक् स्यात्तु किमत्र चित्रम् ॥५८७
अश्नाति यो नरः सिद्धामेरण्डफलमिश्रिताम् ।
यवागूं गृध्रसीखिन्नः पूर्वामाप्नोत्यसौ गतिम् ॥ ५८८ ॥
वृहद्विम्बतरोर्मूलं वारिणा परिपेषितम् ।
पीतः तन्नाशयेत् क्षिप्र मसाध्यामपि गृध्रसीम् ॥ ५८९ ॥
शेफालिकादलैः क्वाथो मृद्वग्निपरिपाचितः ।
दुर्वारं गृध्रसीरोगं पीतमात्रय संहरेत् ॥ ५९० ॥
तगरस्य शिफां सार्धं पिष्ट्वा तक्रेण यः पिबेत् ।
रिङ्गणानिलरोगस्तु तत्क्षणादेव नश्यति ॥ ५९१ ॥
शुण्ठीगन्धर्वबीजाभ्यां पिष्टाभ्यां पायसं पचेत् ।
संचितं तत्कटीशूलं गृध्रसीं हन्त्यसंशयः ॥ ५९२ ॥
यापनादिक्रियायोगैर्यदि शान्तिं न याति सा ।
सदा कर्तव्यमेतत्तु व्यधनादिचिकित्सकैः ॥ ५९३ ॥

ग्टध्रस्यार्त्तस्य जङ्घायां स्नेहस्वेदे कृते भिषक्।
पद्भ्यां समर्दितायाश्च सूक्ष्ममार्गेण गृध्रसीम्॥ ५८४॥
अवतार्य्याङ्गुली सम्यक् कनिष्ठायां शनैः शनैः।
ज्ञात्वा समुद्गतां ग्रन्थिं कण्डरायां व्यधेच्छिराम्॥ ५८५॥
तां शस्त्रेण विदार्य्याशु सबालांकुरसन्निभाम्।
समुद्धृत्याग्निनादग्ध्वा लिम्पेद्यष्ट्याह्वचन्दनैः॥ ५८६॥
विध्याच्छिरामेव वस्ते रधस्ताच्चतुरंगुले।
यदि नोपशमं गच्छे द्दहेत्पादकनिष्ठिकाम्॥ ५८७॥

—०—

रास्नायास्तु पलञ्चैकं पञ्चकर्षाणि गुग्गुलोः।
सर्पिषावटिकां कृत्वा खादेद्वा गृध्रसीहराम्॥ ५८८॥

इति रास्नादिगुग्गुलुः।

पथ्याविभीतामलकी फलानां शतं क्रमेण द्विगुणाभिवृद्धम्।
प्रस्थेन युताश्च पलं कषाणां द्रोणे जले सस्थितमेकरात्रम्॥ ५८८॥
अर्द्धावशेषं क्वथितं कषायं भाण्डे पचेत्तत्पुनरेव लौहे।
अमूनिपश्चादवतार्य्यदद्याद्रव्याणि संचूर्ण्यपलार्द्धकानि॥ ६००॥
विडङ्गदन्तीत्रिफलागुडूचीकृष्णात्रिवृन्नागरकोषणानि।
यथेष्टचेष्टस्य नरस्य शीघ्रं हिमाम्बुपानानि च भोजनानि॥ ६०१॥

निषेव्यमाणो विनिहन्ति रोगां-
स्तद्व्याधितान् ग्टध्रसि खञ्जितांश्च।
प्लीहानमुग्रं जठराणि गुल्मं
पाण्डुत्व कण्डूमपि वातरक्तम्॥ ६०२॥
पथ्याह्वयो गुग्गुलुरेष नाम्ना
ख्यात क्षितौ चाप्रमितप्रभावः।

बलेन नागेन्द्रबलं मनुष्यं
जवेन कुर्य्याद्धयतुल्यवेगम् ॥ ६०३ ॥
आयुः प्रकर्षं विदधाति सद्यः
चक्षुर्बलं पुष्टिकरो विपन्नः ।
चतस्य सन्धानकरो विशेषा-
द्रोगेषु शस्तः सकलेषु चैव ॥ ६०४ ॥

इति पथ्याद्यो गुग्गुलुः ।

पचेद्घृताढ़कं क्वाथे लशुनस्याढ़कोद्भवे ।
कर्षे चव्याग्निकृष्णानां पलिके विश्वहिंगुनी ॥ ६०५ ॥
लवणांश्च पृथक् पिष्ट्वा पलार्द्धं चाम्लवेतसम् ।
गृध्रसीवातरुग्गुल्म पचाघातनिवारणम् ॥ ६०६ ॥

इति लशुनाद्यं घृतम् ।

वाजिगन्धाबलाविल्व दशमूलाम्बु साधितम् ।
गृध्रस्यां तैलमैरण्डं परं बस्तौ प्रयोजयेत् ॥ ६०७ ॥

इत्यश्वगन्धाद्यं तैलम् ।

शिंशिपात्वक् तुलां क्षुण्णां जलद्रोणद्वये पचेत् ।
अष्टभागावशिष्टञ्च पूतं लेह्यञ्च कारयेत् ॥ ६०८ ॥
पायसं सद्वविष्याचं तत्कर्षेण च मिश्रितम् ।
भक्षयेदेकविंशाहं गृध्रसीनाशनं परम् ॥ ६०९ ॥
द्वे पले सैन्धवात्पञ्च शुण्ठ्याग्रन्थिकचित्रकात् ।
द्वे द्वे भल्लातकास्थीनि विंशतिर्द्वे तथाढ़के ॥ ६१० ॥
आरणालात्पचेत्प्रस्थं तैलस्यैरण्डजस्य च ।
गृध्रस्यूरुग्रहार्शांस्यपि सर्ववातविकारनुत् ॥ ६११ ॥

इति सैन्धवाद्यं तैलम् ।

स्वदंष्ट्रा स्वरसं तैलं चीराढ़कसमन्वितम्।
शृङ्गवेरपलान्पञ्च विंशद्गुड़पलानि च ॥ ६१२ ॥
सिद्दमेकत्र तत्तैलं शस्यं पादकम्पने।
कटीपृष्ठग्रहे शोथे शस्तं वातविकारिणाम् ॥ ६१३ ॥
वन्ध्यानां गर्भजननं रेतो दोषापकर्षणम्।
बस्तौ पाने हितञ्चैव विशेषात् मूत्रकृच्छ्रिणाम् ॥ ६१४ ॥

## इति वङ्गसेने वातव्याधिनिदानचिकित्साधिकारः समाप्तः ॥ २४ ॥

—०—

## अथ वातरक्तनिदानमाह।

लवणाम्लमधुचारस्निग्धोष्णाजीर्णभोजनैः।
क्लिन्नशुष्कांबुजानूपमांसपिण्याकमूलकैः ॥ १ ॥
कुलित्थमाषनिष्पावशाकादिपललेक्षुभिः।
दध्यारणालसौवीर चुक्रतक्रसुरासवैः ॥ २ ॥
विरुद्धाध्यशनक्रोध दिवास्वप्नप्रजागरैः।
प्रायशः सुकुमाराणां मिथ्याहारविहारिणाम्।
स्थूलानां दुःखितानाञ्च कुप्यते वातशोणितम् ॥ ३ ॥
हस्त्यश्वोष्ट्रैर्गच्छतश्चाश्नतश्च विदाह्यन्नं सविदाहाशनस्य।
कृत्स्नं रक्तं विदहत्याशु तच्च दुष्टं स्रस्तं पादयोश्चीयते तु ॥ ४ ॥
तत्संपृक्तं वायुना दूषितेन तत्प्राबल्यादुच्यते वातरक्तम् ॥ ५ ॥
स्वेदोऽत्यर्थं नवकार्ष्ण्यं स्पर्शाज्ञत्वं क्षतेति रुक्।
सन्धिशैथिल्यमालस्यं सदनं पिटिकोद्गमः ॥ ६ ॥
जानुजङ्घोरुकट्यंस हस्तपादाङ्गसन्धिषु।

निस्तोदः स्फुरणं भेदो गुरुत्वं सुप्तिरेव च ॥ ७ ॥
कण्डूः सन्धिषु रुग्दाहौ भूत्वा नश्यति चासकृत् ।
वैवर्ण्यं मण्डलोत्पत्तिर्वातासृक्पूर्वलक्षणम् ॥ ८ ॥
वाताधिकेऽधिकं तत्र शूलस्फुरणतोदनम् ।
शोथस्य रूक्षकृष्णत्वं श्यावतावृद्धिहानयः ॥ ९ ॥
धमन्यङ्गुलीसन्धीनां सङ्कोचोऽङ्गग्रहोऽतिरुक् ।
शीतद्वेषानुपशयौ स्तम्भवेपथुसुप्तयः ॥ १० ॥
रक्ते शोथोऽतिरुक् तोदस्ताम्रश्चिमिचिमायते ।
स्निग्धरूक्षैः समं नैति कण्डूक्लेदसमन्वितः ॥ ११ ॥
*पित्ते विदाहः संमोहः स्वेदो मूर्च्छामदस्तृषा ।*
स्पर्शाक्षमत्वं रुग्रागः शोफः पाको भृशोष्णता ॥ १२ ॥
कफे स्तैमित्यगुरुता सुप्तिः स्निग्धत्व शीतता ।
कण्डूर्मन्दा च रुग्द्वन्द्वे सर्वलिङ्गञ्च सङ्करे ॥ १३ ॥
उपद्रवैर्यच्च जुष्टं प्राणमांसक्षयादिभिः ।
प्राक् स्थित्वा पाणिपादेषु कृत्स्नदेहं विसर्पति ॥ १४ ॥
पादयोर्मूलमास्थाय कदाचित् हस्तयोरपि[१] ।
आखोर्विषमिव क्रुद्धं तद्देहमनुसर्पति ॥ १५ ॥
आजानुस्फुटितं यच्च भिन्नं प्रस्रुतञ्च यत् ।
वातरक्तमसाध्यं स्याद्याप्यं संवत्सरोत्थितम् ॥ १६ ॥
अस्वप्नारोचकश्वास मांसकोथशिरोग्रहाः ।
संमूर्च्छा मन्दरुक् तृष्णा ज्वरमोहप्रलेपकाः ॥ १७ ॥
हिक्कापाङ्गुल्यवीसर्प पाकतोदभ्रमक्लमाः ।
अंगुलीवक्रतास्फोट दाहमर्मग्रहार्बुदाः ॥ १८ ॥

---

१ कदाचिद्धस्तयोरपीति वा पाठः ।

एतैरुपद्रवैर्युक्तो मोहेनैकेन वापि यत्।
तमसाध्यमिति प्राहु र्वातरक्तं विचक्षणाः॥ १८॥
अकृत्स्नोपद्रवं याप्यं साध्यं स्यान्निरुपद्रवम्।
एकदोषानुगं साध्यं नवं याप्यं द्विदोषजम्॥
त्रिदोषजमसाध्यं स्याद्यस्य च स्युरुपद्रवाः॥ २०॥

—०—

## अथ चिकित्सामाह।

वातशोणितिनो रक्तं स्निग्धस्य बहुशो हरेत्।
अल्पाल्पं रक्षयेद्वायुं यथा दोषं यथा बलम्॥ २१॥
उग्रांगदाहतोदेषु जलौकाभिर्विनिर्हरेत्।
तुम्बीशृङ्गैर्विमिचिमा कंडूरुग्वेदनान्वितम्॥ २२॥
प्रच्छन्नेन शिराभिर्वा देशदेशान्तरं व्रजेत्॥ २३॥
अङ्गे ग्लाने तु न स्राव्यं रूक्षे वातोत्तरश्च यत्।
गम्भीरं श्वयथुं स्तम्भं कम्पग्लानि शिरामयान्॥ २४॥
ग्लानिमन्याश्च वातोत्थं कुर्य्याद्वायुरसृक् क्षयात्।
खञ्जादीन् वातरोगांश्च मृत्युं वात्यवश्रेपितम्॥ २५॥
कुर्य्यात्तस्मात्प्रमाणेन स्निग्धाद्रक्तं विनिर्हरेत्॥ २६॥
विरेचयेच्च पित्ताढ्ये स्नेहयुक्तैर्विरेचनैः।
रूक्षैर्वा मृदुभिः शस्तं मसकृद्वस्तिकर्म च॥
नहि वस्तिसमं किञ्चित् वातरक्तचिकित्सितम्॥२७॥
बाह्यमालेपनाभ्यङ्ग परिषेकोपनाहनैः।
विरेकाऽऽस्थापनस्नेह पानैर्गम्भीरमाचरेत्॥ २८॥
दिवास्वप्नं श्रमं तापं व्यायामं मैथुनं तथा।
कटूष्णं गुर्वभिष्यन्दि लवणाम्लं विवर्जयेत्॥ २९॥

सुराणयवगोधूमा नीवाराः शालिषष्टिकाः ।
भोजनार्थे रसार्थे तु विष्किराः प्रतुदास्हिताः ॥ ३० ॥
आढक्यश्चणकामुद्गा मसूराश्च मकुष्टकाः ।
सूपार्थे बहुसर्पिष्का: प्रशस्ता वातशोणिते ॥ ३१ ॥
सुनिषण्णकनेत्रार्थ शाकमाचीशतावरी ।
वास्तूकोपोदकीशाकं शाकं सौवर्चलं तथा ॥ ३२ ॥
घृतमांसरसैर्भृष्टं शाकसात्म्यायदापयेत् ॥ ३३ ॥
सर्पिस्तैलवसामज्जा पानाभ्यञ्जनवस्तिभिः ।
सुखोष्णैरुपनाहैश्च वातोत्तरमुपाचरेत् ॥ ३४ ॥
हितं गोधूमचूर्णैर्वा छागचीरघृतप्लुतैः ।
लेपः पिष्टास्तिलास्तद्वद्भृष्टाः पयसि निर्वृताः ॥ ३५ ॥
चीरपिष्टातसीलेपा दर्हमानफलेन वा ॥ ३६ ॥
उभे शताह्वे मधुकं बला च प्रियालकञ्चापि कशेरुकञ्च ।
घृतं विदारी च सितोपलाच युञ्ज्यात्प्रदेहं पवने सरक्ते ॥ ३७ ॥
रास्नागुडूचीमधुकं पले द्वे सजीरकं सार्षपकं पयश्च ।
घृतं सुसिद्धं मधुशेषयुक्तं रक्तानिलार्त्ते प्रणदेत् प्रदेहम् ॥ ३८ ॥
वासागुडूचीचतुरंगुलानामैरण्डतैलेन पिबेत्कषायम् ।
क्रमेण सर्वाङ्गजमप्यशेषं जयेदसृग्वातभवं विकारम् ॥ ३९ ॥
त्रिवृद्विदारीक्षुरकः क्वाथो वातास्रनाशनः ॥ ४० ॥
गुडूच्याः स्वरसं कल्कं चूर्णं वा क्वाथमेव वा ।
प्रभूतकालमासेवी मुच्यते वातशोणितात् ॥ ४१ ॥
अमृतानागरधान्यक कर्षत्रतोयेण पाचनं सिद्धम् ।
जयति सरक्तवातं सामं कुष्टान्यशेषाणि ॥ ४२ ॥
वत्सादन्युद्भवः क्वाथः पीतो गुग्गुलुमिश्रितः ।
समीरणसमायुक्तं शोणितं संप्रणाशयेत् ॥ ४३ ॥

तिस्रोऽथवा पञ्चगुडेन पथ्या जग्ध्वा पिबेच्छिन्नरुहा कषायम्।
तद्वातरक्तं शमयत्युदीर्णं माजानुभिन्नं स्फुटितमप्यवश्यम् ॥ ४४ ॥
गुग्गुल्वमृतवल्लीभि र्द्राचालुद्गरसेन वा।
त्रिफलाथाररसैर्युक्ता गुटिकाकोलसम्मिता ॥ ४५ ॥
भक्षयेन्मधुनाऽऽलोड्य शृणु कुर्वन्ति यत् फलम्।
पादस्फोटं महाघोरं स्फोटं सर्वाङ्गजञ्च यत् ॥
तत्सर्वं नाशयत्याशु ह्यसाध्यं वातशोणितम् ॥ ४६ ॥
इति गुग्गुलुवटि।
माहिषं नवनीतन्तु फलिनी परिमिश्रितम्।
गोमूत्रमिश्रितं कृत्वा चीरेण लवणेन च ॥ ४७ ॥
तदेकत्र समालोड्य वह्निना तापयेच्छनैः।
गात्रमुद्वर्त्तयेत्तेन देहस्फुटनशान्तये ॥ ४८ ॥
घृतेन वातं सगुडाविबन्धं पित्तं सिताढ्या मधुना कफञ्च।
वातास्रमुग्रं रुवुतैलमिश्राशुण्ठ्यामवातं शमयेद् गुडूची ॥ ४९ ॥
सिंहास्य पञ्चमूल छिन्नरुहैरण्डगोक्षुरकाथः।
एरण्डतैलरामठ सैन्धवचूर्णान्वितः पीतः ॥ ५० ॥
शमयति वातरक्तं तथामवातं कटीशूलम्।
मूत्रपुरीषविबन्ध प्रभवविकारं सुदुर्वारम् ॥ ५१ ॥
गन्धर्वहस्तवृषगोक्षुरकामृतानां
मूलं वलेक्षुरकयोश्च पचेत्तु धीमान्।
वातासृगाशु विनिहन्ति चिरप्ररूढ
माजानुगस्फुटितमूर्द्धगतं तु धीमान् ॥ ५२ ॥
पिप्पलीवर्धमानं वा सेव्या पथ्या गुडेन वा।
कोकिलाचामृता क्वाथे पिबेत् कृष्णां यथा बलम् ॥ ५३ ॥
मधुकाद्द्विगुणं तैलं तैलादाजं पयो भवेत्।

यथ्वयाग्निबलं पेयं वातरक्तरुजापहम् ॥ ५५ ॥

—०—

त्रिफलानिम्बमञ्जिष्ठा वचाकटुकरोहिणी ।
वत्सादनीदारुनिशा कषायं नवकार्षिकम् ॥ ५६ ॥
वातरक्तं तथा कुष्ठं पामानं रक्तमण्डलम् ।
कुष्ठं कपालिकाकुष्ठं पानादेवापकर्षति ॥ ५७ ॥
पञ्चरक्तिकमाषेण कार्योऽयं नवकार्षिकः ॥

इति नवकार्षिकक्वाथः ।

कर्षार्धौ तु पलं यावद्दद्याद्दशगुणं जलम् ।
ततस्तु गुडवं याव त्तोयमष्टगुणं भवेत् ॥ ५८ ॥
विरेचनैर्घृतक्षीर पानैः सेकैः सबस्तिभिः ।
शीतैर्निर्वापणैश्चापि रक्तपित्तोत्तरं जयेत् ॥ ५९ ॥
रक्तोत्तरं क्षीरघृत मधुकोशीरवारिभिः ।
लेपनं शाल्मलीकल्क माविक्षीरेण संयुतम् ॥ ६० ॥
सेचनं वा प्रकर्त्तव्य माविक्षीरैः क्षणं क्षणम् ।
सहस्रशतधौतेन घृतेन रुधिरोत्तरे ॥ ६१ ॥
लेपन शुष्कशीतेन घृतसर्जरसेन वा ।
सरागे सरुजे दाहे रक्तं विस्राव्यलेपयेत् ॥ ६२ ॥
तिलाः प्रियालं मधुकं विषं मूलञ्च वेतसाम् ।
सघृतः पयसापिष्टः प्रलेपो रागदाहनुत् ॥ ५३ ॥
पित्तोत्तरे तु काश्मर्य द्राक्षारग्वधचन्दनैः ।
मधुकक्षीरकाकोल्यो युक्तैः क्वाथं सुशीतलम् ॥
शर्करामधुसंयुक्तं वातरक्ते पिबेन्नरः ॥ ६४ ॥
पटोलत्रिफलामोद गुडूचीकटुरोहिणी ।
क्वाथः पित्ताधिके शस्तः शर्करा मधुसंयुत. ॥ ६५ ॥

वमनं मृदुनात्यर्थं स्नेहसेकैर्विलङ्घनम्।
कोष्णाः सेकाश्च शस्यन्ते वातरक्ते कफोत्तरे ॥ ६६ ॥
तैलमूत्रसुरायुक्तैः परिषेकः सदा हितः।
गौरसर्षपकल्केन प्रदेहो वातरक्तहः ॥ ६७ ॥
शिग्रुवरुणस्य कल्को धान्याम्लेनानिलार्त्तिजिल्लेपात्।
भवति नवेति च कल्को न विधेयः सिद्धियोगेऽस्मिन् ॥६८॥
कल्कः श्लेष्मोत्तरे लेप्यो वाजिगंधातिलोद्भवः।
लेपः सर्षपनिम्बार्कहिंस्राचारतिलैर्हितः ॥ ६९ ॥
गृहधूमवचाकुष्ठशताह्वारजनीद्वयम्।
प्रलेपः शूलनुद्वात रक्ते चाथ कफोत्तरे ॥ ७० ॥
अमृतकटुकायष्टीशुण्ठीकल्कं समाचिकम्।
गोमूत्रपीतं जयति सकफं वातशोणितम् ॥ ७१ ॥
धात्रीहरिद्रामुस्तानां कषायं वा समाक्षिकम्।
संसर्गे सन्निपाते च क्रियामन्यविमिश्रिताम् ॥ ७२ ॥

—०—

बलामतिबलां मेदां मात्मगुप्तां शतावरीम्।
काकोलीं क्षीरकाकोलीं रास्नां मृद्वीश्च पेषयेत् ॥ ७३ ॥
घृतं चतुर्गुणं क्षीरं तैः सिद्धं वातरक्तनुत्।
हृत्पाण्डुरोगवीसर्पकामलादाहनाशनम् ॥ ७४ ॥

इति बलाघृतम्।

शतावरीकल्कगर्भं रसे तस्याश्चतुर्गुणे।
क्षीरतुल्यं घृतं सिद्धं वातशोणितनाशनम् ॥ ७५ ॥

इति शतावरीघृतम्।

गुडूचीक्वाथकल्काभ्यां सपयस्कं घृतं शृतम्।

हन्ति वातं तथा रक्तं कुष्टं जयति दुस्तरम् ॥ ७६ ॥

इति गुडूचीघृतम्।

अमृतायाः कषायेण कल्केन च महौषधम्।
मृद्वग्निना घृतं सिद्धं वातरक्तहरं परम् ॥ ७७ ॥
आमवाताढ्यवातादीन् क्रमिकुष्ठव्रणानपि।
अर्शांसिगुल्मांश्च तथा नाशयेदाशु योजितम् ॥ ७८ ॥

इत्यमृतादिघृतम्।

अमृतास्वरसविपक्वं सर्पिस्तत्कल्कसाधितं पीतम्।
अपहरति वातरक्तं मुत्तानं चावगाढञ्च ॥ ७९ ॥

इति द्वितीयममृतादिघृतम्।

अमृतायाः पलशतं जलद्रोणे ऽशेषितम्।
घृतप्रस्थं विपक्तव्यं कल्कानष्टौ पलानि च ॥ ८० ॥
चतुर्गुणेन पयसा वातास्रकुष्टनाशनम्।
कामलापांडुरोगघ्नं प्लीहकासज्वरापहम् ॥ ८१ ॥

इति गुडूचीघृतम्।

अमृतामधुकं द्राक्षा त्रिफलानागरं बला।
वासारग्वधहृथीव देवदारुत्रिकण्टकम् ॥ ८२ ॥
कटुकासवरीकृष्णा काश्मर्यस्य फलानि च।
रास्नाक्षुरकगन्धर्वं हृद्दारुघनोत्पलैः ॥ ८३ ॥
कल्कैरेभि समैः कृत्वा सर्पिः प्रस्थं विपाचयेत्।
धात्रीरससमो देयो वारित्रिगुणसंयुतः ॥ ८४ ॥
सम्यक् सिद्धन्तु विज्ञाते भोज्ये पाने च शस्यते।
बहुदोषोत्थितं वातं रक्तेन सह मूर्च्छितम् ॥ ८५ ॥
उत्तानं चापि गम्भीरं त्रिकजङ्घोरुजानुजम्।

क्रोष्टुशीर्षे महाशूले आमवाते सुदारुणे ॥ ८६ ॥
दाहरोगेऽपसृष्टस्य वेदनां चातिदुस्तराम्।
मूत्रकृच्छ्रमुदावर्त्तं प्रमेहं विषमज्वरम् ॥ ८७ ॥
एतान् सर्वान्निहन्त्याशु वातपित्तकफोत्थितान्।
सर्वकालोपयोगेन वर्णायुर्बलवर्द्धनम् ॥ ८८ ॥
अश्विभ्यां निर्मितं श्रेष्ठं घृतमेतदनुत्तमम् ॥

इत्यमृताद्यं घृतम्।

अमृतायाः शतं प्राप्य जलद्रोणे विपाचयेत्।
चतुर्भागावशिष्टन्तु घृतप्रस्थं विपाचयेत् ॥ ८९ ॥
क्षीरं चतुर्गुणं तत्र दापयेन्मतिमान् भिषक्।
कल्कं चात्र प्रवक्ष्यामि यथावदनुपूर्वशः ॥ ९० ॥
काकोलीक्षीरकाकोली जीवकर्षभकौ च यत्।
शतावरीवयस्था च मधुकं नीलमुत्पलम् ॥ ९१ ॥
अश्वगन्धा च मूलानि स्थिरा कटुकरोहिणी।
ऋद्धिर्वृद्धिस्तथा मेदे श्वदंष्ट्राबृहतीद्वयम् ॥ ९२ ॥
गुडूचीफलिनीरास्ना वासकं चापि संहरेत्।
तदेकत्र समैर्भागैः पाचयेन्मृदुनाग्निना ॥ ९३ ॥
पानाभ्यञ्जननस्येषु परिषेके च दापयेत्।
वातरक्तं सशोथाढ्यं सदाहं क्रोष्टशीर्षकम् ॥ ९४ ॥
खञ्जोरुस्तम्भवातञ्च रक्तपित्तं सुदारुणम्।
बहुविधं पातकच्छ्रं स्पर्शं वातकाण्टकम् ॥
नाशयेद्योजितं सर्पि र्धन्वन्तरिवचो यथा ॥ ९५ ॥

इति महागुडूचीघृतम्।

शारिवासर्जमञ्जिष्टा यष्टीसिक्थैः पयोन्वितैः।

तैलं पक्का पयोभ्यं पिण्डाख्यं वातरक्तनुत् ॥ ८६ ॥
शारिवासर्जयष्ट्याह्व मधूच्छिष्टैः पयोन्वितैः ।
सिद्धमैरण्डतैलं वा वातरक्तरुजापहम् ॥ ८७ ॥
अपूतमथितस्यास्य पिण्डतैलस्य योगतः ।

इति पिण्डतैलम् ।

तुलां पचेज्जलद्रोणे गुडूच्याः पादशेषितम् ।
क्षीरद्रोणन्तु ताभ्याञ्च पचेत्तैलाढकं शनैः ॥ ८८ ॥
कल्कैर्मधुकमञ्जिष्टा जीवनीयगणस्तथा ।
कुष्टैलागुरुमृद्वीका मासीव्याघ्रनखं नखी ।
हरेणुश्रावणीव्योष शताह्वाश्वङ्गिशारिवा ॥ ८९ ॥
त्वक् पत्रागुरुविक्रान्ता स्थिरातामलकी तथा ।
नतं,केसरह्रीवेरं पद्मकोत्पलचन्दनम् ॥ १०० ॥
सिद्धं कर्षसमैर्भागैः पानाभ्यङ्गानुवासनैः ।
सेव्यं वातास्रजान् हन्ति सर्वं धात्वन्तराश्रितान् ॥ १०१ ॥
धन्यं पुंसवनं स्त्रीणां गर्भदं वातपित्तनुत् ।
स्वेदकण्डुरुजायास शिरःकम्पामयार्दितान् ॥ १०२ ॥
हन्याद् व्रणक्षतान् दोषान् गुडूचीतैलमुत्तमम् ॥

इति गुडूचीतैलम् ।

गुडूचीमधुकं ह्रस्व पञ्चमूलीपुनर्नवा ।
रास्नामैरण्डमूलञ्च जीवनीयानि लाभतः ॥ १०३ ॥
पलाना शतकैर्भागैः बलापञ्चशतं भवेत् ।
कोलान्विल्वयवाम्नापान् कुर्य्याद्याढकोन्मितान् ॥ १०४ ॥
काश्मर्य्याणाञ्च शुष्काणां षोडशद्रोणवारिणि ।
साधयेज्जर्जरं पूतं चतुर्द्रोणस्य शेषयेत् ॥ १०५ ॥

तैलद्रोणं पचेत्तेन दत्वा पञ्चगुणं पय ।
पिष्टा त्रिपलिकाश्चैव चन्दनोशीरकेशरम् ॥ १०६ ॥
पत्रैलाऽगुरुकुष्टानि तगरं मधुयष्टिका ।
मञ्जिष्टार्धपलञ्चैव तत्सिद्ध सर्वयौगिकम् ॥ १०७ ॥
वातरक्ते क्षते क्षीणे भारार्त्ते क्षीणरेतसि ।
वेपथौ छिन्नभग्नाना सर्वमेकाङ्गरोगिणाम् ॥ १०८ ॥
योनिदोषमपस्मार मुन्माद विषमज्वरम ।
हन्यात् पुसवनञ्चैव तैलाग्र्य ममृताह्वयम् ॥ १०९ ॥

इत्यमृताह्वय तेलम् ।

शुद्धा पचेन्नागवला तुलान्तु जलार्मणे पादकषायसिद्धम् ।
पाच्यन्तु तैलाढकमत्र देयमजापयस्तैलविमिश्रितन्तु ॥ ११० ॥
नतं सयष्टीमधुक सकल्कं दत्वा पृथक् पञ्चपल विपक्कम ।
तद्वातरक्त शमयत्युदीर्णं वस्ति प्रदानेन हि सप्तरात्रात् ॥ १११ ॥
दशाहयोगेन करोत्यरोगं पीतञ्च तैलोत्तममग्निजुष्ट ॥

इति नागवलातैलम् ।

वलाकषायकल्काभ्या तेल क्षीरचतुर्गुणम् ।
दशपाक भवेत्तेन वातासृग्वातपित्तनुत् ॥ ११२ ॥
धन्य पुसवनञ्चैव नराणा शुक्रवर्द्धनम् ।
रेतो योनिविकारघ्न मेतद्वातविकारनुत् ॥ ११३ ॥

इति दशपाकवलातैलम् ।

वलाकषायकल्काभ्या तैलं क्षीरं सम पचेत् ।
सहस्रशतपाके वा वातासृग्वातपित्तनुत् ॥ ११४ ॥
रसायनमिद श्रेष्टमिन्द्रियाणा प्रबोधनम् ।

जीवनं बृंहणं स्वर्यं शुक्रासृग्दोषनाशनम् ॥ ११५ ॥
बलातैलसहस्रेण तथा पाकसहस्रकम् ॥ ११६ ॥

---

पुनर्नवामूलशतं विशुद्धं रुबुकमूलञ्च तथा प्रगृह्य ।
दत्वा पलं षोडशकञ्च शुण्ठ्याः सङ्कुट्य सम्यग्विपचेद्घटेऽपाम् ॥११७
पलानि चाष्टावथ कौशिकस्य तेनाष्टशेषेण पुनः पचेत्तु ।
एरण्डतैलं कुडवं च दद्यात्तथा त्रिवृच्चूर्णपलानि पञ्च ॥ ११८ ॥
निकुम्भचूर्णस्य पलं गुडूच्याः पलद्वयं चार्धपलं पलं वा ।
पलत्रयं तूरपणचित्रकानि सिन्धूत्थभल्लातविडङ्गकानि ॥ ११९ ॥
कर्षं तथा माक्षिकधातुचूर्णं पुनर्नवायाः पलमेव चूर्णम् ।
चूर्णानि दत्वा त्ववतार्यशीते खादेन्नरः कर्षसमप्रमाणम् ॥१२०॥
वातासृजं हृद्विगदञ्च सर्वं जयत्यवश्यं त्वथ गृध्रसीञ्च ।
जङ्घोरुपृष्ठत्रिक वस्तिजञ्च तथामवातं प्रबलं जयेत्तु ॥ १२१ ॥

इति पुनर्नवागुग्गुलुः ।

चत्वारो माषकाहीने मध्यमेऽष्टौ च माषिकाः ।
श्रेष्ठे द्वादशकाः प्रोक्ताः वैद्यैर्विज्ञायते त्रिधा ॥
संसरत्वाद् गुरुत्वाद्वा गुग्गुलोः करणक्रमः ॥ १२२ ॥

---

प्रस्थमेकं गुडूच्याश्च ह्यर्धप्रस्थन्तु गुग्गुलोः ।
प्रत्येकं त्रिफलायास्तु तत्प्रमाणं विनिर्दिशेत् ॥ १२३ ॥
सर्वमेकत्र संकुट्य क्वाथयेन्नल्वणेऽम्भसि ।
पादशेषं परिस्राव्य कषायं ग्राहयेद्भिषक् ॥ १२४ ॥
पुनः पचेत्कषायन्तु यावत्सान्द्रत्वमागतम् ।
दन्तीं व्योषविडङ्गानि गुडूचीत्रिफलात्वचः ॥ १२५ ॥

ततश्चार्द्धपलं चूर्णं गृह्णीयाद्वा प्रति प्रति ।
कर्षन्तु त्रिवृतायाश्च सर्वमेकत्र चूर्णयेत् ॥ १२६ ॥
तस्मिन् सुसिद्धं विज्ञाय कवोष्णे प्रक्षिपेद्बुधः ।
ततश्चाग्निबलं ज्ञात्वा खादेत्कर्षप्रमाणतः ॥ १२७ ॥
वातरक्तं तथा कुष्टं गुदजान्यग्निसादनम् ।
कुष्टव्रणं प्रमेहांश्च मामवातं भगन्दरम् ॥ १२८ ॥
आढ्यवातञ्च श्वयथुं सर्वानेतान् व्यपोहति ।
अश्विभ्यां निर्मितः पूर्वं ममृताख्यो हि गुग्गुलुः ॥ १२९ ॥

इत्यमृतागुग्गुलुः ।

द्विप्रस्थममृतायाश्च प्रस्थमेकन्तु गुग्गुलोः ।
प्रत्येकं त्रिफलाप्रस्थं वर्षाभूप्रस्थमेव च ॥ १३० ॥
सर्वमेकत्र संकुट्य साधयेन्नल्वणेऽम्भसि ।
पुनः पचेत्पादशेषं यावत्सान्द्रत्वमागतम् ॥ १३१ ॥
दन्ती चित्रकमूलानां कणा विश्वाफलत्रिकम् ।
गुडूचीत्वग्विडङ्गानां प्रत्येकार्द्धपलोन्मितम् ॥ १३२ ॥
त्रिवृता कर्षमेकन्तु सर्वमेकत्र चूर्णयेत् ।
सिद्धे चोष्णे क्षिपेत्तत्र त्वमृतागुग्गुलुः परम् ॥ १३३ ॥
अतो यथा बलं खादे दम्लपित्ती विशेषतः ।
वातरक्तं तथा कुष्टं गुदजान्यग्निसादनम् ॥ १३४ ॥
कुष्टव्रणं प्रमेहांश्च सामवातं भगन्दरम् ।
नाड्याढ्यवातं श्वयथुं हन्यात्सर्वामयांस्तथा ॥ १३५ ॥
अश्विभ्यां निर्मितो ह्येष ह्यमृताद्यस्तु गुग्गुलुः ॥

इत्यमृताद्यो गुग्गुलुः ।

चित्रकं त्रिफलानिम्ब पटोलमधुयष्टिका ।
वराङ्गं केसरञ्चैव जीवन्ती चाम्लवेतसम् ॥ १३६ ॥

रामसेनकदार्व्येला सुस्तापर्पटकं तथा ।
तुल्यकं कटुकाभार्ङ्गी चव्यं पद्मकटीम्यकौ ॥ १३७ ॥
पिप्पलीमरिचं दन्ती शठीशुण्ठी सपुष्करम् ।
विडङ्गं पिप्पलीमूलं जीरकं देवदारु च ॥ १३८ ॥
पद्मकं कटुकं रास्ना दुरालभामृता त्रिवृत् ।
लतातुरुष्कतालीशौ त्वचाम्लवणत्रयम् ॥ १३९ ॥
धान्यकं वाजमोदा च कारवीधातुमाक्षिका ।
जातीफलं तुगाक्षीरी वाजिगन्धा च दाडिमम् ॥ १४० ॥
कङ्कोलकमुशीरञ्च द्विचारामलकं तथा ।
एतानि पलमात्राणि सूक्ष्मचूर्णानि कारयेत् ॥ १४१ ॥
गिरिजस्य पलान्यष्टौ द्विपलञ्चैव गुग्गुलोः ।
प्रस्थमेकं सितायाश्च घृतस्य गुडवं तथा ॥ १४२ ॥
गिरिजेन समं लोहं प्रस्थार्धं माक्षिकस्य च ।
सर्वमेकत्र संमिश्र्य स्निग्धे भांडे निधापयेत् ॥ १४३ ॥
वातव्याधिमुरुस्तम्भं मर्दितं गृध्रसीं तथा ।
विद्रधीं श्लीपदं गुल्मं पांडुरोगं हलीकमम् ॥ १४४ ॥
क्षतक्षयमपस्मारं मन्त्रवृद्धिञ्च नाशयेत् ।
अरोचकं पार्श्वशूलं मुदरञ्च भगन्दरम् ॥ १४५ ॥
हृद्रोगशूलनुत्कम्पं विषमज्वरनाशनम् ।
वर्षोपयोगात् कुरुते वलीपलितनाशनम् ॥ १४६ ॥
उरः क्षतञ्च यान्रोगान् मुखरोगांश्च दारुणान् ।
नाशयेद् गुटिकाश्चापि चूर्णं पाणितलोन्मितम् ॥ १४७ ॥
विविधान्यन्नानि भुञ्जीत यथेष्टञ्च यथा सुखम् ।
रसैर्मांसैश्च यूषैश्च क्षीरैर्द्राक्षां शुभां पिबेत् ॥ १४८ ॥
मेधां संजनयेद्दीप्तिं जीवेद्वर्षशतत्रयम् ।

वन्ध्यानां पुत्रदाश्रेष्ठा शुक्रवृद्धिकरा परा ॥ १४८ ॥
गुटिकाभास्करी नाम्ना प्रोक्ता देवेन शम्भुना।
प्रमेह रक्तपित्तञ्च सामवातमहामयम् ॥ १५० ॥
नाडिव्रणाञ्च घोरांश्च ह्यपचीश्च प्रणाशयेत्।
क्षययुक्त शिरोरोगं कामलाञ्च नियच्छति ॥ १५१ ॥
धात्विन्द्रियबलक्षीणो हतभी हतपौरुष.।
भवेदनेन युक्तो ना बलधातुपराक्रमैः ॥
दृष्टिपुष्ट्या स युक्तश्च निर्विकारो निरामयः ॥ १५२ ॥
अग्निदीप्तियुतो हृष्टो दीर्घायु' पुरुषो भवेत्।
ये वातप्रभवा रोगा ये च पित्तसमुद्भवाः ॥
कफरोगाश्च ये केचिद् द्वन्द्वजं सन्निपातजम् ॥ १५३ ॥
ते सर्वे प्रशमं यान्ति भास्करेण तमो यथा।
रोगविद्राविणी प्रोक्ता गुटी सूर्यप्रभा मता ॥ १५४ ॥

इति सूर्यप्रभागुटिका।

वरमहिषलोचनोदर सन्निभवर्णस्य गुग्गुलोः प्रस्थम्।
प्रक्षिप्यतोयराशौ त्रिफलाञ्च यथोक्तपरिमाणाम् ॥ १५५ ॥
द्वात्रिंशच्छिन्नरुहा पलानि देयानि यत्नेन ॥ १५६ ॥
विपचेदप्रमत्तो दर्व्यासंघट्टयन्मुहुर्यावत्।
अर्धक्षयितं तोयं जातं ज्वलनस्य सम्पर्कात् ॥ १५७ ॥
अवतार्य्य वस्त्रपूत पुनरपि सम्पादयेदय. पात्रे।
सान्द्रीभूतं तस्मिन्नवतार्य्य हिमोपलप्रख्ये ॥ १५८ ॥
त्रिफलाचूर्णार्धपलं त्रिकटोश्चूर्णं षडक्षपरिमाणम्।
कृमिरिपुचूर्णार्धपलं कर्षं कर्षं त्रिवृद्दन्त्योः ॥ १५९ ॥
पलमेकन्तु गुडूच्या दत्वा सचूर्णयत्नेन।
उपयुज्य चानुपानं यूष क्षीर सुगन्धिसलिलञ्च ॥ १६० ॥

इष्टाहारविहारोभैषज्य मुपयुज्य सर्वकालमिदम् ।
तनुरोधिवातशोणित मेकजमथ सर्वजं जयति ॥ १६१ ॥
सुतपरिशुष्कं स्फुटितं जीर्णं वा जानुजं वापि ।
व्रणकासकुष्टगुल्म क्षयथूदरपांडुमेहांश्च ॥ १६२ ॥
मन्दाग्निञ्च विबद्धं प्रमेहपिठिकांश्च नाशयत्याशु ।
सततं निषेव्यमाणः कालवशाद्धन्ति सर्वगदान् ॥ १६३ ॥
अभिभूयजरादोषं करोति कैशोरकं रूपम् ॥ १६४ ॥
प्रत्येकं त्रिफलाप्रस्थं जलं तत्र षड़ाढ़कम् ।
गुड़वद् गुग्गुलोः पाकः सन्धेयस्तु विशेषतः ॥ १६५ ॥

इति कैशोरगुग्गुलुः ।

अष्टौ पलान्यत्र पलंकषायाः प्रस्थं पृथक् शुद्धफलत्रयस्य ।
दत्वा पचेद्द्रोणयुगे जलस्य पादावशेषं पुनरेव वैद्यः ॥ १६६ ॥

दन्तीत्रिवृत्त्र्यूषण वानरीणां
विड़ङ्गमुस्ता त्रिफलामृतानाम् ।
कट्वायगन्धाग्निकमाणकानां
सपारदानाञ्च सगन्धकानाम् ॥ १६७ ॥
पलार्धमानप्रमितं सचूर्णं
दद्याद्विपक्वे पुनरेव तत्र ।
फलानि संचूर्ण्य च कातकानि
सहस्रसंख्याकलितानि पश्चात् ॥ १६८ ॥
खादेत्तु माषद्वितयं प्रशस्तं
तोयादिकं देयमतोऽनुपाने ।
श्यामानिलं सन्धिगतं सशूलं
शिरोगतं जानुकटिस्थितञ्च ॥ १६८ ॥

शोथाऽतिवृत्तिं विषमज्वरार्त्तिं
प्रमेहकुष्टानि भगन्दरञ्च।
हन्यान्नराणामिति सिंहनादो
मेदो मरुच्छ्लेष्मगदान् पुरोऽयम् ॥ १७० ॥
दाहोऽत्यन्त प्रवृत्तिर्वा विकारोऽल्पोऽपि चेद्भवेत्।
तत्कृतस्तु तदा तत्र तक्र भक्तं हितं पिबेत् ॥
उद्वर्त्तनं शीतजल स्नानञ्च शयनं तथा।
विरेकातिशयं कुर्य्यात् सिंहनादे यतः सुधीः ॥ १७१ ॥
ज्ञात्वाऽवलं शरीरे तु दद्यादेवं न वा भिषक्।
तोयारण्यालयोच्चोरैः क्रमात्प्रकं विशुद्धानि ॥
फलं कतकसंभृन्तु कृत्वा चूर्णं ततः क्षिपेत् ॥ १७२ ॥

इति सिंहनादगुग्गुलुः।

पलत्रयं कषायस्य त्रिफलायाः सुचूर्णितम्।
सौगन्धिकपलञ्चैव कौशिकस्य पलत्रयम् ॥ १७३ ॥
कुडवं चित्रतैलस्य सर्वमादाय यत्नतः।
पाचयेत्पाकविद्वैद्यः पात्रे लौहमये दृढे ॥ १७४ ॥
हन्ति वातं तथा पित्तं श्लेष्मिणं खञ्जपंगुताम्।
श्वासं सुदुर्जयं हन्ति कासं पञ्चविधं तथा ॥ १७५ ॥
कुष्टानि वातरक्तञ्च गुल्मशूलोदराणि च।
आमवातं जयेदेत दपि वैद्यविवर्जितम् ॥ १७६ ॥
मासादस्योपयोगेन जरापलितनाशनम्।
सर्पिस्तैलरसोपेत मश्नीयाच्छालियष्टिकम् ॥ १७७ ॥
सिंहनाद इतिख्यातो रोगवारणदर्पहा।
वह्नेर्दीप्तिकरं पुंसां भाषितं दंडपाणिना ॥ १७८ ॥

अक्षाङ्गुलिफलाक्वार्थं पृथक् त्रिपलसम्मितम्।
किञ्चिन्निर्य्याति चैरण्ड स्नेहपाकेऽधिके खरे ॥ १७९ ॥

इति सिंहनादगुग्गुलुः।

धान्यतुम्बुरुशुण्ठीनां मांसकूष्मांडमाषयोः।
गुडूच्यागुग्गुलोश्चैव प्रस्थं षोडशभिः पलैः ॥१८० ॥

—०—

## अथ चन्द्रप्रभागुटीकामाह।

क्रमिरिपुदहनव्योषत्रिफलामरदारुचव्यभूनिम्बाः।
मागधिमूलं मुस्तं शठीवचाधातुमाचीकम् ॥ १८१ ॥
लवणं चारनिशायुगकुम्तुम्बुरुगजकणातिविषा ॥ १८२ ॥
कर्षांशिकान्येव समानि कुर्य्यात्पलाष्टकं चाश्मजतु प्रदद्यात्।
निष्पवशृहस्य पुरस्य धीमान् पलद्वयं लोहरजस्तथैव ॥ १८३ ॥
सिताचतुष्कं पलमत्र वा स्यात् निकुम्भकुम्भं त्रिसुगन्धियुक्तम्।
पृथक् पल चूर्णमथावपेच्च चन्द्रप्रभेय गुटिका विधेया ॥ १८४ ॥
ज्वरातिसारग्रहणीविकारार्शांसि निर्नाशयती षडेव।
भगन्दरान् कामलपाडुरोगान् नष्टस्य वह्नेः कुरुते प्रदीप्तिम् ॥१८५॥
हृल्यामयान् पित्तकफानिलोत्थान् नाडीगते मर्मगते व्रणे च।
बलक्षये गर्भसियलम्णोप मेहे गजाख्ये प्रदरे प्रयोज्या ॥ १८६ ॥
शुक्रक्षये चाश्मरिमूत्रकृच्छ्रे शुक्रप्रवाहेऽप्युदरामये च।
शम्भुं समभ्यर्च्य कृतप्रसाद प्राप्ता गुटीचन्द्रप्रभः प्रसादात् ॥१८७॥
न पानभोज्ये परिहारमस्ति न शीतवातातपमैथुने वा।
भक्तस्य पूर्वे सततं प्रयोज्या तक्रानुपानाप्यथ मस्तुना वा ॥ १८८ ॥
धजारसो वाद्गलजो रसो वा पयोऽथवा शीतजलानुपानम् ॥१८९॥

यकृद्दोषानिहन्त्यष्टौ प्रमेहांश्चैव विंशतिः ।
वलीपलितनिर्मुक्तो वृद्धोऽपि तरुणायते ॥ १९० ॥

इति चन्द्रप्रभागुटिका ।

कालेरवितापाढ्ये चायः पार्श्वे शिलाजतु प्रवरम् ।
त्रिफलारससंयुक्तं त्र्यहं विशुद्धं पुनः शुष्कम् ॥ १९१ ॥
दशमूलस्य गुडूच्या रसे वलायास्तथा पटोलस्य ।
मधुकरसे गोमूत्रे त्र्यहं त्र्यहं भावयेत् क्रमशः ॥ १९२ ॥
एकाहं क्षीरेण तु ततःपरं भावयेत्पुनः शुष्कम् ।
सप्ताहं भाव्यं स्यात् क्वाथेनैषां यथा लाभम् ॥ १९३ ॥
काकोल्यौ द्वे मेदे विदारियुग्मं शतावरीद्राक्षा ।
ऋद्धियुगर्षभवीरा मुण्डितकाजीवांशुमत्यश्च ॥ १९४ ॥
रास्नापुष्करचित्रकदन्तीभकणाकलिङ्ग चव्याश्च ।
कटुकाशृङ्गीपाठा चैतानि पलांशकानि कार्याणि ॥ १९५ ॥
अष्टगुणसाधितानां रसेन पादांशकेन भाव्यं स्यात् ।
गिरिजस्यैवं भावितशुद्धस्य पलानि दशषड् वा ॥ १९६ ॥
द्विपलञ्च विश्वधात्रीमागधिका कर्कटाख्य मरिचानाम् ।
तुगाक्षीरीत्वङ्नागदलैलानां सन्नयित्वा तु ॥ १९७ ॥
गिरिजस्य षोडशपलैर्गुटिकाः कार्यास्ततोऽक्षसमाः ॥१९८॥
ताः शुष्कानवकुम्भे जातीपुष्पाधिवासिते स्थातव्याः ।
तासामेकाकाले पेया भक्ष्यापि वा सततम् ॥ १९९ ॥
क्षीररसदाडिमरसाः सुरासवञ्च मधुकशिशिरतोयानि ।
आलोक्य गुणं तासामनुपाने वा प्रशस्यन्ते ॥ २०० ॥
सुजीर्णलघ्वन्नपयोजाङ्गलनिर्यूहयूषभोजी स्यात् ।
सप्ताहं यावदतःपरं भवेत्सर्वसामान्यः ॥ २०१ ॥
भुक्तापि भक्षतेऽयं यदृच्छया नोद्वहेन्नयं किञ्चित् ।

निरुपद्रवा प्रयुक्ता सुकुमारैः कामिभिश्चैव ॥ २०२ ॥
संवत्सर प्रयुक्ता हन्त्येषा वातशोणितप्रबलम् ।
बहुवार्षिकमपि गाढं यक्ष्माणं चाढ्यवातञ्च ॥ २०३ ॥
ज्वरयोनिशुक्रदोषप्लीहार्शः पांडुरोगहृद्ग्रहणी ।
व्रणवमिगुल्मपीनसहिक्काकासारुचिश्वासान् ॥ २०४ ॥
जठरं श्वित्रं कुष्टं जाड्यं क्लैब्यं मदत्त्वयं शोषम् ।
उन्मादमपस्मारौ वदनाक्षिशिरोगदान् सर्वान् ॥ २०५ ॥
आनाहमतीसारं सासृग्दरकामलां प्रमेहांश्च ।
यकृदर्बुदानि विद्रधिं भगन्दरं रक्तपित्तञ्च ॥ २०६ ॥
अतिकार्श्यमतिस्थौल्यं स्वेदमपि श्लीहगदञ्च निहन्ति ।
दष्टाविषमपि चौग्रं गराणि चैषां बहुप्रकाराणि ॥ २०७ ॥
मन्त्रौषधप्रयोगानरिप्रयुक्तांस्तांविकास्तथा बाधाः ।
पापा लक्ष्मीं चेयं शमयति गुटिका शिवा नाम्नी ॥ २०८ ॥
बल्याहृष्याधन्याकान्तिवर्णं यशः श्रीकरी चेयम् ।
दद्यान्नृपसद्मगतां जयति वादं सुखस्था सर्वम् ॥ २०८ ॥
प्रकृतिमेधासुस्मृति बुद्धिबलयुक्तस्तथा दृढ़शरीरः ।
पुष्योजो वर्णेन्द्रिय तेजोबलसम्पदोपेत. ॥ २१० ॥
वलिपलितरोगरहितो जीवेद्दै शरदां शतं सपुरुषः ।
संवत्सरप्रयोगात् द्वाभ्यां तु शतानि चत्वारि ॥ २११ ॥
सर्वामयजिद्विहितं मुनिभिर्भक्त्या रसायनं रहस्यम् ।
शिवगुटिकेति रसायनमुक्तं गिरिशेन गणपतये ॥ २१२ ॥

॥ इति शिवसिद्धान्तात् वृहच्छिवगुटिका ।

तेषु यत्लघ्वमलघुस्निग्धं निःशर्करञ्च यत् ।
गोमूत्रगन्धि यच्चापि तत्प्रधानं शिलाजतु ॥ २१३ ॥
शिलाजतुसमं द्रव्य क्वाप्यमष्टगुणे जले ।

पादावशिष्टं तत्पूतं तस्मिन् कोष्णे विनिक्षिपेत् ॥ २१४ ॥
सम गिरिजमष्टगुणिते निःक्वाथ्यतन्मानौषधं तोये।
तन्निर्यूहेऽष्टांशे भूयोष्णे प्रक्षिपेद्गिरिजम् ॥ २१५ ॥
तत्समरसतां यातं संशुष्कं प्रक्षिपेद्रसो भूयः।
स्वैः स्वैरेव क्वाथैर्भाव्यं वारान् भवेत्सप्त ॥ २१६ ॥

इति शिलाजतुशुद्धिप्रकारः।

शतावरीनागबला वृद्धदारकमुच्चटा।
पुनर्नवामृताकृष्णा वाजिगन्धात्रिकण्टकम् ॥ २१७ ॥
पृथग् दशपलान्येषां सूक्ष्मचूर्णानि कारयेत्।
तदर्धशर्करायुक्तं चूर्णं संमर्दयेद्बुधः ॥ २१८ ॥
स्थापयेत् सुदृढे भाण्डे मध्वर्द्धाढकसंयुतम्।
घृतप्रस्थेन चालोड्य त्रिसुगन्धिपलेन च ॥ २१९ ॥
खादेद्यथेष्टचेष्टान्नो यथा वह्निबलं नरः।
वातरक्तं क्षयं कुष्टं कार्श्यं पित्तास्रसम्भवम् ॥ २२० ॥
वातपित्तकफोत्थांश्च रोगानन्यांश्च तद्विधान्।
हत्वा करोति पुरुषं वलीपलितवर्जितम् ॥ २२१ ॥
योगसारामृतो नाम्ना लक्ष्मीकीर्त्तिविवर्द्धनः।

इति योगसारामृतः।

व्यायामं मैथुनं कोपमुष्णाम्बुलवणं रसम्।
दिवास्वप्नमभिस्यन्दि गुरुधान्यं विवर्जयेत् ॥ २२२ ॥

## इति वङ्गसेने वातरक्तनिदानचिकित्साधिकारः समाप्तः ॥ २५ ॥

—०—

वर्जयेदाम्यबाति तु यतस्ते तस्य कोपनम् ॥ ११ ॥
तस्मादत्र सदा कार्यं खेदलङ्घनरूक्षणम्।
आममेदः कफाधिक्यात् मारुतं नयतां शमम् ॥ १२ ॥
यस्मात्कफप्रशमनं नच मारुतकोपनम्।
तत्सर्वं सर्वदा कार्यं मूरुस्तम्भस्य भेषजम् ॥ १३ ॥
सर्वो रूक्षक्रमः कार्यो स्वचादौ कफनाशनः।
पश्चाद्वातविनाशाय कृत्स्ना कार्या यथा क्रिया ॥ १४ ॥
भोज्याः पुराणाः श्यामाक कोद्रवोद्दालशालयः।
जाङ्गलैरघृतैर्मांसैः शाकैश्चा लवणैर्हितैः ॥ १५ ॥
वायसीवास्तुकारिष्ट सुनिषण्णककूलकैः।
शाकैरलवणैर्युतं जीर्णशाल्योदनं भिषक् ॥ १६ ॥
रूक्षणाद्वातकोपश्चे निद्रानाशार्तिसूचकः।
स्नेहखेदक्रमस्तत्र कार्यो वातामयापहः ॥ १७ ॥
प्रतारयेत्प्रतिस्रोतो नदीं शीतजलां शिवाम्।
सरश्च विमलं शीतं स्थिरतोयं पुनः पुनः ॥ १८ ॥
तथा विशुष्के च कफे शान्तिमुरुग्रहो व्रजेत्।
शरीरबलमग्निश्च कार्यंपारक्षिता क्रिया ॥ १९ ॥
क्षारमूत्रखेदांश्च रूक्षानुत्सादनानि च।
प्रदिह्य च मूत्राद्यैः करञ्जफलसर्षपैः ॥ २० ॥
वाथश्वगन्धाया मूलैरर्कस्य वा भिषक्।
[illegible] वा मूले रथवा देवदारुणा ॥ २१ ॥
[illegible] मृत्तिकासंयुतैर्भिषक्।
[illegible] कुर्या दूरुस्तम्भे सवेदने ॥ २२ ॥
[illegible] सर्षपैश्चापि बुद्धिमान्।
[illegible] शिग्रु वचावत्सकनिम्बकैः ॥

## अथोरुस्तम्भनिदानमाह ।

शीतोष्णद्रवसंशुष्क गुरुस्निग्धैर्निषेवितैः ।
जीर्णाजीर्णे तथाऽऽयास संक्षोभस्वप्नजागरैः ॥ १ ॥
सश्लेष्ममेदः पवनः साममत्यर्थसञ्चितम् ।
अभिभूयेतरं दोषमूरूचेत्प्रतिपद्यते ॥ २ ॥
सक्थ्यस्थीनि प्रपूर्य्यान्तः श्लेष्मणास्तिमितेन च ।
तदास्तभ्नातितेनोरू स्तब्धौ शीतावचेतनौ ॥ ३ ॥
परकीया विवगुरू स्यातामतिभृशव्यथौ ।
ध्यानाङ्गमर्दस्तैमित्यं स्तन्द्राच्छर्द्यरुचिज्वरैः ॥ ४ ॥
संयुक्तौ पादसदन कृच्छ्रोद्धरणसुप्तिभिः ।
तमूरुस्तम्भमित्याहु राढ्यवातमथाऽपरे ॥ ५ ॥
प्राग्रूपं तस्य निद्रार्त्ति ध्यानस्तिमितता ज्वरः ।
लोमहर्षोऽरुचिश्छर्दि र्जङ्घोर्वोः सदन तथा ॥ ६ ॥
वातशंकिभिरज्ञाना त्तस्य स्यात् स्नेहनात् पुनः ।
पादयोः सदनं सुप्तिः कृच्छ्रादुद्धरणं तथा ॥ ७ ॥
जङ्घोरुग्लानिरत्यर्थं शश्वच्चानाहवेदने ।
पादं च व्यथते न्यस्तं शीतस्पर्शं नवेत्ति सः ॥ ८ ॥
संस्थाने पीडने गत्वा चालने चाप्यनीश्वरः ।
अन्यनेयौ हि संभग्ना वूरूपादौ च मन्यते ॥ ९ ॥
यदा दाहार्तितोदार्त्तो वेपनः पुरुषो भवेत् ।
ऊरुस्तम्भस्तदा हन्यात् माधवेदन्यथा नवम् ॥ १० ॥

---

## अथ चिकित्सामाह ।

क्षैहाष्टम् स्रावशमन वस्तिकर्मविरेचनम् ।

वर्जयेदाव्यवाते तु यतस्ते तस्य कोपनम् ॥ ११ ॥
तस्मादत्र सदा कार्य खेदलङ्घनरूक्षणम्।
श्लेष्मेदः कफाधिक्यात् मारुतं नयता शमम् ॥ १२ ॥
यत्स्यात्कफप्रशमनं नच मारुतकोपनम्।
तत्सर्वं सर्वदा कार्यं मूरुस्तम्भस्य भेषजम् ॥ १३ ॥
सर्वो रूक्षक्रमः कार्य्यो स्तत्रादौ कफनाशनः।
पश्चाद्वातविनाशाय कृत्स्ना कार्य्या यथा क्रिया ॥ १४ ॥
भोज्याः पुराणाः श्यामाक कोद्रवोद्दालशालयः।
जाङ्गलैरघृतैर्मांसैः शाकैश्चा लवणैर्हितैः ॥ १५ ॥
वायसीवास्तुकारिष्ट सुनिषण्णककूलकैः।
शाकैरलवणैर्युक्तं जीर्णशाल्योदनं भिषक् ॥ १६ ॥
रूक्षणाद्वातकोपश्चे त्रिद्रानाशार्तिसूचकः।
स्नेहस्वेदक्रमस्तत्र कार्य्यो वातामयापहः ॥ १७ ॥
प्रतारयेत्प्रतिस्रोतो नदीं शीतजलां शिवाम्।
सरश्च विमलं शीतं स्थिरतोयं पुनः पुनः ॥ १८ ॥
तथा विशुष्के च कफे शान्तिमूरुग्रहो व्रजेत्।
शरीरबलमग्निञ्च कार्यथारचिता क्रिया ॥ १९ ॥
सक्षारमूत्रस्वेदांश्च रूक्षानुत्सादनानि च।
कुर्य्यादिह च मूत्राढ्यैः करञ्जफलसर्षपैः ॥ २० ॥
मूलं वाथश्वगन्धाया मूलैरर्कस्य वा भिषक्।
पिचुमन्दस्य वा मूलै रथवा देवदारुणा ॥ २१ ॥
क्षौद्रसर्षपवल्मीक मृत्तिकासंयुतैर्भिषक्।
गाढमुत्सादनं कुर्य्या दूरुस्तम्भे सवेदने ॥ २२ ॥
दन्ती द्रवन्तीस्वरस सर्षपैश्चापि बुद्धिमान्।
तर्कारीस्वरसं शिग्रु वचावत्सकनिम्बकैः ॥

यव मूलफलैस्तोये स्तृणमुस्तेन सेचनम् ॥ २३ ॥
भल्लातकामृतागुण्ठी दारुपथ्यापुनर्नवा ।
पञ्चमूलीद्वयोन्मिश्रा ऊरुस्तम्भनिवर्हणा ॥ २४ ॥
पिप्पली पिप्पलीमूलं भल्लातकफलानि च ।
कल्कं मधुयुतं पीत्वा ऊरुस्तम्भाद्विमुच्यते ॥ २५ ॥
रास्नाश्यामाकपथ्या मरिचमिसिशिवा वेल्लकञ्चाश्वगन्धा ।
यासंछिन्नाजमोदासुमुखमतिविषा हृद्दारुद्वहन्त्यौ ।
शुण्ठीतिक्तायवानी सहचरचविकैरण्डदार्व्याजकर्णा ।
ऊरुस्तम्भामवातं जठररुजकटिपृष्ठशूलान्त्रवृद्धिम् ॥
वातामश्वासशोथान् कफपवनरुजादण्डकांश्चाशु हन्यात् ॥ २६ ॥
ग्रन्थिकारुष्करक्षणानां क्वाथं क्षौद्रान्वितं पिबेत् ।
चव्ययासाग्निदारूणां कल्कं वा मधुसंयुतम् ॥ २७ ॥
त्रिफलाचव्यकटुकं ग्रन्थिकं मधुना लिहन् ।
ऊरुस्तम्भविनाशाय पुरं मूत्रेण वा पिबेत् ॥ २८ ॥
लिह्याद्वा त्रिफलाचूर्णं क्षौद्रेण कटुकायुतम् ।
सुखाम्बुना पिबेद्वापि चूर्णं षड्धरणं नरः ॥ २९ ॥
पिप्पलीवर्धमानं वा माक्षिकेण गुडेन वा ।
ऊरुस्तम्भे प्रशंसन्ति गण्डीरारिष्टमेव वा ॥ ३० ॥
शिलाजतुं गुग्गुलुं वा पिप्पलीमथ नागरम् ।
ऊरुस्तम्भे पिबेन्मूत्रै दशमूलीरसेन वा ॥ ३१ ॥
त्रिफलापिप्पलीमुस्तं चव्यं कटुकरोहिणी ।
लिह्याद्वा मधुनाचूर्णं मूरुस्तम्भार्दितो नरः ॥ ३२ ॥
घृतं मैरेयकं दद्या दूरुस्तम्भे कफोत्तरे ।
दद्याच्छुण्ठीघृतं वापि वैश्वानरमथापि वा ॥
सैन्धवाद्यं हितं तैलममृताद्योऽपि गुग्गुलुः ॥ ३३ ॥

कुष्टं श्रीवेष्टकोदीच्यं सरलं दारुकेसरम्।
अजगन्धाश्वगन्धे च तैलं तैः सार्षपं पचेत् ॥ ३४ ॥
सक्षौद्रं मात्रया तद्द दूरुस्तम्भार्दितः पिबेत् ॥
इति कुष्टाद्यं तैलम्।

पलाभ्यां पिप्पलीमूल नागरादष्टकट्वरः।
तैलप्रस्थः समो दध्ना गृध्रस्यूरुग्रहापहः ॥ ३५ ॥
मस्तु हं दधिसंभूतं तक्रं कट्वर उच्यते।
अष्टकट्वरतैलेऽत्र तैलं सार्षपमिष्यते ॥
पिप्पलीमूलग्रण्ठ्योश्च प्रत्येकं द्विपलं कृतम् ॥ ३६ ॥
इत्यष्टकट्वरं तैलम्।

## इति वङ्गसेने ऊरुस्तम्भनिदानचिकित्साधिकारः समाप्तः ॥ २६ ॥

—०—

## अथामवातनिदानमाह।

विरुद्धाहारचेष्टस्य मन्दाग्नेर्निश्चलस्य च।
स्निग्धं भुक्तवतो ह्यन्नं व्यायामश्चाथ कुर्वतः ॥ १ ॥
वायुना प्रेरितो ह्यामः श्लेष्मस्थानं प्रधावति।
तेनात्यर्थं विदग्धोऽसौ धमनीः प्रतिपद्यते ॥ २ ॥
वातपित्तकफैर्भूयो दूषितो ह्यन्नजो रसः।
स्रोतांस्यभिष्यन्दयति नानावर्णोऽतिपिच्छिलः ॥ ३ ॥
जनयत्यग्निदौर्बल्यं हृदयस्य च गौरवम्।
व्याधीनामाश्रयो ह्येष आमसंज्ञोऽतिदारुणः ॥ ४ ॥
अजीर्णाद्योरसोजातः संचितः संक्रमेण वै।

आमरुजां सलभते शिरोगात्ररुजाकर: ॥ ५ ॥
युगपत् कुपितावेतौ त्रिकसन्धिप्रवेशकौ ।
स्तब्धञ्च कुरुते गात्र मामवात: स उच्यते ॥ ६ ॥
अङ्गमर्दोऽरुचिस्तृष्णा आलस्यं गौरवं ज्वर: ।
अपाक: शूनताङ्गाना मामवातस्य लक्षणम् ॥ ७ ॥
सकष्ट: सर्वरोगाणां यदा प्रकुपितो भवेत् ।
हस्तपादशिरोगुल्फ त्रिकजानूरुसन्धिषु ॥ ८ ॥
करोति सरुजं शोथं यत्र दोष: प्रपद्यते ।
सदोषो रुजतेऽत्यर्थं व्याविद्ध इव वृश्चिकै: ॥ ९ ॥
जनयेत् सोऽग्निदौर्बल्यं प्रसेकारुचिगौरवम् ।
उत्साहहानिर्वैरस्यं दाहञ्च बहुमूत्रताम् ॥ १० ॥
कुक्षौ कठिनतां शूलं तथा निद्रा विपर्ययम् ।
तृट्छर्दिभ्रममूर्च्छाश्च हृद्ग्रहं विड्विबन्धनम् ॥ ११ ॥
जाड्यान्त्रकूजमानाहं कष्टांश्चान्यानुपद्रवान् ॥ १२ ॥
पित्तात्सदाहरागञ्च सशूलं पवनानुगम् ।
स्तिमितं गुरुकण्डूकं कफजुष्टं तमादिशेत् ॥ १३ ॥
एकदोषानुग: साध्यो द्विदोषो याप्य उच्यते ।
सर्वदेहचर: शोथ: सकृच्छ्र: सान्निपातिक: ॥ १४ ॥

—०—

## अथ चिकित्सामाह ।

लङ्घनं स्वेदनं तिक्तं दीपनानि कटूनि च ।
विरेचनं स्नेहनञ्च बस्तयश्चाममारुते ॥ १५ ॥
रूक्ष: स्वेदो विधातव्यो वालुकापुटकैस्तथा ।

उपनाहाश्च कर्त्तव्या स्तेऽपि स्नेहविवर्जिताः ॥ १६ ॥
आमवाताभिभूताय पीड़िताय पिपासया।
पञ्चकोलेन संसिद्धं पानीयं हितमुच्यते ॥ १७ ॥
शुष्कमूलकयूषस्तु यूषं वा पाञ्चमौलिकम्।
रसकं काञ्जिकं वापि शुण्ठिचूर्णावचूर्णितम् ॥ १८ ॥
सौवीरं खिन्नवार्त्ताकं तथा तिक्तफलानि च ॥ १९ ॥
वास्तूकशाकं सारिष्टं शाकं पौनर्नवं हितम्।
पटोलं गोक्षुरश्चैव वरुणं कारवेल्लकम् ॥ २० ॥
यवान्नं कोरदूषान्नं पुराणं शालिषष्टिकम्।
लावकानां तथा मांसं हितं तक्रेण संस्कृतम् ॥ २१ ॥
हितं च यूषं कौलुत्थं कालायश्रणकस्य च।
रूच्यं दद्याद्यथा सात्म्य मामवाते हितं च यत् ॥ २२ ॥
शतपुष्पावचाविश्व श्वदंष्ट्रावरुणत्वचः।
पुनर्नवा संदेवाह्व शठीमुण्डितिकाः समाः ॥ २३ ॥
प्रसारणी च तर्कारी फलञ्च मदनस्य च।
शुक्तकाञ्जिकपिष्टाश्च सुखोष्णालेपने हिताः ॥ २४ ॥
अहिंस्राकेमुकामूलं शिग्रुवल्मीकमृत्तिका।
मूत्रपिष्टैश्च कर्त्तव्य मुपनाह प्रलेपनम् ॥ २५ ॥
चित्रकं कटुका पाठा कलिङ्गातिविषामृताः।
देवदारुवचामुस्ता नागरातिविषाभयाः ॥
पिबेदुष्णाम्बुना नित्य मामवातस्य भेषजम् ॥ २६ ॥
शठीशुण्ठ्यभया चोग्रा देवाह्वातिविषामृता।
कषायमामवातस्य पाचनं रूक्षभोजनम् ॥ २७ ॥
रास्नां गुडूचीमैरण्डं देवदारुमहौषधम्।
पिबेत् सर्वाङ्गिके वाते सामे सन्ध्यस्थिमज्जगे ॥ २८ ॥

पिप्पली पिप्पलीमूल चव्यचित्रकनागरैः ।
क्वथितं वारितत्पेय आमवातनिबर्हणम् ॥ २९ ॥
शठीविश्वौषधी कल्कं वर्षाभूक्वाथसंयुतम् ।
सप्तरात्र पिबेज्जन्तु रामवातविनाशनम् ॥ ३० ॥
रास्नामृतारग्वधदेवदारु त्रिकण्टकैरण्डपुनर्नवानाम् ।
क्वाथ पिबेन्नागरचूर्णमिश्र जङ्घोरुपार्श्वत्रिकपृष्टशूले ॥ ३१ ॥
आमवाते कणायुक्तं दशमूलीजलं पिबेत् ।
खादेद्वाप्यभया विश्व गुडूचीं नागरेण वा ॥ ३२ ॥
चित्रकेन्द्रयवापाठा कटुकातिविषाभया ।
आमाशयोत्थवातघ्न चूर्णं पेयं सुखाम्बुना ॥ ३३ ॥
पुनर्नवामृताशुण्ठी शताह्वाह्वदारुकम् ।
शटीमुण्डतिकाचूर्ण मारनालेन पाययेत् ॥
आमवातं निहन्त्याशु गृध्रसीमुरुतामपि ॥ ३४ ॥
इति पुनर्नवादि चूर्णम् ।
कर्षं नागरचूर्णस्य काञ्जिकेन पिबेत् सदा ।
आमवातप्रशमनं कफवातहरं परम् ॥ ३५ ॥
पञ्चमूलकचूर्णन्तु पिबेदुष्णेन वारिणा ।
मन्दाग्निशूलगुल्मघ्न कफारोचकनाशनम् ॥ ३६ ॥
आमवातगजेन्द्रस्य शरीरवनचारिणः ।
एक एव निहन्त्याशु ह्येरण्डस्नेहकेसरी ॥ ३७ ॥
एरण्डतैलयुक्तां हरतकीं भक्षयेन्नरो विधिवत् ।
आमनिलार्तियुक्तो गृध्रसी हृद्वर्दितो नियतम् ॥ ३८ ॥
आरग्वधस्य पत्राणि भृष्टानि कटुतैलतः ।
आमघ्नानि नरः कुर्यात् सूपभक्तानुतानि च ॥ ३९ ॥

## अथ कटिग्रहलक्षणमाह।

वायुः कट्याश्रितः शुद्धः सामो वा जनयेद्रुजम्।
कटिग्रहः स एवोक्तः पङ्गुः सक्थिद्वयाश्रितः॥ ४०॥

—०—

## तस्य चिकित्सांचाह।

शुण्ठीगोक्षुरकः क्वाथः प्रातः प्रातर्निषेवितः।
सामे वाते कटीशूले पाचनो रुक्प्रणाशनः॥ ४१॥
यवक्षारसमायुक्तो मूत्रकृच्छ्रविनाशनः॥ ४२॥
दशमूलीकषायेण पिबेद्वा नागराम्भसा।
कुक्षिवस्तिकटीशूले तैलमैरण्डसम्भवम्॥ ४३॥
महौषधगुडूच्योस्तु क्वाथं पिप्पलीसंयुतम्।
पिबेदामे सरुक्कोष्टे कटीशूलेविशेषतः॥ ४४॥
विशोध्यै रण्डबीजानि पिष्ट्वा क्षीरे विपाचयेत्।
तत्पायसं कटीशूले गृध्रस्यां परमौषधम्॥ ४५॥
शुकतरुवल्कलसहितं गोमूत्रं स्थापितं तु सप्ताहम्।
द्विगुणवचाशतपुष्पासैन्धवयुक्तेन तेनाथ॥ ४६॥
तत्पुटकेन च हन्यात् कटीरुजं दारुणं पुंसाम्।
आममेदो वृद्धिभवान् विकारांश्चानिलोद्भवान्॥ ४७॥
अमृतानागरगोक्षुर मुण्डतिकावरुणकैः कृत चूर्णम्।
मस्त्वारणालपीत सामानिलनाशन ख्यातम्॥ ४८॥

इत्यमृताद्यं चूर्णम्।

रास्नैरण्डशतावरीसहचरादुःस्पर्शवासामृता
देवाह्वातिविषाभयाघनशठीशुण्ठीकषायः कृतः।

पीतः सोरुवुतैल एष विहितः सामे सशूलेऽनिले
कट्यूरुत्रिकपार्श्वपृष्टजठरे कोष्टे च वातार्त्तिजित् ॥ ४८ ॥

इति लघुरास्नादिः ।

रास्नावातारिमूलञ्च वासकः सदुरालभः ।
शठीदारुवलामुस्तं नागरातिविषाभया ॥ ५० ॥
श्वदंष्ट्राव्याधिघातञ्च मिसिधान्यं पुनर्नवा ।
अश्वगन्धामृताकृष्णा वृद्धदारुशतावरी ॥ ५१ ॥
वचासहचरा चैव चविकाबृहतीद्वयम् ।
समभागान्वितैरेतै रास्नाद्विगुणभागिकैः ॥ ५२ ॥
कषायं पाययेत् सिद्ध मष्टभागावशेषितम् ।
शुण्ठीचूर्णसमायुक्त माभाद्येन युतं तथा ॥ ५३ ॥
अलवुपादिसंयुक्त मजमोदादिना तथा ।
यथादोषं यथा व्याधिः प्रचेयं कारयेद्भिषक् ॥ ५४ ॥
सर्वेषु वातरोगेषु सन्धिमज्जगतेषु च ।
कुब्जके वामने चैव पक्षाघाते तथार्दिते ॥ ५५ ॥
जानुजङ्घास्थिपीडासु गृध्रस्याञ्च हनुग्रहे ।
प्रशस्तवातरक्ते स्या दुरुस्तम्भे तथाऽर्शसि ॥ ५६ ॥
विड्वाचीगुल्महृद्रोग विषूचीक्रोष्टुशीर्षके ।
अन्त्रवृद्धौ श्लीपदे च योनिशुक्रामये तथा ॥ ५७ ॥
पुंसां मेढ्रगते रोगे स्त्रीणां वन्ध्यामयेपि च ।
योषितां गर्भदं मुख्यं नास्यस्य परमं क्वचित् ॥ ५८ ॥
सर्वेषां पाचनानान्तु श्रेष्टमेतद्धि पाचनम् ।
महारास्नादिको नाम्ना प्रजापतिविनिर्मितः ॥ ५९ ॥

इति महारास्नादिः ।

रास्नाविश्वविडङ्गानि रुवुकत्रिफला तथा।
दशमूलं पृथक् श्यामा क्वाथो वातामयापहः॥ ६०॥
अर्द्धावभेदके चाढ्ये अर्द्दिते वातखञ्जके।
नेत्ररोगे शिरःशूले ज्वरापस्मारयोस्तथा॥
मनोभ्रंशे च विविधे कथितश्च सुखप्रदम्॥ ६१॥

इति रास्नादशमूलक्वाथः।

अलम्बुषागोक्षुरकत्रिफलानागराम्हता।
यथोत्तरं भागवृद्धा श्यामाचूर्णञ्च तत्समम्॥ ६२॥
पिवेन्मस्तु सुरातक्र काञ्जिकोष्णोदकेन वा।
आमवातं जयत्याशु रक्तपित्तं सशोणितम्॥ ६३॥
त्रिकजानूरुसन्ध्यस्थि ज्वरारोचकनाशनम्।
अलंबुषादिकं चूर्णं रोगानीकविनाशनम्॥ ६४॥
हरीतक्यमृताधात्रीभिः प्रसिद्धा त्रिफला क्रमात्।
प्रत्येकं तेन वा युञ्ज्यात् भागवृद्धिर्यथोत्तरम्॥ ६५॥

इत्यलंबुषाद्यं चूर्णम्।

आभारास्नागुडूची च शतावरी महौषधम्।
शतपुष्पाश्वगन्धा च हपुषा हृद्दारकम्॥ ६६॥
यवानी चाजमोदा च समभागानि कारयेत्॥
सूक्ष्मचूर्णमिदं कृत्वा विडालपदकं पिवेत्॥ ६७॥
कटीग्रहं गृध्रसीञ्च मन्यास्तम्भं हनुग्रहम्।
ये च कायगता रोगा सर्वांस्तांश्च प्रणाशयेत्॥ ६८॥
चूर्णमाभादिनामेदं सर्ववातविकारनुत्॥

इत्याभादिचूर्णम्।

अलम्बुषागोक्षुरकं गुडूचीवृद्धदारकम्।
पिप्पलीत्रिवृतामुस्ता वरुणं स पुनर्नवम्॥ ६९॥

त्रिफलानागरञ्चैव सूक्ष्मचूर्णानिकारयेत् ।
मस्त्वारणालतक्रेण पयो मांसरसेन वा ।
आमवातं जयत्याशु श्वयथुं सन्धिसंस्थितम् ॥ ७० ॥

इत्यलम्बुषाद्यं चूर्णम् ।

माणिमन्थस्य भागो द्वौ यवान्यास्तावदेव तु ।
भागास्त्रयोऽजमोदाया नागराद्भागपञ्चकम् ॥ ७१ ॥
दश द्वौ च हरीतक्याः श्लक्ष्णचूर्णीकृतं शुभम् ।
मस्त्वारनालतक्रेण सर्पिषोष्णोदकेन वा ॥ ७२ ॥
पीतं जयत्यामवातं गुल्महृद्वस्तिजान् गदान् ।
प्लीहानं हन्ति शूलादीं नानाहं गुदजानि च ॥ ७३ ॥
विबन्धं जाठरान् रोगान् तथा वै हस्तपादजान् ।
वातानुलोमनमिदं चूर्णं वैश्वानरं स्मृतम् ॥ ७४ ॥

इति वैश्वानरं चूर्णम् ।

पुष्ट्यर्थं पयसासाध्यं दध्नाविण्मूत्रसंग्रहे ।
दीपनार्थं मतिमता मस्तुना वा प्रकीर्त्तितम् ॥ ७५ ॥
सर्पिर्नागरकल्केन सौवीरकचतुर्गुणम् ।
सिद्धमग्निकरं श्रेष्टं मामवातहरं परम् ॥ ७६ ॥

इति शुण्ठीघृतम् ।

नागरक्वाथकल्काभ्यां घृतप्रस्थं विपाचयेत् ।
चतुर्गुणेन तेनाथ केवलेन जलेन वा ॥ ७७ ॥
वातश्लेष्मप्रशमनं मग्निसन्दीपनं परम् ।
नागरं घृतमित्युक्तं कटीशूलामनाशनम् ॥ ७८ ॥

इति द्वितीयशुण्ठीघृतम् ।

हिंगुत्रिकटुकं चव्यं माणिमन्थं तथैव च ।

कल्कान् कृत्वा पृथक् सर्वान् घृतप्रस्थं विपाचयेत् ॥ ७९ ॥
आरनालाढकं दत्वा तत्सर्पिर्जठरापहम्।
शूलं विबन्धमानाह मामवातं कटिग्रहम् ॥
नाशयेद् ग्रहणीदोषं मन्दाग्नेर्दीपनं परम् ॥ ८० ॥

इति काञ्जिकाद्यं घृतम्।

शृङ्गवेरं यवक्षारं पिप्पलीमूल पिप्पली।
सचव्यं चित्रकं हिंगु माणिमन्थं तथैव च ॥ ८१ ॥
कल्कं कृत्वा तु मतिमान् घृतप्रस्थं विपाचयेत्।
आरनालाढकं दत्वा तत्सर्पिर्जठरापहम् ॥ ८२ ॥
*शूलं विबन्धमानाह मामवातं कटिग्रहम्।*
नाशयेद् ग्रहणीरोग मग्निसन्दीपनं परम् ॥ ८३ ॥

इति शृङ्गवेराद्यं घृतम्।

पिबेद्विन्दुघृतं वापि धान्वन्तरमथापि वा।
महाशुण्ठीघृतं चैव सामवाते पुनः पुनः ॥ ८४ ॥
यत्किञ्चिल्लेखनं सर्पि दीपनं पाचनञ्च यत्।
तत्सर्वमामवातेषु योज्यं वा मस्तुना घृतम् ॥ ८५ ॥
अजमोदमरिचपिप्पलीविड़ङ्ग सुरदारुचित्रकशताह्वा।
सैन्धवपिप्पलीमूलं भागा नवकस्य पलिकाः स्युः ॥ ८६ ॥
शुण्ठीदशपलिका स्यात् पलानि तावन्ति वृद्धदारस्य।
अभयापलानि पञ्च तच्चूर्णं कारयेच्छ्लक्ष्णम् ॥ ८७ ॥
समगुडवटकानदतः चूर्णं वा कोष्णवारिणा पिबतः।
नश्यन्त्यामानिलजाः सर्वे रोगाः सुदारुणाः शीघ्रम् ॥ ८८ ॥
विषूचिकाप्रतितूनी तूनीहृद्रोगाः गृध्रसी चोग्रा।
कटिवस्तिगुदस्फुटनं चैवास्थिजङ्घयोस्तीव्रम् ॥ ८९ ॥
श्वयथुस्तथाङ्गसन्धिषु ये चान्ये चामवातसंभूताः।

सर्वे प्रयान्ति नाशं तम इव सूर्यांशुविध्वस्तम् ॥ ९० ॥
सुद्दीधनमारोग्यं स्थिरतरुणं वलीपलितनाशनञ्च ।
कुरुते सततामभ्यासाद् गुणानन्यांस्तथा सुबहून् ॥ ९१ ॥
इत्यजमोदादिवटकः ।

चित्रकं पिप्पलीमूलं यवानीकारवी तथा ।
विडङ्गमजमोदा च जीरकं सुरदारु च ॥ ९२ ॥
चव्यैलासैन्धवं कुष्टं रास्नागोक्षुरधान्यकम् ।
त्रिफलामुस्तकं व्योषं त्वगुशीरं यवाग्रजम् ॥ ९३ ॥
तालीशपत्रं पलञ्च सूक्ष्मचूर्णानि कारयेत् ।
यावन्त्येतानि चूर्णानि तावन्मात्रञ्च गुग्गुलुः ॥ ९४ ॥
संमर्द्य सर्पिषागाढं स्निग्धे भाण्डे निधापयेत् ।
ततो मात्रां प्रयुञ्जीत यथेष्टाहारवानपि ॥ ९५ ॥
योगराज इति ख्यातो योगोऽयममृतोपमः ।
आमवाताढ्यवातादीन् कृमिदुष्टव्रणानि च ॥ ९६ ॥
प्लीहगुल्मोदरानाह दुर्नामानि विनाशयेत् ।
अग्निञ्च कुरुते दीप्तिं तेजोवृद्धिबलं तथा ॥
वातरोगान् जयत्येष सन्धिमज्जागतानपि ॥ ९७ ॥
इति योगराजगुग्गुलुः ।

नागरस्य पलान्यष्टौ घृतस्य पलविंशतिः ।
क्षीराढकसमायुक्तं खण्डस्यार्धशतं पलम् ॥ ९८ ॥
व्योषत्रिजातकद्रव्याम् प्रत्येकञ्च पलं पलम् ।
निदध्याच्चूर्णितं तत्र खादेदग्निबलं प्रति ॥ ९९ ॥
आमवातप्रशमनं बलपुष्टिविवर्धनम् ।
वय्यमायुष्यमोजस्यं वलीपलितनाशनम् ॥ १०० ॥
इति खण्डीखण्डः ।

पलं शतं रसोनस्य तिलस्य कुडवं तथा।
हिंगुत्रिकटुकं चारौ द्वौ पञ्चलवणानि च ॥ १०१ ॥
शतपुष्पा तथा कुष्टं पिप्पलीमूलचित्रकौ।
अजमोदायवानी च धान्यकञ्चापि बुद्धिमान् ॥ १०२ ॥
प्रत्येकञ्च पलञ्चैषां सूक्ष्मचूर्णानि कारयेत्।
घृतं भाण्डे दृढे चैव स्थापयेद्दिनषोडश ॥ १०३ ॥
प्रचिपेत्तैलमानीय प्रस्थार्द्धं काञ्जिकस्य च।
खादेत्कर्षप्रमाणन्तु तोयं मद्यं पिवेदनु ॥ १०४ ॥
आमवाते तथा वाते सर्वाङ्गैकाङ्गसंस्थिते।
अपस्मारेऽनले मन्दे श्वासे कासे गरेषु च ॥ १०५ ॥
सोन्मादे वातभग्ने च शूले जन्तुषु शस्यते।

इति रसोनपिण्डः।

प्रसारिण्या रसे सिद्धं तैलमैरण्डजं पिबेत्।
सर्वदोषहरञ्चैव कफरोगहरं परम् ॥ १०६ ॥

इति प्रसारिणीतैलम्।

द्विपञ्चमूलीनिर्यासे फलदध्यम्लकाञ्जिके।
तैलं कट्यूरुपार्श्वार्त्तिं कफवातामतन्द्रदान् ॥ १०७ ॥
हन्ति वस्तिप्रदानेन करोत्यग्निबलं महत् ॥ १०८ ॥

इति द्विपञ्चमूलाद्यं तैलम्।

सैन्धवं श्रेयसीरास्ना शतपुष्पायवानिका।
सर्जिकामरिचं कुष्टं शुण्ठी सौवर्चलं विडम् ॥ १०९ ॥
वचाजमोदाजरणं पौष्करं मधुकं कणा।
एतान्यर्धपलांशानि सूक्ष्मपिष्टानि कारयेत् ॥ ११० ॥
प्रस्थमेरण्डतैलस्य प्रस्थं स्याच्छतपुष्पजम।
काञ्जिकं द्विगुणं दत्वा मस्तु च द्विगुणं तथा ॥ १११ ॥

एतत्सम्भृत्यसंभारं शनैर्मृद्वग्निना पचेत् ।
सिद्धमेतत्प्रयोक्तव्य मामवातहरं परम् ॥ ११२ ॥
पानाभ्यञ्जनवस्तौ च कुरुतेऽग्निबलं भृशम् ।
वातार्त्तिवङ्क्षणे शस्तं कटीजानूरुसन्धिजे ॥ ११३ ॥
शूले हृत्पार्श्वजे चैव वातश्लेष्मनिपीडिते ।
वाह्यायामार्दितानाहे प्वऽन्त्रवृद्धिनिपीडिते ॥
अन्यांश्चानिलजान् रोगा न्नाशयत्याशुदेहजान् ॥ ११४ ॥

इति बृहत्सैन्धवादितैलम् ।

स्वल्पप्रसारणीतैलं तैलं वा सैन्धवादिकम् ।
दशमूल्याद्यतैलेन वस्तिदानं प्रशस्यते ॥ ११५ ॥
तैलस्य त्रिपलं दद्यात् काञ्जिकस्य चतुष्पलम् ।
दशमूलरस मूत्रं पृथक् पञ्चपलानि च ॥ ११६ ॥
वचामदनयष्ट्याह्वा शताह्वाकुष्टसैन्धवैः ।
पिप्पल्यतिविषामुस्ता रास्नाकट्फलपौष्करैः ॥ ११७ ॥
अक्षाग्निकैश्च तत्सर्वं मन्थयीत विचक्षणः ।
प्रस्थार्धं प्रथमं देयो वस्तिभिरविशङ्कितः ॥ ११८ ॥
द्वितीये च तृतीये च वर्जयेत्प्रस्रुतद्वयम् ।
सर्ववातविकारेषु मोहे चाष्टयणामये ॥ ११९ ॥
कुक्षौ हृत्पार्श्वपृष्टेपु जानुजङ्घाकटीग्रहे ।
विबन्धानाह रोगेषु शर्कराश्मरीपीड़िते ॥ १२० ॥
भग्नास्थिपृष्टगात्रेषु पिच्चितेषु क्षतेषु च ।
एतन्निरूहवस्त्राञ्जौ निरायासो महागुण. ॥ १२१ ॥

इति निरूहः ।

दधिमत्स्यं गुडक्षीरं पोतकीमाषपिष्टकम् ।
वर्जयेदामवातार्त्तो मांसमानूपजञ्च यत् ॥ १२२ ॥

अभिष्यन्दिकरा ये च ये चान्ये गुरुपिच्छलाः ।
वर्जनीयाः प्रयत्नेन आमपीडार्दितैर्नरैः ॥ १२३ ॥
शोकाक्षेपकसंकोच स्तम्भश्वयथुकम्पनम् ।
हनुग्रहार्दितं खञ्जं पांगुल्यं सुप्तवातता ॥ १२४ ॥
सन्धिच्युतिः पर्वभेदो मेदो मज्जास्थिजा गदाः ।
एते स्थानस्य गाम्भीर्यात् सिध्येयु र्यत्नतो नवाः ।
तस्माज्जयेन्नवान्येव सुभिषक् निरुपद्रवान् ॥ १२५ ॥

## इति वङ्गसेने आमवातनिदानचिकित्साधिकारः समाप्तः ॥ २७ ॥

—०—

## अथ शूलनिदानमाह ।

दोषैः पृथक् समस्तामद्वन्द्वैः शूलोऽष्टधा भवेत् ।
सर्वेष्वेतेषु शूलेषु प्रायेण पवनः प्रभुः ॥ १ ॥
व्यायामयानादतिमैथुनाच्च प्रजागराच्छीतजलातिपानात् ।
कलायमुद्गाढकिकोरदूषादत्यर्थरूक्षाध्यशनाभिघातात् ॥ २ ॥
कषायतिक्तातिविरूढजान्न विरुद्धवल्लूरकशुष्कशाकात् ।
विट्शुक्रमूत्रानिलवेगरोधाच्छोकोपवासादतिहास्यभाष्यात् ॥ ३ ॥
वायुः प्रवृद्धो जनयेद्धि शूलं हृत्पार्श्वपृष्ठत्रिकबस्तिदेशे ।
जीर्णे प्रदोषे च घनागमे च शीते च कोपं समुपैति गाढम् ॥ ४ ॥
मुहुर्मुहुश्चोपशमप्रकोपौ विड्वातसंस्तम्भनतोदभेदैः ।
संस्वेदनाभ्यञ्जनमर्दनाद्यैः स्निग्धोष्णभोज्यैश्च शमं प्रयाति ॥ ५ ॥

—०—

## अथ चिकित्सामाह ।

वमनं लङ्घनं स्वेदः पाचनं फलवर्त्तयः ।
क्षारचूर्णानि गुटिका शस्यते शूलशान्तये ॥ ६ ॥
विज्ञायवातशूलन्तु स्निग्धस्वेदैरुपाचरेत् ।
पायसैः कृशरापिण्डैः स्निग्धैर्वा पिशितोत्कटैः ॥ ७ ॥
आशुकारी हि पवनस्तस्मात्तं त्वरया जयेत् ।
तस्य शूलाभिपन्नस्य स्वेद एव सुखावहः ॥ ८ ॥
विल्वैरण्डतिलैः कृत्वा गुटिकामम्लपेषिताम् ।
वातशूलोपशान्त्यर्थं प्रमृज्यादुष्णया तया ॥ ९ ॥
तिलैश्च गुटिकां कृत्वा भ्रामयेज्जठरोपरि ।
गुटिकाशमयत्याशु शूलञ्चैव सुदुस्तरम् ॥ १० ॥
नाभिलेपाज्जयेच्छूलं मदनः काञ्जिकान्वितः ।
जीवन्तीमूलकल्को वा सतैलः पार्श्वशूलहा ॥ ११ ॥

वातात्मकं हन्त्यचिरेण शूलं स्नेहेन युक्तस्तु कुलित्थयूषः ।
ससैन्धवो व्योषयुतः सलावः सहिंगुसौवर्चलदाडिमाढ्यः ॥१२॥

बलापुनर्नवैरण्ड वृहतीद्वयगोक्षुरम् ।
सहिंगुलवणोपेतं सद्यो वातरुजापहम् ॥ १३ ॥

इति बलादिचूर्णम् ।

तुम्बुरूण्यभयाहिंगु पौष्करं लवणत्रयम् ।
पिबेद्यवांबुना वात शूलगुल्मापतन्त्रकी ॥ १४ ॥

इति तुंबुरादिचूर्णम् ।

हिंग्वम्लकृष्णामलकं यवानी चोराभयासैंधवतुल्यभागम् ।
चूर्णं पिबेदारुणिमण्डमिश्रं शूले प्रवृद्धेऽनिलजे शिवाय ॥ १५ ॥

विल्वमैरण्डजं मूलं क्वाथयित्वा जलं पिबेत् ।

मणिराजतताम्राणि भाजनानि च सर्वशः ।
परिपूर्णानि तोयेन शूलस्योपरिनिक्षिपेत् ॥ २६ ॥
विरेचनं पित्तहरं च शस्तं रसश्च शस्तः शशलावकानाम् ।
सतर्पणं लाजमधूपपन्नं योगाः सुशीतामधुसंप्रयुक्ताः ॥ २७ ॥
शतावरीसयष्ट्याह्वा वाट्यालकुशगोक्षुरैः ।
शृतशीतं पिबेत् तोयं सक्षौद्रगुडशर्करम् ।
पित्तासृग्दाहशूलघ्नं सद्योदाहज्वरापहम् ॥ २८ ॥
धात्रीरसं विदार्या वा वायन्ती गोस्तनाम्बु वा ।
पिबेत् सशर्करं सद्यः पित्तशूल निषूदनम् ॥ २९ ॥
त्रिफलारग्वधक्वाथं सक्षौद्रं शर्करान्वितम् ।
पाययेद्रक्तपित्तार्तं दाहशूलनिवारणम् ॥ ३० ॥
छर्द्यां ज्वरे पित्तभवे च शूले घोरे विदाहे तृषितेऽतिमात्रम् ।
यवस्य पेयां मधुना विमिश्रां पिबेत् सुशीतां मनुजः सुखार्थी ॥३१॥
शतावरीरसं क्षौद्र युक्त प्रात. पिबेन्नरः ।
दाहशूलोपशान्त्यर्थं सर्वपित्तामयापहम् ॥ ३२ ॥
बृहत्यौ गोक्षुरैरण्डकुशकाशेक्षुवालिकाः ।
पीताः पित्तभवं शूल सद्योहन्युः सुदारुणम् ॥ ३३ ॥
प्रलिह्यात्पित्तशूलघ्नं धात्रीचूर्णं समाक्षिकम् ।
सगुडाहृतमिश्रा वा शूलं हन्याहरीतकी ॥ ३४ ॥
कुशादिमूलयष्ट्याह्वैः क्षीरमर्दोदके शृतम् ।
रक्तपित्तोपशमनं वेदना चोपशाम्यति ॥ ३५ ॥
कुशादिमूलारुणपद्मकल्कैः शतावरीकोमलकांशुसाधितम् ।
घृतं पयस्यारुणपित्तशूलजित् सिता मधूकारुणकल्कसाधितम् ॥३६॥
कुशाद्यं घृतम् । इति पित्तशूलम् ।

—०—

## अथ श्लेष्मशूलमाह।

आनूपवारिजकिलाटपयोविकारै-
र्मांसेक्षुपिष्टकृशरातिलशष्कुलीभिः।
अन्यैर्बलासजनकैरपि हेतुभिश्च
श्लेष्माप्रकोपमुपगम्य करोति शूलम्॥ ३७॥
हृल्लासकासासदनारुचिसंप्रसेकै-
रामाशयेस्तिमितकोष्ठशिरोगुरुत्वैः।
भुक्ते सदैव हि रुजं कुरुतेऽतिमात्रम्
सूर्य्योदये च शिशिरे कुसुमागमे च॥ ३८॥

—०—

## अथ चिकित्सामाह।

संस्वेद्यकोष्णसचार सक्तुतक्रैस्तथापरैः।
प्रवाप्य कफशूलार्तं मवश्यमुपवासयेत्॥ ३९॥

प्राश्यन्न जाङ्गलं मांसं सारिष्टं[१] कटुकं रसम्।
मद्यानि जीर्णगोधूमं कफशूले प्रयोजयेत्॥ ४०॥
लवणत्रयसयुतं पञ्चकोलकरामठम्।
सुखोष्णेनाम्बुना पानं कफशूले प्रदापयेत्॥ ४१॥
श्लेष्मशूलहरा पेया पञ्चकोलेन साधिता॥ ४२॥
व्याघ्री ससिंहीफलबिल्वमूलं शिलोद्भवं गोक्षुरकञ्च तुल्यम्।
एरण्डमूलं द्विगुणं च पक्त्वा पिबेद्यवक्षारयुतं कषायम्॥ ४३॥
हृत्कुक्षिपार्श्वानुगतं निहन्त्या च्छूलं नराणां कफजं महद्दम्।
इति श्लेष्मशूलम्।

१ अरिष्टं भेषजश्चारि कायसाध्यमरिष्टम्।

## अथ द्वंद्वजं त्रिदोषजंच शूलमाह ।

द्विदोषलक्षणैरेतै र्विद्याच्छूलं द्विदोषजम् ॥ ४४ ॥
सर्वेषु दोषेषु च सर्वलिङ्गं विद्यात्त्रिपक् सर्वभवञ्च शूलम् ।
सुकष्टमेनं विषवज्रकल्पं विवर्जनीयं प्रवदन्ति तज्ज्ञाः ॥ ४५ ॥

—०—

## अथ चिकित्सामाह ।

शङ्खचूर्णं सलवणं सहिंगुव्योषसंयुतम् ।
उष्णोदकेन तत्पीतं शूलं हन्ति त्रिदोषजम् ॥ ४६ ॥
गोमूत्रसिद्धं मंडूरं त्रिफलाचूर्णसंयुतम् ।
विलिह्यन्मधुसर्पिर्भ्यां शूलं हन्ति त्रिदोषजम् ॥ ४७ ॥
विदारीदाडिमरसः सव्योषलवणान्वितः ।
क्षौद्रयुक्तो जयत्याशु त्रिदोषप्रभवां रुजम् ॥ ४८ ॥
एरण्डफलमूलानि वृहतीद्वयगोक्षुरम् ।
पर्णिन्यः सहदेवी च सिंहपुच्छीक्षुवालिका ॥ ४९ ॥
तुल्यैरेतैः शृतं तोयं यवक्षारयुतं पिवेत् ।
पृथग्दोषभवं शूलं हन्यात्सर्वं भवं तथा ॥ ५० ॥
इत्येरण्डद्वादशकः क्वाथः । इति त्रिदोषशूलम् ।

—०—

## अथामशूलमाह ।

आटोपहृल्लासवमीगुरुत्वं स्तैमित्यमानाह कफप्रसेकैः ।
कफस्य लिङ्गेन समानलिङ्गमामोद्भवं शूलमुदाहरन्ति ॥ ५१ ॥

—०—

## अथ चिकित्सामाह।

आमशूले क्रिया कार्य्या कफशूलविनाशिनी।
सेव्यमामहरं सर्वं यद्यदग्निविवर्द्धनम्॥ ५२॥
चित्रकग्रन्थिकैरण्ड शुण्ठीधान्यजलैः शृतम्।
शूलानाहविबन्धेषु सहिंगुविड़सैन्धवम्॥ ५३॥

एरंडविल्वबृहतीद्वयमातुलुङ्ग
पाषाणभित्त्रिकटमूलकृतः कषायः।
सक्षारहिंगुलवणोरुबुतैलमिश्रः
श्रोण्यंसमेढ्रहृदयस्तनरुक्षुपेयः॥ ५८॥

इत्येरण्डसप्तकः कषायः।

---

## अथ शूलस्थानमाह।

वातात्मकं वस्तिगतं वदन्ति पित्तात्मकं चापि वदन्ति नाभ्याम्।
नाभिकुक्षौ कफसन्निसृष्टं सर्वेषु देशेषु च सन्निपातात्॥ ५९॥
वस्तौ हृत्कण्ठपार्श्वेषु सशूलः कफवातिकः।
कुक्षौ हृन्नाभिमध्येषु सशूलः कफपैत्तिकः॥
दाहज्वरकरो घोरो विज्ञेयो वातपैत्तिकः॥ ६०॥
एकदोषोत्थितः साध्यः कृच्छ्रसाध्यो द्विदोषजः।
सर्वदोषोत्थितो घोरस्त्वसाध्यो भूर्युपद्रवः॥ ६१॥
निगृह्यमारुतं श्लेष्माकुक्षिपार्श्वव्यवस्थितः।
साध्मानाटोपसंरुद्धः सूचीभिरिव निस्तुदन्॥ ६२॥
उच्छ्वसित्येव वक्त्रेण नवान्नमभिनन्दति।
न च निद्रामुपैत्येष पार्श्वशूलः प्रकीर्त्तितः॥ ६३॥
प्रकुप्यति यदा कुक्षौ वह्निमाक्रम्यमारुतः।

तदास्य भोजनं भुक्तं वातस्तब्धं न पच्यते ॥ ६४ ॥
उच्छ्वसन्नतिमात्रेण शूलेनाऽऽहन्यते मुहुः ।
शयनेनासने चैव तिष्ठन्तो लभते सुखम् ॥
कुक्षिशूल इति ख्यातो वाताद्वामसमुद्भवात् ॥ ६५ ॥
कफपित्तावरुद्धस्तु मारुतो रसमूर्च्छितः ।
हृदिस्थं कुरुते शूल मुच्छ्वासारोधनं परम् ॥ ६६ ॥
हृच्छूल इति सख्यातो रसमारुतकोपतः ॥ ६७ ॥
सरोधात् कुपितो वायुर्वस्तिं संश्रित्यतिष्ठति ।
वस्तिवङ्क्षणनाड़ीषु ततः शूलोऽस्य जायते ॥
विण्मूत्रवातसंरोधी वस्तिशूलः ससंज्ञितः ॥ ६८ ॥
नाभ्यां वङ्क्षणपार्श्वेषु कुक्षौ मेढ्रानुबन्धकः ।
मूत्रमाहृत्य गृह्णाति मूत्रशूलः समारुतात् ॥ ६९ ॥
वायुः प्रकुपितो यस्य रूक्षाहारस्य देहिनः ।
वातान् रुणद्धि कोष्ठस्थः मन्दीकृत्य तु पावकम् ॥ ७० ॥
शूलं संजनयन् शीघ्रं स्रोत आहृत्य मारुतः ।
दक्षिणं यदि वा वामं कुक्षिमादायजीर्यते ॥ ७१ ॥
सर्वत्र वर्धते क्षिप्रं भ्रमक्षिःश्वासघोषवत् ।
पिपासावर्धतेऽतीव भ्रमो मूर्च्छा च जायते ॥ ७२ ॥
उच्चारितो मूत्रितश्च न शान्तिमधिगच्छति ।
विट्शूलमेतज्जानीया द्भिषक् परमदारुणम् ॥ ७३ ॥

—०—

## अथ चिकित्सामाह ।

रसोनं मद्यसंमिश्रं पिबेत्प्रातः प्रकाङ्क्षितः ।
वातश्लेष्मकृतं शूलं निहन्याद्वह्निदीपनम् ॥ ७४ ॥

चीरोदकं पिवेत्तत्र पिप्पल्या सगुड़ान्वितम्।
कुचिशूलं जयत्युग्रं ये च वातकफोद्भवाः॥ ७५॥
पटोलत्रिफलारिष्टैः शृतं चौद्रयुतं पिवेत्।
पित्तश्लेष्मज्वरच्छर्दिं दाहशूलोपशान्तये॥ ७६॥
पित्तजे कफजे वापि या क्रिया कथिता पृथक्।
एकीकृत्यप्रयुञ्जीत तां क्रियां कफपित्तजे॥ ७७॥
निदग्धिकाबृहत्यौ च कुशकाशेक्षुबालिका।
श्वदंष्ट्रैरण्डमूलानि वारिणा सह पाचयेत्॥
पिवेत्सशर्कराचौद्रं शूले पित्तानिलात्मके॥ ७८॥

इति द्वन्द्वजं शूलम्।

हिंगुसौवर्चलं पथ्या विड़सैन्धवतुम्बुरु।
पौष्करं पिवेच्चूर्णं दशमूलीयवाम्भसा॥ ७९॥
पार्श्वहृत्कटिपृष्टानां शूले तन्द्रापतानके।
श्लेष्मणोत्थे प्रसेके च गलरोगे च शस्यते॥ ८०॥



इति हिंग्वादिचूर्णम्।

तुम्बुरुण्यभयाहिंगु पौष्करं लवणत्रयम्।
यवानी च यवचारं विड़ङ्गं नागरं बचा॥ ८१॥
त्रिवृत्त्रिगुणितं चूर्णं रुवुतैलसमन्वितम्।
उष्णांबुना च तत्पेयं गुल्मे वातकफात्मके॥ ८२॥
उदरेषु विबन्धे च वातविण्मूत्ररेतसाम्॥ ८४॥

इति बृहत्तुम्बुर्वादिचूर्णम्।

तुम्बुरुण्यभयाहिंगु पौष्करं लवणत्रयम्।
पिवेद्यवांवुनावात गुल्मशूलापतन्त्रकी॥ ८५॥

विश्वोरुवूकदशमूलयवाम्भसा च
द्विचारहिंगुलवणत्रयपुष्कराणाम्।

चूर्णं पिबेद्‌धृदयपृष्ठकटिग्रहाम-
पक्वाशयार्त्तिभ्रमरुग्ज्वरगुल्मशूली ॥ ८६ ॥

इति विश्वादिचूर्णम्।

चूर्णं समं रुचकहिंगुमहौषधानां
शुण्ठ्यम्बुना कफसमीरणसम्भवासु ।
हृत्पार्श्वपृष्ठजठरार्त्तिविषूचिकासु
पेयं तथा यवरसेन च विड्‌विबन्धे ॥ ८७ ॥

क्वाथेन चूर्णपानञ्च तत्र क्वाथप्रधानता ।
प्रवर्त्ततेन तेनायं चूर्णमेवाचतुर्गुणः ॥ ८८ ॥
हिंगुनः स्वल्पमानोक्ति समशब्दे सहायता ॥ ८९ ॥

इति रुचकादिचूर्णम्।

त्रिफलाक्वाथगोमूत्र क्षौद्रक्षीररसैः पृथक् ।
एरंडतैलद्विगुणं हितं शान्त्यै विरेचनम् ॥ ९० ॥
हिंगुतैलं सलवणं गोमूत्रेण विपाचितम् ।
नाभिस्थाने प्रदातव्यं यस्य शूलं सवेष्टनम् ॥ ९१ ॥
दारुहैमवतीकुष्ट शताह्वा हिंगुसैन्धवैः ।
अम्लपिष्टैः सुखोष्णैश्च शूलार्त्तमुदरं दिहेत् ॥ ९२ ॥

इति दारुषट्‌कलेपः।

पुनर्नवैरंडयवातसीभिः
कर्पासजैरस्थिभिरारनालैः ।
स्विन्नै रसोभिर्भिषजा च कार्य्यः
स्वेदः समीरार्त्तिहरो नराणाम् ॥ ९३ ॥

इति पुनर्नवादिस्वेदः।

तैलमैरंडजं वापि दशमूलस्य वारिणा ।
पीतं निहन्ति साटोपं हिंगुसौवर्चलान्वितम् ॥ ९४ ॥

पथ्यां सयक्रयवपुष्करमूलयुक्तां
निष्क्वाथ्य हिंगुजटिलातिविषासुयुक्ताम्।
पीत्वा सुखोष्णमथ वातकृतञ्च शूल-
मामोद्भवं कफकृतञ्च निहन्ति तूर्णम्॥ ९५॥
मातुलुङ्गरसो वापि शिग्रुक्वाथस्तथाऽपरः।
सक्षारो मधुना पीतः पार्श्वहृद्वस्तिशूलनुत्॥ ९६॥
मातुलुङ्गरसः सर्पिः सहिंगुलवणान्वितम्।
सुखोष्णं पाययेदेत द्विड्विबन्धानुलोमनम्॥ ९७॥
कुक्षि हृत्पार्श्वशूलेषु वेदना चोपशाम्यति॥ ९८॥
पिप्पली पिप्पलीमूल चव्यचित्रकनागरैः।
यवागूर्दीपनीयास्या च्छूलघ्नी चोपसाधिता॥ ९९॥
सहिंगुतुम्बुरुव्योष यवानीचित्रकाभयाः।
सक्षारलवणाचूर्णं पिबेत्प्रातः सुखांबुना।
विण्मूत्रानिलशूलघ्नं पाचनं वह्निदीपनम्॥ १००॥
बिल्वमूलमथैरंड चित्रकं विश्वभेषजम्।
हिंगुसैन्धवसंयुक्तं सद्यःशूलनिवारणम्॥ १०१॥
मूत्रान्वः पाचितां शुष्कां लोहचूर्णसमन्विताम्।
सगुडामभयामद्यात् सर्वशूलप्रशान्तये॥ १०२॥
त्रिफलायास्तथा चूर्णं चूर्णं वा काललोहजम्।
शर्कराचूर्णसंयुक्तं सर्वशूले निवारणम्॥ १०३॥
कम्बलाहतदेहस्य प्राणायामं प्रकुर्वतः।
कटुतैलाक्तयक्तूनां धूपं शूलनिवारणम्॥ १०४॥
हिंगुत्रिकटुकं कुष्टं यवक्षारोऽथ सैन्धवम्।
मातुलुङ्गरसो पेतं प्लीहशूलापहं रजः॥ १०५॥
वाते निरूहाः सविरेचनाय क्षीरप्रयोगामधुराश्र [illegible]।

तिक्तः कषायः कटुकस्तथैव कफेन शूले खलु सन्निविष्टे ॥

हिंगुसौवर्चलं पाठा द्वौ क्षारौ लवणत्रयम् ।
चुर्णीकृत्यविधातव्यं भिषजाम्लयुते रसे ॥ १०६ ॥
हृच्छूले पार्श्वशूले च मन्यास्तम्भे सुदारुणे ।
प्रयोज्यं कुक्षिशूले च भिषजासिद्धिमिच्छता ॥ १०७ ।

इति हिंग्वाद्यो वटकः ।

एरंडमूलं बृहती श्वदंष्ट्रा पुनर्नवागोक्षुरकस्य मूलम् ।
शतावरीहंसपदी बला च महासहाक्षुद्रसहाविदारी ॥१०८॥
विल्वस्य मूलं सनृपालचितं निदग्धिकाजीवककर्षभौ च ।
कुशो कुशाख्या सह देवदेवे पचेत्कषायं जलपादशेषम् ॥१०९॥
क्वाथेन कल्केन पचेत्तु धीमान्घृतेन तुल्यं फलपूरकस्य ॥ ११० ॥
उत्कृष्टदोषो यस्य स्यात्तस्य शूलो न शाम्यति ।
तत्र सर्पिरिदं दद्यात् प्रसह्यविनिवारणम् ॥ १११ ॥
सर्वस्थानगतं शूल मेतद्धन्ति चतुर्विधम् ।
एरंडाद्यमिदं सर्पिः कृष्णात्रेयेण पूजितम् ॥ ११२ ॥

इत्येरंडाद्य घृतम् ।

बीजपूरकमेरंड रास्नागोक्षुरकं बला ।
पृथक्पञ्चपलान् भागान् यवप्रस्थसमायुतान् ॥ ११३ ॥
वारिद्रोणेन साध्यं स्यात् यावत्पादावशेषितम् ।
घृतप्रस्थं पचेत्तेन कल्कं दत्वाक्षसंमितम् ॥ ११४ ॥
तुम्बुरुण्यभयाहिंगु व्योषं सौवर्चलं बिड़म् ।
सैन्धवं यावशूकञ्च स्वर्जिका साम्लवेतसम् ॥ ११५ ॥
मस्तुप्रस्थद्वयं दद्यात् सिद्धं मृद्वग्निनाभिषक् ।
पानमेतत् प्रशंसन्ति शूलं हन्ति त्रिदोषजम् ॥ ११६ ॥
वातशलं यकृच्छूलं गुल्मप्लीहापहं परम् ।

हृच्छूलं पार्श्वशूलञ्च अन्तशूलञ्च यद्भवेत् ॥ ११७ ॥
बलवर्णकरं हृद्य मग्निसन्दीपनं परम्।
याज्ञवल्क्येन मुनिना भाषितं तत्वदर्शिना ॥ ११८ ॥

इति बीजपूराद्यं घृतम्।

घृताच्चतुर्गुणो देयो मातुलुङ्गरसो यदि।
शुष्कमूलककोलाम्ल कषायो दाड़िमाद्रसः ॥ ११९ ॥
विड़ङ्गलवणक्षारं पञ्चकोलयवानिभिः।
पाठामूलककल्कैश्च सिद्धं शूलं मतं घृतम् ॥ १२० ॥
हृत्पार्श्वशूलं वै श्वासं कासं हिक्कां तथैव च।
व्रध्नगुल्मप्रमेहार्शो वातव्याधिं विनाशयेत् ॥ १२१ ॥

इति शूलघृतम्।

यस्य नैवं प्रशाम्येत तस्य वस्ति विधिर्मतः।
नारायणेन तैलेन प्रसारुण्या तथैव च ॥ १२२ ॥
वेदना च व्यथामुर्च्छा आनाहो गौरवारुचीः।
कासश्वासौ च हिक्का च शूलस्योपद्रवाः स्मृताः ॥ १२३ ॥
व्यायामं मैथुनं मद्यं लवणं कटुकानि च।
वेगरोधं शुचिः क्रोधं वर्जयेच्छूलवान्नरः ॥ १२४ ॥

## इति वङ्गसेने शूलनिदानचिकित्साधिकारः समाप्तः ॥ २८ ॥

---

## अथ परिणामशूलनिदानमाह।

स्वैर्निदानप्रकुपितो वायुः सन्निहितस्तदा।
कफपित्ते समावृत्य शूलकारीभवेद्बली ॥ १ ॥

भुक्ते जीर्य्यति यच्छूलं तदेव परिणामजम् ।
तस्य लक्षणमप्येतत्समासेन विधीयते ॥ २ ॥
आध्मानाटोपविण्मूत्र विबन्धारतिवेपनैः ।
स्निग्धोष्णैः प्रशमं याति वातिकं तद्वदेद्भिषक् ॥ ३ ॥
तृष्णादाहारतिस्वेद कट्वम्ललवणोत्तरम् ।
शूलं शीतशमप्रायं पैत्तिकं तद्वदेद्भिषक् ॥ ४ ॥
छर्द्दिहृल्लाससंमोह स्वल्परुग्दीर्घसन्ततिः ।
कटुतिक्तोपशान्तौ च तद्विज्ञेयं कफात्मकम् ॥ ५ ॥
संसृष्टलक्षणं बुध्वा द्विदोषं परिकल्पयेत् ।
त्रिदोषजमसाध्यं स्यात् क्षीणमांसबलाऽनलम् ॥ ६ ॥

—०—

## अथ चिकित्सामाह ।

लङ्घनं प्रथमं कुर्य्याद्वमनं सविरेचनम् ।
बस्तिकर्म्मापरं चात्र पक्तिशूलोपशान्तये ॥ ७ ॥
निरूहो वाजिगन्धा च मधुतैलिकवस्तयः ।
निम्बक्वाथेन वमनं कटुतुम्बीरसेन वा ॥ ८ ॥
पटोलपत्रक्वाथेन कारवेल्लोदकेन वा ।
प्रियंगुपत्रक्वाथेन हितं मोचरसेन वा ॥ ९ ॥
यष्ट्याह्वादिकयोगेन वमनं परिशम्यते ।
पीत्वा च क्षीरमाकण्ठमदनक्वाथसंयुतम् ॥ १० ॥
कान्तारकस्य पौण्ड्रस्य कोषकारस्य वा रसम् ।
परिणामशूलशान्त्यर्थं वमनाय प्रयोजयेत् ॥ ११ ॥
दन्ती च त्रिवृताश्यामा कर्णिकाकटुकाद्वया ।
नीलिकानागरं चूर्णं तैलेनैरण्डजेन वा ॥

युक्तं विरेचनं सद्यः पक्तिशूलनिवारणम् ॥ १२ ॥
विड़ङ्गं तंडुलं व्योषं द्दहन्ती सचित्रकम्।
सर्वाण्येतानि चाहृत्य श्लक्ष्णचूर्णानि कारयेत् ॥ १३ ॥
गुड़ेन मोदकं कृत्वा भक्षयेत्प्रातरुत्थितः।
उष्णोदकानुपानं च दद्यादग्निविवर्धनम् ॥ १४ ॥
जयेत्त्रिदोषजं शूलं परिणामसमुद्भवम् ॥ १५ ॥

इति विड़ङ्गाद्यो मोदकः।

नागरगुड़तिलकल्कं पयसासंसाध्ययः पुमानद्यात्।
उग्रं परिणति शूलं तस्य नश्यति त्रिरात्रेण ॥ १५ ॥
एरण्डवह्निशंबूक वर्षाभूगोक्षुरं समम्।
अन्तर्दग्धा पिवेदद्भि रुष्णाभिः शूलशान्तये ॥ १६ ॥
शंबूकजं भस्म पीतं जलेनोष्णेन तत्क्षणात्।
पक्तिजं विनिहन्त्येतच्छूलं विष्णुरिवासुरान् ॥ १७ ॥
शंबूकत्र्यूषणञ्चैव पञ्चैवं लवणानि च।
समांशं गुटिकां कृत्वा कलम्बुकरसेन वा ॥ १८ ॥
प्रातर्भोजनकाले वा भक्षयेच्च यथा बलम्।
शूलाद्विमुच्यते जन्तुः सहसा परिणामजात् ॥ १८ ॥
विष्णुक्रान्तामूलकल्कः पीतः सघृतशर्करः।
पयसाशमयत्याशु शूलं पक्तिसमुद्भवम् ॥ २० ॥
यः पिवति सशरावं शक्तूनेकान् कलाययूषेण।
जयति परिणामशूलं शमयेत्तज्जलं वा प्रयोजितम् ॥ २१ ॥
पलानि त्रीणि शंबूकाल्लोहचुर्णात्पलद्वयम्।
रसाञ्जनात्पलञ्चैकं लोहसिंघातकात्पलम् ॥ २२ ॥
सर्वैः समं शर्करा च मधुना च परिप्लुतम्।
सर्वमेतत्समाहृत्य मोदकान् कारयेद्भिषक् ॥ २३ ॥

तान् भक्षयेच्च यत्नेन शूले गुल्मे हृदामये।
विशेषतः पक्तिशूले शोथे पांडुगदे भ्रमे ॥ २४ ॥
दुर्नाम्नि कासे कृच्छ्रे च प्रमेहाश्मरिहिध्रिषु।
अग्निमांद्ये स्मृतिभ्रंशे पीनसेऽर्धावभेदके ॥ २५ ॥
इति शंबूकाद्यो मोदकः।

कृष्णाभया लोहचुर्णं विलिहन्मधुसर्पिषा।
परिणामोद्भवं शूलं सद्यो हन्ति सुदुस्तरम् ॥ २६ ॥
इति कृष्णाद्यं लोहम्।

पथ्या लोहरजः शुण्ठी तच्चूर्णं मधुसर्पिषा।
परिणामभवं हन्ति वातपित्तकफात्मकम् ॥ २७ ॥
इति पथ्यालोहम्।

त्रिफलां लोहचुर्णन्तु यष्टीमधुकमेव च।
मधुसर्पियुतं लिह्याच्छूलं हन्ति त्रिदोषजम् ॥ २८ ॥
इति त्रिफलाद्यं लोहम्।

अभ्रन्ताम्रं रसं लोहं प्रत्येकं संस्कृतं पलम्।
सर्वमेतत्समाहृत्य गृह्णीयात्कुशलो भिषक् ॥ २९ ॥
आज्ये पलद्वादशके दुग्धे वत्सरसंख्यके।
चिप्ता तत्र पचेच्चूर्णं सुपूतं घनतन्तुना ॥ ३० ॥
विडङ्गं त्रिफलावह्नीन् त्रिकटून्वा तथैव च।
पिष्ट्वा पलोन्मितानेतान्यथा संमिश्रितान्पचेत् ॥ ३१ ॥
ततः पिष्ट्वा शुभे भांडे स्थापयेत्तु विचक्षणः।
आत्मनः शोभने वह्निं पूजयित्वा रविं गुरुम् ॥ ३२ ॥
घृतेन मधुना मासं भक्षयेन्माषकादिकम्।
षष्टी माषान् क्रमेणैव वर्धयेत्तु समाहितः ॥ ३३ ॥
अनुपानश्च दुग्धेन नारिकेलोदकेन च।

जीर्णशर्करयाख्यन्नं मुद्गमांसरसादयः ॥ ३४ ॥
रसायनानऽविरुद्धा न्यानन्यान्यपि कारयेत् ॥ ३५ ॥
हृच्छूलं पार्श्वशूलञ्च आमवातं कटिग्रहम्।
गुल्मशूलं प्लीहशूलं यकृच्छूलं विशेषत ॥ ३६ ॥
अग्निमान्द्यं चयं कुष्टं कासं श्वासं विचर्चिकाम्।
अश्मरीं मुत्रकृच्छ्रञ्च योगेनानेन नश्यति ॥ ३७ ॥

इति चतुःसमो लोहः।

त्रिवृताचित्रकं मुस्तं त्रिफलात्र्यूषणं तथा।
एकैकस्य समोभाग स्तदर्धौ रसगन्धयोः ॥ ३८ ॥
लोहाभ्रकं त्रिभागानां भङ्गस्तद्द्विगुणो भवेत्।
एतत्सकलचूर्णन्तु चुर्णयित्वा विचक्षणः ॥ ३९ ॥
त्रिफलायाः कषायेण गुटिकां कारयेद्भिषक्।
तन्नैकं भक्षयेत्प्रात र्भक्तवारिपिबेदनु ॥ ४० ॥
पक्तिशूलं त्रिदोषस्थ मम्लपित्तवमिं ज्वरम्।
हृच्छूलं पार्श्वशूलञ्च वस्तिकुक्षिगुदे रुजम् ॥ ४१ ॥
कासं श्वासं तथा कुष्टं ग्रहणीदोषनाशनम्।
यकृत्प्लीहोदरञ्चैव राजयक्ष्मज्वरापहम् ॥ ४२ ॥

इति भक्तवारिगुटिका।

अथामलकशिवानां स्वरसैः पक्वं सुलोहजञ्च रजः।
सगुडं यद्युपभुंक्ते मुञ्चति त्रिदोषजं शूलम् ॥ ४३ ॥

इति त्रिफलाद्य लोहम्।

सामुद्रं सैन्धवं चारोरुचुकं रौमकं विडम्।
दन्ती लोहरजः किट्टं त्रिवृच्छूरणकं समम् ॥ ४४ ॥
दधिगोमूत्रपयसा मन्दपावकपाचितम्।
तद्यथाग्निबलं चूर्णं पिबेदुष्णेन वारिणा ॥ ४५ ॥

जीर्णेऽजीर्णे तु भुञ्जीतमांसादिघृतसाधितम् ।
नाभिशूलं यकृच्छूलं गुल्मप्लीहकृतञ्च यत् ॥ ४६ ॥
विद्रध्यष्ठीलजं हन्ति कफवातोद्भवं तथा ।
अन्नद्रवं जरयितु मजीर्णं ग्रहणीगदम् ॥ ४७ ॥
शूलानामपि सर्वेषा मौषधं नास्त्यतःपरम् ।
परिणामसमुत्थस्य विशेषेणान्तकं स्मृतम् ॥ ४८ ॥

इति सामुद्राद्यं चूर्णम् ।

सपिप्पलीगुडं सर्पिः पचेत् क्षीरचतुर्गुणे ।
विनिहन्त्यम्लपित्तञ्च शूलञ्च परिणामजम् ॥ ४९ ॥

इति गुडपिप्पलीघृतम् ।

क्काथेन कल्केन च पिप्पलीनां
सिद्धं घृतं माक्षिकसंप्रयुक्तम् ।
क्षीरानुपानं विनिहन्त्यवश्यं
शूलं प्रवृद्धं परिणामसंज्ञम् ॥ ५० ॥

इति पिप्पलीघृतम् ।

लौहस्य रजसो भाग स्त्रिफलायास्त्रयस्तथा ।
गुडस्याष्टौ तथा भागा गुञ्जन्मूत्रं चतुर्गुणम् ॥ ५१ ॥
एतत्सर्वन्तु विपचेद् गुडपाकविधानवत् ।
लिह्येद्यथा शक्तिः क्षये शूले च पाकजे ॥ ५२ ॥

इति लौहादिलेहः ।

कौनपन्दिकशृङ्गवेरचपलाचारैः समं चूर्णितम् ।
मण्डूरं सुरभीजलेऽष्टगुणिते पक्काय मान्द्रीकृतम् ॥ ५३ ॥
तत् पादेहशनादिमध्यविरतौ प्रायेण दुग्धाय भुक् ।
जेतुं वातकफामयान् परिणतौ शूलं हि शूलानि च ॥ ५४ ॥

इति कौनादिमण्डूरम् ।

यवक्षारं कणाशुण्ठी कोलं ग्रन्थिकचित्रके।
पलप्रमाणमादाय प्रस्थं लोहस्य किट्टकम् ॥ ५५ ॥
शनैः पचेद्दार्विलेपं गोमूत्राष्टगुणेन च।
ततोऽक्षमात्रान्वटकान्योजयेत्क्षसरावकम् ॥ ५६ ॥
भक्षयेद्भोजनस्याग्रे मध्ये भुक्तवतस्तथा।
सर्पिः क्षीररसोपेतैरसैर्जाङ्गलजैः शुभैः ॥ ५७ ॥
विनिहन्त्यम्लपित्तञ्च शूलञ्च परिणामजम्।
सर्वशूलगदांश्चैव नाशयत्येष वीर्यवान् ॥
सभीमवटको ह्येष योगराजः प्रकीर्त्तितः ॥ ५८ ॥

इति भीमवटकमंडूरम्।

लोहकिट्टपलान्यष्टौ गोमूत्रस्याढके पचेत्।
क्षीरप्रस्थेन तत्सिद्धं पक्तिशूलहरं नृणाम् ॥ ५८ ॥

इति क्षीरमंडूरम्।

संशोध्यचूर्णितं कृत्वा मंडूरस्य पलाष्टकम्।
शतावरीरसस्याष्टौ दध्नश्च पयसस्तथा ॥ ६० ॥
पलान्यादाय चत्वारि तथा गव्यस्य सर्पिषः।
विपचेत् सर्वमेकत्र यावत्पिण्डत्वमागतम् ॥ ६१ ॥
सिद्धन्तु भक्षयेन्मध्ये भोजनस्याग्रतोऽपि वा।
वातात्मकं पित्तभवं शूलञ्च परिणामजम् ॥
विनिहन्त्येव योगोऽयं मंडूरस्य न संशयः ॥ ६२ ॥

इति शतावरीमंडूरम्।

विडङ्गं चित्रकं चव्यं त्रिफलात्र्यूषणानि च।
नवभागानि सर्वाणि लोहकिट्टसमानि च ॥ ६३ ॥
गोमूत्रं द्विगुणं दत्वा मूत्राद्द्विगुणितं गुड़म्।
शनैर्मृद्वग्निना पक्वा सुसिद्धं पिण्डतां गतम् ॥ ६४ ॥

स्निग्धे भांडे विनिक्षिप्य भक्षयेत् कोलमात्रया ।
प्राङ्मध्यान्तक्रमेणैव भोजनस्य प्रयोजितः ॥ ६५ ॥
योगोऽयं शमयत्याशु पक्तिशूलं सुदारुणम् ।
कामलापांडुरोगञ्च शोथं मन्दाग्निनामपि ॥ ६६ ॥
अर्शांसि ग्रहणीरोगं क्रमिगुल्मोदराणि च ।
नाशयेदम्लपित्तं च स्थौल्यं चाप्यपकर्षति ॥ ६७ ॥
वर्जयेच्छुष्कशाकानि विदाह्यम्लकटूनि च ।
पक्तिशूलान्तको ह्येव गुडो मंडूरसंज्ञकः ॥
शूलार्त्तानां कृपाहेतो स्तारया परिकीर्त्तितः ॥ ६८ ॥

इति तारामंडूरगुड़ः ।

वर्षाभूवरुणोमान लोहकिट्टन्तु पूतकम् ।
भार्गी च समभागानि मूत्रे दशगुणे पचेत् ॥ ६९ ॥
अन्तर्धूमविपक्वेन मधुसर्पियुतं लिहन् ।
वाताधिकं तथा पित्तं द्वन्द्वजं श्लेष्मजं तथा ।
एष त्रिदोषजं हन्ति शूलं हि परिणामजम् ॥ ७० ॥

इति पुनर्नवादिमंडूरम् ।

त्रूपणं त्रिफलाचव्यं विडङ्गानलजीरकम् ।
शृङ्गीमुस्तं देवकाष्टं कारवीधान्यतुम्बुरु ॥ ७१ ॥
दन्तीचित्रत्रयोर्मूलं ग्रन्थिकं गजपिप्पली ।
त्वगेलापत्रकं चूर्णं मर्यमर्द्धपलं पृथक् ॥ ७२ ॥
गृह्णीयाद्दग्धपाषाण केशरं चाक्षसम्मितम् ।
मंडूरस्य विशुद्धस्य पलानां पञ्चविंशतिः ॥ ७३ ॥
कृत्वा चूर्णं ततः सूक्ष्मं स्वरसैर्भावयेत्तु तम् ।
फर्कोटककेशराज यन्थ्यातानममुद्रवैः ॥ ७४ ॥
धात्रीफलरसप्रस्थं मूत्रमष्टगुणं तथा ।

दत्वा विपाचयेत्तावद्यावत्पाकञ्च गच्छति ॥ ७५ ॥
खादेदग्निबलं मत्वा परिहारविवर्जितः ।
वातश्लेष्मोद्भवं शूलं मन्दपित्तं सुदारुणम् ॥ ७६ ॥
प्लीहानमुदरं गुल्मं ग्रहणीपांडुकामलाम् ।
कृमीनर्शांसि कुष्टानि शोथस्थौल्यमरोचकम् ॥ ७७ ॥
ये वातप्रभवारोगा ये च पित्तकफोद्भवाः ।
तान् सर्वान्नाशयत्याशु भास्करस्तिमिरं यथा ॥ ७८ ॥
त्र्यूषणं नामविख्यातं वह्नेर्दीप्तिकरं परम् ।

इति बृहच्चूर्यणाद्यं मंडूरम् ।

नारिकेलस्य तोयञ्च लवणेन प्रपूरितम् ।
विपक्वमग्निना सम्यक् परिणामजशूलनुत् ॥ ७९ ॥
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम् ॥ ८० ॥

इति नारिकेललवणम् ।

त्रिफलामुस्तकं व्योषं विड़ङ्गं पुष्करं वचा ।
चित्रकं मधुकं चैव प्रलांशं दण्डचूर्णितम् ॥ ८१ ॥
अयश्चूर्णं पलान्यष्टौ गुग्गुलोस्तावदेव तु ।
प्रातर्विलिह्य भुञ्जानोऽजीर्णऽस्मिंस्तु जयेद्रुजम् ॥ ८२ ॥
जीर्णान्नसम्भवं शूलं पांडुरोगं हलीमकम् ।
आमवातं तथा गुल्मं श्वयथुं विषमज्वरम् ॥ ८३ ॥

इत्ययोगुग्गुलुः ।

स्विन्नपीडितकूष्माण्डा तुलार्धं भृष्टमाज्यतः ।
प्रस्थार्द्धं तुल्यखण्डञ्च पचेदामलकीरसात् ॥ ८४ ॥
प्रस्थे सुस्विन्नकूष्माण्ड रसप्रस्थं विघट्टयन् ।
दर्व्यापाकं गते तस्मिंश्चूर्णीकृत्य निधापयेत् ॥ ८५ ॥
द्वे द्वे पले कणाजाजी शुण्ठीनां मरिचस्य च ।

पलं तालीशधान्याकं चातुर्जातकमुस्तकम् ॥ ८६ ॥
कर्षप्रमाणं प्रत्येकं प्रस्थार्द्धं माक्षिकस्य च ।
पक्तिशूलं निहन्त्येव दोषत्रयकृतञ्च यत् ॥ ८७ ॥
छर्द्यम्लपित्तमूर्च्छाश्च कासश्वासावरोचकम् ।
हृच्छूलं रक्तपित्तञ्च पृष्ठशूलञ्च नाशयेत् ॥ ८८ ॥
रसायनमिदं श्रेष्ठं खण्डामलकसंज्ञकम् ॥

इत्यामलकखण्डः ।

अर्शोविकारनिर्दिष्टो लेहो लोहामृताह्वयः ।
परिणामशूलशान्त्यर्थं कर्तव्यः संप्रजानता ॥ ८९ ॥

—०—

## अथान्नद्रवशूलनिदानमाह ।

जीर्णेऽजीर्णेऽप्यजीर्णे वा यच्छूलमुपजायते ।
पथ्याऽपथ्यप्रयोगेन भोजनभोजनेन वा ॥
न शमं याति नियमात् सोऽन्नद्रव उदाहृतः ॥ ९० ॥

—०—

## अथ चिकित्सामाह ।

अन्नद्रवाख्ये शूले तु न तावत् स्वास्थ्यमश्नुते ।
यावत्कटुकपित्ताम्लमन्नं न छर्दयेद्द्रवम् ॥ ९१ ॥
वान्तमात्रे जरत्पित्ते शूलमाशु प्रशाम्यति ।
पित्तार्ते वमनं कार्यं कफार्त्ते च विरेचनम् ॥ ९२ ॥
अन्नद्रवे च तत्कार्यं जरत्पित्ते यदीरितम् ।
आमपक्वाशये शुद्धे गच्छेदन्नद्रवः शमम् ॥ ९३ ॥
माषेण्डरीं समधुकां सुस्विन्नां तैलपाचिताम् ।
तादृशीं सर्पिषा खादेदन्नद्रवनिपीडितः ॥ ९४ ॥
धात्रीफलभवं चूर्णं मधुयूर्णसमायुतम् ।

यष्टीचूर्णेनवा युक्तं लिह्यात् चौद्रेण तद्द्रवे ॥ ८५ ॥
श्यामाकतंडुलैः सिद्धं सिद्धं कोद्रवतंडुलैः ।
प्रियङ्गुतंडुलैः सिद्धं पायसं शार्करं हितम् ॥ ८६ ॥
गौडिकं सौरणं कन्दं कूस्मांडं वापि भक्षयेत् ।
कलाययवशक्तूनवा शक्तूनवा लाजसम्भवान् ॥ ८७ ॥
कुलित्थशक्तूनथवा दध्नाद्यान्विस्तरेण तु ।
चणकानामथवाशक्तून् कोद्रवस्योदनं तथा ॥ ८८ ॥
गोधूममंडकं तत्र सर्पिषा गुडसंयुतम् ।
ससितं शीतदुग्धेन मर्दितं वा हितं मतम् ॥ ८९ ॥
पटोलपत्रयूषेण खादेच्चणकशक्तुकान् ।
भृष्ट्वा वा चणकान् खादेद्दुजावानथ निस्तुषान् ॥ १०० ॥
कलायान्वा निराहार स्तृषितः चीरपो भवेत् ॥ १०१ ॥
अन्नद्रवो दुश्चिकित्स्यो दुर्विज्ञेयो महागदः ।
तस्मात्तस्य प्रशमने परं यत्नं समाचरेत् ॥ १०२ ॥
अन्लद्रवे ज्वरत्पित्ते वह्निर्मन्दो भवेद्यतः ।
तस्मादन्नानि पानानि दीपनीयानि कारयेत् ॥ १०३ ॥
कलाययवगोधूम श्यामाकाः कोरदूषकाः ।
राजमाषाः स्थूलमाषाः कुलित्थाः कङ्गुणीयवाः ॥ १०४ ॥
भोजनार्थे प्रशस्ताश्च पुराणाः सप्रियङ्गवः ।
दधिक्षुसरसं चीरं गव्यमाजं समाहिषम् ।
घृतं पुराणं शाकार्थं वास्तुको निम्बपल्लवाः ॥ १०५ ॥
कर्कोटकारवेल्लानां पत्राणि स्वरसस्य वा ।
यानि कानि प्रयोज्यानि कासमर्दफलानि च ॥ १०६ ॥
वर्हिणो हरिणामत्स्या रोहिताः सकपिञ्जलाः ।
एतस्मिन्नामये शस्ता मतामुनिचिकित्सकैः ॥ १०७ ॥

गुडामलकपथ्यानां चूर्णं प्रत्येकशः पलम् ।
विपलं लोहकिट्टस्य तत्सर्वं मधुसर्पिषा ॥ १०८ ॥
समालोड्य ततः खादेद्दक्षमात्रं प्रमाणतः ।
आदिमध्यावसानेषु भोजनस्य निहन्ति तत् ॥ १०९ ॥
अन्नद्रवं रक्तपित्तं अम्लपित्तं सुदारुणम् ।
परिणामसमुत्थञ्च शूलं सम्वत्सरोत्थितम् ॥ ११० ॥

इति गुडमण्डूरं ।

कलायचूर्णौ भागौ द्वौ लोहकिट्टस्य चापरः ।
कारवेल्लपलाशानां रसेनैव विमर्द्दयेत् ॥ १११ ॥
कर्षमात्रां ततश्चैकां भक्षयेद्गुटिकां नरः ।
मण्डानुपानात्क्षाहन्ति जरत्पित्तं सुदुर्जयम् ॥ ११२ ॥

इति कलायचूर्णगुटिका ।

एरण्डसप्तकं पेयं क्षुपुपाद्यं सदाहितम् ।
धान्वन्तरं सकौमारं घृतं रसायणञ्च यत् ।
इति संक्षेपतः प्रोक्तः मन्नद्रवचिकित्सितम् ।
अन्नद्रवेऽपि यत्प्रोक्तं जरत्पित्ते पित्तहितम् ।

## इति वङ्गसेने परिणामशूलान्नद्रवजरत्पित्तनिदान चिकित्साधिकारः समाप्तः ॥ २९ ॥

—०—

## अथोदावर्त्तनिदानमाह ।

वातविण्मूत्रजृम्भाश्रु क्षवोद्गारवमीन्द्रियैः ।
क्षुत्तृष्णोच्छ्वासनिद्राणां धृत्योदावर्त्तसम्भवः ॥ १ ॥

वातमूत्रपुरीषाणां सङ्गाध्मानं क्लमो रुजः ।
जठरे वातजाद्यान्ये रोगाः स्युर्वातनिग्रहात् ॥ २ ॥
आटोपशूलौ परिकर्त्तिका च सङ्गः पुरीषस्य तथोर्द्ध्ववातः ।
पुरीषमास्यादथवा निरेति पुरीषवेगेऽभिहते नरस्य ॥ ३ ॥
वस्तिमेहनयोः शूलं मूत्रकृच्छ्रं शिरोरुजा ।
विनामो वङ्क्षणानाहः स्याल्लिङ्गं मूत्रनिग्रहे ॥ ४ ॥
मन्यागलस्तम्भशिरोविकारा जृम्भोपघातात्पवनात्मका स्युः ।
तथाक्षिनासावदनामयाश्च भवन्ति तीव्राः सह कर्णरोगैः ॥५॥
आनन्दजं वाप्यथ शोकजं वा नेत्रोदकं प्राप्तममुञ्चतो हि ।
शिरो गुरुत्वं नयना मयाश्च भवन्ति तीव्राः सह पीनसेन ॥ ६ ॥
मन्यास्तम्भः शिरः शूलं मर्दितार्धावभेदकौ ।
इन्द्रियाणाञ्च दौर्बल्यं क्षवथोः स्याद्विधारणात् ॥ ७ ॥
कण्ठास्यं पूर्णत्वमतीव तोदः कूजश्च वायोरथवा प्रवृत्तिः ।
उद्गारवेगेऽभिहिते भवन्ति जन्तोर्विकाराः पवनप्रसूताः ॥८॥
कण्डूकोठारुचिव्यङ्ग शोफपाण्ड्वामयज्वराः ।
कुष्ठविसर्पहृल्लासाः छर्दिनिग्रहजा गदाः ॥ ९ ॥
मूत्राशये वै गुदमुष्कयोश्च शोथो रुजा मूत्रविनिग्रहश्च ।
शुक्राश्मरीतत्स्रवणं भवेच्च ते ते विकाराभिहतेति शुक्रे ॥१०॥
तन्द्राङ्गमर्दारुचिविभ्रमाश्च क्षुधाभिघातात् कृशता च दृष्टेः ।
कण्ठास्य शोष श्रवणावरोधस्तृष्णाभिघाताद्धृदयव्यथा च ॥११॥
श्रान्तस्य निःश्वासविनिग्रहेण हृद्रोगमोहावथवापि गुल्मः ।
जृम्भाङ्गमर्दाक्षि शिरोऽतिजाड्यं निद्राभिघातादथवापि तन्द्रा ॥१२
तृष्णार्दितं परिक्लिन्नं क्षीणं शूलैरुपद्रुतम् ।
शकृद्वमन्तं मतिमानुदावर्त्तिनमुत्सृजेत् ॥ १३ ॥

—०—

## अथ चिकित्सामाह।

सर्व्वेष्वेतेषु विधिवद् दावर्त्तेषु कृत्स्नशः।
वायोः क्रियाविधातव्या स्वमार्गप्रतिपत्तये ॥ १४ ॥
पुरीषजे तु कर्त्तव्यो विधिरानाहिकश्चयः।
क्षारवैतरणौ वस्ती युञ्ज्यादत्र चिकित्सकः ॥ १५ ॥
सौवर्चलाढ्यां मदिरां मूत्रे त्वभिहते पिबेत्।
एलां वाप्यथ मद्येन क्षीरं वारि तथा पिबेत् ॥ १६ ॥
दुस्पर्शा स्वरसं वापि कषायककुभस्य च।
एर्वारुबीजं तोयेन पिबेद्वा लवणीकृतम् ॥ १७ ॥
शर्करेक्षुरसं क्षीरं द्राक्षारसमथापि वा।
सर्व्वत्रैव प्रयुञ्जीत मूत्रकृच्छ्राश्मरीविधिम् ॥ १८ ॥
स्नेहस्वेदैरुदावर्त्तं जृम्भजं समुपाचरेत्।
अश्रुमोचोऽश्रुजे कार्य्यः स्निग्धस्विन्नस्य देहिनः ॥ १९ ॥
क्षवजे क्षवपत्रेण घ्राणस्थेनानयेत् क्षवम्।
तथोर्ध्वजत्रुकेऽभ्यङ्गः स्वेदो धूमः समाहृतः ॥ २० ॥
उद्गारजे क्रमोपेतं स्नैहिकं धूममाचरेत्।
वम्यावातं यथा दोषं सम्यक् स्नेहादिभिर्जयेत् ॥ २१ ॥
सक्षारलवणोपेत मभ्यङ्गं वाऽत्र दापयेत्।
वस्तिशुद्धिकरं सिद्धं चतुर्गुणजलं पयः ॥ २२ ॥
आयारिनाशात् क्वथितं पीतवन्तं प्रकामतः।
रमयेयुः प्रियानार्य्यः शुक्रोदावर्त्तिनं परम् ॥ २३ ॥
अत्राभ्यङ्गावगाहश्च मदिरायरणायुधाः।
शालिपयो निरूहाय हितं मैथुनमेव च ॥ २४ ॥
क्षुद्विघाते हितं स्निग्धं मुष्णमल्पाशुभोजनम्।

तृष्णाघाते पिबेन्मन्थं यवागूं वा सुशीतलम् ॥ २५ ॥
रसेनाद्यात्तुविश्रान्तः श्रमश्वासातुरो नरः ।
निद्राघाते पिबेत् क्षीरं सुप्याच्चेष्टकथारतः ॥ २६ ॥

—०—

## अथ निदानमाह ।

वायुः कोष्ठानुगो रूक्षैः कषायकटुतिक्तकैः ।
भोजनैः कुपितः सद्य उदावर्त्तं करोति च ॥ २७ ॥
वातमूत्रपुरीषाणि कफमेदो वहानि च ।
स्रोतांस्युदावर्त्तयति पुरीषं चापि वर्त्तयेत् ॥ २८ ॥
ततो हृद्बस्तिशूलार्त्तो हृल्लासाऽरतिपीड़ितः ।
वातमूत्रपुरीषाणि कृच्छ्रेण लभते नरः ॥ २९ ॥
श्वासकासप्रतिश्याय दाहमोहतृषाज्वरान् ।
वमिहिक्काशिरोरोग मनः श्रवणविभ्रमान् ॥
बहूनन्यांश्च लभते विकारान् वातकोपजान् ॥ ३० ॥

—०—

## अथ चिकित्सामाह ।

उदावर्त्तिनमभ्यक्तं स्विन्नगात्रमुपाचरेत् ।
वर्त्तिकास्थापनस्वेद बस्तिरेचनकर्मभिः ॥ ३१ ॥
अद्यात्सुधापत्रतिलादिशाक ग्राम्यौदकानूपरसैर्यवान्नम् ।
अन्यैश्च सृष्टानिलमूत्रविड्भिरद्यात्प्रसन्नागुडसीधुपायी ॥ ३२ ॥
क्षारचित्रकहिङ्ग्वाम्ल वेतसैर्भेदनैर्मता ।
यवागूः साधिता वापि तद्वारग्वधकैः फलैः ॥ ३३ ॥
श्यामादन्ती द्रवन्ती स्नुक् महाश्यामाऽमृताविड्त् ।

सप्तलाशङ्खिनीश्वेता राजवृच: सतिल्वक: ॥
काम्पिल्लकं करञ्जश्च हैमचीरीत्ययं गण: ॥ ३४ ॥
सर्पिस्तैलरज: क्वाथ कल्के ष्वन्यतमेषु च ।
उदावर्त्तोदरानाह विषगुल्मविनाशन: ॥ ३५ ॥
वल्मीकमृत्तिकामूलं करञ्जस्य फलत्वचम् ।
पिष्ट्वा मूत्रेण सिद्धार्थं मुदावर्त्तप्रलेपनम् ॥ ३६ ॥
हरीतकीयवचार पीलूनि चिवृता तथा ।
घृतैश्चूर्णमिदं पेय मुदावर्त्तविनाशनम् ॥ ३७ ॥
हिंगुकुष्टवचास्वर्जि विड़ञ्चेति द्विरुत्तरम् ।
मद्येन चाथ पिप्पल्या मूलकानां रसेन वा ।
भुक्त्वा स्निग्धमुदावर्त्ता द्वातगुल्मादिमुच्यते ॥ ३८ ॥
हिंगुमाचिकसिन्धूत्थै: पक्त्वा वर्त्तिं सुनिर्मिताम् ।
घृताभ्यक्तां गुदे दद्या दुदावर्त्तविनाशिनीम् ॥ ३९ ॥
इति हिंग्वाद्या वर्त्ति: ।

मदनं पिप्पलीकुष्ट' वचागौराय सर्षपा: ।
गुड़चीर समायुक्ता फलवर्त्ति: प्रशस्यते ॥ ४० ॥
इति फलवर्त्ति: ।

आगारधूमसिन्धूत्थ तैलयुक्ताम्लमूलकम् ।
सुरणं निर्गुण्डिपत्र' वा स्निग्धे पायौ चिपेद्बुध: ॥ ४१ ॥
खंडं पलं चिवृतासममुपकुल्या कर्षचूर्णितं सूक्ष्मम् ।
प्राग्भोजने समधु विड़ालपदकं लिहेत्प्राज्ञ: ॥ ४२ ॥
एतद्गाढपुरीषे पित्तकफार्त्ते च विनियोज्यम् ।
स्वादुर्नृपयोग्योऽयं चूर्णो नाराचको नाम्ना ॥ ४३ ॥
इति नाराचचूर्णम् ।

सव्योषं पिप्पलीमूलं चिवृद्दन्ती सचित्रकम् ।

तच्चूर्णं गुडसंमिश्रं भक्षयेत् कल्यमुत्थितः ॥ ४४ ॥
एतद् गुडाष्टकं नाम बलवर्णाग्निवर्द्धनम् ।
शोथोदावर्तगुल्मघ्नं प्लीहपाण्डामयापहम् ॥ ४५ ॥

इति गुडाष्टकम् ।

मूलकं शुष्कमार्द्रं च वर्षाभू पञ्चमूलकम् ।
आरेवतफलश्चाग्र्य पक्का तेन घृतं पचेत् ॥
तत्पीयमानं शमयेदुदावर्तमसंशयम् ॥ ४६ ॥

इति मूलकाद्यं घृतम् ।

स्थिरादिवर्गस्य पुनर्नवायाः संम्याकपूतीककरंजयोश्च ।
सिद्धः कषाये द्विपलांशिकानां प्रस्थो घृतात् स्यात्प्रतिबद्धवाते ॥४७॥

इति स्थिराद्यं घृतम् ।

यन्महावज्रकं सर्पि गुल्मिनां विहितं च यत् ।
उदरिणामशेषेण तदुदावर्त्तिने हितम् ॥ ४८ ॥
उदावर्त्तोदरगदे पक्कं सर्पिर्यदीरितम् ।
एतद् द्वित्रिचतुर्मासान् दद्यादुष्णांबुना भिषक् ॥ ४९ ॥
बाध्यचोररसैः सेव्यं यच्च वातानुलोमनम् ।
वातश्लेष्मवणाद्यैश्च रसाद्यैरचमाचरेत् ॥ ५० ॥

## इति वङ्गसेन उदावर्त्तनिदानचिकित्साधिकारः समाप्तः ॥३०॥

—०—

## अथानाहनिदानमाह ।

आमं शकृद्वानिचितं क्रमेण भूयो विबद्धं विगुणानिलेन ।
प्रवर्त्तमानं न यथास्वमेनं विकारमानाहमुदाहरन्ति ॥ १ ॥

तस्मिन् भवत्यामसमुद्भवे च तृष्णाप्रतिश्याय शिरोविदाहाः।
आमाशये शूलमथो गुरुत्वं हृत्स्तम्भमुद्गारविघातनञ्च ॥ २ ॥
स्तम्भः कटिपृष्टपुरीषमूत्रे शूलोऽथ मूर्च्छा शकृतश्च छर्दिः।
श्वासश्च पक्काशयजे भवन्ति तथालसोक्तानि च लक्षणानि ॥ ३ ॥
तृष्णार्दितं परिक्लिन्नं क्षीणं शूलैरुपद्रुतम्।
शकृद्वमन्तमतिमानुदावर्त्तिनमुत्सृजेत् ॥ ४ ॥

—०—

## अथ चिकित्सामाह।

आमोद्भवे वातमुपक्रमेत संसर्गभक्तक्रमदीपनीयैः।
विषुचिकायामभिकीर्त्तितानि द्रव्याणि वैरेचनिकानि चापि ॥५॥
विड्हरीतकीश्यामा स्नुहीक्षीरेण पेषयेत्।
वटिकामूत्रपीतास्ता श्रेष्टाश्चानाहभेदिकाः ॥ ६ ॥
इति विड्त्ताद्यावटिका।
मदनं पिप्पलीकुष्टं वचागौराश्च सर्षपाः।
गुड़क्षीरसमायुक्ताः फलवर्त्तिः प्रशस्यते ॥ ७ ॥
आनाहे च गुदे शूलं कुक्षिशूलकमेव च।
तस्य वातमुदावर्त्तं योगेनानेन शाम्यति ॥ ८ ॥
इति फलवर्त्तिः।
रामठधूमविड़व्योष गुडमूत्रविपाचिता।
गुदेऽङ्गुष्ट समा वर्त्तिर्विधेयानाहशूलनुत् ॥ ९ ॥
इति रामठाद्यावर्त्तिः।
त्रिवृत् कृष्णाहरीतक्यो द्विचतुष्पञ्चभागिकाः।
गुटिकागुड़तुल्यास्तु विड्विबन्धगदापहाः ॥ १० ॥
इति विड्दाद्यागुटी।

वर्त्तिस्त्रिकटुकसैन्धव सर्षपगृहधूममदनकुष्टफलैः ।
मधुनि गुड़े वा पक्के विदधीतांगुष्टपरिमाणा ॥ ११ ॥
वर्त्तिरियं दृष्टफला शनैः प्रणिहिता गुदे घृताभ्यक्ता ।
आनाहोदावर्त्तशमनीजठरगुल्मनिवारणी ॥ १२ ॥

इति त्रिकटुकाद्यावर्त्तिः ।

द्विरुत्तराहिंगुवचा सकुष्ट' सुवर्चिका चैव विड़ङ्गचूर्णम् ।
सुखांबुनानाहविपूचिकार्त्ति हृद्रोगगुल्मोर्ध्वसमीरणेषु ॥ १३ ॥

इति द्विरुत्तराहिंग्वाद्यं चूर्णम् ।

हिंगूग्रगन्धाविड़शुण्ठ्याजाजी हरीतकीपुष्परमूलकुष्टम् ।
यथोत्तरं भागविवृद्धमेतत् प्लीहोदरानाहविपूचिकासु ॥१४॥

इति हिग्वाद्यं चूर्णम् ।

वचाभयाचित्रकयावसूकान् सपिप्पलीकातिविषान् सकुष्टान् ।
उष्णांबुनानाहविमूढ़वातान् पीत्वा जयेदाशुरसौदनाशी ॥ १५ ॥

इति वचाद्यं चूर्णम् ।

आनाहेऽपि प्रयुञ्जीत उदावर्त्तहरीं क्रियाम् ॥

## इति वङ्गसेन आनाहनिदानचिकित्साधिकारः समाप्तः ॥ ३१ ॥

---

## अथ गुल्मनिदानमाह ।

दुष्टावातादयोऽत्यर्थं मिथ्याहारविहारतः ।
कुर्वन्ति पञ्चधा गुल्मं कोष्टान्तर्ग्रन्थिरूपिणम् ॥ १ ॥
तस्य पञ्चविधं स्थानं पार्श्वहृद्वस्तिनाभयः ॥ २ ॥
हृद्वस्त्योरन्तरे ग्रन्थिः सञ्चारी यदि वाऽचलः ।
वृत्तश्चयोपचयवान् स गुल्म इति कीर्त्तितः ॥ ३ ॥

सव्यस्तैर्जायते दोषैः समस्तैरपि चोच्छ्रितैः ।
पुरुषाणां तथा स्त्रीणां ज्ञेयोरक्तेन चापरः ॥ ४ ॥
उद्गारबाहुल्यपुरीषबन्धतृप्त्यक्षमत्वान्त्रविकूजनानि ।
आटोपमाध्मानमपाकशक्तिरासन्नगुल्मस्य वदन्ति चिह्नम् ॥ ५ ॥
अरुचिः कृच्छ्रविण्मूत्रं वातश्चान्त्रविकूजनम् ।
आनाहश्चोर्ध्ववातत्वं सर्वगुल्मेषु लक्षणम् ॥
रूक्षान्नपानं विषमातिमात्रं विचेष्टनं वेगविनिग्रहश्च ॥ ६ ॥
शोकाभिघातोऽतिमलक्षयश्च निरन्नता चानिलगुल्महेतुः ।
यत् स्थानसंस्थानरुजाविकल्पं विड्वातसंगं गलवक्त्रशोषम् ॥ ७ ॥
श्यावारुणत्वं शिशिरज्वरश्च हृत्कुक्षिपार्श्वांसशिरोरुजश्च ।
करोति जीर्णेऽत्यधिकं प्रकोपं भुङ्क्ते मृदुत्वं समुपैति यश्च ॥ ८ ॥
वातात्स गुल्मो न च तत्र रूक्षं कषायतिक्तं कटु चोपसेवेत् ॥ ९ ॥

—०—

## अथ चिकित्सामाह ।

प्रागेव वातिके गुल्मे सुस्निग्धं स्वेदितं नरम् ।
रेचितं स्नेहरेकैश्च निरूहैः सानुवासनैः ॥
उपाचरेद्भिषक् प्राज्ञो मात्राकालविवेकतः ॥ १० ॥
मातुलुङ्गरसोहिंगु दाड़िमं विड्सैन्धवम् ।
सुरामण्डेन दातव्यं वातगुल्मरुजापहम् ॥ ११ ॥
नागरार्द्धपलं पिष्टं द्वे पले चित्रकस्य च ।
तिलस्यैकं गुड़पलं क्षीरेणोष्णेन पाचयेत् ॥
वातगुल्ममुदावर्त्तं योनिशूलञ्च नाशयेत् ॥ १२ ॥

—०—

हिंगुसौवर्चलं शुण्ठी दाड़िमं साम्लवेतसम् ।

श्वासहृद्रोगशमन मिदं स्याद्धिंगुपञ्चकम् ॥ १३ ॥

इति हिंगुपञ्चकम् ।

स्वर्जिकाकुष्टसहिता क्षारः केतकिजोऽपि वा ।
पीतस्तैलेन शमयेद् गुल्मं पवनसम्भवम् ॥ १४ ॥
पिवेदैरण्डतैलं वा वारुणीमण्डमिश्रितम् ।
तदेव तैलं पयसा वातगुल्मी पिवेन्नरः ॥ १५ ॥
पञ्चमूलकषायेण सक्षारेण शिलाजतु ।
पिवेत्तस्य प्रयोगेन वातगुल्माद्विमुच्यते ॥ १६ ॥
वातगुल्मप्रतिकारे प्रकुप्यति यदा कफः ।
गुल्मशूलेक्षणं तत्र चूर्णाद्याश्च कफापहाः ॥ १७ ॥
यदि कुप्यति वा पित्तं विरेकस्तत्र भेषजम् ।
दोषघ्नैरप्यशान्तौ च गुल्मे शोणितमोक्षणम् ॥ १८ ॥
त्रायमाणं त्रिफलाधात्री विड़ङ्गचव्यचित्रकैः ।
कल्कै रेतैर्घृतं सिद्धं सक्षीरं वातगुल्मनुत् ॥ १९ ॥

इति त्रायमाणाद्यं घृतम् ।

हपुषाव्योषपृथ्वीका चव्यचित्रकसैन्धवैः ।
साजाजीपिप्पलीमूल दीप्यकैर्विपचेद् घृतम् ॥ २० ॥
सकोलमूलकरसं सक्षारं दधिदाड़िमम् ।
तत्परं वातगुल्मघ्नं शूलानाहविमोक्षणम् ॥ २१ ॥
योन्यर्शोग्रहणीदोषश्वासकासारुचिज्वरान् ।
पार्श्वहृद्वस्तिशूलञ्च घृतमेतद्व्यपोहति ॥ २२ ॥
पञ्चादीनि च यत्र स्युर्द्रव्याणि स्नेहसम्विधौ ।
तत्र स्नेह समान्याहु रर्वाक् स्याच्च चतुर्गुणम् ॥ २३ ॥

इति हपुषाद्यं घृतम् ।

चित्रकव्योषसिन्धूत्थ पृथ्वीकाचव्यदाड़िमैः ।

दीप्यकग्रन्थिकाजाजी हवुषाधान्यकैः समैः ॥ २४ ॥
दध्यारनालबदिर मूलकस्वरसैर्घृतम् ।
तत्पिबेद्वातगुल्माग्नि दौर्बल्याटोपशूलनुत् ॥ २५ ॥
इति चित्रकाद्यं घृतम् ।

हिंगुसौवर्चलव्योष विड़दाड़िममाषकैः ।
पुष्कराजाजिधान्याम्ल वेतसक्षारचित्रकैः ॥ २६ ॥
शठीवचाजगन्धैला स्वरसैश्च विपाचितम् ।
शूलानाहहरं सर्पि र्दध्ना चानिलगुल्मिनाम् ॥ २७ ॥
इति हिंग्वाद्यं घृतम् ।

तित्तिरांश्च मयूरांश्च कुक्कुटांश्चैव वर्तिकान् ।
सर्पिः शालिप्रसन्नांश्च वातगुल्मे प्रयोजयेत् ॥ २८ ॥
इति वातगुल्मः ।

—०—

## अथ निदानमाह ।

कट्वम्लतीक्ष्णोष्णविदाहिरूक्ष क्रोधातिमद्यार्कहुताशसेवा ।
आमाभिघातो रुधिरं प्रदुष्टं पैत्तस्य गुल्मस्य निदानमुक्तम् ॥२९॥
ज्वरः पिपासा वदनाङ्गरागः शूलं महज्जीर्यतिभोजने च ।
स्वेदो विदाहो व्रणवच्च गुल्मः स्पर्शासहं पैत्तिकगुल्मरूपम् ॥३०॥

—०—

## अथ चिकित्सामाह ।

काकोल्यादि महातिक्त वासाद्यैः पित्तगुल्मिनम् ।
स्नेहितं संसयेत् पश्चात् योजयेदग्निकर्मणा ॥ ३१ ॥

मधुकं चन्दनं द्राक्षा पयसा मधुकं मधु ।
पिबेत्तंडुलतोयेन पित्तगुल्मोपशान्तये ॥ ३३ ॥

—०—

## अथ पक्वगुल्मलक्षणमाह ।

गुरुः कठिनसंस्थानो गूढ़मांसोत्तराश्रयः ।
अविवर्णः स्थिरश्चैव सपक्वो गुल्म इष्यते ॥ ३४ ॥
दाहशूलादिसंक्षोभ स्वप्ननाशाऽरुचिज्वरैः ।
विदह्यमानं जानीयाद् गुल्मं तमुपनाहयेत् ॥ ३५ ॥

—०—

पक्वे तु व्रणवत्कार्यं व्यधशोधनरोपणम् ।
स्वयमूर्ध्वमधो वापि स चेद्दोषः प्रपद्यते ॥ ३६ ॥
द्वादशाहमुपेक्षेत रक्षन् वैद्यैरुपद्रवान् ।
परञ्च शोधनं सर्पिःशुद्धे समधुतिक्तकम् ॥ ३७ ॥

—०—

जले दशगुणे साध्यं त्रायमाणाचतुष्पलम् ।
पञ्चभागस्थितं पूतं कल्कैः संयोज्य कार्षिकैः ॥ ३८ ॥
रोहिणीकटुकामुस्त त्रायमाणा दुरालभा ।
द्राक्षातामलकीवीरा जीवन्तीचन्दनोत्पलैः ॥ ३९ ॥
रसस्यामलकानाञ्च क्षीरस्य च घृतस्य च ।
एतानि पृथगष्टाष्टौ दत्वा सम्यग्विपाचयेत् ॥ ४० ॥
पित्तगुल्मं रक्तगुल्मं वीसर्पं पैत्तिकं ज्वरम् ।
हृद्रोगं कामलां कुष्टं हन्यादेतद्घृतोत्तमम् ॥ ४१ ॥

इति त्रायमाणाद्यं घृतम् ।

द्राक्षां मधुकखर्जूरं विदारीं सशतावरीम् ।
परूषकाणि त्रिफलां शालनीत्पलसंमिताम् ॥ ४२ ॥

जलाढ़के पादशेषे रसमामलकस्य च ।
घृतमिक्षुरसं क्षीरमभया कल्कपादिकम् ॥ ४३ ॥
साधयेत्तु घृतं सिद्धं शर्कराक्षौद्रपादिकम् ।
प्रयोगाद्वातगुल्मघ्नं सर्वपित्तविकारनुत् ॥ ४४ ॥

इति द्राक्षाद्यं घृतम् ।

शालिगोक्षागदुग्धञ्च पटोलं मिश्रितं घृतम् ।
द्राक्षापरूषकं धात्री खर्जूरं दाड़िमं सिता ॥
पथ्यार्थं पैत्तिके गुल्मे बलातैलञ्चयोजयेत् ॥ ४५ ॥

इति पित्तगुल्मः ।

## अथ निदानमाह ।

शीतं गुरुस्निग्धमचेष्टनञ्च संपूरणं प्रस्वपनं दिवा च ।
गुल्मस्य हेतुः कफसम्भवस्य सर्वस्तु दृष्टो निचयात्मकस्य ॥ ४६ ॥
स्तैमित्यशीतज्वरगात्रसादहृल्लासकासाऽरुचिगौरवाणि ।
शैत्यं रुगल्पा कठिनोन्नतत्वं गुल्मस्य रूपाणि कफात्मकस्य ॥४७॥

—०—

## अथ चिकित्सामाह ।

स्नेहोपनाहनस्वेद तीक्ष्णस्रंसनबस्तिभिः ।
योगैश्च वातगुल्मोक्तैः श्लेष्मगुल्ममुपाचरेत् ॥ ४८ ॥
तिलैरण्डातसीबीज सर्षपैः परिलिप्य च ।
श्लेष्मगुल्म मयःपात्रैः सुखोष्णैः स्वेदयेद्भिषक् ॥ ४९ ॥
पञ्चमूलोशृतं तोयं पुराणं वारुणीरसम् ।
कफगुल्मे पिबेत्काले जीर्णं माध्वीकमेव च ॥ ५० ॥
यवानीचूर्णितं तक्रं विड़ेन लवणीकृतम् ।
पिबेत्सन्दीपनं वात मूत्रवर्चोऽनुलोमनम् ॥ ५१ ॥

—०—

पिप्पली पिप्पलीमूल चव्यचित्रकनागरैः।
पलिकैः स यवक्षारैः घृतप्रस्थं विपाचयेत्॥ ५२॥
क्षीरप्रस्थेन तत्सर्पि र्हन्ति गुल्मं कफात्मकम्।
ग्रहणीपांडुरोगघ्नं प्लीहकासज्वरापहम्॥ ५३॥

इति क्षीरषट्पलं घृतम्।

सव्योषक्षारलवणं दशमूलशृतं घृतम्।
कफगुल्मं जयत्याशु सहिंगुविड़दाड़िमम्॥ ५४॥

इति व्योषाद्यं घृतम्।

भल्लातकानां द्विपलं पञ्चमूलपलोन्मितम्।
साध्यं विदारिगन्धाद्य मापोथ्य सलिलाढ़के॥ ५५॥
पादावशेषे पूते च पिप्पली नागरं वचा।
विड़ङ्गं सैन्धवं हिंगु यावशूकं विड़ं शठी॥ ५६॥
चित्रकं मधुकं रास्ना पिष्ट्वा कर्षसमान् भिषक्।
प्रस्थञ्च पयसो दत्वा घृतप्रस्थं विपाचयेत्॥ ५७॥
एतद्भल्लातकं सर्पिः कफगुल्महरं परम्।
प्लीहपांड्वामयश्वास ग्रहणीकासरोगनुत्॥ ५८॥

इति भल्लातकघृतम्।

त्रिवृताचिफलादन्ती दशमूलं पलोन्मितम्।
जले चतुर्गुणे पक्का चतुर्भागे स्थिते रसे॥ ५९॥
सर्पिरेरंडज तैलं क्षीरं तत्र प्रयोजयेत्।
सस्निग्धो मिश्रकः स्नेहः सक्षौद्रः कफगुल्मनुत्॥ ६०॥
कफवातविकारेषु कुष्टप्लीहोदरेषु च।
प्रयोज्यो मिश्रकः स्नेहो योनिशूले तथाधिके॥ ६१॥

इति मिश्रकः स्नेहः।

जलद्रोणे विपक्तव्या विंशतिः पञ्च चाभयाः।

दन्त्याः पलानि तावन्ति चित्रकस्य तथैव च ॥ ६२ ॥
अष्टभागावशेषन्तं रसं पूतमधिश्रयेत् ।
दन्ती समं गुडं पूते दद्यात्तत्राभयाश्च ताः ॥ ६३ ॥
तैलार्धकुडवं चैव त्रिवृतायाश्चतुष्पलम् ।
चूर्णितं चार्द्धपलिकं पिप्पलीविश्वभेषजम् ॥ ६४ ॥
तत्साध्यं लेहवच्छीते तस्मिंस्तैलसमं मधु ।
क्षिपेच्चूर्णं पलञ्चैकं त्वगेलापत्रकेसरात् ॥ ६५ ॥
ततो लेहपलं लिह्वा जग्ध्वा चैकां हरीतकीम् ।
सुखं विरिच्यते स्निग्धो दोषप्रस्थमनामयः ॥ ६६ ॥
गुल्मं श्वयथुमर्शांसि पांडुरोगमरोचकम् ।
हृद्रोगग्रहणीदोषान् कामलां विषमज्वरान् ॥ ६७ ॥
गुल्मं प्लीहानमानाह मेतान् हन्त्युपसेविता ॥

इति दन्तीहरीतक्यावलेहः ।

कुलित्थान् जीर्णशालींश्च षष्टिकाश्चवजाङ्गलान् ।
मद्यतैलघृतं तक्रं कफगुल्मे प्रयोजयेत् ॥ ६८ ॥

इति कफगुल्मः ।

—०—

## अथ संसर्गजानाह ।

निमित्तलिङ्गानुपलभ्यगुल्मे संसर्गजे दोषबलाबलञ्च ।
व्यामिश्रलिङ्गानुपलभ्यगुल्मांस्त्रीनादिशेद्दोषधकल्पनार्थम् ॥ ६९ ॥

—०—

हिंगुत्रिकटुकं पाठां हपुषामभयां शठीम् ।
अजमोदाजगन्धे च तिन्तिडीं चाम्लवेतसम् ॥ ७० ॥
दाडिमं पौष्करं धान्यं मजाजीचित्रकं वचाम् ।
द्वौ क्षारौ पञ्चलवणं चव्यं चैकत्र योजयेत् ॥ ७१ ॥

चूर्णमेतत्प्रयोक्तव्य मद्यपानेष्वऽनत्ययम् ।
प्रागभुक्तमथवा पेय मद्येनोष्णोदकेन च ॥ ७२ ॥
पार्श्वहृद्वस्तिशूलेषु गुल्मे वातकफात्मके ।
आनाहे मूत्रकृच्छ्रे च शूले च गुदयोनिजे ॥ ७३ ॥
ग्रहण्यर्शो विकारेषु प्लीहपांड्वामयेऽरुचौ ।
उरोविबन्धे हिक्कायां कासे श्वासे गलग्रहे ॥ ७४ ॥
भावितं मातुलुङ्गस्य चूर्णमेतद्रसेन वा ।
बहुशो गुटिका कार्याः कार्षिकाः स्युस्ततोऽधिकम् ॥ ७५ ॥

इति हिंग्वादिचूर्णम् ।

हिंगुग्रन्थिकधान्यजीरकवचा चव्याग्निपाठाशठी ।
वृचाम्लं लवणत्रयं त्रिकटुकं चारद्वयं दाड़िमम् ॥
पथ्या पौष्करवेतसाम्लहपुषाजाज्यस्तदेभिः कृतम् ।
चूर्णं भावितमेतदार्द्रकरसैः स्याद्बीजपूरद्रवैः ॥ ७६ ॥
गुल्माधानगुदांकुरग्रहणिकोदावर्त्तसंज्ञान् गदान्
प्रत्याधानगदोदराश्मरियुतांस्तूनीद्वयारोचकान् ।
ऊरुस्तम्भमतिभ्रमश्च मनसो वाधिर्य्यमष्ठीलिकाम्
मत्यष्टिलिकया सहापहरते प्राक् पीतमुष्णाम्बुना ॥ ७७ ॥

हृत्कुक्षिवङ्क्षणकटीजठरान्तरेषु
बस्तिस्तनांसफलकेषु च पार्श्वयोश्च ।
शूलानि नाशयति वातबलासजानि
हिंग्वाद्यमाद्यमिदमाश्विनसंहितोक्तम् ॥ ७८ ॥

इति द्वितीयहिंग्वाद्यं चूर्णम् ।

गुल्मवान्मदिरामण्डैः स्तैलमैरण्डजं पिबेत् ।
बलासे प्रबले वाते पित्ते तु चोरसयुतम् ॥ ७९ ॥

इति संक्षिप्तगुल्माः ।

## अथ निदानम् ।

महारुजं दाहपरीतमश्मवत्
घनोन्नत शीघ्रविदाहि दारुणम् ।
मन. शरीराग्निबलापहारिणं
त्रिदोषजं गुल्ममसाध्यमादिशेत् ॥ ८० ॥

—०—

## अथ चिकित्सामाह ।

धीमानुपाचरेद्गुल्मं प्रत्याख्यायत्रिदोषजम् ।
सन्निपातोत्थिते गुल्मे त्रिदोषघ्नो विधिर्हितः ॥ ८१ ॥
धात्रीफलानां स्वरसे षडङ्गं विपचेद्घृतम् ।
शर्करासैन्धवोपेतं तद्धितं सर्वगुल्मिनाम् ॥ ८२ ॥
इति धात्रीफलकं घृतम् । इति त्रिदोषगुल्मः ।
लङ्घनं दीपनं स्निग्ध मुष्णं वातानुलोमनम् ।
बृंहणञ्च भवेदन्नं तद्धितं सर्वगुल्मिनाम् ॥ ८३ ॥
गुल्मिनामनिलशान्तिरुपायैः सर्वशो विधिवदाचरितव्या ।
मारुते तु विजिते समुदीर्णं दोषमल्पमपि कर्म्मनिहन्यात् ॥८४॥
सुखोष्णजाङ्गलरसाः सुस्निग्धाव्यक्तसैन्धवाः ।
कटुत्रिकसमायुक्ताः हिताः पानेषु गुल्मिनाम् ॥ ८५ ॥
कुम्भीपक्वेष्टकास्वेदान् कारयेत् कुशलो भिषक् ।
उपनाहाश्च कर्त्तव्याः सुखोष्णाः साल्वणादयः ॥ ८६ ॥
स्थानावसेको रक्तस्य बाहुमध्ये शिराव्यधः ।
स्वेदानुलोमनञ्चैव प्रशस्तं सर्वगुल्मिनाम् ॥ ८७ ॥
स्रोतसामार्दवं कृत्वा जित्वा मारुतमुल्वणम् ।
भित्वा विबन्धं गुल्मस्य स्वेदो गुल्ममपोहति ॥ ८८ ॥

वल्लूरं मूलकं मत्स्यान् शुष्कशाकांश्च वैदलम्।
न खादेदालुकं गुल्मी मधुराणि फलानि च ॥ ८९ ॥
ऊर्ध्ववातञ्च मनुजं गुल्मिनश्च निरुहयेत् ॥ ९० ॥

—०—

वचाविडाऽभयाशुण्ठी हिगुकुष्ठाग्निदीप्यकाः।
द्विविपट् चतुरेकाष्ट सप्तपञ्चांशिकाः क्रमात् ॥ ९१ ॥
चूर्णं मद्यादिभिः पीतं गुल्मानाहोदरापहम्।
शूलार्शः श्वासकासघ्नं ग्रहणीदीपनं परम् ॥ ९२ ॥

इति वचाद्यं चूर्णम्।

पाठानिकुम्भरजनी त्रिकटुत्रिफलाग्निकम्।
लवण द्वयवीजञ्च चूर्णं गोमूत्रसाधितम् ॥ ९३ ॥
घनीभूते तु वटिकां कृत्वा खादेत्तु गुल्मवान्।
गुल्मप्लीहाग्निसादांश्च नाशयेयुरशेषतः ॥ ९४ ॥
हिङ्गुपुष्करमूलानि तुम्बुरूणि हरीतकीम्।
श्यामां विड़ सैन्धवञ्च यवक्षारं महौषधम् ॥ ९५ ॥
यवक्वाथोदकेनैव घृतभ्रष्टन्तु पाययेत्।
तेनास्य भिद्यते गुल्मः समूलः सपरिग्रहः ॥ ९६ ॥
वचाहरीतकीहिङ्गु सैन्धवं साम्लवेतसम्।
यवक्षारं यवानीञ्च पिबेदुष्णेन वारिणा ॥ ९७ ॥
एतद्धि गुल्मनिचय समूल सपरिग्रहम्।
भिनत्तिसप्तरात्रेण वह्नेर्वृद्धिं करोति च ॥ ९८ ॥
वातवर्चो निरोधे वा माषमुद्गार्द्रार्कसर्षपैः।
कृत्वा पापो विधातव्या वर्त्तयो मरिचोत्तरैः ॥ ९९ ॥
खादेद्वाप्यंकुरान् भृष्टा पूतीकान्टपहचयोः।

पिबेत्त्रिवृन्नागरं वा सगुडां वा हरीतकीम् ॥ १०० ॥
गुग्गुलुं त्रिवृतां दन्तीं द्रवन्तीं सैंधवं वचाम् ।
मूत्रमद्यपयो द्राक्षा रसैर्वीक्ष्य यथा बलम् ॥ १०१ ॥
क्षारद्वयानलव्योष नीलीलवणपञ्चकम् ।
चूर्णितं सर्पिषापेयं सर्वगुल्मोदरापहम् ॥ १०२ ॥

षड्भिः पलैर्मगधजाफलमूलचव्य
विश्वौषधज्वलनयावककल्कपक्वम् ।
प्रस्थं घृतस्य दशमूलरुवूकभार्ङ्गी
क्वाथेन वा पयसि दध्नि च षट्पलाख्यम् ॥१०३॥
गुल्मोदरारुचिभगन्दरवह्निसाद-
कासज्वरक्षयशिरोग्रहणीविकारान् ।
सद्यः शमं नयति ये च कफानिलोत्थान्
तानाशु नाशयति दुर्जयमग्निमान्द्यम् ॥ १०४ ॥
इति भार्गीषट्पलकं घृतम् ।

दन्त्याः चतुष्पलरसे पिष्टैर्दन्तीशिलाटुभिः ।
पचेत्प्रस्थं घृतात्गुल्म प्लीहपांड्वार्त्तिशूलनुत् ॥ १०५ ॥

---

त्रिवृदर्कस्नुहीक्षीर कम्पिल्लैश्च पलांशकैः ।
सैन्धवादिपलोपेतैः हविः कुडवमश्नसि ॥ १०६ ॥
पक्वमस्मात्पिबेत्कर्षं सुखाम्बयनुपानकम् ।
सर्वगुल्मोदरध्वंसि स्रंसनं बिन्दुसञ्ज्ञकम् ॥ १०७ ॥
इति बिन्दुघृतम् ।

विड्दाडिमसिन्धूत्थ हुतभुग्व्योषजीरकैः ।
हिङ्गु सौवर्चलक्षार चुक्रहस्ताम्लवेतसैः ॥ १०८ ॥

वीजपूररसोपेतैः सर्पिर्दधिचतुर्गुणम् ।
साधितं दधिकं नाम्ना गुल्मोदरपार्श्वशूलनुत् ॥ १०९ ॥

इति दधिकघृतम् ।

नीलिनीं त्रिफलां रास्नां बलां कटुकरोहिणीम् ।
पचेद्विडङ्गं व्याघ्रीञ्च पलिकानि जलाढ़के ॥ ११० ॥
तेन पादावशेषेण घृतप्रस्थं विपाचयेत् ।
दध्नः प्रस्थेन संयोज्य सुधाक्षीरपलेन च ॥ १११ ॥
ततो घृतपलं दद्यात् यवागूमंडमिश्रितम् ।
जीर्णे सम्यग्विरिक्तञ्च भोजयेद्रसभोजनम् ॥ ११२ ॥
गुल्मकुष्ठोदरव्यंग शोफपांड्वामयज्वरान् ।
श्वित्रं प्लीहानमानाहं घृतमेतदपोहति ॥ ११३ ॥

इति नीलिनीघृतम् ।

वचापुष्करकुष्ठैला मदनामरसिन्धुजैः ।
काकोलीद्वयथ्याह्व मेदायुग्मकुटन्नटैः ॥ ११४ ॥
पाठाजीरकजीवन्ती भार्गीचन्दनकट्फलैः ।
सरलागुरुविल्वाम्र वाजिगन्धाग्निहिङ्गुभिः ॥ ११५ ॥
विड़ङ्गारग्वधश्यामा त्रिवृन्मागधिकादिभिः ।
पिष्टैस्तैलं पचेत्क्षीरे पञ्चमूलीरसान्विते ॥ ११६ ॥
गुल्मानाहाग्निमान्द्यार्शो ग्रहणीमूत्रसङ्गिनाम् ।
अन्वासनविधौ युक्तं शस्यतेऽनिलरोगिषु ॥ ११७ ॥

इति वचाद्यं तैलम् ।

शठीपुष्करमूलञ्च दन्तीचित्रकमाढकी ।
शृङ्गवेरं वचाञ्चैव पलिकानि समाहरेत् ॥ ११८ ॥
त्रिवृत्तायाः पलं कुर्य्यात् त्रीन् कर्षांश्चैव हिंगुनः ।

पलं हि लवणानाञ्च यवक्षारपलं तथा ॥ ११९ ॥
सद्यः पुष्करमूलस्य दन्ती चित्रकयोरपि ।
द्वे द्वे पले तथा शुण्ठ्या द्वे पले चाम्लवेतसात् ॥ १२० ॥
यवान्यजाजीमरिचं धान्यकं गिरिकर्णिका ।
उपकुञ्चिकाजमोदा च कुर्य्यादर्द्धपलोन्मितान् ॥ १२१ ॥
हरीतकीपले द्वे च विड़ङ्गं दाडिमं तथा ।
मातुलुङ्गरसेनैव गुड़िकाः कारयेद्भिषक् ॥ १२२ ॥
एकान्तासाञ्च द्वे तिस्रो गुटिकास्ताः सुखांवुना ।
अम्लैर्मद्यैश्च पातव्या घृतेन पयसाऽथवा ॥ १२३ ॥
एताः काङ्कायनेनोक्ताः गुटिका गुल्मभेदिकाः ।
अर्शो हृद्ग्रहणीरोग क्रमिनाञ्च विनाशिकाः ॥ १२४ ॥
गोमूत्रेण निहन्त्युग्र श्लेष्मगुल्मं चिरोत्थितम् ।
क्षीरेण पित्तगुल्मन्तु मद्येन श्लेष्मवातिकम् ॥ १२५ ॥
त्रिफलारसमूत्राभ्यां निचयं सान्निपातिकम् ।
रक्तगुल्मञ्च नारीनां पयसाकारभेण तु ॥ १२६ ॥

इति काङ्कायनगुटिका ।

—०—

हिंगुत्रिकटुकवचाजमोदा धान्याजगन्धा दाडिमतिन्तिड़ीका पाठाचित्रकचव्यसैन्धवविडसौवर्चलयवक्षारस्वर्जिका पिप्पलीमूलाम्लवेतसशठीपुष्करहपुषाजाजीपथ्याः । संचूर्ण्य, मातुलुङ्गरसेन बहुशः परिभाव्य गुटिकाः कारयेत् । ततः प्रातरेकैकां वातरोगी च भक्षयेत् । एवं खलु योगो गुल्मश्वासकासारोचकहृद्रोगान् हरति भयं जन्तून् प्रति प्रयोगपात्यर्यमुपयुज्यत इति । इति हिंग्वादिवटिकाप्रकारः संस्कृतेनोक्तः ।

—०—

अपामार्गपलाशानां तथैवेक्षुरसस्य च।
स्नुह्यर्कयोर्मातुलुङ्ग कुटजस्याग्निकस्य च॥ १२७॥
तिलसर्षपमूलानि दग्ध्वा भस्मानि कारयेत्।
गोजाविमूत्रसहितं सर्पिस्तैलसमन्वितम्॥ १२८॥
वृषपर्णं पिप्पलीमूलं चित्रकं शुष्कमूलकम्।
मूर्वामतिविषां पाठां कुष्ठं भल्लातकानि च॥ १२९॥
चव्यं पूतिकरञ्जञ्च विल्वं कटुकरोहिणीम्।
द्वौ क्षारौ पञ्चलवणं समभागानि कारयेत्॥ १३०॥
सन्नीयचूर्णलवणैः शनैर्मृद्वग्निना पचेत्।
तदग्निचूर्णं निर्धूमं कृत्वा चूर्णं सुशीतलम्॥ १३१॥
अङ्गुलीग्रहमालोड्य सुरामंडेन पाययेत्।
मस्त्वारणालमूत्रैस्तु युक्तः स्याद्वातगुल्मनुत्॥ १३२॥
शूलवातोदरप्लीहपांड्वामय किलासकम्।
हन्यादारोग्यलवणं प्रशस्तं वाफवातनुत्॥ १३३॥

इत्यारोग्यलवणम्।

नादेयी कुटजार्कशिग्रु वृहती स्नुग्विल्वभल्लातक।
व्याघ्रीकिंशुकपारिभद्रकजटाऽपामार्गनीपाऽग्निकान्॥
वासामुष्ककपाटलीं सलवणां दग्ध्वा जले पाचितम्।
हिंग्वादिप्रतिवापमेतदुदितं गुल्मोदराष्ठीलिषु॥ १३४॥

इति नादेयीक्षारः।

कोऽसौ हिंग्वादिर्यस्य प्रतिवापः क्रियते।

---

हिंगूग्रगन्धाविडशुण्ठ्यजाजी हरीतकीपुष्करमूलकुष्टम्।
भागोत्तरं चूर्णितमेतदिष्टं गुल्मोदराजीर्णविषूचिकासु॥ १३५॥

इति सामान्यविधिः।

## अथ निदानमाह ।

नवप्रसूता हितभोजनाया या चामगर्भं विसृजेद्दती वा ।
वायुर्हि तस्याः परिगृह्य रक्तं करोति गुल्मं सरुजं सदाहम् ॥१३६॥
पैत्तस्य लिङ्गेन समानलिङ्ग* विशेषमप्याप्यपरं निबोध ।
यः स्पन्दते पिण्डित एव नाङ्गैश्चिरात्सशूलः समगर्भलिङ्गः ॥
सरौधिरः स्त्रीभव एवगुल्मो मासे व्यतीते दशमे चिकित्स्यः ॥१३७॥

—०—

## अथ चिकित्सामाह ।

रौधिरस्य तु गुल्मस्य गर्भकालक्रमेण च ।
सुस्निग्धस्विन्नकायायै योज्यं स्नेहविरेचनम् ॥ १३८ ॥
शताह्वाचिरविल्वत्वग् दारुभार्गीकणाभवः ।
कल्कः पीतो जयेद्गुल्मं तिलक्वाथेन रक्तजम् ॥ १३९ ॥
तिलक्वाथो गुड़व्योष घृतभार्गीयुतो भवेत् ।
पानं रक्तभवे गुल्मे नष्टे पुष्पे च योषिताम् ॥ १४० ॥
पीतः सुरारसो युक्त्या मदिरा वाऽसृग् गुल्मनुत् ॥ १४१ ॥
मुंडिरे चनिकाचूर्णं शर्करामाक्षिकान्वितम् ।
विदधीतास्रगुल्मिन्यां मलसंरेचनाय च ॥ १४२ ॥
विशेषमपरश्चाप्याः शृणुरक्तप्रभेदनम् ।
पलाशक्षारतोयेन सर्पिः सिद्धं पिबेच्च सा ॥ १४३ ॥
यस्मिन्नवसरे क्षारतोयसाध्यघृतादिषु ।
फेनोद्गमस्य निष्पत्ति नष्टदुग्धसमाकृते ॥ १४४ ॥
स एव तस्य पाकस्य कालो नेतरलक्षणः ॥

इति पलाशक्षारघृतम् ।

कह्लारमुत्पलं पद्मं कुमुदं मधुयष्टिका ।

पक्वाम्बुनाथ तत् क्वाथं जीवनीयोपकल्पितम् ॥ १४५ ॥
घृतं पक्वा नवं पीतं रक्तपित्तास्रगुल्मनुत्।
दाहतृष्णाज्वरच्छर्दि योनिदोषहरं परम् ॥ १४६ ॥

इति कह्लारकं घृतम्।

उष्णैर्वा भेदयेद्भिन्ने विधिरासृग्दरो हितः।
अतिप्रवृत्तमस्रन्तु भिन्ने गुल्मे निवारयेत् ॥ १४७ ॥
रक्तपित्तहरैर्योगै र्वातघ्नैश्च मरुद्गदान्।
गुर्वभिष्यन्दिकुर्य्याद्धि रचनग्निबलं सदा ॥ १४८ ॥
गुल्मवत् स्वन्नपानानि यथावस्थं प्रयोजयेत् ॥ १४९ ॥

इति रक्तगुल्मः।

—०—

## असाध्यलक्षणान्याह।

सञ्चितः क्रमशो गुल्मो महावास्तुपरिग्रहः।
क्षतशूलः शिरानद्धो यदा कूर्म इवोन्नतः ॥ १५० ॥
दौर्बल्यारुचिहृल्लास कासच्छर्द्यरुचिज्वरैः।
तृष्णातन्द्रा प्रतिश्यायै र्युज्यते न स सिध्यति ॥ १५१ ॥
गृहीत्वा सरुजं श्वासं छर्द्यतीसारपीड़ितम्।
हृन्नाभिहस्तपादेषु शोथः कर्षति गुल्मिनम् ॥ १५२ ॥
श्वासः शूलं पिपासान्न विद्वेषो ग्रन्थिमूढ़ता।
जायते दुर्बलत्वञ्च गुल्मिनो मरणाय वै ॥ १५३ ॥

## इति वङ्गसेने गुल्मनिदानचिकित्साधिकारः समाप्तः ॥ ३२ ॥

—०—

## अथ हृद्रोगनिदानमाह ।

अत्युष्णगुर्वम्लकषायतिक्तश्रमाभिघाताध्यशनप्रसङ्गैः ।
सञ्चिन्तनैर्वेगविधारणैश्च हृदामयः पञ्चविधः प्रदिष्टः ॥ १ ॥

जठरानलदौर्बल्यादविपक्वस्तु यो रसः ।
स आमसंज्ञको देहे सर्वदोषप्रकोपजः ॥ २ ॥

अन्यदोषैस्य एवादौ विरुद्धेभ्योऽन्यमूर्छनात् ।
कोद्रवेभ्यो विषस्येव वदन्त्यामस्य सम्भवम् ॥ ३ ॥

दूषयित्वा रसं दोषा विगुणा हृदयं गताः ।
हृदि बाधां प्रकुर्वन्ति हृद्रोगं तं प्रचक्षते ॥ ४ ॥

आयम्यते मारुतजे हृदयन्तुद्यते तथा ।
निर्मथ्यते दीर्यते च स्फोट्यते पाट्यतेऽपि च ॥ ५ ॥

---

## अथ चिकित्सामाह ।

वातोपसृष्टे हृदये वामयेत् स्निग्धमातुरम् ।
द्विपञ्चमूलीक्वाथेन सस्नेह लवणेन च ॥ ६ ॥

पिप्पल्येलावचाहिंगु यवक्षारोऽथ सैन्धवम् ।
सौवर्चलमथो शुण्ठी ह्यजमोदा च चूर्णितम् ॥ ७ ॥

फलधान्याम्लकौलित्थ दधिमद्यवसादिभिः ।
पाययेच्छुद्धदेहञ्च स्नेहेनान्यतमेन च ॥ ८ ॥

सपुष्कराह्वं फलपूरमूलं महौषधं शट्यभया च कल्कः ।
क्षाराम्बुसर्पिर्लवणैर्विमिश्रः स्याद्वातहृद्रोगविकर्तिकाय ॥ ९ ॥

क्वाथः कृतः पौष्करमातुलुङ्गपलाशपूतीकशठीसुराह्वैः ।
सनागराजाजिवचायवानी, सक्षार उष्णो लवणेन पेयः ॥ १० ॥

हरीतकीपुष्करनागराह्वैर्यवैर्वयस्थालवणैश्च कल्कः ।

सहिंगुभिः साधितमेभिः सर्पिः हितञ्च हृत्पार्श्वगदेऽनिलोत्थे ॥११॥

इति हरीतक्याद्यं घृतम् ।

पुनर्नवां दारु सपञ्चमूलं रास्नां यवान् कोलकपित्थविल्वम् ।
पक्त्वा जले तेन पचेत्तु तैलमभ्यङ्गपानेऽनिलहृद्गदघ्नम् ॥ १२ ॥

इति पुनर्नवाद्यं तैलम् ।

वन्यमांसरसक्षीर घृतशाल्पिञ्च भोजयेत् ।
वातघ्नसिद्धं तैलञ्च वस्तिं दद्याद्विचक्षणः ॥ १३ ॥

इति वातहृद्रोगः ।

—०—

## अथ निदानम् ।

तृष्णोष्णदाहशोषाः स्युः पैत्तिके हृदयक्लमः ।
धूमायनञ्च मूर्च्छा च स्वेदः शोषो मुखस्य च ॥ १४ ॥

—०—

## अथ चिकित्सामाह ।

श्रीपर्णीमधुकक्षौद्र सितागुडजलैर्वमेत् ।
पित्तोपसृष्टे हृदये सेवेत मधुरैः शृतम् ।
घृतं कषायांश्चोद्दिष्टान् पित्तज्वरविनाशनान् ॥ १५ ॥
शीताः प्रदेहाः परिशोधनञ्च तथा विरेको हृदिपित्तदुष्टे ।
द्राक्षासिताक्षौद्रपरूषकैः स्याच्छुद्धे च पित्तापहमन्नपानम् ॥१६॥
पिष्ट्वा पिबेद्वापि सिता जलेन यष्ट्याह्वयं तिक्तकरोहिणीं च ॥१७॥
अर्जुनस्य त्वचा सिद्धं क्षीरं योज्यं हृदामये ।
सितया पञ्चमूल्या वा बलया मधुकेन वा ॥ १८ ॥

इत्यर्जुनादि क्षीरपाकम् ।

घृतेन दुग्धेन गुड़ाम्भसा वा पिबन्ति चूर्णं ककुभत्वचो ये।
हृद्रोगजीर्णज्वररक्तपित्तं हत्वा भवेयुश्चिरजीविनस्ते ॥ १८ ॥

इति काकुभादिचूर्णम्।

कशेरुकाशैवलशृङ्गवेरप्रपौण्डरीकं मधुकं बिसञ्च।
ग्रन्थिञ्च सर्पिः पयसापचेत्तैः क्षौद्रान्वितं पित्तगदामयघ्नम् ॥२०॥

इति कशेरुकाद्य घृतम्।

श्रेयसीशर्कराद्राक्षा जीवकर्षभकोत्पलैः।
बलाखर्जूरकाकोली मेदायुग्मैश्च साधितम् ॥ २१ ॥
सक्षीर माहिषं सर्पिः पित्तहृद्रोगनाशनम् ॥

इति श्रेयस्याद्यं घृतम्।

स्थिरादिकल्कवत्सर्पिः क्षीरेणेक्षुरसेन वा।
द्राक्षारसेन पक्वं वा पित्तरोगविनाशनम् ॥ २२ ॥

इति स्थिराद्यं घृतम्।

सक्षौद्रं वितरेदस्मिं स्तैलं मधुकसंयुतम् ॥ २३ ॥

इति पित्तहृद्रोग।

—o—

## अथ निदानमाह।

गौरवं कफसंस्रावोऽरुचिस्तम्भोऽग्निमार्दवम्।
माधुर्य्यमपि चास्यस्य बला मावतते हृदि ॥ २४ ॥

—o—

## अथ चिकित्सामाह।

हृद्रोगे कफजे स्विन्नं वमितं लङ्घितं नरम्।
कफघ्नैर्भेषजैर्युञ्ज्यात् ज्ञात्वा दोष बलाबलम् ॥ २५ ॥
वचानिम्बकषायाभ्यां वाम्यं हृदि कफोत्थिते।

वातहृद्रोगहृच्चूर्णं पिप्पल्यादि च योजयेत् ॥ २६ ॥
कुम्भीशठीवलारास्ना शुण्ठी पथ्या स पौष्करा:।
चूर्णिता वा सृता मूत्रे पातव्याः कफहृद्ग्रहे ॥ २७ ॥
सूक्ष्मैला मागधीमूलं प्रलीढं सर्पिषा सह।
नाशयत्याशु हृद्रोगं गुल्मानपि विशेषतः ॥ २८ ॥

—०—

मुस्तैलाचन्दनोशीर जीवनीयौषधिचित्रकाः।
बिल्वत्वक् कटुकादारु दार्वीत्वक् पर्पटत्वचः ॥ २९ ॥
पटोलं निम्बपंड्ग्रन्था ऋद्धिभूनिम्बशिग्रुकाः।
चूर्णं त्रायन्ती सौराष्ट्री केशरातिविषा समाः ॥ ३० ॥
तिलकाख्यं हन्ति हृद्रोगं शूलहृत् सन्निपातजित्।

इति तिलकं चूर्णम्।

फलतैलं विदध्याच्च वस्तौ वस्तिविशारदः ॥ ३१ ॥
कौलित्थधान्यैश्च रसैर्यवान्नपानानि तीक्ष्णानि सशर्कराणि ॥ ३२ ॥

इति कफहृद्रोगः।

—०—

## अथ निदानमाह।

यद्याचिदोपल्लवि सर्वलिङ्गं तीव्रार्त्तितोदं कृमिजं सकंडूम् ॥३३॥
उत्क्लेदः ष्ठीवनं तोदः शूलं हृल्लासकस्तमः।
अरुचिः श्यावनेत्रत्वं शोषश्च कृमिजे भवेत् ॥ ३४ ॥
क्लमः सादो भ्रमः शोषो ज्ञेयास्तेषामुपद्रवाः।
कृमिजे कृमिजातीनां श्लैष्मिकानाञ्च ये मताः ॥ ३५ ॥
त्रिदोषजे लङ्घनमादितः स्या दन्नञ्च सर्वेषु हितं विधेयम्।
हीनाधिकं मध्यमवेच्य चैव कार्यं त्रयाणामपि कर्म शस्तम् ॥३६॥
हृद्रोगे कृमिजे पूर्वं कुर्य्याल्लङ्घनपाचनम्।

पश्चात् क्रमिहरं कर्म्म क्रमिरोगोक्तमाचरेत् ॥ ३७ ॥
क्रमिजे च पिवेन्मूत्रं विड़ङ्गामयसंयुतम् ।
हृदिस्थिताः पतन्त्येव ह्यधस्तात् क्रमयो नृणाम् ॥ ३८ ॥
क्रमिहृद्रोगिणां स्निग्धं भोजयेत्पिशितोदनम् ।
दध्ना च पललोपेतं त्र्यहं पश्चाद्विरेचयेत् ॥ ३९ ॥
सुगन्धिभिः सलवणैः योगैः साजाजिशर्करैः ।
विडङ्गाढ्यैर्धान्याम्लं पाययेत्सिद्धमुत्तमम् ॥ ४० ॥
यवान्नं वितरेच्चास्मै सविड़ङ्गमतःपरम् ॥ ४१ ॥

इति त्रिदोषक्रमिहृद्रोगौ ।

चूर्णं पुष्करजं लिह्यान् माक्षिकेण समायुतम् ।
हृच्छूलश्वासकासघ्नं क्षयहिक्कानिवारणम् ॥ ४२ ॥
हिंगुसौवर्चलं विश्वं दाडिमं साम्लवेतसम् ।
चूर्णमुष्णाम्बुना पेयं श्वासहृद्रोगशान्तये ॥ ४३ ॥

इति हिंगुपञ्चकम् ।

हिंगूग्रगन्धाविडविश्वकृष्णाकुष्टाभयाचित्रकयावशूकम् ।
पिवेत्ससौवर्चलपुष्कराढ्यं यवाम्भसा शूलहृदामयघ्नम् ॥ ४४ ॥
दशमूलकषायन्तु लवणक्षारयोजितम् ।
कासं श्वासञ्च हृद्रोगं गुल्मशूलञ्च नाशयेत् ॥ ४५ ॥
घृतेन दुग्धेन गुडाम्भसा वा पिवन्ति चूर्णं ककुभत्वचोत्थम् ।
हृद्रोगजीर्णज्वररक्तपित्तं हत्वा भवेयुश्चिरजीविनस्ते ॥ ४६ ॥
हरीतकीवचारास्ना पिप्पल्यो विश्वभेषजम् ।
शठीपुष्करमूलञ्च चूर्णं हृद्रोगनाशनम् ॥ ४७ ॥
पुटदग्धं हरिणशृङ्गं पिष्टं गव्येन सर्पिषा पिवतः ।
हृत्पृष्ठशूलमचिरादुपैति शान्तिं सुकष्टमपि ॥ ४८ ॥
तैलाज्यगुड़विपक्वं चूर्णं गोधूमपार्थजं वापि ।

पिबति पयसा यः स भवे ज्जितसंकलहृदामयः पुरुषः ॥४८॥
गोधूमककुभचूर्णं छागपयो गव्यसर्पिषा पक्वम्।
मधुशर्करासमेतं शमयति हृद्रोगमुद्धतं पुंसाम् ॥ ५० ॥
मुख्यं शतार्द्धन्तु हरीतकीनां सौवर्चलस्यापि पलद्वयञ्च।
सिद्धं घृतं वल्लभकं हि नाम्ना हृत्कासगुल्मोदरमारुतघ्नम् ॥५१॥
इति वल्लभघृतम्।

शतार्धमभयानान्तु सौवर्चलपलद्वयम्।
पचेत्कल्कै र्घृतप्रस्थं दत्वा चीरं चतुर्गुणम् ॥ ५२ ॥
घृत वल्लभकं नाम्ना श्रेष्ठं स्यादयतन्त्रके ॥
*इति चीरवल्लभघृतम्।*

पार्थस्य कल्कं स्वरसेन सिद्धं शस्तं घृतं सर्वहृदामयघ्नम् ॥ ५३ ॥
इत्यर्जुनघृतम्।

घृतं बलां नागबलार्जुनांबुसिद्धं सयष्टीमधुकल्कपादम्।
हृद्रोगशूलं चतरक्तपित्तकासानिलासृक् शमयत्युदीर्णम् ॥ ५४ ॥
इति बलाद्य घृतम्।

## इति वङ्गसेने हृद्रोगनिदानचिकित्साधिकारः समाप्तः ॥ ३३ ॥

—०—

## अथोरोग्रहनिदानमाह।

अत्यभिष्यन्दि गुर्वन्नशुष्कपूत्यऽमिषाशनात्।
सास्रं सामं यकृत्प्लीह सद्यो वृद्धिं यथा गतम् ॥ १ ॥
उरोग्रहं तदा कुचौ कुरुतः कफमारुतौ।
सस्तम्भं सरुजं घोरं रूचं सश्वासह गुरुम् ॥ २ ॥

आध्मानकुक्षिहृच्छोथ वांतविग्मत्ररोधता।
तन्द्रारोचकशूलानि तत्र लिङ्गानि निर्दिशेत्॥ ३॥

—०—

## अथ चिकित्सामाह।

अत्राशु स्वेदनं युक्त्या दहनं रक्तमोक्षणम्।
तीक्ष्णैर्निरूहणं चैकं क्रमात्तत्क्षणमादरात्॥ ४॥
पुत्रजीवकशिग्रूत्थाः सूर्यावर्त्तबलोद्भवाः।
रसा एकैकशः कोष्णाश्चिशो वा रामठान्विताः॥ ५॥
सपञ्चलवणाः पेयाः त्रिवृद्गुडसुकल्पिताः।
त प्रवृत्तं यथा लाभं मूत्रतैलसुरासवैः॥ ६॥
दध्याम्लवेतसक्षारान् सरामठान् सचित्रकान्।
पिबेत्तैलारनालाभ्यां सुरोग्रहनिवृत्तये॥ ७॥
यथातुरेणात्र कृतस्य कर्मणो विधेर्विरोधो न भवेन्मनागपि।
यथा बलं वीक्ष्य च शुद्धविग्रहं तथाविधं पथ्यमिति प्रयोजयेत्॥८

## इति वङ्गसेन उरोग्रहनिदानचिकित्साधिकारः समाप्तः॥ ३४॥

—०—

## अथ मूत्रकृच्छ्रनिदानमाह।

व्यायाम तीक्ष्णौषधरूक्षमद्यप्रसङ्गनित्यद्रुतपृष्ठयानात्।
आनूपमत्स्याध्यशनादजीर्णात् स्युर्मूत्रकृच्छ्राणि नृणां तथाष्टौ॥१॥
पृथग्मलाः स्वैः कुपिता निदानैः सर्वेऽथवा कोपमुपेत्य वस्तौ।
मूत्रस्य मार्गं परिपीडयन्ति यदा तदा मूत्रयतीह कृच्छ्रात्॥ २॥
तीव्रा हि रुग्वङ्क्षणबस्तिमेढ्रे स्वल्पं मुहुर्मूत्रयतीह वातात्।

पीतं सरक्तं सरुजं सदाहं कृच्छ्रं मुहुर्मूत्रयतीह पित्तात् ॥ ३ ॥
वस्तेः सलिङ्गस्य गुरुत्व शोथौ मूत्रं सपिच्छं कफमूत्रकृच्छ्रे ।
सर्वाणि रूपाणि तु सन्निपाताद्भवंति तत् कृच्छ्रतमञ्च कृच्छ्रम् ॥४॥
मूत्रवाहिषु शल्येन क्षतेष्वभिहतेषु च ।
मूत्रकृच्छ्रं तदाघाता ज्जायते भृशदारुणम् ।
वातकृच्छ्रेण तुल्यानि तस्य लिङ्गानि निर्दिशेत् ॥ ५ ॥
शकृतस्तु प्रतिघाता द्वायुर्विगुणतां गतः ।
आध्मानं वातशूलञ्च मूत्रसङ्गं करोति च ॥ ६ ॥
अश्मरीहेतुतत्पूर्वं मूत्रकृच्छ्रमुदाहरेत् ॥ ७ ॥
शुक्रे दोषैरुपहते मूत्रमार्गं विधाविते ।
सशुक्रं मूत्रयेत् कृच्छ्रा द्वस्तिमेहनशूलवान् ॥ ८ ॥
अश्मरी शर्करा चैव तुल्यसम्भवलक्षणे ।
विशेषणं शर्करायाः शृणु कीर्त्तयतो मम ॥ ९ ॥
पच्यमानाश्मरी पित्ताच्छोष्यमाणा च वायुना ।
विमुक्त कफसन्धाना क्षरन्ती शर्करा मता ॥ १० ॥
हृत्पीडा वेपथुः शूलं कुक्षावग्निस्तु दुर्बलः ।
तया भवति मूर्च्छा च मूत्रकृच्छ्रञ्च दारुणम् ॥ ११ ॥

—०—

## अथ चिकित्सामाह ।

अभ्यञ्जनस्नेहनिरूहवस्ति स्वेदोपनाहोत्तरवस्तिसेकान् ।
स्थिरादिभिर्वातहरैश्च सिद्धान् दद्याद्रसांश्चानिलमूत्रकृच्छ्रे ॥१२॥
अमृतानागराधात्री वाजिगन्धात्रिकण्टकम् ।
प्रपिबेद्वातरोगार्त्तः शूलवान् मूत्रकृच्छ्रवान् ॥ १३ ॥
पुनर्नवैरण्डशतावरीभिः पत्तूरहस्तीवबलाश्मभिद्भिः ।

द्विपलञ्चमूलेन कुलित्थकेन यवैश्च तोयोत्क्वथिते कषाये ॥ १४ ॥
तैलं वराहर्क्षवसाघृतञ्च तैरेव कल्कैर्लवणैश्च सिद्धम् ।
तन्मात्रयाव प्रतिहन्ति पीतं शूलान्वितं मारुतमूत्रकृच्छ्रम् ॥१५॥
पुनर्नवाद्यो मिश्रकः । इति वातकृच्छ्रम् ।

सेकावगाहाः शिशिराः प्रदेहा ग्रैष्मो विधिर्बस्तिपयोविकाराः ।
द्राक्षाविदारीक्षुरसैर्घृतैश्च कृच्छ्रेषु पित्तप्रभवेषु कर्य्यात् ॥ १६ ॥

कुशः काशः शरोदर्भः क्षुद्रयेति तृणोद्भवम् ।
पित्तकृच्छ्रहरं पञ्च शूलं बस्तिविशोधनम् ॥ १७ ॥
एतत्सिद्धं पयः पीतं मेढ्रगं हन्तिशोणितम् ॥ १८ ॥

शतावरीकासकुशाश्वदंष्ट्रा विदारीशालीक्षुकशेरुकाणाम् ।
क्वाथं सुशीतं मधुशर्कराभ्यां युक्तं पिवेत्पैत्तिकमूत्रकृच्छ्रे ॥ १९ ॥
एर्वारुबीजं मधुकं सदार्वी पैत्ते पिवेत्तंडुलधावनेन ।
दार्वी तथैवामलकीरसेन समाक्षिकं पित्तकृते च कृच्छ्रे ॥ २० ॥
हरीतकीगोक्षुरराजवृक्षपाषाणभिद्धन्वयवासकानाम् ।
क्वाथं पिवेन्माक्षिकसंप्रयुक्तं कृच्छ्रे सदाहे सरुजे विबन्धे ॥ २१ ॥

—०—

शतावरीकासकुशश्वदंष्ट्रा विदारिकेक्ष्वामलकैश्च सिद्धम् ।
सर्पिः पयो वा सितया विमिश्रं कृच्छ्रेषु पित्तप्रभवेषु योज्यम् ॥२२
इति शतावरीघृतम् चीरञ्च ।

त्रिकण्टकैरण्डकुशाद्यभीरु कर्कारुकेक्षुस्वरसेन सिद्धम् ।
सर्पिर्गुडार्द्धांशयुतं प्रयोज्यं कृच्छ्राश्मरीमूत्रविघातदोषे ॥ २३ ॥
अयं विशेषेण पुरा विधेयः सर्वाश्मरीणां मधुरः प्रयोगः ।
इति त्रिकण्टकाद्यं घृतम् । इति पित्तकृच्छ्रम् ।

क्षीरोष्णतीक्ष्णौषधमन्नपानं स्वेदो यवान्नं वमनं निरूहाः ।
तक्रञ्च तिक्तोषणसिद्धतैलान्यभ्यंगपानं कफमूत्रकृच्छ्रे ॥ २४ ॥

मूत्रेण सुरया वापि कदलीस्वरसेन वा।
कफकृच्छ्रविनाशाय सूक्ष्मं पिष्ट्वा त्रुटिं पिबेत्॥ २५॥
तक्रेण युक्तं शितिमारुकस्य बीजं पिबेन्मूत्रविघातहेतोः।
पिबेत्तथा तंडुलधावनेन प्रवालचूर्णं कफमूत्रकृच्छ्रे॥ २६॥
सर्वं त्रिदोषप्रभवे च कृच्छ्रे स्थानानुपूर्व्या प्रसमीक्ष्य कार्य्यम्।
त्रिभ्योऽधिके प्राग्वमनं कफे स्यात्पित्ते विरेकः पवने च वस्तिः॥२७
बृहतीधावनीपाठा यष्टीमधुकलिङ्गकाः।
पाचनीयो बृहत्यादिः कृच्छ्रदोषत्रयापहः॥ २८॥
गुडेन मिश्रितं क्षीरं कदूष्णं कामतः पिबेत्।
मूत्रकृच्छ्रेषु सर्वेषु शर्करा वातरोगनुत्॥ २९॥

इति त्रिदोषकृच्छ्रकम्।

मूत्रकृच्छ्रेऽभिघातोत्थे वातकृच्छ्रक्रिया मता।
पञ्चवल्कलकल्केपः कवोष्णोऽत्र प्रशस्यते॥ ३०॥
मद्यं पिबेद्वा ससितं ससर्पिः शृतं पयश्चापि सिताज्ययुक्तम्।
धात्रीरसं चेक्षुरसं पिबेद्वा कृच्छ्रे सरक्ते मधुना विमिश्रम्॥ ३१॥

इत्यभिघातकृच्छ्रम्।

लेह्यं शुक्रविबन्धोत्थे शिलाजतु समाक्षिकम्।
वृष्यैर्बृंहितधातोश्च विधेयाः प्रमदोत्तमाः॥ ३२॥

इति शुक्रजे मूत्रकृच्छ्रम्॥

एलाहिङ्गुयुतः क्षीरं सर्पिर्मिश्रं पिबेन्नरः।
मूत्रवृद्दोषशुद्ध्यर्थं शुक्रदोषहरं परम्॥ ३३॥
स्वेदचूर्णक्रियाऽभ्यङ्ग वस्तयः स्युः पुरीषजे।
कृच्छ्रे तत्र विधिः कार्य्यो सर्वशुक्रविबन्धजित्॥ ३४॥

काथो गोक्षुरवीजस्य यवचारयुतः सदा।
मूत्रकृच्छ्रं शकृज्जम पीतः शीघ्रं नियच्छति ॥ ३५ ॥

इति शकृज्जं कृच्छ्रम्।

सप्तछदारग्वधकेतकैलाः निम्बः करञ्जः कुटजो गडूची।
साध्या जले तेन पचेद्यवागूं सिद्धं कषायं मधुसंयुतं वा ॥३६॥
एर्वारुवीजकल्कश्च शस्यं पिष्टाचसंमितः।
धान्याम्ललवणैः पेयो मूत्रकृच्छ्रविनाशनः ॥ ३७ ॥
त्रिकण्टकारग्वधदर्भकाशदुरालभा पर्वतभेद पथ्याः।
निघ्नंति पीता मधुनाश्मरीन्तु संप्राप्त मृत्योरपि मूत्रकृच्छ्रम् ॥३८॥
निदग्धिकायाः स्वरसं कडवं मधुसंयुतम्।
मूत्रदोषहरं पीत्वा नरः सम्पद्यते सुखम् ॥ ३८ ॥
कषायोऽतिवलामूल साधितोऽशेषकृच्छ्रजित्।
पीतश्च त्रपुसीवीजं सतिलाज्यं पयोन्वितम् ॥ ४० ॥
त्रिफलायाः सुपिष्टायाः कल्कं कोलसमन्वितम्।
वारिणा लवणीकृत्य पिवेन्मूत्ररुजापहम् ॥ ४१ ॥
यवोरुवूकैस्तृणपञ्चमूलपाषाणभेदैः समतावरीभिः।
कृच्छ्रेषु गुग्गुल्वभया विमिश्रैः कृतः कषायो गुडसंप्रयुक्तः ॥४२॥
मूलानि कुशकाशेक्षु शराणां चेक्षुवालिकाः।
मूत्राघातेऽश्मरीकृच्छ्रे पञ्चमूली तृणात्मिका ॥ ४३ ॥
गुडमामलकं पिष्टं त्र्यमघ्नं सर्पणं प्रियम्।
पित्तासृग्दाहशूलघ्नं मूत्रकृच्छ्रनिवारणम् ॥ ४४ ॥
सितातुल्यो यवक्षारः सर्वकृच्छ्रप्रणाशनः।
द्राक्षासितो पलाकल्कं कृच्छ्रघ्नं मस्तुना युतम् ॥ ४५ ॥
विदारीगोरिवाछाग शृङ्गीवत्सादिनी निशा।
कृच्छ्रं पित्तानिलं हन्ति वस्तिजं पञ्चमूलकम् ॥ ४६ ॥

एलाश्मभेदकशिलाजतुपिप्पलीना-
मेर्वारुबीजलवणोत्तमकुङ्कुमानाम्।
चूर्णानि तण्डुलजले लुलितानि पीत्वा
प्रत्यग्रमृत्युरपि जीवति मूत्रकृच्छ्री ॥ ४७ ॥

अयोरजः श्लक्ष्णपिष्टं मधुना सह योजितम्।
मूत्रकृच्छ्रं निहन्त्याशु त्रिभिर्लेहैर्न संशयः ॥ ४८ ॥
पुनर्नवामूलतुला दर्भमूलं शतावरी।
बलातुरङ्गगन्धा च तृणमूलं त्रिकण्टकम् ॥ ४८ ॥
विदारीगन्धानागाह्व गुडूच्यतिबला तथा।
पृथग्दशपलान् भागा नपां द्रोणे विपाचयेत् ॥ ५० ॥
तेन पादावशेषेण घृतस्यार्द्धाढ़कं पचेत्।
मधुकं शृङ्गवेरञ्च द्राक्षासैन्धवपिप्पली ॥ ५१ ॥
द्विपलानि पृथग्दत्वा यवान्याः कुड़वं तथा।
त्रिंशद्गुड़पलान्यत्र तैलस्यैरण्डजस्य च ॥ ५२ ॥
एतदीश्वरपुत्राणां प्राग्भोजनमनिन्दितम्।
राज्ञां राजसमानानां बहुस्त्रीपतयश्च ये ॥ ५३ ॥
मूत्रकृच्छ्रे कटीशूले तथा गाढ़पुरीषिणाम्।
मेढ्रवङ्क्षणशूले च योनिशूले च शस्यते ॥ ५४ ॥
यथोक्तानाञ्च गुल्मानां वातशोणितजाश्च ये।
बल्यं रसायनं शीतं सुकुमारकुमारकम् ॥ ५५ ॥
पुनर्नवाशते द्रोणे देयोऽन्यं प्वपि चापरः।
इति सुकुमारकुमारकः पुनर्नवादिलेहः।
मूत्राघातविधानमप्यत्रकार्यम्।

इति वङ्गसेने मूत्रकृच्छ्रनिदानचिकित्साधिकारः
समाप्तः ॥ ३५ ॥

## अथ मूत्राघातनिदानमाह ।

जायन्ते कुपितैर्दोषे मूत्रघातास्त्रयोदश ।
प्रायोमूत्रविघाताद्यै र्वातकुण्डलिकादयः ॥ १ ॥
रोक्ष्याद्वेगाभिघाताद्वा वायुर्वस्तौ सवेदनः ।
मूत्रमाविश्य चरति विगुणः कुण्डलीकृतः ॥ २ ॥
मूत्रमल्पाल्पमथवा सरुजं संप्रवर्त्तते ।
वातकुण्डलिकान्तान्तु व्याधिं विद्यात् सुदारुणम् ॥ ३ ॥
आध्मापयन् वस्तिगुदं रुध्वावायुश्चलोन्नताम् ।
कुर्य्यात्तीव्रार्त्तिमष्ठीलां मूत्रविण्मार्गरोधिनीम् ॥ ४ ॥
वेगं विधारयेद्यस्तु मूत्रस्याकुशलो नरः ।
निरुणद्धि मुखं तस्य वस्तेर्वस्तिगतोऽनिलः ॥ ५ ॥
मूत्रसङ्गो भवे तेन वस्तिकुक्षिनिपीड़ितः ।
वातवस्तिः स विज्ञेयो व्याधिः कृच्छ्रप्रसाधनः ॥ ६ ॥
चिरं धारयतो मूत्रं त्वरया न प्रवर्त्तते ।
मेहमानस्य मन्दं वा मूत्रातीतः स उच्यते ॥ ७ ॥
मूत्रस्य वेगेऽभिहिते तदुदावर्त्तहेतुकः ।
अपानः कुपितो वायु रुदरं पूरयेद्भृशम् ॥ ८ ॥
नाभेरधस्तादाध्मानं जनयेत्तीव्रवेदनम् ।
तन्मूत्रजठरं विद्या दधो वस्तिनिरोधनम् ॥ ९ ॥
वस्तौ वाप्ययवा नाले मणौ वा यस्य देहिनः ।
मूत्रं प्रवृत्तं सज्जेत सरक्तं वा प्रवाहतः ॥ १० ॥
स्रवेच्छनैरल्पमल्पं मरुजं वाप्यनीरुजम् ।
विगुणानिलजो व्याधिः समूत्रोत्सङ्गसंज्ञितः ॥ ११ ॥
रूक्षस्य क्लान्तदेहस्य वस्तिस्थौ पित्तमारुतौ ।

मूत्रक्षयं सरुग्दाहं जनयेत्तां तदाह्वयम् ॥ १२ ॥
अन्तर्वस्तिमुखे वृत्तः स्थिरोऽल्पः सहसा भवेत् ।
अश्मरीतुल्यरुग् ग्रन्थिः मूत्रग्रन्थिः स उच्यते ॥ १३ ॥
मूत्रितस्य स्त्रियं यातो वायुना शुक्रमुद्धृतम् ।
स्थानाच्युतं मूत्रयतः प्राक्पश्चाद्वा प्रवर्त्तते ।
भस्मोदकप्रतिकाशं मूत्रशुक्रं तदुच्यते ॥ १४ ॥
व्यायामाध्वातपैः पित्तं वस्तिं प्राप्याऽनिलाहृतम् ।
वस्तिं मेढ्रं गुदञ्चैव प्रदहेत् स्रावयेदधः ॥ १५ ॥
मूत्रं हारिद्रमथवा सरक्तं रक्तमेव च ।
कृच्छ्रात्पुनः पुनर्जन्तो रुष्णवातं वदति तम् ॥ १६ ॥
पित्तं कफो वा द्वौ वापि संहन्येतोऽनिलेन चेत् ।
कृच्छ्रान्मूत्रं तदा पीतं रक्तं श्वेतं घनं सृजेत् ॥ १७ ॥
सदाहरोचनाशङ्ख चूर्णवर्णञ्च तद्भवेत् ।
शुष्कं समस्तवर्णं वा मूत्रसादं वदन्ति तम् ॥ १८ ॥
रूक्षदुर्वलयो र्वातेनोदावर्त्तं शकृद्यथा ।
मूत्रस्रोतोऽनुपद्येत विट्संसृष्टं तदा नरः ॥ १९ ॥
विड्गन्धं मूत्रयेत् कृच्छ्रा द्विड्विघातं विनिर्दिशेत् ॥ २० ॥
द्रुताध्वलङ्घनायासै रभिघातात्प्रपीड़ितात् ।
स्वस्थानाद्वस्तिरुद्वृत्तः स्थूलस्तिष्टति गर्भवत् ॥ २१ ॥
शूलस्पन्दनदाहार्त्तो विन्दुं विन्दुं स्रवत्यपि ।
पीड़ितस्तु सृजेद्धारां संस्तम्भोद्वेष्टनार्त्तिमान् ॥ २२ ॥
वस्तिकुण्डलमाहुस्तं घोरं शस्त्रविषोपमम् ।
पवनप्रबलं प्रायो दुर्निवारो ह्यबुद्धिभिः ॥ २३ ॥
तस्मिन् पित्तान्विते दाहः शूलं मूत्रविवर्णता ।
श्लेष्मणा गौरवं शोथः स्निग्धं मूत्रं घनं सितम् ॥ २४ ॥

स्रोमरुद्धबिलो वस्तिः पित्तोदीर्णो न सिध्यति।
अविभ्रान्तबिलः साध्यो नच यः कुण्डलीकृतः॥
स्याद्वस्तौ कुण्डलीभूते तृण्मोहः श्वास एव च॥ २५॥

—०—

## अथ चिकित्सामाह।

स्नेहस्वेदोपपन्नस्य हितं स्नेहविरेचनम्।
दद्यादुत्तरबस्तिञ्च मूत्राघाते स वेदने॥ २६॥
नलकुशकाशेक्षु शिफां क्वथितां प्रातः सुशीतलां ससिताम्।
पिबतः प्रयाति नियतं मूत्रग्रह इत्युवाच कविः॥ २७॥
गोधावल्यामूलं क्वथितं घृततैलगोरसोन्मिश्रम्।
पीतं निरुद्धमचिरा द्भिनत्तिमूत्रसंघातम्॥ २८॥
पिबेच्छिलाजतुक्वाथे युक्ते वीरतरादिके।
रसं दुरालभाया वा कषायं वासकस्य वा॥ २९॥
क्वाथं सपत्रमूलस्य गोक्षुरो. सफलस्य च।
पिबेन्मधुसितायुक्तं मूत्रकृच्छ्रुजापहम्॥ ३०॥
घनसारस्य चूर्णेन वस्त्रवर्त्तिः कृताम्बुना।
गुण्डयित्वाध्वजे क्षिप्तः मूत्ररोधं जहाति सा॥ ३१॥
सदा भद्राश्मभिन्मूलं शतावर्य्याश्च चित्रकम्।
रोहिणीकोकिलाक्षौ[१] च क्रौञ्च स्थूलत्रिकण्टकम्[२]॥
अर्द्धपिष्टः सुरापीतोमूत्राघातप्रबाधनः॥ ३२॥
पिबेद्धरिशिखामूलं दुग्धभुक् तण्डुलांबुना।
वस्तिमुत्तरवस्तिं वा सर्व्वेषामेव दापयेत्॥ ३३॥

---

१ कमलाक्षः। २ बृहद्गोक्षुरः।

निदग्धिकायाः स्वरसं पिबेद्वा तक्रसंयुतम्।
जले कुंकुमकल्कं वा सक्षौद्रमुषितं निशि ॥ ३४ ॥
सतैलं पाटलाभस्म क्षारवद्वा परिस्रुतम्।
सुरां सौवर्चलवतीं मूत्राघाती पिबेन्नरः ॥ ३५ ॥
त्रिकण्टकैरण्डशतावरीभिः सिद्धं पयो वा तृणपञ्चमूलैः।
गुड़प्रगाढ़ं सघृतं पयो वा रोगेषु कृच्छ्रादिषु शस्तमेतत् ॥ ३७ ॥
शृतशीतपयोऽन्नाशी चन्दनं तण्डुलाम्बुना।
पिबेत् सशर्करं श्रेष्ठ मुष्णवाते सशोणिते ॥ ३८ ॥
शिलोद्भवैरण्डकुशास्थिरादिपुनर्नवाभीरुरसेषु सिद्धम्।
तैलं शृतं क्षीरमथानुपानं कालेषु कृच्छ्रादिषु संप्रयोज्यम् ॥३९॥
इति शिलोद्भिदादितैलम्।
धान्यगोक्षुरकक्वाथ कल्कसिद्धं घृतं हितम्।
मूत्राघाते मूत्रकृच्छ्रे शुक्रदोषे च दारुणे ॥ ४० ॥
इति धान्यगोक्षुरकं घृतम्।
अम्बष्ठापाटला चैव वर्षाभूद्वयमेव च।
विदारीकन्दकाशश्च कुशमोरटगोक्षुराः ॥ ४१ ॥
पाषाणभेदो वाराही शालिमूलं शरस्तथा।
भल्लातकं शिरीषस्य मूलमेषामथाहरेत् ॥ ४२ ॥
समभागानि सर्वाणि क्वाथयित्वा विचक्षणः।
पादशेषे कषाये तु घृतप्रस्थं विपाचयेत् ॥ ४३ ॥
कल्कं दत्वा च मतिमान् गिरिजं मधुकं तथा।
नीलोत्पलन्तु काकोली बीजं त्रापुषमेव च ॥ ४४ ॥
कूष्माण्डजं तथैवोरुसम्भवञ्च समं भवेत्।
उष्णवातं निहन्त्येतद् घृतं भद्रावहं स्मृतम् ॥ ४५ ॥
इति भद्रावहं घृतम्।

विदारीहपकौ यूथी मातुलुङ्गी च भूढणम्।
पाषाणभेदः कस्तूरी[1] वसुकौ[2] वशिरोऽनलः ॥ ४६ ॥
पुनर्नवावचारास्ना बला चातिबला तथा।
कशेरुविसशृङ्गाट तामलक्यः स्थिरादयः ॥ ४७ ॥
शरेचुदर्भमूलञ्च कुशः काशस्तथैव च।
पलद्वयन्तु सग्टह्य जलद्रोणे विपाचयेत् ॥ ४८ ॥
पादशेषे रसे तस्मिन् घृतप्रस्थं विपाचयेत्।
शतावर्यास्तथाधात्र्याः स्वरसौ घृतसम्मितः ॥ ४९ ॥
षट्पलं शर्करायाश्च कार्षिकाख्यपराणि च।
यष्ट्याह्वं पिप्पलीद्राक्षा काश्मर्य्यं सपरूषकम् ॥ ५० ॥
एलादुरालभाकौन्ती कुङ्कुमं नागकेशरम्।
जीवनीयानि चाष्टौ च दत्वा च द्विगुणं पयः ॥ ५१ ॥
एतत्सर्पिर्विपक्वञ्च शनैर्मृद्वग्निना भिषक्।
मूत्राघातेषु सर्वेषु विशेषात् पित्तजेषु च ॥ ५२ ॥
कासश्वासक्षतोरस्क धनुस्त्रीभारकर्षिते।
क्षयाच्छर्दिमन.कम्प शोणितच्छर्दिते तथा ॥ ५३ ॥
रक्तेयच्मण्यपस्मारे तथोन्मादशिरोग्रहे।
योनिदोषे रजोदोषे शुक्रदोषे स्वरामये ॥ ५४ ॥
एतत्स्मृतिकरं हृद्यं वाजीकरणमुत्तमम्।
पुत्रदं सलवर्णाढ्यं विशेषाद्दातनाशनम् ॥ ५५ ॥
*पानभोजनवस्येषु न क्वचित्प्रतिहन्यते।*
विदारीघृतमित्युक्तं रसायनमनुत्तमम् ॥ ५६ ॥

इति विदारीघृतम्।

---

१ भर्क २ रक्तापामार्गः।

पिष्टाखुमलमुष्णेन चारनालेन पेपयेत्।
वद्धमूत्रं निहन्त्याशु तथैव करभी[1] भवम् ॥ ५७ ॥
स्त्रीणामतिप्रसङ्गेन शोणितं यस्यरिच्यते।
मिथुनोपरमश्चास्य बृंहणीयो विधिर्हितः ॥ ५८ ॥
ताम्रचूडवसातैलं हितञ्चोत्तरवस्तिषु।
स्वगुप्ताफलमृद्वीका कृष्णेचुरसितारजः ॥ ५९ ॥
समांशमर्धभागानि चीरचौद्रघृतानि च।
सर्वं सम्यग्विमथ्याऽच्च मात्रं लिह्वा पयः पिबेत् ॥ ६० ॥
हन्ति शुक्रचयोत्थांश्च दोषान् बन्ध्यासुतप्रदम् ॥ ६१ ॥

इति स्वगुप्तादि मन्थः।

—०—

चौद्रार्धभागः कर्त्तव्यो भागः स्यात् चीरसर्पिषोः।
शर्करायाश्च चूर्णञ्च द्राचाचूर्णञ्च तत्समम् ॥ ६२ ॥
स्वयंगुप्ताफलञ्चैव तथा चेक्षुरसस्य च।
पिप्पलीनां तथा चूर्णं समभागं प्रदापयेत् ॥ ६३ ॥
तदेकध्यं समानीय खजेनाथ विमथ्य च।
तस्य पाणितलं चूर्णं लिहन् चीरं ततः पिबेत् ॥ ६४ ॥
एतत्सर्पिः प्रयुञ्जानः शुद्धदेहो नरः सदा।
शुक्रदोषान् जयेत्सर्वान् ये चापि भृशदुर्जयाः ॥ ६५ ॥
जयेच्छोणितरोगांश्च बन्ध्या गर्भं लभेत च।
सर्पिरेतत्प्रयुञ्जानात् योनिदोषात् प्रमुच्यते ॥ ६६ ॥

इति चौद्रार्द्धभागं घृतम्।

---

१ उष्ट्री, हस्ती वा।

अश्मरीमूत्रकृच्छ्रेषु भोजनं यत् प्रकीर्त्तितम् ।
मूत्राघातेषु तत्कुर्य्याद्देशकालविधानवित् ॥ ६७ ॥

## इति वङ्गसेने मूत्राघातनिदानचिकित्साधिकारः समाप्तः ॥ ३६ ॥

—०—

## अथाश्मरीनिदानमाह ।

वातपित्तकफैस्तिस्रश्चतुर्थी शुक्रजापरा ।
प्रायः श्लेष्माश्रयाः सर्वा अश्मर्य्यः स्युर्यमोपमाः ॥ १ ॥
विशोषयेद्वस्तिगतं सशुक्रं मूत्रं सपित्तं पवनः कफं वा ।
यदा तदाश्मर्युपजायते तु क्रमेण पित्तेष्विव रोचना गोः ॥ २ ॥
नैकदोषाश्रयाः सर्वा अथासां पूर्वलक्षणम् ।
वस्त्याध्मानं तदासन्नदेशेषु परतोऽतिरुक् ॥
मूत्रे वस्तसगन्धत्वं मूत्रकृच्छ्रं ज्वरोऽरुचिः ॥ ३ ॥
सामान्यलिङ्गं रुग्नाभिसेवनीवस्तिमूर्द्धसु ।
विशीर्णधारं मूत्रं स्यात्तया मार्गनिरोधने ॥ ४ ॥
तद्व्यपायात् सुखं मेहेदच्छं गोमेदकोपमम् ।
तत्सङ्क्षोभात् क्षते सास्रमायासाच्चातिरुग्भवेत् ॥ ५ ॥
तत्र वाताद्भृशं चार्त्तो दन्तान् खादति वेपते ।
गृह्णाति मेहनं नाभिं पीडयत्यनिशं क्वणन् ॥ ६ ॥
सानिलं मुञ्चति शकृत् मुहुर्मेहति विन्दुशः ।
श्यावारुणाश्मरी चास्य स्याच्चिताकण्टकैरिव ॥ ७ ॥

—०—

क्षारान् यवागूः पेयाश्च कषायांश्च पयांसि च ।
भोजनानि प्रकुर्वीत वर्गेरश्मरिनाशनैः ॥ १७ ॥
वीरद्रचोऽग्निमन्थश्च काशः वृक्षादनीकुशः ।
मोरटेन्दीवरोसूर्य्य भल्ला गोक्षुरुटुण्टुकाः ॥ १८ ॥
वसुकोवशिरो दर्भ शैरीयावश्मभेदकः ।
गुन्द्रोऽनलः कुरण्टश्च गणो वीरतरादिकः ॥ १९ ॥
अश्मरीशर्कराकृच्छ्र मारुतार्त्तिहरो गणः ।
वृश्चाते वीरतर स्तदभावेमतः शरः ॥ २० ॥
इति वीरतरादिगणः । इति वाताश्मरी ।

—०—

## अथ निदानमाह ।

पित्तेन दह्यते बस्तिः पच्यमान इवोष्मवान् ।
भल्लातकास्थिसंस्थाना रक्ता पीताऽसिताऽश्मरी ॥ २१ ॥

—०—

## अथ चिकित्सामाह ।

कुशः काशः शरो गुन्द्रः उत्कटो मोरटाश्मभित् ।
दर्भो विदारीवाराही शालिमूलं त्रिकण्टकः ॥ २२ ॥
भल्लूकः पाटलापाठा प्रस्तूरोत्यकुरंटिका ॥ २३ ॥
पुनर्नवाशिरीषश्च क्वथितैस्तु सुसाधितम् ।
घृतं शिलाह्वमधुकैर्बीजैरिन्दीवरस्य च ॥ २४ ॥
त्रपुषैर्वारुकादीनां बीजैश्चाऽऽवापितं शुभम् ।
भिनत्तिपित्तसम्भूता मश्मरीं क्षिप्रमेव तु ॥ २५ ॥
इति कुशाद्यं घृतम् ।

क्षारान् यवागूः पेयाश्च कषायाणि पयांसि च ।

## अथ निदानमाह ।

शुक्राश्मरी तु महतां जायते शुक्रधारणात् ।
स्थानाच्युतममुक्तं हि मुष्कयोरन्तरेऽनिलः ॥
शोषयत्युपसंहृत्य शुक्रं तच्छुक्रजाश्मरी ॥ ३५ ॥
वस्तिरुङ्मूत्रकृच्छ्रत्वं मुष्कश्वयथुकारिणी ।
तस्यामुत्पन्नमात्रायां शुक्रमेति विलीयते ॥ ३६ ॥
पीडिते त्ववकाशेऽस्मिन्नश्मर्येव च शर्करा ।
अणुशो वायुना भिन्ना सात्वस्मिन्ननुलोमगे ॥ ३७ ॥
निरेति सह मूत्रेण प्रतिलोमे विबध्यते ।
मूत्रस्रोतः प्रविष्टैताः सिक्ताः कुर्युरुपद्रवान् ॥ ३८ ॥

—०—

## अथोपद्रवानाह ।

दौर्बल्यं सदनं कार्श्यं कुक्षिरोगमथारुचिम् ।
पांडुत्वमुष्णवातञ्च तृष्णां हृत्पीडनं वमिम् ॥ ३९ ॥
प्रसूननाभिवृषणं बद्धमूत्रं रुजातुरम् ।
अश्मरीचपयत्याशु सिकता शर्करान्विताः ॥ ४० ॥

—०—

## अथ चिकित्सामाह ।

शुक्राश्मर्यान्तु सामान्यो विधिरश्मरिनाशनम् ।
यवक्षारगुडोन्मिश्रं रसं पुष्पफलोद्भवम् ॥
पिबेन्मूत्रविनिबन्धघ्नं शर्कराश्मरीनाशनम् ॥ ४१ ॥
तिलाऽपामार्गकदली पलाशयवयित्यजः ।
क्षारः पेयोऽविमूत्रेण शर्कराऽश्मरिनाशनः ॥ ४२ ॥

स्नेहने भोजने चैव प्रयोज्य सर्पिरुत्तमम् ॥ ५४ ॥

इति तृणपञ्चमूलाद्यं घृतम्।

त्वक् पत्रफलमूलस्य वरुणात् सश्वदंष्ट्रकात्।
कषायेण पचेत्तैलं वस्तिना स्थापनेन च ॥ ५५ ॥
शर्कराश्मरीशूलघ्नं मूत्रकृच्छ्रनिवारणम्।

इति वरुणतैलम्।

कुशाग्निमन्थशैरेय नलदर्भेक्षुगोक्षुराः।
कपोतवङ्कावसुकवशिरेन्दीवरीशराः ॥ ५६ ॥
धातक्यरलुबन्दाक कर्णिकाराश्मभेदकाः।
एषां कल्ककषायाभ्यां सिद्धं तैलं प्रयोजयेत् ॥ ५७ ॥
पानाभ्यञ्जनयोगेन वस्तिनोत्तरवस्तिना।
शर्कराश्मरिरोगेषु मूत्रकृच्छ्रे च दारुणे ॥ ५८ ॥
प्रदरे योनिशूले च शुक्रदोषे तथैव च।
वन्ध्यागर्भप्रदं प्रोक्तं तैलमेतत् कुशादिकम् ॥ ५८ ॥

इति कुशाद्यं तैलम्। इति शर्कराश्मरी।

नागरवरुणगोक्षुरपाषाणभित् कपोतवङ्कजः क्वाथः।
गुड़यावशूकविमिश्रः पीतो हन्त्यश्मरीमुग्राम् ॥ ६० ॥
त्रिकण्टकस्य बीजानां चूर्णं माक्षिकसंयुतम्।
अविक्षीरेण सप्ताहं पेयमश्मरिनाशनम् ॥ ६१ ॥
पिबेद्वरुणजं मूलं क्वाथं तत्कल्कसंयुतम्।
क्वाथश्च शिग्रुमूलोत्थः कदुष्णोऽश्मरिनाशनः ॥ ६२ ॥
न्द्रवेरयवक्षार पथ्याकालीयकान्वितः।
दधिमण्डो भिनत्त्युग्रा मश्मरीमाशु पानतः ॥ ६३ ॥
पाषाणभेदवरुणगोक्षुरकपोतवङ्कजः क्वाथः।
गिरिजतु गुड़प्रगाढ़ः कर्कटिकात्रपुसबीजयुतः ॥ ६४ ॥

पेयोऽश्मरीमवश्यं दुर्भेदामपि भिनत्ति योगवरः ।
शिखरिणमिव शतकोटिः शतमन्योर्हस्तनिर्मुक्ता ॥ ६५ ॥
श्रीपर्णीफलबीजं मथितेन यः पुमानद्यात् ।
शाकमभित्वाऽवश्यं तद्वन्ति रोगाऽश्मरीपीड़ाम् ॥ ६६ ॥
श्वदंष्ट्रैरण्डबीजानि नागरं वरुणत्वचः ।
एतत् क्वाथवरं प्रातः पिबेदश्मरिनाशनम् ॥ ६७ ॥

—०—

रक्तोद्भवेचूत्पलनालताल काशेक्षुबालीचुकुशोदकानि ।
पिबेत्सिताक्षौद्रयुतानि खादेद्विदारिमिक्षुत्रपुसानि चैव ॥६८ ॥
पलान्यष्टौ तु कुर्वीत चाराणां वरुणत्वचः ।
तदर्द्धं यावशूकात्तु ततोऽप्यर्धं गुडाद्द्घृतम् ॥ ६९ ॥
एकीकृत्य विमर्द्यैतत् खादेत् कर्षप्रमाणतः ।
घर्मांबुना सहावश्यं कृच्छ्राश्मरिविनाशनम् ॥ ७० ॥

इति वरुणादिचूर्णम् ।

वरुणकभस्मपरिस्रुत सलिलं तच्चूर्णं यावशूकयुतम् ।
क्वथनीयं तत्ताव द्यावच्चूर्णत्वमायाति ॥ ७१ ॥
तद्गुडयुक्तं हन्या त्तदुदारामश्मरीं घोराम् ।
वह्निसदनं सुकष्ट मश्ममयीमश्मरीं चाशु ॥ ७२ ॥

इति वरुणादिचूर्णस्यैवायमन्यः प्रकारः ।

नो जग्धं कृमिभिर्धनं सुतरुणं स्निग्धं शुचिस्थानजम् ।
वस्रे पुष्यनिरीक्षिते वरुणकं छित्वा तुलां ग्राहयेत् ॥
सम्यग्द्याप्सु चतुर्गुणासु विपचेत्पादावशेषं जलम् ।
तत्तुल्येन गुडेन वै दृढतरे भाण्डे पचेत्तत् पुनः ॥ ७३ ॥
शाल्वैवं घनतां गुड़े परिणते प्रत्येकमेषां पलम् ।

शुण्ठेर्वारुकबीजगोचुरुकणा पाषाणभिच्छीतला: ॥
कूष्माण्डत्रपुसाक्षबीजकुनटी वास्तूकसौभाञ्जन।
द्राक्षैलागिरिजाभया कृमिहृतां चूर्णी कृतानां क्षिपेत् ॥७४॥
पथ्याशी प्रतिवासरं गुडममुं योग्यप्रमाणं नरः।
खादेत्तस्य समस्तदोष जनिताऽश्मर्यः पतन्ति द्रुतम् ॥ ७५ ॥
इति वरुणकगुडः।

कुलित्थसिन्धूत्थविडङ्गसारं सशर्करं शीतलियावशूकम्।
बीजानि कूष्माण्डकगोचुराभ्यां घृतं पचेत्तद्वरुणस्य तोये ॥७६॥
दुःसाध्य सर्वाश्मरिमूत्रकृच्छ्रं मूत्राभिघातञ्च समूत्रबन्धम्।
एतानि सर्वाणि निहन्ति शीघ्रं प्ररूढवृक्षानिवबज्रपात. ॥७७॥
इति कुलित्थाद्यं घृतम्।

शरादिपञ्चमूल्या वा कषायेण पचेद् घृतम्।
प्रस्थं गोचुरुकस्केन सिद्धमद्यात्सशर्करम्।
अश्मरीमूत्रकृच्छ्रघ्नं रेतोमार्गरुजापहम् ॥ ७८ ॥
इति शरादिपञ्चमूलघृतम्।

वरुणस्य तुलां चुण्णां जलद्रोणे विपाचयेत्।
पादशेषं परिस्राव्य घृतप्रस्थं विपाचयेत् ॥ ७८ ॥
वरुणं कदलीविल्वं त्वणजं पञ्चमूलकम्।
अमृता चाश्मभेदञ्च बीजञ्च त्रपुसस्य च ॥ ८० ॥
शतपर्वातिलचारं पलाशचार एव च।
यूथिकायाश्च मूलानि कार्षिकानि समावपेत् ॥ ८१ ॥
अस्य मात्रां पिबेज्जन्तु देशकालाद्यपेक्षया।
जीर्णे चास्मिन् पिबेत्पूर्वं गुडं जीर्णन्तु सक्तुना ॥ ८२ ॥
अश्मरीं शर्कराञ्चैव मूत्रकृच्छ्रञ्च नाशयेत् ॥ ८३ ॥
इति वरुणघृतम्।

सैन्धवाद्यन्तु यत्तैलमृषिभिः परिकीर्त्तितम् ।
तत्तैलं द्विगुणं चीरं पचेद्वीरतरादिना ॥ ८४ ॥
क्वाथेन पूर्वकल्केन साधितन्तु भिषग्वरैः ।
एतत्तैलवरं श्रेष्ठ मश्मरीणां विनाशनम् ॥ ८५ ॥
मूत्राघाते मूत्रकृच्छ्रे पिच्चिते मथिते तथा ।
भग्ने श्रमाभिपन्ने च सर्व्वथैव प्रशस्यते ॥ ८६ ॥

इति वीरतराद्यं तैलम् ।

चोरवृचाश्मभेदाग्नि मन्थस्योनाकपाटलाः ।
वृचादनी सहैरण्ड़भल्लूकोशीरपद्मकम् ॥ ८७ ॥
कुशकाशशरिच्चूर्णामास्फोता कोकिलाचयोः ।
शतावरीश्वदंष्ट्रा च सोल्कटाद्दयवंजुलाः ॥ ८८ ॥
कपोतवङ्काश्चीपर्णी काश्मरीमूलसंयुता ।
एतैः कषायैः कल्कैश्च तैलं धीरो विपाचयेत् ॥ ८९ ॥
वातपित्तविकारेषु वस्तिं दद्याद्विचक्षणः ।
शर्कराश्मरिशूलघ्नं मूत्रकृच्छ्रविनाशनम् ॥ ९० ॥

इति द्वितीयं वीरतराद्यं तैलम् ।

पुनर्नवामृताभीरु सचारलवणत्रयैः ।
शठीकुष्टवचा मुस्तरास्नाकट्फलपौष्करैः ॥ ९१ ॥
यवानीद्दपुषाहिंगु शताह्वा साजमोदकैः ।
विड़ङ्गातिविषायष्टी पञ्चकोलकसंयुतैः ॥ ९२ ॥
एतैरचसमैः कल्कैः स्नैलप्रस्थं विपाचयेत् ।
गोमूत्रं द्विगुणं देयं काञ्जिकं तद्वदेव तु ॥ ९३ ॥
पुनर्नवाद्यमित्येतत्तैलं पानेन वस्तिना ।
शर्कराश्मरिशूलघ्नं मूत्रकृच्छ्रप्रमोचनम् ॥ ९४ ॥

कण्डूरुबस्तिमेढ्रस्थं कुक्षिशूलविनाशनम् ।
कफवातामशूलघ्नं मन्त्रवृद्धेश्च नाशनम् ॥ ८५ ॥
इति पुनर्नवाद्यं तैलम् ।

व्रणाधिकारनिर्दिष्टं सैन्धवाद्यमिहेष्यते ।
सर्वथैवोपयोज्यस्तु गणो वीरतरादिकः ॥ ८६ ॥
घृतैः क्षीरैः कषायैश्च क्षारैश्चोत्तरबस्तिभिः ।
अल्पवतीमशाम्यन्तीं प्रत्याख्याय समुद्धरेत् ॥ ८७ ॥

## इति वङ्गसेनेऽश्मरीनिदानचिकित्साधिकारः समाप्तः ॥ ३७ ॥

—०—

## अथ प्रमेहनिदानमाह ।

आस्यासुखं स्वप्नसुखं दधीनि ग्राम्यौदकानूपरसाः पयांसि ।
नवान्नपानं गुडवैकृतञ्च प्रमेहहेतुः कफकृच्च सर्वम् ॥ १ ॥
मेदश्च मांसञ्च शरीरजं च क्लेदं कफो बस्तिगतं प्रदूष्य ।
करोति मेहान् समुदीर्णमुष्णैस्तानेव पित्तं परिदूष्य चापि ।
क्षीणेषु दोषेष्ववकृष्य धातून् संदूष्य मेहान् कुरुतेऽनिलश्च ॥ २ ॥

साध्याः कफोत्था दशपित्तजाः षड्-
याप्या न साध्याः पवनाच्चतुष्काः ।
समक्रियत्वाद्विषमक्रियत्वात्
महात्ययत्वाच्च यथाक्रमन्ते ॥ ३ ॥

कफः सपित्तः पवनश्च दोषा मेदोस्र शुक्राम्बुवसालसीकाः ।
मज्जारसौजः पिशितञ्च दूष्याः प्रमेहिणां विंशतिरेव मेहाः ॥ ४ ॥
दन्तादीनां मलाढ्यत्वं प्राग्रूपं पाणिपादयोः ।
दाहश्चिक्कणता देहे तृट्स्वाद्वास्यञ्च जायते ॥ ५ ॥

सामान्यं लक्षणं तेषां प्रभूताऽऽविलमूत्रता ।
दोषदूष्याविशेषेऽपि तत्संयोगविशेषतः ॥ ६ ॥
मूत्रवर्णादिभेदेन भेदो मेहेषु कल्पते ॥ ७ ॥

—०—

## अथ कफमेहानाह ।

अच्छं बहुसितं शीतं निर्गन्धमुदकोपमम् ।
मेहत्युदकमेहेन किञ्चिचाविलपिच्छिलम् ॥ ८ ॥
इक्षोरसमिवात्यर्थं मधुरं चेक्षुमेहतः ।
सान्द्री भवेत्पर्युषितं सान्द्रमेहेन मेहति ॥ ९ ॥
सुरामेही सुरातुल्यमुपर्यच्छमधो घनम् ।
संहृष्टरोमापिष्टेन पिष्टवद्बहुलं सितम् ॥ १० ॥
शुक्राभं शुक्रमिश्रं वा शुक्रमेही प्रमेहति ।
मूत्राणून् सिकतामेही सिकतारूपिणो मलान् ॥ ११ ॥
शीतमेही सुबहुशो मधुरं भृशशीतलम् ।
शनैः शनैः शनैर्मेही मन्दं मन्दं प्रमेहति ॥ १२ ॥
लालातन्तुयुतं मूत्रं लालामेहेन पिच्छिलम् ।

—०—

## अथ पित्तमेहानाह ।

गन्धवर्णरसस्पर्शैः क्षारेण क्षारतोयवत् ॥ १३ ॥
नीलमेहेन नीलाभं कालमेही मषीनिभम् ।
हारिद्रमेहीकटुकं हरिद्रासन्निभं दहत् ॥ १४ ॥
विस्रं माञ्जिष्टमेहेन मञ्जिष्टासलिलोपमम् ।
विस्रमुष्णं सलवणं रक्ताभं रक्तमेहिनः ॥ १५ ॥

—०—

### अथ वातमेहानाह ।

वसामेही वसामिश्रं वसाभं मूत्रयेन्मुहुः ।
मज्जाभं मज्जमिश्रं वा मज्जमेही मुहुर्मुहुः ॥
कषायं मधुरं रूक्षं क्षौद्रमेहं वदेद्बुधः ॥ १६ ॥
हस्तीमत्त इवाऽजस्रं मूत्रं वेगविवर्जितम् ।
मलसीकं विबद्धञ्च हस्तीमेही प्रमेहति ॥ १७ ॥

—०—

### अथोपद्रवानाह ।

अविपाकोऽरुचिश्छर्दि स्तन्द्राकासः सपीनसः ।
उपद्रवाः प्रजायन्ते मेहानां कफजन्मनाम् ॥ १८ ॥
बस्तिमेहनयोस्तोदो मुष्कावदरणं ज्वरः ।
दाहस्तृष्णाम्लिकामूर्च्छा विड्भेदः पित्तजन्मनाम् ॥ १८ ॥
वातजानामुदावर्त्त कम्पहृद्ग्रहलोलताः ।
शूलमुन्निद्रताशोषः श्वासः कासश्च जायते ॥ २० ॥
यथोक्तोपद्रवारिष्ट मतिप्रसृतमेव च ।
पिडिकापीडितं गाढं प्रमेहो हन्ति मानवम् ॥ २१ ॥
मूर्च्छाछर्दिज्वरश्वास कासवीसर्पगौरवैः ।
उपद्रवैरुपेतो यः प्रमेही दुष्प्रतिक्रियः ॥ २२ ॥

—०—

### अथ स्त्रीणां प्रमेहाभावे कारणमाह ।

रजः प्रसेकान्नारीणां मासि मासि विशुद्ध्यति ।
सर्वं शरीरं दोषांश्च न प्रमेहन्त्यतः स्त्रियः ॥ २३ ॥
जातः प्रमेही मधुमेहिनो वा न साध्यरोगः स हि बीजदोषात् ।
ये चापि केचित्कुलजा विकारा भवन्ति तांश्च प्रवदन्त्यसाध्यान् ॥

### अथ वातमेहानाह ।

वसामेही वसामिश्रं वसाभं मूत्रयेन्मुहुः ।
मज्जाभ मज्जमिश्रं वा मज्जमेही मुहुर्मुहुः ॥
कषायं मधुरं रूक्षं क्षौद्रमेहं वदेद्बुधः ॥ १६ ॥
हस्तीमत्त इवाऽजस्रं मूत्रं वेगविवर्जितम् ।
सलसीकं विबद्धञ्च हस्तीमेही प्रमेहति ॥ १७ ॥

—०—

### अथोपद्रवानाह ।

अविपाकोऽरुचिश्छर्दि स्तन्द्राकासः सपीनसः ।
उपद्रवाः प्रजायन्ते मेहानां कफजन्मनाम् ॥ १८ ॥
बस्तिमेहनयोस्तोदो मुष्कावदरणं ज्वरः ।
दाहस्तृष्णाम्लिकामूर्च्छा विड्भेदः पित्तजन्मनाम् ॥ १९ ॥
वातजानामुदावर्त्त कम्पहृद्ग्रहलोलताः ।
शूलमुन्निद्रताशोषः श्वासः कासश्च जायते ॥ २० ॥
यथोक्तोपद्रवारिष्ट मतिप्रसुतमेव च ।
पिडिकापीडितं गाढं प्रमेही हन्ति मानवम् ॥ २१ ॥
मूर्च्छाछर्दिज्वरश्वास कासशोषमर्पगौरवैः ।
उपद्रवैरुपेतो यः प्रमेही दुष्प्रतिक्रियः ॥ २२ ॥

—०—

### अथ स्त्रीणां प्रमेहाभावे कारणमाह ।

रजः प्रसेकान्नारीणां मासि मासि विशुध्यति ।
सतस्र्वं शरीरं दोषाश्च न प्रमेहन्त्यतः स्त्रियः ॥ २३ ॥
जातः प्रमेही मधुमेहिनो वा न साध्यरोगः स हि बीजदोषात् ।
ये चापि केचित्कुलजा विकारा भवन्ति तांश्च प्रवदन्त्यसाध्यान् ॥

सर्व एव प्रमेहास्तु कालेनाप्रतिकारिणः।
मधुमेहत्वमायान्ति तदाऽसाध्या भवन्ति हि ॥ २५ ॥
मधुमेहे मधुसमं जायते स किल द्विधा।
क्रुद्धे धातुक्षयाद्वायौ दोषावृतपथेऽथवा ॥ २६ ॥
आवृतो दोषलिङ्गानि सोऽनिमित्तं प्रदर्शयन्।
क्षणात् क्षीणः क्षणात् पूर्णो भजते कृच्छ्रसाध्यताम् ॥ २७ ॥
मधुरं यच्च सर्वेषु प्रायो मध्विव मेहति।
सर्वेऽपि मधुमेहाख्या माधुर्याच्च तनो रतः ॥ २८ ॥
शराविका कच्छपिका जालिनी विनतालजी।
मसूरिका सर्षपिका पुत्रिणी सविदारिका ॥ २९ ॥
विद्रधिश्चापि पिडका प्रमेहोपेक्षया दश।
सन्धिमर्मसु जायन्ते मांसलेषु च धामसु ॥ ३० ॥
अन्तोन्नता च तद्रूपा निम्नमध्या शराविका।
गौरसर्षपसंस्थाना तत्प्रमाणा च सर्षपी ॥ ३१ ॥
सदाहा कूर्मसंस्थाना ज्ञेया कच्छपिका बुधैः।
जालिनी तीव्रदाहा तु मांसजालसमावृता ॥ ३२ ॥
अवगाढरुजाक्लेदा पृष्ठे वाप्युदरेऽपि या।
महती पिडकानीला सा बुधैर्विनता स्मृता ॥ ३३ ॥
महत्यल्पचिता ज्ञेया पिडका चापि पुत्रिणी।
मसूरसंस्थानसमा विज्ञेया तु मसूरिका ॥ ३४ ॥
रक्ताभिताऽस्फोटचिता विज्ञेयालजी भवेत्।
विदारीकन्दवद्वृत्ता कठिना च विदारिका ॥ ३५ ॥
विद्रधेर्लक्षणैर्युक्ता ज्ञेया विद्रधिका च सा ॥ ३६ ॥
ये यन्मयाः स्मृता मेहा स्तेषामेतास्तु तन्मयाः।
विना प्रमेहमप्येता जायन्ते दुष्टमेदसः ॥

तावच्चैता न लक्ष्यन्ते यावद्वास्तुपरिग्रहः ॥ ३७ ॥
गुदे हृदि शिरस्यंसे पृष्ठे मर्म्मसु चोत्थिता ।
सोपद्रवा दुर्बलाग्नेः पिड़काः परिवर्जयेत् ॥ ३८ ॥
तृट्श्वासमांससंकोच मोहहिक्कामदज्वराः ।
विसर्पमर्म्मसंरोधाः पिडकानामुपद्रवाः ॥ ३९ ॥

—०—

## अथ चिकित्सामाह ।

श्यामाककोद्रवोद्दाल गोधूमचणकाढ़की ।
कुलित्थाश्च हिता भोज्ये पुराणा मेहिनां सदा ॥ ४० ॥
मेहिनां तिक्तशाकानि जाङ्गला हरिणादयः ।
यवाश्च विकृतिर्मुद्गाः शस्यन्ते शालिषष्टिकाः ॥ ४१ ॥
सौवीरश्च सुरातक्रं तैलं चीरं घृतं गुड़म् ।
श्लेक्षुरसपिष्टान्नानूपमांसानि वर्जयेत् ॥ ४२ ॥

—०—

तत्रादित एव प्रमेहिन मुपस्निग्धमन्यतमेन प्रियङ्ग्वादिसिद्ध तैलेन वामयेत्प्रगाढ़ं विरेचयेच्च विरेचनादनन्तरं सुरसादिकषायेणाऽऽस्थापयेत् । मद्वौषधभद्रदारुमुस्तावापेन मधुमिश्रयुक्तेन दह्यमानं वा न्यग्रोधादिकषायेण निरूहेनेति । शालोत्कटेषु संशपानं विशेषतः ।

—०—

पारिजातजयानिम्ब वह्निगायत्रिणां पृथक् ।
पाठायाः सागुरोः पीता दयस्य शारदस्य च ॥ ४३ ॥
जलेशुमध्यमिश्रताः शनैर्लवणपिष्टकान् ।
सान्द्रमेहान् कफान् घ्नन्ति काथाश्चाष्टौ समाक्षिकाः ॥ ४४ ॥
च हरीतकीकट्फलमुस्तलोध्राः पाठाविड़ङ्गार्जुनधन्वयासाः ।

उभे हरिद्रे तगरं विड़ङ्गं कादम्बशालार्जुनदीप्यकाश्च ॥ ४५ ॥
दार्वीविड़ङ्गं खदिरो धवश्च सुराह्व कुष्टागुरुचन्दनानि ।
दार्व्यग्निमन्थौ त्रिफला च पाठामूर्वाभया चैव तथा श्वदंष्ट्रा ॥४६
यवान्युशीराण्यभया गुडूची जंबूशिवाचित्रकसप्तपर्णाः ।
पादैः कषायाः कफमेहविज्ञे र्दशोपदिष्टा मधुसंप्रयुक्ताः ॥४७॥
उशीरलोध्रार्जुनचन्दनाना सुशीरमुस्ता मधुकाभयानाम् ।
पटोलनिम्बामलकामृतानां मुस्ताभयासुष्मकवृत्तकाणाम् ॥४८॥
लोध्राम्बकालीयकधातकीनां विम्बार्जुनानां भिशिसोत्पलानाम् ।
शिरीषधान्यार्जुनकेशराणां प्रियंगुपद्मोत्पलकिंशुकानाम् ॥४९॥
अश्वत्थपाठासनवेतसानां कटङ्कटेर्युत्पलमुस्तकानाम् ।
पैत्तेषु मेहेषु सदोपदिष्टाः कषाययोगा मधुसंप्रयुक्ताः ।
कफमेहहरक्काथ सिद्धं सर्पिः कफे हितम् ।
पित्तमेहघ्ननिर्यूह सिद्धं पित्तहरं घृतम् ॥ ५१ ॥
कम्पिल्लसप्तच्छदशालजानि वैभीतरौहीतककौटजानि ।
पटोलकालीयगदागुरूणि चौद्रेण लिह्यात्कफपित्तमेही ॥ ५२ ॥
दूर्वाकसेरुपूतीक कुम्भीकाष्ठनशैवलम् ।
जलेन क्वथितं पीतं शुक्रमेहहरं परम् ॥ ५३ ॥
त्रिफलारग्वधद्राक्षा कषायो मधुसंयुतः ।
पीतो निहन्ति फेनाख्यं प्रमेहं नियतं नृणाम् ॥ ५४ ॥
छिन्नावह्निकषायं वा पाठाकुटजरामठम् ।
तिक्ताकुष्ठञ्च संपूर्णं सर्पिर्मेही पिबेन्नरः ॥ ५५ ॥
पाठाशिरीषदुम्पर्शमूर्वातिन्दुककिंशुकम् ।
कपित्थानां भिषक् क्वाथं हस्तिमेहे प्रयोजयेत् ॥ ५६ ॥
त्रिफलादारुदार्व्यब्दक्काथः चौद्रेण मेहहा ।
कुटजासनदार्व्यब्द फलत्रयभवोऽथवा ॥ ५७ ॥

गुडूच्यास्वरसः पेयो मधुना सह मेहजित् ।
निशाकल्कयुतो धात्री रसो वा माक्षिकान्वितः ॥ ५८ ॥
मधुना त्रिफलाचूर्णं मयवाश्मजतूद्भवम् ।
लोहजंवाभयोत्थं वा लिहेन्मेहनिवृत्तये ॥ ५९ ॥
कटंकटेरी मधुकत्रिफलाचित्रकैः समैः ।
सिद्धः कषायः पातव्यः प्रमेहानां विनाशनः ॥ ६० ॥
फलत्रिकं-दारुनिशां विशालां मुस्ताञ्च निःक्वाथ्यनिशांशकल्कम् ।
पिबेत्कषायं मधुसंप्रयुक्तं सर्वप्रमेहेषु समुत्थितेषु ॥ ६१ ॥
इति फलत्रिकादिः क्वाथः ।

गोभक्षितान्यवान्मूत्र भावितान् केवलानपि ।
चित्रकोदश्विता खादेन्निम्बमुद्गरसेन वा ।
भक्षयेन्मधुना मासं प्रमेही यवपिष्टकम् ॥ ६२ ॥
मेदोघ्ना बहमूत्राश्च समाः सर्वेषु धातुषु ।
यवास्तस्माद्धितास्यन्ते प्रमेहेषु विशेषतः ॥ ६३ ॥
न्यग्रोधोदुम्बराश्वत्थ स्योनाकारग्वधासनम् ।
आम्रं कपित्थं जंवूञ्च प्रियालं ककुभं धवम् ॥ ६४ ॥
मधूकं मधुकं लोध्रं वरुणं पारिभद्रकम् ।
पटोलं मेषशृङ्गी च दन्तीचित्रकमाढ़कम् ॥ ६५ ॥
करञ्जत्रिफलाशक्र भल्लातकफलानि च ।
एतानि समभागानि सूक्ष्मचूर्णानि कारयेत् ॥ ६६ ॥
न्यग्रोधाद्यमिदं चूर्णं मधुना सह योजयेत् ।
फलत्रयरसानुपिबेत्तेन मूत्रं विशुद्ध्यति ॥ ६७ ॥
एतेन विंशतिर्मेहा मूत्रकृच्छ्राणि यानि च ।
प्रशमं यान्ति योगेन पिड़का न च जायते ॥ ६८ ॥
इति न्यग्रोधाद्यं चूर्णम् ।

त्रिकटुत्रिफलातुल्यं गुग्गुलञ्च समांशिकम् ।
गोक्षुरुक्काथसंयुक्तां गुटिकां कारयेद्बुधः ॥ ६८ ॥
देशकालबलापेक्षी भक्षयेच्चानुलोमिकाम् ।
न चात्र परिहारोऽस्ति कर्म कुर्य्याद्यथेप्सितम् ॥ ७० ॥
प्रमेहान् वातरोगांश्च वातशोणितमेव वा ।
मूत्राघातं मूत्रदोषं प्रदरञ्चाशु नाशयेत् ॥ ७१ ॥

इति त्रिकट्वाद्या गुटिका ।

दाड़िमस्य च बीजानि कृमिघ्नस्य च तण्डुलाः ।
रजनी चवकाऽजाजी नागरं त्रिफला कणा ॥ ७२ ॥
त्रिकण्टकस्य च फलं यवानी धान्यकं तथा ।
वृक्षाम्ल चविकाकोल सिन्धूद्भव समाहितैः ॥ ७३ ॥
कल्कैरक्षसमैरेभिर्घृतप्रस्थं विपाचयेत् ।
भोज्ये पाने प्रदातव्यं सर्वर्त्तुषु च मात्रया ॥ ७४ ॥
प्रमेहान् विंशतिं चैव मूत्राघातं तथाश्मरीम् ।
कृच्छ्रं सुदारुणञ्चैव हन्यादेव नसंशयः ॥ ७५ ॥
विबन्धानाह शूलघ्नं कामला ज्वरनाशनम् ।
दाड़िमाद्यं घृतञ्चैतदश्विभ्यां परिकीर्त्तितम् ॥ ७६ ॥

इति दाड़िमाद्यं घृतम् ।

श्वदंष्ट्रा सकणा मुस्ता गुडूची फल्गुपल्लवाः ।
दर्भाङ्कुराश्च गण्डीरो रोहिषस्य च पल्लवाः ॥ ७७ ॥
काला पुनर्नवा श्यामा शारिवा देवदारु च ।
पिप्पली शृङ्गवेरञ्च विड़ङ्गं मरिचानि च ॥ ७८ ॥
पाठा कम्पिल्लकं भार्गी द्वे हरिद्रे निदग्धिका ।
एरण्डमूलं दन्ती च चित्रकं कटुरोहिणी ॥ ७९ ॥

एतानि समभागानि सूक्ष्मचूर्णानि कारयेत् ।
यावन्त्येतानि चूर्णानि द्विस्तावत् स्यादयो रजः ॥ ८० ॥
ततो विड़ालपदकं पिवेदुष्णेन वारिणा ।
अलाभे चापि मद्यानां मेहान् जयति विंशतिम् ॥ ८१ ॥
क्षययुक्च तथार्शांसि पाण्डुरोगं हलीमकम् ।
उदराण्यथ शूलानि प्लीहानञ्चापि कर्षति ॥ ८२ ॥
एभिर्गोमूत्रपिष्टैस्तु गुटिकां कारयेद्भिषक् ।
रोगेष्वेतेषु मुख्याः स्युर्बलमांसविवर्द्धनाः ॥ ८३ ॥

इति गोक्षुरादिचूर्णगुटिकाः ।

कण्टकार्य्या गुडूच्याश्च संहरेच्च शतं शतम् ।
सङ्क्ष्योलूखले विद्वांश्चतुर्द्रोणेऽम्भसः पचेत् ॥ ८४ ॥
तेन पादावशेषेण घृतप्रस्थं विपाचयेत् ।
त्रिकटुत्रिफलारास्ना विडङ्गान्यथ चित्रकम् ॥ ८५ ॥
काश्मर्य्यः पञ्चमूलानि पूतिकस्य त्वगेव च ।
कलिङ्ग इति सर्वाणि सूक्ष्मपिष्टानि कारयेत् ॥ ८६ ॥
अक्षमात्रं पिबेत् प्रातः शालिभिः पयसा हितैः ।
प्रमेहं मधुमेहञ्च मूत्रकृच्छ्रं भगन्दरम् ॥ ८७ ॥
आलस्यञ्चान्त्रवृद्धिञ्च कुष्ठरोगं विशेषतः ।
क्षयं चैव निहन्त्येतन्नाम्ना सिंहामृतं घृतम् ॥ ८८ ॥

इति सिंहामृतं घृतम् ।

दशमूलं करञ्जौ द्वौ देवदारु हरीतकी ।
वर्षाभूर्वरुणो दन्ती चित्रकं सपुनर्नवम् ॥ ८९ ॥
सुधानीपकदम्बश्च विल्वभल्लातकानि च ।
शठीपुष्करमूलञ्च पिप्पलीमूलमेव च ॥ ९० ॥

पृथग्दशपलान् भागा नेतांस्तोयार्मणे पचेत्।
यवकोलकुलित्थानां प्रस्थं प्रस्थं विपाचयेत् ॥ ८१ ॥
तेन पादावशेषेण घृतप्रस्थं पचेद्भिषक्।
निचुलं त्रिफलाभार्गी रोहिषं गजपिप्पली ॥ ८२ ॥
शृङ्गवेरं विड़ङ्गानि वचा कम्पिल्लकं तथा।
गर्भेणानेन तत्सिद्धं पाययेत्तु यथा बलम् ॥ ८३ ॥
एतद्धान्वन्तरं नाम विख्यातं सर्पिरुत्तमम्।
कुष्टप्रमेहगुल्मांश्च श्वयथुं वातशोणितम् ॥ ८४ ॥
प्लीहोदराणि चार्शांसि विद्रधिं पिडकाश्च याः।
अपस्मारं तथोन्मादं सर्पिरेतन्नियच्छति ॥ ८५ ॥
पृथक्तोयार्मणे तत्र पचेद्द्रव्याच्छतं शतम्।
शतत्रयाधिके तोये सुत्सर्गक्रमतो भवेत् ॥ ८६ ॥

इति धान्वन्तरं घृतम्।

अर्जुनपटोलनिम्बैः सवचादीप्यकरसाममञ्जिष्टैः।
भल्लातकागुरुघनैः सगदानलचन्दनोशीरैः ॥ ८७ ॥
गोक्षुरुकमोमवल्कै र्निम्बपटोलैर्हरिद्रयावरया।
अश्मन्तकार्जुनाभ्यां दीप्यकयुक्तेन चैव लोध्रेण ॥ ८८ ॥
मञ्जिष्टातिविषाभ्यां कल्कैर्वा कषायैः पचेत्तैलम्।
कफवातोत्थे मेहे पित्तकृते साधयेत्सर्पिः ॥ ८९ ॥

इत्यर्जुनाद्यं घृतन्तैलञ्च।

गोकण्ठकं सदलमूलफलं गृहित्वा
संकुट्टितं पलशतं क्वथितन्तु तोये।
पादस्थितेन च जलेन पलानि दत्वा
पञ्चाशतञ्च विपचेदथ शर्करायाः ॥ १०० ॥

तस्मिन् घनत्वमुपगच्छति चूर्णितानि
दद्यात्पलद्वयमितानि सुभेषजानि ।
शुण्ठीकणामरिचनागदलत्वगेला-
जातीयकोशककुभत्रपुसीफलानि ॥ १०१ ॥
वांसीपलाष्टकमिहप्रणिधाय नित्यं
लेह्यं सुसिद्धममृतं पलसंमितन्तु ।
हन्त्याशु मूत्रपरिदाहविबन्धशुक्रान्
कृच्छ्राश्मरीरुधिरमेहमधुप्रमेहान् ॥ १०२ ॥
इति गोक्षुराद्यवलेहः ।

सारवर्गकषाय चतुर्थांशावशिष्टमवतार्य्य । परिस्राव्यपुनरव-नीय साधयेत् । सिध्यति चामलकलोध्रप्रियंगुदन्तीकणायसं-ताम्रचूर्णान्यावपेत् । तदेतदनुपदग्धं लेहीभूतमवतार्य्याऽनुगुप्तं निदध्यात् ततो यथा योगमुपयुञ्जीत एषः लेहः सर्वमधुमेहान-पहन्ति ।

इति सारलेह. ।

असनञ्च प्रियालञ्च सालञ्च खादिरं तथा ।
सालवर्गं तथा ग्राह्यं भवेन्नैतद्विचक्षणैः ॥ १०३ ॥
मधुमेहत्वमापन्नं भिषग्भिः परिवर्जितम् ।
योगेनानेन मतिमान् प्रमेहिनमुपाचरेत् ॥ १०४ ॥
मासिशुक्रे शुचौ वापि शैलाः सूर्य्यांशु तापिताः ।
जतुप्रकाशं स्वरसं शिलाभ्यः प्रस्रवन्ति हि ॥ १०५ ॥
शिलाजत्विति विख्यातं महाव्याधिनिवारणम् ।
ताम्रादीनाञ्च लोहानां षण्णामन्यतमञ्च यत् ॥ १०६ ॥
ज्ञेयं तद्गन्धतयापि षड्योनि प्रथितं क्षितौ ।

लोहाद्भवति यद्यस्मा च्छिलाजतु जतुप्रभम् ॥ १०७ ॥
अस्य लोहस्य तद्वीर्य्यं रसं वापि विभर्त्ति तत्।
त्रपुसीसायसादीनि प्रधानान्युत्तरोत्तरम् ॥ १०८ ॥
यथा तथा प्रयोगोऽपि श्रेष्टः श्रेष्टगुणः स्मृतः।
तत्सर्वं तिक्तकटुकं कषायानुरसं सरम् ॥ १८९ ॥
कटुपाक्युष्णवीर्य्यञ्च शोषणं छेदनं तथा।
तत्र यत्नघुकृष्णाभं स्निग्धं निःशर्करञ्च यत् ॥ ११० ॥
गोमूत्रगन्धिनीलं वा तत्प्रधानं प्रचक्षते।
तद्भावितं सारगणै र्हृतदोषं दिनादितः ॥ १११ ॥
पिवेत्सारोदकेनैव श्लक्ष्णपिष्टं यथा बलम्।
जाङ्गलेन रसेनाद्या त्तस्मिन् जीर्णे तु भोजनम् ॥ ११२ ॥
उपयुज्यतुलामेव म्तस्यैवाश्मजन्मनः।
विजित्वा मधुमेहाख्य मन्तकं रोगशङ्करम् ॥ ११३ ॥
वपुर्वर्णबलोपेतः शतं जीवत्यनामयः।
शतं शतं तुलायान्तु सहस्रं दशतौलिकम् ॥ ११४ ॥
भल्लातकविधानेन परिहारविधिः स्मृतः।
मेहं कुष्टमपस्मार मुन्मादं श्लीपदं तथा ॥ ११५ ॥
शोषं शोफार्शसी गुल्मं पाण्डुतां विषमज्वरम्।
व्यपोहत्यचिरात्काला च्छिलाजतुनिषेवितम् ॥ ११६ ॥
न सोऽस्तिरोगोऽयश्चापि निहन्यात्तच्छिलाजतु।
शर्करां चिरसंभूतां भिनत्ति च तथाश्मरीम् ॥ ११७ ॥
भावनालोडने चास्य कर्त्तव्ये भेषजैर्हितैः।
एवं च माक्षिकं धातुं तापीजममृतोपमम् ॥ ११८ ॥
मधुरं काञ्चनाभास मम्लं वा रजतप्रभम्।
व्यपोहतिज्वरान् कुष्टं मेहपाण्डुामयक्षयान् ॥ ११९ ॥

तद्भावितान् कुलित्यांश्च कपोतांश्च विवर्जयेत् ॥ १२० ॥
इति शिलाजतुमाक्षिकयोः प्रयोगः ।
प्रमेहपिटिकानां प्राकार्य्यं रक्तावसेचनम् ।
पाटनञ्च विपक्वानां तासां पानं प्रशस्यते ॥ १२१ ॥
क्वाथो वनस्पतेर्वस्तमूत्रं तीक्ष्णञ्च शोधनम् ।
एलादिकेन कल्केन तैलं व्रणविशोधनम् ॥ १२२ ॥
क्वाथमारग्वधादीनां कुर्य्यादुद्वर्त्तनानि च ।
मालसारादिनासेकं भोज्यादींश्चणकादिना ॥
प्रमेहिनो यदामूत्रमनाविलमपिच्छलम् ।
विशदं तिक्तकटुकं तदारोग्यं प्रचक्षते ॥ १२३ ॥

## इति वङ्गसेने प्रमेहनिदानचिकित्साधिकारः समाप्तः ॥ ३८ ॥

—o—

## अथ मेदोनिदानमाह ।

अव्यायामदिवास्वप्न श्लेष्मलाहारसेविनः ।
मधुराम्लरसप्रायः स्नेहान्मेदो विवर्द्धते ॥ १ ॥
मेदसावृतमार्गत्वात् पुष्यन्त्यन्ये न धातवः ।
मेदस्तु चीयते तस्मा दसक्तः सर्वकर्मसु ॥ २ ॥
क्षुद्रश्वासतृषामोह स्वप्नक्रथनसादनैः ।
युक्तः क्षुत्स्वेददौगन्ध्यैरल्पप्राणोऽल्पमैथुनः ॥ ३ ॥
मेदस्तु सर्वभूताना मुदरे वस्तिषु स्थितम् ।
अतएवोदरे वृद्धिः प्रायो मेदस्विनो भवेत् ॥ ४ ॥
मेदसावृतमार्गत्वा द्वायुः कोष्ठे विशेषतः ।

चरन् सन्धुक्षयेदग्नि माहारं शोषयत्यपि ॥ ५ ॥
तस्मात्सशीघ्रं जरयत्याहारञ्चापि काङ्क्षते।
विकारांश्चाश्नुते घोरान् कांश्चित्कालविपर्ययात् ॥ ६ ॥
एतावुपद्रवकरौ विशेषादग्निमारुतौ।
एतौ हि दहतः स्थूलं वनं दावानलो यथा ॥ ७ ॥
मेदस्यतीवसंवृद्धे सहसैवानिलादयः।
विकारान्दारुणान् कृत्वा नाशयन्त्याशु जीवितम् ॥ ८ ॥
मेदोमांसातिवृद्धत्वा च्चलस्फिगुदरस्तनः।
अयथोपचयोत्साहो नरोऽतिस्थूल उच्यते ॥ ९ ॥
स्थूले स्युर्दुस्तराः कुष्टविसर्पाः सभगन्दराः।
ज्वरातीसारमेहार्शः श्लीपदाऽपचिकामलाः ॥ १० ॥
मेदसः स्वेददौर्गन्ध्या ज्जायते जन्तवोऽणवः ॥

—०—

## अथ चिकित्सामाह।

पुराणाः शालयो मुद्गाः कुलित्थोद्दालकोद्रवाः।
लवणास्तयथैव सेव्या मेदस्विना सदा ॥ ११ ॥
अस्वप्नञ्च व्यवायञ्च व्यायामश्चिन्तनानि च।
स्थौल्यमिच्छन् परित्यक्तं क्रमेणाति विवर्धयेत् ॥ १२ ॥
श्रमचिन्ता व्यवायाध्व क्षौद्रजागरणप्रियः।
हन्त्यऽवश्यमतिस्थौल्यं यवश्यामाकभोजनम् ॥ १३ ॥
सचव्यजीरकव्योष हिङ्गुसौवर्चलानलाः।
मस्तुना शक्तवः पीता मेदोघ्ना वह्निदीपनाः ॥ १४ ॥
फलत्रयं त्रिकटुकं सतैललवणान्वितम्।
षण्मासानुपयोगेन कफमेदो निलापहम् ॥ १५ ॥

विडङ्गं नागरं क्षारं काललोहरजो मधु ।
यवामलकचूर्णन्तु प्रयोगः श्रेष्ठ उच्यते ॥ १६ ॥
मूत्रं वा त्रिफलाचूर्णं मधुयुक्तं मधूदकम् ।
बिल्वादि पञ्चमूलस्य प्रयोगः क्षौद्रसयुतः ॥
अतिस्थौल्यहरः प्रोक्तो मण्डश्च सेवितो ध्रुवम् ॥ १७ ॥
कर्कशदलांघ्रिसलिलं शतपुष्पाहिंगुसंयुक्तम् ।
पुटकेन हन्ति नियतं सर्वभवां मेदसां वृद्धिम् ॥ १८ ॥
क्षारं वातारिपत्रस्य हिंगुयुक्तं पिबेन्नरः ।
मेदोवृद्धिविनाशाय भक्तमण्डसमन्वितम् ॥ १९ ॥
गवेधुकानां पिष्टानां यवानाश्चाथ शक्तवः ।
सक्षौद्रत्रिफलाक्वाथः पीतो मेदोहरो मतः ॥ २० ॥
गुडूचीत्रिफलाक्वाथ स्तथा लोहरजो युतः ।
अश्मजं मद्दिषाच्च वा तेनैव विधिना पचेत् ॥ २१ ॥
अतिमुक्ताद्वीजमध्यं मधुलीढं हन्त्युदग्रवृद्धिम् ।
मधुना चित्रकमूलं तथैव हितभोजने भुङ्क्ते ॥ २२ ॥
यद्वोरुबूकमूलं मधुदिग्धं स्थाप्यते निशां सकलाम् ।
तस्य सलिलस्य पानाज्जठरवृद्धिं शमं नयति ॥ २३ ॥
प्रातर्मधुयुतं वारि सेवितं स्थौल्यनाशनम् ।
उष्णमन्नस्य मण्डं वा पिबन् कृशतनुर्भवेत् ॥ २४ ॥
बदरीपत्रकल्केन पेया काञ्जिकसाधिता ।
स्थौल्यं नश्येदग्निमन्थ रसं वापि शिलाजतु ॥ २५ ॥
शैलेय कुष्टागुरुदेवदारु कौन्तीसमुस्तात्वक् पञ्चपत्रैः ।
श्रीवासघृक्काखरपुष्पदेव पुष्पं तथा सर्वमिदं प्रपिष्य ॥ २६ ॥
धत्तूरपत्रस्य रसेन गाढ़ं सुवर्त्तनं स्थौल्यहरं प्रदिष्टम् ॥ २७ ॥

—०—

अमृतात्रुटिविल्ववत्सकं कलिङ्गपथ्यामलकानि गुग्गुलुः।
क्रमवृद्धमिदं मधुप्लुतं पिडकास्थौल्यभगन्दरान् जयेत् ॥ २८ ॥

इत्यमृतादिगुग्गुलुः।

व्योषाग्नित्रिफलामुस्त विडङ्गैर्गुग्गुलु समम्।
खादन् सर्वान् जयेद्व्याधीन्मेदः श्लेष्मामवातजान् ॥ २९ ॥

इति दशाङ्गो गुग्गुलुः।

गुग्गुलुस्तालमूली च त्रिफलाखदिरं वृषम्।
त्रिवृत्तालम्बुषाशुण्ठी निर्गुण्डीचित्रकस्तथा ॥ ३० ॥
एषां दशपलान् भागां स्तोये पञ्चाढके पचेत्।
पादशेषं ततः कृत्वा कषायमवतारयेत् ॥ ३१ ॥
पलद्वादशकं देयं रुक्मलोहं सुचूर्णितम्।
पुराणसर्पिषः प्रस्थं शर्कराष्टपलान्वितम् ॥ ३२ ॥
पचेत्ताम्रमये पात्रे सुशीते चावतारिते।
प्रस्थार्द्धं माक्षिकं देयं शिलाजतुपलद्वयम् ॥ ३३ ॥
एलात्वचः पलार्द्धञ्च विडङ्गानि पलत्रयम्।
मरिचाञ्जनकृष्णा द्वे द्विपलं त्रिफलान्वितम् ॥ ३४ ॥
पलद्वयन्तु कासीसं सूक्ष्मचूर्णीकृतं बुधैः।
चूर्णं दत्वा सुमथितं स्निग्धे भाण्डे निधापयेत् ॥ ३५ ॥
ततः सगुडदेहस्तु भक्षयेदक्षमात्रकम्।
अनुपानं पिबेत् चीरं जाङ्गलानां रसं तथा ॥ ३६ ॥
वातश्लेष्महरं श्रेष्ठं कुष्टमेदोदरापहम्।
कामलापांडुरोगघ्नं श्वयथुं सभगन्दरम् ॥ ३७ ॥
मूर्च्छामोहविषोन्मादं गराणि विषमानि च।
स्थूलानां कर्षणं श्रेष्ठं मेदुरे परमौषधम् ॥ ३८ ॥

कर्पयेच्चातिमात्रेण कुक्षिं पातालसन्निभम् ।
बल्यं रसायनं मेध्यं वाजीकरणमुत्तमम् ॥ ३८ ॥
श्रीकरं पुत्रजननं वलीपलितनाशनम् ।
नाशीयात्कदलीकन्दं काञ्जिकं करमर्दकम् ।
करीरं कारवेल्लञ्च पट्टिककाराणि वर्जयेत् ॥ ४० ॥

इति लोहरसायनम् ।

सालसारादिनिर्यूहं चतुर्थांशावशेषितम् ।
परिस्रुतं ततः शीत मधुना मधुरीकृतम् ॥ ४१ ॥
फाणतीभाव मापन्नं गुड़ं शोधितमेव वा ।
श्लक्ष्णपिष्टानि चूर्णानि पिप्पल्यादेर्गणस्य च ॥ ४२ ॥
एकाध्यमावपेत् कुम्भे संस्कृते घृतभाविते ।
पिप्पलीचूर्णमधुभिः प्रलिप्ते चान्तरे शुचौ ॥ ४३ ॥
सूक्ष्माणि तीक्ष्णलोहस्य तनुपत्राणि बुद्धिमान् ।
खादिराङ्गारतप्तानि बहुशः प्रक्षिपेद्बुधः ॥ ४४ ॥
सुपिधानं ततः कृत्वा यवपल्ये निधापयेत् ।
मासांस्त्रींश्चतुरो वापि यावदाऽऽलोहसचयात् ॥ ४५ ॥
ततो जातरसं जन्तुः प्रातः प्रातर्यथा बलम् ।
उपयुञ्ज्याद्यथा योग माहारं चास्य कल्पयेत् ॥ ४६ ॥
एपस्थूलं कृशेद्रूनं नष्टस्याग्नेः प्रसाधनम् ।
शोथघ्नः कुष्टमेहघ्नो गुल्मपांड्वामयापहः ॥ ४७ ॥
प्लीहोदरहरः शीघ्रं विषमज्वरनाशनम् ।
अभिष्यंदापहरणो लोहारिष्टो महागुणः ॥ ४८ ॥

इति लोहारिष्टः ।

व्योपचित्रकशिग्रूणि, त्रिफलां कटुरोहिणीम् ।
बृहत्यौ द्वे हरिद्रे द्वे पाठामतिविषां स्थिराम् ॥ ४९ ॥

हिंगुकेम्बुकमूलानि यवानी धान्यचित्रकम्।
सौवर्चलमजाजी च हपुषा चेति चूर्णयेत् ॥ ५० ॥
चूर्णं तैलघृतक्षौद्र भागाः स्युर्मानतः समाः।
शक्तूनां षोड़शगुणो भागः संतर्पणं पिवेत् ॥ ५१ ॥
प्रयोगात्वस्य शाम्यन्ति रोगाः संतर्पणोत्थिताः।
प्रमेहा मूढ़वाताश्च कुष्टान्यर्शांसि कामलाः ॥ ५२ ॥
पांडुप्लीहामयः शोफो मूत्रकृच्छ्रमरोचकम्।
हृद्रोगौ राजयक्ष्मा च कासश्वासौ गलग्रहः ॥ ५३ ॥
कृमयो ग्रहणीदोषः श्वैत्र्यं स्थौल्यमतीव च।
नराणां दीप्यते वह्निः स्मृतिर्बुद्धिश्च वर्द्धते ॥ ५४ ॥

इति व्योषाद्यः शक्तुयोगः।

त्रिफलातिविषामूर्वा त्रिवृच्चित्रकवासकैः।
निम्बारग्वधषड्ग्रन्था सप्तपर्णनिशाद्वयैः ॥ ५५ ॥
गुडूचीन्द्रासुरी कृष्णा कुष्टसर्षपनागरैः।
तैलमेभिः समैः पक्वं सुरसादिरसप्लुतम् ॥ ५६ ॥
पानाभ्यञ्जनगंडूष नस्यवस्तिषु योजितम्।
स्थूलताऽऽलस्य पांड्वादीन् जयेत् कफकृतान् गदान् ॥ ५७ ॥

इति त्रिफलाद्यं तैलम्।

चन्दनं कुङ्कुमोशीर प्रियंगुत्रुटिरोचनाः।
तुरुष्कागुरुकस्तूरी कर्पूरो जातिपत्रिका ॥ ५८ ॥
जातीकक्कोलपूगानां लवङ्गस्य फलानि च।
नलिकानलदं कुष्टं हरेणु तगरं प्लवम् ॥ ५९ ॥
नखं व्याघ्रनखं स्पृक्का चोलोदमनकं तथा।
स्थौणेयकं चोरकञ्च शैलेयं शैलबालुकम् ॥ ६० ॥

सरलं सप्तपर्णञ्च लाक्षातामलकी तथा ।
लामज्जकं पद्मकञ्च धातक्याः कुसुमानि च ॥ ६१ ॥
प्रपौण्डरीकं कर्पूरं समांशैः शाणमात्रकैः ।
महासुगन्धिमित्येतत्तैलप्रस्थेन साधयेत् ॥ ६२ ॥
प्रस्वेदमलदौर्गन्ध्य कंडूकुष्टहरं परम् ।
अनेनाभ्यक्तगात्रस्तु वृद्धः सप्ततिकोऽपि वा ॥ ६३ ॥
युवा भवति शुक्राढ्यः स्त्रीणामत्यन्तवल्लभः ।
सुभगो दर्शनीयश्च गच्छेच्च प्रमदा शतम् ॥ ६४ ॥
वन्ध्यापि लभते गर्भं षण्ढोऽपि पुरुषायते ।
अपुत्रः पुत्रमाप्नोति जीवेच्च शरदां शतम् ॥ ६५ ॥

इति महासुगन्धितैलम् ।

वासादलरसो लेपाच्छङ्खचूर्णेन संयुतः ।
बिल्वपत्ररसो वापि गात्रदौर्गन्ध्यनाशनः ॥ ६६ ॥
अलम्बुषाभवं चूर्णं पीतं काञ्जिकसंयुतम् ।
दौर्गन्ध्यं नाशयत्याशु दुष्टं मेदो भवं नृणाम् ॥ ६७ ॥
बिल्वशिवा समभागा लेपाद्भुजमूलगन्धमपहरति ।
परिणित तिन्तिड़िकान्वितपूतिकरञ्जोत्थबीजं वा ॥ ६८ ॥
चिञ्चापत्रस्वरसं म्रक्षितकक्षादि योजितं जयति ।
दग्धहरिद्रोद्वर्त्तनमचिराच्चिरदेहदौर्गन्ध्यम् ॥ ६९ ॥
शिरीषलामज्जकहेमलोध्रैः त्वग्दोषसंस्वेदहरः प्रकर्षः ।
पत्राम्बुलोध्राभयचन्दनानि शरीरदौर्गन्ध्यहरः प्रदेहः ॥ ७० ॥
हिलमोचिरसो युक्तः शूर्कैरुदधिफेनजैः ।
प्रलेपेन हरत्याशु देहदौर्गन्ध्यमुत्कटम् ॥ ७१ ॥
हरीतकीन्तु सपिष्य गात्रमुद्वर्त्तयेन्नरः ।
पश्चात् स्नानं प्रकुर्वीत देहप्रस्वेदशान्तये ॥ ७२ ॥

बंबूलस्य दलैः सम्यग्वारिणा परिपेषितैः ।
गात्रमुद्वर्त्तयेत् पश्चाद्धरितक्या सुपिष्टया ॥ ७३ ॥
भूय उद्वर्त्तनं कृत्वा पश्चात् स्नानं समाचरेत् ।
प्रस्वेदान्मुच्यते शीघ्रं तत्तस्त्वेवं समाचरेत् ॥ ७४ ॥
चन्द्रांशु सलिलं लोध्रं शिरीषोशीरकेसरैः ।
उद्वर्त्तनं भवेद् ग्रीष्मे स्वेदकर्म्मनिवारणम् ॥ ७५ ॥
सुरयासममभयाफल चूर्णं मधुना विलिह्य प्रत्यूषम् ।
स्वेदान् हत्वा लभते पुरुषोऽप्यऽत्यन्तसौरभ्यम् ॥ ७६ ॥
मल्लीकुसुमाभयकरि लेपो घर्म्मविनिहन्ति सदाहम् ।
विचकिलपत्रहरिद्रे कर्कटिपत्रं सदूर्वयासहितम् ।
संपिष्यगात्रलेपाद्घर्मं विविधं शमंयाति ॥ ७७ ॥
हस्तपादस्रुतौ योज्यं गुग्गुलुपञ्चतिक्तकम् ।
अगक्तौ पञ्चतिक्तं वा पल्लाखादेदतन्द्रितः ॥ ७८ ॥

## इति वङ्गसेने मेदोनिदानचिकित्साधिकारः समाप्तः ॥ ३६ ॥

—०—

## अथोदररोगनिदानमाह ।

रोगाः सर्वेपि मन्देग्नौ सुतरामुदराणि च ।
अजीर्णान्मलिनैश्चान्नैर्जायन्ते मलसञ्चयात् ॥ १ ॥
रुध्वास्वेदांबुवाहीनि दोषाः स्रोतांसि सञ्चिताः ।
प्राणाग्न्यपानान् संदूष्य जनयन्त्युदरं नृणाम् ॥ २ ॥
ततूपूर्वरूपं बलवर्णकाङ्क्षा वलीविनाशो जठरे निरोधः ।
जीर्णांऽपरिज्ञानविदाहयुक्तौ वस्तौ रुजः पादगतश्च शोथः ॥३॥

आधानं गमनेऽशक्ति र्दौर्बल्यं दुर्बलाग्निता
शोथः सदनमङ्गानां संगोवातपुरीषयोः।
दाहस्तन्द्रा च सर्वेषु जठरेषु भवन्ति हि ॥ ४ ॥
पृथग्दोषैः समस्तैश्च प्लीहबद्धक्षतोदकैः।
सम्भवन्त्युदराण्यष्टौ तेषां लिङ्गं पृथक् शृणु ॥ ५ ॥
तत्र वातोदरे शोथः पाणिपान्नाभिकुक्षिषु।
कुक्षिपार्श्वोदरकटौ पृष्ठरुक् पर्वभेदनम् ॥ ६ ॥
शुष्ककासाङ्गमर्दश्च गुरुतामलसंग्रहः।
श्यावारुणत्वगादित्व मकस्माद्वृद्धिह्रासवत् ॥ ७ ॥
सतोदभेदमुदरं तनुकृष्णशिराततम्।
आध्मानदृतिवच्छब्द माहतं प्रकरोति च ॥ ८ ॥
वायुश्चात्र सरुक् शब्दो विचरेत् सर्वतो गतिः।

—०—

जन्मनैवोदरं सर्वं प्रायः कृच्छ्रतमं मतम्।
बलिनस्तदजाताम्बु यत्नसाध्यं नवोत्थितम् ॥ ९ ॥
अजातशब्दमरुजं सशब्दं नातिभारिकम्।
सदा गुड़गुड़ायन्तं शिराजालगवाक्षितम् ॥ १० ॥
नाभिं विष्टभ्यपायौ तु वेगं कृत्वा प्रशाम्यति।
हृद्वङ्क्षणकटिनाभि गुद प्रत्येकशूलिनः ॥ ११ ॥
कर्कशं सृजतेऽपानं नातिमन्दे च पावके।
लोलस्याऽचिरमेवास्ये मूत्रेऽल्पे संहते वह्निः।
अजातोदकमित्येतै र्युक्तं विज्ञायलक्षणैः ॥ १२ ॥

—०—

## अथ चिकित्सामाह।

उपक्रमेद्भिषग्दोष बलकालविशेषवित्।

स्थिरादिसर्पिषः पानं स्नेहस्वेदविरेचनम् ॥ १३ ॥
वेष्टनं वाससानाभौ साल्वनञ्चोपनाहनम्।
चित्रतैलं स्थिराद्यन्तु निरूहः सानुवासनः।
पयोयूषरसान्नञ्च योज्यं वातोदरे क्रमात् ॥ १४ ॥
एरण्डतैलं दशमूलमिश्रं गोमूत्रयुक्तस्त्रिफलारसो वा।
निहन्ति वातोदरशोथशूलं क्वाथः समूत्रो दशमूलजश्च ॥१५॥
कुष्टं दन्तीयवक्षारं व्योषं त्रिलवणं वचा।
अजाजीदीप्यकं हिंगु स्वर्जिकाचव्यचित्रकम् ॥ १६ ॥
शुण्ठी चोष्णांवुनापीता वातोदररुजापहा ॥ १७ ॥
दशमूलीकषायेण क्षीरहन्ति. शिलाजतु।
सद्योवातोदरीक्षीरं मौत्रं वाऽथातु केवलम् ॥ १८ ॥

—०—

सामुद्रसौवर्चलसैन्धवानां क्षारो यवानामजमोदकञ्च।
सपिप्पलीचित्रकशृङ्गवेरं हिंगुविडञ्चेति समानिकुर्य्यात् ॥१९॥
एतानि चूर्णानि घृतप्लुतानि युञ्जीतपूर्वं कवले प्रशस्तम्।
वातोदरं गुल्ममजीर्णभुक्तं वायुप्रकोपं ग्रहणीञ्च दुष्टाम् ॥२०॥
अर्शांसि दुष्टानि च पांडुरोगं भगन्दरञ्चेति निहन्ति सद्यः ॥२१॥

इति सामुद्राद्य चूर्णम्।

पिप्पली पिप्पलीमूलं चव्यचित्रकनागरैः।
सक्षारैरर्द्धपलिकैर्द्विप्रस्थं सर्पिषः पचेत् ॥ २२ ॥
कल्कैर्द्विपञ्चमूलस्य तुलार्द्धस्य रसेन तु।
दधिमण्डाढकं दत्वा तत्सर्पिर्जठरापहम् ॥ २३ ॥
श्वयथुं वातविष्टम्भं गुल्मर्शांसि च नाशयेत्।
अनयामांत्रया वारं हृद्यं पाचमिदं हविः ॥२४॥

इति दशमूलषट्पल घृतम्।

दशमूलीकषायेण रास्नानागरदारुभिः ।
पुनर्नवाभ्याञ्च घृतं सिद्धं वातोदरापहम् ॥ २५ ॥
इति दशमलाद्यं घृतम् ।

लशुनस्य तुलामेकां जलद्रोणे विपाचयेत् ।
चतुर्भागावशेषन्तु कषायमवतारयेत् ॥ २६ ॥
तत्क्वाथञ्च परिस्राव्य विशाले ताम्रभाजने ।
चित्रतैलाढकं दद्याद् भेषजानि प्रदापयेत् ॥२७ ॥
त्रिकटुत्रिफलादन्ती हिङ्गुसैन्धवचित्रकम् ।
देवदारुवचाकुष्टं मधुशिग्रुपुनर्नवम् ॥ २८ ॥
सौवर्चलविडङ्गानि दीप्यकं हस्तिपिप्पली ।
एतेषां पलिकान् भागां स्त्रिवृतार्द्धपलानि च ॥ २९ ॥
पिष्ट्वा कषायेणानेन शनैर्मृद्वग्निना पचेत् ।
तत्पिबेत्प्रातरुत्थाय यथाग्निबलमात्रया ॥ ३० ॥
निहन्ति सर्वरोगाणि जठराणि विशेषतः ।
मूत्रकृच्छ्रमुदावर्त्तं मन्त्रवृद्धिं गुदक्रमीन् ॥ ३१ ॥
पार्श्वकुक्षिभवं शूलं मामशूलमरोचकम् ।
यकृदष्टीलिकानाहान् प्लीहानञ्चाङ्गवेदनम् ॥ ३२ ॥
मासमात्रेण नश्यन्ति चार्शांसि वातजा गदाः ।
इति लशुनतैलम् । इति वातोदरम् ।

—०—

## अथ निदानमाह ।

पित्तोदरे ज्वरोमूर्च्छा दाहस्तृट् कटुकास्यता ।
भ्रमोऽतीसारः पीतत्वं त्वगादावुदरं हरित् ॥ ३३ ॥
पीतताम्रशिरानद्धं सस्वेदं सोष्मदह्यते ।

धूमायतिमृदुस्पर्शं चिप्रपाकं प्रदूयते ॥ २४ ॥

—०—

## अथ चिकित्सामाह।

पित्तोदरे तु बलिनं पूर्वमेव विरेचयेत्।
दुर्बलन्त्वनुवास्यादौ शोधयेत् चीरवस्तिना ॥ २५ ॥
सञ्जातबलकायाग्निं जातस्निग्धं विरेचयेत्।
त्रिवृत्कल्केन पयसा रुवुकस्य शृतेन वा।
शातलात्रायमाणाभ्यां शृतेनारग्वधेन च ॥ २६ ॥
घृतं पित्तोदरे देयं मधुरौषधसाधितम्।
स्यात्त्रिवृत्त्रिफलासिद्धं पयात्सर्पिर्विशोधनम् ॥ २७ ॥
न्यग्रोधादिकषायेण सर्पिः चौद्रसितायुतम्।
आस्थापनं प्रयोक्तव्यं स्नेहवस्तिसमन्वितम् ॥ २८ ॥
सार्द्रपायससिद्धेन कर्त्तव्यमुपनाशनम्।
स्थिरादिसाधितं तैलं चीरञ्च प्राशने हितम्।
पञ्चमूलीशृतं चीरं पित्तोदरविनाशनम् ॥ २९ ॥
पृष्टपर्णीबलाव्याघ्री लाचानागरसाधितम्।
चीरं पित्तोदरं हन्ति इति पित्तोदरे क्रिया ॥ ४० ॥

इति पित्तोदरम्।

—०—

## अथ निदानम्।

श्लेष्मोदरेऽङ्गसदनं स्वापं श्वयथुगौरवम्।
निद्रोत्क्लेशारुचिः श्वासः कासः शुक्लत्वगादिता ॥ ४१ ॥
उदरं स्तिमितं स्निग्धं शुक्लराजीततं महत्।
चिराभिवृद्धिकठिनं शीतस्पर्शं गुरुस्थिरम् ॥ ४२ ॥

—०—

## अथ चिकित्सामाह।

श्लेष्मोदरिणन्तु पिप्पल्यादिसिद्धेन सर्पिषा: स्नेहयित्वा स्नुहीक्षीरविपक्केनानुलोम्य च। त्रिकटुकमूत्रतैलप्रगाढ़ेन मुस्तकादिकाथेनाऽऽस्थापयेदनुवासयेच्च। किट्टसर्षपामलकबीजैर्योनाहयेत् उदरिणं भोजयेच्चैनं त्रिकटुप्रगाढ़ेन कुलित्थयूषेण पयस स्वेदयेच्चाभीक्ष्णम्।

व्योषयुक्तं कुलित्थांवु पयो वा भोजने हितम्।
गोमूत्रारिष्टपानैश्च चूर्णाऽयस्कृतिभिस्तथा॥ ४३॥
सक्षीरतैलपानैश्च शमयेत्तु कफोदरम्।

इति कफोदरम्।

—०—

## अथ निदानमाह।

स्त्रियोऽन्नपानं नखरोममूत्रविडार्त्तवैर्युक्तमसाधुवृत्ताः।
यस्मै प्रयच्छन्त्यरयोगरांश्च दुष्टांवुदूषीविषसेवनाद्वा॥ ४४॥
तेनाशुरक्तं कुपिताश्च दोषाः कुर्युः सुघोरं जठरं त्रिलिङ्गम्॥४५
तच्छीतवाते भृशदुर्दिने च विशेषतः कुप्यति दह्यते च।
सचातुरो मूर्च्छति हि प्रसक्तं पांडुः कृशः शुष्यति तृष्णया च
दूष्योदरं कीर्त्तितमेतदेव प्लीहोदरं कीर्त्तयतो निबोध॥ ४६॥

—०—

## अथ चिकित्सामाह।

सन्निपातोदरे कार्य्यं एष एव क्रियाक्रमः।
रोहीतकाऽभयाकल्कं गोमूत्रेण विभावितम्।
पीतं सर्वोदरप्लीह मेहार्शः कृमिगुल्मनुत्॥ ४७॥

सप्तलाशङ्खिनीसिद्धं घृतं चात्र विशोधनम् ।
दन्तीद्रवन्तीफलजं तैलं दूष्योदरे पिबेत् ॥ ४८ ॥

—०—

नागरं त्रिफलाप्रस्थं घृततैलं तथाढ़कम् ।
मस्तुना साधयित्वा तु पिबेत्सर्वोदरापहम् ॥ ४९ ॥
कफमारुतसम्भूते गुल्मे चैव प्रशस्यते ॥ ५० ॥

इति नागराद्यं घृतम् । इति त्रिदोषोदरम् ।

अत ऊर्द्ध्वं निगद्यन्ते सामान्यायोगसंमताः ।
दोषैः कुक्षौ हि संपूर्णे वह्निर्मन्दत्वमिच्छति ॥ ५१ ॥
तस्माद्योज्यानि पेयानि दीपनानि लघूनि च ।
शालिषष्टिकगोधूम यवनीवारभोजनम् ॥ ५२ ॥
विरेकास्थापनं श्रेष्टं सर्वेषु जठरेषु च ।
उदवानूपजं मांसं शाकं पिष्टकृतं तिलान् ॥ ५३ ॥
व्यायामाध्वदिवास्वप्न यानपानं विवर्जयेत् ।
तथोष्णलवणाम्लानि विदाहीनि गुरुणि च ॥ ५४ ॥
नाद्यादन्नानि जठरे तोयपानं विवर्जयेत् ।
उदरिणां मलाढ्यत्वा द्वहुशः शोधनं मतम् ॥ ५५ ॥
क्षीरेणैरण्डजं तैलं पिबेन्मूत्रेण वै सकृत् ।
ज्योतिष्मत्या पिबेत्तैलं पयसा वा दिनाष्टकम् ॥ ५६ ॥
कंकुष्टचूर्णं सुस्तांबुपीतं संसेव्य मानवः ।
अष्टाभ्योऽप्युदरेभ्यश्च द्रुतं कुर्यान्निवृत्तिकाम् ॥ ५७ ॥
स्नुहीपयो भावितानां पिप्पलीनां पयोशनः ।
सहस्रमुपयुञ्जीत शक्तितो जठरामयी ॥ ५८ ॥
वातोदरी पिबेत्तक्रं पिप्पलीलवणान्वितम् ॥
शर्करा मरिचोपेतं स्वादुःपित्तोदरी पिबेत् ॥ ५९ ॥

यवानीहपुषाजाजी व्योषयुक्तं कफोदरी।
सन्निपातोदरीक्षिप्रं त्रिकटुक्षारसैन्धवैः ॥ ६० ॥
वद्धोदरी च हपुषा दीप्यकाजाजोसैन्धवैः।
पिवेच्छिद्रोदरीतक्रं पिप्पलीक्षौद्रसंयुतम् ॥
तूषणक्षारलवणैर्युक्तन्तु निचयोदरी ॥ ६१ ॥
शिलाजतूनां मूत्राणां गुग्गुलोस्त्रिफलस्य च।
स्नुहीक्षीरप्रयोगश्च शमयत्युदरामयम् ॥ ६२ ॥
पूतीकरञ्जबीजं मूलकबीजं गवादनीमूलम्।
शङ्खभस्म च काञ्जिक पीतं शमयेज्जलोदरमपि ॥ ६३ ॥
कलिंगबीजशाणश्च शाणः टङ्कणहिंगुनोः।
शङ्खशाणसमायुक्तं पड्वा पिप्पलीमाषकाः ॥ ६४ ॥
गोमूत्रेण तु सपेष्यपीतं शमयति द्रुतम्।
उदराणि च सर्वाणि चिरजातोदकान्यपि ॥ ६५ ॥
सप्ताहं माहिषं मूत्रं पयसाऽन्नांबुवर्जितम्।
पीतमौष्ट्रमजामूत्रं क्षययूदरनाशनम् ॥ ६६ ॥
यः पिवेत्प्रातरुत्थाय चव्यचित्रकमिश्रितम्।
क्षिप्रं तस्य जयेदौष्ट्र ममाध्यमपि चोदरम् ॥६७ ॥
विंशाला शङ्खिनोदन्ती त्रिवृन्नीलीफलत्रयम्।
निशाविडङ्गकंपिल्लं मूत्रेणोदरवान् पिवेत् ॥ ६८ ॥
पेयं वा चव्यदन्त्यग्निविडङ्गं व्योषकल्कितम्।
पेयो वा शृङ्गवेराम्बु कषायो दारुवह्निजः॥
चव्यविश्वसमुत्थो वा पेयो जठरशान्तये ॥ ६९ ॥
क्षारद्वयानलव्योषं नीलोलवणपञ्चकम्।
चूर्णितं सर्पिषा पेयं सर्वगुल्मोदरापहम् ॥ ७० ॥
विडङ्गं चित्रकं दन्ती चव्यं व्योषञ्च तत् पयः।

कल्कैः कोलसमैः पीत्वा प्रहद्धमुदरं जयेत् ॥ ७१ ॥
गवाक्षीशङ्खिनीदन्ती नीलिनीकल्कसंयुतम्।
सर्वोदरविनाशाय गोमूत्रपानमाचरेत् ॥ ७२ ॥
विद्रुमं शिग्रु च पूरकञ्च गोमूत्रपिष्टामथवाश्वगन्धाम्।
पीत्वाशु हन्याज्जठरं प्रहृद्धं क्रमीन् सशोथानुदरञ्च दूष्यम् ॥७३॥
पिप्पलीवर्द्धमानं वा कल्पोद्दिष्टं प्रयोजयेत्।
जठराणां विनाशाय नास्ति तेन समं भुवि ॥ ७४ ॥
स्नुक् पयसा परिभावित तंडुलचूर्णैर्निर्मितः पूपः।
उदरमुदारं हन्या योगोऽयं सप्तरात्रेण ॥ ७५ ॥
वंबूलस्य त्वचं श्रेष्ठां क्वाथयेत्सलिलेन तु।
पुनः पचेत्क्वथायन्तु यावत्सान्द्रत्वमागतम् ॥ ७६ ॥
तत्पिबेत्तक्रसंयुक्तं तक्रभोजी मिताशनः।
निहन्यादाशु योगोऽयं जलोदरमपि ध्रुवम् ॥ ७७ ॥
मूत्राण्यष्टावुदरिणां सेके पाने च योजयेत्।
पिप्पलीवर्द्धमानं वा पयसैव प्रयोजयेत् ॥ ७८ ॥
देवदारुपलाशार्क हस्तिपिप्पलिशिग्रुभिः।
साश्वगन्धैः सगोमूत्रैः प्रदिह्यादुदरं शनैः ॥ ७९ ॥



पटोलपत्रं रजनी विड़ङ्गं त्रिफलात्वचम्।
कम्पिल्लकं नीलिनी च त्रिवृतं चेति चूर्णयेत् ॥ ८० ॥
षडाद्यान् कार्षिकानन्त्यान् त्रींश्च द्वित्रिचतुर्गुणान्।
कृत्वा चूर्णं ततो मुष्टिं गवां मूत्रेण वा पिबेत् ॥ ८१ ॥
विरिक्तो जाङ्गलरसैः रौदनं मृदुभोजयेत्।
मण्डं पेयाञ्च पीत्वा वा सव्योषं षडहं पयः ॥ ८२ ॥
शृतं पिबेत्ततयूषं पिबेदेवं ततः पुनः।

हन्ति सर्वोदराण्येतच्चूर्णं जातोदकानि च ॥ ८३ ॥
कामलां पाण्डुरोगञ्च श्वयथुं वापि कर्षति ॥ ८४ ॥

—०—

अत्र पटोलादीनां भागा कार्षिका अन्येषां द्वित्रिचतुर्गुणा भागा ग्राह्णीयाः । इति पटोलाद्यं चूर्णम् ।

—०—

यवानीहपुषाधान्यं त्रिफला सोपकुञ्चिका ।
कारवीपिप्पलीमूलं मजगन्धा शठीवचा ॥ ८५ ॥
शताह्वाजीरकं व्योषं स्वर्णक्षीरी सचित्रकम् ।
द्वौ क्षारौ पौष्करं मूलं कुष्टं लवणपञ्चकम् ॥ ८६ ॥
विडङ्गञ्च समांशानि दन्तिभागत्रयं भवेत् ।
त्रिवृद्विशाले द्विगुणे शातला स्याच्चतुर्गुणा ॥ ८७ ॥
एष नारायणो नाम्ना चूर्णो रोगगणापहः ।
एनं प्राप्य निवर्त्तन्ते रोगाविष्णुमिवासुराः ॥ ८८ ॥
तक्रेणोदरिभिः पेयो गुल्मिभिर्बदरांबुना ।
आनद्धवाते सुरया वातरोगे प्रसन्नया ॥ ८९ ॥
दधिमण्डेन विड्भेदे दाडिमांबुभिरर्शसि ।
परिकर्त्तिषु वृक्षाम्लैरुष्णाम्बुभिरजीर्णके ॥ ९० ॥
भगन्दरे पांडुरोगे कासे श्वासे गलग्रहे ।
हृद्रोगे ग्रहणीरोगे कुष्टे मन्दानले ज्वरे ॥ ९१ ॥
दंष्ट्राविषे मूलविषे सगरे कृत्रिमे विषे ।
यथार्हं स्निग्धकोष्टेन पेयमेतद्विरेचनम् ॥ ९२ ॥

इति नारायणचूर्णम् ।

तिलसर्षपनालानि यवनालं सुधामपि ।
दशमूलमपामार्गं दन्तीं चित्रकमाढ़कीम् ॥ ९३ ॥

मधूकमैन्द्रीं त्रिफलां त्रिहृतां करवीरकम्।
पुनर्नवां वृश्चिकालीमर्ककम्पिल्लनिम्बकम् ॥ ९४ ॥
एतान् दशपलान् भागान् युक्त्या दग्ध्वा समावपेत्।
गोमूत्रद्रोणसंयुक्ते सप्तकृत्वस्तु पाचयेत् ॥ ९५ ॥
वचामतिविषां पाठां द्वे हरिद्रे महौषधम्।
चित्रकम्पिल्लकं क्षारं तथैव लवणानि च ॥ ९६ ॥
महौषधं शिग्रुफलं कुष्टं भल्लातकानि च।
पिप्पलीं च विड़ङ्गानि त्रिफलां देवदारु च ॥ ९७ ॥
कटुकां रोहिणीं मुस्तं दन्तीं हिंगवम्लवेतम्।
दधियुक्तारनालाना माढ़काढ़कमावपेत् ॥ ९८ ॥
समांशकेन भागेन सर्पिस्तैलं विपाचयेत्।
विगतार्चिर्यथाशान्त मथैतदवतारयेत् ॥ ९९ ॥
ततो विड़ालपदकं पिबेदुष्णेन वारिणा।
सुरयारनालैश्च पानैश्च क्षीरैर्मूत्रेण वा पुनः ॥ १०० ॥
महाक्षार इति ख्यातो जठराणां विनाशनः।
प्लीहान्यर्शांसि गुल्मानि सशूलं हृदयग्रहम् ॥ १०१ ॥
यच्चामञ्च प्रमेहञ्च पांडुरोगं भगन्दरम्।
सकमीग्रहणीदोषान् व्रणोदावर्त्तकुण्डलम् ॥
मूत्रकृच्छ्रमपस्मारं क्षारोऽयं विनिवर्त्तते ॥ १०२ ॥

इति महाक्षारः।

*स्नुक्क्षीरदन्ती त्रिफला विडङ्गसिंही त्रिवृच्चित्रककर्षकल्कम्।*
घृतं विपक्वं कुड़वप्रमाणं तोयेन तस्याऽक्षसमानकर्षम् ॥ १०३ ॥
पीत्वोष्णमम्भोनुपिबेद्विरिक्ते पेयां रसं वा प्रचरेद्विधिज्ञः।
नाराचमेतज्जठरामयाणां युक्त्योपजुष्टं समनुप्रदिष्टम् ॥ १०४ ॥

इति नाराचघृतम्।

त्रिफलाचित्रको दन्ती वृहतीकण्टकारिका।
स्नुहीसार्कविडङ्गानि घृतस्य कुडवं पचेत्॥ १०५॥
तस्य मृद्वग्निसिद्धस्य कर्षार्द्धं पाययेन्नरः।
शोथगुल्मोदरानाह प्लीहोदर कफोदरान्॥ १०६॥
नाशयत्युल्वणानेतान् सर्पिर्नाराचसंज्ञितम्॥ १०७॥

इति नाराचघृतम्।

पयस्यष्टगुणे सर्पिः प्रस्थं स्नुक् पयसः फलम्।
त्रिवृतापलषट्केन सिद्धं जठरगुल्मनुत्॥ १०८॥

इति त्रिवृताद्यं घृतम्।

अर्कक्षीर पले द्वे तु स्नुहीक्षीरपलानि षट्।
पथ्या कम्पिल्लकं श्यामा शम्याकगिरिकर्णिका॥ १०९॥
नीलिनीत्रिवृतादन्तीं शङ्खिनीचित्रकं तथा।
एतेषां पलिकैर्भागै र्घृतप्रस्थं विपाचयेत्॥ ११०॥
अथास्य मलिनि कोष्ठे बिन्दुमात्रं प्रदापयेत्।
यावत्तस्य पिबेद्बिन्दुं स्तावद्वेगाद्विरिच्यते॥ १११॥
कुष्टं गुल्ममुदावर्त्तं श्वयथुं सभगन्दरम्।
शमयत्युदराण्यष्टौ वृक्षमिन्द्राशनिर्यथा॥ ११२॥
एतद्बिन्दुघृतं नाम येनाभ्यक्तो विरिच्यते।

इति बिन्दुघृतम्।

शालिपर्णी विदारी च सहदेवा सगोक्षुरा।
उभे स्थिरे शारिवे च जीवकर्षभकावुभौ॥ ११३॥
पर्णिन्यौ च विशाला च रुबूको हरिद्रेव च।
कण्डूरा त्वक् पची च फलत्रयमथापि वा॥ ११४॥
एषां चतुर्दशपलं मानतः सर्वसंयुताम्।
पुनर्नवैरण्डयोश्च पलमेकं पृथक् पृथक्॥ ११५॥

षोड़शांशसमाख्यातं दशमूल्या विंशतिं तथा ।
संकुट्य क्वथिते द्रोणे जले पादावशेषिके ॥ ११६ ॥
दधिकाञ्जिकमूत्राणां प्रस्थं प्रस्थं चतुश्चतुः ।
तैलमैरंडजं चैव प्रस्थमेकं समाचरेत् ॥ ११७ ॥
सार्द्धकर्षप्रमाणां तां मात्रां वैद्यस्तु दापयेत् ॥ ११८ ॥
पलाशपुष्पीधवचित्रकानां स्नुहीद्रुमलक्ष्मदनाग्न्वधानाम् ।
फलत्रिकस्यापि तथैव दद्यात् चारस्य लोध्रस्य पलं तथैव ॥११९॥
पयः स्नुहायाश्च पलञ्चतुष्कं शेषां च कल्केन पचेद्विधिज्ञः ।
क्षीरेण तद्दे पिबतश्च जन्तोः सर्वोदरं तैलवरं निहन्ति ॥ १२० ॥
इति शालोपर्णीतैलम् । सामान्यविधिः ।

—०—

## अथ निदानमाह ।

विदाह्यभिष्यन्दिरतस्य जन्तोः प्रदुष्टमत्यर्थमसृक्कफश्च ।
प्लीहाभिवृद्धिं कुरुतः प्रवृद्धौ प्लीहोत्थमेतज्जठरं वदन्ति ॥१२१॥
तद्वामपार्श्वे परिवृद्धिमेतिविशेषतः सीदति चातुरोऽत्र ॥१२२॥
प्लीहानिर्वेदनः श्वेतः कठिनः स्थूल एव च ।
महापरिग्रहः शान्तः श्लेष्मसम्भव उच्यते ॥ १२३ ॥
सज्वरः सपिपासश्च स्वेदनस्तीव्रवेदनः ।
पीतगात्रो विशेषेण प्लीहा पैत्तिक उच्यते ॥ १२४ ॥
नित्यमावद्धकोष्टश्च दिव्योदावर्त्तपीड़ितः ।
वेदनाभिः परीतश्च प्लीहावातिक उच्यते ॥ १२५ ॥
क्लमोविदाहः संमोहो वैवर्ण्यं गात्रगौरवम् ।
उत्क्लेदभ्रड़मूर्च्छाभिर्ज्ञेयं रक्तस्य लक्षणम् ॥ १२६ ॥
त्रयाणामपि रूपाणि प्लीहासाध्ये भवन्ति हि ॥ १२७ ॥

—०—

## अथ चिकित्सामाह ।

स्नेहस्वेदविरेकादि विधेयं प्लीहरोगिणे ॥ १२८ ॥
दध्ना भुक्तवतो वाम बाहुमध्ये शिरां भिषक् ।
विध्येत् प्लीहविनाशाय यकृन्नाशाय दक्षिणे ॥
प्लीहानं मर्दयेद्गाढ़ं दुष्टरक्तप्रशान्तये ॥ १२९ ॥
मणिबन्धे समुत्पन्नं वाममंगुष्ठमीरितम् ।
दहेच्छिरां शरेणाशु वैद्यः प्लीहप्रशान्तये ॥ १३० ॥
विडङ्गाढ्यान् ससिन्धूत्थान् शक्तून् कृत्वा वचान्वितान् ।
पिवेत् क्षीरेण संचूर्ण्य प्लीहगुल्मोदरापहम् ॥ १३१ ॥
सिन्धुमगधाग्निचूर्णं शिग्रुशिवाऽऽमलकीरसनिपीतञ्च ।
प्रवलमपि योगराजः प्लीहानं नाशयत्याशु ॥ १३२ ॥
तिलैरण्डद्रवस्तस्य क्षारो भल्लातकं कणा ।
एषां भागं समं कृत्वा तत्तुल्यन्तु गुड़ं मतम् ॥ १३३ ॥
खादेदग्निबलं मत्वा पावकस्य विवृद्धये ।
जयेत्प्लीहानमत्युग्रं यकृद्गुल्मं तथैव च ॥ १३४ ॥
अम्लवेतससंयुक्तः शिग्रुक्वाथः ससैन्धवः ।
पीतः प्लीहोदरं हन्ति पिप्पलीमरिचान्वितः ॥ १३५ ॥
कुष्टं वचाशृङ्गवेरं चित्रकं कौटजं फलम् ।
पाठा चैवाजमोदा च पिप्पल्यः समचूर्णिताः ॥ १३६ ॥
ततो विडालपदकं पिवेदुष्णेन वारिणा ।
प्लीहोदरमुदावर्त्तं सर्वमेतेन शाम्यति ॥ १३७ ॥
पातव्यो युक्तितः क्षारः क्षीरेणोदश्विदुत्थितः ।
पयसा च प्रयोक्तव्याः पिप्पल्यः प्लीहशान्तये ॥ १३८ ॥
अर्कपत्रं सलवणं पुटदग्धं सुचूर्णितम् ।

निहन्ति मस्तुना पीतं प्लीहानमतिदारुणम् ॥ १३८ ॥
वायुः प्लीहानमुद्धम्य कुपितो यस्य तिष्ठति।
शूलैः परितुदन्पार्श्वं प्लीहातस्य विवर्द्धते ॥ १४० ॥
हिंगुत्रिकटुकं कुष्टं यवक्षारोऽथ सैन्धवम्।
मातुलुङ्गरसोपेतं प्लीहशूलहरो रजः ॥ १४१ ॥
पलाशक्षारतोयेन पिप्पलीपरिभाविता।
गुल्मप्लीहार्त्तिशमनी वह्निदीप्तिकरीमता ॥ १४२ ॥
रसेन जम्बीरफलस्य शङ्ख नाभीरजः पीतमवश्यमेव।
कर्षप्रमाणं शमयेदशेषं प्लीहामयं कूर्म्मसमानमाशु ॥ १४३ ॥
शरपुङ्खमूलकल्कः पीतस्तक्रेण नाशयत्यचिरात्।
चिरतरकालसमुत्थं प्लीहानं रूढ़मवगाढ़म् ॥ १४४ ॥

—०—

क्षारं वा विड़ङ्गकृष्णाभ्यां पूतीकस्यांवुनिःसृतम्।
यक्तत्प्लीहप्रशान्त्यर्थं पिवेत्प्रातर्यथाबलम् ॥ १४५ ॥

इति क्षारयोगः।

सुस्विन्नं शाल्मलीपुष्पं निशापर्य्युषितं नरः।
राजिकाचूर्णसंयुक्तं मद्यात्प्लीहोपशान्तये ॥ १४६ ॥
यवानिकाचित्रकयावशूक षड्ग्रन्थिदन्तीमगधोद्भवानाम्।
प्लीहानमेतद्विनिहन्ति चूर्णमुष्णांवुनामस्तु सुरामवैर्वा ॥१४७॥

इति यवान्यादिचूर्णम्।

विड़ङ्गानि यवानी च चित्रकं चेति तत्समम्।
द्विगुणं देवदारु च नागरं सपुनर्नवम् ॥ १४८ ॥
अथ चैतानि चूर्णानि गवां मूत्रेण पाययेत्।
उदरीभूतमप्येवं प्लीहानं संप्रणाशयेत् ॥ १४८ ॥

इति विड़ङ्गादिचूर्णम्।

भल्लातकाऽभयाजाजी गुड़ेन सह मोदकः ।
समराविहन्त्याशु प्लीहानमतिदारुणम् ॥ १५० ॥

इति भल्लातको मोदक ।

अभयाफलत्रयाणां पलत्रयं त्रिकटुकात्पलमेकञ्च ।
दीप्यकचव्यकचित्रक विडङ्गहृचाम्लसिन्धुवचार्धपलैः ॥१५१॥
त्वक्पत्रै लार्कर्षै स्त्रिभि र्युक्तं सुचूर्णितं सूक्ष्मम् ।
त्रिगदूगुडपलसहिताः कर्त्तव्यास्तदक्षसंमितावटकाः ॥ १५२ ॥

अभयावटकानाम्ना प्लीहार्शो गुल्मजठरापहराः ।
पांड्वामयकामलिनां मन्दाग्नीनां सर्वदाशस्ताः ।

इत्यभयावटकाः ।

चित्रकं चिह्नता दन्ती त्रिफलापुष्करैः समैः ।
यावन्त्येतानि चूर्णानि तावन्मात्रन्तु सैन्धवम् ॥ १५४ ॥
भावयेत्तु स्नुहीक्षीरे तत्काण्डे प्रक्षिपेद्बुधः ।
मृत्तिकेनानुलिप्तस्य प्रक्षिपेज्जातवेदसि ॥ १५५ ॥
सुदग्धन्तु ततो ज्ञात्वा उद्धरेत्तु शनैर्भिषक् ।
यकृत्प्लीहोदरानाह गुल्मपांड्वामयादिहृत् ॥ १५६ ॥
सेविनोऽग्निबलं मत्वा अर्शोऽभ्यः प्रतिमोचयेत् ।
लवणोऽग्निमुखो नाम्ना वह्नेर्दीप्तिकरः परः ॥ १५७ ॥

इत्यग्निमुखलवणम् ।

पिप्पलिपिप्पलीमूल चव्यचित्रकसुनागराणाम् ।
ससैन्धवानापलिका भागाष्टतप्रस्थं तदेकध्यम् ॥ १५८ ॥
तुल्यक्षीरं विपचेत्सर्पिः स्यात् खलु षट्पलकं नाम्ना ।
प्लीहाग्निसादगुल्मोदावर्त्तश्वयथुपांडुगदान् ॥ १५९ ॥
श्वासकासंसपीनस मर्वाङ्गवातविषमज्वरानपहरति ॥१६०॥

इति षट्पलकं घृतम् ।

चिरबिल्वत्वचः क्वाथ मार्द्रकस्वरसं घृतम्।
मस्तुभल्लातकक्वाथं शुक्तञ्चैवाम्लकाञ्जिकम्॥ १६१॥
एतैस्तुल्यैर्घृतं घृत्वा कल्कैरेतैस्तु पादिकैः।
ग्रन्थिकव्योषहपुषा हिंग्वजाजीद्वयं तथा॥ १६२॥
चव्याजमोदे सक्षारे तथा लवणपञ्चकम्।
श्रेयसी चेति मृदुना तत्साध्यमनलेन वा॥ १६३॥
वह्निपटप्रस्थमेतत्तु जठरानलदीपनम्।
प्लीहोदराध्मानहरं वातोदरदकोदरम्॥ १६४॥
कफवातकृते चैव शूलेऽतीव प्रशस्यते।
अर्शांसि नाशयत्याशु कृमींश्चैव विशेषतः॥ १६५॥
सपांडुराणि कुष्टानि दद्रुकुष्टानि यानि च।
अन्यान्यपि च कुष्टानि तानि हन्यादिदं घृतम्॥ १६६॥

इति वह्निपटप्रस्थं घृतम्।

चित्रकस्य तुलाक्वाथे घृतप्रस्थं विपाचयेत्।
आरनालन्तु द्विगुणं दधिमण्डं चतुर्गुणम्॥ १६७॥
पञ्चकोलकतालीस चारैर्लवणसंयुतैः।
द्विजीरकनिशायुग्मं मरिचैस्त्वत्र दापयेत्॥ १६८॥
प्लीहगुल्मोदरोन्माद पांडुरोगारुचिज्वरान्।
वस्तिहृत्पार्श्वकट्यूरू शूलोदावर्त्तपीनसान्॥ १६९॥
हन्यात्पीतं तदर्शांस्र शोथघ्नं दीपनं परम्।
बलवर्णकरञ्चापि भस्मकञ्च नियच्छति॥ १७०॥

इति चित्रकघृतम्।

चित्रकस्य तुलाक्वाथे घृतप्रस्थं विपाचयेत्।
दध्यारनालद्विगुणं दधिमण्डं चतुर्गुणम्॥ १७१॥

पञ्चकोलकतालीशं द्वौ चारौ लवणानि च ।
यवानिके द्वे जरणे मरिचान्यत्र दापयेत् ॥ १७२ ॥
प्लीहाशोथोदरार्शोघ्नं विशेषाद्वह्निदीपनम् ।
बलवर्णकरं वापि भस्मकञ्च नियच्छति ॥ १७३ ॥

इति चित्रकाद्यं घृतम् ।

शिलाह्वयं नागरकाम्लशाकं काकादनीमूलनिदग्धिका च ।
पञ्चैव दद्याल्लवणानि हिंगु कृष्णा च तैरक्षसमैः पृथक् पृथक् ॥
प्रस्थं घृतं स्याच्च पचेच्छनैः शनैः चतुर्गुणं मूत्रमतः प्रदीयते ।
पयश्च दद्याद्विगुणं विपक्वं तद्ब्रह्मजुष्टं प्रवदन्ति सर्पिः ।
प्लीहोदरं दूष्यमथोदरञ्च आयम्यमानं जठरं निहन्ति ॥ १७५

इति ब्रह्मघृतम् ।

स्वर्जिका च यवक्षारः कासीसं टङ्कणं तथा ।
सौराष्ट्रं सैन्धवञ्चैव नवसारं स्फटिकानि च ॥ १७६ ॥
सर्वमेकत्र कर्त्तव्यं सूक्ष्मचूर्णन्तु कारयेत् ।
कूपमध्ये क्षिपेत्तन्तु द्रावयेद् द्रावयन्त्रके ॥ १७७ ॥
गुल्मं प्लीहान्तथानाहं सर्वोदरांस्तथैव च ।
अर्शांसि ग्रहणीदोषं भगन्दरव्रणानि च ॥ १७८ ॥
नाशयेन्नात्र संदेहो नान्यथा शंकरोऽब्रवीत् ।

इति शंखद्रावः ।

रोहीतकत्वचः श्रेष्ठाः पलानां पञ्चविंशतिः ।
कोलद्विप्रस्थसंयुक्तं कषायमुपकल्पयेत् ॥ १७९ ॥
पलिकैः पञ्चकोलैस्तु तत्तुल्यैश्चापि मात्रया ।
रोहीतकत्वचापिष्टैः घृतप्रस्थं विपाचयेत् ॥ १८० ॥
प्लीहाभिवृद्धिं शमयेदेतदाशु प्रयोजितम् ।

तथा गुल्मज्वरश्वास कृमिपांडुत्वकामला: ॥ १८१ ॥
अत्राष्टगुणे जले निष्क्वाथ्यचतुर्भागावशेषः कर्त्तव्यः।

इति रोहीतकघृतम्।

रोहीतकात्पलशतं संक्वाथ्यवदिराढ़काम्।
साधयित्वा जलद्रोणे चतुर्भागावशेषिते ॥ १८२ ॥
घृतप्रस्थं समावाप्य छागक्षीरं चतुर्गुणम्।
तस्मिन्द्रव्याणि सर्वाणि प्रदद्यात्कार्षिकाणि च ॥ १८३ ॥
व्योषं फलत्रिकं हिङ्गु यवानी तुम्बुरु विड़म्।
अजाजीकृष्णलवणं दाड़िमं देवदारु च ॥ १८४ ॥
पुनर्नवाविशाला च यवक्षारं सपौष्करम्।
विड़ङ्गं चित्रकञ्चैव हपुषाकारवी तथा ॥ १८५ ॥
एतैर्घृतं विपक्वन्तु विदध्याद्भाजने नवे।
पाययेत्त्रिपलां मात्रां व्याधिर्बलमवेक्ष्य च। १८६ ॥
रसकेनाथ यूषेण पयसा वा घृतं पिवेत्।
प्रयुक्तान्तु घृत तेषां व्याधीन् हन्यादिमान्बहून् ॥ १८७ ॥
यकृत्प्लीहोदरञ्चैव प्लीहशूलं तथैव च।
हृच्छूलं कुक्षिशूलञ्च पार्श्वशूलमरोचकम् ॥ १८८ ॥
विबन्धशूलं शमयेत् पांडुरोगं सकामलम्।
छर्द्यतीसारशूलघ्नं तन्द्राज्वरनिवारणम् ॥ १८९ ॥
रोहीतकघृतं ह्येतत् प्लीह्नानां दृष्टमौषधम् ॥ १९० ॥

इति महारोहितकं घृतम्।

कदलीतिलनालानां क्षारेण क्षुरकस्य च।
पीतं तैलं जयेन्नॄणां प्लीहानं कफवातजम् ॥ १९१ ॥

इति कदलीक्षारतैलम्।

माणसुराऽमृतावासा स्थिराचित्रकसैन्धवम् ।
नागरं तालमूलञ्च प्रत्येकन्तु त्रिकार्षिकम् ॥ १८२ ॥
विड् सौवर्चलं चारी पिप्पल्यश्चापि कार्षिकाः ।
एतच्चूर्णीकृतं सर्वं गोमूत्रस्याढ़कं पचेत् ॥ १८३ ॥
सान्द्रीभूते गुटीं कुर्य्या द्द्वा त्रिपलमात्रिकम् ।
यकृत्प्लीहोदरहरो गुल्मार्शो ग्रहणीहरः ॥ १८४ ॥
योगः परिकरो नाम्ना वह्निसन्दीपनः परः ।

इति माणादिगुटिका ।

चित्रकस्य शतं दद्या त्तत्तुल्यं ग्रन्थिकस्य च ।
पञ्चाशद्दन्तमूलस्य शेषान् पञ्च पलान् पृथक् ॥ १८५ ॥
बलाभार्गीशठीपाठा पौष्करं मूलमेव च ।
चतुर्द्रोणेऽम्भसः पक्त्वा पादशेषावतारिते ॥ १८६ ॥
पचेद्गुड़शतं दत्वा तैलवत् साधुसाधयेत् ।
चतुष्पलन्तु पिप्पल्या स्तुगाचीर्य्याश्चतुष्पलम् ॥ १८७ ॥
त्रिजातकपलञ्चैकं मरिचस्य पलं तथा ।
सूक्ष्मचूर्णं ततः कृत्वा दत्वा सम्यग्विघट्टयेत् ॥ १८८ ॥
पलमात्रं ततः खादेत् प्लीहगुल्मोदराणि च ।
हन्ति यक्ष्माणमत्युग्रं पित्तार्त्तिं चाम्लपित्तिनाम् ॥ १८९ ॥
भारद्वाजेन कथितो लेहश्चित्रकसंज्ञकः ॥ २०० ॥

इति चित्रकलेहः ।

चपलायाः पलं पञ्चपयसां तावदेव तु ।
मासुद्गचणानाञ्च तावन्मात्रं प्रदापयेत् ॥ २०१ ॥
वेणुमाचोटकश्चैव गिरयश्चाङ्गांस्तथैव च ।
गिरोयो लोध्रश्चय विम्रागामाणकन्दकम् ॥ २०२ ॥

सुधा च सुरपुष्पञ्च शम्याकदलसञ्चयम् ।
वरुणं शिग्रुमूलञ्च वाथ्यालं चित्रकं तथा ॥ २०३ ॥
एषां पञ्चपलान् भागान् पलांशान् पञ्चविंशतिम् ।
क्षारं दत्वा तु सर्वेषां पचेत्तत्र जलाढके ॥ २०४ ॥
गोमूत्रं तावदेवात्र साधयेच्च यथा विधिः ।
भक्षयेद् घृतसंयुक्तां यकृत् प्लीहहरां पराम् ॥ २०५ ॥
वातमष्ठीलकाञ्चैव गुल्मं हन्ति त्रिदोषजम् ॥

इति क्षारपिप्पली ।

प्रशस्तेऽहनि नक्षत्रे वृक्षकं लोध्रचित्रकम् ।
वरुण शिग्रुमूलञ्च वाथ्यालं चाथ पुष्करम् ॥ २०६ ॥
कन्दोविशाखापुष्पी च तथा ब्राह्मणयष्टिका ।
पृथक् पञ्चपलान्येषां पलांशात् पञ्चविंशतिः ॥ २०७ ॥
क्षारं कृत्वा पचेद्वारि गोमूत्राढकयोस्तथा ।
सर्वं विपाच्य सक्षारा समुस्ताऽनलपिप्पली ॥ २०८ ॥
पृथक् पञ्चपलैर्भागैः पिप्पलीघृतमर्द्दिता ।
यकृत् प्लीहहरा श्रेष्ठा वाताष्ठीलामगुल्मनुत् ॥ २०९ ॥

इति वृहत् क्षारपिप्पली ।

पारिभद्रपलाशार्कं स्नुह्यपामार्गचित्रकाः ।
वरुणोऽग्निमन्थं वसुकं श्वदंष्ट्राबृहतीद्वयम् ॥ २१० ॥
पूतीकास्फोतकुटज कोशातक्यः पुनर्नवा ।
समूलपत्रशाखाया. चोदयित्वा उलूखले ॥ २११ ॥
तिलनालप्रदीप्ताग्नि सुदग्धं भस्मशीतलम् ।
क्षारप्रस्थं गृहित्वा तु न्यसेत्पात्रे दृढे नवे ॥ २१२ ॥
जलद्रोणे विपक्तव्यं यावत्पादावशेषितम् ।
पूर्ववत् क्षारकल्केन साधयेच्च विचक्षणः ॥ २१३ ॥

प्रस्थमेकञ्च लवणं तदर्द्धाञ्च हरीतकीम् ।
तुल्याम्बुभागगोमूत्रं साधयेन्मृदुनाग्निना ॥ २१४ ॥
किञ्चित्सवाष्पे चार्धे च सम्यक् सिद्धेऽवतारिते ।
अजाजीत्र्यूषणं द्विगुयवानी पुष्करं शठी ॥ २१५ ॥
एतैश्चार्धपलिकैश्चूर्णं कृत्वा प्रदापयेत् ।
लवणञ्चाभयानाम भक्षयेच्च यथा बलम् ॥ २१६ ॥
व्याधिञ्चावेक्ष्यमतिमाननुपान यथा हितम् ।
ये च कोष्टगता रोगास्तान्निहन्ति न संशयः ॥ २१७ ॥
यकृत् प्लीहोदरानाह गुल्मष्ठीलाऽग्निसादनुत् ।
प्रतितून्यर्तिहृद्रोग शर्कराश्मरिनाशनम् ॥ २१८ ॥

इत्यभयालवणम् । इति प्लीहोदरम् ।

—०—

## अथ निदानमाह ।

मन्दज्वराग्निः कफपित्तलिङ्गै रुपद्रुतः क्षीणबलोतिपांडुः ।
सव्यान्यपार्श्वे यकृति प्रदुष्टे ज्ञेयं यकृदाल्युदरं तथैव ॥ २१९ ॥
उदावर्त्तरुजानाहै र्मोहतृट्दहनज्वरैः ।
गौरवारुचिकाठिन्यै र्विद्यात्तत्र मलान् क्रमात् ॥ २२० ॥

—०—

## अथ चिकित्सामाह ।

प्लीहोद्दिष्टाः क्रियाः सर्वा यकृतः संप्रकल्पयेत् ।
कार्य्यञ्च दक्षिणे बाहौ तत्र शोणितमोक्षणम् ॥ २२१ ॥
पिप्पलीचित्रिकान् मूलं पिष्ट्वा सर्पिर्विपाचयेत् ।
घृतं चतुर्गुणं क्षीरं यकृत् प्लीहोदरापहम् ॥ २२२ ॥

इति चित्रकघृतम्।

पिप्पलीकल्कसंयुक्तं घृतं क्षीरं चतुर्गुणम्।
पिबेत् प्लीहाग्निसादाग्नि यकृद्रोगहरं परम्॥ २२३॥
इति पिप्पलीघृतम्। इति यकृदाल्युदरम्।

—o—

## अथ निदानमाह।

यस्यान्त्रमन्नैरुपलेपिभिर्वा बालाश्मभिर्वापिहितं यथावत्।
सञ्चीयते यस्य मलः सदोषः शनैः शनैः शर्करवच्च नाड्याम्॥२२४॥
निरुद्धते तस्य गुदे पुरीषं निरेति कृच्छ्रादपि चाल्पमल्पम्।
हृन्नाभिमध्ये परिवृद्धिमेति तस्योदरं बद्धगुदं वदन्ति॥ २२५॥
शल्यं तथान्नोपहितं यदन्त्रं भुक्तं भिनत्त्यागतमन्यथा वा।
तस्मात्स्रुतान्त्रात्सलिलप्रकाशः स्रावः स्रवेद्वै गुदजस्तु भूयः॥२२६
नाभेरधश्चोदरमेति वृद्धिं निस्तुद्यते दाल्यति चातिमात्रम्।
एतत्परिस्राव्युदरं प्रदिष्टन्दकोदरं कीर्त्तयतो निबोध॥ २२७॥
यः स्नेहपीतोऽप्यनुवासितो वा वांतो विरिक्तोऽप्यथवा निरूढ़ः।
पिबेज्जलं शीतलमाशु तस्य स्रोतांसि दुष्यन्ति हि तद्वहानि॥२२८
स्नेहोपलिप्तेष्वथवापि तेषु दकोदरं पूर्ववदभ्युपैति।
स्निग्धं महत्तत्परिवृत्तनाभिसमाततं पूर्णमिवांबुना वा॥२२९॥
यथादृतिः क्षुभ्यति कम्पते च शब्दायते चापि दकोदरं तत्॥२३०॥

—o—

## अथ चिकित्सामाह।

स्विन्ने बद्धोदरे योज्यो मूत्रैस्तीक्ष्णौषधान्वितैः।
सतैललवणयाश्च निरूहश्चानुवासनम्॥ २३१॥
क्षारं वनकरीषाणां स्विन्नं वस्त्रेण गालयेत्।
कार्षिकं पिप्पलीमूलं पञ्चैव लवणानि च॥ २३२॥

पिप्पलीचित्रकं शुण्ठी त्रिवृतात्रिफलावचा।
द्वौ चारौ सातलादन्तो स्वर्णक्षीरीविषाणिका ॥ २३३ ॥
कोलप्रमाणां वटिकां पिबेत्क्षीरसंयुताम्।
क्षययावश्च वक्षस्य प्रवृद्धे च दकोदरे ॥ २३४ ॥

इति चारगुटिका।

छिद्रान्त्रबद्धसंज्ञेषु जठरेषु प्रयोगवित्।
लब्धानुज्ञो भिषक् कुर्यात् पाटनं व्यधनक्रियाम् ॥ २३५ ॥
तथा जातोदकं सर्वं मुदरं व्यधयेद्भिषक्।
ज्ञातींश्च सुहृदो दारान् ब्राह्मणान् नृपतिं गुरुम् ॥ २३६ ॥
अनुज्ञाप्यभिषक्कर्म विदध्यात् संशयावहम्।
सुवेष्टितमधो नाभे र्वामतश्चतुरंगुलात् ॥ २३७ ॥
अंगुल्योदरमात्रन्तु व्रीहिवक्त्रेण भेदयेत्।
नाडीमुभयतो द्वारां संयोज्यापहरेज्जलम् ॥ २३८ ॥
नचैकस्मिन्दिने सर्वं दोषन्त्वपहरेत्तथा।
कासश्वासज्वरास्तृष्णा गात्रभङ्गश्च वेपथुः ॥ २३९ ॥
अतिसारश्च सुतरां पूर्यते जठरं तथा।
तृतीयपञ्चमाद्येषु दिवसेष्वल्पशः पुनः ॥ १४० ॥
स्रावयेदुदकं तैल लवणाभ्यां दृढं व्रणम्।
बध्नीयाद्विसुते दोषे जठरं परिगृह्य वा ॥ २४१ ॥
संवेष्टयेद्गाढतरं कौशेयाऽऽविकचर्मभिः।
निःसुते लङ्घितः पेया मस्ने ह्लवणां पिबेत् ॥ २४२ ॥
ततःपरन्तु षण्मासान् क्षीरवृत्तिर्भवेन्नरः।
त्रीन्मासान् पयसा पेयां पिबेत्त्रीयापि भोजयेत् ॥ २४३ ॥
सकोरदूषं श्यामाकं पयसा लवणं लघु।

नरः सम्बत्सरेणैव जयेत्प्राप्तजलोदरम्।

इतिबद्धचतदकोदरम्।

स्नुह्यर्कदन्तीधववह्निफल्गो गोफारिपांशी सलकाच्च कन्दः।
माणत्रियामाग्निकवाणरक्ताताल तथा मञ्जरिपारभद्रौ ॥२४४॥
प्रत्येकशः चारचतुःपलांशं तथा पलांशस्य समैः समः स्यात्।
चतुर्गुणे क्वाथजलाष्टशेषे पचेद्विधिज्ञो विधिशुद्धलोहम् ॥ २४५ ॥
चूर्णीकृत तत्पुटित पुटेन तन्तुष्पु तं षोडषिकं पलानाम्।
वर्षाभुभल्लातकवह्निदन्तीचित्रद्रवन्तीरविप्तद्रमूलम् ॥ २४६ ॥

कञ्चुकीतालमूली च पीवरीगिरिकर्णिका।
नीलिनीवृहतीपत्र शम्याक विजयासमम् ॥ २४७ ॥
चतुष्पलांशं क्वथिताष्टशेषं स्नुह्यर्कदुग्धेन पलाष्टकेन।
दत्वा पचेत्ताम्रमये सुपात्रे पलैर्द्विरष्टैर्हविषस्तथैव ॥ २४८ ॥

अमूनि चूर्णानि च सिद्धशीते क्षिपेत्तथा लोहरजः समानि ॥२४९॥

मिलितानीति सम्बन्धः।
लवणानि च सर्वाणि चारः पञ्चोषणस्तथा।
मरिच चाजमोदा च हिंगुभल्लातकानि च ॥ २५० ॥
चित्रकं तालमूलञ्च गवाक्षीत्रिवृताम्रता।
वर्षाभूः सूरणो मानो विडङ्ग दन्तीग्रन्थिकम् ॥ २५१ ॥
पल माक्षिकचूर्णस्य कंकुष्टकशिलाजतोः।
गुग्गुलोर्गन्धकस्यापि पारदस्य पल पृथक् ॥ २५२ ॥
शीते पलाष्टकं चौद्र दत्वा मधुघृतान्वितम्।
लोहदण्डेन सघृष्य लोहपात्रे चिरं भिषक् ॥ २५३ ॥
विधिज्ञोक्तेन विधिना हिताहारविहारवान्।
अन्नपानं यथा सात्म्य कुर्वन्नित्य निरामयः ॥ २५४ ॥
उदरेषु च सर्वेषु शोथेषु विविधेषु च।

अर्शःसु च विशेषेण पांडुरोगे सकामले ॥ २५५ ॥
विधिनोक्तेन कुर्वाणो नरोरोगान्न विन्दति ।

इत्युदरारिलोहम् ।

—०—

## अथ निदानम् ।

जन्मनैवोदरं सर्वं प्रायः कृच्छ्रतमं स्मृतम् ।
बलिनस्तदजाताम्बु यत्नात्साध्यं नवोत्थितम् ॥ २५६ ॥
पचादद्गुदं तूर्ध्वं सर्वजातोदकं तथा ।
प्रायो भवत्यभावाय छिद्रान्त्रं चोदरं नृणाम् ॥ २५७ ॥
शूनाचं कुटलोपस्थ सुपक्लिन्न तनुत्वचम् ।
बलशोणितमांसाग्नि परिचीणन्तु वर्जयेत् ॥ २५८ ॥
पार्श्वभङ्गान्न विद्वेष शोथातिसारपीडितम् ।
विरक्तं चाप्युदरिणं पूर्यमाणं विवर्जयेत् ॥ २५८ ॥

—०—

## अथ चिकित्सामाह ।

हरीतकीनागरदेवदारु पुनर्नवाच्छिन्नरुहाकषायः ।
सगुग्गुलुर्मूत्रयुतः सपेयः शोफोदराणां प्रवरः प्रयोगः ॥ २६० ॥
पुनर्नवानिम्बपटोलशुण्ठी तिक्तामृतादार्व्यभयाकषायः ।
सर्वाङ्गशोथोदरकासशूल श्वासान्वितं पांडुगदं निहन्ति ॥२६१॥
पुनर्नवां दार्व्यभयां गुडूचीं पिबेत्समूत्रां महिषाख्ययुक्ताम् ।
त्वग्दोषशोफोदरपांडुरोगस्थौल्यप्रसेकोर्ध्वकफामयेषु ॥२६२॥
पुराणशाकणोवह्नि तूषणं लवणानि च ।
चविकाचिरविल्वञ्च भस्म चैषां सुसंस्कृतम् ॥ २६३ ॥
गव्येन मस्तुना साध्यं भोजयेत भिषग्वरः ।

श्वयथूदरगुल्मेषु वस्तिसादे च दुस्तरे ॥ २६४ ॥
पुराणं मानकं पिष्ट्वा द्विगुणीकृततंडुलम् ।
साधितं तोयक्षीराभ्यां मभ्यासे पायसन्तु तम् ॥ २६५ ॥
हन्ति वातोदरं शोथं ग्रहणीपांडुतामपि ॥ २६६ ॥
नवघृतमार्द्रककल्कस्वरसाभ्यां परिसाधितं च विधिना ।
श्वयथूदराग्निसादैरभिभूतः पिबेद्भवत्यरोगः ॥ २६७ ॥

इत्यार्द्रकघृतम् ।

विल्वाग्निचव्यार्द्रकशृङ्गवेरक्वाथेन कल्केन च सिद्धमाज्यम् ।
सच्छागदुग्धं ग्रहणीगदोत्थे शोथाग्निमादारुचिषु प्रदिष्टम् ॥ २६८॥

इति विल्वादिघृतम् ।

## इति वङ्गसेन उदरनिदानचिकित्साधिकारः समाप्तः ॥ ४० ॥

—०—

## अथ शोथनिदानमाह ।

रक्तपित्तकफान् वायुर्दुष्टो दुष्टा बहिःशिराः ।
नित्वारुद्धगतिस्तैर्हि कुर्य्यात्त्वङ्मांससंश्रयम् ॥
उत्सेधं संहन्तं शोथं तमाहुर्निचयात्मकम् ॥ १ ॥
सर्वं हेतुविशेषैस्तु रूपभेदान्नवात्मकम् ।
दोषैः पृथग्द्वयैः सर्वै रभिघाताद्विषादपि ॥ २ ॥
तत्पूर्वरूपं दवथुः शिरायामोङ्गगौरवम् ॥ ३ ॥
शुद्ध्यामयाऽभक्तकृशाबलानां चाराम्लतीक्ष्णोष्णगुरूपसेवा ।
दध्यामसृच्छाकविरोधिदुष्टगरोपसृष्टान्ननिषेवणञ्च ॥ ४ ॥
अर्शांस्यचेष्टा नच देहशुद्धिर्मर्मोपघातो विषमाप्रसूतिः ।
मिथ्योपचारः प्रतिकर्मणाञ्च निजस्य हेतुः श्वयथोः प्रदिष्ट

सगौरवं स्यादनवस्थितत्वं सोत्सेधमूष्माथ शिरातनुत्वम् ।
सलोमहर्षश्च विवर्णता च सामान्यलिङ्गं श्वयथोः प्रदिष्टम् ॥
चलस्तनुत्वक् परुषोऽरुणोऽसितः
सुसुप्तिहर्षार्त्तियुतो निमित्ततः ।
प्रशाम्यतिप्रोन्नमति प्रपीड़ितो
दिवाबली च श्वयथुः समीरणात् ॥ ७ ॥
मृदुः सगन्धोऽसितपीतरागवान्
भ्रमज्वरस्वेदतृषामदान्वितः ।
य उष्यते स्पर्शरुगक्षिरागकृत्
सपित्तशोथो भृशदाहपाकवान् ॥ ८ ॥
गुरुस्थिरः पांडुररोचकान्वितप्रसेकनिद्रावमिवह्निमान्द्यकृत् ।
सकृच्छ्रजन्मप्रशमो निपीड़ितो नचोऽन्नमेद्रात्रिबलीकफात्मकः ॥
द्विदानाकृतिसंसर्गा च्छ्वयथुः स्याद्विदोषजः ।
सर्वाकृतिः सन्निपाताच्छोथो व्यामिश्रलक्षणः ॥ १० ॥
अभिघातेन शस्त्रादि छेदभेदक्षतादिभिः ।
हिमानिलो दध्यनिलै र्भल्लातकपिकच्छुजैः ॥ ११ ॥
रसैः शूकैश्च संस्पर्शाच्छ्वयथुः स्याद्विसर्पवान् ।
भृशोष्मालोहिताभासः प्रायशः पित्तलक्षणः ॥ १२ ॥
विषजः सविषप्राणि परिसर्पणमूत्रणात् ।
दंष्ट्रादन्तनखाघाता दविषप्राणिनामपि ॥ १३ ॥
विषमूत्रशुक्रोपहतमलवद्वस्त्रसंकरात् ।
विषवृक्षाऽनिलस्पर्शा द्गरयोगावचूर्णनात् ॥ १४ ॥
मृदुश्चलोऽवलम्बी च शीघ्रदाहरुजाकरः ॥ १५ ॥
दोषाः श्वयथुमूर्ध्वं हि कुर्वन्त्यामाशयस्थिताः ।
पक्वाशयस्था मध्ये तु वर्चस्थानगतास्त्वधः ।

कृत्स्नं देहमनुप्राप्ताः कुर्युः सर्वसरं तथा ॥ १६ ॥
यो मध्यदेशे श्वयथुः सकष्टः सर्वगश्च यः।
अधोऽङ्गेऽरिष्टभूतः स्या द्यश्चोर्द्ध्वं परिसर्पति ॥ १७ ॥
श्वासः पिपासाच्छर्दिश्च दौर्बल्यं ज्वर एव च।
यस्य चान्नेऽरुचिर्नास्ति श्वयथुं तं विवर्जयेत् ॥ १८ ॥
अनन्योपद्रवकृतः शोथः पादसमुत्थितः।
पुरुषं हन्ति नारीञ्च मुखजो गुदजो द्वयम् ॥ १९ ॥
ऊर्ध्वगामीनरं पद्भ्या मधोगामीमुखात् स्त्रियम्।
उभय वस्तिसंजातः शोथो हन्ति न संशयः ॥ २० ॥
नवोऽनुपद्रवः शोथः साध्योऽसाध्यः पुरेरितः ॥ २१ ॥
क्षुन्नाशो हृदयाऽग्निः स्तन्द्राजठरगौरवैः।
दोषप्रवृत्तिर्नो यत्र व्याधिमामान्वितं वदेत् ॥ २२ ॥

—०—

## अथ चिकित्सामाह।

उक्तञ्च तन्त्रान्तरे।—
पुराणयवशाल्यन्नं दशमूलाम्बुसाधितम्।
अल्पमल्पं पटुस्नेहं भोजनं श्वयथौ हितम् ॥ २३ ॥
महाह माक्षिपं मूत्रं पयसाऽन्नाम्बुवर्जितम्।
पीत्वा चौष्ट्रमजामूत्रं श्वयथूदरनाशनम् ॥ २४ ॥
शिशुत्वङ्क्षमालार्क दार्व्यारग्वधमूलकैः।
गोमूत्रपिष्टैः श्वयथुः प्रलिप्तव्यः कफात्मकः ॥ २५ ॥
स्वोक्तिश्चाह।
निदानदोषैस्तु विपर्ययक्रमै रुपाचरेत्तु बलकालदोषवित्।
यथाऽऽमजं लङ्घनपाचनक्रमै र्विशोधनैरुल्वणदोषमादितः ॥२६॥

शिरोगते शीर्षविरेचनैश्च
संशोधनैः शोध्यमधस्तथोर्ध्वम् ।
उपाचरेत् स्नेहभव हि रूक्षणैः
प्रकल्पयेत् स्नेहगणै तु रूक्षजम् ॥ २७ ॥
विवद्वविट्केऽनिलजे निरूहण घृत तु पित्तानिलजे सतिक्तकम् ।
पयश्च मूर्च्छावतिदाहतर्षिते विशोधनीये तु समूत्रमिष्यते ।
कफोत्थित चारकटूष्णसयुतैः समूत्रदुग्धासवयुक्तिभिर्हरेत् ॥२८॥
शोथे वातोत्थिते पूर्वं मासार्द्धं त्रिवृतं पिबेत् ।
तैलमैरण्डज वापि मलबन्धे तदेव तु ॥ २९ ॥
शाल्यन्नं पयसायुक्तं रसैर्वापि प्रयोजयेत् ।
स्वेदाभ्यङ्गांश्च वातघ्नान् सेकलेपांश्च कल्पितान् ॥ ३० ॥
शुण्ठीपुनर्नवैरण्ड पञ्चमूलशृत जलम् ।
वातके श्वयथौ शस्तं पानाहारपरिग्रहे ॥ ३१ ॥
न्यग्रोधादिगणे सिद्ध सर्पिः स्यात्पित्तशोथिने ।
तृष्णोहदाहपाद्स्थे हिमलेपादिवाचरेत् ॥ ३२ ॥
चीराशनः पित्तकृते तु शोथे पिबेद्गुडूचीत्रिफलाकषायम् ।
पिबेद्वया मूत्रविमिश्रितं वा फलत्रिकाचूर्णमथाघमात्रम् ॥ ३३ ॥
पटोलत्रिफलारिष्ट दार्वीक्काथ. सगुग्गुलुः ।
हन्ति पित्तकृतं शोथ तृष्णाज्वरसमन्वितम् ॥ ३४ ॥
कफोद्भवे पिबेत्तैलं सिद्धमारग्वधादिना ।
मन्दाग्नौ स्तिमिते कोष्टे स्रोतोरोधे रुजावति ॥ ३५ ॥
क्षारमूत्रासवारिष्ट चूर्णतक्राणि योजयेत् ॥ ३६ ॥
कफे तु कृष्णासिकतापुराण पिण्याकशिग्रुत्वगुमाप्रलेपः ।
कुलित्थशुण्ठिजलमूत्रसेक चण्डागुरुभ्यामनुलेपनञ्च ॥ ३७ ॥
यद्दानुरूपः स्वरसः सर्षपतैलेन मिश्रितः पीतः ।

पङ्कजपत्रसमुत्थः शोथानां नाशनः परमः ॥ ३८ ॥
पुनर्नवाविश्वचित्रदुगुडूची शम्याकपथ्यासुदारुकल्कम्।
शोथे कफोत्थेऽन्नसमं समूत्रं क्वाथं पिबेद्वाप्यथ चैव तेषाम् ॥३८॥
व्योषं त्रिवृत्तिक्तकरोहिणी च सायोरजः सत्रिफलारसेन।
पीताः कफोत्थं शमयन्ति शोथं गव्येन मूत्रेण हरीतकी वा ॥४०॥
विडङ्गातिविषादारु नागरेन्द्रयवावचा।
उष्णांबुना पिबेच्छोथी ह्यक्षमात्रं सदोषणम् ॥ ४१ ॥
स्नुग्क्षारभाविताः कृष्णाः पथ्यामूत्रेण वा युताः।
योजिताः शमयन्त्याशु शोथं श्लेष्मभवं नृणाम् ॥ ४२ ॥

—०—

पुनर्नवाऽमृतादारु दशमूलरसाढ़के।
आर्द्रकस्वरसे प्रस्थे गुड़स्य च तुलां पचेत् ॥ ४३ ॥
तत्सिद्धं व्योषचव्येला त्वक्पत्रैः कार्षिकैः पृथक्।
चूर्णीकृतैर्लिहेच्छीते मधुनः कुड़वं क्षिपेत् ॥ ४४ ॥
लेहः पौनर्नवो नाम्ना श्लेष्मशोथनिसूदनः।
श्वासकासारुचिहरो बलपुष्ट्यग्निवर्द्धनः ॥ ४५ ॥

इति पुनर्नवादिलेहः।

मिश्रे मिश्रक्रमं कुर्य्यात् सर्वजे सर्वमेव तु ॥ ४६ ॥
पिप्पल्यजाजीगजपिप्पली च
निदग्धिका नागरचित्रके च।
रजन्यथो पिप्पलीमूलपाठा
मुस्तञ्च चूर्णं सुखतोयपीतम् ॥ ४७ ॥
हन्यात्त्रिदोषं चिरजञ्च शोथं
कल्कोऽथ भूनिम्बमहौषधाभ्याम्।

रसस्तथैवाऽऽर्द्रकनागरस्य
पयोऽथ जीर्णे पयसाऽन्नमद्यात् ॥ ४८ ॥
शिलाह्वयञ्च त्रिफलारसेन हन्यान्त्रिदोषं श्वयथुं प्रसह्य ।
तक्रं पिबेद्वा गुरुभिन्नवर्चाः सव्योषसौवर्चलमाक्षिकञ्च ।
विड्बातसङ्गे पयसा रसैर्वा प्रागुष्णमद्यादुरुचूकतैलम् ॥ ४९ ॥
बिल्वपत्ररसं पूतं शोषणं श्वयथौ त्रिजे ।
विड्भङ्गे चैव दुर्नाम्नि विदध्यात् कामलासु च ॥ ५० ॥
शोथे वाऽऽगन्तुजे कुर्यात् सेकलेपादिशीतलम् ॥ ५१ ॥
भल्लातक्याजयेच्छोथं सतिलाकृष्णमृत्तिका ।
माहिषो नवनीतं वा लेपाद्दुग्धं तिलान्वितम् ॥ ५२ ॥
यष्टीदुग्धतिलैर्लेपो नवनीतेन संयुतः ।
शोथमारुष्करं हन्ति चूर्णं सालदलस्य च ॥ ५३ ॥
महिषीक्षीरसपिष्टैर्नवनीतसमन्वितैः ।
भल्लातकक्षतः शोथ स्तिलनिसश्च शाम्यति ॥ ५४ ॥
संरुचकमलेपस्तु तिलह्रचोद्भवान्मृदा ।
भल्लातकोत्थं श्वयथुं हन्ति सर्वरुजां ध्रुवम् ॥ ५५ ॥

—०—

विषनिमित्तोत्थेषु शोथेषु विषोक्तः प्रतीकारः कर्त्तव्यः ।

—०—

पथ्यामृताभार्गिपुनर्नवाग्नि दार्वीनिशादारुमहौषधानाम् ।
क्वाथः प्रसह्योदरपाणिपादवक्त्रस्थितं हन्त्यचिरेण शोथम् ॥५६
पुनर्नवामूलकबिल्वदारुच्छिन्नोद्भवाचित्रकमूलमिश्राः ।
रसाश्चयान्यश्च पयांसि यूषाः शोथे भवेयादग्रमूलगर्भाः ॥५७॥
द्वयोश्च देवद्रुमनागरैर्वा दन्तीविशालूषणचित्रकैश्च ।
पयः सुसिद्धं विधिना निपीतं शीतं परं शोथहरं भिषग्भिः ॥५८

क्षीरं शोथहरं दारु वर्षाभूनागरैः शृतम्।
पेयं वा चित्रकव्योष त्रिहृद्दारुप्रसाधितम्॥ ५९॥
विल्वमूलं त्रिकटुकं श्यामाचित्रकमेव च।
क्षीरमेतैः शृतं पेयं श्वयथोः विनिवारणम्॥ ६०॥
यूषो मूलकशुण्ठीनां शाकं वह्निपुनर्नवा।
माणकन्दकृता हन्ति यवागूः शोथमुद्धतम्॥ ६१॥
सेकस्तथार्कवर्षाभू निम्बक्काथेन शोफजित्।
गोमूत्रेणापि कुर्वीत सुखोष्णेनावसेचनम्॥ ६२॥
एरुवूककरञ्जार्क वर्षाभूनिम्बकैः शृतम्।
कोष्णं सेकं प्रशंसन्ति शोफे सर्वाङ्गगे नृणाम्॥ ६३॥
पुनर्नवादारुशुण्ठी सिद्धार्थशिग्रुमेव च।
पिष्ट्वा चैवारनालेन प्रलेपः सर्वशोथनुत्॥ ६४॥
विभीतकानां फलमध्यलेपः सर्वेषु दाहार्त्तिहरः प्रदिष्टः।
यस्याह्नसुस्तैः सकपित्थपत्रैः सचन्दनैस्तत्पिडिकासुलेपः॥६५॥
रास्नाहृपाकौ त्रिफलाविड़ङ्ग शिग्रुत्वचो मूषिककर्णिका च।
निम्बार्कजो व्याघ्रनखः समूर्वा सुवर्चिकातिक्तकरोहिणी च॥६६॥
सकाकमाचीवृहती सकृष्णापुनर्नवानागरचित्रकैश्च।
उद्वर्त्तनं शोथिषु मूत्रपिष्टं शस्तं तथा गोसलिलेन सेकः॥६७॥
चूर्णणायो रजः क्षारः शोथनुत्त्रिफलारजः।
कटुकायो रजो व्योष त्रिहृद्भिर्वा समन्वितम्॥ ६८॥
पुरो मूत्रेण सेव्यश्च पिप्पली वा पयोन्विता।
गुड़ेन वाऽभयातुल्या विश्वा वा शोथरोगिभिः॥ ६९॥

—०—

दारुगुग्गुलुशुण्ठीनां कल्को मूत्रेण शोथजित्।
वर्षाभूशृङ्गवेराभ्यां कल्को वा सर्वशोथजित्॥ ७०॥

गोमूत्रस्य प्रयोगो वा शोथं श्वयथुनाशनः ।
कल्को वा गिरिकर्ण्याश्च पीतः शोथविनाशनः ॥ ७१ ॥
पिबेदुष्णांबुना दारु पथ्याशुण्ठीपुनर्नवाः ।
विड्ङ्गातिविषावासा विश्वदारुकणान्विताः ॥ ७२ ॥

इति दार्वादिचूर्णम् ।

विड्ङ्गदन्तीकटुका त्रिवृच्चित्रकदारुणाः ।
व्योषेभकणात्रिफलाः समादेया ह्ययोरजः ।
द्विगुणन्तु पिबेच्चूर्णं पयसा शोथशान्तये ॥ ७३ ॥

इति विड्ङ्गादिलोहम् ।

सितपुनर्नवामूलं पीतञ्च गोसलिलेन निहन्ति ।
शोथं सर्वसमुत्थं सुदराणि च दुस्तराण्यऽचिरात् ॥ ७४ ॥
पुराणं मानकं पिष्ट्वा द्विगुणीकृततंडुलम् ।
साधितं चीरतोयाभ्यां सम्यसेत्पायसन्तु तत् ॥ ७५ ॥
इति वातोदरं शोथं ग्रहणीं पांडुतामपि ।
सिद्धो भिषग्भिराख्यातः प्रयोगोऽयं निरत्ययः ॥ ७६ ॥

इति मानमण्डः ।

ससाध्यं वज्रकन्देन पायसं योतिमामयः ।
युक्तं कोशाम्रतैलेन तेनाभ्यङ्गं प्रकुर्वतः ।
शोथः प्रयान्तिमायाति बहुदुष्टं निरन्तरम् ॥ ७७ ॥
आर्द्रकं सगुडं खादेत् प्रकुञ्चार्द्धविवर्द्धितम् ।
यावत्पञ्चपलं सुद्ध यूषचीररमाशिनः ॥ ७८ ॥
श्वयथुं गुल्ममुदरं कासं श्वासमरोचकम् ।
पीनसं पांडुनाम हृद्रोगञ्च विनाशयेत् ॥ ७९ ॥
गुडार्द्रकं वा गुडनागरं वा गुडाभयां वा गुडपिप्पलीं वा ।
कर्षाभिवृद्ध्या त्रिपलप्रमाणं खादेन्नरः पक्षमथापि मासम् ॥८०॥

शोथप्रतिश्यायगलास्यरोगान्
सश्वासकासारुचिपीनसादीन् ।
जीर्णज्वरार्शो ग्रहणीविकारान्
हन्यात्तथान्यान् कफवातरोगान् ॥ ८१ ॥

आर्द्रकस्य रसः पीतः पुराणगुडमिश्रितः ।
अजाक्षीराशिनां शीघ्रं सर्वशोथहरो भवेत् ॥ ८२ ॥
भूनिम्बविश्वकल्कं भुक्त्वा पेयः पुनर्नवाक्काथः ।
अपहरतिनियतमाशु श्वयथुं सर्वाङ्गजं नृणाम् ॥ ८३ ॥
विश्वं गुड़ेन तुल्यं ह्यथ रसानुपानमभ्यस्तम् ।
विनिहन्ति सर्वशोथं घनवृन्दं चण्डवायुरिव ॥ ८४ ॥
गुड़पिप्पलीशुण्ठीनां चूर्णं श्वयथुनाशनम् ।
आमाजीर्णप्रशमनं शूलघ्नं वस्तिशोधनम् ॥ ८५ ॥

इति गुड़चूर्णम् ।

गुड़ात्पलत्रयं ग्राह्यं शृङ्गवेरपलत्रयम् ।
शृङ्गवेरसमाकृष्णा लोहविट् भस्मनः पलम् ॥
एतच्चूर्णं समुद्दिष्टं सर्वश्वयथुनाशनम् ॥ ८६ ॥

इति द्वितीयगुड़ाद्यं चूर्णम् ।

पुनर्नवादार्व्यभया पाठाविश्वं श्वदंष्ट्रिका ।
रजन्यो द्वौ बृहत्यौ च पिप्पल्यश्चित्रकं विषम् ॥ ८७ ॥
समभागानि संचूर्ण्य गवां मूत्रेण वा पिबेत् ।
बहुप्रकारं श्वयथुं सर्वगात्रप्रसारिणम् ।
हन्ति चैवोदराण्यष्टौ व्रणांश्चैवोद्धतानपि ॥ ८८ ॥

इति पुनर्नवाद्यं चूर्णम् ।

सिंहास्यामृतभाण्डाकी क्वाथं कृत्वा समाक्षिकम् ।
पीत्वा शोथं जयेज्जन्तुः श्वासं कासं ज्वरं वमिम् ॥ ८९ ॥

. गोमूत्रसिद्धं मंडूरं सुरभीरसभावितम् ।
माणकार्द्रककन्दानां रसेष्वपि च भावयेत् ॥ ८० ॥
त्रिफलाव्योपचव्यानां चूर्णं पाणितलद्वयम् ।
क्षिपेत् सुसिद्धे पाके च मधुनश्च पलद्वयम् ॥ ८१ ॥
निहन्ति सर्वजं शोथं सर्वाङ्गञ्च विशेषतः ॥ ८२ ॥
अत्र गोमूत्रसिद्धं लोहमलं चूर्णं माणकार्द्रकरसैरातपे परिभाव्य। त्रिफलादिचूर्णं द्विगुणमूत्रे पक्तव्यम् ।

इति गोमूत्रमण्डूरम्।

पुनर्नवापत्ररमालमूलं संक्षुद्यतोयार्म्मणशेषसिद्धम् ।
चतुर्थभागेन घृतं विपक्वं प्रस्थं तु तत्कल्कपलाष्टकेन ॥ ८१ ॥
संसेवितं वातबलासरोगान् सर्वाङ्ग शोथानपि दुस्तरांश्च ।
गुल्मोदरप्लीहगुदोद्भवांश्च निहन्ति वह्निं कुरुते हि पुंसाम् ॥८४॥

इति पुनर्नवाद्य घृतम् ॥

पुनर्नवाचित्रकदेवदारु वचोपणक्षारहरीतकीनाम् ।
कल्केन पक्वं दशमूलतोये घृतोत्तमं शोथनिषूदनं स्यात् ॥८५॥

इति द्वितीयपुनर्नवाद्यं घृतम् ।

सचित्रकाधान्ययवानिपाठा मदीप्यकाख्यूपणवेतसाम्लाः ।
बिल्वोत्पलं दाडिमयावशूकं सपिप्पलीमूलमथापि चव्यम् ॥८६॥
पिष्टाक्षमात्राणि जलाढ़केन
पक्त्वा घृतप्रस्थमथोपयुञ्ज्यात् ।
अर्शांसि गुल्मं श्वयथुञ्च कृत्स्नं
निहन्ति वह्निं कुरुते च दीप्तम् ॥ ८७ ॥

इति चित्रकाद्यं घृतम् ।

क्षीरं घटे चित्रककल्कलिप्ते दध्यागतं माधुविमथ्यतेन ।
तज्जं घृतं चित्रकमूलगर्भं तक्रेण सिद्धं श्वयथुघ्नमुग्रम् ।

पर्शोऽतिसारानिलगुल्ममेहां स्तुदन्ति सम्वर्धयते च वह्निम् ॥९८॥

इति द्वितीयचित्रकाद्यं घृतम्।

माणककाथकल्काभ्यां घृतप्रस्थं विपाचयेत्।
एकजं द्वन्दजं शोथं त्रिदोषञ्च व्यपोहति ॥ ९९ ॥

इति माणकं घृतम्।

स्थलपद्मपलान्यष्टौ व्यूषणस्य चतुष्पलम्।
घृतप्रस्थं पचेदेतैर्दत्वा क्षीरं चतुर्गुणम्॥
पञ्चकासाङ्गरैच्छोघ्नं शोथञ्चैतत् सुदुस्तरम् ॥ १०० ॥

इति स्थलपद्मकाद्यं घृतम्।

रसेन विपचेत्सर्पिः पञ्चकोलकुलित्थयोः।
पुनर्नवायाः कल्केन तत्परं शोथनाशनम् ॥ १०१ ॥

इति पञ्चकोलकघृतम्।

शुष्कमूलकवर्षाभू दारुरास्नामहौषधैः।
पक्वमभ्यञ्जनं तैलं समूलं शोथनाशनम् ॥ १०२ ॥

इति शुष्कमूलकाद्यं तैलम्।

सवेतसाः क्षीरवतां द्रुमाणां त्वचः समञ्जिष्टलताम्रणालाः।
सचन्दनं पद्मकवालकौ च पैत्ते प्रदेहस्तु सतैलपाकः ॥ १०३ ॥

इति वेतसाद्यः प्रदेहः।

यवान् कुलित्थान् कोलांश्च दशमूलञ्च साधयेत्।
एतत्कषाये विपचेत् तैलं क्षीरचतुर्गुणम् ॥ १०४ ॥
शतावरीजीवनीयैः पिष्टैः समधुशिग्रुभिः।
पानाभ्यङ्गाज्जयत्याशु श्वयथुं मारुतोल्वणम् ॥ १०५ ॥

इति यवाद्यं तैलम्।

शैलेयकुष्टाऽगुरुदारुकौन्ती त्वक् पद्मकोलांबुशटी समुस्तैः।
प्रियंगुस्थौणेयकहेममांसी तालीशपत्रांऽपरपत्रधान्यैः ॥ १०६ ॥

श्रीवेष्टकं ध्यामकपिप्पलीभिः मृक्कानखैश्चैव यथोपलाभम् ।
वातोत्थितेऽभ्यङ्गमुशन्ति तैलं सिद्धं सुपिष्टैरपि च प्रदेहम् ॥१०७॥

इति शैलाद्यं तैलम् ।

पञ्चमूलं सलवणं सरलं देवदारु च ।
हस्तिकर्णपलाशस्य फलानि निचुलस्य च ॥ १०८ ॥
पलाशं काकनासा च गुडूचीदेवपुष्पकम् ।
अहिंस्रायै यसोहिंस्रा वत्सगन्धापुनर्नवा ॥ १०९ ॥
कायस्था च वयस्था च दारुकी जटिलाजटा ।
अलंबुषोरुबूकञ्च प्रपुन्नाटं सनागरम् ॥ ११० ॥
शिग्रुगोधावतीभार्गी तर्कारीपौष्करीजटा ।
एतैः सिद्धं यथा लाभं तैलमभ्यञ्जनैस्त्रिभिः ॥ १११ ॥
निहन्त्युदीर्णं श्वयथुं जन्तोर्वातकफात्मकम् ॥ ११२ ॥

इति पञ्चमूलाद्यं तैलम् ।

द्विपञ्चमूलस्य पचेत्कषाये कंसेऽभयानाञ्च शतं गुडाच्च ।
लिहेत्सुसिद्धे च विनीयचूर्णं व्योषं त्रिसौगन्ध्यमुपस्थिते च ॥११३॥
प्रस्थार्द्धमात्रं मधुनः सुशीते किञ्चिच्च चूर्णादपि यावशूकात् ।
एकाभयां प्राश्यततश्च लेहाच्छुक्तिं निहन्ति श्वयथुं प्रवृद्धम् ॥११४
श्वासज्वरारोचकमेहगुल्मप्लीहत्रिदोषोदरपाण्डुरोगान् ।
कार्श्यामवातावसृगम्लपित्तं वैवर्ण्यमूत्रानिलशुक्रदोषान् ॥ ११५ ॥
किञ्चिच्च कर्षपर्य्यायः शुक्तिरर्द्धपलं मतम् ।
निदध्यान्मधुनो मानं व्योषाद्येर्मिश्रितस्य च ॥ ११६ ॥
दशमूल्या हरीतक्या तुल्यं कंसहरीतकी ।
मानं तेनात्र तवल्यं चरके प्राहजेज्जटः ॥ ११७ ॥

इति कंसहरीतकी ।

दशमूलीकषायस्य कंसे पथ्याशतं गुडात्।
तुलां पचेद् घने दद्यात् व्योषचारचतुष्पलम् ॥ ११८ ॥
त्रिजातकं सुचूर्णांशं प्रस्थार्धं मधुना लिहेत्।
दशमूलीहरीतक्यः शोथं घ्नन्ति सुदुस्तरम् ॥ ११९ ॥
ज्वरारोचकगुल्मार्शो मेहपांडूदरामयान्।
श्वासकार्श्यामवाताऽस्त्र पित्तं वक्ष्ये च मन्दताम् ॥ १२० ॥

इति दशमूलहरीतकी।

यथा दोषञ्च तीक्ष्णानि वमनानि विरेचनानुवासनान्यऽजस्र-सुपसेवेतशिराभिश्चाभीक्ष्णं शोणितमवसेचयेदन्यत्र पांडुशाथा-दिभिरिति।

पुराणयवशाल्यन्नं दशमूलोपसाधितम्।
अल्पमल्पं कटुस्नेह भोजनं शोथिने हितम् ॥ १२१ ॥
पिष्टान्नमम्लं लवणानि मद्यं मृदं दिवास्वप्नमजाङ्गलञ्च।
पयो गुडं तैलमथो गुरूणि शोथं जिघांसुः परिवर्जयेत्तु ॥ १२२ ॥

---

त्रिकटुन्यूषणं दन्ती विडङ्गं त्रिफला तथा।
चित्रको देवदारुश्च त्रिवृच्च गजपिप्पली ॥ १२३ ॥
चूर्णान्येतानि तुल्यानि द्विगुणं स्यादयो रजः।
क्षीरेण पीतमेतत्तु श्रेष्ठं श्वयथुनाशनम् ॥ १२४ ॥

इति त्रिकटुकाद्यं लोहम्।

पुनर्नवामृतावह्नि गवाक्षीमार्कशिग्रुकाः।
यूथावर्त्तकमूलञ्च पृथगष्टपलं जले ॥ १२५ ॥
पादशेषे शृते द्रोणे सुपूते वस्त्रगालिते।
विधिवत्पाचितं पूतं योज्यञ्च पुटनक्रमैः ॥ १२६ ॥

लोहचूर्णाष्टपलकं पचेत्ताम्रादिपात्रके ।
अर्कस्य द्विपलं क्षीरं स्नुहीक्षीरं चतुष्पलम् ॥ १२७ ॥
पलद्वयं कौशिकस्य गन्धकस्य पलं तथा ।
पलार्धं पारदं तत्र विधिवच्छोधितं क्षिपेत् ॥ १२८ ॥
सिद्धेऽवतारिते चूर्णं वक्ष्यमाणं निधापयेत् ।
कंकुष्टवह्निकं दन्ती गवाक्षाखण्डकर्णजम् ॥ १२९ ॥
पलाशस्य च बीजानि कञ्चुकीतालमूलिका ।
त्रिफला वा क्रमिरिपु त्रिवृद्दन्तीभवं तथा ॥ १३० ॥
सूर्य्यावर्त्तगवाक्षस्य वर्षाभूवज्रवल्लिजम् ।
एषां लोहसमाभाला भाण्डे स्निग्धे सुगोपिते ॥ १३१ ॥
संस्थापिते ततः शुद्धौ सुयोगादस्य सर्वशः ।
उदराणि पांडुरोगाश्च कामला सहलीमका ॥ १३२ ॥
अर्शोभगन्दरं कुष्टं क्रमिः शूल तथैव च ।
ये चान्ये विविधारोगा चिरकालानुबन्धिनः ॥ १३३ ॥
ते सर्वे नाशमायान्ति प्रयोगादस्य सर्वशः ।
नातःपरतरं किञ्चि च्छोथोदरविनाशनम् ॥ १३४ ॥

इति शोथोदरहरं लोहम् ।

## इति वङ्गसेने शोथोदरनिदानचिकित्साधिकारः समाप्तः ॥ ४१ ॥

---

## अथान्त्रवृद्धिनिदानमाह ।

क्रुद्धोनूर्ध्वगतिर्वायुः शोफशूलकरश्चरन् ।
कुक्षौ वङ्क्षणतः प्राप्य फलकोषाभिवाहिनीः ।

प्रपीड्याधमनीः वृद्धिं करोति फलकोषयोः ॥ १ ॥
दोषास्रमेदो मूत्रान्त्रैः वृद्धिः सप्तधा गदः ।
मूत्रान्त्रजावप्यनिलाद्धेतुभेदस्तु केवलम् ॥ २ ॥
वातपूर्णदृतिस्पर्शो रूक्षो वातादहेतुरुक् ।
पक्वोदुम्बरसंकाशः पित्ताद्दाहोष्मपाकवान् ॥ ३ ॥
कफाच्छीतो गुरुः स्निग्धः कण्डूमान् कठिनोऽल्परुक् ॥ ४ ॥
कृष्णस्फोटावृतः पित्तवृद्धिलिङ्गस्तु रक्तजः ।
कफवन्मेदसा वृद्धि मृदुस्तालफलोपमः ॥ ५ ॥
मूत्रधारणशीलस्य मूत्रजः स तु गच्छतः ।
अम्भोभिः पूर्णदृतिवत् क्षोभं याति सरुङ्मृदुः ।
मूत्रकृच्छ्रमधस्ताच्च चलयन् फलकोषयोः ॥ ६ ॥
वातकोपिभिराहारैः शीततोयावगाहनैः ।
धारणेरणभाराध्वविषमाङ्गप्रवर्त्तनैः ॥ ७ ॥
क्षोभनैः क्षुभितोऽन्यैश्च क्षुद्रान्त्रावयवं यदा ।
पवनो विगुणीकृत्य स्वनिवेशादधो नयेत् ॥ ८ ॥
कुर्य्याद्वङ्क्षणसन्धिस्थो ग्रन्थ्याभं श्वयथुं तदा ॥ ९ ॥
उपेक्ष्यमाणस्य च मुष्कवृद्धिं माध्मानरुक् संभवतीं सवायुः ।
प्रपीड़ितोऽन्तः स्वनवान् प्रयाति प्रध्मापयन्नेति पुनश्च मुक्तः ॥१०॥
क्षुद्रान्त्रावयवाश्लेषो मुष्कयोर्वातसञ्चयात् ।
अन्त्रवृद्धिरसाध्येयं वातवृद्धिसमाकृतिः ॥ ११ ॥
वेगाघातं पृष्ठयानं व्यायामं मैथुनं तथा ।
अत्यशनमथाध्वानमुपवासं परित्यजेत् ॥ १२ ॥

—o—

## अथ चिकित्सामाह ।

वातवृद्धो पिबेत् स्निग्धं यथान्याय विरेचनम् ।
मचोरञ्च पिबेत्तैलं मासमेरण्डसम्भवम् ॥ १३ ॥
गुग्गुल्वेरण्डजं तैलं गोमूत्रेण पिबेन्नरः ।
वातवृद्धिं जयत्याशु चिरकालानुबन्धिनीम् ॥ १४ ॥
अन्त्रवृद्धिमदीप्ताग्ने र्बस्तिभिः समुपाचरेत् ।
तैलं नारायणं योज्यं पानाभ्यञ्जनवस्तिभिः ॥ १५ ॥
जलौकाभिर्हरेद्रक्तं वृद्धो पित्तभवे तथा ।
पित्तग्रन्थिक्रमेणैव पित्तवृद्धिमुपाचरेत् ॥ १६ ॥
चन्दनं मधुकं पद्मं चोशीरं नीलमुत्पलम् ।
चीरपिष्टैः प्रदेहः स्याः दाहशोथरुजापहः ॥ १७ ॥
पञ्चवल्कलकल्केन सघृतेन प्रलेपनम ।
एषामेव कषायेण शीतेन परिषेचनम ॥ १८ ॥
न्यग्रोधोदुम्बराश्वत्था सपिप्पलकपीतना ।
चीरवृचास्तु पञ्चैषा वल्कलं पञ्चवल्कलम् ॥ १९ ॥
क्वचित्कपीतनस्थाने शिरीषो वेतसः क्वचित् ॥ २० ॥

इति पञ्चवल्कलम् ।

कफवृद्धौ मूत्रसपिष्टैः रूष्णवीर्यैः प्रलेपनम् ।
पातव्यो मूत्रसंयुक्तं कषायं पीतदारुणः ॥ २१ ॥
त्रिकटुत्रिफलाक्वाथं सक्षारलवणं पिबेत् ।
कफवातप्रकोपेऽपि विरेकः कफवृद्धिनुत् ॥ २२ ॥
त्रिफलाक्वाथगोमूत्रं पिबेत्प्रातरतन्द्रितः ।
कफवातोद्भवं हन्ति श्वयथुं वृषणोद्भवम् ॥ २३ ॥
लेपनं कटुतीक्ष्णोष्णं स्वेदनं रूचमेव च ।

परिषेकोपनाहौ च सर्वमुष्णमिहेष्यते ॥ २४ ॥
वचासर्षपकल्केन प्रलेपः शोथनाशनः।
शिग्रुत्वक् सर्षपैः पिष्टैः शोथः श्लेष्मानिलापहः ॥ २५ ॥
सरलाऽगुरुकुष्ठानि देवदारुमहौषधम्।
मूत्रारनालसंपिष्टं शोथघ्नं कफवातजित् ॥ २६ ॥
हरीतकीं मूत्रसिद्धां सतैललवणान्विताम्।
प्रातः प्रातश्च सेवेत कफवातामयापहाम् ॥ २७ ॥
अविदाहि च कर्त्तव्यं भेषजं रक्तपैत्तिके।
सर्वं पित्तहरं कार्य्यं रक्तजे रक्तमोक्षणम् ॥ २८ ॥
शीतमालेपनं कार्य्यं पाको रक्ष्यः प्रयत्नतः।
मुहुर्मुहुर्जलौकाभिः शोणितं रक्तजे हरेत् ॥ २९ ॥
पिबेद्विरेचनं वापि शर्करा क्षौद्रसंयुतम्।
पित्तग्रन्थिक्रमं कुर्य्यात् दामे पक्वे च रक्तजे ॥ ३० ॥
स्विन्नं मेदः समुत्थन्तु लेपयेत् सुरसादिना।
शिरोविरेचनद्रव्यैः सुखोष्णैर्मूत्रसंयुतैः ॥ ३१ ॥
संस्वेद्य मूत्रप्रभवं वस्त्रपट्टेन वेष्टितम्।
सीवन्याः सर्वतो धस्ताद्विध्येद्व्रीहि मुखेन वै ॥ ३२ ॥
मुष्ककोशमगच्छन्त्यामन्त्रवृद्धौ विचक्षणः।
वातवृद्धिक्रमं कुर्य्या द्दाहस्तत्राग्निना हितः ॥ ३२ ॥
शङ्खस्योपरिकर्णान्ते त्यक्त्वा सेवनीमादरात्।
व्यत्यासाद्वा शिरां विध्येदन्त्रवृद्धिनिवृत्तये ॥ ३३ ॥
तैलमैरण्डजं पीत्वा बलासिद्धं पयोन्वितम्।
आध्मानशूलोपचितामन्त्रवृद्धिं जयेन्नरः ॥ ३४ ॥
रास्ना यष्ट्यमृतैरण्ड बलागोक्षुरसाधितः।
क्वाथोऽन्त्रवृद्धिं हन्त्याशु रुबुतैलेन मिश्रितम् ॥ ३५ ॥

विदग्धासु च सर्वासु योज्यं कर्म्म व्रणापहम् ।
अङ्गुष्ठमध्ये त्वक् छित्वा दहेद्वायुं विवर्जयेत् ॥
अनेनैव विधानेन कुर्य्याद्वातकफात्मजे ॥ ३६ ॥
त्र्यूषणं पिप्पलीमूलं देवदारुफलत्रिकम् ।
कषायं पाचयेत्तेषां सक्षारलवणत्रयम् ॥ ३७ ॥
त्रिभिर्मासैः प्रशाम्येत वृद्धिर्वातकफात्मजा ॥ ३८ ॥
रास्नायष्ट्यमृतैरण्ड पटोलारेणुका बला ।
वृषश्च क्वथितो वृद्धिं निहन्याच्चित्रतैलवान् ॥ ३९ ॥
गन्धर्वतैलसंमिश्रं विशालामूलजं रजः ।
क्षीरेण पीतं सप्ताहाद्वृद्धिं हन्ति न संशयः ॥ ४० ॥

—०—

## अथ कुरण्डलक्षणमाह ।

अत्यभिष्यन्दि गुर्व्वन्नसेवनान्निचयं गतः ।
करोति ग्रन्थिवच्छोफं दोषो वङ्क्षणसन्धिषु ॥ ४१ ॥

—०—

## अथ चिकित्सामाह ।

यथांबुना तु संपिष्टं मूलं भार्ग्याः प्रलेपनात् ।
कुरण्डं गण्डमालाञ्च हन्त्यवश्यं न संशयः ॥ ४२ ॥
शम्बूकोदरनिहितं गव्यं सप्ताहमातपे सर्पिः ।
स्थितमपहरति कुरण्डं सैन्धवचूर्णान्वितं लेपात् ॥ ४३ ॥
ससैन्धव घृताभ्यक्तं ताम्रभाजनमातपे ।
प्रतप्तं चूर्णनिर्दिष्टं तन्मलं समुपाहरेत् ॥ ४४ ॥
स्वयेत्तेन कौरण्डमनुद्विग्नो दिवानिशम् ।

प्रवृद्धं तेन कौरण्डं नश्यत्याशु पुनर्न सः ॥ ४५ ॥
लज्जालुमूलकल्कस्य विट्प्रलेपः प्रयोजितः ।
कुरण्डं योनिरोगञ्च नाशयेदविकल्पतः ॥ ४६ ॥
सतैललवणं भस्मपारदं लेपमात्रतः ।
अपि तालफलाकारां वृद्धिं जयति वेगतः ॥ ४७ ॥

---

शतपुष्पाऽमृतादारुचन्दनं रजनीद्वयम् ।
जीरके द्वे वचानागं त्रिफला गुग्गुलुत्वचम् ॥ ४८ ॥
मांसीकुष्टं पत्रकैला रास्नाशृङ्गी च चित्रकम् ।
क्रिमिघ्नमश्वगन्धा च शैलेयं कटुरोहिणी ॥ ४९ ॥
सैन्धवं तगरञ्चैव कुष्टजातिविषैः समैः ।
एतैश्च कार्षिकैः कल्कैः घृतप्रस्थं विपाचयेत् ॥ ५० ॥
हपुसुण्डितिकैरण्डनिम्बपत्रभवो रसः ।
कण्टकार्यास्तथा क्षीरं प्रस्थं प्रस्थं विनिक्षिपेत् ॥ ५१ ॥
सिद्धमेतद्घृतं पीतमन्त्रवृद्धिं व्यपोहति ।
वातवृद्धिं पित्तवृद्धिं मेदोवृद्धिं तथापि वा ॥ ५२ ॥
मूत्रवृद्धिं श्लीपदञ्च यकृत्प्लीहानमेव च ।
शतपुष्पाद्यं चैतद् धन्वन्तरिमतं संशयः ॥ ५३ ॥

शतपुष्पाद्यं घृतम् ।

शतमैरण्डमूलस्य पलं शुण्ठ्यायवाढ़कम् ।
जलद्रोणे विपक्तव्यं यावत्पादावशेषितम् ॥ ५४ ॥
तेन पादावशेषेण पयसा तत्समेन च ।
प्रस्थमैरंडतैलस्य तन्मूलाच्च चतुष्पलम् ॥ ५५ ॥
त्रिपलं शृङ्गवेरस्य गर्भं दत्त्वा विपाचयेत् ।
तत्पिबेन्नियतः शुद्धो नरः क्षीरान्नभुक् सदा ॥ ५६ ॥

अन्त्रवृद्धिं जयत्याशु तैलं गन्धर्वहस्तकम् ॥ ५७ ॥

इति गन्धर्वहस्ततैलम् ।

तैलं नारायणं योज्यं पानाभ्यञ्जनवस्तिषु ।
घृतं सौरेश्वरञ्चैव ह्यन्त्रवृद्धिनिवृत्तये ॥
चार्द्रकं षट्पलं वापि चव्याद्यं च प्रयोजयेत् ॥ ५८ ॥

## इति वङ्गसेनेऽन्त्रवृद्धिनिदानचिकित्साधिकारः समाप्तः ॥ ४२ ॥

—०—

### अथ ब्रध्ननिदानमाह ।

अत्यभिष्यन्दिगुर्वन्नसेवनान्निचयं गतः ।
करोति वृद्धिं शोफञ्च दोषो वङ्क्षणसन्धिषु ॥
ज्वरशूलाङ्गसादाढ्य तं ब्रध्नमिति निर्दिशेत् ॥ १ ॥
निर्व्यथं च कुरंडं स्यात् व्रध्नं भवति सव्यथम् ।
अयमेवानयोर्भेदः अन्यत्सर्वसमं तथा ॥ २ ॥

—०—

### अथ चिकित्सामाह ।

भ्रष्टयैरंडतैलेन कल्कः पथ्यासमुद्भवः ।
कृष्णासैन्धवसंयुक्तो ब्रध्नरोगहरः परः ॥ ३ ॥
आविक्षीरेण गोधूमचूर्णं कुन्दुरुकस्य च ।
प्रलेपनं सुखोष्णं स्या द्ब्रध्नरोगहरं परम् ॥ ४ ॥
मृतभाण्डे च वै काके विशाले तु प्रवेशयेत् ।
ब्रध्नं मुहूर्त्तं मेधावी तत्क्षणादरुजं भवेत् ॥ ५ ॥
अजाक्षीरहपुषाकुष्टं गोधूमं वदरान्वितम् ।

काञ्चिकेन तु संपिष्टं कुर्य्याद्व्रध्नप्रलेपनम् ॥ ६ ॥
श्वदंष्ट्रासिन्धुविश्वाव्द दारुक्रमिहराभ्रभित् ।
लोध्रचूर्णं घृतेनाथ्याद्वातव्रध्नहरं परम् ॥ ७ ॥
पुष्पोद्धृतं हरेदाशु विप्लुत न्तुषवारिणा ।
भार्गीमूलमखण्डन्तु पानाद्वङ्क्षणवातजित् ॥ ८ ॥

—०—

मूलं विल्वकपित्थयोः ररलुकस्याग्ने वृहत्योर्द्वयोः ।
श्यामापूतिकरञ्जशिग्रुकतरो र्विश्वौषधारुष्करम् ॥
कृष्णाग्रन्थिकचव्यपञ्चलवणं चाराजमोदान्वितम् ।
पीतं काञ्जिककोष्णतोयमथिते चूर्णीकृतं व्रध्नजित् ॥ ९ ॥

इति विल्वाद्य चूर्णम् ।

सैन्धवं मदनं कुष्टं शताह्वा निचुलं वचा ।
ह्रीवेरं मधुकं भार्गी देवदारुसनागरम् ॥ १० ॥
कट्फलं पौष्करं मेदे चविकाचित्रकं शठी ।
विडङ्गातिविषाश्यामा हरेणु नलिनी स्थिरा ॥ ११ ॥
विश्वाजमोदे कृष्णा च दन्तीरास्ना च तैः समैः ।
साध्यमेरंडजं तैलमभ्यङ्गात्कफवातजित् ॥ १२ ॥
व्रध्नोदावर्त्तगुल्मार्शः प्लीहमेहाढ्यमारुतान् ।
आनाहमश्मरीञ्चैव हन्यात्तदनुवासनात् ॥ १३ ॥

इति वृहत्सैन्धवाद्य तैलम्।

## इति वङ्गसेने व्रध्ननिदानचिकित्साधिकारः समाप्तः ॥ ४३ ॥

—०—

## अथ गलगण्डनिदानमाह।

निबद्धः श्वयथुर्यस्य मुष्कवल्लम्बते गले।
महान्वा यदि वा ह्रस्वो गलगंडं तमादिशेत्॥ १॥
वातः कफश्चापि गले प्रदुष्टौ मन्ये समाश्रित्य तथैव मेदः।
कुर्वन्ति गण्डं क्रमशः स्वलिङ्गैः समन्वितं तं गलगण्डमाहुः॥२॥
तोदान्वितः कृष्णशिरावनद्धः श्यावारुणो वा पवनात्मकस्तु।
पारुष्ययुक्तश्चिरवृद्धिपाको यदृच्छया पाकमियात्कदाचित्॥३॥
वैरस्यमास्यस्य च तस्य जन्तो र्भवेत्तथा तालुगलप्रशोषः।
स्थिरः सवर्णो गुरुरुग्रकंडूः शीतो महांश्चैव कफात्मकस्तु॥ ४
चिराभिवृद्धिं भजते चिराद्वा प्रपच्यते मन्दरुजः कदाचित्।
माधुर्य्यमास्यस्य च तस्य जन्तो र्भवेत्तथा तालुगलप्रलेपः॥ ५॥
स्निग्धोऽगुरुः पांडुरनिष्टगन्धो मेदोयुतः कण्डुयुतो रुजश्च।
प्रलम्बतेऽलाबुवदल्पमूलो विवर्द्धते क्षीयति चात्र देहे॥ ६॥
स्निग्धास्यता तस्य भवेच्च जन्तोर्गलेऽनुशब्दं कुरुते च नित्यम्॥७॥
कृच्छ्रोच्छ्वसन्तं मृदुसर्वगात्रं सम्वत्सरातीतमरोचकार्त्तम्।
चीरश्च वैद्यो गलगण्डयुक्तं भिन्नस्वरञ्चापि विवर्जयेत्तम्॥८॥

—०—

## अथ चिकित्सामाह।

स्वेदोऽनिलोत्थे गलगण्डकादौ नाड्यानिलघ्नौषधपत्रभंगैः॥ ९॥
निचुलं शिग्रुबीजानि दशमूलमथापि वा।
आलेपनं वातगण्डे सुखोष्णं संप्रशस्यते॥ १०॥
स्वेदोपनाहैः कफसम्भवे तु
सस्नेहविस्रावणमेव कुर्य्यात्॥ ११॥

देवदारुविशाला च कफगण्डे प्रलेपनम्।
छर्द्दनं शीर्षरेकश्च सर्वरेचनिको हितः॥ १२॥
मेदः समुत्थे तु यथोपदिष्टं विधेच्छिरां स्निग्धतनोर्नरस्य।
श्यामासुधालोहपुरीषदन्ती रसाञ्जनैश्चापि हितः प्रलेपः॥ १३॥
मूत्रेण वा लोध्रहिताय कल्कं प्रातः पिबेत्सारमहीरुहाणाम्॥१४
सर्षपान् शिग्रुबीजानि शणबीजातसीयवान्।
मूलकस्य च बीजानि तक्रेणाम्लेन पेषयेत्॥ १५॥
गण्डानि ग्रन्थयश्चैव गण्डमालासुदारुणा।
आलेपादेवनश्यन्ति विलयं यान्ति चाचिरात्॥ १६॥
रक्षोघ्नतैलयुक्तेन जलकुम्भिकभस्मना।
लेपनं गलगण्डस्य चिरोत्थस्यापि शस्यते॥ १७॥
दग्धं वराहपुच्छाग्रं कटुतैलसमन्वितम्।
नस्येन हन्ति तरुणं गलगण्डमसंशयम्॥ १८॥
तंडुलोदकपिष्टेन मूलेन परिलेपतः।
हस्तिकर्णपलाशस्य गलगण्डः प्रशाम्यति॥ १९॥
श्वेतापराजितामूलं प्रातः पिष्ट्वा पिबेन्नरः।
सर्पिषानियताहारो गलगंडप्रशान्तये॥ २०॥
तिक्तालाबुफले पक्के सप्ताहमुषितं जलम्।
मद्यं वा गलगंडघ्नं पानात्पथ्यान्न सेविनः॥ २१॥
कर्णयुग्मबहिः सन्धि रल्पाभ्यासे स्थितश्च यत्।
उपर्युपरि तच्छिन्द्याद्गलगंडे शिरात्रयम्॥ २२॥

—०—

हिंस्रावचागुडूची त्रिफलाऽनलदारुपिप्पलीकल्कैः।
भृङ्गस्वरसैः सिद्धं तैलं गलगंडजिन्मधुना॥ २३॥

इति सिंहाद्य तैलम्।

तैलं पिबेद्वा मृतबल्लिनिम्ब हिंस्राह्वया वृत्तकपिप्पलीभिः
सिद्धं बलाभ्याञ्च सदेवदारु हितायनित्यं गलगंडरोगी ॥२

इत्यमृताद्यं तैलम् ।

प्रियंगुयष्टीमधुकं सकुष्टं सपिप्पलीचन्दनमुस्तनिम्बम् ।
कल्कं विनिचिप्य विपाच्यतैलं चतुर्गुणे नस्यविधिप्रयुक्तम् ।
शाखोटवल्कलरसे च सिद्धं हन्यात्प्रवृद्धं गलगंडरोगम् ॥ २५ ।

इति शाखोटाद्य घृतम् ।

त्रिफलायास्त्रयोभागा व्योषस्तद्द्विगुणो मतः ।
तस्माच्च द्विगुणं देयं काञ्चनारस्य वल्कलम् ॥ २६ ॥
एकीकृते तु चूर्णेऽस्मि समो देयोऽथ गुग्गुलुः ।
चौद्रस्य तु ततो दद्या दृशभागान्विचक्षणः ॥ २७ ॥
नाडीव्रणेषु सर्वेषु गलगंडे तथैव च ।
सर्वासु गडमालासु गुटिकेयं प्रशस्यते ॥ २८ ॥

इति काञ्चनारगुग्गुलुगुटिका ।

यवमुद्गपटोलादि कटुरूक्षञ्च भोजनम् ।
छर्दिञ्च रक्तमुक्तिञ्च गलगडे प्रयोजयेत् ॥ २१ ॥

## इति वङ्गसेने गलगण्डनिदानचिकित्साधिकारः समाप्तः ॥ ४४ ॥

---

## अथ गण्डमालानिदानमाह ।

कर्कन्धुकोलामलकप्रमाणैः कचांऽसमन्यागलवङ्क्षणेषु ।
मेदः कफाभ्यां चिरमन्दपाकैः स्याद्गडमालाबहुभिस्तु गंडैः ॥१
ते ग्रन्थयः केचिदवाप्तपाका स्रवन्ति नश्यन्ति भवन्ति चान्ये ।

कालानुबन्धं चिरमादधाति सैवापचीति प्रवदन्ति केचित् ॥२॥
साध्याः स्मृताः पीनसपार्श्वशूलकासज्वरच्छर्दियुतास्त्वसाध्या ॥३॥

—०—

## अथ चिकित्सामाह।

सर्षपारिष्टपत्राणि दग्ध्वाभल्लातकैः सह।
छागमूत्रेण संपिष्ट मपचीघ्न प्रलेपनम् ॥ ४ ॥
अश्वत्थकाष्टं निचुलं गवां दन्तञ्च दाहयेत्।
वाराहमज्जसंयुक्तं भस्महन्त्यपचीव्रणान् ॥ ५ ॥
कनकर्पासजं मूलं तंडुलैः सह योजितम्।
पक्वाज्ये पोलिकां खादे दपचीनाशनाय च ॥ ६ ॥
अलम्बुपादलोद्भूतं स्वरसं द्विपलं पिबेत्।
अपच्याः गण्डमायायाः कामलायाश्च नाशनम् ॥ ७ ॥
मणिबन्धोपरिष्टाद्वा कुर्य्याद्रेखात्रयं भिषक्।
अङ्गुलान्तरितं सम्यग ऽपचीनां निवृत्तये ॥ ८ ॥
चन्दनं साभया लाक्षा वचा कटुकरोहिणी।
एतैस्तैलं शृतं पीतं समूलामपचीं जयेत् ॥ ९ ॥

इति चन्दनाद्यं तैलम्।

व्योषं विड़ङ्गं मधुकं सैन्धवं देवदारु च।
एभिस्तैल शृतं नस्यात् कृच्छ्रामित्यपचीं जयेत् ॥ १० ॥

इति व्योषाद्यं तैलम्।

काकादनीशिफा कल्के निर्गुण्ड्याः स्वरसैः शृतम्।
आरनालेश्च कटुकं तैल स्यादपचीहरम् ॥ ११ ॥

इति काकादन्यादि तैलम्।

अजमोदाससिदूरं ग्रीवासं रजनीद्वयम्।

चारद्वयमपामार्गं हरितालं मनःशिला ॥ १२ ॥
आर्द्रकाऽगुरु वा शुण्ठी जालिनी सेन्द्रवारुणी ।
सर्वे द्रव्या समाना स्युर्भागार्थार्द्धपलोन्मिता ॥ १३ ॥
छागीनाष्टगुणेनैव मूत्रेण मृदुवह्निना ।
कटुतैलं पचेदेभि स्नुह्यार्कपयसा सह ॥ १४ ॥
उत्पाद्यमानामपची नस्यादिपर्ययेन्नृणाम् ।
उत्पन्नामामपक्वाञ्च नस्याभ्यङ्गेन नाशयेत् ॥ १५ ॥
विशीर्णकुथिताख्यर्थं निर्गन्धा पूयवाहिनी ।
चिरजाऽसाध्यकल्पापि तैलेनानेन साध्यते ॥ १६ ॥
युक्ताहारविहारेण नस्यदानेन चैव हि ।
रोहिता क्षिप्रमेव हि सप्तरात्रान् न संशय ॥ १८ ॥
इति महाऽजमोदाद्य तैलम् । इत्यपची
माचिकाख्य सकृत् पीत क्वाथो वरुणमूलज ।
गडमाला हरत्याशु चिरकालानुबन्धिनीम् ॥ १९ ॥
पिष्ट्वा ज्येष्ठाम्बुना पेया काञ्चनारत्वच शुभा ।
विश्वभेषजसंयुक्ता गडमालाहरा परा ॥ २० ॥
पलमर्द्धपल वापि पिष्ट्वा तण्डुलवारिणा ।
काञ्चनारत्वच पीत्वा मुच्यते गडमालया ॥ २१ ॥
जिह्वाध पार्श्वयो मूला च्छिरा द्वादशकीर्त्तिता ।
तासा स्थूलशिरे द्वे तु छिद्यते च शनै शनै ॥ २२ ॥
वडिशेनैव सगृह्य कुशपत्रेण बुद्धिमान् ।
स्रुते रक्ते व्रणे तस्मिन् दद्यात् सगुडमार्द्रकम् ॥ २३ ॥
भोजन चानभिष्यन्दि यूष कौलित्थमिष्यते ।
नस्य वैरेचनं योज्य वमनञ्च प्रयोजयेत् ।
गडमालाप्रशान्त्यर्थं यवमुद्गादिभोजनम् ॥ २४ ॥

वचाशठीहरिद्रे द्वे देवदारुमहौषधम्।
हरीतकी चातिविषा मुस्तकेन्द्रयवाः समाः ॥ २५ ॥
एतान् दशपलान् भागांश्चतुर्द्रोणेऽम्भसः पचेत्।
पादशेषे जले तस्मिन् घृतप्रस्थं विपाचयेत् ॥ २६ ॥
कल्कं दत्वा पलोन्मानैः क्वाथ्यद्रव्यैः सुपेषितैः।
प्रक्षिप्य त्रिगुणं क्षौद्रं व्योषचूर्णात् पलानि षट् ॥ २७ ॥
यथाकालं पिबेन्मात्रां यथेष्टाहारमेव च।
गंडमालां निहन्त्याशु बहुवर्षसमुद्भवाम् ॥ २८ ॥
कासं श्वासं प्रतिश्यायं गलगंडं सुखामयम् ॥

इति वचाद्यं घृतम्।

चक्रमर्दकमूलस्य कल्कं कृत्वा विपाचयेत्।
केशराजरसे तैलं कटुकं मृदुनाग्निना ॥ २९ ॥
पक्वाशेषे विनिक्षिप्य सिन्दूरमवतारयेत्।
एतत्तैलं निहन्त्याशु गंडमालां सुदारुणाम् ॥ ३० ॥

चक्रमर्दादिसिन्दूरतैलम्।

निर्गुंडीस्वरसे तैलं लाङ्गलीमूलकल्कितम्।
तैलं नस्यान्निहन्त्याशु गंडमालां सुदारुणाम् ॥ ३१ ॥

इति निर्गुंडीतैलम्।

गुञ्जामूलफलैस्तैलं तोये द्विगुणिते पचेत्।
नस्याभ्यङ्गेन शमयेद्गंडमालां सुदारुणाम् ॥ ३२ ॥

इति गुञ्जातैलम्।

विडङ्गानलसिन्धूत्थ रास्नोग्रा चारदारुभिः।
तैलं चतुर्गुणं सिद्धं कटुतुम्बीजलेन वा ॥
गंडमालापहं श्रेष्ठं गलगंडहरं परम् ॥ ३३ ॥

इति तुम्बीतैलम्।

गंडमालापहं तैलं सिद्धं भाखोटकत्वचा ।
विल्वाऽश्वमार निर्गुंडी साधितं चापि नावनम् ॥ ३४ ॥
इति भाखोटकविल्वाद्यं तैलम् ।

छुछुन्दर्य्या विपक्वन्तु चणात्तैलवरं ध्रुवम् ।
अभ्यङ्गान्नाशयेन्नृणां गंडमालां सुदारुणाम् ॥ ३५ ॥
इति छुछुन्दरीतैलम् ।

त्रिफला त्रिवृता दन्ती नीलिनी चतुरंगुलैः ।
पञ्चविंशतिसख्याकैः प्रत्येकं पलमात्रया ॥ ३६ ॥
क्वथितैः कुट्टितैरेभिश्चतुर्द्रोणे प्रमाणतः ।
पचेत्तु सलिले तावद्यावद्द्रोणश्च शेषितम् ॥ ३७ ॥
पश्चाच्छ्रतन्न निक्षिप्य गुग्गुलोऽस्तु पलान्यपि ।
क्वाथयेत् सघनं यावत् पुनस्तत्पूर्ववत् पचेत् ॥ ३८ ॥
ततस्तस्मिन् घनीभूते त्वगेलानागकेसरम् ।
त्रिकटुत्रिफलापर्णी यवानी जीरकानि च ॥ ३८ ॥
पिप्पलीमूलदहन हपुषाकृष्णजीरकम् ।
वाप्पिका चाजमोदा च तिन्तिडीचाम्लवेतसम् ॥ ४० ॥
सोवर्चलयुतं कृत्वा श्लक्ष्णचूर्णं विनिक्षिपेत् ।
प्रत्येकमर्द्धपलिकैर्भागैः सम्यग्विचक्षणः ॥ ४१ ॥
ततोऽक्षमात्रां गुटिका भक्षयेच्च दिने दिने ।
गडमालार्वुदग्रन्थि जङ्घास्तम्भोदरार्दितः ॥ ४२ ॥
अनेनैव विधानेन गिरिजम्मा प्रयोजयेत् ॥ ४३ ॥
इति त्रिफलाद्यो गुग्गुलुः ।

## इति वङ्गसेने गण्डमालाऽधिकारः समाप्तः ॥ ४५ ॥

## अथ ग्रन्थिनिदानमाह।

वातादयो मांसमसृक्प्रदुष्टाः संदूष्य मेदश्च तथा शिराश्च।
वृत्तोन्नतं विग्रन्थितं तु शोथं कुर्वन्त्यतो ग्रन्थिरिति प्रदिष्टः॥ १॥
आयम्यते वृश्चति तुद्यते च प्रत्यस्यते मथ्यति भिद्यते च।
कृष्णो मृदुर्बस्तिरिवाततश्च भिन्नः स्रवेच्चानिलजोऽस्रमच्छम्॥
दन्दह्यते धूप्यति चुष्यते च पापच्यते प्रज्वलतीव चापि।
रक्तः सपीतोऽप्यथवापि पित्ताद्भिन्नः स्रवेदुष्णमतीव चास्रम्॥३॥
शीतोविवर्णोऽल्परुजोऽतिकंडूः पाषाणवत्संहननोपपन्नः।
चिराभिवृद्धिश्च कफप्रकोपाद्भिन्नः स्रवेच्छुक्लघनं च पूयम्॥ ४॥
शरीरवृद्धिक्षयवृद्धिहानिः स्निग्धो महान् कंडुयुतोऽरुजश्च।
मेदः कृतो गच्छति चात्र भिन्ने पिण्याकसर्पिः प्रतिमन्तु मेदः॥५॥
व्यायामजातैरबलस्य तैस्तै राक्षिप्य वायुश्च शिराप्रतानम्।
सङ्कोच्य सम्पीड्य विशोष्य चापि ग्रन्थिं करोत्युन्नतमाशु वृत्तम्॥ ६॥
ग्रन्थिः शिराजः स तु कृच्छ्रसाध्यो भवेद्यदि स्यात्सरुजश्चलश्च।
अरुक्स एवाप्यचलो महांश्च मर्मोत्थितश्चापि विवर्जनीयः॥ ७॥

—०—

## अथ चिकित्सामाह।

ग्रन्थिष्वधामेषु भिषग्विदध्याच्छोथक्रियां विस्तरतो विधिज्ञः।
रक्षेद्बलं चास्य नरस्य नित्यं तद्रक्षितं व्याधिबलं निहन्ति॥ ८॥
हिंस्रासरोहिण्यमृताऽथ भार्गी स्योनाकबिल्वागुरुकृष्णगन्धाः।
गोपित्तपिष्टाः सह तालपत्र्या[1] ग्रन्थ्यैर्विधेयोऽनिलजे प्रलेपः॥ ९॥
कुर्य्यात् स्वेदोपनाहांश्च तथान्यान् मिश्रलेपनान्॥ १०॥

---

१ तालपत्री तालमूली।

विदार्य वा पक्व मपोह्य पूयं प्रक्षाल्य बिल्वार्कनरेन्द्रतोयैः ।
तिलैश्च पञ्चाङ्गुलपत्रमिश्रैः संस्वेदयेत् सैन्धवसंप्रयुक्तैः ॥ ११ ॥
शुद्धं व्रणञ्चाप्युपरोहयेत्तु तैलेन रास्ना सरलान्वितेन ।
विडङ्गयष्टीमधुकामृताभिः सिद्धेन वा चीरसमन्वितेन ॥ १२ ॥
जलायुकाः पित्तकृते हितास्तु चीरोदकाभ्यां परिषेचनञ्च ।
काकोलिवर्गस्य तु शीतलानि पित्ते कषायाणि सशर्कराणि ॥१३॥
द्राक्षारसेनेक्षुरसेन चापि चूर्णं पिवेद्दापि हरीतकीनाम् ॥ १४ ॥
मधूकजम्ब्वार्जुनवेतसानां त्वग्भिः प्रदेहानऽवधारयेच्च ।
सशर्करैर्वा तृणमूलकल्कैर्दिह्यादभीक्ष्णं सुचुकन्दजैर्वा ॥ १५ ॥
विदार्य चाऽऽपक्वमपोह्य पूयं धौतं कषायेण वनस्पतीनाम् ।
तैलैः सयष्टीमधुकैर्विशोध्य सर्पिः प्रयोज्यं मधुकैर्विपक्वम् ॥ १६ ॥
हृतेषु दोषेषु यथानुपूर्व्या ग्रन्थौ भिषक् श्लेषसमुत्थिते च ।
स्विन्नस्य विम्लापनमेव कुर्य्यां दंगुष्टलोहोपलवेणुदण्डैः ॥ १७ ॥
विकङ्कतारग्वध काकणन्ती काकादनीतापसवृक्षमूलैः ।
आलेपयेदेनमलाबुभार्गीकरञ्जकालामदनैश्च विद्वान् ॥ १८ ॥

मेदः समुत्थितं ग्रन्थिं तिलकल्कैः प्रदिह्य च ।
सच्छाद्य वस्त्रपट्टेन स्वेदयेत्तप्तलोहकैः ॥
पाटयित्वा तु शस्त्रेण हृत्वा मेदोऽग्निना दहेत् ॥ १९ ॥

ग्रन्थीनमर्मप्रभवानपक्वानुद्धृत्य चाग्निं विदधीतवैद्यः ।
क्षारेण चैतान् प्रतिसारयेच्च संलिख्य संलिख्य यथोपदेशम् ॥२०॥

लेपनं शङ्खचूर्णेण सह मूलस्य भस्मना ।
कफार्वुदापहं कुर्य्याद् ग्रन्थ्यादिषु विशेषतः ॥ २१ ॥
ग्रन्थीनुद्धृत्य वा पक्वं वह्निकर्मप्रयोजयेत् ।
पश्चात् क्षारेण संशोध्य व्रणवत् समुपाचरेत् ॥ २२ ॥
शिराग्रन्थिं परित्यज्य शेषं यत्नेन साधयेत् ॥ २३ ॥

दन्तीचित्रकमूलत्वक् सुधार्कपयसीगुडः ।
भल्लातकास्थि काशीसं लेपो भिन्द्याच्छिलामपि ॥ २४ ॥
स्वर्जिकामूलकक्षारः शङ्खचूर्णसमन्वितः ।
प्रलेपे विहितः श्लक्ष्णो हन्ति ग्रन्थ्यर्बुदादिकान् ॥ २५ ॥
यानि प्रतिद्वादश चांगुलानि मेढ्रञ्च वस्तिं परिवर्ज्य सम्यक् ।
विदार्यमत्स्याण्डनिभानि वैद्यो विक्षथजालं पललं विदध्यात् ॥२६॥

## इति वङ्गसेने ग्रन्थिनिदानाधिकारः समाप्तः ॥ ४६ ॥

—०—

## अथार्बुदनिदानमाह ।

गात्रप्रदेशे क्वचिदेव दोषाः संमूर्छितामांसमसृक्प्रदूष्य ।
वृत्तं स्थिरं मन्दरुजं महान्त मनल्पमूलं चिरवृद्धिपाकम् ॥
कुर्वन्तिमांसोच्छ्रयमत्यगाधं तदर्बुदं शास्त्रविदो वदन्ति ॥१॥
वातेन पित्तेन कफेन चापि रक्तेन मांसेन च मेदसापि ।
यज्जायते तस्य च लक्षणानि ग्रन्थेः समानानि सदा भवन्ति ॥२॥
दोषः प्रदुष्टो रुधिरं शिरासु सङ्कोच्य संपीड्य ततस्त्वपाकम् ।
सास्रावमुन्नह्यतिमांसपिण्डं मांसांकुरैराचितमाशुवृद्धिम् ॥ ३ ॥
करोत्यजस्रं रुधिरं सदुष्टमसाध्यमेकं रुधिरात्मकन्तु ।
रक्तक्षयोपद्रवपीड़ितत्वात् पांडुर्भवेत्सोऽर्बुदपीड़ितस्तु ॥ ४ ॥
मुष्टिप्रहारादिभिरर्दितेऽङ्गे मांसं प्रदुष्टञ्जनयेच्च शोथम् ।
अवेदनं स्निग्धमनन्यवर्ण मपाकमश्मोऽपममप्रचाल्यम् ॥ ५ ॥
प्रदुष्टमांसस्य नरस्य गाढ़मेतद्भवेन्मांसपरायणस्य ।
मांसार्बुदन्त्वेतदसाध्यमुक्तं साध्येष्वपीमानि विवर्जयेत्तु ॥ ६ ॥

संप्रसुतं मर्मणि यच्च जातं स्रोतःसु वा यच्च भवेदऽचाल्यम् ।
यज्जायतेऽन्यत् खलु पूर्वजाते ज्ञेयं तदध्यर्बुदमर्वुदज्ञैः ॥ ७ ॥
यद्द्वन्द्वजातं युगपत् क्रमाद्वा द्विरर्वुदं तच्च भवेदसाध्यम् ॥ ८ ॥
न पाकमायान्ति कफाधिकत्वान् मेदो बहुत्वाच्च विशेषतस्तु ।
दोषस्थिरत्वादग्रथनाच्च तेषां सर्वार्वुदान्येव निसर्गतस्तु ॥ ९ ॥

—०—

## अथ चिकित्सामाह ।

जयेद्विद्रधिवत् पूर्वं मर्वुदं प्रच्छनादिभिः ।
क्षाराग्निभ्यां दहेच्चापि प्रदेहैर्विविधैर्जयेत् ॥ १० ॥
कर्कारुकैर्वारुकनारिकेल प्रियालपञ्चांगुलबीजपूरैः ।
वातार्वुदं क्षीरघृताम्लसिद्धैरुष्णैः सतैलैरुपनाहयेत्तु ॥ ११ ॥
स्वेदं विदध्यात् कुशलस्तु नाड्या शृङ्गेण रक्तं बहुशो हरेच्च ।
वातघ्ननिर्यूहपयोऽम्लभागैः सिद्धां शताह्वां त्रिवृत्तां पिबेद्वा ॥१२॥
स्वेदोपनाहा मृदवस्तु पथ्याः पित्तार्वुदे कायविरेचनञ्च ।
विघृष्य चोदुम्बरशाकगोजीपत्रैर्भृशं क्षौद्रयुतैः प्रलिम्पेत् ॥१३॥
सूक्ष्मीकृतैः सर्जरसप्रियंगु पतङ्गलोध्रार्जुनयष्टिकाह्वैः ॥ १४ ॥
शुद्धस्य जन्तोः कफजेऽर्वुदे तु रक्ते च सिक्ते च ततोऽर्वुदं तत् ।
कपोतपारावतविड्विमिश्रैः सकांस्यनीली शुकलाङ्गलाख्यैः ॥१५॥
सूक्ष्मैस्तु काकादनमूलमिश्रैः क्षारप्रदिग्धैरथवा प्रदिह्येत् ॥१६॥
निष्पावपिण्याककुलत्थकल्कैर्मांसप्रगाढैर्दधिमर्दितैश्च ।
लेपं विदध्यात् कृमयो यथात्र मुञ्चन्त्यपत्यान्यथमक्षिका वा ।
अल्पावशिष्टं कृमिभिः प्रजग्धं लिखेत्ततोऽग्निं विदधीत पश्चात् ॥१७॥
अशेषदोषाणि हि नार्वुदानि करोति तस्याशु पुनर्भवन्ति ।
नरानशेषाणि ससुद्धरेत्तु हन्युः सशेषाणि यथाविषाग्नी ॥ १८ ॥

हरिद्रा लोध्रपतङ्गगृहधूममनःशिला ।
मधुप्रगाढ़ो लेपोऽयं मेदोऽर्बुदहरः परः ॥
एतामेव क्रियां कुर्यादशेषां शर्करार्बुदे ॥ १८ ॥
यदल्पमूलं त्रपुसैः सताम्रैस्तद्वेष्टपत्रैरथवाऽऽयसैर्वा ।
क्षाराग्निशस्त्राण्यवचारयेच्च मुहुर्मुहुः प्राणमवेक्षमाणः ॥
यदृच्छया चोपगतानि पाकं पाकक्रमेणोपचरेद्विधिज्ञः ॥ २० ॥
आस्फोतगोजीकरवीरपत्रैः कषायमिष्टं व्रणशोधनार्थम् ।
शुद्धञ्च तैलं विदधीत भार्गीविडङ्गपाठात्रिफला सुसिद्धम् ॥ २१ ॥
स्नुहीगण्डीरिकास्वेदो नाशयेदर्बुदानि च ।
लवणेनाऽथवा स्वेदः सीसकेन तथैव च ॥ २२ ॥
निवृत्यजिह्वां दशनैर्विदंश्यस्त्रिधा शिराशब्दमपि प्रसह्य ।
निशावमाने त्रिदिनान्यवश्यम्पीडां हरेदर्बुदजां सुघोराम् ॥ २३ ॥
मूलकस्य कृतः क्षारो हरिद्रायास्तथैव च ।
शङ्खचूर्णेन संयुक्तो लेपः सिद्धोऽर्बुदापहः ॥ २४ ॥
उपोदिकरसाभ्यक्ता स्तत्पत्रपरिवेष्टिता ।
प्रणश्यन्त्यचिरान्नृणां पिडिका ह्यर्बुदादयः ॥ २५ ॥
उपोदिका काञ्जिक तक्र पिष्टा तयोपनाहं लवणेन सार्धम् ।
दृष्टोऽर्बुदानां प्रशमाय कैश्चि द्दिने दिने वा त्रिषु मर्मजानाम् ॥२६॥
वटदुग्धकुष्टरोमक लिप्त बद्धं वटस्य कल्केन ।
अध्यस्थि सप्तरात्रान् महदपि शमयेत् सिद्धमिदम् ॥ २७ ॥
गन्धशिलाविश्वौषध विडङ्गयवभस्मजं समञ्चूर्णम् ।
कृकलासरक्तयुक्तं लेपात् सर्वार्बुदध्वंसि ॥ २८ ॥
सितमारशिग्रुसर्षप यवमूलकवीजमरखेन ।
लेपस्तत्र कृतोऽयं ग्रंथ्यर्बुदगण्डमालघ्नः ॥ २९ ॥
शि मूलकयोर्बीजं रघोञ्च सरसं यवम् ।

अश्वमारश्च संपिष्य तक्रलेपोऽर्वुदादिजित् ॥ ३० ॥

## इति वङ्गसेनेऽर्वुदनिदानचिकित्साधिकारः समाप्तः ॥ ४६ ॥

—०—

## अथ श्लीपदनिदानमाह ।

यः सज्वरो वङ्क्षणजो भृशार्त्तिः शोथो नृणां पादगतः क्रमेण ।
तच्छ्लीपदं स्यात् करकर्णनेत्रशिश्नौष्ठनासास्वपि केचिदाहुः ॥ १ ॥
वातजं कृष्णरूक्षञ्च स्फुटितं तीव्रवेदनम् ।
अनिमित्तरुजं तस्य बहुशो ज्वर एव च ॥ २ ॥
पित्तजं पीतसङ्काशं दाहज्वरयुतं मृदु ।
श्लैष्मिकं स्निग्धवर्णञ्च श्वेतं पांडु गुरुस्थिरम् ॥ ३ ॥
वल्मीकमिवसंजातं कण्टकैरुपचीयते ।
अब्दात्मकं महत्तच्च वर्जनीयं विशेषतः ॥ ४ ॥
त्रीण्यप्येतानि जानीयाच्छ्लीपदानि कफोच्छ्रयात् ।
गुरुत्वञ्च महत्वञ्च यस्मान्नास्ति विना कफात् ॥ ५ ॥
यत् श्लेष्मलाहारविहारजातं पुंसः प्रकृत्यापि कफात्मकस्य ।
सास्रावमत्युन्नतसर्वलिङ्गं सकण्डुरं श्लेष्मयुतं विवर्ज्यम् ॥ ६ ॥
पुराणोदकभूयिष्ठाः सर्वर्तुषु च शीतलाः ।
ये देशास्तेषु जायन्ते श्लीपदानि विशेषतः ॥ ७ ॥

—०—

## अथ चिकित्सामाह ।

शाम्यति पिच्छिलगुटिका सर्षपकल्कोपनाहतः सपदि ।
सैलवलाभ्यां लेपः करचरणशोथतामपि च ॥ ८ ॥

लङ्घनालेपनस्वेद रेचनै रक्तमोचणैः।
प्रायः श्लेष्महरैरुष्णैः श्लीपदं समुपाचरेत् ॥ ८ ॥
मासमेरंडजं तैलं पिबेन्मूत्रेण मानवः।
कासमर्दशिफा कल्कं गव्येनाज्येन यः पिबेत्।
श्लीपदं वातजं तस्य नाशमायाति सत्वरम् ॥ १० ॥
मह्नौषधविपक्वेन पयसा चान्नमादिशेत् ॥ ११ ॥
गुल्फस्याधःशिरां विध्येच्छ्लीपदे पित्तसम्भवे।
पित्तघ्नीञ्च क्रियां कुर्य्यात् पित्तार्बुदविसर्पवान् ॥ १२ ॥
मञ्जिष्ठामधुकं रास्ना सहिंस्रा सपुनर्नवा।
पिष्टारणालैर्लेपोऽयं पित्तश्लीपदशान्तये ॥ १३ ॥
शिरां सुविदितां विध्येदंगुष्ठे श्लेष्मश्लीपदे।
पिबेद्वाप्यभयाकल्कं सूत्रेणान्यतमेन वै ॥ १४ ॥
पिबेद्वै गुडूचीं वा नागरं भद्रदारु च।
पिबेत्सर्षपतैलेन श्लीपदानां निवृत्तये ॥ १५ ॥
हितं वा लेपने नित्य चित्रकं देवदारु च।
सिद्धार्थशिग्रुकल्को वा सुखोष्णो मूत्रपेषितः ॥ १६ ॥
सिद्धार्थ सौभाञ्जनदेवदारु विश्वौषधैर्मूत्रयुतैः प्रलेपः।
पुनर्नवानागरसर्षपानां कल्केन वा काञ्जिकमिश्रितेन ॥ १७ ॥
धत्तूरैरंडनिर्गुण्डी वर्षाभूशिग्रुसर्षपैः।
प्रलेपः श्लीपदं हन्ति चिरोत्थमपि दारुणम् ॥ १८ ॥
*असाध्यमपि याल्यस्तं श्लीपदं चिरकालजम्।*
मूलेन सहदेवायास्तालमिश्रेन लेपितम् ॥ १९ ॥
निष्पिष्टमारणालेन रूपिकामूलवल्कलम्।
प्रलेपात् श्लीपदं हन्ति बद्धमूलमपि स्थिरम् ॥ २० ॥
शाखोटवल्कलमिश्रं तोयं गोमूत्रसंयुतं पीत्वा।

हन्याच्छ्लीपदमुग्रं श्लेष्मभवं श्लीपदं पुंसाम् ॥ २१ ॥
पिंडारकतरुसम्भव वन्दाकमिषिकाजयति सर्पिषा पीता ।
श्लीपदमुग्रं नियतं बद्धा सूत्रेण जंङ्घायाम् ॥ २२ ॥
धत्तूरकस्य बीजानि पिप्पलीवर्द्धमानवत् ।
शीतोदकेन पीतानि श्लीपदं घ्नन्ति दारुणम् ॥ २३ ॥
पिबेत्सर्षपतैलेन श्लीपदानां निवृत्तये ।
पूतीकरञ्जच्छदजं रसं वापि यथा बलम् ॥ २४ ॥
अनेनैव विधानेन पुत्रजीवकजं रसम् ।
प्रयुञ्जीत भिषक् प्राज्ञः कालसाम्यविभागवित् ॥ २५ ॥
सप्तताम्बूलपत्राणां कल्कं तप्तेन वारिणा ।
सहष्टलवणोपेतं श्लीपदं हन्ति सेवितम् ॥ २६ ॥
रजनीगुड़संयुक्तं गोमूत्रेण पिबेन्नरः ।
वर्षोत्थं श्लीपदं हन्ति कंडूं कुष्टं विशेषतः ॥ २७ ॥
वर्षाभूत्रिफलाचूर्णं पिप्पल्या सह योजितम् ।
सक्षौद्रं विलिहेल्लिह्यं चिरोत्थं श्लीपदं जयेत् ॥ २८ ॥
वृद्धदारुकचूर्णन्तु मूत्रसौवीरकादिभिः ।
शीलितं श्लीपदं हन्ति कृच्छ्रं संवत्सरोत्थितम् ॥ २९ ॥
क्षीरेण प्रातरुत्थाय पिबेद्यस्तु बलाद्वयम् ।
सक्षीरं श्लीपदाज्जन्तु रसाध्यादपिमुच्यते ॥ ३० ॥
धान्याम्लं तैलसंयुक्तं कफवातविनाशनम् ।
दीपनं चामदोषघ्न मेतच्छ्लीपदनाशदम् ॥ ३१ ॥
उपोष्य पिष्ट्वा क्षीरेण पिबेदक्ष समं शुचिः ।
कीचकस्य च बीजस्य सप्तपर्णत्वचस्तथा ॥ ३२ ॥
नाड़ी च बीजकस्यापि वातज्वरप्रशान्तये ।
पीत्वा च मासमेकं हि श्लीपदं नाशयेध्रुवम् ॥ ३३ ॥

जिङ्गिण्यास्तु दलैः सम्यक् तुषांबुपरिपेषितैः।
स्वेदः श्लीपदनाशाय कर्त्तव्यः संप्रजानता ॥ ३४ ॥

—०—

गन्धर्वतैलसिद्धां हरीतकीं गोजलेन यः पिबति।
श्लीपदबन्धनमुक्तो भवत्यसौ सप्तरात्रेण ॥ ३५ ॥

इति गोमूत्रहरीतकी।

कृष्णाचित्रकदन्तीनां कर्षमर्द्धपलं पलम्।
विंशतिस्तु हरीतक्यो गुड़स्य तु पलद्वयम् ॥ ३६ ॥
मधुना सह संयुक्तं श्लीपदं हन्ति दारुणम्।

इति कृष्णाद्यो मोदकः।

पिप्पलीत्रिफलादारु नागरं सपुनर्नवम्।
भागैर्द्विपलिकैरेषां तत्समं वृद्धदारकम् ॥ ३७ ॥
काञ्जिकेन हि तच्चूर्णं पिबेत्कर्षप्रमाणतः।
जीर्णे वा परिहारं स्या द्भोजनं सार्वकामिकम् ॥ ३८ ॥
श्लीपदं वातरोगांश्च हन्यात् प्लीहानमेव च।
अग्निञ्च कुरुते घोरं भस्मकञ्च प्रयच्छति ॥ ३९ ॥

इति पिप्पल्याद्यं चूर्णम्।

त्रिकटुत्रिफलाचव्यं दार्वीवरुणगोक्षुरम्।
अलम्बुषागुडूची च समभागानि चूर्णयेत् ॥ ४० ॥
सर्वेषां चूर्णमाहृत्य वृद्धदारुकतत्समम्।
काञ्जिकेन च तत्पेय मक्षमात्रं प्रमाणतः ॥ ४१ ॥
जीर्णे चाऽपरिहारं स्या द्भोजनं सार्वकामिकम्।
नाशयेत् श्लीपदं स्थौल्य मामवातञ्च दारुणम् ॥ ४२ ॥
गुल्मकुष्टारुचिहरं वातश्लेष्मरुजापहम्।

इति वृद्धदारुकचूर्णम्।

निर्गुण्डीतितित्तिड़िका शिखिमन्यदलं पुनर्नवामूलम् ।
भेत्तापापाणानां गोक्षुरुकः पारिभद्रकत्वक् ॥ ४३ ॥
एतैः पलांशैर्यो राशि स्ततः स्याद्‌द्विगुणः खलिः ।
तैलेन सर्पपानान्तु तदेकीकृत्यबुद्धिमान् ॥ ४४ ॥
शालेर्मण्डेन संदध्यात् सप्तरात्रं नवे घटे ।
ततः सर्पपतैलेन पिबेत्कर्षप्रमाणतः ॥ ४५ ॥
जीर्णे भुञ्जीतशाल्यन्नं मुद्गाणां पचितां रसैः ।
पञ्चाशद्दर्पं जातञ्च जातांकुरमपिध्रुवम् ।
त्रिसप्ताहाज्जयत्येष श्लीपदं नात्रसंशयः ॥ ४६ ॥

इति निर्गुण्डादि मण्डः ।

पिप्पलीत्रिफलादारु नागरं सपुनर्नवम् ।
प्रत्येकं षोडशपलं गृहीत्वा चात्र चूर्णयेत् ॥ ४७ ॥
वृद्धदारुकचूर्णेन समभागेन मिश्रयेत् ।
घतचूर्णं पिबेत्कर्षं मानवः काञ्जिकादिभिः ॥ ४८ ॥
जीर्णे त्वपरिहारं स्याद्भोजनं सार्वकामिकम् ।
नाशयेच्छ्लीपदं गुल्मं शूलं प्लीहानमेव च ॥ ४९ ॥
अग्निञ्च कुरुते दीप्तिं सेव्यमानन्तु भस्मकम् ।
उदावर्त्तमजीर्णञ्च हन्त्यामानिलपांडुताम् ।
पिप्पल्यादिरयं ख्यातो विशेषाच्छ्लीपदे हितः ॥ ५० ॥

इति पाठान्तरभेदेन पिप्पल्याद्यं चूर्णम्

काकादनी काकजङ्घा बृहती कण्टकारिका ।
कदम्बपुष्पी मन्दारी लता शुकनसी तथा ॥ ५१ ॥
दग्ध्वा मूत्रेण तद्भस्म स्रावयेत् क्षारकल्पवत् ।
तत्र दद्यात् प्रतीवापं काकोदुम्बरिकारसम् ॥ ५२ ॥

मदनानां पलञ्चार्थं शुकाख्याया रसस्तथा।
एषः चारस्तु पानीयः श्लीपदं हन्ति सेवितः॥ ५३॥
अपचीं गंडमालाञ्च ग्रहणीदोषमेव च।
अभक्ते रोचनञ्चैव हन्यात् सर्वविषाणि च॥ ५४॥
एष्वेव तैलं संसिद्धं यस्याभ्यङ्गेषु योजितम्।
एतत्तानाऽऽमयान् हन्ति ये च दुष्टव्रणा नृणाम्॥ ५५॥

इति काकादन्यादिचारम्।

सुरसा देवकाष्ठञ्च त्रिफला त्रिकटु गजा।
लवणानि च सर्वाणि विडंगग्रंथिचित्रकम्॥ ५६॥
चविका पिप्पलीमूलं गुग्गुलुर्हपुषा वचा।
यवाग्रजञ्च पाठा च शठ्यले हृद्दारुकम्॥ ५७॥
कल्कैश्च कार्षिकैरेतैर्घृतप्रस्थं विपाचयेत्।
दशमूली कषायेण धान्ययूषद्रवेण च॥ ५८॥
दधिमंडसमायुक्तं प्रस्थं प्रस्थं पृथक् पृथक्।
पक्वं तदुद्धृतं कल्कात् पिबेत् कर्षत्रयं हविः॥ ५९॥
श्लीपदं कफवातोत्थं मांसरक्ताश्रितञ्च यत्।
मेदोश्रिताभिघातोत्थं हन्यादेव नसंशयः॥ ६०॥
अपचीं गंडमालाञ्च अन्त्रवृद्धिं तथार्वुदम्।
नाशयेद् ग्रहणीदोषं श्वयथुं गुदजान्यपि॥ ६१॥
परमग्निकरं हृद्यं कोष्ठक्रमिविनाशनम्॥ ६२॥
घृतं सौरेश्वरं नाम श्लीपदं हन्ति दारुणम्।
जीवकेन कृतं ह्येतद्रोगानीकविनाशनम्॥ ६३॥

इति सौरेश्वरं घृतम्

दन्तीमूलपलं दद्याच्चित्रकमूलपलं तथा।
त्रिफलातिविषाचव्यविडङ्गार्धपलोन्मितम्॥ ६४॥

स्नुहीक्षारसमायुक्तं घृतस्य कुडवं पचेत्।
बिन्दुमात्रोपयोगेन वेगः समुपजायते ॥ ६५ ॥
दुर्वारं श्लीपदं हन्ति वृत्रमिन्द्राशनिर्यथा ॥

इति दन्तीघृतम्।

घृतप्रस्थं विपक्तव्यं सव्योषैर्द्दारुकैः।
कल्कैः सौवीरसिद्धं[1] स्याच्छ्लीपदानां निवृत्तये ॥ ६६ ॥
अग्निञ्च कुरुते नृणामामवाते च शस्यते।
एभिः कटु पचेत्तैलं पानाच्छ्लीपदनाशनम् ॥ ६७ ॥

इति द्रुदारुकं घृतन्तैलञ्च।

विडङ्गमरिचार्केषु नागरं चित्रकं तथा।
भद्रदार्वेलवाख्ये च सर्वेषु लवणेषु च ॥ ६८ ॥
तैलं पक्वं पिबेद्वापि श्लीपदानां निवृत्तये ॥

इति विडङ्गाद्यं तैलम्।

यवान्नं कटुतैलेन कूर्म्ममांसञ्च योजयेत्।
श्लीपदानां प्रशान्त्यर्थं प्रशान्तौ दाहमग्निना ॥ ६९ ॥

## इति श्रीवङ्गसेने श्लीपदनिदानचिकित्साधिकारः समाप्तः ॥ ४८ ॥

---

## अथ विद्रधिनिदानमाह।

त्वग्रक्तमांसमेदांसि प्रदूष्याऽस्थिसमाश्रिताः।
दोषाः शोथं शनैर्घोरं जनयन्त्युच्छ्रिता भृशम् ॥ १ ॥

---

१ सन्धानविशेषः।

महामूलं रुजावन्तं वृत्तं वाप्यथवाऽऽयतम्।
स विद्रधिरिति ख्यातो विज्ञेयः षड्विधश्च सः॥ २॥
पृथग्दोषैः समस्तैश्च क्षतेनाप्यसृजा तथा।
षण्णामपि हि तेषां तु लक्षणं सम्प्रचक्षते॥ ३॥
कृष्णोऽरुणो वा विषमो भृशमत्यर्थवेदनः।
चित्रोत्थानप्रपाकश्च विद्रधिर्वातसम्भवः॥ ४॥
पक्वोदुम्बरसंकाशः श्यावो वा ज्वरदाहवान्।
क्षिप्रोत्थानप्रपाकश्च विद्रधिः पित्तसम्भवः॥ ५॥
शरावसदृशः पांडुः शीतः स्निग्धोऽल्पवेदनः।
चिरोत्थानप्रपाकश्च विद्रधिः कफसम्भवः॥ ६॥
तनुपीतसितास्त्वेषा मास्रावाः क्रमशः स्मृताः॥ ७॥
नानावर्णरुजास्रावो घण्टालो विषमो महान्।
विषमं पच्यते वापि विद्रधिः सान्निपातिकः॥ ८॥
तैस्तैर्भावैरभिहते क्षते वा पथ्यकारिणः।
क्षतोष्मावायुविसृतः सरक्तं पित्तमीरयेत्॥ ९॥
ज्वरस्तृष्णा च दाहश्च जायते तस्य देहिनः।
आगन्तुर्विद्रधिर्ज्ञेयः पित्तविद्रधिलक्षणः॥ १०॥
कृष्णस्फोटावृतः श्याव स्तीव्रदाहरुजाकरः।
पित्तविद्रधिलिङ्गस्तु रक्तविद्रधिरुच्यते॥ ११॥
उक्ताविद्रधयो ह्येते तेष्वसाध्यस्त्रिदोषजः।
आभ्यन्तरानतश्चोर्ध्वं विद्रधीन् परिचक्ष्महे॥ १२॥
पृथक् संभूय वा दोषाः कुपितागुल्मरूपिणम्।
वल्मीकवत्समुन्नद्ध मन्तः कुर्वन्ति विद्रधिम्॥ १३॥
गुदे वस्ति मुखेनाभ्यां कुक्षौ वङ्क्षणयोस्तथा।

वृक्कयोः श्लीक्लियकृति हृदये क्लोम्नि चाप्यथ ॥ १४ ॥
तेषामुक्तानि लिङ्गानि बाह्यविद्रधिलक्षणैः ।
अधिष्ठानविशेषेण लक्षणानि निबोध मे ॥ १५ ॥
गुदे वातनिरोधस्तु वस्तौ कृच्छ्राल्पमूत्रता ।
नाभ्यां हिक्का तथाटोपः कुक्षौ मारुतवेदना ॥ १६ ॥
कटीपृष्टग्रहस्तीव्रो लङ्कणोत्थे तु विद्रधौ ।
वृक्कयोः पार्श्वसंकोचः प्लीह्नुरुच्छ्वासावरोधनम् ॥ १७ ॥
सर्वाङ्गप्रग्रहस्तीव्रो हृदिकासश्च जायते ।
श्वासो यकृति हिक्का च पिपासाक्लोमजेऽधिका ॥ १८ ॥
नाभेरुपरिजा पक्वा यान्त्यूर्ध्वमितरेत्वधः ।
अधः स्रुतेषु जीवेत्तु स्रुतेषूर्ध्वं न जीवति ॥ १९ ॥
हृन्नाभिवस्तिवर्ज्याये तेषु भिन्नेषु वाह्यतः ।
जीवेत्कदाचित् पुरुषो नेतरेषु कथञ्चन ॥ २० ॥
साध्याविद्रधयः पञ्च विवर्ज्यः सान्निपातिकः ।
आमपक्वविदग्धत्वं तेषां शोथवदादिशेत् ॥ २१ ॥
आध्मानं बद्धनिःस्यन्दं छर्दिर्हिक्कात्वपान्वितम् ।
रुजाश्वाससमायुक्तं विद्रधिर्नाशयेन्नरम् ॥ २२ ॥
आमो वा यदि वा पक्वो महान्वा यदि चेतरः ।
सर्वो मर्मास्थितश्चात्र विद्रधिः कष्ट उच्यते ॥ २३ ॥
हृन्नाभिवस्तिजः पक्वो वर्ज्यश्च त्रिदोषजः ।
मुष्टिप्रमाणो रक्तस्तु विद्रधिस्तु ततः परः ॥ २४ ॥
गुल्मस्तिष्ठति दोषेषु विद्रधिर्मांसशोणिते ।
विद्रधिः पच्यते तस्मात् गुल्मश्चापि न पच्यते ॥ २५ ॥
पवनेन स्तनशिरा विकृताः प्राप्य योषिताम् ।
सूतानां गर्भिणीनाञ्च सम्भवे श्वयथुर्घनः ॥ २६ ॥

स्तने सदुग्धे वा वाऽपि विद्रधिर्लक्षणान्वितः।
नाड़ीनां सूक्ष्मवक्त्रत्वात् कन्यानां न तु जायते ॥ २७ ॥

---

## अथ चिकित्सामाह।

जलौकापातनं शस्तं सर्वस्मिन्नेव विद्रधौ।
मृदुर्विरेको लघ्वन्नं स्वेदः पित्तोत्तरं विना ॥ २८ ॥
अपक्वे विद्रधौ युञ्ज्यात् व्रणशोथवदौषधम्।
वातघ्नमूलकल्कैस्तु वसातैलघृतप्लुतैः ॥ २९ ॥
सुखोष्णो बहुलो लेपः प्रयोज्यो वातविद्रधौ।
स्वेदोपनाहः कर्त्तव्यः शिग्रुमूलसमन्वितः ॥ ३० ॥
यवगोधूममुद्गैश्च सर्पिः पिष्टैः प्रलेपयेत्।
विलीयते क्षणेनैव सविदग्धस्तु विद्रधिः ॥ ३१ ॥
पुनर्नवादारुविल्व दशमूलभवाम्भसा।
गुग्गुल्वेरण्डतैलं वा पिबेन्मारुतविद्रधौ ॥ ३२ ॥
दशमूलीछिन्नरुहा पथ्यादारुपुनर्नवाः।
ज्वरविद्रधिशोफेषु शिग्रुविश्वयुता हिताः ॥ ३३ ॥
पैत्तिकं सारिवालाजा मधुकैः शर्करायुतैः।
प्रदिह्यात् क्षीरपिष्टैर्वा पयस्योशीरचन्दनैः ॥ ३४ ॥
त्रिवृद्धरीतकीनाञ्च चूर्णं मधुयुतं पिबेत्।
पिबेद्वा त्रिफलाक्वाथं त्रिवृत्कल्काक्षसंयुतम् ॥ ३५ ॥
पञ्चवल्कलकल्केन घृतमिश्रेण लेपनम्।
सर्पिषा शतधौतेन नवनीतेन वा गवाम् ॥ ३६ ॥
इष्टकासिकतालोह गोशकृत्तुषपांशुभिः।
मूत्रैरुष्णैश्च सततं स्वेदयेत् श्लेष्मविद्रधिम् ॥ ३७ ॥

दशमूलीकषायेण सस्नेहेन रसेन वा।
शोथं व्रणं वा कोष्णेन समूलं परिषेचयेत्॥ ३८॥
त्रिफलाशिग्रुवरुणं दशमूलाम्भसा पिबेत्।
गुग्गुलं मूत्रयुक्तं वा विद्रधौ कफसम्भवे॥ ३९॥
शिरां यथोक्तां विध्येच्च कफजे विद्रधौ भिषक्।
रक्तपित्तानिलोत्थेषु केचिद्दाहा भवन्ति हि॥ ४०॥
पित्तविद्रधिवत्सर्वा क्रियानिरवशेषतः।
विद्रध्योः कुशलः कुर्य्या द्रक्तागन्तु निमित्तयोः॥ ४१॥
पिबेदाभ्यन्तरे पथ्यां स च सौभाञ्जनाद्रसम्।
नाराचमथवा सर्पिस्तैलं वाऽथाद्रबूकजम्॥ ४२॥
कृष्णाजाजीविशाला च ह्यपामार्गफलं तथा।
पीतं ह्येतन्निहन्त्याशु विद्रधिं कोष्टसम्भवम्॥ ४३॥
शिग्रुमूलं जले धौतं दरपिष्टं प्रगालयेत्।
तद्रसं मधुना पीत्वा हन्त्यन्तर्विद्रधिं नरः॥ ४४॥
श्वेतवर्षाभुवोमूलं मूलं वरुणकस्य च।
जलेन क्वथितं पीत मपक्वं विद्रधिं जयेत्॥ ४५॥
सौभाञ्जनकनिर्यूहो हिंगुसैन्धवसंयुतः।
अचिराद्विद्रधिं हन्ति प्रातः प्रातर्निषेवितः॥ ४६॥
शमयति पाठामूलं क्षौद्रयुतं तंडुलांबुना पीतम्।
अन्तर्भूतं विद्रधिमुद्दतमाश्वेव मनुजस्य॥ ४७॥

कासीससैन्धवशिलाजतु हिंगुचूर्ण-
मिश्रीकृतो वरुणवल्कलजः कषायः।
अभ्यन्तरोत्थितमपक्वमतिप्रमाणं
नृणामयं जयति विद्रधिमुग्रवीर्य्यम्॥ ४८॥

दन्तीचित्रकगोदन्त चिरविल्वाश्मभारकान्।

आभ्यन्तरे वितरेद्दिद्वानपक्वे शोथविद्रधौ ॥ ४८ ॥
वरुणादिगणक्वाथ मपक्वेऽभ्यन्तरोत्थिते।
ऊषकादिप्रतीवापं पिबेत्संशमनाय वै ॥ ५० ॥
अपक्वे त्वेनदुद्दिष्टं पक्वे तु व्रणवत् क्रिया ॥ ५१ ॥
स्रुतेऽप्यूर्ध्वमधश्चापि मैरेयाम्लसुरासवैः।
पेयो वरुणकादिस्तु मधुशिग्रुरसोऽथवा ॥ ५२ ॥
मधुशिग्रुस्तु मूलेन यवागूं साधुसाधिताम्।
यवंकोलकुलित्थानां सर्वैर्भुञ्जीतमानवः ॥ ५३ ॥
भूनिम्बार्द्धपलं निशापलयुतं दार्व्यापले द्वे तथा।
मूर्वार्धेन पुनर्नवां कुरुसमां दार्व्याः समः सग्रहः[१]।
वासाद्दद्वयुतं पलन्तु कटुकायोज्यातदर्धेन वै।
अश्वाह्वं निशयासमानममृताकर्षास्तु पञ्चैव तु ॥ ५४ ॥
सर्वं वल्कल सप्तकर्षसहितं सुश्लक्ष्णचूर्णीकृतम्।
वासायाः स्वरसेन भावितमिदं त्रीन्पञ्च वै वासरान् ॥ ५५ ॥
भूयस्तद्गुड़वारिणा प्रतिदिनं पीतं पुरश्चेरवौ।
पुंसां विद्रधिनाशनञ्च कथितं तथ्यं स्वयं ब्रह्मणा ॥ ५६ ॥

इति भूनिम्बाद्यं चूर्णम्।

सिद्धं वरुणादिगणे विधिना तत्क्वाथकल्पितं सर्पिः।
शुद्धतनोस्तत्पीतं भिषजा सद्योऽग्निजं प्रथितम् ॥ ५७ ॥
शिरसां शूलमशेषं विद्रधिमन्तःसमुग्रमपहरति।
पञ्चविधं गुल्मगदं शमयति वारिवद्बुभुक्षाऽन्नम् ॥ ५८ ॥

इति वरुणकाद्यं घृतम्।

---

१ शोणानुफलम्।

नक्तमालस्य पत्राणि वरुणादिफलानि च ।
सुमनायाश्च पत्राणि पटोलारिष्टयोस्तथा ॥ ५९ ॥
द्वे हरिद्रे मधूच्छिष्टं मधुकं तिक्तरोहिणी ।
प्रियंगुकुशमूलञ्च निचुलस्य त्वगेव च ॥ ६० ॥
एतेषां कार्षिकैर्भागैः घृतप्रस्थं विपाचयेत् ।
दुष्टव्रणप्रशमनं तथा नाड़ीविशोधनम् ॥ ६१ ॥
सद्यः छिन्नं व्रणानाञ्च करञ्जाद्यमिदं शुभम् ॥ ६१ ॥

इति करञ्जघृतम् ।

तिक्तकटफलकं सर्पि र्महातिक्तमथापि वा ।
धान्वन्तरं वा नैस्वं वा विद्रधौ योजयेत्सदा ॥ ६२ ॥
प्रियंगुधातकीलोध्रं कटफलं द्विनिशान्वितम् ।
एतत्तैलं विपक्तव्यं विद्रधौ व्रणरोपणम् ॥ ६३ ॥

इति प्रियंग्वाद्यं तैलम् ।

द्विपञ्चमूलीत्रिफला कुलित्थविल्वच्छनैः मूलकशिग्रुयुक्तैः ।
तैलं तिलैरण्डजमेतदेभिः सिद्ध हितं विद्रधिगुल्मशूले ॥ ६४ ॥

## इति वङ्गसेने विद्रधिनिदानचिकित्साधिकारः समाप्तः ॥ ४९ ॥

—०—

## अथ व्रणशोथनिदानमाह ।

एकदेशोत्थितः शोथो व्रणानां पूर्वलक्षणम् ।
षड्विधः स्यात् पृथक् सर्वं रक्तागन्तुसमुद्भवः ॥ ११ ॥
शोथाः षडेते विज्ञेयाः प्रागुक्तैः शोथलक्षणैः ।
विशेषः कथ्यते तेषां पक्वाऽपक्वादिनिश्चये ॥ २ ॥

विषमं पच्यते वातात् पित्तोत्थश्चाचिरं चिरम्।
कफजः पित्तवच्छोथो रक्ताङ्गन्तु समुद्भवः॥ ३॥
मन्दोष्मताल्पशोथत्वं काठिन्यं त्वक् सवर्णता।
मन्दवेदनता चैव शोथानामामलक्षणम्॥ ४॥
दह्यते दहने नैव चारेणेव च पच्यते।
पिप्पलिकागणेनेव दश्यते छिद्यते तथा॥ ५॥
भिद्यते चैव शस्त्रेण दण्डेनेव च ताद्यते।
पीड्यते पाणिनेवान्तःसूचिभिरिव तुद्यते॥ ६॥
सोषचोषो विवर्णः स्यादङ्गुल्यैवावघव्यते।
आसने शयने स्थाने शान्तिं वृश्चिकविद्धवत्॥ ७॥
न गच्छेदाततः शोथो भवेदाध्मानवस्तिवत्।
ज्वरस्तृष्णारुचिश्चैतत् पच्यमानस्य लक्षणम्॥ ८॥
वेदनोपशमः शोथो लोहितोऽल्पो न चोन्नतः।
प्रादुर्भावो वलीनाञ्च तोदः कण्डूर्मुहुर्मुहुः॥ ९॥
उपद्रवाणां प्रशमो निम्नतास्फुटनं त्वचः।
वस्ताविवाम्बुसञ्चारः शोथेऽङ्गुलिनिपीडिते॥ १०॥
पूयस्य पीड़यत्येकमन्तमन्ते च पीडिते।
भक्ताकाङ्क्षा भवेच्चैव शोथानां पक्वलक्षणम्॥ ११॥
कफजेषु तु शोथेषु गम्भीरं पाकमेत्यसृक्।
पक्वं लिङ्गञ्च तत् स्पष्टं यत्र स्याच्छीतशोफता॥ १२॥
त्वक् स्यावा च रुजोऽल्पत्वं यत्रस्पर्शत्वमश्मवत्।
रक्तपाकमिति ब्रूयात्तत् प्राज्ञो मुक्तसंशयः॥ १३॥
नर्त्तेऽनिलाद्रुग्न विना च पित्तं पाकः कफाच्चापि विना न पूयः।
तस्माद्धि सर्वे परिपाककाले पचन्ति शोथांस्त्रिभिरेव दोषैः॥१४॥
कालान्तरेणाभ्युदितं तु पित्तं कृत्वा वशे वातकफौ प्रसह्य।

यचल्यत: शोणितमेषपाकी मत: परेषां विदुषां द्वितीय: ॥ १५ ॥
कक्षं समासाद्य यथैव वह्निर्वायोरित: सन्दहति प्रसह्य ।
तथैव पूयो ह्यविनि:सृतो हि मांसं शिरा: स्नायु च खादतीह ॥१६

आमं विदह्यमानं हि सम्यक् पक्वञ्च यो भिषक् ।
जानीयात्स भवेद्वैद्य: शेषास्तस्करवृत्तय: ॥ १७ ॥

इति व्रणशोथनिदानम् ।

—०—

## अथ व्रणरोगनिदानमाह ।

द्विधाव्रण: सविज्ञेय: शरीरागन्तुभेदत: ।
दोषैराद्यस्तयोरन्य: शस्त्रादिक्षतसम्भव: ॥ १८ ॥
स्तब्ध: कठिनसंस्पर्शो मन्दस्रावो महारुज: ।
तुद्यते स्फुरति श्यावो व्रणो मारुतसम्भव: ॥ १९ ॥
तृष्णामोहज्वरक्लेद दाहपाकावदारणै: ।
व्रणं पित्तकृतं विद्याद्गन्धै: स्रावैश्च पूतिकै: ॥ २० ॥
बहुपिच्छो गुरुस्निग्ध: स्तिमितो मन्दवेदन: ।
पांडुवर्णोऽल्पसंक्लेद श्चिरपाकी कफव्रण: ॥ २१ ॥
रक्तो रक्तस्रुतीरक्ता द्विविज: स्यात्तदन्वयै: ॥ २२ ॥
त्वङ्मांसज: सुखे देशे तरुणस्याऽनुपद्रव: ।
धीमतोऽभिनव: काले सुखे साध्य: सुखं व्रण: ॥ २३ ॥
गुणैरन्यतमैर्हीनं स्तत: कृच्छ्रो व्रण: स्मृत: ।
सर्वैर्विहीनो विज्ञेय स्त्वसाध्यो निरुपक्रम: ॥ २४ ॥
पूतिपूयातिदुष्टासृक् स्राव्युत्सङ्गी चिरस्थिति: ।
दुष्टव्रणोऽतिगन्धाद्य: शुद्धलिङ्गविपर्यय: ॥ २५ ॥
जिह्वातलाभोऽतिमृदु: श्लक्ष्ण: स्निग्धोऽल्पवेदन: ।

सुव्यवस्थो निरास्रावः शुद्धो व्रण इति स्मृतः॥ २६॥
व्रणः शुध्यतिगन्धेन मृदुत्वञ्चोपगच्छति।
रोहत्वं परिनिःसङ्गस्तस्माद्गन्धः प्रशस्यते॥ २७॥
कपोतवर्णप्रतिमा यस्यान्ताः क्लेदवर्जिताः।
स्थिराश्च पिटिकावन्तो रोहतीति तमादिशेत्॥ २८॥
दोषप्रकोपाद्व्यायामा दभिघातादजीर्णतः।
हर्षात् क्रोधाद्भयाच्चैव व्रणो रूढोऽपि दीर्यते॥ ३०॥
कुष्ठिनां विषजुष्टानां शोषिणां मधुमेहिनाम्।
व्रणाः कृच्छ्रेण सिध्यंति येषां चापि व्रणे व्रणाः॥ ३१॥
वसां मेदोऽथ मज्जानं मस्तुलुङ्गञ्च यः स्रवेत्।
आगन्तुजो व्रणः सिध्येन्नसिध्येद्दोषसम्भवः॥ ३१॥
मद्यागुर्वाज्य सुमनः पद्मचन्दनचम्पकैः।
सुगन्धादिव्यगन्धाश्च सुमुमूर्णां व्रणाः स्मृताः॥ ३३॥
ये च मर्मसुसंभूता भवन्त्यत्यर्थवेदनाः।
दह्यन्ते चान्तरत्यर्थं वहिः शीताश्च ये व्रणाः॥ ३४॥
दह्यन्ते वहिरत्यर्थं भवन्त्यन्तश्च शीतलाः।
प्राणमांसक्षयश्वासकासारोचकपीड़िताः॥ ३५॥
प्रवृद्धपूयरुधिरा व्रणा येषाञ्च मर्मसु।
क्रियाभिः सम्यगारब्धानसिध्यन्ति च ये व्रणाः॥
वर्जयेदपितान् वैद्यः संरक्षन्नात्मनो यशः।

---

## अथ चिकित्सामाह।

आदौ विम्लापनं कार्य्यं द्वितीयमवसेचनम्।
तृतीयमुपनाहन्तु चतुर्थीं पाटनक्रियाम्॥ ३७॥

पञ्चमं शोधनं कुर्य्यात् षष्ठं रोपणमिष्यते ।
एते क्रमा व्रणस्योक्ताः सप्तमं च क्षतापहम् ॥ ३८ ॥
मातुलिङ्गाग्निमन्थौ च सुरदारुमहौषधम् ।
अहिस्रा चैव रास्ना च प्रलेपो वातशोथनुत् ॥ ३९ ॥
कल्कः काञ्जिकसंपिष्टः स्निग्धः शाखोटकत्वचः ।
सुपर्ण इव नागानां वातशोथविनाशनः ॥ ४० ॥
शिरीषोन्मत्तबीजानि हिंस्राकाला सुदर्शनः ।
तण्डुलीयकमूलञ्च प्रलेपः शोथनाशनः ॥ ४१ ॥
दूर्वा च नलमूलञ्च मधुकं चन्दनं तथा ।
शीतलाश्च गणाः सर्वे प्रलेपः पित्तशोथहा ॥ ४२ ॥

—०—

न्यग्रोधोदुम्बराश्वत्थ प्लक्षवेतसशेलुभिः ।
चन्दनद्वयमञ्जिष्टा यष्टीसुरणगैरकैः ॥ ४३ ॥
शतधौतघृतोन्मिश्रो लेपो रक्तप्रसादनः ।
दाहपाकरुजास्राव शोफनिर्वापणः परः ॥ ४४ ॥

इति वृहन्न्यग्रोधादिलेपः ।

विधिर्विषघ्नो विषजे पित्तघ्नो पित्तजो विधिः ॥ ४५ ॥
अजगन्धाजशृङ्गीञ्च काला सरलमेव च ।
एकाशिकाश्वगन्धा च प्रलेपः श्लेष्मशोथहा ॥ ४६ ॥
पुनर्नवादारुशिग्रु दशमूलमहौषधैः ।
कफवातक्षते शोथे लेपः कोष्णो विधीयते ॥ ४७ ॥
पिण्डोतकावयं लोध्रं पूर्वजैश्च प्रकीर्त्तिताः ।
वर्गास्त्रयः प्रलेपेन शोथे सर्वक्षते हितः ॥ ४८ ॥
स्निग्धाम्ललवणैर्वाते स्निग्धः शीतः पयोन्वितः ।

पित्ते क्षीणाः कफे चार मूत्राद्यस्तत् प्रशान्तये ॥ ४८ ॥
नरावौ लेपनं कुर्य्याद्दत्तश्च पतितं तथा।
न च पर्युषितं चैव शुष्यमाणं न धारयेत् ॥ ५० ॥
न प्रशाम्यति यः शोथः प्रलेपादिविधानतः।
द्रव्याणि पाचनीयानि दद्यात्तत्रोपनाहने ॥ ५१ ॥
शोथयो रूपनाहन्तु कुर्य्यादामविदग्धयोः।
प्रशाम्यत्य विदग्धस्तु विदग्धः पाकमेति च ॥ ५२ ॥
कटुतैलान्वितैर्लेपात् सर्पनिर्मोकभस्मभिः।
चयः शाम्यति गण्डस्य प्रकोपः स्फुटति ध्रुवम् ॥ ५३ ॥
दण्डोत्पलकमूलेन पिटिका संप्रलेपिता।
तंडुलोदकपिष्टेन नाशमायात्यसंशयम् ॥ ५४ ॥
सतिला सातसीबीजा दध्यम्ला सक्तुपिण्डिका।
सकिण्वकुष्ठलवणा शस्ता स्यादुपनाहने ॥ ५५ ॥
शणमूलकशिग्रूणां फलानि तिलसर्षपाः।
सक्तवः किण्वमतसी प्रदेहः पाचनः स्मृतः ॥ ५६ ॥
संपूरणैः स्नेहपानैः संदिग्धैश्चोपनाहनैः।
प्रदेहपरिषेकैश्च वातव्रणमुपाचरेत् ॥ ५७ ॥
शीतलैर्मधुरस्निग्धैः प्रदेहपरिषेचनैः।
अन्नपानाशनैः सर्वैः पित्तव्रणमुपाचरेत् ॥ ५८ ॥
रूक्षैः कटुभिरुष्णैश्च प्रदेहपरिषेचनैः।
कफव्रणं प्रशमयेत्तथा लङ्घनपाचनैः ॥ ५९ ॥
रुजावतां दारुणानां कठिनानां तथैव च।
शोथानां स्वेदनं कार्य्यं ये चाप्येवंविधा व्रणाः ॥ ६० ॥
स्वेदनोपशमाद्वापि तथा पाकभयादपि।
सुचिरोत्पत्ति ते शोथे कार्य्यं शोणितमोक्षणम् ॥ ६१ ॥

सशोथे कठिने श्यामे सरक्ते वेदनावति ।
संरब्धे विषमे वापि व्रणे विस्रावणं हितम् ॥ ६२ ॥
वातपित्तप्रदुष्टेषु दीर्घकालानुबन्धिषु ।
विरेचनं प्रशंसन्ति व्रणेषु व्रणकोविदाः ॥ ६३ ॥
अन्तः पूयिष्ट वक्त्रेषु सदैवोत्सर्गवत्स्वपि ।
गतिमत्सुचरोगेषु भेदनं प्राप्तमुच्यते ॥ ६४ ॥
बालवृद्धासहक्षीण भीरूणां योषितामपि ।
मर्मोपरि च जातेषु पक्वदोषेषु दारणम् ॥ ६५ ॥
चिरबिल्वाग्निको दन्ती चित्रको हयमारकः ।
कपोतकाकगृध्राणां पुरीषाणि च दारणम् ॥ ६६ ॥
अत्यर्थकठिना यान्ति शोथाः पाचनभेदनम् ।
द्रव्याणां पिच्छलानां त्वङ्मूलेन परिपीड़िताः ॥ ६७ ॥
यवगोधूममाषाणां चूर्णानि च समासतः ।
शुष्यमाणमुपेक्षेत प्रदेहं पीड़नं प्रति ॥
न चापि मुखमालिम्पे तथा दोषः प्रसिच्यति ॥ ६८ ॥
ततः प्रक्षालनः क्वाथः पटोलनिम्बपत्रजः ।
अविशुद्धे विशुद्धे तु न्यग्रोधादित्वगुद्भवः ॥ ६९ ॥
पञ्चमूलीद्वयं वाते न्यग्रोधादिश्च पैत्तिके ।
आरग्वधादिको योज्यः कफजे सर्वकर्मसु ॥ ७० ॥
त्रिफला खदिरो दार्वी न्यग्रोधादि बलाकुशाः ।
निम्बकोलकपत्राणि कषायाः शोधने हिताः ॥ ७१ ॥
सद्दधमः सलवणः सकिण्वतिलचित्रकः ।
मेदो दुष्टव्रणान्याशु शोधयेन्मधुमिश्रितः ॥ ७२ ॥
तिलसैन्धवयष्ट्याह्व निम्बपत्रनिशायुगैः ।
त्रिवृद्घृतयुतैः पिष्टैः प्रलेपो व्रणशोधनः ।

एकं वा शारिवामूलं सर्वं व्रणविशोधनम् ॥ ७४ ॥
निम्बपत्रतिलैः कल्को मधुना चतशोधनः।
रोपणः सर्पिषायुक्तो यवकल्केऽप्ययं विधिः ॥ ७५ ॥
व्रणान् विशोधयेद्वर्त्या सूक्ष्मांश्च संधिवर्त्मजान्।
अभयात्रिवृतादन्ती लाङ्गलीमधुसैन्धवैः ॥ ७६ ॥
अपेतपूतिमांसानां मांसस्थानमरोहताम्।
कल्कस्तु रोपणो देयस्तिलजो मधुसंयुतः ॥ ७७ ॥
निम्बपत्रमधुभ्यान्तु युक्तः संशोधनः परः।
पूर्वाभ्यां सर्पिषा वापि युक्तः संरोपणः परः ॥ ७८ ॥
निम्बपत्रघृतचौद्र दार्वीमधुकसंयुता।
वर्त्तिस्तिलानां कल्को वा शोधयेद्रोपयेद्व्रणान् ॥ ७९ ॥
अश्वगन्धारुहालोध्र कट्फलं मधुयष्टिका।
समङ्गधातकीपुष्पं परमं व्रणरोपणम् ॥ ८० ॥
प्रपौण्डरीकं जीवन्ती गोजिह्वाधातकीबला।
रोपणं सतिलं दद्यात् प्रलेपं सघृतं व्रणे ॥ ८१ ॥
यष्टीतिलाः सुपिष्टा वा सघृताव्रणरोपणे।
धातकीचन्दनबला समङ्गामधुकोत्पलैः।
दार्वीमेदातिलैर्लेपः ससर्पिर्व्रणरोपणः ॥ ८२ ॥
निम्बपत्रतिलादन्ती त्रिवृत्सैन्धवमाक्षिकम्।
दुष्टव्रणप्रशमनो लेपः शोधनकेशरी ॥ ८३ ॥
अश्वगन्धाकपिकान्ता मांसीलोध्रनिशायुगैः।
तिलवह्निशिखारिष्टैर्लेपो दुष्टव्रणापहः ॥ ८४ ॥
कट्फलदाड़िमरजनी प्रियंगुफलताम्रपुष्पिकापुष्पैः।
धात्रीरसंसंपिष्टैर्दुष्टव्रणरोपणः कल्कः ॥ ८५ ॥
सर्पपतैलविमिश्रो रविकरसंशोषितस्तु सप्ताहम्।

विषनिशयोः समभागो दुष्टव्रणनाशनः कथितः ॥ ८६ ॥
गम्भीरे शुष्कमांसे च व्रणे चोच्छादनं मतम् ।
अपामार्गोऽश्वगन्धा च तालपत्री तथैव च ।
उच्छादने प्रशस्यन्ते काकोल्यादिश्च यो गणः ॥ ८७ ॥
सुवर्चलपत्रधत्तूर कर्णमोटकुठेरकाः ।
पृथगेते प्रलेपेन गम्भीरव्रणरोपणाः ॥ ८८ ॥
ककुभोदुम्बराश्वत्थ जंबूकफललोध्रजैः ।
त्वक्चूर्णैश्चूर्णिताः चिप्रं संरोहन्ति व्रणाः ध्रुवम् ॥ ८९ ॥
सदाहावेदनावन्तो ये व्रणामारुतोत्तराः ।
तेषां तिलानुमांश्चैव भृष्टान् पयसि निर्वृतान् ।
तेनैव पयसा पिष्ट्वा दद्यादालेपनं भिषक् ॥ ९० ॥
द्विपञ्चमूलकल्केन क्वथितेनाम्भसापि वा ।
सर्पिषासहतैलेन कोष्णेन परिषेचयेत् ॥ ९१ ॥
यवचूर्णं समधुकं सह तैलेन सर्पिषा ।
दद्यात्प्रलेपनं कोष्णं दाहशूलोपशान्तये ॥ ९२ ॥
उच्छूनमधुमांसानां व्रणानामवसादनम् ।
जातीपुष्पं मनोह्वा च सुह्रीकासचिलकैः ॥ ९३ ॥
मासोत्थितांश्चिरोत्थांश्च दुःशोधकठिनान् व्रणान् ।
दण्डोद्भूतसमायुक्ताञ्छोधयेत् चारकर्मणा ॥ ९४ ॥
वातादिभूतान् सस्रावा न्धूपयेदुग्रवेदनान् ।
यवाज्यभूर्जमदन श्रीवेष्टकसुराह्वयैः ॥ ९५ ॥
श्रीवासगुग्गुल्वगुरु सालनिर्यासधूपिताः ।
कठिनत्वं व्रणायान्ति नश्यन्त्यास्राववेदनाः ॥ ९६ ॥
रक्तपित्तविषागन्तु गम्भीरान् सोषणान् व्रणान् ।
चीररोपणभैषज्य शृतेनाज्येन रोपयेत् ॥ ९७ ॥

निर्वापनघृतं चौद्रं तैलं मधुकचन्दनम्।
लेपनं शोथरुग्दाहं रक्तं निर्वापयेद्व्रणात् ॥ ९८ ॥
करञ्जारिष्टनिर्गुण्डी रसो हन्याद्व्रणक्रमीन्।
कलायमिदलीपत्रं कोशाम्राश्थि च पूरणात्।
सुरसादिरसैः सेको लेपनं लशुनेन वा ॥ ९९ ॥
निम्बपत्रवचाहिंगु सर्पिर्लवणसर्षपैः।
धूपनं स्याद्व्रणे देयं क्रमिकंडूरुजापहम् ॥ १०० ॥
रोमाकीर्णो व्रणो यस्तु न सम्यगुपरोहति।
क्षुरकर्त्तरिसंदंशै स्तस्य रोमाणि निर्हरेत् ॥ १०१ ॥
रोमस्थाने यदा रोम व्रणशान्ते च नो भवेत्।
तत्र वैद्येन कर्त्तव्यो रोमसञ्जयनो विधि ॥ १०२ ॥
कपोतवङ्कालशुनं सशोर्षं ससैन्धवं चित्रकमूलमिश्रम्।
तदश्वलिंङ्गस्य रसेन पिष्टं व्रणे.प्रलेपो भवने हि रोम्नाम् ॥१०३॥
ये क्लेदपाकस्रुतिगन्धवन्तो व्रणाश्चिरोत्थाः सरुजः सशोथाः।
प्रयान्ति ते गुग्गुलुमिश्रितेन पीतेन शान्तिं त्रिफलारसेन ॥१०४॥
पटोलनिम्बासनसारधात्री पथ्याद्यनिर्यूहमहर्मुखेषु।
नरः पिबेद्गुग्गुलुना विसर्पविस्फोटदुष्टव्रणशान्तिमिच्छन् ॥१०५॥
मनःशिला समञ्जिष्टा सलाक्षारजनीद्वयम्।
प्रलेपात्सघृतः चौद्र स्त्वग्विशुद्धिकरः परः ॥ १०६ ॥
पूतिगन्धिविवर्णांश्च महास्रावान् महारुजः।
व्रणानशुद्धान् विज्ञाय शोधनैस्समुपाचरेत् ॥ १०७ ॥
जीर्णशाल्योदनं स्निग्धं मल्पमुष्णं द्रवोत्तरम्।
भुञ्जानो जाङ्गलैर्मांसैः शीघ्रं व्रणमपोहति ॥ १०८ ॥
तंडुलीयकजीवन्ती सुनिषण्णकवास्तुकैः।
कालमूलकवार्त्ताकु पटोलैः कारवेल्लकैः ॥ १०९ ॥

सदाडिमैः सामलकैर्घृतभ्रष्टैः ससैन्धवैः ।
अन्यैरेवं गुणैर्वापि मुद्गादीनां रसेन वा ॥ ११० ॥
अम्लं दधि च शाकञ्च मांसमानूपमौदकम् ।
क्षीरं गुरूणि चान्नानि व्रणे च परिवर्जयेत् ॥ ११ ॥
दिवानिद्राविहीनश्च निर्वातगृहसेवकः ।
व्रणीवैद्यवशे तिष्ठन् शीघ्रं व्रणमपोहति ॥ ११२ ॥
व्रणे श्वयथुरायासात् स च रागश्च जागरात् ।
तौ च रुक् च दिवास्वापात्ते च मृत्युश्च मैथुनात् ॥ ११३ ॥
यश्छिनत्त्याममज्ञानाद्यश्च पक्वमुपेक्षते ।
श्वपचाविव मन्तव्यौ तावनिश्चितकारिणौ ॥ ११४ ॥

## इति वङ्गसेने व्रणशोथशारीरव्रणोपक्रमनिदान-चिकित्साधिकारः समाप्तः ॥ ५० ॥

---

## अथागन्तुव्रणनिदानमाह ।

नानाधारामुखैः शस्त्रैः नानास्थाननिपातितैः ।
भवन्ति नानाकृतयो व्रणास्तांस्तान् निबोध मे ॥ १ ॥
छिन्नं भिन्नं तथा विद्धं क्षतं पिच्छितमेव च ।
घृष्टमाहुस्तथा षष्ठं तेषां वक्ष्यामि लक्षणम् ॥ २ ॥
तिर्य्यक् छिन्न ऋजुर्वापि व्रणोयस्त्वायतो भवेत् ।
गात्रस्य पातनं तद्धि छिन्नमित्यभिधीयते ॥ ३ ॥
शक्तिकुन्तेषुखड्गाग्र विषाणैराशयो हतः ।
यत्किञ्चित् प्रस्रवेत्तद्धि भिन्नलक्षणमुच्यते ॥ ४ ॥
स्थानान्यामाग्निपक्वानां मूत्रस्य रुधिरस्य च ।

हृदुन्दुकः फुप्फुसश्च कोष्ठ इत्यभिधीयते ॥ ५ ॥
तस्मिन् भिन्ने रक्तपूर्णे ज्वरो दाहश्च जायते।
मूत्रमार्गगुदास्येभ्यो रक्तं घ्राणाच्च गच्छति ॥ ६ ॥
मूर्च्छाश्वासतृषाध्मानमभक्तच्छन्द एव च।
विण्मूत्रवातसङ्गश्च स्वेदास्रावोऽस्ररक्तता ॥ ७ ॥
लोहगन्धित्वमास्यस्य गात्रदौर्गन्ध्यमेव च।
हृच्छूलं पार्श्वयोश्चापि विशेषं चात्र मे शृणु ॥ ८ ॥
आमाशयस्थे रुधिरे रुधिरं छर्दयत्यपि।
आध्मानमतिमात्रञ्च शूलञ्च भृशदारुणम् ॥ ८ ॥
पक्वाशयगते चापि रुजागौरवमेव च।
अधःकाये विशेषेण शीतता च भवेदिह ॥ १० ॥
सूक्ष्मास्यशल्याभिहतं यदङ्गन्तु शरैः प्लुतम्।
उत्तुण्डितं निर्गतं वा तद्विद्धमिति निर्दिशेत् ॥ ११ ॥
नातिछिन्नं नातिभिन्नमुभयोर्लक्षणान्वितम्।
विषमं व्रणमङ्गेषु तत्क्षतं तु विनिर्दिशेत् ॥ १२ ॥
प्रहारपीड़नाभ्याञ्च यदङ्गं पृथुतां गतम्।
सास्थितत्पिच्चितं विद्यान्मज्जारक्तपरिप्लुतम् ॥ १३ ॥
घर्षणादभिघाताद्वा यदङ्गं विगतत्वचः।
ऊषास्रावान्वितन्तत्तु घृष्टमिति विनिर्दिशेत् ॥ १४ ॥
श्यावं सशोफं पिटिकाचितं च मुहुर्मुहुः शोणितवाहिनञ्च।
मृदूद्गतं बुद्बुदतुल्यमांसं व्रणं सशल्यं सरुजं वदन्ति ॥ १५ ॥
त्वचोऽतीत्य शिरादीनि भित्त्वा वा परिहृत्य वा।
कोष्ठे प्रतिष्ठितं शल्यं कुर्यात्तानुपद्रवान् ॥ १६ ॥
तत्रान्तर्लोहितं पांडुं शीतपादकराननम्।
शीतोच्छ्वासं रक्तनेत्रं मानवञ्च विवर्जयेत् ॥ १७ ॥

भ्रमः प्रलापः पतनं प्रमोहो विचेष्टनं ग्लानिरथोष्णता च ।
स्रस्ताङ्गतामूर्च्छनमूर्द्ध्ववाती स्तीव्रारुजो वातकृताश्च तास्ताः ॥१८॥
मांसोदकाभं रुधिरञ्च गच्छेत्सर्वेन्द्रियार्थो परमस्तथैव ।
दशार्द्धसंख्येष्वथवा चतेषु सामान्यतो मर्म्मसु लिङ्गमुक्तम् ॥१९॥
सुरेन्द्रगोपप्रतिमं प्रभूतं रक्तं स्रवे तत्क्षतजश्च वायुः ।
करोति रोगान् विविधान्यथोक्ताञ्छिरासु विद्धास्वथवा क्षतासु ॥२०
कौब्जं शरीरावयवावसादः क्रियास्वशक्तिस्तुमुलारुजश्च ।
चिराद्व्रणो रोहति यस्य चापि तं स्नायुविद्धं पुरुषं व्यवस्येत् ॥२१॥
शोथाभिवृद्धिस्तुमुलारुजश्च बलक्षयः सर्वत एव शोथः ।
क्षतेषु सन्धिष्वचलाचलेषु स्यात्सर्वकर्मोपरमश्च लिङ्गम् ॥ २२ ॥
घोरारुजो यस्य निशादिनेषु सर्वास्ववस्थासु चनैति शान्तिम् ।
भिषग्विपश्चिद्विदितार्थसूत्र. तमस्थिविद्धं पुरुषं व्यवस्येत् ॥२३॥
यथा स्वमेतानि विभावयेच्च लिङ्गानि मर्म्मस्वभिताड़ितेषु ।
पांडुर्विवर्णः स्पृशितं नवेत्ति यो मांसमर्माण्यभिताडितः स्यात् ॥२४

मर्म्माश्रित व्रणं प्राप्य वायुर्हि सर्वदेहगः ।
वेगैरायासयेद्देहं व्रणायामस्तु तस्यजेत् ॥ २५ ॥
विसर्पः पक्षघातश्च शिर.स्तम्भोऽपतानकः ।
मोहोन्मादव्रणरुजो ज्वरस्तृष्णाहनुग्रह ॥ २६ ॥
कासः छर्दिरतीसारो हिक्काश्वास. सवेपथुः ।
षोडशोपद्रवाः प्रोक्ताः व्रणानां व्रणचिन्तकैः ॥ २७ ॥

—०—

## अथ चिकित्सामाह ।

शुद्धागन्तुव्रणं वैद्यो घृतक्षौद्रसमन्विता ।
शीताक्रियाप्रयोक्तव्या रक्तपित्तोष्मनाशिनी ॥ २८ ॥

क्षुद्रे सद्योव्रणे युञ्ज्यात् ऊर्ध्वं चाधश्च शोधनम्।
लङ्घनञ्च बलं ज्ञात्वा भोजनं चास्रमोचणम्॥ २९॥
घृष्टे विदारिते चैव सुतरामिष्यते विधिः।
यतोह्यल्पं स्रवत्यस्रं पाकस्तेनाशु जायते॥ ३०॥
छिन्ने भिन्ने तथा विद्धे क्षते वासृगऽति स्रवेत्।
रक्तक्षयात्तत्र रुजः करोति पवनो भृशम्॥ ३१॥
स्नेहपानपरीषेक लेपस्वेदोपनाहनम्।
कुर्वीतस्नेहवस्तिञ्च मारुतघ्नौषधैः शृतैः॥ ३२॥
छिन्ने भिन्ने तथा विद्धे क्षते सद्यो भिषग्वरः।
पटसूत्रेण संवेष्ट्य व्रणं व्रणविशारदः॥ ३३॥
मुहुर्मुहु तथा दुःखं न प्राप्नोति भिषग्वरः।
तथा कर्मप्रकुर्वीत सर्वतश्च सुखप्रदम्॥ ३४॥
अथवा दीप्यलवण पोटल्यास्वेदयेन्मुहुः।
संतप्तयालसलोह पात्रसंयोगतः क्रमात्।
दुष्टं रक्तं स्थितं चापि शृङ्गालाब्वादिभिर्हरेत्॥ ३५॥
सद्यःक्षते व्रणे वैद्यः सशूले परिषेचयेत्।
यष्टीमधुकमिश्रेण नातिशीतेन सर्पिषा॥ ३६॥
कषायमधुराः शीताः क्रियाः सर्वास्तु योजयेत्॥ ३७॥
आमाशयस्थे रुधिरे विदध्याद्वमनं नरः।
तस्मिन् पक्वाशयस्थे तु प्रकुर्वीत विरेचनम्॥ ३८॥
क्वाथो वंशत्वगेरण्ड श्वदंष्ट्राऽश्मभिदाकृतः।
हिंगुसैन्धवसंयुक्तः कोष्ठस्थं स्रावयेदसृक्॥ ३९॥
खड्गादिछिन्नगात्रस्य तत्काले पूरितो व्रणः।
गाङ्गेरुकीमूलरसैः सद्यः स्याद्गतवेदनः॥ ४०॥
यवकोलकुलित्थानां निःस्नेहेन रसेन च।

भुञ्जीतान्नं यवागूं वा पिबेत्सैन्धवसंयुताम् ॥ ४१ ॥
अपामार्गस्य संसिक्तं पत्रोत्थेन रसेन वा ।
सद्यो व्रणेषु रक्तन्तु प्रवृत्तं परितिष्ठति ॥ ४२ ॥
कर्पूरपूरितं बद्धं सघृतं सम्प्ररोहति ।
सद्यः शस्त्रचतं तत्तु व्यथापाकविवर्जितः ॥ ४३ ॥
शुनोजिह्वाकृतचूर्णः सद्यचतविरोहणः ।
शुक्रतैलं चते विद्धे रोपणं परमं मतम् ॥ ४४ ॥
मानुषशिरः कपालं तदस्थि लेपनं मूत्रेण ।
रोपणमिदं चतानां योगशतैरप्यसाध्यानाम् ॥ ४५ ॥
स्नेहपानं परिसेकं स्नेहलेपोपनाहनम् ।
स्नेहवस्तिं च कुर्वीत वातघ्नौषधसाधिताम् ॥ ४६ ॥
इति सप्ताह्निकः प्रोक्तः सद्यो व्रणहितो विधिः ।
सप्ताहात्परतो कुर्य्या च्छारीरव्रणवत् क्रियाम् ॥ ४७ ॥
त्रिफलाचूर्णसंयुक्तो गुग्गुलु र्वटकीकृतः ।
निर्यन्त्रणो विबंधघ्नो व्रणशोधनरोपणः ॥ ४८ ॥

इति गुग्गुलुवटिका ।

अमृतापटोलमूल त्रिफलात्रिकटुकृमिघ्नानाम् ।
समभागानां चूर्णं सर्वसमो गुग्गुलोर्भागः ॥ ४९ ॥
प्रतिवासरमेकैकां खादेदचप्रमाणां गुटिकाम् ।
जेतुं व्रणान्वातासृग्गुल्मोदरश्वयथुरोगादीन् ॥ ५० ॥

इत्यमृतागुग्गुलुः ।

जातीनिम्बपटोलपत्रकटुका दार्वीनिशासारिवा ।
मञ्जिष्ठाऽभयसिक्थतुत्थमधुकै र्नक्ताह्वबीजैः समैः ॥
सर्पिः सिद्धमनेन सूक्ष्मवदना मर्माश्रिताः स्राविणो ।
गम्भीराः सरुजो व्रणाः सगतिकाः शुद्ध्यन्तिरोहन्ति च ॥५१॥

वृद्धवैद्योपदेशेन पारम्पर्य्योपदेशतः।
जातीघृते तु संसिद्धे चेप्तव्यं सिक्थकं बुधैः॥ ५२॥

इति जात्यादिघृतम्।

तिक्तासिक्थनिशायष्टी नक्ताह्वाफलपल्लवैः।
पटोलमालतीनिम्ब पत्रैर्व्रण्यं स्मृतं घृतम्॥ ५३॥

इति तिक्ताद्यं घृतम्।

जातिनिम्बपटोलानां नक्तमालस्य पल्लवाः।
सिक्थं समधुकं कुष्टं द्वे निशे कटुरोहिणी॥ ५४॥
मञ्जिष्टापद्मकं लोध्र मभयानीलमुत्पलम्।
तुत्थकं शारिवाबीजं नक्तमालस्य दापयेत्॥ ५५॥
एतानि समभागानि पिष्ट्वा तैल विपाचयेत्।
विषव्रणे समुत्पन्ने स्फोटिके कच्छुरोगके॥
दद्रुविसर्परोगेषु कीटदुष्टेषु सर्वथा।
सद्यः शस्त्रप्रहारेषु दग्धविद्धेषु चैव हि॥ ५७॥
नखदन्तक्षते देहे दुष्टमांसापकर्षणे।
म्रोचणार्थमिदं तैलं हितं शोधनरोपणम्॥ ५८॥

इति जातिकाद्यं तैलम्।

शरपुङ्खालाङ्गली चित्रकारामठरसोनसिन्धुवरैः।
सविषामयैः समांशैः कटुतैलसाधित विधिना॥ ५८॥
विपरीतमल्लसंज्ञं तैलं दुष्टव्रणं तथा नाडीम्।
बहुभेषजैरसाध्या मपथ्यभोक्तुश्च निस्तुदति॥ ६०॥

इति विपरीतमल्लतैलम्।

कुठारकांत्पलशतं क्वाथयेदुल्वणेऽम्भसि।
तेन पादावशेषेण तैलप्रस्थ विपाचयेत्॥ ६१॥

१ २

कल्कैः कुठाराऽपामार्गं प्रोष्टिका मत्त्रिकासु च ।
एतत्तैलं कुठारस्य शोधनं व्रणरोपणम् ॥ ६२ ॥
नाड़ीषु परमाभ्यङ्गो निजास्वागन्तुकेषु च ॥

इति कुठारतैलम् ।

दूर्वास्वरससंसिद्धं तैलं काम्पिल्लकेन वा ।
दार्वीत्वचश्च कल्केन प्रधानं व्रणरोपणम् ॥ ६३ ॥

इति दूर्वाद्य तैलम् ।

बलाग्निखरिकामूलं पिष्ट्वातैलं विपाचयेत् ।
नूलतैलमिति ख्यात मभ्यङ्गान्मूलकान्वितः ॥ ६४ ॥
ये व्रणास्त्विव्रत्ता केचिच्छरीरागन्तवः सदा ।
रोपणार्थं भिषक्तेषा मिदं तैलं प्रयोजयेत् ॥ ६५ ॥

इति नूलतैलम् ।

अमृतागुग्गुलुः श्रेष्ठो हित तैलञ्च बच्चकम् ॥ ६६ ॥
विडङ्गत्रिफलाव्योष चूर्णं गुग्गुलुना समम् ।
सर्पिषावटकी कृत्वा खादेद्वा हितभोजनम् ॥ ६७ ॥
दुष्टव्रणापचीमेह कुष्टनाडीविशोधन. ।

इति व्रणेषु वटिकागुग्गुलुरेषः ।

त्रिकटुत्रिफलामुस्त विडङ्गामृतचित्रकम् ।
पटोलपिप्पलीमूलं हपुषासुरदारु च ॥ ६८ ॥
तुम्बुरुपुष्करं चव्यं विशाला रजनीद्वयम् ।
विड़ं सौवर्चलं क्षारं सैन्धवं गजपिप्पली ॥ ६९ ॥
यावन्त्येतानि सर्वाणि तावद्द्विगुणगुग्गुलुः ।

---

१ सफरीमत्स्य । २ प्रसिद्धा ।

कोलप्रमाणां गुटिकां भक्षयेन्मधुना सह ॥ ७० ॥
कासं श्वासं तथा शोथ मर्शांसि च भगन्दरम्।
हृच्छूलं पार्श्वशूलञ्च कुक्षिवस्तिगुदे रुजम् ॥ ७१ ॥
अश्मरीमूत्रकृच्छ्रञ्च ह्यन्त्रवृद्धिं तथा क्रमीन् ॥ ७२ ॥
चिरज्वरोपसृष्टानां क्षयोपहतचेतसाम्।
आनाहञ्च तथोन्मादं कुष्टान्यष्टोदराणि च ॥ ७३ ॥
नाड़ीदुष्टव्रणान् सर्वान् प्रमेहाच्छ्लीपदं तथा।
सप्तविंशतिको नाम्ना गुग्गुलुः प्रथितो महान्।
धान्वन्तरिकृतो ह्येषः सर्वरोगनिषूदनः ॥ ७४ ॥

इति सप्तविंशतिको गुग्गुलुः। इति सद्योव्रणाः।

—०—

तत्र स्निग्धं रूक्षं वाश्रित्य द्रव्यमग्निर्दहति। अग्निसन्तप्तो हि स्नेहः सूक्ष्ममार्गानुसारित्वात् त्वगादींस्तु प्रविश्याशु दहति। तस्मात् स्नेहदग्धेऽधिका रुजो भवन्ति। तत्र पुष्टं दुर्दग्धं सम्यग्दग्धमतिदग्धमिति चतुर्विधं भवत्यग्निदग्धम्। तत्र विवर्णमात्रं पुष्यते तत्पुष्टं यत्रोत्तिष्ठन्ति स्फोटास्तीव्रदाहवेदनाश्चिरादेवोपशाम्यन्ति तद्दुर्दग्धम्। सम्यग्दग्धमवगाढ़ं तालवर्णं सुस्थितं पूर्वलक्षणमयुक्तं च। अतिदग्धे त्वङ्मांसावलम्बनं गात्रविश्लेषणं शिरास्नायुसन्ध्यस्थि व्यापादनमतिमात्रवेदना ज्वरदाहपिपासा मूर्च्छाश्वासोपद्रवा भवन्ति। व्रणाश्चास्य चिरेणोपरोहन्ति उपरूढा विवर्णा भवन्ति। इति व्रणः पुष्टादिभेदेन वह्निदग्धश्चतुर्विधो भवति।

—०—

## अथ तस्य चिकित्सामाह।

पुष्टस्याग्निप्रतपनं कुर्यादुष्णं तथौषधम्।

शीतासृष्णाच्च दुर्दग्धे क्रियां कुर्यात्ततः पुनः ॥ ७५ ॥
घृतलेपनसेकांस्तु शीतानेवास्य कारयेत् ॥ ७६ ॥
अतिदग्धे तु शीर्णानि मांसानुद्धृत्य शीतलाम् ।
क्रियां कुर्याच्च तां काले शालितंडुलचन्दनैः ।
तिन्दुक्या त्वक् कषायैर्वा घृतमिश्रैः प्रलेपयेत् ॥ ७७ ॥
सम्यग्दग्धे तुगाक्षीरी प्लक्षचन्दनगैरिकैः ।
साम्रतैः सर्पिषायुक्तैः रालेपं कारयेद्भिषक् ॥ ७८ ॥
पथ्या कर्दमजीरक मधुसिक्थकसर्जमिश्रितं लेपात् ।
गव्यं घृतमपहरति पावकजनितं व्रणं सद्यः ॥ ७९ ॥
अन्तरधूमकुठारको दहनजं लेपान्निहन्ति व्रणम् ।
अश्वत्थस्य च शुष्कवल्कलकृतं चूर्णं तथा गुण्डनात् ॥
अभ्यङ्गाद्विनिहन्ति तैलमखिल गण्डूपदैः साधितम् ।
पिष्टा शाल्मलितूलकैर्जलगता लेपात्तथा बालुका ॥ ८० ॥
अस्मिश्चत्वारो योगाः कथिताः ।

दग्धयवभस्मचूर्णं तिलतैलाक्तंप्रलेपनाद्चिरात् ।
हरति शिखिदाहदग्ध भूयोऽभ्यङ्गाद्व्रणश्चाशु ॥ ८१ ॥
पित्तविद्रधिवीसर्प शमनं लेपनादिकम् ।
अग्निदग्धे व्रणे सम्यक् प्रयुञ्जीतविचक्षणः ॥ ८२ ॥
शुभ्रा पुराननीदघ्ना वारिणा परिपेषिता ।
लेपनं तैलदग्धस्य विस्फोटव्याधिनाशनम् ॥ ८३ ॥
अक्षिजेषु तु कर्त्तव्यमिदमाश्चोतनं हितम् ।
शेलुत्वक् त्रिफलादार्वी क्वाथो रोचनयायुतः ॥
स्नुह्यर्कक्षीरसिक्तेऽक्षि गव्य सर्पिर्नि षेचयेत् ॥ ८४ ॥

मधूच्छिष्टं समधुकं लोध्रं सर्जरसं तथा।
मञ्जिष्ठां चन्दनं मूर्वां पिष्ट्वा सर्पिर्विपाचयेत् ॥ ८५ ॥
सर्वेषामग्निदग्धानां व्रणरोपणमुत्तमम्।

इति मधूच्छिष्टाद्यं घृतम्।

उभे हरिद्रे मञ्जिष्ठा मधुकं लोध्रकट्फलम्।
कम्पिल्लकमुभे मेदे लाङ्गलीमूलमेव च ॥ ८६ ॥
पिप्पलीत्रिफला चैव निम्बपत्रञ्च कार्षिकम्।
कपिलायाघृतप्रस्थं पचेत्तद्द्विगुणं पयः ॥ ८७ ॥
पलद्वयञ्च सिक्थस्य सिद्धपूते च दापयेत्।
लाङ्गलीकं घृतं नाम व्रणानां रोपणं परम् ॥ ८८ ॥
अग्निदग्धे विसर्पे च कीटलूताव्रणेषु च।
चिरोत्थेषु च दुष्टेषु नाडीमर्मास्थितेषु च ॥ ८९ ॥

इति लाङ्गलीघृतम्।

सिद्धं कषायकल्काभ्यां पटोल्याः कटुतैलकम्।
दग्धव्रणरुजास्राव दाहविस्फोटनाशनम् ॥ ९० ॥

इति पटोलीतैलम्।

चन्दनं वटशुङ्गाश्च मञ्जिष्ठा मधुकं तथा।
प्रपौण्डरीकं मूर्वा च पतंगं धातकी तथा ॥ ९१ ॥
एतैस्तैलं विपक्तव्यं सर्पिः क्षीरसमायुतम्।
अग्निदग्धे व्रणे श्रेष्ठं तत्क्षणाद्रोपणं परम् ॥ ९२ ॥

इति चन्दनाद्यं तैलम्।

अम्लं दधिञ्च शाकञ्च मांसमानूपवारिजम्।
क्षीरं गुरूणि चान्नानि व्रणिनः परिवर्जयेत् ॥ ९३ ॥

वाताम्रमस्रुतं दुष्टं सशोथं ग्रथितं व्रणम्।
कुर्य्यात्सदाहं कण्डाढ्यं व्रणग्रन्थिरिति स्मृतः॥ ८४॥
क्षारसूत्रं प्रयुञ्जीत दुष्टव्रणहरं विधिम्।

—०—

कम्पिल्लकं विडङ्गानि त्वचं दर्व्यास्तथैव च॥
पिष्टातैलं विपक्तव्यं व्रणग्रन्थिहरं परम्॥ ८५॥

इति कम्पिल्लकतैलम्।

## इति वङ्गसेने सद्योव्रणाग्निदग्धव्रणनिदान चिकित्साधिकारः समाप्तः॥ ५१॥

—०—

## अथ भग्ननिदानमाह।

पतनपीड़नव्यालविषदग्धप्रभृतिभि रभिघातविशेषै रनेकविधिभिरस्थ्यां भङ्गमुपदिशन्तीत्यत आह।
भग्नं समासाद्द्विविधं हुताशकाण्डे च सन्धाविह तत्र सन्धौ।
उत्पिष्टविश्लिष्टविवर्त्तितञ्च तिर्य्यग्गतं क्षिप्तमधश्च षट्कम्॥ १॥
प्रसारणाकुञ्चनवर्त्तनोग्रा रुक् स्पर्शविद्वेषणमेतदुक्तम्।
सामान्यतः सन्धिगतस्य लिङ्गमुत्पिष्टसन्धेः श्वयथुः समन्तात्।
विशेषतो रात्रिभवारुजा च विश्लिष्टजेतौ च रुजा च नित्यम्॥२॥
विवर्त्तिते पार्श्वरुजश्च तीव्रास्तिर्य्यग्गते तीव्ररुजो भवन्ति।
क्षिप्ते ति शूलं विषमारुगस्थ्नोः क्षिप्ते त्वधोरुग्विघटश्च सन्धेः॥३॥
काण्डे त्वतः कर्कटकाश्वकर्णविचूर्णित पिच्छितमस्थिछल्लिका।
काण्डे च भग्नं ह्यतिपातितं च मज्जागतञ्च स्फुटितञ्च वक्रम्॥४॥
छिन्नं द्विधा द्वादशधा च काण्डे स्रस्ताङ्गता शोफरुजातिवृद्धिः।
सम्पीड्यमानो भवतीह शब्दः स्पर्शासहः स्पन्दनतोदशूलाः॥ ५॥

सर्वास्ववस्थासु नमर्मलाभो भग्नस्य काण्डे खलु चिह्नमेतत्।
भग्नन्तु काण्डे बहुधा प्रयाति समासतो नामभिरेव तुल्यम् ॥६॥

अल्पाग्निनोऽनात्मवतो जन्तोर्वातात्मकस्य च।
उपद्रवैर्वा जुष्टस्य भग्नं कृच्छ्रेण सिध्यति ॥ ७ ॥
भिन्नं कपालं कट्यान्तु सन्धिमुक्तं तथा च्युतम्।
जघनं प्रतिपिष्टञ्च वर्जयेत्तु विचक्षणः ॥ ८ ॥
असंश्लिष्टं कपालञ्च ललाटे चूर्णितञ्च यत्।
भग्नं स्तनान्तरे शङ्खे पृष्ठे मूर्ध्नि तु वर्जयेत् ॥ ९ ॥
सम्यक् संहितमप्यस्थि दुर्निक्षेपनिबन्धनात्।
संक्षोभादापि यद्गच्छे द्विक्रियां तच्च वर्जयेत् ॥ १० ॥
तरुणास्थीनि नम्यन्ते भिद्यन्ते नलकानि च।
कपालानि विभज्यन्ते स्फुटन्ति रुचकानि च ॥ ११ ॥

—०—

## अथ भग्नचिकित्सामाह।

आदौ भग्नं विदित्वा तु सेचयेच्छीतलाम्बुना।
पङ्केनालेपन कार्यं बन्धनं च कुशान्वितम् ॥ १२ ॥
अवनामितमुन्नम्येदुन्नतं चावपीड़येत्।
आञ्छेदतिक्षिप्तमधोगतञ्चोपरिवर्जयेत् ॥ १३ ॥
पलाशोदुम्बराश्वत्थ कदम्बनिचुलत्वचः।
वंशसर्जार्जुनानाञ्च कुशार्थमुपसंहरेत् ॥
पटस्योपरिबध्नीया भगाढ़ं शिथिलं न वा ॥ १४ ॥
सप्तसप्तदिनाच्छीते घर्मे मुञ्चेत्त्र्यहात् त्र्यहात्।
समाने पंचपञ्चाहा द्भग्नं दोषवशेन च ॥ १५ ॥
आलेपनार्थं मञ्जिष्ठा मधुकं चाम्बुपेषितम्।

शतधौतघृतोन्मिश्रं शालिपिष्टञ्च लेपनम् ॥ १६ ॥
सद्योऽभिघातजनिता रागरुजः श्वयथवः प्रशाम्यन्ति।
पिष्टकलवणलेपादङ्कोलफलरसाभ्यां वा ॥ १७ ॥
न्यग्रोधादिकषायन्तु सुशीतं परिषेचने।
पञ्चमूलीविपक्वन्तु क्षीरं दद्यात्सवेदने ॥ १८ ॥
सुखोष्णमवचार्य्यं वा तत्र तैलं विजानता।
अविदाहिभिरन्नैश्च पौष्टिकैः समुपाचरेत् ॥ १९ ॥
ग्लानिर्हि न हिता तस्य सन्धिविश्लेषकारिका ॥ २० ॥
मांसं मांसरसक्षीरं सर्पिर्यूषः सतीनजः।
बृंहणं चान्नपानञ्च देयं भग्नाय जानता ॥ २१ ॥
सृष्टिक्षीरं ससर्पिष्कं मधुरौषधसाधितम्।
शीतलं लाक्षयायुक्तं प्रातर्भग्नः पिबेन्नरः ॥ २२ ॥
सघृतेनास्थिसंहारं लाक्षागोधूममर्जुनम्।
सन्धिमुक्तेऽस्थिभग्ने पिबेत् क्षीरेण वा पुनः ॥ २३ ॥
चूर्णं गुरेण संयोज्य घृतेनार्जुनलाक्षयोः।
भग्नं सन्धानमायाति लीढ्वा क्षीरघृताशनः ॥ २४ ॥
मूलं शृङ्गालविन्नाया पीत्वा मांसरसेन तु।
चूर्णीकृत्य त्रिसप्ताहा दस्थिभग्नमपोहति ॥ २५ ॥
आभाचूर्णं मधुयुतं मस्थिभग्ने त्र्यहं पिबेत्।
पिलाप्यस्थिभवेत् सम्यग् वज्रसारनिभं दृढम् ॥ २६ ॥
अङ्कोलफलकल्कः सौवीरस्तैलविमिश्रितः खेदाद्।
भग्नाभिहतरुजाघ्नं रथवौषधसाधितं श्वयथौ ॥ २७ ॥

—०—

* आभाफलत्रिकव्योषैः सर्वैरेतैः समांशकैः।

तुल्यगुग्गुलुना योऽयं भग्नसन्धिप्रसाधनम् ॥ २८ ॥

इत्याभागुग्गुलुः।

लाक्षास्थिसंहृत् ककुभोऽश्वगन्धाचूर्णीकृतो नागबला पुरश्च।
सभग्नमुक्तास्थिरुजं निहन्या दङ्गानि कुर्यात् कुलिशोपमानि ॥२९॥

इति लाक्षादिगुग्गुलुः।

रात्रौ रात्रौ तिलान् कृष्णान् वासयेदस्थिरे जले।
दिवा दिवा शोषयित्वा गवां क्षीरेण भावयेत् ॥ ३० ॥
तृतीयं सप्तरात्रन्तु भावयेन्मधुरांबुना।
ततः क्षीरं पुनः पीतान् शुष्कान् सूक्ष्मान्विचूर्णयेत् ॥ ३१ ॥
काकोल्यादिं श्वदंष्ट्राञ्च मञ्जिष्ठां शारिवां तथा।
कुष्ठं सर्जरसं मांसीं सुरादारु सचन्दनम् ॥ ३२ ॥
शतपुष्पाञ्च संचूर्ण्य तिलचूर्णेन योजयेत्।
पीड़नार्थं तु कर्त्तव्यं सर्वगन्धैः शृतं पयः ॥ ३३ ॥
चतुर्गुणेन पयसा तत्तैलं पाचयेत् पुनः।
एलामंशुमतीपत्रं जीवन्ती तगरं तथा ॥ ३४ ॥
लोध्रं प्रपौण्डरीकञ्च तथा कालानुशारिवाम्।
शैलेयकं क्षीरशुक्लामनन्तां समधूलिकाम् ॥ ३५ ॥
पिष्ट्वा शृङ्गाटकं चैव प्रागुक्तान्यौषधानि च।
एभिर्वा विपचेत्तैलं शास्त्रविन्मृदुनाग्निना ॥ ३६ ॥
एतत्तैलं सदा पथ्यं भग्नानां सर्वकर्मसु।
आक्षेपके पक्षघाते तालुशोषे तथार्दिते ॥ ३७ ॥
मन्यास्तम्भे शिरोरोगे कर्णरोगे हनुग्रहे।
बाधिर्ये तिमिरे चैव ये च स्त्रीषु क्षयं गताः ॥ ३८ ॥
पथ्यं पाने तथाभ्यङ्गे नस्ये वस्तिषु भोजने।
ग्रीवास्कन्धोरसां वृद्धिरेतेनैव प्रजायते ॥ ३९ ॥

सुखञ्च पद्मप्रतिमं ससुगन्धिसमीरणम् ।
गन्धतैलमिदं नाम्ना सर्ववातविकारनुत् ॥ ४० ॥
राजार्हमेतत्कर्त्तव्यं राज्ञामेव चिकित्सकैः ।
तिलचूर्णसमं तत्र मिलितं चूर्णमिष्यते ॥ ४१ ॥

इति गन्धतैलम् ।

पूर्वं वयसि जातं हि भग्नं सुकरमादिशेत् ।
अल्पदोषस्य जन्तोश्च काले तु समशीतले ॥ ४२ ॥
प्रथमे वयसित्वेव मासात्सन्धिस्थिरो भवेत् ।
मध्यमे द्विगुणात् कालादन्तमे त्रिगुणात्तथा ॥ ४३ ॥
नेति पाकं यथा भग्नं तथा यत्नेन रचयेत् ।
पक्वं हि स्याच्चिरात्सायुं तद्धि कृच्छ्रेण सिध्यति ॥ ४४ ॥
पतनादभिघाताद्वा शूनमङ्गं यदव्रणम् ।
शीतान् सेकान् प्रदेहांश्च भिषक् तस्यावचारयेत् ॥ ४५ ॥
सव्रणस्य तु भग्नस्य व्रणं सर्पिर्मधूत्तरैः ।
प्रतिसार्य कषायैश्च शेषं भग्नवदाचरेत् ॥ ४६ ॥
वातव्याधिविनिर्दिष्टान् स्नेहांस्तत्रापि योजयेत् ।
लवणं कटुकं क्षारं मम्लमातपमैथुनम् ।
व्यायामं न च सेवेत भग्नो रूक्षान्नमेव च ॥ ४७ ॥
भग्नसन्धिमनाविद्धं महीनाङ्गमनुल्बणम् ।
सुखचेष्टाप्रचारञ्च सम्यक् सन्धितमादिशेत् ॥ ४८ ॥

इति वङ्गसेने भग्ननिदानचिकित्साधिकारः समाप्तः ॥ ५२ ॥

## अथ व्रणनाड़ीनिदानमाह।

यः शोफमाममिति पक्कमुपेचतेऽज्ञो
यो वा व्रणं प्रचुरपूयमसाधुवृत्तः।
अभ्यन्तरं प्रविशति प्रविदार्य्य तस्य
स्थानानि पूर्वविहितानि ततः सपूयः॥ १॥
तस्यातिमात्रगमनाद्गतिरिष्यते तु
नाड़ीवयद्वहति तेन मता तु नाडी॥ २॥
दोषैस्त्रिभिर्भवति सा पृथगेकशश्च
संमूर्च्छितैरपि च शल्यनिमित्ततोऽन्या॥ ३॥
तत्रानिलात्परुषसूक्ष्ममुखी सशूला
फेनानुविद्धमधिकं स्रवति क्षपासु।
पित्ताच्च तृट्ज्वरकरी परिदाहयुक्ता
पीतं स्रवत्यधिकमुष्णमहस्सु चापि॥ ४॥
ज्ञेया कफाद्बहुघनार्जुनपिच्छिलास्रा
स्तब्धा सकण्डुररुजा रजनीप्रवृद्धा।
दोषद्वयाभिहितलक्षणदर्शनेन
तिस्रो गति व्यतिकरप्रभवांस्तु विद्यात्॥ ५॥
दाहज्वरश्वसनमूर्च्छन वक्त्रशोषा
यस्यां भवन्त्यभिहितानि च लक्षणानि।
तामादिशेत्पवनपित्तकफप्रकोपाद्
घोरामसुक्षयकरीमिव कालरात्रिम्॥ ६॥
नष्टं कथञ्चिदनुमार्गमुदीरितेषु
स्थानेषु शल्यमचिरेण गतिं करोति।
सा फेनिलं मथितमुष्णमसृग्विमिश्रं
स्रावं करोति सहसा सरुजञ्च नित्यम्॥ ७॥

नाड़ीविदोषप्रभवा न सिध्येच्छोषायतस्तः खलु यत्नसाध्याः ॥८

—०—

## अथ चिकित्सामाह।

तत्रानिलोत्थामुपनाह्यपूर्वमशेषतः पूयगतिं विदार्य।
फलैरपामार्गभवैः सुपिष्टैः ससैंधवैः संपरिपूर्य बध्नीत्।
प्रचालने वापि यदा व्रणस्य योज्यं महद्यत् खलु पञ्चमूलम् ॥९
हिंस्रां हरिद्रां कटुकीं बचाञ्च गोजिह्विकाञ्चापि सपञ्चमूलम्
संह्लत्तैलं विपचेद्व्रणस्य संशोधनं पूरणरोपणञ्च ॥ १० ॥

इति हिंस्राद्यं तैलम्।

पित्तात्मिकां प्रागुपनाह्य धीमा तुल्यारिकाभिः सपयो घृताभिः
निपात्य शस्त्रं तिलनागदन्ती मञ्जिष्ठकल्कैः परिपूरयेच ॥
प्रचालने वापि हरिद्रसोमनिम्बाः प्रयोज्याः कुशलेन नित्यम् ॥१
श्यामात्रिभण्डीत्रिफलासु सिद्धं हरिद्रयातिल्वकहृचकेण।
घृतं सदुग्धं व्रणतर्पणेन हन्यान्नतिं कोष्ठगतापि या स्यात् ॥ १२ ॥

इति श्यामाघृतम्।

नाडीकफोत्थामुपनाह्य पूर्वं कुलित्थसिद्धार्थकशक्तुविल्वैः।
मृद्दीकृतामेकगतिं विदित्वा निपातयेच्छस्त्रमशेषकारि ॥ १३ ॥
दद्याद्व्रणे निम्बतिलाग्नि दन्तीसुराष्ट्रजाः सैंधवसंप्रयुक्ताः।
प्रचालने वापि करञ्जनिम्बजात्यार्कपीलुः स्वरसाः प्रयोज्याः ॥१४

स्वर्जिकासिन्धुदन्त्यग्नि रूपिका जलनीलिका।
खरमञ्जरिबीजेषु तैलं गोमूत्रसाधितम् ॥
दुष्टव्रणप्रशमनं कफनाड़ीव्रणापहम् ॥ १५ ॥

इति स्वर्जिकाद्यं तैलम्।

सैंधवार्कमरिचज्वलनाख्यैः कारवेल्लरजनीद्वयसिद्धम् ।
तैलमेतदचिरेण निहन्याद् दूरगामपि कफानिलनाड़ीम् ॥१६॥

इति सैंधवाद्यं तैलम् ।

नाडीन्तु शल्यप्रभवां विदार्य्य निर्घात्यशल्यं प्रविशोध्यमार्गम् ।
बन्धेद्व्रण चौद्रघृतप्रमादाद्दत्वा तिलाच्छोध्यचरोपयेच्च ॥ १७ ॥
कुम्भीकखर्जूरकपित्थविल्वबनसतोनाञ्च शलाटुवर्गं ।
क्षत्वा कषाय विपचेत्तु तैलमवाप्य मुस्तं सरलं प्रियंगुम् ॥ १८ ॥
सोगन्धिक मोचरसाऽह्रिपुष्पलोध्राणि दत्वा खलु धातकी वा ।
एतेन शल्यप्रभवा हि नाड़ी रोहेद्व्रणो वा सुखमाशु चैव ॥ १९ ॥

इति कुम्भीकाद्य तैलम् ।

स्नुह्यर्कदुग्धदार्वीणां वर्त्तिं क्षत्वा प्रपूरयेत् ।
एष सर्वशरीरस्थां नाड़ीं हन्यात्प्रयोगराट् ॥ २० ॥
आरग्वधनिशाकालं चूर्णयेत् चौद्रसयुतम् ।
मूले वर्त्तिर्व्रणे योज्या शोधिनी गतिनाशिनी ॥ २१ ॥
वर्त्तीकृतं माक्षिकसप्रयुक्तं नाड़ीघ्नमुक्तं लवणोत्तमं वा ।
दुष्टव्रणे यद्विहितं तु तैलं तत्सेव्यमानं गतिमाशु हन्ति ॥ २२ ॥
जात्यर्क शम्याककरञ्जदन्ती सिन्धूत्थ सौवर्चलयावसूकैः ।
वर्त्तिः कृता हन्त्यचिरेण नाड़ीं स्नुक्चीरपिष्टा सह चित्रकेण ।
विभीतकाम्राश्थिवटप्रवालहरेणुका शङ्खिनीबीजमिश्रा ॥
वराहविट् सूक्ष्ममपीप्रदेया नाड़ीस्तु तैलेन विमिश्रयित्वा ॥२३॥
मेषरोमसमपीतस्थां कटुतैलविपाचिताम् ।
नाड़ीव्रण चिरोद्भूत जयेत्तूलकसगमात् ॥ २४ ॥

इति मेषरोममषी ।

कर्परस्य रसेनैव कटुतैलं विपाचयेत् ।

सिन्दूरकल्कितं नाड़िं दुष्टव्रणविसर्पनुत् ॥ २५ ॥

इति कर्पूराद्यं तैलम्।

स्वर्जिकासैंधवं दन्ती नीलीमूलं फलं तथा ।
मूत्रे चतुर्गुणे सिद्धं तैलं नाड़ीव्रणापहम् ॥ २६ ॥

इति स्वर्जिकाद्यं तैलम्।

सर्वो व्रणक्रमः कार्यो शोधनारोपणादिकः ।
गुग्गुलुत्रिफलाव्योषैः समांशैराज्ययोजितैः ॥
अक्षप्रमाणां गुटिकां खादेदेकामतन्द्रितः ॥ २७ ॥
नाडीं दुष्टव्रणं शूलं गुदावर्त्तं भगन्दरम् ।
गुल्मञ्च गुदजान् हन्यात् पक्षिराट् पन्नगानिव ॥ २८ ॥

इति समाङ्गगुग्गुलुः।

याश्चिव्रणीये विहितास्तु वर्त्यस्ताः सर्वनाड़ीषु भिषग्विदध्यात् ॥२८॥

कृशदुर्बलभीरूणां नाडीं मर्माश्रितामपि ।
क्षारसूत्रेण तां छिन्द्या न्नशस्त्रेण कदाचन ॥ ३० ॥
एषण्यागतिमन्विश्य क्षारसूत्रानुसारिणीम्।
सूचीविदध्या न्नाद्यान्ते प्रोन्नाम्याशु विनिर्हरेत् ॥ ३१ ॥
सूत्रस्यान्तं समानीय गाढ़ं बन्धं समाचरेत् ।
ततः क्षारबलं वोच्य सूत्रमन्यत्प्रवेशयेत् ॥ ३२ ॥
क्षाराक्त मतिमान् वैद्यो यावन्न छिद्यते गतिः ।
भगन्दरेप्ययेष विधिः कार्यो वैद्येन जानता ॥ ३३ ॥
अर्बुदादिषु चोत्क्षिप्य मूले सूत्रं निधापयेत् ।
सूचिभिर्यववक्राभि राचितं वा समन्ततः ॥
मूले सूत्रेण बध्नीया च्छिन्ने चोपचरेद्व्रणम् ॥ ३४ ॥

## इति श्रीवङ्गसेने नाड़ीव्रणनिदानचिकित्साधिकारः समाप्तः ॥ ५३ ॥

## अथ भगन्दरनिदानमाह।

गुदस्य द्व्यङ्गुले क्षेत्रे पार्श्वतः पिटिकार्तिकृत्।
भिन्ना भगन्दरो ज्ञेयः स च पञ्चविधो मतः॥ १॥
कटीकपालनिस्तोद दाहकण्डूरुजादयः।
भवन्ति पूर्वरूपाणि भविष्यति भगन्दरे॥ २॥
कषायरूक्षैरतिकोपितोऽनिलस्त्वपानदेशे पिटिकां करोति याम्।
उपेक्षणात्पाकमुपैति दारुणं रुजा च भिन्नारुणफेन वाहिनी॥३॥
तत्रागमो मूत्रपुरीषरेतसां व्रणैरनेकैः शतपोनकं वदेत्॥ ४॥
प्रकोपनैः पित्तमतिप्रकोपितं करोति रक्तां पिटिकां गुदस्थिताम्।
तदाशु पाकां हिमपूयवाहिनीं भगन्दरं चोष्ट्रशिरोधरं वदेत्॥५॥
कण्डूयनो घनस्रावी कठिनो मन्दवेदनः।
श्वेतावभासः कफजः परिस्रावी भगन्दरः॥ ६॥
बहुवर्णरुजास्रावः पिटिका गोस्तनोपमाः।
शम्बूकावर्त्तवन्नाड़ी शम्बूकावर्त्तको मतः॥ ७॥
क्षतात्गतिः पायुगता विवर्द्धते ह्युपेक्षणात्साक्रिमिभिर्विदार्यते।
प्रकुर्वते मार्गमनेकधामुखे र्व्रणैस्तसुन्मार्गिभगन्दरं वदेत्॥ ८॥
घोराः साधयितुं दुःखाः सर्व एव भगन्दराः।
तेष्वऽसाध्यस्त्रिदोषोत्थः क्षतजश्च विशेषतः॥ ९॥
वातमूत्रपुरीषाणि क्रमयः शुक्रमेव च।
भगन्दरात् स्रवन्तस्तु नाशयन्ति तमातुरम्॥ १०॥

—०—

## अथ चिकित्सामाह।

अथास्य पिटिकामेव तथा यत्नादुपाचरेत्।
शुद्धास्रस्रुतिसेकाद्यै र्यथा पाकं न गच्छति॥ ११॥

वटपत्रे ऽष्टकाशुण्ठी गुडूची सपुनर्नवाः ।
सुपिष्टः पिटिकाऽवस्थे लेपः शस्तो भगन्दरे ॥ १२ ॥
पिटिकानामपाकाना मपतर्पणपूर्वकम् ।
कर्म्मकुर्य्याद्विरेकांतं भिन्नानां वक्ष्यते क्रिया ॥ १३ ॥
एषणीपाटनक्षार बह्निदाहादिकं क्रमम् ।
विधाय व्रणवत्कार्य्यं यथा दोषं यथा क्रमम् ॥ १४ ॥
पयः पिष्टैस्तिलैराज्य मधुकैश्च सुशीतलैः ।
भगन्दरे प्रशस्तोऽयं सरक्ते वेदनावति ॥ १५ ॥
सुमना वटपत्राणि गुडूचीविश्वभेषजम् ।
सैन्धवं तक्रपिष्टञ्च लेपाद्धन्ति भगन्दरम् ॥ १६ ॥
त्रिवृत्तिलानलादन्ती मञ्जिष्ठा सह सर्पिषा ।
उत्सादन भवेदेत सैंधवक्षौद्रसंयुतम् ॥ १७ ॥
खदिराम्बुरतो भूत्वा कषायं त्रैफलं पिबेत् ।
महिषाक्षविडङ्गानां भगन्दरबिनाशनम् ॥ १८ ॥
जंबूकमांसमश्नीयात् प्रकारैर्व्यञ्जनादिभि ।
अजीर्णवर्ज्जीमासेन मुच्यते सभगन्दरात् ॥ १९ ॥
न्यग्रोधादिगणो यश्च हित शोधनरोपण ।
तैल घृत वा तत्पक्व भगन्दरविनाशनम् ॥ २० ॥
तिलाज्योतिषतीकुष्ट लाङ्गलिगिरिकर्णिका ।
शताह्वात्रिवृतादन्त्यः शोधनाश्च भगन्दरे ॥ २१ ॥
त्रिलाभयाकुष्टमरिष्टपत्रं निशे बला लोध्रमगारधूमम् ।
भगन्दरे चाप्युपदशके च दुष्टव्रणे शोधनरोपणाय ॥ २२ ॥
स्नुह्यर्कदुग्धदार्वीभि र्वर्त्तिं कृत्वा विचक्षण ।
भगन्दरगति ज्ञात्वा पूरयेत्ता प्रयत्नत ॥
एषा सर्वशरीरस्थां नाडीं हन्ति न संशयः ॥ २३ ॥

त्रिफलारससंयुक्तं विड़ालास्थिप्रलेपनम्।
भगन्दरं निहन्त्याशु दुष्टव्रणहरं परम्॥ २४॥
कुष्टं त्रिवृत्तिलादन्ती मागध्यः सैंधवं मधु।
रजनीत्रिफलातुत्थं हितं स्याद्व्रणशोधनम्॥ २५॥
रसाञ्जनं हरिद्रे द्वे मञ्जिष्टानिम्बपल्लवाः।
त्रिवृत्तेजोवती दन्ती कल्को नाड़ीव्रणापहः॥ २६॥
ज्योतिषमती लाङ्गली च श्यामादन्तीत्रिवृत्तिला।
कुष्टं शताह्वागोलोमी मूर्वाशोधनमिष्यते॥ २७॥
मधुतैलयुता विड़ंग त्रिफलामागधिकाकणाय लीढ़ाः।
कुष्टभगन्दरसत नाड़ीव्रणरोपणा भवन्ति॥ २८॥
चित्रकार्कौ त्रिवृत्पाठे मलयूहयमारकौ।
सुधां वचां लाङ्गलकीं हरितालं सुवर्चलम्॥ २९॥
ज्योतिष्मतीञ्च संहृत्यत्तैलं धीरो विपाचयेत्।
एतद्विष्यन्दनं नाम तैलं दद्याद्भगन्दरे।
शोधनं रोपणञ्चैव सलवर्णकरणं तथा॥ ३०॥

इति विष्यन्दनतैलम्।

निशार्कचीरसिन्धूत्थ पुराऽश्वहरवल्कैः।
सिद्धमभ्यञ्जनं तैलं भगन्दरहरं परम्॥ ३१॥

इति निशाद्यं तैलम्।

करवीरनिशादन्ती लाङ्गलीलवणाग्निभिः।
मातुलुङ्गकवत्साह्वैः पचेत्तैलं भगन्दरे॥ ३२॥

इति करवीराद्यं तैलम्।

त्रिफलापुरकृष्णानां त्रिपञ्चैकांशयोजिता।

गुटिकाशोथगुल्मार्शो भगन्दरवतां हिता ॥ ३३ ॥
इति नवकार्षिको गुग्गुलुः।

नाड्यन्तरे व्रणः कुर्य्या द्भिषक् तु शतपोनके।
ततस्तेष्ववरूढेषु शेषानाड़ीरुपाचरेत् ॥ ३४ ॥
व्याधौ तत्र बहुच्छिद्रे भिषजा तु विजानता।
अर्धलाङ्गलिकः छेदः कार्यो लाङ्गलिकोऽपि च ॥ ३५ ॥
सर्वतो भद्रको वापि कार्यो गोतीर्थकोऽपि वा।
द्वाभ्यां समाभ्यां पार्श्वाभ्यां छेदो लाङ्गलिको मतः ॥ ३६ ॥
ह्रस्वमेकतरं यत्तु सोऽर्द्धलाङ्गलिकः स्मृतः।
सेवनीं वर्जयित्वा तु चतुर्द्धादारिते गुदे ॥ ३७ ॥
सर्वतो भद्रकं छेद माहुः छेदविदो जनाः।
पार्श्वादागतशस्त्रेण छेदो गोतीर्थको मतः ॥ ३८ ॥
सर्वानास्रावमार्गांस्तु दहेद्वैद्यस्तथाग्निना।
अथोद्ग्रीवमेषिण्या छित्वा चारं निपातयेत् ॥
पूतिमांसव्यपोहार्थं मग्निरत्र न पूजितः ॥ ३९ ॥
उत्कृत्याऽऽस्रावमार्गन्तु परिस्रारिणि बुद्धिमान्।
चीरेणाऽऽस्रावितगतिं दहेद्धुतवह्निना वा ॥ ४० ॥
गतिमन्विष्यशस्त्रेण छिन्द्यात् खर्जूरपत्रकम्।
चन्द्रार्द्धचन्द्रचक्राञ्च सूचीमुखमवाङ्मुखम् ॥
छित्वाग्निना दहेत्सम्यगेवं चारेण वा पुनः ॥ ४१ ॥
येषान्तु शस्त्रपतना द्वेदना ह्यतिजायते।
तत्राशु तैलेनोष्णेन परिषेकः प्रशस्यते ॥ ४२ ॥
आगन्तुजे भिषङ्नाड़ीं शस्त्रेणोत्कृत्य यत्नतः।
यथोष्टेनाग्निवर्णेन तप्तया वा शलाकया ॥ ४३ ॥
दहेद्यथोक्तं मतिमां स्तं व्रणं सुसमाहितः ॥ ४४ ॥

व्यायामं मैथुनं युद्धं पृष्ठयानं गुरूणि च।
संवत्सरं परिहरे दुपरूढ़व्रणो नरः ॥ ४५ ॥

## इति श्रीवङ्गसेने भगन्दरनिदानचिकित्साधिकारः समाप्तः ॥ ५४ ॥

—०—

## अथोपदंशनिदानमाह।

हस्ताभिघातान्नखदन्तघातादधावनादत्युपसेवनाच्च।
योनिप्रदोषाच्च भवन्ति शिश्ने पञ्चोपदंशा विविधोपचारैः ॥ १ ॥
सतोदभेदस्फुरणैः सकृष्णैः स्फोटैर्व्यवस्येत्पवनोपदंशम्।
पीतैर्बहुक्लेदयुतैः सदाहैः पित्तेन रक्तात्पिशिताभासैः ॥ २ ॥
सकंडरैः शोथयुतैर्महद्भिः शुक्लैर्घनैः स्रावयुतैः कफेन।
नानाविधस्रावरुजोपपन्न मसाध्यमाहुस्त्रिमलोपदंशम् ॥ ३ ॥
प्रशीर्णमांस क्रिमिभिः प्रजग्ध मुष्कावशेषं परिवर्जयेच्च ॥ ४ ॥
संजातमात्रे ण करोति मूढः क्रियां नरो यो विषये प्रसक्तः।
कालेन शोथः क्रिमिदाहपाकैः प्रशीर्णशिश्नोम्रियते सतेन ॥ ५ ॥

—०—

## अथ लिङ्गार्शमाह।

अङ्कुरैरिवसङ्घातै रुपर्युपरिसंस्थितैः।
क्रमेण जायते वर्त्ति स्ताम्रचूडशिखोपमाः ॥ ६ ॥
कोषस्याभ्यन्तरे सन्धौ पर्वसन्धिगतापि वा।
लिङ्गवर्त्तिरितिख्याता लिङ्गार्शं इति चापरे।
सवेदनापिच्छला च दुश्चिकित्स्यात्रिदोषजा ॥ ७ ॥

—०—

## अथ चिकित्सामाह ।

उपदंशेषु साध्येषु स्निग्धस्विन्नस्य देहिनः ।
मेढ्रमध्ये शिरां विध्येत् पातयेद्वा जलौकसः ॥ ८ ॥
हरेदुभयतश्चापि दोषानत्यर्थमूर्च्छितान् ।
सद्योनिर्हृतदोषस्य रुक्शोथावुपशाम्यतः ॥ ९ ॥
यदि वा दुर्बलो जन्तु र्न च प्राप्तविरेचनः ।
निरूहेण हरेत्तस्य दोषानत्यर्थमूर्च्छितान् ।
पाकोरक्ष्यः प्रयत्नेन शिश्नक्षयकरो हि सः ॥ १० ॥
प्रपौण्डरीकयष्ट्याह्व सरलागुरुदारुभिः ।
सरास्नाकुष्टपृथ्वीकै र्वातिके लेपसेचने ॥ ११ ॥
निचुलैरण्डबीजानि यवगोधूमशक्तवः ।
एतैश्च वातजं स्निग्धैः सुखोष्णं संप्रलेपयेत् ॥ १२ ॥
पद्मोत्पलमृणालैश्च ससर्जार्जुनवेतसैः ।
सर्पिः स्निग्धैः समधुकैः पैत्तिकं संप्रलेपयेत् ॥ १३ ॥
सेचयेच्च घृतक्षीरं शर्कराक्षु मधूदकैः ।
अथवापि सुशीतेन कषायेन वटादिना ॥ १४ ॥
शालाजकर्णाश्वकर्ण[१][२] धवत्वग्भिः कफोत्थितम् ।
सुरापिष्टाभिरुष्णाभि स्सतैलाभिः प्रलेपयेत् ॥ १५ ॥
आरग्वधादिक्वाथेन परिषेकञ्च दापयेत् ॥ १६ ॥
निम्बार्जुनाश्वत्थकदम्बशाला जम्बूवटोदुम्बरवेतसैश्च ।
प्रक्षालनालेपघृतानि कुर्याच्चूर्णं च पित्तास्रभवोपदंशे ॥१७॥
त्वचोदारुहरिद्रायाः शङ्खनाभिरसाञ्जनम् ।

---

१ अजकर्णः शालिभेदम् । २ अश्वकर्णो गजहड़ः ।

लाचागोमयनिर्य्यासं तैलं चौद्रं घृतं पयः॥ १८॥
एभिस्तु पिष्टैस्तुल्यांशै रुपदंशं प्रलेपयेत्।
व्रणाश्च तेन शाम्यन्ति श्वयथुर्दाह एव च॥ १९॥
उपदंशद्वयेऽप्येतां प्रत्याख्यायाचरेत्क्रियाम्।
तयोरेव च या योग्या वीक्ष्यदोषबलाबलम्॥ २०॥
शस्त्रेणोपचरेच्चापि पाकमागतमाशु च।
तमपोह्यमयो सर्पिः चौद्रयुक्तैः प्रलेपयेत्॥ २१॥
वटप्ररोहार्जुनजंबु पथ्यालोध्रं हरिद्रा च हितः प्रलेपः।
सर्वोपदंशेष्ववरोहणार्थं चूर्णञ्च कार्य्यं विमलाञ्जनेन॥ २२॥
त्रिफलायाः कषायेण भृङ्गराजरसेन च।
व्रणप्रक्षालनं कुर्य्या दुपदंशप्रशान्तये॥ २३॥
पटोलनिम्बत्रिफलाकिरातक्वाथं पिबेद्वा खदिरासनाभ्याम्।
सगुग्गुलुं वा त्रिफलायुतं वा सर्वोपदंशापहरः-प्रयोगः॥ २४॥
नीलोत्पलानि कुमुदं पद्मसौगन्धिकानि च।
उपदंशेषु चूर्णानि प्रदेहार्थे प्रशस्यते॥ २५॥
बंधूकदलचूर्णेन दाड़िमत्वग्रजोऽथवा।
गुण्डनं तद्गते शस्तं लेपः पूगफलेन वा॥ २६॥
सौराष्ट्रीगैरिकं तुत्थं पुष्पं काशीश सैन्धवम्।
लोध्रं रसाञ्जनं वापि हरितालं मनःशिलाम्॥ २७॥
हरेणुकैले च तथा समांशान्यपि चूर्णयेत्।
तच्चूर्णं चौद्रसंयुक्त मुपदंशेषु योजितम्॥ २८॥
गुन्द्रां दग्ध्वाकृतं भस्म हरितालं मनःशिला।
उपदंशविसर्पाणा मेतद्धानिकरं परम्॥ २९॥
दहेत्कटाहे त्रिफलां तां मषीं मधुसैन्धवम्।
उपदंशे प्रलेपोऽयं सद्योरोपयतिव्रणम्॥ ३०॥

तिरीटाञ्जनवच्चाच कोविदारेभकेशरैः ।
लेपनं पुरुषव्याघ्रौ जलपिष्टैः प्रशस्यते ॥ ३१ ॥
रसाञ्जनं शिरीषेण पथ्यया वा समन्वितम् ।
सक्षौद्रं लेपनं योज्यं सर्वानङ्गगदापहम् ॥ ३२ ॥
भार्गीसम्भवशिखरिज मूलं भद्रश्रियं च सपिष्टम् ।
मनःशिलाच्च मधुना शमयत्युपदंशमचिरेण ॥ ३३ ॥
जलधौतं प्रयत्नेन लिङ्गोत्थमवचूर्णयेत् ।
रोगं कासीसचूर्णेन पुरुषः सुखवाञ्छया ॥ ३४ ॥
करवीरस्य मूलेन परिपिष्टेन वारिणा ।
असाध्यापि व्रजत्यस्तं लिङ्गोत्थारुक् प्रलेपनात् ॥ ३५ ॥
करञ्जनिम्बासनशालजम्बूवटादिभिः कल्ककषायसिद्धम् ।
सर्पिर्निहन्यादुपदंशदोषं सदाहपाकस्रुतिपाकयुक्तम् ॥ ३६ ॥
इति करञ्जाद्यं घृतम् ।

भूनिम्बनिम्बत्रिफलापटोलकरञ्जधात्रीखदिरासनानाम् ।
सतोयकल्कैर्घृतमाशु पक्वं सर्वोपदंशापहरं प्रदिष्टम् ॥ ३७ ॥
इति भूनिम्बाद्यं घृतम् ।

घृतानि यानि वक्ष्यामि कुष्टे नाड़ी व्रणे व्रणे ।
उपदंशे प्रयोज्यानि सेकाभ्यञ्जनभोजने. ॥ ३८ ॥
आगारधूमोरजनी सुराकिट्टञ्च तैस्त्रिभिः ।
यथोत्तरैः पचेत्तैलं कण्डूशोथरुजापहम् ॥ ३९ ॥
शोधन रोपणञ्चैव उपदंशहरं परम् ॥ ४० ॥
इत्यागारधूमाद्यं तैलम् ।

गोजीविडङ्गयष्टीभिः सर्वगन्धैश्च संयुतम् ।
एतत्सर्वोपदंशेषु श्रेष्टं रोपणमिष्यते ॥ ४१ ॥
इति गोजीतैलम् ।

जंबूवेतसपत्राणि धात्रीपत्रं तथैव च।
नक्तमालस्य पत्राणि तद्वत्पद्मोत्पलानि च ॥ ४२ ॥
बला चातिबलास्थास्थि मधुकञ्च प्रियङ्गवः।
लाक्षाकालीयकं लोध्रं चन्दनं त्रिवृताह्वया ॥ ४३ ॥
एतान्येकीकृतान्येव वत्समूत्रेण पेषयेत्।
अक्षमात्रयुतैर्द्रव्यैस्तैलप्रस्थं विपाचयेत् ॥ ४४ ॥
सर्वव्रणहरं तैल मेतत्सिद्धं प्रयोजितम्।
उपदंशहरं श्रेष्ठं मुनिभिः परिकीर्त्तितम् ॥ ४५ ॥

इति जम्ब्वाद्यं तैलम्।

यस्य लिङ्गस्य मांसन्तु शीर्य्यते सुप्कशेपतः।
तिक्ताकोशातकीलम्बा बीजनागरसाधितम् ॥ ४६ ॥
तैलं हन्त्यचिराद् घोरं व्रणदुष्टमनेकधा।

इति कोशातकीतैलम्।

सेवेन्नित्यं यवान्नञ्च पानीयं कौपमेव च।
अर्शसां छिन्नदग्धानां क्रियाकार्योपदंशवत् ॥ ४८ ॥

—०—

## अथ लिङ्गार्शचिकित्सामाह।

स्वर्जिकातुत्थशैलेयं सरलं सरसाञ्जनम्।
मनःशिलाले च समे चूर्णोमांसांकुरापहः ॥ ४९ ॥

## इति वङ्गसेन उपदंशनिदानचिकित्साधिकारः समाप्तः ॥ ५५ ॥

—०—

## अथ शूकदोषनिदानमाह।

अक्रमाच्छेफसोवृद्धिं योऽभिवाञ्छतिमूढधीः।

व्याधयस्तस्य जायन्ते दश चाष्टौ च शूकजाः ॥ १ ॥
गौरसर्षपसंस्थाना शूकदुर्भुग्नहेतुका ।
पिटिकाश्लेष्मवाताभ्यां ज्ञेया सर्षपिका बुधैः ॥ २ ॥
कठिनाविषमैर्भुग्नै र्वायुनाष्टोलिका भवेत् ।
शूकैर्यत्पूरितं शश्वद् ग्रथितं नामतत्कफात् ॥ ४ ॥
कुम्भिकारक्तपित्तोत्था जाम्बवास्थिनिभाशुभा ।
अलजीलचणैर्युक्ता मलजीं प्रवितर्कयेत् ॥ ५ ॥
मर्दितं पीड़ितं यत्तु संरब्धं वायुकोपतः ।
पाणिभ्यां भृशसंमूढ़े संमूढ़पिटिका भवेत् ॥ ६ ॥
दीर्घाबह्वाश्च पिटिका दीर्य्यन्ते मध्यतस्तु याः ।
सोऽवमन्थः कफासृग्भ्यां वेदनारोमहर्षकृत् ॥ ७ ॥
पिटिकाभिश्चितायां तु पित्तशोणितसम्भवा ।
पद्मकर्णिकसंस्थाना ज्ञेया पुष्करिका तु सा ॥ ८ ॥
स्पर्शहानिन्तु जनये च्छोणितं शूकदूषितम् ॥ ८ ॥
मुद्गमाषोपमारक्ता रक्तपित्तोद्भवात्तु या ।
व्याधिरेषोत्तमानाम शूकाजीर्णनिमित्तजा ॥ १० ॥
छिद्रै रणुमुखैर्लिङ्गं चितं यस्य समंततः ।
वातशोणितजो व्याधिः सज्ञेयः शतपोनकः ॥ ११ ॥
वातपित्तकृतो ज्ञेय स्त्वक्पाको ज्वरदाहकृत् ॥ १२ ॥
कृष्णैः स्फोटैः सरक्ताभिः पिटिकाभिर्निपीडितम् ।
यस्य वस्तिरुजश्चोग्रा ज्ञेयं तच्छोणितार्बुदम् ॥ १३ ॥
मांसदोषेण जानीया दर्बुदं मांससम्भवम् ।
शीर्य्यन्ते यस्य मांसानि यस्य सर्वाश्च वेदनाः ।
विद्यात्तं मांसपाकन्तु सर्वदोषकृतं भिषक् ॥ १४ ॥
विद्रधिं सन्निपातेन यथोक्तमभिनिर्दिशेत ॥ १५ ॥

क्षतानि चित्राण्यथवा शूकानि सविषाणि वा ।
पाचितानि पचन्त्याशु मेढ्रं निरवशेषतः ॥ १६ ॥
कालानि भूत्वामांसानि शीर्य्यन्ते यस्य देहिनः ।
सन्निपातसमुत्थांस्तु तान्विद्यात्तिलकालकान् ॥ १७ ॥
तत्रमांसार्वुदं यच्च मांसपाकश्चयः स्मृतः ।
विद्रधिश्च न सिध्यन्ति ये च स्युस्तिलकालकाः ॥ १८ ॥

---o---

## अथ चिकित्सामाह ।

शूकदोषेषु सर्वेषु विषघ्नीं कारयेत्क्रियाम् ।
विरेचनं प्रयुञ्जीत शोणितस्य च मोक्षणम् ॥ १९ ॥
जलौकाभिर्हरेद्रक्तं मेढ्रे वा व्यधयेच्छिराम् ।
गुग्गुलुं पाययेच्चापि त्रिफलाक्काथसंयुतम् ।
क्षीरेण लेपसेकांश्च शीतानेव च कारयेत् ॥ २० ॥
सर्षपीं लिखितां सूक्ष्मैः कषायैरवचूर्णयेत् ।
तैरेवाभ्यञ्जनं तैलं साधयेद्व्रणरोपणम् ॥ २१ ॥
क्रियेयमवमन्थेऽपि रक्तं स्राव्यं तथोभयोः ।
अष्ठीलायां स्रुते रक्ते श्लेष्मग्रन्थिवदाचरेत् ॥ २२ ॥
कुम्भिकायां हरेद्रक्तं पक्वायां शोधिते व्रणे ।
तिन्दुकत्रिफलालोध्र लेपस्तैलञ्च रोपणम् ॥ २३ ॥
अलज्यां हृतरक्ताया मयमेव क्रियाक्रमः ॥ २४ ।
स्वेदयेद् ग्रथितं शश्वन्नाडीस्वेदेन बुद्धिमान् ।
सुखोष्णैरुपनाहैश्च सुस्निग्धैरुपनाहयेत् ॥ २५ ॥
उत्तमाख्यान्तु पिटिकां संछिद्य वडिशोद्धृताम् ।
कल्कैश्चूर्णैः कषायाणां क्षौद्रयुक्तैरुपाचरेत् ॥ २६ ॥

क्रम: पित्तविसर्पोक्तः पुष्करीमूढ़योर्हितः ॥ २७ ॥
त्वक्पाके सर्वगन्धाद्यैः सेचयेन्मृदितं पुनः ।
बलातैलेन कोष्णेन मधुरैश्चोपनाहयेत् ॥ २८ ॥
रसक्रियाविधातव्या लिखिताशतपोनके ।
पृथक्पर्ण्यादिसिद्धञ्च तैलं देयमनन्तरम् ॥ २९ ॥
रक्तविद्रधिवच्चापि क्रियाशोणितजेऽर्वुदे ।
कषायकल्कसर्पींषि तैलं चूर्णं रसक्रियाम् ।
शोधने रोपणे चैव वीक्ष्यवीक्ष्यावचारयेत् ॥ ३० ॥
क्षीरेण लेपसेकांश्च शीतेनैव च कारयेत् ।
पूयते च यथा चाशु नैतिपाकं यथा ध्वजम् ॥ ३१ ॥
अर्वुदे मांसपाके च विद्रधौ तिलकालके ।
प्रत्याख्यायप्रकुर्वीत भिषक्तेषां प्रतिक्रियाम् ॥ ३२ ॥

—०—

दार्वीसुरसयष्ट्याह्वैः गृहधूमनिशायुतैः ।
तैलमभ्यञ्जने पाने मेढ्रे रोगं विनाशयेत् ॥ ३३ ॥

इति दार्वीतैलम् ।

गुञ्जाभस्ममपोवाथ हरितालं मनःशिला ।
दार्वीहरिद्रामधुकं घृतक्षौद्रसमायुतम् ।
प्रलेपार्थं प्रयुञ्जीत विशुद्धव्रणरोपणम् ॥ ३४ ॥
रसाञ्जनं साह्वयमेतदेव प्रलेपमात्रेण नयेत्प्रशान्तिम् ।
सपूतिपूयव्रणशोथकण्डूशूलान्वितं सर्वमनङ्गरोगम् ॥ ३५ ॥

## इति वङ्गसेने शूकदोषनिदानचिकित्साधिकारः समाप्तः ॥ ५६ ॥

—०—

## अथ कुष्ठनिदानमाह।

विरोधीन्यन्नपानानि द्रवस्निग्धगुरूणि च।
भजतामागतां छर्दिं वेगांश्चान्यान् प्रतिघ्नताम् ॥ १ ॥
व्यायाममतिसन्ताप मतिभुक्त्वानिषेविणाम्।
शीतोष्णलङ्घनाहारान् भजतामक्रमेण तु ॥ २ ॥
घर्म्मश्रमभयार्त्तानां द्रुतं शीताम्बुसेविनाम्।
अजीर्णाध्यसनानाञ्च पञ्चकर्म्मापचारिणाम् ॥ ३ ॥
नवान्नदधिमत्स्यादि लवणाम्लनिषेविणाम्।
माषमूलकपिष्टान्न तिलक्षीरगुड़ाशिनाम् ॥ ४ ॥
व्यवायं चाप्यजीर्णेऽन्ने निद्रां वा भजतां दिवा।
विप्रान् गुरून्धर्षयतां पापकर्म्म च कुर्वताम् ॥ ५ ॥
वातादयस्त्रयो दुष्टा स्त्वग्रक्तं मांसमम्बु च।
दूषयन्ति सकुष्ठानां सप्तको द्रव्यसंग्रहः ॥ ६ ॥
अतः कुष्ठानि जायन्ते सप्त चैकादशैव तु ॥ ७ ॥
तिलतैलकुलित्थांश्च वल्मीकालिङ्गमेव च।
माहिषं दधिवृन्ताकं सप्तैते कुष्ठहेतवः ॥ ८ ॥
कुष्ठानि सप्तधादोषैः पृथग्द्वन्द्वैः समागतैः।
सर्वेष्वपि त्रिदोषेषु व्यपदेशोऽधिकत्वतः ॥ ८ ॥
अतिश्लक्ष्णखरस्पर्श स्वेदास्वेदविवर्णता।
दाहः कंडूस्त्वचिस्वाप स्तोदः कोठोन्नतिः श्रमः ॥ १० ॥
व्रणानामधिकं शूलं शीघ्रोत्पत्तिश्चिरस्थितिः।
रूढ़ानामपिरूक्षत्वं निमित्तेऽल्पे ऽपि कोपनम्।
रोमहर्षोऽसृजः कार्ष्ण्यं कुष्ठलक्षणमग्रजम् ॥ ११ ॥
कृष्णारुणकपालाभं यद्रूक्षं परुषं तनु।

कपालं तोदबहुलं तत्कुष्टं विषमं स्मृतम् ॥ १२ ॥
रुग्दाहरागकंडूभिः परीतं रोमपिञ्जरम् ।
उदुम्बरफलाभासं कुष्टमौदुम्बरं वदेत् ॥ १३ ॥
श्वेतं रक्तं स्थिरं स्त्यानं स्निग्धमुत्सन्नमण्डलम् ।
कृच्छ्रमन्योऽन्यसंयुक्तं कुष्टं मण्डलमुच्यते ॥ १४ ॥
कर्कशं रक्तपर्यन्त मन्तःश्यावं सवेदनम् ।
यदृक्षजिह्वासंकाशं मृक्षजिह्वं तदुच्यते ॥ १५ ॥
सश्वेतरक्तपर्यन्तं पुण्डरीकदलोपमम् ।
सोत्सेधञ्च सरागञ्च पुण्डरीकं प्रचक्षते ॥ १६ ॥
श्वेतं ताम्रञ्च तनुच द्रजोघृष्टं विमुञ्चति ।
प्रायश्चोरसि तत्सिध्म मलाबुकुसुमोपमम् ॥ १७ ॥
यत्काकणन्तिकावर्णं सपाकं तीव्रवेदनम् ।
त्रिदोषलिङ्गं तत्कुष्टं काकणं नैवसिध्यति ॥ १८ ॥
अस्वेदनं महावास्तु यन्मत्स्यशकलोपमम् ।
तदेव कुष्टं चर्माख्यं बहुल हस्तिचर्मवत् ॥ १९ ॥
श्यावङ्किण खरस्पर्शं परुषं किटिभं स्मृतम् ।
वैपादिक पाणिपाद स्फुटनं तीव्रवेदनम् ॥ २० ॥
कण्डूमद्भिः सरागैश्च गण्डैरलसकश्चितम् ।
सकंडूरागपिडकं दद्रुमण्डलमुद्गतम् ॥ २१ ॥
रक्तं सशूलं कंडूमत् सस्फोटं दलयत्यपि ।
तच्चर्मदलमाख्यातं संसर्गाऽसह मुच्यते ॥ २२ ॥

सूक्ष्माबह्वाः पिटिकाः स्राववत्यः
पामेत्युक्ताः कंडूमत्यः सदाहाः ।
सैव स्फोटैस्तीव्रदाहैरुपेत्ता
ज्ञेया पाण्योः कच्छुदुग्रास्फिजोश्च ॥ २३ ॥

स्फोटाः श्यावारुणाभासा विस्फोटाः स्युस्तनुत्वचः ।
रक्तं श्यावं सदाहार्त्तिः यतारुः स्याद्बहुव्रणम् ॥ २४ ॥
सकंडूपिटिकाश्यावा बहुस्रावाविचर्चिका ॥ २५ ॥
खरं श्यावारुणं रूक्षं वातकुष्ठं सवेदनम् ।
पित्तात् प्रकुपितं दाहरागस्रावान्वितं मतम् ॥ २६ ॥
कफात् क्लेदिघनं स्निग्धं सकण्डूशैत्यगौरवम् ।
द्विलिङ्गं द्वन्दजं कुष्टं त्रिलिङ्गं सान्निपातिकम् ॥ २७ ॥

—•—

## अथ धातुगतकुष्ठलक्षणान्याह ।

त्वक्स्थे वैवर्ण्यमङ्गेषु कुष्टे रौक्ष्यञ्च जायते ।
त्वक्पाको रोमहर्षश्च स्वेदस्यातिप्रवर्त्तनम् ॥ २८ ॥
कंडूर्विपूयकश्चैव कुष्टे शोणितसंश्रिते ॥ २९ ॥
दौर्गन्ध्यं सर्वदेहेऽस्मिन् पूयोऽतिक्रमयस्तथा ।
गात्राणां भेदनं वापि कुष्टे मांससमाश्रिते ॥ ३० ॥
कौण्यं गतिक्षयोऽङ्गानां संभेदः क्षतसर्पणम् ।
मेदः स्थानगते लिङ्गं प्रागुक्तानि तथैव च ॥ ३१ ॥
नासाभङ्गोऽक्षिरागश्च क्षतेषु क्रमिसम्भवः ।
स्वरोपघातश्च भवेदस्थिमज्जासमाश्रिते ॥ ३२ ॥
दम्पत्योः कुष्टबाहुल्याद् दुष्टशोणितशुक्रयोः ।
यदपत्यं तयोर्जातं ज्ञेयं तच्चापि कुष्ठितम् ॥ ३३ ॥
साध्यं त्वग्रक्तमांसस्थं वातश्लेष्माधिकञ्च यत् ।
मेदसिद्वन्दजं याप्यं वर्ज्यं मज्जास्थिसंश्रितम् ॥ ३४ ॥
क्रमिलिट्दाहमन्दाग्नि संयुक्तं यत्त्रिदोषजम् ।
प्रभिन्नं प्रस्रुताङ्गञ्च रक्तनेत्रं हतस्वरम् ॥

पञ्चकर्मगुणातीतं कुष्टं हन्तीह कुष्टिनम् ॥ ३५ ॥
वातेन कुष्टं कापालं पित्तेनोदुम्बरं कफात् ।
मण्डलाख्यं विचर्चीं च ऋच्चाख्यं वातपित्ततः ॥ ३६ ॥
चर्मैककुष्टं किटिभं सिध्माऽलसविपादिका: ।
वातश्लेष्मोद्भवाः श्लेष्मपित्ताद्दद्रुशतारुषी ॥ ३७ ॥
पुण्डरीकं सविस्फोटं पामाचर्मदलं तथा ।
सर्वैः स्यात्काकणं पूर्वं त्रिकं दद्रुसकाकणम् ॥
पुण्डरीकर्च्चजिह्वे च महाकुष्टानि सप्त तु ॥ ३८ ॥

—०—

## अथ श्वित्रलक्षणमाह ।

कुष्टैकसम्भवं श्वित्रं किलासं दारुणं भवेत् ।
निर्दिष्टमपरिस्रावं त्रिधातूद्भवसंश्रयम् ॥ ३९ ॥
वाताद्रूक्षारुणं पित्तात्ताम्रं कमलपत्रवत् ।
सदाहं रोमविध्वंसि कफाच्छ्वेतं घनं गुरु ॥ ४० ॥
सकंडूरं क्रमाद्रक्तमांसमेदस्सु चादिशेत् ।
वर्णेनैवेदृगुभयं कृच्छ्रं तच्चोत्तरोत्तरम् ॥ ४१ ॥
अशुक्लरोमा बहुलमसंश्लिष्टमथो नवम् ।
अनग्निदग्धजं साध्यं श्वित्रं वर्ज्यमतोन्यथा ॥ ४२ ॥
गुह्यपाणितलौष्टेषु जातमप्यऽचिरन्तनम् ।
वर्जनीयं विशेषेण किलासं सिद्धमिच्छता ॥ ४३ ॥
प्रसङ्गाद्गात्रसंस्पर्शा न्निःश्वासात्सह भोजनात् ।
एकशय्यासनाच्चापि वस्त्रमाल्यानुलेपनात् ॥ ४४ ॥
कुष्टं ज्वरश्च शोषश्च नेत्राभिष्यन्द एव ।
औपसर्गिकरोगाश्च संक्रामन्ति नरान्नरम् ॥ ४५ ॥

—०—

## अथ चिकित्सामाह।

वातोत्तरेषु सर्पिर्वमनं श्लेष्मोत्तरेषु कुष्ठेषु।
पित्तोत्तरेषु मोक्षो रक्तस्य विरेचनं चाग्रम् ॥ ४६ ॥
घृतं महानीलमुशन्ति वाते पित्ते महातिक्तकमेव तद्ज्ञाः।
तैलन्तु शैरीषमुशन्ति कुष्ठे श्लेष्मात्मकेऽभ्यञ्जनपानयोगे ॥ ४७ ॥
प्रच्छनैर्वा जलौकाभिः शृङ्गालाबुशिराव्यधैः।
स्निग्धस्य मोक्षयेत् कुष्ठे दुष्टरक्तं पुनः पुनः ॥ ४८ ॥
सुतरक्ते हृते दोषे स्नेहैः संशमितेऽनिले।
रसायनानि प्राश्याथ प्रशस्ताः कुष्ठिनामतः ॥ ४९ ॥
वचावासापटोलानि निम्बस्य फलिनीत्वचः।
कषायो मधुना पीतः वान्तकृन्मदनान्वितः ॥ ५० ॥

इति पञ्चकषायः।

विरेचनं प्रयोक्तव्यं त्रिवृद्दन्तीफलत्रिकैः ॥ ५१ ॥
ये लेपाः कुष्ठानां प्रयुज्यन्ते निर्गतास्रदोषाणाम्।
संशोधिताशयानां सद्यः सिद्धिर्भवति तेषाम् ॥ ५२ ॥
पथ्या करञ्जसिद्धार्थ निशावल्गु ससैन्धवैः।
विडङ्गसहितैः पिष्टैः लेपो मूत्रेण कुष्ठजित् ॥ ५३ ॥
एलाकुष्ठविडङ्गानि शताह्वा चित्रको वचा।
दन्तीरसाञ्जनश्चैभिर्लेपः कुष्ठविनाशनः ॥ ५४ ॥
मनःशिलाले मरिचानि तैलमार्कं पयः कुष्ठहरः प्रदेहः।
करञ्जबीजैडगजः सकुष्ठो गोमूत्रपिष्टश्च वरः प्रदेहः ॥ ५५ ॥
धात्रीरसःसर्जरसचक्रमर्दतुषोदकैः।
कच्छुदद्रुहरो लेपः कंडूत्वग्दोषनाशनः ॥ ५६ ॥
शृङ्गाटककर्कटीमूलं हविषा ब्रह्मचारिणा।

निपीतं शमयत्याशु दद्रुरोगमसंशयम् ॥ ५७ ॥
पर्णानि पिष्ट्वा चतुरंगुलस्य तक्रेण पर्णान्यथ काकमाच्याः ।
तैलाक्तमात्रस्य नरस्य कुष्टान्युद्वर्त्तयेदश्वहनच्छदैश्च ॥ ५८ ॥
एडगजकुष्टसैन्धव सौवीरसर्षपैः क्रमिघ्नैश्च ।
क्रमिसिध्मदद्रुमण्डल कुष्टानां नाशनो लेपः ॥ ५९ ॥
त्रिफलामुस्तकं पिण्डी दार्वीशम्याकवत्सकाः ।
सिद्धार्थं कुष्टनुद्भिः स्नानपानप्रलेपनम् ॥ ६० ॥
कासमर्दकमूलानि सौवीरेण तु पेषयेत् ।
किटिभसिध्मदद्रूणि जयेदेतत्प्रलेपनात् ॥ ६१ ॥
बीजानि वा मूलकसर्षपाणां लाक्षारजन्यौ प्रपुनाटबीजम् ।
श्रीवेष्टकव्योषविड़ङ्गकुष्टं पिष्ट्वा च मूत्रेण सुलेपनं स्यात् ॥
दद्रूणि सिध्मान् किटिभानि पामां कपालकुष्टं विषमं च हन्यात् ॥६२॥
आरग्वधस्य पत्राणि चारनालेन लेपयेत् ।
दद्रुकिटिभकुष्टानि हन्ति सिध्मानमेव च ॥ ६३ ॥
प्रपुन्नाटस्य बीजानि धात्री सर्जरसस्नुही ।
सौवीरपिष्टं दद्रूणामेतदुद्वर्त्तनं परम् ॥ ६४ ॥
स्नुह्या रसः सालतरोस्तुषेण सचक्रमर्दोऽप्यभयाविमिश्रः ।
पानीयभक्तेन तदम्बुपिष्टो लेपः क्षतोदद्रुमृगेन्द्रसिंहः ॥ ६५ ॥
चक्रमर्दकबीजञ्च मूलकांबुप्रपेषितम् ।
दद्रूघ्नं लेपनं कुर्य्याच्छिग्रुमूलत्वचोऽथ वा ॥ ६६ ॥
चक्रमर्दकबीजानि जीरकञ्च समांसकम् ।
*स्नोकं सुदर्शनामूलं दद्रुकुष्टविनाशनम् ॥ ६७ ॥*
दूर्वाभयासैन्धवचक्रमर्द कुठेरकाः काञ्जिकतक्रपिष्टाः ।
त्रिभिः प्रलेपैरपि बद्धमूलं दद्रुञ्च कंडूञ्च विनाशयन्ति ॥ ६८ ॥
द्रपकपत्रमपि दारुणं दद्रुरोगञ्च प्रघर्षयोगेन ।

प्रशमयति तान्विचित्रं प्रागेन्द्री भवं यदि गृहीतम् ॥ ६८ ॥
समूलपत्रस्तम्बस्य ह्वणकस्य तु घर्षणात् ।
भक्षणाद्वापि शाम्यन्ति दद्रुसिध्मविचर्चिकाः ॥ ७० ॥
शिखिरिरसेन तु पिष्टं मूलकबीजं प्रलेपतः सिध्म ।
क्षारेण वा कदल्या रजनीं मिश्रेण नाशयति ॥ ७१ ॥
कुष्टं मूलकबीजं प्रियङ्गवः सर्षपाः सदुरालभाः ।
एतत् केशरषट्कं निहन्ति चिरकालजं सिध्म ॥ ७२ ॥
इति केशरषट्कम् ।
गन्धपाषाणमिश्रेण यवक्षारेण लेपितम् ।
सिध्मनाशमुपैत्याशु कटुतैलयुतेन च ॥ ७३ ॥
कासमर्दकबीजानि मूलकानां तथैव च ।
गन्धपाषाणमिश्राणि सिध्मानां परमौषधम् ॥ ७४ ॥
बीजं मूलकजं निम्ब पत्राणि सितसर्षपाः ।
गृहधूमञ्च संपेष्य जलेनाङ्गं प्रलेपयेत् ॥ ७५ ॥
उद्वर्त्य नवनीतेन क्षालयेदुष्णवारिणा ।
त्वग्दोषेन सिध्मानि शाम्यन्त्याशु शरीरिणाम् ॥ ७६ ॥
लाक्षाश्रीवेष्टकं कुष्टं हरिद्रे गौरसर्षपाः ।
व्योषं मूलकबीजानि प्रपुन्नाटफलानि ॥ ७७ ॥
एतान्यम्लप्रपिष्टानि कुष्टेपूद्वर्त्तनं परम् ।
सिध्मानां किटिभानाञ्च दद्रूणाञ्च विशेषतः ॥ ७८ ॥
मयूरकक्षारजले सप्तकृत्वः परिस्रुते ।
सिद्धं ज्योतिष्मतीतैल मभ्यङ्गात्सिध्मनाशनम् ॥ ७९ ॥
प्रपुन्नाटार्कदुग्धाग्नि दन्तीजन्तुघ्नसैन्धवैः ।
गृहधूमनिशायुग्म सिंहीफलयुतैः समैः ॥
लेपः समस्तकुष्टघ्नः सश्वित्रवैवर्ण्यनाशनः ॥ ८० ॥

प्रलेपोद्वर्त्तनस्नान पानभोजनकर्म्मसु ।
शीलितं खादिरं वारि सर्वत्वग्दोषनाशनम् ॥ ८१ ॥
दह्यमानाच्च्युतं कुम्भे समूलखदिराद्रसम् ।
साज्यधात्रीरसक्षौद्रं हन्यात् कुष्टं रसायनम् ॥ ८२ ॥
निम्बपत्रशतं पिष्ट्वा निम्बामलकमेव च ॥ ८३ ॥
श्वेतकरवीरमूलं कुटजकरञ्जौ त्वचो दार्व्याः ।
सुमनः प्रवालयुक्तो लेपः कुष्टापहः सिद्धः ॥ ८४ ॥
गुडूचीत्रिफलादार्वी क्वाथो मूत्रोष्णवारिभिः ।
त्वग्दोषव्रणशोथघ्नः पीतो मासश्च गुग्गुलुः ॥ ८५ ॥

—०—

खदिरत्रिफलानिम्ब पटोलामृतवासकैः ।
अष्टकोऽयं जयेत् कुष्टं कण्डूविस्फोटकानि च ॥ ८६ ॥
विसर्पपामाकिटिभ शीतपित्तमसूरिकाः ॥

इति खदिराष्टकम् ।

त्रिफलानिम्बपटोलं मञ्जिष्टारोहिणीवचारजनी ।
एष कषायोऽभ्यस्तो निहन्ति कफपित्तजं कुष्टम् ॥ ८७ ॥

इति नवकषायः ।

निम्बैरण्डदुरालभाऽभंकवचामूर्वाहरिद्राद्वय ।
त्रायन्तीत्रिफला पटोलदहनद्रे काम्रता भार्गिभिः ॥
काकोदुम्बरिकाकरञ्जखदिरैः शाखोटसप्तच्छदैः ।
व्याघ्रीसिंहिशिरीष वेतसकणाभूनिम्बशक्राह्वयैः ॥ ८८ ॥
शापुन्नाटकवाकुची कुशजटामातङ्गकृष्णानलैः ।
पाठापर्पटकेन्द्रवारुणी हपादन्ती त्रिवृच्चन्दनैः ॥

मञ्जिष्टाऽऽमयवासवासकटुकाराजद्रुमग्रन्थिकैः।
तुल्यांशैः सुरभीजलेन पिबतां सिद्धं कषायं नृणाम् ॥ ८८ ॥
कडुदुम्बरपुण्डरीकालसकाः कुष्टामयाः पापजाः।
नश्यन्ति द्रुतमेव दारुणतराः प्रोद्रूयमानाऽनल ॥
ज्वालादग्धप्रतप्तकाञ्चनसमान्यङ्गानि राजन्ति च।
क्वाथोऽयं मुनिभिर्दया सुनिपुणैरुक्तो नृणां हितवे ॥ ९० ॥

इति निम्बादि महाकषायः।

मञ्जिष्टारिष्टवासात्रिफलदहनकं द्वे हरिद्रे गुडूची।
भूनिम्बो रक्तसारं सखदिरकटुकाबाकुची व्याधिघातः ॥
मूर्वादन्तीविशालाक्रमिरिपुजटिलात्रायमाणाः सपाठाः।
श्यामाऽनन्ता पटोलाः समरिचमगधाः साधितोऽयं कषायः ॥९१॥
पीतो हन्यात्समस्तान् सकलतनुगतान् रक्तजान्वैविकारान्।
कंडूविस्फोटकादीनलसकिटभक श्वित्रपामादिदोषान् ॥ ९२ ॥

इति मञ्जिष्टादि महाकषायः।

श्यामामृता खदिरसारशिरीषशिग्रु
शैलेय सर्जसुरसासुरसिंधुवारैः।
श्योनाकरञ्जकरिकर्ण बचाविशाला
भल्लातवेतसवरात्रपसप्तपर्णैः ॥ ९३ ॥
काकादनीफलककेरुककण्टकारी
कंडूकरीकुटजकेशरकर्णिकारैः।
कर्कोटकार्ककरमर्दकदम्बनिम्ब
जवूनिशातिनिसकेशरशारिवाभिः ॥ ९४ ॥
गोधोपलानलशिलाजतुकुन्दराजी
राजीवकेशरशठीप्रपुन्नाटचूर्णम्।

षटावशेषितजलं सुरभीजलेन
क्वाथं विधायपिबत: व्यथितेन्द्रियस्य ॥ ९५ ॥
सर्वाङ्गसादपरिपोटनतोदभेद
दाहश्रमस्फुटनसुप्ति विदीर्णभावै: ।
वैपादिकार्बुदविवर्णविशीर्णकर्ण
घ्राणांघ्रिपाणिघनघर्घरघोरनादै: ॥ ९६ ॥
गम्भीरपाककुथितं क्रमिजातपूति
पूयास्रविस्रततुगन्धिविसन्धिदग्धम् ।
दुर्वारदारुणसुदुम्बरकुष्टशोथ-
मल्पैर्दिनै: प्रथममेति महान्तसुग्रम् ॥ ९७ ॥
इत्युदयमार्त्तण्ड महाकषाय: ।
पटोलखदिरारिष्ट त्रिफलाकृष्णवेत्रकम् ।
तिक्ताशन: पिबन् क्वाथं कुष्टी कुष्टादपोहति ॥ ९८ ॥
काकोदुम्बरिकारिष्ट विड़ङ्गव्योपवासकम् ।
कल्कं पीत्वा जयेत् कुष्टं कुटजत्वक् सितांबुना ॥ ९९ ॥
विडङ्गं बाकुचीकृष्णा पथ्या वाराह लाङ्गली ।
त्रिफला सगुडा चैषां मोदका: कुष्टनाशका: ॥ १०० ॥
अवल्गुजाद्बीजकर्षं पिबेदुष्णेन वारिणा ।
भोजन चीरसर्पिर्भ्यां सर्वकुष्टहरं परम् ॥ १०१ ॥
तिलाज्यत्रिफलाचौद्र व्योषभल्लातशर्करा: ।
हृष्या: सप्तसमा मेध्या: कुष्टहा: कामचारिण: ॥ १०२ ॥
*निम्बस्य स्वरस वापि सेव्यमानो यथा बलम् ।*
जीर्णे घृतान्नं भुञ्जीत खल्पयूपोदकेन च ॥
अपि चीणशरीरोऽपि दिव्यरूपी भवेन्नर: ॥ १०३ ॥
इन्द्राशनस्य पत्रं मधुना सितया च सर्पिषायुक्तम् ।

खादिदग्रेपकुष्टनाशकरमस्मात्परं नास्ति ॥ १०४ ॥
अमृता वाऽभयाव्योष वनुष्ठरुष्करवाकुची ।
केशराजाः क्रमाहद्दाः कुष्टघ्नास्तैलपिण्डिकाः ॥ १०५ ॥
पञ्चाङ्गयां समाचीकां सञ्चेद्दां वापि चूर्णिताम् ।
तैलयुक्तां लिहेत् कुष्ट मारोग्यमचिराङ्गवेत् ॥ १०६ ॥

—०—

## अथ कुष्टलेपानाह ।

विषवरुणहरिद्रा चित्रकागारधूम
मदनमरिचमूर्वाचीरमर्कम्नुहीभ्याम् ।
दहति पतितमात्रात् कुष्टजातीरग्रेषाः
कुलिशमिव सरोषाच्छक्रहस्ताद्विमुक्तम् ॥ १०७ ॥
चक्राह्वबीजं स्नुक्चीर भावितं मूत्रसंयुतम् ।
रवितप्तं द्दि किञ्चित्तु लेपनं किटिभापहम् ॥ १०८ ॥
पिप्पलीपूतिकायस्था कुष्टगोपित्तचित्रकैः ।
लेपं सम्यक् प्रशंसन्ति किटिभघ्नं चिकित्सकाः ॥ १०९ ॥
गोमूत्रवारिसंपिष्टैः शिलाकाशीश तुत्थकैः ।
लेपः किटिभवीसर्प कुष्टनाशाय पूजितः ॥ ११० ॥
राजिकागुड़युक्तेन सैन्धवेन प्रयोजितम् ।
बिड़ालचर्म्मणाबद्धं नाशं चर्म्मदलं व्रजेत् ॥ १११ ॥
मचयाश्वेतयानाशं याति चर्म्मदलं द्रुतम् ।
लेपादिन्द्रयवैर्वापि गोमूत्रपरिपेषितैः ॥ १२ ॥
सलिले चाम्रपेशी तु किञ्चित्सिन्धुसमन्विता ।
ताम्रपात्रे विनिर्घृष्टा लेपश्चर्म्मदलापहा ॥ ११३ ॥
शैलेयकम्पिल्लकयष्टिकाह्वा
सौराष्ट्रिकासर्जरसोत्पलानि ।

शिला च चूर्णो नवनीतयुक्तः
कुष्टे स्ववत्यऽभ्यधिकः प्रदिष्टः ॥ ११४ ॥
स्नुक्‌काण्डे सर्षपात् कल्कः कुकूकानलपाचितः।
लेपाद्विचर्चिकां हन्ति राग वेग इव त्रपाम् ॥ ११५ ॥
स्नुक्‌काण्डे शुषिरे दग्ध्वा गृहधूमं ससैन्धवम् ।
अन्तर्धूमं तैलयुक्तं लेपाद्धन्ति विचर्चिकाम् ॥ ११६ ॥
मधुसिक्थकसैन्धव घृतगुड़महिषाचसालनिर्यासम् ।
गैरिकमेतत्पक्वं पादस्फुटनापहं सिद्धम् ॥ ११७ ॥
पिष्ट्वा जातीफलं लेपा द्विनिहन्ति विपादिकाम् ।
*तद्वत्सर्जरसं क्षौद्र तिलतैलसमन्वितः ॥ ११८ ॥*
नारिकेलोदके न्यस्ता स्तंडुलाः पूतितां गताः।
लेपाद्विपादिकां हन्ति चिरकालानुबन्धिनीम् ॥ ११८ ॥
धत्तूरबीजकल्केन माणकक्षारवारिणा ।
कटुतैलं विपक्वन्तु द्रुतं हन्याद्विपादिकाम् ॥ १२० ॥
इति धत्तूरकतैलम् ।

अवल्गुजं कासमर्दं चक्रमर्दं निशायुतम् ।
मणिमन्थेन तुल्यांशं मस्तुकाञ्जिकपेषितम् ॥ १२१ ॥
कच्छुं कंडूं जयत्युग्रां सिद्ध एष प्रयोगराट् ॥ १२२ ॥
कोमलं सिंहास्यदलं सनिशं सुरभीजलेन संपिष्टम् ।
दिवसत्रयेण नियतं शमयतिकच्छुं विलेपनतः ॥ १२३ ॥
हरिद्राकल्कसयुक्तं गोमूत्रस्य पलद्वयम् ।
पिबेन्नरः कामचारी कच्छुपामाविनाशनम् ॥ १२४ ॥
शिवाहरिद्रागुड़कर्दनानां तुल्यं विभागं मस्तर्ण मपिष्य ।
संप्राश्यतोयं तदनुप्रपीयजयेद्व्रणानां प्रभवं सनातनम् ॥ १२५ ॥

—०—

श्रीवासकं सर्ज्जरसं लोध्रं कम्पिल्लकं तथा।
मनःशिलायवानी च गन्धपाषाणमेव च॥ १२६॥
पलिकैश्चूर्णितैरेते घृतप्रस्थं प्रयोजयेत्।
सूर्य्यांशुपक्वमभ्यङ्गा घोरां कच्छुं व्यपोहति॥ १२७॥

इति श्रीवासघृतम्।

सिन्दूरगुग्गुलुरसाञ्जनसिक्थतुल्यैः
कल्कीकृतैश्च कटुतैलमिदं विपक्वम्।
कच्छूं स्रवत्पिटिकिकामथवाविशुष्का-
मभ्यञ्जनेन सकृदुद्धरति प्रसह्य॥ १२८॥

इति सिन्दूराद्यं तैलम्।

सिन्दूरं चन्दनं मांसी विड़ङ्गं रजनीद्वयम्।
प्रियंगुपद्मकं कुष्टं मञ्जिष्टाखदिरं वचा॥ १२९॥
जात्यर्कं त्रिवृतानिम्बं करञ्जं विषमेव च।
कृष्णाचित्रकलोध्रञ्च प्रपुन्नाटं च संहरेत्॥ ३०॥
सूक्ष्मपिष्टानि सर्वाणि योजयेत्तैलमात्तया।
अभ्यङ्गेन प्रयोज्यं तत् वर्णकृत् कुष्टनाशनम्॥ १३१।
पामां विचर्चिकां कच्छूं विसर्पं विषमेव च।
रक्तपित्तोत्थितान् हन्ति रोगानेवं विधान् बहून्।
सिन्दूराद्यमिदं तैलमश्विभ्यां निर्मितं पुरा॥ ३२॥

इति वृहत्सिन्दूराद्यं तैलम्।

निशासुधारग्वधकाकमाचीपत्रैः सदार्वी प्रपुनाटबीजैः।
तक्रेण पिष्टैः कटुतैलमिश्रैः पामादिपूद्वर्त्तनमेतदिष्टम्॥ ३३॥
गोशकृत् सिन्धुसयुक्तं रजनीमाचिकैश्च तु।
घृष्ट्वा प्रलेपने योज्यं पामाकच्छूविनाशनम्॥ १३४॥

सैन्धवं चक्रमर्दन्तु सर्षपं पिप्पलीं तथा ।
पेषयेदारनालेन पामाकण्डूविनाशनम् ॥ १२५ ॥
मांसीचन्दनशम्याक करञ्जारिष्टसर्षपम् ।
यष्टीकुटजदार्व्यब्दं हन्ति कण्डूमयं गणः ॥ १२६ ॥
जीरकस्य पलं पिष्ट्वा सिन्दूरार्द्धपलं तथा ।
कटुतैलं पचेदाभ्यां सद्यः पामाहरं परम् ।
हृद्यवैद्योपदेशेन पाच्यं तैलं पलाष्टकम् ॥ १२७ ॥

—o—

अर्कपत्ररसैः पक्वं रजनीकल्कसंयुतम् ।
कटुतैलं हरेत्तूर्णं पामाकच्छूविचर्चिकाम् ॥ १२८ ॥
इत्यर्कतैलम् ।

त्रिफलाकृष्करलौहै सवल्गुजभृङ्गलांगलीव्योषैः ।
सगुडैः वराहकन्दैः पलिकैरेकत्वसंमिश्रैः ॥ १२९ ॥
गुटिकां प्रकल्प्य खादेदेकैकामक्षसमितां प्रातः ।
कुष्टं दद्रुकिलासं जित्वा वर्षेण निर्वलीपलितः ॥ १४० ॥
जीवतिवर्षशतं वै दीप्तहुताशो युवेव सोत्साहः ।
इति त्रिफलाद्यागुटिका ।

शशाङ्कलेखा सविडङ्गसारा सपिप्पलीका सहुतासमूला ।
सायोमला सामलका सतैला सर्वाणि कुष्टानि निहन्ति लीढ़ा ॥१४

इति शशाङ्कलेखादिलेहः ।

त्रैफलस्य तु चूर्णस्य पलानि दशपञ्चकम् ।
सप्तचैव बिडङ्गानां लौहचूर्णं पलद्वयम् ॥ १४२ ॥
शतं भल्लातकानाञ्च पलानि दश बाकुची ।
शिलाजतुपलार्द्धं तु द्वे पले गुग्गुलोस्तथा ॥ १४३ ॥

पलं पुष्करमूलस्य पलार्द्धपलसैन्धवम्।
सचित्रकं समरिच पिप्पलीविश्वभेषजम् ॥ १४४ ॥
त्वक्पत्रं कुंकुमं मुस्तं कार्षिकानुपकल्पयेत्।
यावन्त्येतानि चूर्णानि तावत् खण्डं प्रदापयेत् ॥ १४५ ॥
पलिकान् मोदकान् कृत्वा प्रातरुत्थाय नित्यशः।
एकैकं भक्षयेत् प्राज्ञो यथेष्टं चात्र भोजनम् ॥ १४६ ॥
कुष्ठान्यष्टादशानीह प्लीहगुल्मभगन्दरान्।
अशीतिं वातजान् रोगां श्चत्वारिंशच्च पैत्तिकान् ॥ १४७ ॥
विंशति श्लैष्मिकांश्चैव संसृष्टान् सान्निपातिकान्।
शालाक्यगतरोगांश्च शिरोक्षि भ्रूगतांस्तथा ॥ १४८ ॥
कण्ठतालुगतांश्चैव जिह्वायामुपजिह्वकाम्।
ऊर्ध्वजत्रुगते रोगे भुक्तस्योपरि दापयेत् ॥ १४९ ॥
शरीरे दापयेत् पूर्वं मौदरे मध्यभोजने।
निर्दिष्टरोगाच्छमयेत् क्रियमाणं रसायनम् ॥ १५० ॥

इति त्रिफलाद्यो मोदकः।

निम्बगोपारुणाकट्वी त्रायन्ती त्रिफला घनम्।
पटोलावल्गुजानन्ता बचाखदिरचन्दनम् ॥ १५१ ॥
पाठाशठीशठीभार्गी वासाभूनिम्बवल्कलम्।
श्यामेन्द्रवारुणीमूर्वा विडङ्गातिविषाऽनलम् ॥ १५२ ॥
हस्तिकर्णामृताद्रैका पटोलं रजनीद्वयम्।
कृष्णारग्वधसप्ताह्वं शिरीषं चोचटाफलम् ॥ १५३ ॥
मञ्जिष्ठालांगुलीरास्ना नक्तमालं पुनर्नवा
दन्तीबीजकसारञ्च भृङ्गराजं कुटन्नटम् ॥ १५४ ॥
अचोटकञ्च शाखोटं द्विपलांशं पृथक् पृथक्।
गृह्णीयात्तानि सर्वाणि जलद्रोणे पचेच्छनैः ॥ १५५ ॥

अष्टभागावशेषन्तु कषायमवतारयेत् ।
विधायवाससापूतं स्थापयेद्भाजने दृढे ॥ १५६ ॥
भल्लातकसहस्राणि छित्वा त्रीण्यर्मणेऽम्भसि ।
पचेदष्टावशेषन्तु कषायमवतारयेत् ॥ १५७ ॥
तच वस्त्रेण संशोध्य द्वौ कषायौ विमिश्रयेत् ।
गुडस्य तु तुलां दत्वा लेहवत्तत्पचेच्छनैः ॥ १५८ ॥
भल्लातकसहस्रस्य मज्जानं तत्र निक्षिपेत् ।
त्रिकटुत्रिफलामुस्तं विडङ्गं चित्रकं तथा ॥ १५९ ॥
सैन्धवं चन्दनं कुष्टं दीप्यकञ्च पृथक् पलम् ।
सौगन्ध्यार्थं क्षिपेत्तत्र चागुरुजातं पलं पलम् ॥ १६० ॥
महाभल्लातको ह्येष महादेवेन निर्मितः ।
प्राणिनान्तु हितार्थाय नाशयेच्छीघ्रमेव तु ॥ १६१ ॥
श्वित्रमौदुम्बरं दद्रु मृक्षजिह्वञ्च काकणम् ।
पुण्डरीकं सचर्माख्यं विस्फोटं रक्तमण्डलम् ॥ १६२ ॥
कण्डूं कापालकुष्टञ्च पामानञ्च विपादिकाम् ।
वातरक्तमुदावर्त्तं पांडुरोगं व्रणान् क्रमीन् ॥ १६३ ॥
अर्शांसि षट्प्रकाराणि कासश्वासौ भगन्दरम् ।
समाभ्यासेन पलितं मासवातं सुदुर्जयम् ॥ १६४ ॥
निर्थ्यन्त्रणस्तु कथितः सर्व्वर्त्तुषु च शस्यते ।
कुरुते परमां कान्तिं प्रदीप्तं जठरानलम् ॥ १६५ ॥
अनुपानं प्रयोक्तव्यं छिन्नात्तोयं पयोऽथवा ।
भोजनञ्च तथा त्याज्यं मुष्णं चाम्लं विशेषतः ॥ १६६ ॥

इति महाभल्लातकम् ।

पिचुमन्दफलं पुष्पं त्वक् पत्रं मूलमेव च ।
पञ्चैतानि सुसूक्ष्माणि समचूर्णानि कारयेत् ॥ १६७ ॥

अष्टभागावशेषेण खदिरासनवारिणा ।
भावयित्वा तु संयोज्य द्रव्याण्येतानि दापयेत् ॥ १६८ ॥
चित्रकोऽथ विडङ्गानि व्याधिघातकशर्कराः ।
भल्लातकहरीतक्यौ शुण्ठ्यामलकगोक्षुराः ॥ १६९ ॥
चक्रमर्दकबाकूची पिप्पलीमरिचं निशा ।
लोहचूर्णसमायुक्तं समभागं प्रमाणतः ॥ १७० ॥
भावयेद्भृङ्गराजेन पुनः शुष्काणि कारयेत् ।
निम्बार्धं सर्वमेतेषा मेकीकृत्य निधापयेत् ॥ १७१ ॥
बिडालपदमात्रन्तु सर्पिषा पयसाऽपि वा ।
प्रातः प्रातर्निषेवेत खदिरासनवारिणा ॥ १७२ ॥
परिहारो नचात्रास्ति पञ्चनिम्बेऽवतिष्ठति ।
मासमात्र प्रयोगेन कुष्ठं हन्ति रसायनम् ॥ १७३ ॥
त्वग्दोषं नीलिकाव्यङ्गं तथैव तिलकालकान् ।
अष्टादशविधं कुष्ठं सप्त चैव महाक्षयान् ॥
सर्वव्याधिविनिर्मुक्तो जीवेद्वर्षशतं सुखी ॥ १७४ ॥

इति पञ्चनिम्बादिचूर्णम् ।

त्रिफलातिविषाकटुका निम्बकलिङ्गवचापटोलमागधिकाः ।
रजनीद्वयपद्मकमूर्वा विशालाभूनिम्बानि पलांशानि ॥ १७५ ॥
दद्याच्चिवृतं द्विगुणं चूर्णमिदं कुष्ठसुप्तिहरम् ॥

इति त्रिफलाद्यं चूर्णम् ।

पथ्यां सैन्द्रयवांसकिंशुकफलांसार्कां तथाऽऽवर्त्तिनीम्
व्याधिघ्नं न च योजितां हुतभुजा साकुष्करां बाकुचीम् ।
तद्वच्च क्रमिशत्रुना व्युपगतामेकैकहृद्दामिमां
गोमूत्रेण विमृद्य तां च सकलां कृत्वा वटीं भक्षयेत् ॥१७६॥
निहन्ति हतनाशिका करजकर्णपादांगुलीः ।

स्रवद्रुधिरपूतिपूय परिजन्तु जग्धव्रणान् ।
प्रभिन्नचिरलम्बित स्वरकमाशु कुष्टं महत्
निहन्ति कुरुते वपुस्तरुणभास्करार्चिः समम् ॥ १७७ ॥

इति पथ्यादो वटकः ।

निम्बं पटोलं दार्वीं दुरालभां तिक्तकरोहिणीं त्रिफलाम् ।
कुर्यादर्द्धपलांशान् पर्पटकं त्रायमाणां च ॥ १७९ ॥
सलिलाढ़कसिद्धानां रसेऽष्टभागस्थिते क्षिपेत् पूते ।
चन्दनकिराततिक्तक मागधिकास्त्रायमाणा वा ॥ १७८ ॥
मुस्तं वत्सकबीजं कल्कीकृत्यार्द्धकार्षिकान् भागान् ।
नवसर्पिषश्च षट्पलमेतत्सिद्धं घृतं पेयम् ॥ १८० ॥
कुष्टं ज्वरमेहार्शो ग्रहणीपांड्वामयश्वयथून् हन्ति ।
पामाविसर्पिपिटिका कंडूगण्डव्रणान् सद्यः ॥ १८१ ॥

इति तिक्तषट्कं घृतम् ।

निम्बं पटोलं व्याघ्री च गुडूचीवासकं तथा ।
कुर्य्याद्दशपलान् भागा नेकैकस्य तु कुट्टितान् ॥ १८२ ॥
जलद्रोणे विपक्तव्यं यावत्पादावशेषितम् ।
घृतप्रस्थं पचेत्तेन त्रिफलागर्भसंयुतम् ॥ १८३ ॥
पञ्चतिक्तमिति ख्यात सर्वकुष्टविनाशनम् ।
अशीतिं वातजान् रोगां श्चत्वारिंशच्च पैत्तिकान् ॥ १८४ ॥
विंशतिं श्लैष्मिकांश्चापि पानादेवापकर्षति ।
दुंष्टव्रणकृमीनर्शः पञ्चकासांश्च नाशयेत् ॥ १८५ ॥

इति पञ्चतिक्तकं घृतम् ।

निंबामृताह्वयपटोलनिदग्धिकानां
पक्वं घृतं क्कथितकल्कयुतं यथावत् ।

ख्यातं यथोक्तमन्तं भुवि पञ्चतिक्तं
हन्याद्विसर्पं विषमज्वरपांडुकुष्टान्॥ १८६॥

इति द्वितीयं पञ्चतिक्तकं घृतम्।

पटोलवत्सकातिक्ता नक्तमालसहामृताः।
निःक्वाथ्य सलिलद्रोणे पलैर्विंशतिभागिकैः॥ १८७॥
पादशेषे, रसे तस्मिन् घृतप्रस्थं विपाचयेत्।
कल्कैरच्चसमैर्दारु त्रिफलाव्यूषणाग्निभिः॥ १८८॥
पृथ्वीप्रतिविषापाठा चव्येन्द्रयवदीप्यकैः।
मूर्वाचारद्वयाजाजी वचाकृमिहरैर्युतैः॥ १८९॥
कटुकासप्तपर्णाभ्यां पुरस्याष्टपलेन च।
कुष्टानि रक्तपित्तञ्च वीसर्पपूतिकुष्टताम्॥ १९०॥
पानाच्छमयेदेतद् गुग्गुलुः पञ्चतिक्तकः।
सिद्धमेतेन विधिना सर्पिः प्रस्थं सगुग्गुलुम्॥ १९१॥
पानाभ्यञ्जननस्येषु तच्चोक्तानाप्नुयाद्गुणान्।

इति गुग्गुलुपञ्चतिक्तकं घृतम्।

निम्बामृतापटोलानां कण्टकार्य्या वृषस्य च।
पृथग्दशपलान् भागान् जलद्रोणे विपाचयेत्॥ १९२॥
त्र्यूषणं खर्जिकाचारं शतपुष्पा च कार्षिका।
गर्भं समावाप्य पचेद्गुग्गुलोः पञ्चविंशतिः॥ १९३॥
पलञ्च खादयेदेतद्गुग्गुलुः पञ्चतिक्तकम्।
विधिना हन्तिनचिरा त्वग्दोषानतिविस्तरान्॥ १९४॥
विवर्णतापसंकोचं क्लेदवतीः शिरांस्तथा।
गण्डमालार्बुदव्यङ्ग नाडीकुष्टभगन्दरान्॥ १९५॥
विषमज्वरहृद्रोग गरदोषविषक्रमीन्।

प्रमेहासृग्दरोन्माद शोथगुल्मोदराणि च ॥
कामलापांडुरोगांश्च चिप्रमेव व्यपोहति ॥ १९६ ॥
इति गुग्गुलुपञ्चतिक्तकम् ।

सप्तच्छदं प्रतिविषां शम्याकं तिक्तरोहिणीं पाठाम् ।
मुस्तमुशीरं त्रिफलां पटोलपिचुमन्दपर्पटकान् ॥ १९७ ॥
धन्वयवासं चन्दन मुपकुल्यां पद्मकं रजन्यौ च ।
षड्ग्रन्थां सविशालां शतावरीं शारिवे चोभे ॥ १९८ ॥
वत्सकबीजं वासां मूर्वाममृतां किराततिक्ताञ्च ।
कल्कान् कुर्य्यान्मतिमान्यष्ट्याह्वं त्रायमाणाञ्च ॥ १९९ ॥
कल्कस्य चतुर्भागं जलमष्टगुणं रसोऽमृतफलानाम् ।
द्विगुणं घृतं प्रदेयं तत्सर्पिः पाययेत्सिद्धम् ॥ २०० ॥
कुष्टानि रक्तपित्तं प्रवालान्यर्शांसि रक्तवाहीनि ।
विसर्पमम्लपित्तं वातासृक् पांडुरोगञ्च ॥ २०१ ॥
विस्फोटकान् सपामानुन्मादान् कामलां ज्वरान् पांडून् ।
हृद्रोगगुल्मपिटकामसृग्दरं गण्डमालां च ॥ २०२ ॥
हन्यादेतत्सद्यः पीतं काले यथा बलं सर्पिः ।
योगशतैरप्यजितान्महाविकारान् जयेन्महातिक्तम् ॥ २०३ ॥
इति महातिक्तकं घृतम् ।

वासागुडूचीत्रिफलापटोल करञ्जनिंबासनकृष्टवेत्रम् ।
तत्क्वाथकल्केन घृतं विपक्वं तद्वज्रकं कुष्टहरं प्रदिष्टम् ॥ २०४ ॥
विशीर्णकर्णांगुलिहस्तपादः कम्पार्दितो भिन्नगलोऽपि मर्त्यः ।
पौराणिकीं कान्तिमवाप्य जीवेदभ्याधिको वर्षशतं च कुष्टी ॥२०५॥
इति वज्रकं घृतम् ।

वासागुडूचीत्रिफलापटोल निदग्धिकानिम्बकरञ्जतोये ।
वासादिकल्केन तु सिद्धमेतद् घृतं महावज्रकमादिशन्ति ॥२०६॥

तन्मासमात्रञ्च निषेव्यमाणो हिताशनो नातिचिरेण कुष्ठी।
विशीर्णकर्णांगुलिनासिकोऽपि भवेत्ससंपूर्णतनुः शरीरी ॥ २०७ ॥
उदीर्णवेगानपि च प्रमेहांश्चिरप्रवृत्तान्विषमज्वरांश्च।
तदेव सर्पिः सुजनैः प्रयुक्तं विजित्य कुष्टं बलमादधाति ॥ २०८ ॥

इति महावज्रकं घृतम्।

खदिरारग्वधव्योष विदृहन्ती सचित्रकम्।
पटोलत्रिफलारिष्ट हरिद्रावाकुचीफलम् ॥ २०९ ॥
कटुकातिविषापाठा त्रायन्ती धन्वयासकम्।
कुष्टं करञ्जबीजानि शारिवे द्वे सवत्सके ॥ २१० ॥
भल्लातकविडङ्गानि गुग्गुलोः कल्कसंयुतम्।
पञ्चतिक्तकषायेण सर्पिः सिद्धं पिबेन्नरः ॥ २११ ॥
विषविसर्पविस्फोट कंडूकुष्टव्रणानि च।
दद्रूकिटिभकुष्ठानि गलगण्डविचर्चिकाः ॥ २१२ ॥
पानतः शमयत्याशु ह्यशमिन्द्राशनिर्यथा ॥

इति खदिराद्यं घृतम्।

खदिरस्य तु तुलाः पञ्चशिंशिपासनयोस्तुले।
तुलार्द्धं सर्व एवैते करञ्जारिष्टवेतसाः ॥ २१३ ॥
पर्पटं कुटजं चैव वृषः क्रिमिहरस्तथा।
हरिद्रे कृतमालञ्च गुडूचीत्रिफलात्रिवृत् ॥ २१४ ॥
सप्तपर्णं च सकुट्य चतुर्द्रोणेन वारिणा।
पक्त्वा कषायं संगृह्य चतुर्भागावशेषितम् ॥ २१५ ॥
तेन क्वाथेन कुशलो घृतस्यार्द्धाढ़कं पचेत्।
कल्कैः कृतैर्महातिक्तै र्द्रव्यैरर्द्धपलोन्मितैः ॥ २१६ ॥
महाखदिरमेतद्धि कुष्ठिनामुत्तमं घृतम्।

अष्टादशविधं कुष्ठं पानादेव व्यपोहति ॥ २१७ ॥

इति महाखदिरघृतम् ।

मेषशृङ्गीश्वदंष्ट्रा शार्ङ्गेष्टा[१]गुडूचीसिद्धं शतम् ।
तैलमिदं कुष्ठिनां पानाभ्यङ्गयोर्विदधीत ॥ २१८ ॥

इति मेषशृङ्ग्याद्यं तैलम् ।

सप्तपर्णकरञ्जार्क मालतीकरवीरजम् ।
मूलं स्नुहीशिरीषाभ्यां चित्रकास्फोतयोरपि ॥ २१९ ॥
करञ्जबीजं त्रिफला त्रिकटुरजनीद्वयम् ।
सिद्धार्थकं विडङ्गानि प्रपुन्नाटञ्च संहरेत् ॥ २२० ॥
मूत्रपिष्टैः पचेत्तैलमेभिः कुष्ठविनाशनम् ।
अभ्यंगाद्वज्रकं नाम नाडीदुष्टव्रणापहम् ॥ २२१ ॥

इति वज्रकं तैलम् ।

एरण्डतार्क्ष्यवननीपकदंबभार्गी
कम्पिल्लवेल्लफलिनी सुरवारुणीभिः ।
निर्गुण्डीपुष्करसुगन्धयस्वर्णदुग्धी
श्रीवेष्टगुग्गुलुशिलाहरितालमिश्रैः ॥ २२२ ॥
तुल्यैस्त्वगर्कदुग्धैः सिद्धं तैलं महावज्रम् ।
अतिशयितवज्रकगुणं श्चित्रार्शो ग्रन्थिमालाघ्नम् ॥ २२३ ॥

इति महावज्रकं तैलम् ।

चतुर्गुणे लवणरसे कटुतैलं विपाचयेत् ।
मञ्जिष्ठारुड्शिग्रा चक्रमर्दारग्वधपल्लवैः ॥ २२४ ॥
एतत्सिद्धाग्निना साध्यं वर्णद कान्तिदायकम् ।
अष्टादशसु कुष्ठेषु शस्यते गात्रम्रक्षणात् ॥

---

१ शार्ङ्गेष्टा काकजङ्घा ।

दद्रुं विचर्चिकां पामां हन्ति सिध्मं विशेषतः ॥ २२५ ॥

इति व्रणतैलम्।

दार्वीविडंगं हयमारमूलं श्यामा च मूलं कृतमालकस्य।
कुसुम्भहेमोत्पलकासमर्दशिरीषयष्टीद्वयगन्धसिद्धाः ॥ २२६ ॥
निंबं वचाचन्दनपद्मकं च कुष्ठं निशामेन्धवचक्रमर्दाः।
मञ्जिष्टामांसो सुरदारुलाचामिद्धार्थकं वाकुचिबीजमूर्वं ॥२२७॥
गायत्रिमारं सुरसापटोलं यवानिकाबीजकरञ्जबीजम्।
द्रव्यैः समस्तैर्विधिना विपक्वं कर्षप्रमाणैः परिकोर्त्तितैश्च ॥२२८॥
प्रस्थं च तैलं सितसर्षपानां दत्वा रसं षड्गुणकं व्रणस्य।
शनैः पचेत्ताम्रमये कटाहे उद्धृत्यतैलं परिपाच्यमानम् ॥ २२९ ॥
पीत्वाथवा नस्य विधौ प्रयोज्यं सिध्मं, महादद्रुकिलासकुष्ठम्।
विचर्चिकाव्यङ्गविसर्पपामाः निहन्ति नूनं क्वथितं समस्तम् ॥१३०॥
बिभर्त्तिरूपंकमनीयमन्यैर्वर्णं तथा कान्तिकरं मनुष्यम् ॥

इति बृहत्तृणतैलम्।

मरिचालशिलाह्वार्कं पयोऽश्वारिजटाविषत्।
शकृद्रसविशालाख्यनिशायुग्दारुचन्दनैः ॥ १३१ ॥
कटुतैलं पचेत्प्रस्थं द्वाचैर्विषपलान्वितैः।
सगोमूत्रैस्तदभ्यङ्गा द्द्रुकुष्ठविनाशनम्।
सर्वेष्वपि च कुष्टेषु तैलमेतत्प्रशस्यते ॥ २३२ ॥

इति मरिचाद्यं तैलम्।

मरिचं त्रिवृतादन्ती चीरमार्कं शकृद्रमः।
देवदारुहरिद्रे द्वे मांसीकुष्टं सचन्दनम् ॥ २३३ ॥
विशालाकरवीरश्च हरितालं मनःशिला।
चित्रको लाङ्गलीलाचा विडङ्गं चक्रमर्दकम् ॥ २३४ ॥

शिरीषं कुटजो निम्बं सप्तपर्णस्नुहामृता ।
शम्याको नक्तमालोऽब्द खदिरो बाकुचीवचा ॥ २३५ ॥
ज्योतिष्मती च पलिका विषस्य द्विपल भवेत् ।
आढक कटुतैलस्य गोमूत्रञ्च चतुर्गुणम् ॥ २३६ ॥
मृत्पात्रे लोहपात्रे वा शनैर्मृदग्निना पचेत् ।
हन्यात्तैलवर ह्येतत्प्रलेपात् कौष्टिकान् व्रणान् ॥ २३७ ॥
पामाविचर्चिकाकण्डू दद्रुविस्फोटकानि च ।
वलय पलित छाया नीलोव्यग तथैव च ॥ २३८ ॥
अभ्यङ्गेन प्रणश्यन्ति सौकुमार्य्यश्च जायते ।
प्रथमे वयसि स्त्रीणा यासा नस्य प्रदीयते ।
जरामप्यजरा प्राप्य न स्तनायान्ति नम्रताम ॥ २३९ ॥
इति वृहन्मरिचाद्य तैलम् ।

मरिच पिप्पलीकुष्ट मर्कक्षीरं शक्रद्रम ।
देवदारुहरिद्रे द्वे मासीलोहितचन्दनम ॥ १४० ॥
विशालाकरवीरश्च हरिताल मन शिला ।
एतैरर्द्धपलैर्भागै गृहीतै श्लक्ष्णपिष्टितै ॥ २४१ ॥
कटुतैलस्य च प्रस्थ गोमूत्र स्याच्चतुर्गुणम ।
मृद्भाण्डे लोहभाण्डे वा शनैर्मृद्वग्निना पचेत् ॥ २४२ ॥
तत्तैल मधुपर्णीभ्या नियतसमवतारयेत् ।
एतेनैवोपशाम्यन्ति कोमला त्वक् प्रजायते ॥ २४३ ॥
ग्रथितानि च श्वित्राणि तैलेनानेन म्रक्षयेत ।
अपि त्रिवार्षिक श्वित्र शम नयति तत्क्षणात् ॥ २४४ ॥
बलीवर्दस्तुरङ्गो वा गजो वा व्याधिपीडित ।
त्रिभिर्वस्तिभिरत्यर्थं भवेन्मारुतविक्रम ॥ २४५ ॥
यासाञ्च दीयते नस्य स्त्रीणा प्रथमयौवने ।

जरासमयमासाद्य स्तनानो यान्ति विक्रयम् ॥ २४६ ॥
पुरुषस्यापि यस्येद दीयते नस्यकर्म्मणि ।
योजनानि व्रजत्यष्टौ श्रमं नाप्नोत्यसौ पथि ॥ २४७ ॥
अष्टादशानां कुष्टानां तैलमेतद्विनाशनम् ।

इति मरिचाद्यं तैलम् ।

गुडूचीदारुकुष्टञ्च शृङ्गवेरं पुनर्नवा ।
रास्नाबलामातुलुङ्ग त्रिफलांश्च पृथक् पृथक् ॥ १४८ ॥
जलद्रोणे समावाप्य पादशेष समुद्धरेत् ।
विपाच्य तद्रसं गृह्य वाल्कानितान् प्रदापयेत् ॥ २४८ ॥
मरिचं त्रिफलां दन्ती मर्कचीरं शक्रद्रसः ।
दारुकुष्ट हरिद्रे द्वे लोममीरक्तचन्दनम् ॥ २५० ॥
एतेषां पलिकान् भागान् विषस्यार्द्धपलं भवेत् ।
गोमूत्रे पेषित सर्वं सुसूक्ष्मन्तु समाचरेत् ॥ १५१ ॥
कटुतैलपलं त्रि श च्छनैर्मृद्वग्निना पचेत् ।
एतन्नस्यं प्रदातव्यं सर्वरोगापह शुभम् ॥ २५२ ॥
दन्तरोगेषु सर्वेषु शिरोरोगे गलग्रहे ।
पूतिनाशे पूतिमुखे तथैवार्द्धावभेदके ॥
गलगण्डे सुखव्यङ्गे तथैव कर्कशत्वचि ॥ २५३ ॥
प्रथमे वयसि स्त्रीणा नस्यं देयं यथा विधिः ।
न पतन्ति स्तनास्तासां सौकुमार्य्यञ्च जायते ॥ २५४ ॥
पुरुषस्याथवा नस्यं दीयते यस्य कस्य चित् ।
स याति योजनान्यष्टौ न श्रमं मन्यते क्वचित् ॥ २५५ ॥
दद्रुकिटिभकुष्टानि मण्डलानि विचर्च्चिकाः ।
स्वचणादेव शाम्यन्ति ये च शाखाश्रयागदाः ॥ २५६ ॥
वातभग्नस्तुरङ्गो वा हयो वा वायुपीड़ित. ।

वातामयाभिभूतो यः पुरुषो मन्दगोपि वा ॥
बलवेगो भवेत्तेषां वस्तिभिश्च निरिंस्त्रिभिः ॥ २५७ ॥
शीर्णकर्णांगुलीघ्राणः पिबेदग्निबलेन च ।
न विकारं तथा तस्य भवेद्देह. पुनर्नवः ॥ २५८ ॥

इति महामरिचाद्यं तैलम् ।

नक्तमालं हरिद्रे द्वे चार्कं तगरमेव च ।
करवीरं वचाकुष्ट मास्फोत रक्तचन्दनम् ॥ २५८ ॥
मालती सप्तपर्णञ्च मञ्जिष्टासिन्दुवारकम् ।
एषामर्धपलान् भागान् विषस्यापि पलं भवेत् ॥ २६० ॥
चतुर्गुणे गवां मूत्रे तैलप्रस्थं विपाचयेत् ॥ २६१ ॥
श्वित्रविस्फोटकिटिभ कीटलूताविचर्चिकाः ।
कण्डूकच्छूविकाराश्च ये व्रणा विषदूषिताः ॥ २६२ ॥
विषतैलमिदं नाम सर्वव्रणविशोधनम् ॥

इति विषतैलम् ।

सोमराजिहरिद्रे द्वे सर्षपारग्वधं गदम् ।
करञ्जैडगजाबीजं गर्भं दत्वा विपाचयेत् ॥ २६३ ॥
तैलं सर्षपसंभूतं नाडीदुष्टव्रणापहम् ।
अनेनाशु प्रशाम्यन्ति कुष्टान्यष्टादशैव तु ॥ २६४ ॥
नीलिकापिडिकाव्यङ्गं गम्भीरं वातशोणितम् ।
कण्डून्यच्छप्रशमनं कच्छूपामाविनाशनम् ॥ २६५ ॥

इति सोमराजीतैलम् ।

श्वेतकरवीरमूलं विषांशसाधितं गवां मूत्रे ।
चर्मदलसिध्मपामाविस्फोट किटिभजित्तैलम् ॥ २६६ ॥

इति श्वेतकरवीराद्यं तैलम् ।

गण्डीरिकाचित्रकमार्कवार्क कुष्ठद्रुमत्वक्लवणैः समूत्रैः।
तैलं पचेन्मण्डलदद्रुकुष्टदुष्टव्रणारुकिटिभापहारि ॥ २६७ ॥

इति गण्डीराद्यं तैलम्।

स्नुहीक्षीरं विडंगानि अर्कक्षीरं च लांगली।
बलापलाशबीजानि कोशातक्योऽथ पिप्पली ॥ २६८ ॥
सिद्धं तैलन्तु गोमूत्रं कुष्टानां नाशनं परम्।
पामापहरणं प्रोक्तं पूयघ्नं व्रणरोपणम् ॥ २६९ ॥

स्नुह्याद्यं तैलम्।

खदिरकषायद्रोणं कुम्भे घृतभाविते समावाप्य।
प्रक्षेप्याः पृथक् पलिकाः सर्वास्तु चूर्णितास्तस्मिन् ॥ २७० ॥
त्रिफलात्रिकटुकरजनी मुस्तारुष्करविडङ्गवाकुचिकाः।
सुवर्णत्वक् छिन्नरुहा धातकी मधुशतपलं मासम् ॥ २७१ ॥
विदधीतधान्यमध्ये प्रातः प्रातः पिबेत्ततो युक्त्या।
मासेन महाकुष्टं हन्त्यनल्पञ्च पक्षेणार्शः ॥ २७२ ॥
श्वासभगन्दरकासकिलासप्रमेहशोफांश्च।
स भवति कनकवर्णः पीत्वारिष्टं कनकबिन्दुञ्च ॥ २७३ ॥

इति कनकबिन्दुनामारिष्टः।

पक्षात्पक्षाच्छर्दनान्यभ्युपेया न्मासान्मासाच्छोधनं चाप्यधस्तात्।
त्र्यहात्त्र्यहान्नस्यनिष्टीवनञ्च मासेष्वसृङ्मोचयेत् षट्सु षट्सु ॥२७४॥
शालिषष्टिकगोधूम यवमुद्गादयो हिताः।
*पुराणाः कुष्ठिना तिक्तं शाकं जांगलसंयुतम् ॥ २७५ ॥*
नीचरोमनखो यस्तु नित्यमौषधतत्परः।
योषिन्मांससुरावर्जी कुष्टीकुष्टाद्विमोहति ॥ ७६ ॥

इति कुष्टनिदानचिकित्सा।

## अथ श्वित्रचिकित्सामाह।

श्वित्रिणो हृतदोषस्य हृतरक्तस्य वाऽसकृत्।
खदिरांबुयवान्नानां वृक्षस्य मलयूरसः।
सगुडः शस्यते पाने यवागूमण्डभोजिनः॥ २७७॥
श्वग्रहे तत्र ये स्फोटा जायन्ते तांश्च कण्टकैः।
भित्वा लेपैः प्रदेहैस्तान् क्षाराग्निभ्यां प्रसाधयेत्॥ २७८॥
खदिरामलककषायं वाकुचीबीजान्वितं पिबेन्नित्यम्।
शङ्खेन्दुकुन्दधवलं श्वित्रं हन्तीह तच्छीघ्रम्॥ २७९॥
कुङ्कुमवल्गुजबीजं हरितालचतुर्थभागसंमिश्रम्।
मनःशिलातोऽनकार्द्धं गुञ्जाफलमग्निमूलञ्च॥
गोमूत्रेण च पिष्टं सवर्णकरणं परं श्वित्रे॥ २८०॥
दग्ध्वा च गोः शकृत् क्षारं तन्मूत्रेणैव गालितम्।
प्रक्षितं वर्हिपित्ताक्तं सद्यः सावर्ण्यमाप्नुयात्॥ २८१॥
श्वेतकुष्टं व्रजत्यस्तं पक्षार्धेनाधिकेन वा।
गिरिकर्ण्यास्तु कृष्णायाः मूलेन परिलेपितम्॥ २८२॥
कुनटीशिखिपित्तेन भस्मवातालकोद्भवम्।
गजदर्पेण मालत्याः क्षारो वा श्वित्रनाशनः॥ २८३॥
स्नुगर्कजातीपूतीकसुवर्णहरिपल्लवाः।
मूत्रपिष्टाः प्रलेपेन श्वित्रदद्रुव्रणच्छिदः॥ २८३॥
शनोश्विकदलीभस्म काकस्य विड्प्रलेपतः।
श्वित्रमुग्रं निहन्त्येतत् चत्वारिंशद्दिनैष्किल॥ २८५॥
समनःशिलाविडङ्गं कासीसरोचना कनकपुष्पी च।
श्वित्राणां प्रशमार्थं ससैन्धवं लेपनं दद्यात्॥ २८६॥
अयोरजः कृष्णतिलाञ्जनानि सावल्गुजान्यामलकानि दग्ध्वा।

पिष्टानि भृङ्गस्य सकृद्रसेन हन्यात्किलासपरिघृष्यलेपात् ॥ १८७ ॥
दासीकुरण्टस्य सितस्य पुष्पमादित्यवल्लयञ्जनवह्निनीली।
पुष्पाणि तेषां स्वरसं प्रपीड्य तल्लोहचूर्णाञ्जनसंप्रयुक्तम् ॥ २८८ ॥

विघृष्यपूर्वं सकलान् व्रणांस्तु
ततः प्रयोगेन पुनः प्रलिम्पेत्।
सितानि रोमाणि निहन्ति शीघ्रं
कृष्णानि कुर्य्यादपि योगकोऽयम् ॥ २८९ ॥

कपोतवंकालशुनस्य शीघ्रं ससैन्धवं चित्रकमूलमिश्रम्।
ततश्च तेषां स्वरसेन मिश्रं व्रणप्रलेपाञ्जननं हि रोम्नाम् ॥२९०॥

कटुकालाबुमव्योष हिंस्रार्कद्वयमारकाः।
कुष्टं वल्गुजभल्लात स्नुहीमूलानि सर्षपाः ॥ २९१ ॥
विल्वकारिष्टपीलूनां पत्राण्यारग्वधस्य च।
त्रिफलामुस्तजीमूत विशालामूत्रपेषितः ॥ २९२ ॥
गोगजाश्वाजमूत्राणा माढ़कं त्वाढ़कं पचेत्।
स्नुह्यर्कक्षारकुड़वं तैलं युक्त्या प्रदापयेत् ॥ २९३ ॥
पचेद्दार्वीप्रलेपन्तु दृष्ट्वा कुष्टानि लेपयेत्।
श्वित्राणि दिग्धलिप्तानि यान्ति नाशमशेषतः ॥ २९४ ॥

इति कटुकादिप्रलेपः।

खदिरस्य पलान्यष्टौ सोमराज्याः पलद्वयम्।
जलाढ़कद्वये साध्यं यावत्पादावशेषितम् ॥ २९५ ॥
क्वाथ्यमानञ्च मृद्वग्नौ घृतप्रस्थं विपाचयेत्।
चतुष्पलं सोमराज्याः खदिरस्य पलं भिषक् ॥ २९६ ॥
पटोलमूलं त्रिफलां त्रायमाणां दुरालभाम्।
कल्कार्थं योजयेदेतान् कार्षिकान् श्लक्ष्णपेषितान् ॥ २९७ ॥
पलद्वयं कौशिकस्य शुद्धस्याच प्रदापयेत्।

सिद्धं सर्पिरिदं नश्येत् श्वित्रमथ इवानलम् ॥ २९८ ॥
अष्टादशानां कुष्टानां परमं भेषजं मतम् ।
आमवातापतन्त्राणां पांडुप्रदरशोषिणाम् ॥ २९९ ॥
किलासघ्नं च कंडूघ्नं दीपनं पाचनं तथा ।
सोमराजीघृतं नाम निर्मितं ब्रह्मणा पुरा ॥ ३०० ॥

इति सोमराजीघृतम् ।

त्रिफलाढ़कं तथा प्रस्था वऽयसी रजसी मती ।
वायसीकाकमाचीभ्यां द्वे तुले शङ्खिनीतुला ॥ ३०१ ॥
द्विद्रोणेऽपां पचेदेतत् पादभागावशेषितम् ।
घृतप्रस्थं तु विपचेद् गर्भं चैतत्ससाचरेत् ॥ ३०२ ॥
वरुणं वत्सकाफलं वृषपर्णं देवदारु च ।
निदग्धिकां भृङ्गराजं पारावतपदीमपि ॥ ३०३ ॥
नीलकं नाम विख्यातं घृतं कुष्टविनाशनम् ।
श्वित्राणि रञ्जयेच्चैतत् पानाभ्यञ्जनयोजितम् ॥ ३०४ ॥
पामाविचर्चिकासिध्मकिटभानि च नाशयेत् ॥

इति नीलीघृतम् ।

आरग्वधं वायसी च सुरसा मदयन्तिको ।
एकैकस्य तुलादेया त्रैफलं चाढ़कद्वयम् ॥ ३०५ ॥
दन्तीदारुहरिद्रा च कुडवं वरुणत्वचम् ।
चित्रकं चार्कमूलञ्च काकमाचीनिदग्धिका ॥ ३०६ ॥
एषां दशपलान् भागान् चतुर्द्रोणेऽम्भसः पचेत् ।
अष्टभागावशिष्टन्तु पूतं पुनरधिश्रयेत् ॥ ३०७ ॥
दधिसर्पिश्च दुग्धं च गोमूत्रं च शकृद्रसम् ।
पादकाढ़कमेतेषां गर्भं चैनं समावपेत् ॥ ३०८ ॥

अवल्गुजं सकटुकं नक्तमालफलानि च।
त्रिफलाचित्रको दन्ती मुस्तं कटुकरोहिणी ॥ ३०८ ॥
पिचुमन्दस्य शिग्रोश्च मेंगुदस्य फलानि च।
किराततिक्तकं श्यामा नीलिनीनीलमुत्पलम् ॥ ३१० ॥
एतैः सिद्धं घृतं साव्यं पाययेत् श्वित्ररोगिणाम्।
महानीलमिति ख्यात मेतच्छ्वित्रहरं परम् ॥ ३११ ॥
भगन्दरं तथार्शांसि क्रिमिनपि विनाशयेत्।
अष्टादशानां कुष्टानां सर्पिरेतच्चिकित्सितम् ॥ ३१२ ॥
अथर्वविहिते दीप्तं ब्रह्मदण्ड इवाशनिः।
विशेषतश्च श्वित्राणि रञ्जयेच्च भिनत्ति च।
प्रयोगतः सेव्यमानं पानेनाभ्यञ्जनेन च ॥ ३१३ ॥

इति महानीलोघृतम्।

मयूरकक्षारजले सप्तकृत्वः परिस्रुते।
सिद्धं ज्योतिषतीतैल मभ्यङ्गाच्छ्वित्रनाशनम् ॥ ३१४ ॥

इति ज्योतिषतीतैलम्।

कुष्टाधिकारनिर्दिष्टं विषतैलमिहोच्यते ॥

## इति वङ्गसेने कुष्टश्वित्रनिदानचिकित्साधिकारः समाप्तः ॥ ५७ ॥

—०—

## अथोदर्दशीतपित्तकोठनिदानमाह।

शीतमारुतसंस्पर्शात् प्रदुष्टौ कफमारुतौ।
पित्तेन सह संभूय वहिरन्तर्विसर्पतः ॥ १ ॥
पिपासारुचिहृल्लास देहसादाङ्गगौरवम्।

रक्तलोचनता तेषां पूर्वरूपस्य लक्षणम् ॥ २ ॥
वरटीदष्टसंस्थानः शोफः सञ्जायते बहिः ।
सकण्डूतोदवहुल छर्दिज्वरविदाहवान् ॥ ३ ॥
उदर्दमिति तं विद्या च्छीतपित्तमथापरे ।
वाताधिकं शीतपित्तमुदर्दस्तु कफाधिकः ॥ ४ ॥
सोत्संगैश्च सरोगैश्च कंडूमद्भिश्च मण्डलैः ।
शैशिरः कफजो व्याधिरुदर्दः परिकीर्तितः ॥ ५ ॥
असम्यग्वमनोदीर्ण पित्तश्लेष्मान्नविग्रहैः ।
मण्डलानि सकंडूनि रागवन्ति बहूनि च ॥
उत्कोठः सानुबन्धश्च कोठ इत्यभिधीयते ॥ ६ ॥

—०—

## अथ चिकित्सामाह ।

अत्राशु वमनं कार्यं पटोलारिष्टवासकैः ।
त्रिफलापुरकृष्णाभि विरेकश्चात्र शस्यते ॥ ७ ॥
त्रिफलाक्षौद्रसंयुक्तं पिबेद्वा नवकार्षिकम् ।
विसर्पोक्तममृतादि भिषगत्रापि योजयेत् ॥ ८ ॥
सितां त्रिकटुसंयुक्तां गुड़मामलकैः सह ।
यवानीं पाययेचापि सव्योषक्षारसंयुताम् ॥ ९ ॥
रास्नादेवाह्वत्रिफलां साश्वगन्धां शतावरीम् ।
यवानीं हिंगुसंयुक्ता मुदर्दविनिवृत्तये ॥ १० ॥
प्रियालं तिल्वकं कोलं खदिरः खदिरासनः ।
सप्तपर्णारिमेदा च गणोऽयं स्यादुदर्दहा ॥ ११ ॥
सगुड़ं दीप्यकं यस्तु खादेत्पथ्यान्नभुङ्नरः ।
तस्य नश्यति सप्ताहा दुदर्दः सर्वदेहजः ॥ १२ ॥

सिद्धार्थरजनीकल्कै: प्रपुन्नाटतिलै: सदा ।
कटुतैलेन संमिश्र मेतदुद्वर्त्तनं परम् ॥ १३ ॥

इति सिद्धार्थकाद्युत्तनम् ।

आर्द्र कस्वरस: पेय: पुराणगुड़संयुत: ।
शीतपित्तापह: श्रेष्टो वह्निमान्द्यविनाशन: ॥ १४ ॥
चीरस्विन्नानि काश्मर्य्या: फलान्यग्निक्षताशन: ।
क्रमिदद्रुहराण्येव शीतपित्ते प्रयोजयेत् ॥ १५ ॥
घृतं पीत्वा महातिक्तं शोणितं मोचयेत्तथा ।
स्निग्धस्विन्नस्य संशुद्धि मादौ कोठे समाचरेत् ॥ १६ ॥
सर्वत: शुद्धदेहस्य कुष्टघ्नीं कारयेत् क्रियाम् ।
कुष्टोक्ताञ्च क्रियां कुर्य्या दम्लपित्तघ्नमेव च ॥
उदर्दोक्तां क्रियां वापि कोठरोगे समासत: ॥ १७ ॥
निम्बस्य पत्राणि सदा घृतेन धात्रीविमिश्राण्यथवोपयुञ्ज्यात् ।
विस्फोटकण्डूक्रमिशीतपित्तमुदर्दकोठौ च कफञ्च हन्यात् ॥ १८ ॥
कुष्टं हरिद्रासुरसापटोलं निम्बाश्वगन्धासुरदारुशिग्रु ।
ससर्षपं तुम्बुरुधान्यचव्यमिमानि चूर्णानि समानि कुर्य्यात् ॥१८॥
तत्तक्रपिष्ट प्रथमं शरीरं तैलाक्तमुद्वर्त्तयुतं यतेत ।
ततोऽस्य कंडूपिटिका सशोथकुष्टानि शोथाश्च शमं व्रजन्ति ॥ २० ॥
तैलस्योद्वर्त्तने योगे योज्योराज्यादिको गण: ॥ २१ ॥

## इति वङ्गसेन उदर्दशीतपित्तकोठनिदानचिकित्साधिकार: समाप्त: ॥ ५८ ॥

—०—

## अथाम्लपित्तनिदानमाह ।

विरुद्धदुष्टाम्लविदाहिपित्तप्रकोपिपानान्नभुजो विदग्धम् ।

पित्त स्वहेतूपचित पुरा य त्तदम्लपित्त प्रवदन्ति सन्त ॥ १ ॥

अविपाकक्लमो क्लेश तिक्ताम्लोद्गारगौरवै ।

हृत्कण्ठदाहारुचिभि चाम्लपित्त वदेद्बुध ॥ २ ॥

तृड्दाहमूर्च्छा भ्रममोहकारि प्रयात्यधो वा विविधप्रकारम् ।
हृल्लासकोठानलसादहर्षस्वेदाङ्गपीतत्वकर कदाचित् ॥ ३ ॥
वात हरित्पीतकनीलकृष्ण मारक्तरक्ताभमतीव चाम्लम् ।
मासोदकाभ त्वतिपिच्छिलाभ श्लेष्मानुजात विविध रसेन ॥ ४ ॥
भुक्ते विदग्धे ऽप्यथवाप्य भुक्ते करोति तिक्ताम्लवमि कदाचित् ।
उद्गारमेवविधमेव कण्ठहृत्कुक्षिदाह शिरोरुजञ्च ॥ ५ ॥
करचरणदाहमौष्ण्य महतीमरुची ज्वरञ्च कफपित्तम् ।
जनयतिकंडूमण्डलपिडिकाशतनिचितगात्ररोगचयम् ॥ ६ ॥

रोगोऽयमम्लपित्ताख्यो यत्नात् ससाध्यते नव ।

चिरोत्थितो भवेद्याप्य कृच्छ्रसाध्य सकस्यचित् ॥ ७ ॥

सानिल सानिलकफ सकफ तच्चलक्षयेत् ।

दोषलिङ्गेन मतिमान् भिषग्मोहकर हि तत् ॥ ८ ॥

कम्पप्रलापमूर्च्छा-चिमिचिमिगात्रावसादशूलानि ।

तमसो दर्शनविभ्रम हर्षणमोहाश्च वातयुते ॥ ९ ॥

कफनिष्ठीवनगौरवजडतारुचिशीतसादवमिलेपा ।

दहनबलसादकडूर्निद्राचिह्न कफानुगते ॥ १० ॥

उभयमिदमेव चिह्न मारुतकफसभवे भवत्यम्ले ॥ ११ ॥

तिक्ताम्लकटुकोद्गा रवमिहृत्कण्ठदाहकृत् ।

तमो मूर्च्छारुचिच्छर्दिरालस्यञ्च शिरोरुजा ॥

प्रसेको मुखमाधुर्य श्लेष्मपित्तस्य लक्षणम् ॥ १२ ॥

—०—

## अथ चिकित्सामाह।

अम्लपित्ते तु वमनं पटोलारिष्टवासकैः।
कारयेन्मदनक्षौद्र सिन्धुयुक्तं ततो भिषक् ॥ १३ ॥
विरेचनं त्रिवृच्चूर्णं मधुधात्रीफलद्रवैः ॥ १४ ॥
सम्यग्वान्तविरिक्तस्य सुस्निग्धस्यानुवासनम्।
आस्थापन चिरोद्भूते देय दोषाद्यपेक्षया ॥ १५ ॥
तिक्तभूयिष्टमाहारं पानं वापि प्रयोजयेत्।
यवगोधूमविकृती तीक्ष्णसंस्कारवर्जिताः।
यथास्वं लाजशक्तून्वा सितामधुयुतान् पिबेत् ॥ १६ ॥
पूतीकरञ्जशुङ्गानि घृतभृष्टानि रोगिणे।
निवेद्य भोजने कार्यं वमन कोष्णवारिणा ॥ १७ ॥
अलम मूर्च्छितं तस्य सुखं निर्ह्रीयते यतः।
अरोचकस्य वैरस्य व्रणकण्ठोपलेपनात् ॥ १८ ॥
ह्रासादवैव वमनं प्रकुर्य्याद्योगविन्नरः।
धारयेत् कवलानिष्टान् पित्तघ्नानतिरोचकान्।
भ्रष्टान् कलायानथवा मसूरान् वा प्रकल्पयेत् ॥ १९ ॥
ऊर्ध्वगं वमनैर्धीमानधोगं रेचनैर्हरेत् ॥ २० ॥
वमने शोधने जाते यदि दोषो न शाम्यति।
तदा वै शिशिरा लेपा अश्मकुस्तावथ युक्तितः ॥ २१ ॥
कम्पप्रलापमूर्च्छाङ्ग दाहतृष्णासपित्तिनः।
वातप्रकोप तृष्णाद्य रक्षन् शोधनमाचरेत् ॥ २२ ॥
चित्रकैरण्डमूलानि यवाय सयवासकाः।
जलेन क्वथितं शीतं कोष्टदाहरुजापहम् ॥ २३ ॥
अभयापिप्पलीद्राक्षा सिताधन्वयवासकम्।

मधुना कण्ठदाहघ्नं मम्लपित्तहरं परम् ॥ २४ ॥
निस्तुषयवधात्री च त्रिगन्धं क्वथितं पिवेत् ।
चौद्रयुतं निहन्त्याशु छर्दिं पित्ताम्लसम्भवाम् ॥ २५ ॥
छिन्नोद्भवा निम्बपटोलपत्रं फलत्रिकं सुक्वथितं सुशीतम् ।
चौद्रान्वितं पित्तमनेकरूपं सुदारुणं हन्ति तदम्लपित्तम् ॥२६॥
अमृतानागरमुस्त किराततसमभागसाधितं यत्तोयम् ।
दारुणं तदम्लपित्तं जयत्यवश्यं नृणां सद्यः ॥ २७ ॥
पटोलशुण्ठीयवपिप्पलीनां क्वाथं पिवेन्माक्षिकसंप्रयुक्तम् ।
तदम्लपित्त विनिहन्ति शूलमग्नेय वृद्धिं भुजयोर्वलञ्च ॥ २८ ॥
वासामृतापर्पटक निम्बभूनिम्बमार्कवैः ।
त्रिफला कुलकैः क्वाथः सचौद्रश्चाम्लपित्तहा ॥ २९ ॥

इति दशाङ्गक्वाथः ।

हिंगु च कनकफलानि चिञ्चात्वचो घृतश्च पुटदग्धम् ।
शमयति तदम्लपित्त मम्लभुजो यथोत्तरं द्विगुणम् ॥ ३० ॥
एलापटोलघनचन्दनधान्यधात्री
वांशीवरांगदलनागकणाभयाभिः ।
लेहः सिताज्यमधुभिः सितया च पिण्डी
सम्यक् कृता शुभदिनेन सुमन्त्रपूता ॥ ३१ ॥
हन्त्यम्लपित्तवमनारुचिदाहमोह
खालित्यमेहतिमिरप्रतशुक्रदोषान् ।
भुक्त्वा नरः सततमामलकीरसेन
हृष्टोऽप्यनेन सुभवेत्तरुणोरिरं सु॥ ३२ ॥
यवकृष्णपटोलानां क्वाथं चौद्रयुतं पिवेत् ।
नाशयेदम्लपित्तञ्च अरुचिञ्च वमिन्तथा ॥ ३३ ॥

वासानिम्बपटोलत्रिफलासनयासयोजितो जयति।
ऊर्ध्वकफमम्लपित्तं प्रयोजितो गुग्गुलुः क्रमशः॥ ३४॥

इति वासादिगुग्गुलुः।

त्रिकटुकमुस्तकण्टकारीपर्पटकारिष्टकुटजबीजानाम्।
सौराष्ट्रिकापटोलत्रायन्तीदारुमूर्वाणाम्॥ ३५॥
तिक्तामृणालमलयज कलिङ्गकैलाकिराततिक्तानाम्।
सवचातिविषाकेशरदीप्यकमधुशिग्रुबीजानाम्॥ ३६॥
चूर्णं पटघृष्टमिदं पीतं शिशिरेण वारिणा प्रातः।
लीढं क्षौद्रेण चाम्लपित्तं प्रायेणाधोगतं हन्ति॥ ३७॥
अधोगतेऽम्लपित्ते तु पैत्तिकीं ग्रहणीविधिम्।
पाचनीं दीपनीञ्चैव वीक्ष्यावीक्ष्यावचारयेत्॥ ३८॥
ज्वलन्तमिवमात्मानं मन्यन्ते योऽम्लपित्तवान्।
तस्य संशोधनं पथ्यं न शान्तिः शोधनं विना॥ ३९॥
अचिरोत्थे चिरोत्थेव वमनं तत्र कारयेत्।
सवाते सविबन्धेऽस्मिन् हिता कंसहरीतकी॥ ४०॥
क्षीरं तथा गुड़श्चैव सर्पिर्लिह्योऽथवा पुनः।
अम्लपित्ते प्रयोक्तव्यः कफपित्तहरो विधिः॥ ४१॥
गुडकूष्माण्डकं चैव तथा खण्डामलक्यपि।
गुड़चीरकणा सिद्धं सर्पिश्चापि योजयेत्॥ ४२॥
रक्तपित्तेऽपि यच्चोक्तं यच्छूले चापि पैत्तिके।
सत्सर्वं कारयेद्धीमान् अम्लपित्ते विशेषतः॥ ४३॥
पिप्पलीक्वाथकल्कानां घृतं सिद्धं मधुप्लुतम्।
पिबेत्प्रातः समुत्थायो ह्यम्लपित्तनिवृत्तये॥ ४४॥

इति पिप्पलीघृतम्।

शतावरीमूलकल्कं घृतप्रस्थं पयः समम्[१]।
पचेन्मृदग्निना सम्यक् क्षीरं दत्वा चतुर्गुणम् ॥ ४५ ॥
नाशयेदम्लपित्तञ्च वातपित्तोत्थितं ध्रुवम्।
रक्तपित्तं तृषां मूर्च्छां श्वासं सन्तापमेव च ॥ ४६ ॥

इति शतावरीघृतम्।

तिक्तकं पट्पलं सर्पिः पञ्चतिक्तमथापि वा ॥
गुग्गुलुतिक्तकं वापि ह्यम्लपित्ते प्रयोजयेत् ॥ ४७ ॥

—०—

धात्रीशतावरीक्षौद्रं तुल्यं शर्करया समम्।
लिह्याद्दत्तनुपानेन पयसाथ घृतेन च ॥ ४८ ॥
अम्लपित्तं निहन्त्याशु वलिपलितनाशनम्।
चक्षुष्यमायुष्यतमं चतुःसमसुदाहृतम् ॥ ४९ ॥

इति चतुःसमचूर्णम्।

त्रिकटुत्रिफलामुस्तं विडङ्गं चित्रकं तथा।
एषां संचूर्णितानान्तु प्रत्येकन्तु फलं भवेत् ॥ ५० ॥
कर्षद्वयं गन्धकस्य तदर्धं पारदस्य च।
विडालपदमात्रन्तु लिह्यात्तन्मधुसर्पिषा ॥ ५१ ॥
शीतोदकं चानुपिबेत् क्रमाद्दव्यं पयस्तथा।
अम्लपित्तमग्निमान्द्यं परिणामरुजं तथा ॥ ५२ ॥
कामलां पांडुरोगञ्च हन्यादेतद्रसामृतम्।

इति रसामृतं चूर्णम्।

कुडवं नारिकेरस्य जले मृदग्निना पचेत्।
नारिकेरजलाभावे गव्ये पयसि तत्पिवेत् ॥ ५३ ॥

---

१ ययोऽत्र शतावरीमूल रसः क्षीरस्योक्तत्वात्।

धान्यकं पिप्पलीमुस्तं चातुर्जातं विचूर्णितम्।
प्रत्येकं टङ्कमात्रन्तु शीते तस्मिन्विनिःक्षिपेत्॥ ५४॥
पलमात्रस्तदर्द्धोऽपि भक्षितः प्रत्यहं नरैः।
नारिकेरकखण्डोऽयं पुंस्त्वनिद्रा बलप्रदः॥ ५५॥
अम्लपित्तं रक्तपित्तं शूलञ्च परिणामजम्।
क्षयं क्षपयतिक्षिप्रं शुष्कं दावानलो यथा॥ ५६॥

इति नारिकेरखण्डः।

प्रस्थन्तु नारिकेरस्य सूक्ष्मं दृषदिपेषितम्।
निष्कुलीकृतकूष्माण्ड खण्डानामर्द्धमाढ़कम्॥ ५७॥
तद्द्वयं भर्ज्जयेद्गव्ये घृते तु कुड़वोन्मिते।
ततस्तत्र क्षिपेच्छुद्धं गोदुग्धं चाढ़कोन्मितम्॥ ५८॥
तत्रैव निक्षिपेद्गव्यां सितां प्रस्थद्वयोन्मिताम्।
पचेत्सर्वाणि चैकत्र मृदुना वह्निना भिषक्॥ ५९॥
सुपक्वे शीतले तत्र चूर्णीकृत्यविनिक्षिपेत्।
सूक्ष्मैला धान्यकं धात्री पर्पटं जलदं जलम्॥ ६०॥
उशीरं चन्दनं द्राक्षां शृङ्गाटं च कसेरुकम्।
त्वक् पत्रकसुकर्पूरं कर्षयुग्मं पृथक् पृथक्॥ ६१॥
सर्वं संमिश्रयेद्द्रव्ये भाजने मृन्मये नवे।
पलमात्रमिदं प्रात र्भक्षयेद्वा यथानलम्॥ ६२॥
एतन्निषेवितं हन्ति रोगानेनात्र संशयः।
अम्लपित्तं ज्वरं पित्तं रक्तपित्तमरोचकम्॥ ६३॥
वातरक्तं तृषां दाहं पांडुरोगं च कामलाम्।
क्षयं क्षपयति क्षिप्रं शूलञ्च परिणामजम्॥ ६४॥
नारिकेरस्य खण्डोऽय मश्विभ्यां भाषितः पुरा।

वर्णदो बृंहणो हृद्यः पुंस्त्वनिद्रा बलप्रदः ॥ ६५ ॥

इति बृहन्नारिकेरखण्डः ।

नारिकेरफलप्रस्थं पिष्टं घृतविभर्ज्जितम् ।
प्रस्थं प्रस्थं समादाय शुण्ठ्याश्चूर्णस्य तद् युतम् ॥ ६६ ॥
द्विपात्रं नारिकेराम्बु तत्समं चीरमेव च ।
धात्र्याश्च स्वरसप्रस्थं खंडस्यापि तुलां न्यसेत् ॥ ६७ ॥
एकीकृत्य पचेत्सर्वं शनैर्मृदग्निना भिषक् ।
सिद्धशीते प्रदातव्यं चूर्णं तत्र सुकंडितम् ॥ ६८ ॥
त्रिकटुः सचतुर्जातः प्रत्येकं तु पलोन्मितम् ।
धात्रीजीरकयुग्मञ्च धान्यकं ग्रन्थिपर्णकम् ॥ ६९ ॥
तुगापयोदचूर्णानि त्रिकर्षञ्च पृथक् पृथक् ।
मधुनः पलानि चत्वारि स्निग्धे भाण्डे निधापयेत् ॥ ७० ॥
कर्षप्रमाणं कर्त्तव्यं रसं यूषं विवेदनु ।
अम्लपित्तं निहन्त्याशु शूलं चैव सुदुस्तरम् ॥ ७१ ॥
परिणामभवं शूलं पृष्टशूलं च नाशयेत् ।
अन्नोपरि भवं शूलं हृच्छूलं च सुदुस्तरम् ॥ ७२ ॥
सर्वशूलहरं श्रेष्टं वायोर्वेगं यथागिरिः ।
कण्ठदाहं च हृद्दाहं छर्दिं तृष्णां सुदारुणम् ॥ ७३ ॥
कासं पञ्चविधं चैव रक्तपित्तं सुदारुणम् ।
पीनसञ्च प्रतिश्यायं यक्ष्माणं विनिहन्ति च ॥ ७४ ॥
परं वाजीकरं श्रेष्टं बलपुष्टिविवर्द्धनम् ।
अग्निमन्दीपनकरं रसायनमिदं शुभम् ॥ ७५ ॥
मूत्ररोगेषु सर्वेषु वातरोगेषु शस्यते ।
गुदजानि च सर्वाणि तांस्तान् रोगान्निहन्ति च ॥ ७६ ॥
रोगानीकविनाशाय लोकानुग्रहहेतुना ।

अश्विभ्यां निर्मितं श्रेष्टममृताख्यं रसायनम् ॥ ७७ ॥

इति नारिकेरामृतम्।

त्रिकटुत्रिफलामुस्तं बीजं चैव विड़ङ्गजम्।
एलापत्रं च सर्वाणि समभागानि कारयेत् ॥ ७८ ॥
यावन्त्येतानि सर्वाणि लवङ्गं तत्समं भवेत्।
सर्वचूर्णाद्द्विगुणितं त्रिवृच्चूर्णं कारयेत् ॥ ७९ ॥
यावन्त्येतानि सर्वाणि तावती शर्करा भवेत्।
सर्वमेकीकृतं पात्रे स्निग्धे चैव निधापयेत् ॥ ८० ॥
भोजनादौ ततो भक्षे न्मापाष्टकमिदं शुभम्।
शीततोयानुपानञ्च नारिकेरोदकं तथा ॥ ८१ ॥
ततो यथेष्टमाहारं कुर्य्यात् क्षीरोदनञ्च वै।
अम्लपित्तं हरत्याशु शूलदुर्नामनाशनम् ॥ ८२ ॥
प्रमेहं विंशतिञ्चैव मूत्राघातं तथाश्मरीम्।
अविपत्यकरं चूर्णमगस्तिमुनिभाषितम् ॥ ८३ ॥

इत्यविपत्यकरं चूर्णम्।

पिप्पल्याः कुड़वं चूर्णं घृतस्य कुड़वं द्वयम्।
पलं षोड़शकं खण्डाच्छतावर्य्याः पलाष्टकम् ॥ ८५ ॥
शिवायाः स्वरस्यापि पलं षोड़शकं मतम्।
क्षीरप्रस्थद्वये साध्यं लेहीभूतेऽत्र निक्षिपेत् ॥ ८६ ॥
त्रिजातकाभयाजाजी धान्यमुस्तशिवातुगाः।
एतेषां कार्षिकं चूर्णं कर्षार्द्धं कृष्णजीरकम् ॥ ८७ ॥
नागरं नागकं जाती फलं समरिचं हिमम्।
दत्वा पलत्रयं क्षौद्रं स्निग्धभाण्डे विनिःक्षिपेत् ॥ ८८ ॥
प्रातर्य्यथाबलं लिह्या दम्लपित्तप्रशान्तये।

क्षयासारोचकच्छर्दिपिपासादाहनाशनम् ॥ ८८ ॥

इति पिप्पल्याद्यवलेहः।

कूष्माण्डकरसो ग्राह्यः पलानां शतमात्रकम्।
रसतुल्यं गवां क्षीरं धात्रीचूर्णं पलाष्टकम् ॥ ९० ॥
लघ्वग्निना पचेत्तावद् यावद्भवति पिण्डितम्।
धात्रीतुल्यासितायोज्या पलार्द्धं लेहयेदनु ॥ ९१ ॥
खण्डकूष्माण्डकं ख्यातं रक्तपित्तं नियच्छति।

इति खण्डकूष्माण्डकम्।

द्राक्षामृताशक्रपटोलपत्रैः सोशीरधात्रीघनचन्दनैश्च।
त्रायन्तिका पद्मकिरातधान्यैः कल्कैः पचेत्सर्पिरुपेतमेभिः ॥९२॥
युञ्जीतमात्रां सहभोजनेन सर्वर्त्तुपानेऽपि भिषग्विदध्यात्।
बलासपित्तं ग्रहणीं प्रवृद्धां कासाग्निसादं ज्वरमम्लपित्तम्
सर्वं निहन्याद् घृतमेतदाशु सम्यक् प्रयुक्तं ह्यमृतोपमञ्च ॥९३॥

इति द्राक्षाद्यं घृतम्।

द्राक्षापथ्ये समे कृत्वा तयोस्तुल्यां सितां क्षिपेत्।
मंक्ष्वाक्षद्वयमितं पिण्डिकां कारयेद्भिषक् ॥ ९४ ॥
तां खादेदम्लपित्तार्त्तो हृत्कण्ठदहनापहाम्।
तृड्मूर्च्छाभ्रममन्दाग्नि नाशिनीं चामवातहाम् ॥ ९५ ॥

# अथ विसर्पनिदानमाह।

लवणाम्लकटूष्णादि संसेवाद्दोषकोपतः।
विसर्पः सप्तधा ज्ञेयः सर्वतः परिसर्पणात्॥ १॥
पृथक् त्रयस्त्रिभिश्चैको विसर्पा द्वन्दजास्त्रयः।
वातिकः पैत्तिकश्चैव कफजः सान्निपातिकः॥
चत्वार एते वीसर्पा वक्ष्यन्ते द्वन्दजास्त्रयः॥ २॥
आग्नेयो वातपित्ताभ्यां ग्रन्थ्याख्यः कफवातजः।
यस्तु कर्दमको घोरः सपित्तकफसम्भवः॥ ३॥
रक्तं लसीकात्वङ्मांसं दूष्यं दोषास्त्रयो मलाः।
विसर्पाणां समुत्पत्तौ विज्ञेयाः सप्तधातवः॥ ४॥
तत्र वातात्सवीसर्पो वातज्वरसमव्यथः॥
शोफस्फुरणनिस्तोद भेदायासार्त्ति हर्षवान्॥ ५॥
पित्ताद्द्रुतगतिः पित्तज्वरलिङ्गोऽतिलोहितः।
कफात् कंडूयुतः स्निग्धः कफज्वरसमानरुक्॥ ६॥
सन्निपातसमुत्थश्च सर्वरूपसमन्वितः॥ ७॥
वातपित्तज्वरच्छर्दि मूर्च्छातिसारतृड्भ्रमैः।
अस्थिभेदाग्निसदन तमकारोचकैर्युतः॥ ८॥
करोति सर्वदेहञ्च दीप्ताङ्गारावकीर्णवत्।
यं यं देशं विसर्पश्च विसर्पति भवेत्तु सः॥ ९॥
शान्ताङ्गारासितोऽनीलो रक्तो वाऽऽश्वपचीयते।
अग्निदग्ध इव स्फोटः शीघ्रं गत्वा द्रुतं स च॥ १०॥
मर्मानुसारीवीसर्पः स्यात्ततोऽतिबलस्ततः।
व्यथेतांगं हरेत्संज्ञां निद्राञ्च श्वासमीरयेत्॥ ११॥
हिध्माञ्च स गतोऽवस्था मीदृशीं लभते नरः।

हृल्लासारोचकच्छर्दिपिपासादाहनाशनम् ॥ ८९ ॥

इति पिप्पल्याद्यवलेहः ।

कूष्माण्डकरसो ग्राह्यः पलानां शतमात्रकम् ।
रसतुल्यं गवां क्षीरं धात्रीचूर्णं पलाष्टकम् ॥ ९० ॥
लघ्वग्निना पचेत्तावद्यावद्भवति पिण्डितम् ।
धात्रीतुल्यासितायोज्या पलार्द्धं लेहयेदनु ॥ ९१ ॥
खण्डकूष्माण्डकं ख्यातमम्लपित्तं नियच्छति ।

इति खण्डकूष्माण्डकम् ।

द्राक्षामृताशक्रपटोलपत्रैः सोशीरधात्रीघनचन्दनैश्च ।
त्रायन्तिका पद्मकिरातधान्यैः कल्कैः पचेत्सर्पिरुपेतमेभिः ॥९२॥
युञ्जीतमात्रां सहभोजनेन सर्वर्त्तुपानेऽपि भिषग्विदध्यात् ।
बलासपित्तं ग्रहणीं प्रवृद्धां कासाग्निसादं ज्वरमम्लपित्तम्
सर्वं निहन्याद् घृतमेतदाशु सम्यक् प्रयुक्तं ह्यमृतोपमञ्च ॥९३॥

इति द्राक्षाद्यं घृतम् ।

द्राक्षापथ्ये समे कृत्वा तयोस्तुल्यां सितां क्षिपेत् ।
संकुट्याक्षद्वयमितं पिण्डिकां कारयेद्भिषक् ॥ ९४ ॥
तां खादेदम्लपित्तार्त्तो हृत्कण्ठदहनापहाम् ।
तृड्मूर्च्छाभ्रममन्दाग्नि नाशिनीं चामवातहाम् ॥ ९५ ॥

इति द्राक्षादिगुटिका ।

## इति वङ्गसेनेऽम्लपित्तनिदानचिकित्साधिकारः समाप्तः ॥ ५९ ॥

—०—

# अथ विसर्पनिदानमाह।

लवणाम्लकटूष्णादि संसेवाद्दोषकोपतः।
विसर्पः सप्तधा ज्ञेयः सर्वतः परिसर्पणात्॥ १॥
पृथक् त्रयस्त्रिभिश्चैको विसर्पा द्वन्द्वजास्त्रयः।
वातिकः पैत्तिकश्चैव कफजः सान्निपातिकः॥
चत्वार एते वीसर्पा वक्ष्यन्ते द्वन्द्वजास्त्रयः॥ २॥
आग्नेयो वातपित्ताभ्यां ग्रन्थ्याख्यः कफवातजः।
यस्तु कर्दमको घोरः सपित्तकफसम्भवः॥ ३॥
रक्तं लसीकात्वङ्मांसं दूष्यं दोषास्त्रयो मलाः।
विसर्पाणां समुत्पत्तौ विज्ञेयाः सप्तधातवः॥ ४॥
तत्र वातात्सवीसर्पो वातज्वरसमव्यथः॥
शोफस्फुरणनिस्तोद भेदायासार्त्ति हर्षवान्॥ ५॥
पित्ताद्द्रुतगतिः पित्तज्वरलिङ्गोऽतिलोहितः।
कफात् कंडूयुतः स्निग्धः कफज्वरसमानरुक्॥ ६॥
सन्निपातसमुत्थश्च सर्वरूपसमन्वितः॥ ७॥
वातपित्तज्वरच्छर्दि मूर्च्छातिसारतृड्भ्रमैः।
अस्थिभेदाग्निसदन तमकारोचकैर्युतः॥ ८॥
करोति सर्वदेहञ्च दीप्ताङ्गारावकीर्णवत्।
यं यं देशं विसर्पश्च विसर्पति भवेत्तु सः॥ ९॥
शान्ताङ्गारासितोऽनीलो रक्तो वाऽऽश्वपचीयते।
अग्निदग्ध इव स्फोटः शीघ्रं गत्वा द्रुतं स च॥ १०॥
मर्मानुसारीवीसर्पः स्यात्ततोऽतिबलस्ततः।
व्यथेताङ्गं हरेत्संज्ञां निद्राञ्च श्वासमीरयेत्॥ ११॥
हिध्माञ्च स गतोऽवस्था मीदृशीं लभते नरः।

क्वचिच्छर्मारतिग्रस्तो भूमिशय्याशनादिषु ॥ १२ ॥
चेष्टमानस्ततः क्लिष्टो मनोदेहसमुद्भवः ।
दुष्प्रबोधोऽश्नुते निद्रां सोऽग्निविसर्प उच्यते ॥ १३ ॥
कफेन रुद्धः पवनो भित्वा तं बहुधा कफम् ।
रक्तं वा हृद्रक्तस्य त्वक्छिरास्नायुमांसगम् ॥ १४ ॥
दूषयित्वा तु दीर्घाणु वृत्तस्थूलखरात्मनाम् ।
ग्रन्थीनां कुरुते मालां रक्तानां तीव्ररुक् ज्वरम् ॥ १५ ॥
श्वासकासातिसारास्य शोषहिध्मावमिभ्रमैः ।
मोहवैवर्ण्यमूर्च्छाङ्ग भङ्गाग्निसदनैर्युतः ॥
इत्यय ग्रन्थिवीसर्पः कफमारुतकोपजः ॥ १६ ॥
कफपित्ताज्ज्वरस्तम्भो निद्रातन्द्रा शिरोरुजा ।
अङ्गावसादविक्षेप प्रलापारोचकभ्रमाः ॥ १७ ॥
मूर्च्छाग्निहानिर्भेदोऽस्थ्नां पिपासेन्द्रियगौरवम् ।
आमोपवेशनं लेपः स्रोतसां सविसर्पति ॥ १८ ॥
प्रायेणामाशय गृह्णन्नेकदेशं न चातिरुक् ।
पिड़कैरवकीर्णोऽति पीतलोहितपांडुरैः ॥ १९ ॥
स्निग्धो सितो मेचकाभो मलिनः शोफवान् गुरुः ।
गम्भीरपाकः प्रायोष्मास्पृष्टः क्लिन्नोवदीर्य्यते ॥ २० ॥
पङ्कवच्छीर्णमांसय स्पष्टस्नायुशिरागणः ।
शवगन्धय वीसर्पः कर्दमाख्यमुशन्ति तम् ॥ २१ ॥
बाह्यहेतोः क्षतात् क्रुद्धः सरक्तं पित्तमीरयन् ।
वीसर्पं मारुतः कुर्य्यात् कुलित्थसदृशैश्चितम् ॥
*स्फोटैः शोथज्वररुजा दाहाढ्यं श्यावशोणितम्* ॥ २२ ॥
ज्वरातिसारो वमथुस्त्वङ्मांसदरणं क्लमः ।
अरोचकाविपाकौ च विसर्पाणामुपद्रवाः ॥ २३ ॥

सिध्यन्ति वातकफपित्तकृताविसर्पाः
सर्वात्मकः चतकृतश्च न सिद्धिमेति।
पित्तात्मकोऽञ्जनवपुश्च भवेदसाध्यः
प्रायेण मर्म्मसु भवन्ति हि सर्व एव॥ २४॥

तथाच ग्रन्थान्तरात्।
तृट्श्वासमांससंकोच दाहहिक्कामदज्वराः।
विसर्पा मर्म्मसंरोधा स्तेषां प्रोक्ता ह्युपद्रवाः॥ २५॥

—०—

## अथ चिकित्सामाह।

सर्व्वेष्वेव विसर्पेषु कुर्य्याल्लङ्घनरूक्षणम्।
विरेकवमनालेप सेचनाऽसृग्विमोक्षणैः॥
उपाचरेद्यथादोषं विसर्पानविदाहिभिः॥ २६॥
पटोलपिचुमन्दाभ्यां पिप्पल्या मदनेन वा।
विसर्पे वमनं शस्तं तथा चेन्द्रयवैः सह॥ २७॥
त्रिफलारससंयुक्तं सर्पिस्त्रिवृत्तया सह।
प्रयोक्तव्यं विरेकार्थं वीसर्पज्वरशान्तये॥ २८॥
रास्नानीलोत्पलं दारु चन्दनं मधुकं बला।
घृतक्षीरयुतो लेपो वातवीसर्पनाशनः॥ २९॥
शकृद्रसं पयो मूत्रं पञ्चमूलं च तत्समम्।
एतत्सुखोष्णकं कार्यं विसर्पेऽनिलसम्भवे॥ ३०॥
तृणवर्ज्यं विधातव्यं पञ्चमूल चतुष्टयम्।
प्रदेहसेकौ सर्पिर्भिः विसर्पे वातसम्भवे॥ ३१॥
कुष्टं शताह्वा सुरदारुमुस्तावाराहिकुस्तुम्बुरुकृष्णगन्धाः।
वातेऽर्कवंशार्त्तगलाश्च योज्याः सेके प्रलेपेषु तथा घृतेषु॥ ३२॥

द्राक्षारग्वधकाश्मर्य्यैस्त्रिफलैरण्डपीलुभिः ।
त्रिवृद्धरीतकीभिश्च विसर्पे शोधनं हितम् ॥ ३३ ॥
न्यग्रोधोदुम्बराश्वत्थ प्लक्षवेतसपीलुभिः ।
चन्दनद्वयमञ्जिष्ठा पद्मकोशीरगैरिकैः ॥ ३४ ॥
शतधौतघृतोन्मिश्रै र्लेपो रक्तप्रसादनः ।
दाहपाकरुजास्रावशोथनिर्वापणः परः ॥ ३५ ॥
शिरीषयष्टी नतचन्दनैला मांसीहरिद्राद्वयकुष्टवालैः ।
लेपो दशाङ्गः सघृतः प्रयोज्यो विसर्पकुष्टज्वरशोथहारी ॥३६॥
इति दशाङ्गलेपः ।

प्रपौण्डरीकं मञ्जिष्ठा पद्मकोशीरचन्दनैः ।
सयष्टीन्दीवरैः पैत्ते क्षीरपिष्टैः प्रलेपनम् ॥ ३७ ॥
कशेरुशृङ्गाटकपद्मगुन्द्राः सशैवलाः सोत्पलकर्दमाश्च ।
वस्त्रान्तराः पित्तकृते विसर्पे लेपो विधेयः सघृतः सुशीतः ॥३८॥
मृणालचन्दनं लोध्रमुशीरं कमलोत्पलम् ।
शारिवा शल्लकीपथ्या प्रदेहाः पित्तमुद्धराः ॥ ३९ ॥
प्रदेहाः परिषेकाश्च शस्यन्ते पञ्चवल्कलैः ।
पद्मकोशीरमधुक चन्दनैर्वा प्रशस्यते ॥ ४० ॥
न्यग्रोधपादागुन्द्रा च कदलीगर्भ एव च ।
विसग्रन्थिकलेपः स्याच्छतधौतघृतप्लुतः ॥ ४१ ॥
मांसीसर्जरसं रोध्रं मधुकं सह रेणुभिः ।
हरेणवो मसूराश्च मुद्गाश्चैव सशालयः ॥
पृथक् लेपाः विसर्पघ्नाः सर्वे वा सर्पिषा सह ॥ ४२ ॥
श्लैष्मिके वमनं पूर्वं रेचनं च कफापहम् ॥ ४३ ॥
मदन मधुकं निम्बं वत्सकस्य फलानि च ।
वमनञ्च विधातव्यं विसर्पे कफसम्भवे ॥ ४४ ॥

गायत्रीसप्तपर्णाब्दवासारग्वधदारुभिः।
कुटजटैर्भवेल्लेपो विसर्पे श्लेष्मसम्भवे ॥ ४५ ॥
अजाश्वगन्धा सरलाथ कालसैकैशिवा चाप्यथवाजशृङ्गी।
गोमूत्रपिष्टैर्विहितः प्रदेहो हन्याद्विसर्पं कफजं सुशीघ्रम् ॥४६॥
त्रिफलापद्मकोशीर समङ्गाकरवीरकम्।
नलमूलमनन्ता च लेपः श्लेष्मविसर्पहा ॥ ४७ ॥
काकजङ्घाशिरीषस्य पुष्पं श्लेष्मातकत्वचम्।
क्षतमालकपत्राणि चाश्वगन्धा प्रियङ्गवः ॥
प्रदेहः कफवीसर्पे कटूष्णः सुप्रयोजितः ॥ ४८ ॥
आरग्वधस्य पत्राणि त्वचः श्लेष्मातकोद्भवाः।
शिरीषपुष्पसहिता हिता लेपावचूर्णनैः ॥ ४९ ॥
मुस्तारिष्टपटोलानां क्वाथः सर्वविसर्पनुत्।
धात्रीपटोलमुद्गाना मथवा घृतसयुतः ॥ ५० ॥
अमृतघनपटोलं निम्बकल्कैरुपेतम्।
त्रिफलखदिरसारं व्याधिघातञ्च तुल्यम् ॥
क्वथितमिदमशेषं गुग्गुलोः पादयुक्तम्।
हरति विषविसर्पान् कुष्टसङ्घातमाशु ॥ ५१ ॥
भूनिम्बवासाकटुकापटोलं फलत्रिकं चन्दननिम्बसिद्धः।
विसर्पदाहज्वरशोषकण्डूविस्फोटतृष्णावमिनुत्कषायः ॥ ५२ ॥
पटोलं पिचुमन्दञ्च दार्वीं कटुकरोहिणीम्।
*यष्ट्याह्वं त्रायमाणाञ्च दद्याद्वीसर्पशान्तये ॥ ५३ ॥*
त्रायन्तीनिम्बदारु कुण्डलीधात्रीपटोलकटुकाभिः।
क्वाथो हन्ति विसर्पान्मकरन्दयुतो ह्यदारान् ॥ ५४ ॥
त्रिदोषजं क्रियां कुर्य्याद्विसर्पे द्वन्द्वसम्भवे।
सकफे रक्तपित्ते च त्रिफलां योजयेत् पुरैः ॥ ५५ ॥

दुरालभां पर्पटकं पटोलं कटुकां तथा ।
कौर्ण्यं गुग्गुलुसंमिश्रं पिवेद्वा खदिराष्टकम् ॥ ५६ ॥
वातपित्तप्रशमन मग्निवीसर्परोहणम् ।
कफपित्तप्रशमनं प्रायः कर्दमसंज्ञके ॥ ५७ ॥
वातपित्तहरं कर्म्म ग्रन्थिवीसर्पिणे हितः ।
मसूरिस्फोटकुष्टघ्नी क्रियायोज्या विसर्पिणाम् ॥ ५८ ॥
कुष्टामयस्फोटमसूरिकोक्त चिकित्सयाप्याशु हरेद्विसर्पान् ।
सर्वांस्तु पक्कान् परिशोध्यधीमान् व्रणक्रमेणोपचरेद्यथोक्तम् ॥५९॥
यच्च सर्पिर्महातिक्तं पित्तकुष्टनिवर्हणम् ।
निर्दिष्ट तदपि प्राज्ञो दद्याद्वीसर्पशान्तये ॥ ६० ॥
वृषखदिरपटोलनिम्बपत्र त्वगमृतसुषिवाकषायकल्कैः ।
घृतमभिनवमेतदाशु पक्वं जयति खलु विसर्पकुष्टगुल्मान् ॥६१॥

इति वृषाद्यं घृतम् ।

द्वे हरिद्रे स्थिरा मूर्वा शारिवाचन्दनद्वयम् ।
मधुकं मधुपर्णी च पद्मकं पद्मकेसरम् ॥ ६२ ॥
उशीरमुत्पलं मेदा त्रिफलापद्मवल्कलम् ।
कल्कैरत्तमसैरेभि र्घृतप्रस्थं विपाचयेत् ॥ ६३ ॥
विषवीसर्पविस्फोट कीटलूताव्रणापहम् ।
गौरवाख्यमिति ख्यात सर्पिः श्रेष्टमनुत्तमम् ॥ ६४ ॥

गौरवाद्यं घृतम् ।

कुष्टेषु यानि सर्पी षि व्रणेषु विविधेषु च ।
विसर्पेषु प्रयोज्यानि सेकालेपनभोजनैः ॥ ६५ ॥
करञ्जसप्तच्छद लाङ्गलीकसुह्यर्कदुग्धानलभृङ्गराजैः ।

तैलं निशामूत्रविषैर्विपक्वं विसर्पविस्फोटविचर्चिकाघ्नम् ॥६६॥

इति करञ्जतैलम्।

## इति वङ्गसेने विसर्पनिदानचिकित्साधिकारः समाप्तः ॥ ५१ ॥

—०—

## अथ विस्फोटनिदानमाह।

कट्वम्लतीक्ष्णोष्णविदाहिरूक्षक्षारैरजीर्णाध्यशनातपैश्च।
तथर्त्तुदोषेण विपर्य्ययेण कुप्यन्ति दोषाः पवनादयस्तु ॥ १ ॥
त्वचमाश्रित्य ते रक्तं मांसास्थीनि प्रदूष्य च।
घोरान् कुर्वन्ति विस्फोटान् सर्वान् ज्वरपुरःसरान् ॥ २ ॥
अग्निदग्धनिभास्फोटाः सज्वरा रक्तपित्तजाः।
क्वचित् सर्वत्र वा देहे विस्फोटक इति स्मृतः ॥ ३ ॥
शिरोरुक् शूलभूयिष्टं ज्वरस्तृट् पर्वभेदनम्।
सकृष्णवर्णता चेति वातविस्फोटलक्षणम् ॥ ४ ॥
ज्वरदाहरुजास्राव पाकतृष्णाभिरन्वितम्।
पीतलोहितवर्णञ्च पित्तविस्फोटलक्षणम् ॥ ५ ॥
छर्द्यरोचकजाड्यानि कंडूकाठिन्य पांडुता।
अवेदनश्चिरात्पाकी सविस्फोटः कफात्मकः ॥ ६ ॥
कंडूदाहोऽरुचिः छर्दि रेतैस्तु कफपैत्तिकः।
वातपित्तात्मको यस्तु कुरुते तीव्रवेदनाम् ॥
कंडूस्तैमित्यगुरुभि र्जानीयात् कफवातिकम् ॥ ७ ॥
मध्ये निम्नोन्नतोऽन्ते च कठिनोऽल्पप्रपाकवान्।
दाहरागतृषामोह च्छर्दिमूर्च्छारुजो ज्वरः।

प्रलापो वेपथु स्तन्द्रा सोऽसाध्यः स्यात्त्रिदोषजः ॥ ८ ॥
रक्तारक्तसमुत्थाना गुञ्जाफलनिभास्तथा ।
वेदितव्यास्तु रक्तेन पैत्तिकेन च हेतुना ॥
न ते सिद्धं समायान्ति सर्वैर्योगवरैरपि ॥ ९ ॥
एकदोषोत्थितः साध्यः कृच्छ्रसाध्यो द्विदोषजः ।
सर्वरूपान्वितो घोर स्त्वसाध्यो भूर्युपद्रवः ॥ १० ॥
हिक्काश्वासोऽरुचिस्तृष्णा चाङ्गमर्दो हृदिव्यथा ।
विसर्पज्वरहृल्लासा विस्फोटानामुपद्रवाः ॥ ११ ॥

—०—

## अथ चिकित्सामाह ।

तत्रादौ लङ्घनं कार्यं वमनं पथ्यभोजनम् ।
यथायुक्तं बलं वीक्ष्य युक्तमुक्तं विरेचनम् ॥ १२ ॥
पटोलेन्द्रयवारिष्ट वचामदनमाधितम् ।
वमनं तत्प्रदातव्यं विस्फोटे कफपैत्तिके ॥ १३ ॥
क्षुधिते लङ्घिते वान्ते जीर्णशालियवादिभिः ।
मुद्गाढ़कीमसूराणां रसैर्वा विश्वसंयुतैः ॥ १४ ॥
सुनिषण्णकवेत्राग्रतण्डुलीयककेतकैः ।
कुलकाभीरुकैरेभिः सपर्पटससीनकैः ॥ १५ ॥
कर्कोटकारवेल्लैश्च कुसुमैर्निम्बविल्वजैः ।
तिक्तद्रव्यसमायुक्तं भोजनं संप्रयोजयेत् ॥ १६ ॥
हिंस्रामूलं रास्ना च दार्व्युशीरं दुरालभाम् ।
अमृताधान्यकं मुस्तं जयेच्छलमसृग्ज्वरान् ॥ १७ ॥
द्राक्षाकाश्मर्यखर्जूर पटोलारिष्टवासकैः ।
कटुकालाजदुःस्पर्शैः सितायुक्तं तु पैत्तिके ॥ १८ ॥

भूनिम्बनिम्बवासा च त्रिफलेन्द्रयवासकैः।
पिचुमन्दं पटोलञ्च सक्षौद्रं कफजे हितम्॥ १९॥
किराततिक्तकारिष्ट यष्ट्याह्वाम्बुदवासकम्।
पटोलपर्पटोशीरत्रिफलाकौटजान्वितम्॥
द्वादशाङ्गं तथैवैतत्सर्वविस्फोटनाशनम्॥ २०॥
पटोलामृतभूनिम्ब वासकारिष्टपर्पटैः।
खदिराष्टयुतैः क्वाथो विस्फोटज्वरशान्तये॥ २१॥
कुण्डलीपिचुमन्दांबु खदिरेन्द्रयवाम्बुना।
विस्फोटं नाशयत्याशु वायुर्जलधरानिव॥ २२॥

अमृतद्वयपटोलं मुस्तकं सप्तपर्णं
खदिरमसितवेत्रं निम्बपत्रं हरिद्रे।
विविधविषविसर्पं कुष्टविस्फोटकण्डू-
रपनयति मसूरीं शीतपित्तं ज्वरञ्च॥ २३॥

पटोलत्रिफलारिष्ट गुडूचीमुस्तचन्दनैः।
समूर्वारोहिणीपाठा रजनी सदुरालभा॥ २४॥
कषायं योजयेदेतत् पित्तश्लेष्मज्वरापहम्।
कण्डूत्वग्दोषविस्फोट विषवीसर्पनाशनम्॥ २५॥
शिरीषयष्टी नतचन्दनैलामांसी हरिद्राद्वयकुष्टवालैः।
लेपोदशाङ्गः सघृतः प्रयोज्यो विसर्पविस्फोटककण्डूहारी॥२६॥
इति दशाङ्गलेपः।

चन्दनं नागपुष्पञ्च तंडुलीयकशारिवा।
शिरीषवल्कलं पत्रं लेपः स्याद्दाहनाशनः॥ २७॥
विस्फोटव्याधिनाशाय तंडुलांबुप्रपेषितैः।
बीजैः कुटजवृक्षस्य लेपः कार्यो विजानता॥ २८॥
उत्पलं चन्दनं लोध्रं सुशीरं शारिवाद्वयम्।

जलेन पिष्टा लिम्पेत स्फोटदाहार्त्तिनाशनम् ॥ २८ ॥
शिरीषोशीरनागाह्व हिंस्राभिर्लेपनाद् द्रुतम् ।
विसर्पविषविस्फोटाः प्रशाम्यन्ति न संशयः ॥ ३० ॥
शिरीषचन्दनानन्ता तित्तडीबल्कपूरकैः ।
प्रलेपः सघृतः कार्यो विस्फोटश्लेषनाशनः ॥ ३१ ॥
शिरीषोदुम्बरौ जम्बु सेकालेपनयोर्हिताः ।
श्लेष्मातकत्वचो वापि प्रलेपाश्च्योतने हिताः ॥ ३२ ॥
शिरीषपूगमञ्जिष्टा चव्यामलकयष्टिकाः ।
सनातिपल्लवक्षौद्रा विस्फोटे कवलग्रहाः ॥ ३३ ॥
पद्मकं मधुकं लोध्रं नागपुष्पञ्च केशरम् ।
द्वे हरिद्रे विडङ्गानि सूक्ष्मैला तगरं तथा ॥ ३४ ॥
कुष्टं लाक्षापत्रकञ्च सिन्धूत्थं तुल्यमेव च ।
तोयेनालोड्य तत्सर्वं घृतप्रस्थं विपाचयेत् ॥ ३५ ॥
याश्च रोगान्निहन्त्येतत् तान्निबोध महामुने ।
सर्पकीटादिदष्टेषु लूता मूत्रक्षतेषु च ॥ ३६ ॥
विविधेषु च स्फोटेषु तथा कुष्टविसर्पिषु ।
नाडीषु गण्डमालासु प्रभिन्नासु विशेषतः ॥ ३७ ॥
अगस्त्यविहितं धन्यं पद्मकं तु महाघृतम् ॥ ३८ ॥

इति पद्मकं घृतम् ।

पटोलसप्तच्छदनिम्बवासा फलत्रिकच्छिन्नरुहाविपक्वम् ।
तत्पञ्चतिक्तं घृतमाशु हन्ति त्रिदोषविस्फोटविसर्पकण्डूः ॥ ३९ ॥

इति पञ्चतिक्तं घृतम् ।

कम्पिल्लकं विडङ्गानि वत्सकं त्रिफलां बलाम् ।
पटोलं पिचुमन्दञ्च लोध्रं सुम्स्तप्रियंगुकम् ॥ ४० ॥

धातकीखदिरं सर्जमेला चागुरुचन्दनम् ।
पिष्ट्वा तैलं भवेत्साध्यं तत्तैलं व्रणरोपणम् ॥ ४१ ॥

इति कम्पिल्लकाद्यं तैलम् ।

पीत्वा घृतं महातिक्तं कौशिकेन च साधितम् ।
कदाचिद्रक्तमोचञ्च ज्ञात्वा दोषं प्रयोजयेत् ॥ ४२ ॥

## इति वङ्गसेने विस्फोटनिदानचिकित्साधिकारः समाप्तः ॥ ६० ॥

—०—

## अथ स्नायुनिदानमाह ।

शाखासु कुपितो दोषः शोथं कृत्वा विसर्पवत् ।
भित्त्वैव तं क्षते तत्र सोष्मामांसं विशोष्य च ॥ १ ॥
कुर्य्यात्तन्तुनिभं सूत्रं वृत्तं सितद्युतिं बहिः ।
शनैः शनैः क्षतादेति छेदात्तत्कोपमावहेत् ॥ २ ॥
तत्पाताच्छोथशान्तिः स्यात्पुनः स्थानान्तरे भवेत् ।
सस्नायुकः परिख्यातः क्रियोक्तात्र विसर्पवत् ॥ ३ ॥
बाह्वोर्यदि प्रमादेन त्रुट्यते जङ्घयोरपि ।
सङ्कोचं खञ्जतां चापि छिन्नो नूनं करोत्यसौ ॥ ४ ॥

—०—

## अथ चिकित्सामाह ।

स्नेहस्वेदप्रलेपादि कर्मकुर्य्याद्यथेप्सितम् ।
रामठं शीततोयेन पीतं तन्तुकरोगनुत् ॥ ५ ॥

मञ्जिष्टयष्टीमधुकं पयस्या प्रपौण्डरीकं सह पद्मकेन ।
सौगन्धिकं चेति सुखं प्रलेपः प्रस्तो विसर्पे त्वथ तन्तुरोगे ॥६॥

इति मञ्जिष्टादिलेपः ।

स्वेदात् स्नायुकमत्युग्रं भेकः काञ्जिकसाधितः ।
तद्वद्दम्बूलजं वीजं पिष्टं हन्ति प्रलेपनात् ॥ ७ ॥
गव्यं सर्पिस्त्र्यहं पीत्वा निर्गुण्डिस्वरसं त्र्यहम् ।
पिबेत् स्नायुकमत्युग्रं हन्त्यवश्यं न संशयः ॥ ८ ॥
मूलं सुखव्या हिमवारिपिष्टं पानादिकं तन्तुकरोगमुग्रम् ।
शान्तिं नयेत्सव्रणमाशु पुंसां गन्धर्वगन्धेन घृतेन पीतम् ॥ ९ ॥
अतिविषमुस्तकभार्ङ्गी विश्वौषधपिप्पलीविभीतकीनाम् ।
चूर्णमिदं तन्तुघ्नं पुंसामुष्णेन वारिणा पीतम् ॥ १० ॥
शिग्रुमूलदलैः पिष्टैः काञ्जिकेन ससैन्धवैः ।
लेपनं स्नायुकव्याधेः शमनं परमुच्यते ॥ ११ ॥

## इति वङ्गसेने स्नायुकरोगनिदानचिकित्साधिकारः समाप्तः ॥ ६१ ॥

—०—

## अथ मसूरिकानिदानमाह ।

कट्वम्ललवणक्षार विरुद्धाध्यशनाशनैः ।
दुष्टनिष्पावशाकाद्यैः प्रदुष्टपवनोदकैः ॥ १ ॥
क्रुद्धग्रहे क्षणाच्चापि देहे दोषाः समुद्धताः ।
जनयन्ति शरीरेऽस्मिन् दुष्टरक्तेन सङ्गताः ॥
मसूराकृतिसंस्थानाः पिडकाः स्युर्मसूरिकाः ॥ २ ॥
तासां पूर्वं ज्वरः कंडू गात्रभङ्गोऽरतिर्भ्रमः ।

त्वचिशोथः सवैवर्ण्यो नेत्ररागस्तथैव च ॥ ३ ॥
स्फोटाश्चारुणाः कृष्णास्तीव्रवेदनयान्विताः ।
कठिनाश्चिरपाकाश्च भवन्त्यऽनिलसम्भवाः ॥ ४ ॥
सन्ध्यस्थिपर्वणां भेदः कासः कम्पोऽरतिः क्लमः ।
शोथस्ताल्वोष्टजिह्वानां तृष्णा चारुचिसंयुताः ॥ ५ ॥
रक्ताः पीताः सिताः स्फोटाः सदाहास्तीव्रवेदनाः ।
भवन्त्यचिरपाकाश्च पित्तकोपसमुद्भवाः ॥ ६ ॥
विड्भेदश्चाङ्गमर्दश्च तृष्णाऽरत्यरुची तथा ।
मुखपाकोऽक्षिपाकश्च ज्वरस्तीव्र सुदारुणः ॥
रक्तजायां भवन्त्येते विकाराः पित्तलक्षणाः ॥ ७ ॥
कफप्रसेकः स्तैमित्यं शिरोरुग् गात्रगौरवम् ।
हृल्लासारुचितन्द्रार्त्ति निंद्रालस्य समन्विताः ॥ ८ ॥
श्वेताः स्निग्धाभृशं स्थूलाः कंडूरामन्दवेदनाः ।
मसूरिकाः कफोत्थाश्च चिरपाकाः प्रकीर्त्तिताः ॥ ९ ॥
नीलाश्चिपिटविस्तीर्णा मध्ये निम्ना महारुजाः ।
चिरपाकाः पूतिस्रावाः प्रभूताः सर्वदोषजाः ॥ १० ॥
कण्ठरोधोऽरुचिस्तन्द्रा प्रलापारतिसङ्गताः ।
दुश्चिकित्स्या समुद्दिष्टाः पिड़काश्चर्मसंज्ञिताः ॥ ११ ॥
रोमकूपोन्नतिसमा लोहिताः कफवातजाः ।
कासारोचकसंयुक्ता रोमान्त्यो ज्वरपूर्विकाः ॥ १२ ॥
तोयबुद्बुदसंकाशा त्वग्गताश्च मसूरिकाः ।
स्वल्पदोषाः प्रजायन्ते भिन्नास्तोयं स्रवन्ति च ॥ १३ ॥
रक्तस्था लोहिताकाराः शीघ्रपाकास्तनुत्वचः ।
साध्यानात्यर्थदुष्टाश्च भिन्नारक्तं स्रवन्ति च ॥ १४ ॥
मांसस्थाः कठिनाः स्निग्धाः चिरपाका घनत्वचः ।

गात्रशूलारतिकंडू तृष्णारुचिसमन्विताः ॥ १५ ॥
मेदोजामण्डलाकारा मृदवः किञ्चिदुन्नताः ।
घोरज्वरपरीताश्च स्थूलाः स्निग्धाः सवेदनाः ॥
सम्मोहारतिसन्तापाः कश्चिदाभ्यो विनिस्तरेत् ॥ १७ ॥
क्षुद्रागात्रसमारूढा चिपिटा किञ्चिदुन्नताः ।
मज्जोत्था भ्रमसंमोह वेदनाऽरतिसंयुताः ॥ १८ ॥
छिन्दन्ति मर्म्मधामानि प्राणानाशु हरन्ति च ।
भ्रमरेणेव विद्धानि कुर्वन्त्यस्थीनि सर्वतः ॥ १९ ॥
पक्वाभाः पिड़काः स्निग्धाः सूक्ष्माश्चात्यर्थवेदनाः ।
स्तैमित्याऽरतिसंमोह दाहोन्मादसमन्विताः ॥ २० ॥
शुक्रजायां मसूर्य्यान्तु लक्षणानि भवन्ति च ।
निर्दिष्टं केवलं चिह्नं दृश्यते न हि जीवितम् ॥ २१ ॥
दोषमिश्रास्तु सर्वा ता द्रष्टव्या दोषलक्षणैः ॥ २२ ॥
त्वग्गतारक्तजाश्चैव पित्तजाः श्लेष्मजास्तथा ।
एता विनापि क्रियया प्रशाम्यन्ति शरीरिणाम् ॥ २३ ॥
वातजा वातपित्तोत्था श्लेष्मवातकृताश्च याः ।
कृच्छ्रसाध्यमतास्तस्मा यत्नादेता उपाचरेत् ॥ २४ ॥
असाध्याः सन्निपातोत्था स्तासां वक्ष्यामि लक्षणम् ।
प्रवालसदृशाः काश्चित् काश्चिज्जंवूफलोपमाः ॥ २५ ॥
लोहजालसमाः काश्चि दतसीफलसन्निभाः ।
आसां बहुविधा वर्णा जायन्ते दोषभेदतः ॥ २६ ॥
कासो हिक्काप्रमोहश्च ज्वरस्तीव्रः सुदारुणः ।
प्रलापश्चारतिमूर्च्छा तृष्णादाहो विघूर्णता ॥ २७ ॥
मुखेन प्रस्रवेद्रक्तं तथा घ्राणेन चक्षुषा ।
कण्ठेर्घुर्घुरकं कृत्वा श्वसित्यत्यर्थदारुणम् ॥ २८ ॥

मसूरिकाभिभूतस्य यस्यैतानि भिषग्वरः ।
लक्षणानीह दृश्यन्ते न दद्यात्तत्र भेषजम् ॥ २९ ॥
मसूरिकाभिभूतो यो भृशं घ्राणेन निःश्वसेत् ।
सभुवं त्यजति प्राणां स्तृषार्त्तो वायुदूषितः ॥ ३० ॥
मसूरिकान्ते शोथः स्यात् कूर्परे मणिबन्धके ।
तथांसफलके वापि दुश्चिकित्स्यः सुदारुणः ॥ ३१ ॥

अथान्यग्रन्थान्तरात् ।

द्वित्रिलक्षणसंयुक्तो द्वन्द्वोपद्रवसंयुतः ।
द्वन्द्वजास्तु त्रयो ज्ञेया मनुष्याणां मसूरिकाः ॥ ३२ ॥
कफवातादिसंभूतः कोद्रवो नाम संज्ञितः ।
लोके वदन्ति कक्षाकः सपाकं नच गच्छति ॥ ३३ ॥
यवशूकवदङ्गेषु विध्यति च विशेषतः ।
सप्ताहाद्वादशाहाद्वा स्वस्थो भवति मानवः ॥ ३४ ॥

—०—

## अथ चिकित्सामाह ।

मसूरिकायां कुष्ठोक्ता प्रलेपादिक्रिया हिता ।
पित्तश्लेष्मविसर्पोक्ता क्रिया चात्र प्रशस्यते ॥ ३५ ॥
वेणुत्वक् सुरसालाक्षा कर्पासास्थि मसूरिकाः ।
यवपिष्टं विष सर्पि र्वचाब्राह्मीसुवर्चला ।
धूपनार्थं यथालाभ धूममेतत्प्रयोजयेत् ॥ ३६ ॥
आदावेतत्प्रयोक्तव्यं नश्यन्त्याशु मसूरिकाः ।
न गृह्णन्ति विषं केचि द्यथालाभस्तुतेरिह ॥ ३७ ॥

इति धूप. ।

श्वेतचन्दनकल्केन हिलमोचाभवं रसम्।
पिबेन्मसूरिकारम्भे नेम्बं वा केवलं रसम् ॥ ३८ ॥
विल्वपत्ररसेनैव मूर्च्छितः पारदो रसः।
हिलमोचरसं पीतं हन्ति माचिकसंयुतम् ॥ ३८ ॥
मसूरीं सर्वजां शीघ्र मस्थिजां सर्वदेहजाम्।
वमने मरणं प्रोक्तं स्तंभने जीवनं मतम् ॥ ४० ॥
सर्वासां वमनं पूर्वं पटोलारिष्टवासकैः।
कषायैश्च वचावत्स यष्ट्याह्वफलकल्कितैः ॥ ४१ ॥
सक्षौद्रं पाययेद्ब्राह्म्या रसं वा हैलमोचकम्।
वान्तस्य रेचनं देयं शमनं वाऽवले नरे ॥ ४२ ॥
उभाभ्यां हृतदोषस्य विशुष्यन्ति मसूरिकाः।
निर्विकाराश्चाल्पपूयाः पच्यन्ते चाल्पवेदनाः ॥ ४३ ॥
वाणीरविल्वजनितं क्वाथं पर्युषितमुत्तमे दिवसे।
चैत्रस्य पापरोगं पिबतां न भवे द्रुतं चैतत् ॥ ४४ ॥
नारीणां वामपादस्थं नराणामपसव्यगम्।
पापरोगं त्यजेद्दूरा च्छिराश्चिविनिवारणम् ॥ ४५ ॥
चैत्रमितभूतदिने रक्तपताका सुधौभवने।
धवलितकलसे न्यस्ता पापरुजो दूरतोधत्ते ॥ ४६ ॥
पटोलसारिवामुस्तं पाठाकटुकरोहिणी।
खदिरः पिचुमन्दश्च वलाधात्रीविकङ्कतम्।
एषां कषायपानन्तु हन्ति वातमसूरिकाम् ॥ ४७ ॥
द्विपञ्चमूलं रास्ना च धातुरगीरं दुरालभा।
साम्रतं धान्यकं मुस्तं जयेद्वातमसूरिकाम् ॥ ॥ ४८ ॥
न्यग्रोधप्लक्षमञ्जिष्ठा शिरीषोदुम्बरत्वचाम्।
ससर्पिष्कं मसूर्यान्तु वातजायां प्रलेपनम् ॥ ४८ ॥

गुडूचीं मधुकं रास्नां पञ्चमूलं कनिष्टकम्।
चन्दनं काश्मर्य्यफलं बलामूलं विकङ्कतम्।
पाककाले मसूर्य्यान्तु वातजायां प्रयोजयेत्॥ ५०॥
गुडूचीमधुकं द्राक्षा मोरटं दाड़िमैः सह।
पाककाले प्रदातव्यं भेषजं गुड़संयुतम्॥ ५१॥
तेन पाकं व्रजत्याशु न च वायुः प्रकुप्यति॥ ५२॥
लिह्याद्बदरचूर्णन्तु पाचनार्थञ्च गुड़ेन तु।
कफवातकृतास्तेन पच्यन्ते च मसूरिकाः॥ ५३॥
शोधनं पित्तजायान्तु कार्य्यं वैद्येन जानता।
तत्रादौ तर्पणं कार्य्यं लाजचूर्णैः सशर्करैः॥ ५४॥
भोजनं तिक्तयूषैश्च प्रतुदानां रसेन वा।
भोजनं चाथवा कार्य्यं दुष्टव्रणविसर्पिणा॥ ५५॥
श्रोदाविव मसूर्य्यान्तु पित्तजायां प्रयोजयेत्॥ ५६॥
निम्बपर्पटकं पाठा पटोलं चन्दनद्वयम्।
वासादुरालभाधात्री व्योषं कटुकरोहिणी॥ ५७॥
एतत्पलं शृतं शीतं मधुशर्करयान्वितम्।
मसूर्य्यान्तु प्रयोक्तव्यं पित्तजायां विजानता।
दाहे ज्वरे विसर्पे तु व्रणे पित्ताधिके तथा॥ ५८॥
द्राक्षाकाश्मर्य्यखर्जूर पटोलारिष्टवासकैः।
लाजामलकदुःस्पर्शैः सितायुक्तन्तु पैत्तिके॥ ५९॥
शिरीषोदुम्बराश्वत्थ पीलुन्यग्रोधवल्कलैः।
प्रलेपः सघृतः शीघ्रं व्रणवीसर्पदाहहा॥ ६०॥
श्यामापर्पटकारिष्ट चन्दनद्वयमूलकैः।
धात्रीतिक्तार्हपोशीर यासैश्च क्वथितं जलम्।
पीतं मसूरिकां हन्ति पित्तजां दाहसंयुताम्॥ ६०॥

मोरटं काश्मर्य्यफलं शृतशीतं सशर्करम् ।
लाजाचूर्णयुतं दद्या त्पित्तजायान्तु पाचनम् ॥ ६१ ॥
दुरालभापर्पटकं पटोलं कटुरोहिणी ।
शैमिक्यां पित्तजायाञ्च पाने निष्क्वाथ्यदापयेत् ॥ ६२ ॥
भूनिम्बमुस्तकं वासा त्रिफलेन्द्रयवासकम् ।
पिचुमन्दं पटोलञ्च सक्षौद्रं योजितं हितम् ॥ ६३ ॥
खदिरारिष्टपत्रैश्च शिरीषोदुम्बरत्वचा ।
कुर्य्याल्लेपं कफोत्थायां पित्तजायामथापि वा ॥ ६४ ॥
वृषस्य स्वरसं दद्यात् चौद्रयुक्तं कफात्मके ॥ ६५ ॥
कफजायां मसूर्य्यान्तु कठिनायां विशेषतः ।
पाचनाय प्रदातव्यं लेपनं दधिमत्तुभिः ॥ ६६ ॥
पटोलं कुण्डलीमुस्त वृषधान्ययवासकैः ।
भूनिम्बनिम्बकटुका पर्पटैश्च शृतं जलम् ॥ ६७ ॥
मसूरीं शमयेदामां पक्कां चैव विशोधयेत् ।
नातःपरतरं किञ्चि द्विस्फोटज्वरशान्तये ॥ ६८ ॥

इति पटोलादिक्वाथः ।

पटोलमुस्ताऽरुणतण्डुलीयकं पचेद्धरिद्रामलककल्कसयुतम् ।
मसूरिविस्फोटविसर्पशान्तयेत्तदेव रोमान्तिवमिज्वरापहम् ॥६

निम्बपर्पटकं द्राक्षा पटोलं कटुरोहिणी ।
वासादुरालभाधात्री चोशीरं चन्दनद्वयम् ॥ ७० ॥
एष निम्बादिकः क्वाथः पीतः शर्करयान्वितः ।
मसूरीं सर्वजां हन्ति ज्वरविसर्पसम्भवाम् ।
उत्थितामविशेषात्तु पुनस्तां याद्यतो नयेत् ॥ ७१ ॥

इति निम्बादिक्वाथः ।

काञ्चनारत्वचः क्काथ स्ताप्यचूर्णावचूर्णितः।
निर्ग्रन्थयान्तः प्रविष्टान्तु मसूरीवाह्यतो नयेत्॥ ७२॥
पटोलमूलारुणतंडुलीयकं तथैव धात्रीखदिरेण संयुतम्।
पिवेज्जलेन क्कथितं सुशीतलं मसूरिकारोगविनाशनं परम्॥७३॥
सुपवीपवनिर्य्यासं हरिद्राचूर्णसंयुतम्।
रोमन्ती ज्वरवीसर्प मसूरीगात्तये पिवेत्॥ ७४॥
दुरालभापर्पटकं पटोलं कटुरोहिणी।
श्लेषपित्तमसूर्य्यान्तु क्कायमेषां प्रयोजयेत्॥ ७५॥
रसं पूतिकरञ्जस्य चामलक्यारसं तथा।
पिवेत्सशर्कराचोष्टं शोफतुल्कफपैत्तिके॥ ७६॥
अमृतादिकषायन्तु जयेत्पित्तकफात्मिकीम्।
तथा शोणितसंसृष्टं जयेच्छोणितमोचणैः॥ ६०॥
काश्चिद्विना प्रयत्नेन सिद्यन्त्याशु मसूरिकाः।
कृच्छ्रात् कृच्छ्रतराः काश्चित् काश्चित्सिध्यन्ति वा नवा।
काश्चिन्नैव प्रसिध्यन्ति साध्यमानाः प्रयत्नतः॥ ७८॥
सौवीरेण तु संपिष्टं मातुलुङ्गस्य केशरम्।
प्रलेपात्पाचयत्याशु दाहं वापि नियच्छति॥ ७८॥
पाददाहन्तु कुरुते पिटिका पादजाभृशम्।
तत्र सेकं प्रकुर्वीत बहुशस्तंडुलांवुना॥ ८०॥
पाककाले तु सर्वास्ता विशोषयति मारुतः।
तस्मात्संहृंहणं कार्यं नतु पथ्यं विशेषणम्॥ ८१॥
निम्बाद्य आदरं चूर्णं पाचनार्थं गुड़ेन तु।
अनेनाशु विपच्यन्ते वातपित्तकफात्मकाः॥ ८२॥
शूलाध्मानपरीतस्य कम्पमानस्य वायुना।
धन्वमांसरसाः शस्ता ईषत्सैन्धवसंयुताः॥ ८३॥

दाड़िमाम्लरसैर्युक्ता यूषाः सुखरुची हिताः ॥ ८४ ॥
पिबेदश्मन्तमशोतं भावितं खदिरासनैः ॥ ८५ ॥
शौचे वारिप्रयुञ्जीत गायत्रिबहुवारजम् ॥ ८६ ॥
जातीपत्त्रसमञ्जिष्टा दार्वीपूगफलं शमो ।
धात्रीफलं समधुकं क्वथितं मधुसंयुतम् ॥
मुखव्रणे कण्ठरोगे गंडूगार्थं प्रशस्यते ॥ ८७ ॥
अक्ष्णोः सेकं प्रशंसन्ति गविधुमधुकांबुना ॥ ८८ ॥
मधुकं त्रिफलामूर्वा दार्वीत्वङ्नीलमुत्पलम् ।
उशीरलोध्रमञ्जिष्टा लेपाश्चाच्योतने हिताः ॥ ८९ ॥
नश्यन्त्यनेन दृग्जाता मसूर्यो न भवन्ति च ।
प्रलेपमञ्जन दद्याद्बहुवारस्य वल्कलैः ॥ ९० ॥
पञ्चवल्कलचूर्णेन क्लिन्ना स्रावबती तथा ।
दशाङ्गलेपचूर्णेण चूर्णिता शान्तिमेति च ॥ ९१ ॥
कृमिपातभयाच्चापि धूपयेत्सरलादिभिः ।
वेदनादाहशान्त्यर्थं सुतानां च विशुद्धये ॥ ९२ ॥
तथाष्टाङ्गावलेहोऽत्र कवलश्चार्द्रकादिभिः ॥ ९३ ॥
निशाद्वयोशीरशिरीष मुस्तकैः सलोध्रभद्रश्रियनागकेशरैः ।
सस्वेदविस्फोटविसर्प कुष्टदौर्गन्ध्यरोमान्तिहरः प्रदेहः ॥ ९४ ॥
पञ्चतिक्तं प्रयुञ्जीत पानाभ्यञ्जनभोजनैः ।
कुर्याद्व्रणविधानञ्च तैलादीन् वर्जयेच्चिरम् ॥ ९५ ॥
निम्बवम्बूरकाशोक बिम्बीवेतसवल्कलम् ।
शृतशीतं प्रयोक्तव्यं स्रावप्रचासने सदा ॥ ९६ ॥
जपहोमोपचारैश्च दानस्वस्त्ययनादिभिः ।
घण्टाकर्णं द्विजान् गाश्च शिवं गौरीञ्च पूजयेत् ॥ ९७ ॥
अगदानिविषघ्नानि रत्नानि च भिषग्वरः ।

धारयेद्वाचयेच्चापि वैनतेयस्य संहिताम् ॥ ९८ ॥

—०—

कृत्वा दार्वीकषायञ्च कल्कैरेभिः पचेद् घृतम् ।
दशमूलीबलापथ्या कुष्टराम्नाबिभीतकैः ॥ ९९ ॥
दार्वीत्वङ्नक्तमालैश्च समञ्जिष्ठैः सुपेषितैः ।
अपक्वाः पाचयत्याशु पक्वाश्चैव विशोधयेत् ॥
क्षुद्रास्तु शमयत्येतत् सेकादपि मसूरिकाः ॥ १०० ॥

इति दार्वीघृतम् ।

मसूरीषु प्रयुञ्जीत गौराद्यं पञ्चकं तथा ।
नैवं शैरीषिकं वापि भिषक् सर्वेषु कर्मसु ॥ १०१ ॥
कूर्परादि भवे शोथे यन्नाखिडिः प्रजायते ।
व्रणशोथहरैर्योगै र्वातयोगहरैस्तथा ॥ १०२ ॥
दुष्टव्रणेषु तेष्वेव जलौकाभिर्हरेदसृक् ॥ १०३ ॥

## इति वङ्गसेने मसूरिकानिदानचिकित्साधिकारः समाप्तः ॥ ६२ ॥

—०—

## अथ क्षुद्ररोगनिदानमाह ।

स्निग्धाः सवर्णा ग्रथिता नीरुजा मुद्गसन्निभाः ।
कफवातोत्थिता ज्ञेया बालानामजगल्लिकाः ॥ १ ॥

—०—

### अथ चिकित्सामाह ।

तत्राजगल्लिकामामां जलौकाभिरुपाचरेत् ।
शुक्तिसौराष्ट्रिकाक्षार कल्कैश्चालेपयेन्मुहुः ॥ २ ॥

कठिनां चारयोगैश्च द्रावयेदजगल्लिकाम् ।
श्यामालाङ्गलिकामूर्वा कल्कैर्वापि विलेपयेत् ॥
पक्वां व्रणविधानेन यथोक्तेन प्रसाधयेत् ॥ ३ ॥

—०—

## अथ निदानमाह ।

विवृतास्यां महादाहां पक्वोदुम्बरसन्निभाम् ।
प्रमण्डलां पित्तकृतां विवृतां नाम तां विदुः ॥ ४ ॥
पद्मकर्णिकवन्मध्ये पिडिकाभिः समाचिताम् ।
इन्द्रवृद्धान्तु तां विद्या द्वातपित्तोत्थितां भिषक् ॥ ५ ॥
मण्डलं वृतमुत्सन्नं सरक्तं पिडिकान्वितम् ।
रुजाकरीं गर्दभिकां तां विद्याद्वातपित्तजाम् ॥ ६ ॥
वातश्लेष्मसमुद्भूतः श्वयथुर्हनुसन्धिजः ।
स्थिरो मन्दरुजः स्निग्धो ज्ञेयः पाषाणगर्दभः ॥ ७ ॥
कर्णस्याभ्यन्तरे जातां पिडिकामुग्रवेदनाम् ।
स्थिरां पनासिकां तान्तु विद्यादन्तः प्रपाकिनीम् ॥ ८ ॥
विसर्पवत्सर्पति यः शोथस्तनुरपाकवान् ।
दाहज्वरकरः पित्तात् सज्ञेयो जालगर्दभः ॥ ९ ॥
पिडिकामुत्तमाङ्गस्थां वृत्तामुग्ररुजाकरीम् ।
सर्वात्मिकां सर्वलिङ्गां जानीयादिरिवेल्लिकाम् ॥ १० ॥
बाहुपार्श्वांसकक्षेषु कृष्णस्फोटां सवेदनाम् ।
पित्तप्रकोपसंभूतां कक्षामित्यभिनिर्दिशेत् ॥ ११ ॥
एकामेतादृशीं दृष्ट्वा पिटिकां स्फोटसन्निभाम् ।
त्वगतां पित्तकोपेन गन्धनाम्नीं प्रचक्षते ॥ १२ ॥

—०—

## अथ चिकित्सामाह।

विवृतामिन्द्रवृद्धां च गर्दभीं जालगर्दभम्।
इरिवेल्लीं गन्धनामां कक्षा विस्फोटकांस्तथा॥
पित्तजस्य विसर्पस्य क्रियया साधयेद्भिषक्॥ १३॥
रोपयेत्सर्पिपापकान् सिद्धेन मधुरौषधैः॥ १४॥
सुरदारुशिलाकुष्ठैः स्वेदयित्वा प्रलेपयेत्।
कफमारुतशोथघ्नो लेपः पाषाणगर्दभे॥
परिपाकगतं भित्वा व्रणवत् समुपाचरेत्॥ १५॥
नीलीपटोलयोर्मूलं जलपिष्टं घृतप्लुतम्।
निहन्ति लेपनान्नूनं जालगर्दभजां रुजाम्॥ १६॥

—o—

## अथ निदानमाह।

घनामवक्त्रां पिटिकामुन्नतां परिमण्डलाम्।
अन्वालजीमल्पपूयां तां विद्यात्कफवातजाम्॥ १७॥
यवाकारा सुकठिना ग्रथिता मांससंश्रिता।
पिटिकाश्लेष्मवाताभ्यां यवप्रख्येति सोच्यते॥ १८॥
ग्रथिताः पञ्च वा षड्वा दारुणाः कच्छपोन्नताः।
कफानिलाभ्यां पिटिका ज्ञेया कच्छपिका बुधैः॥ १९॥

—o—

## अथ चिकित्सामाह।

अलजीं यवप्रख्याञ्च पनसीं कच्छपीं तथा।
पाषाणगर्दभञ्चैव पूर्वं स्वेदैरुपाचरेत्॥ २०॥

मनःशिला देवदारु कुष्टकल्कैः प्रलेपयेत् ।
पक्वान् व्रणविधानेन यथोक्तेन प्रसाधयेत् ॥ २१ ॥

—०—

## अथ निदानमाह ।

गम्भीरामल्पसंरम्भां सवर्णामुपरिस्थिताम् ।
पादस्यानुशयींतान्तु विद्यादन्तःप्रपाकिनीम् ॥ २२ ॥

—०—

## अथ चिकित्सामाह ।

श्लेष्मविद्रधिकल्केन जयेदनुशयीं भिषक् ॥ २३ ॥

—०—

## अथ निदानमाह ।

विदारीकन्दवद्वृत्तां कक्षावङ्क्षणसन्धिषु ।
विदारिकामिति वदेत् सरुजां सर्वलक्षणाम् ॥ २४ ॥

—०—

## अथ चिकित्सामाह ।

रक्तावसेकैर्बहुभिः स्वेदनैरपतर्पणैः ।
जयेद्विदारिकां लेपैः शिग्रुदेवद्रुमोद्भवैः ॥
नर्गह्वतिकवर्षाभू विल्वमूलैरथापि वा ॥ २५ ॥
पक्वां विदार्य्यशस्त्रेण पटोलपिचुमन्दयोः ।
कल्केन तिलयुक्तेन सर्पिर्मिश्रेण लेपयेत् ॥ २६ ॥
बद्धा च चीरवृक्षस्य कषायैः खदिरस्य च ।

व्रणं प्रक्षालयेच्छुद्धं ततस्तां रोपयेत्पुनः ॥
रोपणार्थं हितं तैलं कषायमधुरैः शृतम् ॥ २७ ॥
कच्छपिकां पनसिका मनेन विधिना भिषक् ।
साधयेत्कठिनानन्या च्छोथान् दोषसमुद्भवान् ॥ २८ ॥

—०—

## अथ निदानमाह ।

प्राप्यमांसं शिरां स्नायुं श्लेष्मभेदस्तथाऽनिलः ।
ग्रन्थिं करोत्यसौ भिन्नो मधुसर्पिर्वसानिभम् ॥ २९ ॥
स्रवत्याऽऽस्रावमनिल स्तत्र वृद्धिं गतः पुनः ।
मांसं विशोष्य ग्रथितां शर्कराञ्जनयत्यतः ॥ ३० ॥
दुर्गन्धि क्लिन्नमत्यर्थं नानावर्णं ततः शिरा. ।
स्रवन्ति रक्तं सहसा तं विन्याच्छर्करार्बुदम् ॥ ३१ ॥

—०—

## अथ चिकित्सामाह ।

मेदोऽर्बुदविधानेन साधयेच्छर्करार्बुदम् ॥ ३२ ॥
कच्छाविचर्चिकापामा लसकाः कुष्टलिङ्गकाः ।
कुष्टरोगोक्तविधिना एतांस्तद्वदुपाचरेत् ॥ ३३ ॥
लेपश्च शस्यते सिक्थ शताह्वागोरसर्षपैः ।
बचादार्वीसर्षपैर्वा तैलं वा नक्तमालजम् ॥
सारतैलमथाभ्यङ्गं कुर्वीतकटुकैः शृतम् ॥ ३४ ॥

—०—

## अथ निदानमाह ।

सममुत्सन्नमरुजं मण्डलं कफरक्तजम् ।

सहजं लक्ष्म चैकेषां लक्ष्यो जन्तुमणिस्तु सः ॥ ३५ ॥
अवेदनं स्थिरश्चैव यस्मिन् गात्रे प्रदृश्यते ।
माषवत् कृष्णमुत्सन्न मनिलान्माषमादिशेत् ॥ ३६ ॥
कृष्णानि तिलमात्राणि नीरुजानि समानि वा ।
वातपित्तकफोद्रेकेे तान्विंद्यात्तिलकालकान् ॥ ३७ ॥

—०—

## अथ चिकित्सामाह ।

चर्मकीलं जन्तुमणिं माषकांस्तिलकालकान् ।
उत्कृत्यशस्त्रेण दहेत् क्षाराग्निभ्यामशेषतः ॥ ३८ ॥

—०—

## अथ निदानमाह ।

शाल्मलीकण्टकप्रख्याः कफमारुतशोणितैः ।
जायन्ते पिटकायूनां विज्ञेया मुखदूषिकाः ॥ ३९ ॥
महद्वा यदि वाल्पं स्या च्छ्यावं वा यदि वा सितम् ।
नीरुजं मण्डलं गात्रे न्यच्छमित्यभिधीयते ॥ ४० ॥
क्रोधायासप्रकुपितो वायुः पित्तेन संयुतः ।
मुखमागम्य सहसा मण्डलं विसृजत्यतः ॥
नीरुजं तनुकं श्यावं मुखे व्यङ्गं तमादिशेत् ॥ ४१ ॥
कृष्णमेवं गुणं गात्रे मुखे वा नीलिकां विदुः ॥ ४२ ॥

—०—

## अथ चिकित्सामाह ।

युवानपिटकान्यच्छ नीलिकाव्यङ्गशर्कराः ।
शिराव्यधैः प्रलेपैश्च जयेदभ्यञ्जनैस्तथा ॥ ४३ ॥

अंगुलस्य चतुर्भागो मुखलेपो विधीयते ।
मध्यमस्तु त्रिभागः स्यादुत्तमोर्धांगुलो भवेत् ॥
स्थितिकालश्च शुष्कत्वं शुष्को दूषयति त्वचम् ॥ ४४ ॥
इति मुखलेपमात्रा ।

रोध्रधान्यवचालेपः तारुण्यपिटकापहः ।
तद्वद्गोरोचनायुक्तं मरिचं मुखलेपनात् ॥ ४५ ॥
सिद्धार्थकवचालोध्र सैन्धवैश्च प्रलेपनम् ।
वमनं च निहन्त्याशु पिटिकां यौवनोद्भवाम् ॥ ४६ ॥
व्यङ्गेषु चार्जुनत्वग्वा मञ्जिष्ठा वा समाक्षिका ।
लेपः सनवनीतो वा श्वेताश्वखुरजामषी ॥ ४७ ॥
रक्तचन्दनमञ्जिष्टा कुष्टरोध्र प्रियङ्गवः ।
वटांकुरमसूराश्च व्यङ्गघ्ना मुखकान्तिदाः ॥ ४८ ॥
व्यङ्गानां लेपनं शस्तं रुधिरेण शशस्य च ।
व्यङ्गे मञ्जिष्टया कुर्यात् लेपनं मधुसंयुतम् ॥ ४९ ॥
तिलतैलं प्रतिमर्षात् त्रिसप्ताहात् कृताभवम् ।
नश्यन्ति चण्डपिटिकाः पयोत्था इव घर्मतः ॥ ५० ॥
मातुलुङ्गजटासर्पिः शिलागोशकृतो रसः ।
मुखकान्तिकरो लेपः पिटिका व्यङ्गकालजित् ॥ ५१ ॥
परिणतदधिशरपुङ्खैः कुवलयदलकुष्टचन्दनोशीरैः ।
मुखकमलकान्तिकारी पिटकातिलकालकान् जयति ॥ ५२ ॥
त्रिभुवनविजयापत्रं मूलं खदिरस्य शिंशपा चैभिः ।
कल्पितमुद्वर्त्तनमेवं न्यच्छव्यंगापहं सिद्धम् ॥ ५३ ॥
अर्कक्षीरहरिद्राभ्यां मर्दयित्वा प्रलेपनात् ।
मुखकार्ष्ण्यं शमं याति चिरकालोद्भवं ध्रुवम् ॥ ५४ ॥
गोमयस्य रसः सर्पिः मातुलुङ्गं मनःशिला ।

मुखस्य वर्णकरणं तिलकालकनाशनम् ॥ ५५ ॥
वटस्य पांडुपत्राणि मालतीरक्तचन्दनम् ।
कुष्टं कालीयकं लोध्रं मेभिर्लेपं प्रयोजयेत् ॥ ५६ ॥
युवानपिटिकानां तु व्यङ्गानां च विनाशनम् ।
मुखं पद्मनिभं कुर्यान्नीलिकादिविवर्जितः ॥ ५७ ॥
यवान् सर्जरसं लोध्रं मुशीरं चन्दनं मधु ।
घृतं गुडञ्च गोमूत्रे पचेदादर्वीलेपनम् ॥ ५८ ॥
तदभ्यङ्गाद्विहन्त्याशु नीलिकां व्यङ्गदूषिकाम् ।
मुखं करोति पद्माभं पादौ पद्मदलोपमौ ॥ ५९ ॥
कालीयकोत्पलाऽऽमय दधिसर बराखिमध्य फलिनीभिः ।
लिप्तं भवति हि वदनं शशिप्रभं सप्तरात्रेण ॥ ६० ॥
रक्षोघ्नशर्वरीद्वय मञ्जिष्टागैरिकाह्वयस्तपयः ।
सिद्धेन लिप्तमानन मुद्यच्छरदिन्दुबिम्बवद्विभाति ॥ ६१ ॥
प्रियङ्गु चन्दनं लोध्रं कुष्टं पांडुवटच्छदम् ।
कालीयकान्वितं लेपात् कुर्याच्चन्द्रनिभं मुखम् ॥ ६२ ॥
हरिद्राद्वययष्ट्याह्व कालियककुचन्दनैः ।
प्रपौण्डरीकमञ्जिष्टा पद्मकं कुष्टकुङ्कुमम् ॥ ६३ ॥
कपित्थतिन्दुकप्लक्ष वटपत्रैः पयोन्वितैः ।
पाचयेत् कल्कितैरेतैः तैलं वाभ्यञ्जने चरेत् ॥ ६४ ॥
विप्लवं नीलिकाव्यङ्ग तिलकान्मुखदूषिकान् ।
नित्यसेवीजयेत् क्षिप्रं मुखं कुर्यान्मनोहरम् ॥ ६५ ॥
इति हरिद्राद्यं तैलम् ।
मञ्जिष्टाकेशरं लाक्षा सर्षपालोध्रचन्दनम् ।
प्रपौण्डरीकं मधुकं पतङ्गं गैरिकं वचा ॥ ६६ ॥
कर्पासास्थिशिलामज्ज कर्षैः कल्कैर्द्वयोन्वितैः ।

पचेत्तैलस्य कुड़व मञ्जाचीरं चतुर्गुणम् ॥ ६७ ॥
सिद्धेऽवतारिते दद्या न्मधूच्छिष्टं द्विरंशकम् ।
न्मचयेन्मुखमेतेन सप्तरात्रमतन्द्रितः ॥ ६८ ॥
पिटकास्तेन शाम्यन्ति तिलकाव्यङ्गकालिकाः ।
मुखकाण्यं जन्तुमणि पद्मिनीकण्टकास्तथा ।
मञ्जिष्ठाद्यमिदं तैलं मुखवर्णप्रसादनम् ॥ ६९ ॥

इति मञ्जिष्ठाद्यं तैलम् ।

मधूकस्य कषायेण तैलस्य कुडवं पचेत् ।
कल्कैः प्रियंगुमञ्जिष्ठा चन्दनोत्पलकेशरैः ॥ ७० ॥
कनक नाम तत्तैलं मुखकान्तिकरं परम् ।
अभीरुनीलिकाव्यंग शोधनं परमर्चितम् ॥ ७१ ॥

इति कनकतैलम् ।

कुंकुमं चन्दनं पत्र मुशीरं चन्दनोत्पलम् ।
गोरोचनाद्दरिद्रे द्वे मञ्जिष्ठामधुयष्टिका ॥ ७२ ॥
पतङ्गं शारिवालोध्रं कुष्टं गैरिककेशरम् ।
स्वर्णमाचीप्रियगुश्च कालीयं रक्तचन्दनम् ॥ ७३ ॥
एतै रच्चसमैर्भागै स्तैलप्रस्थं विपाचयेत् ।
अभ्यङ्गो राजपत्नीभ्यां ये चान्ये धनिनो नराः ॥ ७४ ॥
तिलकापिटकाव्यंङ्ग नीलिकामुखदूषिकाः ।
शर्कराश्च शरीरस्य दुष्कायाश्च विसर्पणम् ॥ ७५ ॥
नाशयत्याशुजनयेद्रूपं चापि मनोरमम् ।
पद्मकेशरवर्णाभ मुखं भवति कान्तिमत् ॥ ७६ ॥

इति कुङ्कुमाद्यं तैलम् ।

—०—

## अथ निदानमाह ।

कण्टकैराचितं वृत्तं मण्डलं पांडुकंडूरम् ।
पद्मिनीकण्टकप्रख्यैस्तदाख्यं कफवातजम् ॥ ७७ ॥

—०—

## अथ चिकित्सामाह ।

पद्मिनीकण्टके रोगे छर्दयेन्निम्बवारिणा ।
तेनेव सिद्धं सक्षौद्रं सर्पिष्पातुं प्रदापयेत् ॥ ७८ ॥
निम्बारग्वधकल्कैर्वा मुहुरुद्वर्त्तनं हितम् ॥ ७९ ॥

—०—

## अथ निदानमाह ।

परिक्रमणशीलस्य वायुरत्यर्थरूक्षयोः ।
पादयोः कुरुते दारीं सरुजां तलसंश्रिताम् ॥ ८० ॥

—०—

## अथ चिकित्सामाह ।

पाददार्यां शिरां प्राज्ञो मोचयेत्तलशोधिनीम् ।
स्नेहस्वेदोपपन्नौ तु पादौ वा लेपयेन्मुहुः ।
मधूच्छिष्टवसामज्जो घृतैः क्षारविमिश्रितैः ॥ ८१ ॥
मर्ज्जाद्रविमिश्रुद्भवयो चूर्णं मधुघृताप्लुतम् ।
निर्मथ्यकटुतैलाक्तं हितं पादप्रमार्ज्जनम् ॥ ८२ ॥
मधुसिक्थकसैन्धव घृतगुडमहिषाग्र्यमालनिर्य्यासैः ।
गैरिकसहितैर्लेपः पादस्फुटनापहः सिद्धः ॥ ८३ ॥
श्वाग्रसजालीमुस्तक ह्रविषार्मलिप्यचरणमतिपहुशः ।

संस्तम्भनयतिनाशं पादस्फुटनाह्वयं रोगम् ॥ ८४ ॥
उपोदिकासर्षपनिंवमोच कर्कारुकैर्वारुकभस्मतोयैः।
तलं विपक्वं लवणांशयुक्तं तत्पाददारीं विनिहन्ति लेपात् ॥८५॥
इत्युपोदिकाद्यं तैलम्।

उन्मत्तकस्य नीरेण माणकचारवारिणा।
कटुतैलं विपक्वन्तु शीघ्रं हन्याद्विपादिकाम् ॥ ८६ ॥
इत्युन्मत्ततैलम्।

—०—

## अथ निदानमाह।

शर्करोन्मथिते पादे क्षते वा कण्टकादिभिः।
ग्रन्थिः कीलवदुत्सन्नो जायते कदरन्तु तत् ॥ ८७ ॥

—०—

## अथ चिकित्सामाह।

देहेत्कादरमुद्धृत्य तैलेन दहनेन वा ८८॥

---

## अथ निदानमाह।

नखमांसमधिष्ठाय वायुः पित्तञ्च देहिनाम्।
कुरुते दाहपाकौ च तं व्याधिं चिप्यमादिशेत् ॥ ८९ ॥

—०—

## अथ चिकित्सामाह।

चिप्यं शोणितमोक्षेण शोधनैश्चाप्युपाचरेत्।
गतोष्माणं तथा चैन सुष्णांवुपरिषेचितम् ॥ ९० ॥

शस्त्रेणापि यथा योगं मुत्कृत्य स्रावयेद्व्रणम् ।
व्रणोक्तेन विधानेन रोपयेत्तं विचक्षणः ॥ ८१ ॥
शिलातिजोवती चैव रोचनाचरसाञ्जनम् ।
कल्कैरेतैरंवुपिष्टैः शोधयित्वा व्रणञ्च तत् ॥ ८२ ॥
हरिद्रागुल्मकालीय कल्कैश्च सरसाञ्जनैः ।
सिद्धेन तिलतैलेन तत्तस्तु रोपयेद्व्रणम् ॥ ८३ ॥
दाडिमजकुसुमधन्व यासाभयाश्चत्वचूर्णिताच्छिसा ।
नखकोटिपूतिभागं शमयति च शूलं तत्क्षणतः ॥ ८४ ॥
अन्तर्धूमनिदग्धस्य हरितालान्वितस्य च ।
तंडुलीयकमूलस्य चूर्णं पूतिनखापहम् ॥ ८५ ॥
उद्वृत्यकोणात्समुपास्यकल्कं सिक्तं नखं पूयत्वगस्थिमज्जः ।
तैलप्रदानात्सततं नखाश्च रोहन्ति शुद्धा विगतामयाश्च ॥ ८६ ॥
स्वरसेन हरिद्रायाः पात्रे क्षत्वायसेऽभयाम् ।
पिष्ट्वा तज्जेन कल्केन लिम्पेच्चिप्यं पुनः पुन. ॥ ८७ ॥

—०—

## अथ निदानमाह ।

तदेवाल्पतरैर्दोषैः कुनखं परुषं भवेत् ॥ ८८ ॥
तन्त्रान्तरे च ।
अभिघातात्प्रदुष्टोयो नखोरूचो सितः खरः ।
भवेत्तं कुनखं विद्यात् कुलिरमितिसंज्ञितम् ॥ ८९ ॥

—०—

## अथ चिकित्सामाह ।

श्लेषविद्रधिकल्केन कुनखं समुपाचरेत् ॥ १०० ॥

नखकोटिप्रविष्टेन टङ्कणेन न शाम्यति।
कुनखश्वेतदाक्रान्तः शैलोऽपि प्रवते जले॥ १०१॥
काश्मर्याः सप्तभिः पत्रैः कोमलैः परिवेष्टितैः।
अंगुलीवेष्टकः पुंसां ध्रुवमाशुप्रशाम्यति॥ १०२॥
इति कुनखोपक्रमः।

—०—

## अथ निदानमाह।

क्लिन्नांगुल्यन्तरौ पादौ कंडूदाहरुजान्वितौ।
दुष्टकर्दमसंस्पर्शा दलसन्तं विभावयेत्॥ १०३॥

—०—

## अथ चिकित्सामाह।

पादौ सिक्तारणालेन लेपनं त्वलसे हितम्।
कल्कैः कृतैर्निम्बतिल शिलाकासीसरोचनैः॥ १०४॥
लाक्षाऽभयारसालेप कार्य्य वा रक्तमोक्षणम्॥ १०५॥
बृहतीरससिद्धेन तैलेनाभ्यज्य बुद्धिमान्।
शिलारोचनकाशीस चूर्णैर्वा प्रतिसारयेत्॥ १०६॥
करञ्जबीजं रजनी काशीसं पद्मकं मधु।
रोचनाहरितालश्च लेपोयमलसे हितः॥ १०७॥

—०—

## अथ निदानमाह।

अरूंषिबहुवक्त्राणि बहुलक्लेदीनिमूर्द्धनि।
कफासृक् कृमिकोपेन नृणां विद्यादरूंषिकाम्॥ १०८॥

—०—

## अथ चिकित्सामाह।

अरुंषिकां जलौकाभि र्योहयेद्दुग्धो भिषक्।
प्रचालयेन्मुहुस्तत्र सैन्धवक्काथवारिभिः॥ १०९॥
अरुंषिकायां रुधिरेऽवसिते शिराव्यधेनाथ जलौकासा वा।
निम्बांबुसिक्ते शिरसि प्रलेपो देयोऽश्ववर्चो रससैन्धवाभ्याम्॥ ११०
मुहुर्मुहुस्ततो लिम्पेत् पटोलारिष्टवासकैः।
खदिरारिष्टजंवूनां त्वग्भिर्वा मूत्रसंयुतैः॥ १११॥
कुटजत्वक् च लवणं संप्रपिष्टं प्रलेपयेत्।
गोशकृद्रसपिष्टं वा तालमूलं प्रशस्यते॥ ११२॥
निम्बोदकेन लवणैः प्रलेपोऽश्वशकृद्रसैः॥ ११३॥
पुराणमथपिण्याकं पुरीषं कुक्कुटस्य च।
मूत्रपिष्टः प्रलेपोऽयं शीघ्रं हन्यादरुंषिकाम्॥ ११४॥
कपालभ्रष्टकुष्टं वा चूर्णितं तैलसयुतम्।
अरुंष्यां लेपनं क्लेद दाहास्रज्वरनाशनम्॥ ११५॥
शु च्यर्कदुग्धधत्तूर पत्रं मूत्रविमिश्रितम्।
लेपनं तैलसंयुतं हितं कंडूशिरोव्रणे॥ ११६॥
मुण्डयित्वा शिरः पूर्वं क्रियामेतां प्रयोजयेत्॥ ११७॥
हरिद्राद्यभूनिम्ब त्रिफलारिष्टचन्दनैः।
एतत्तैलमरुंषीणां सिद्धमभ्यञ्जने हितम्॥ ११८॥

इति हरिद्राद्यं तैलम्।

शु ष्टो सुपरशुच्छिन्ना शालिपर्ण्यजमृत्तिका।
एतेषां पलिकान् भागान् कर्षं स्यात् केशभस्मतः॥ ११९॥
शर्करीं विंशतिन्दद्या त्तावन्तीं माक्षिकाः क्षिपेत्।
अरुंषिकां नाशयति जयेद्दुष्टव्रणानपि १२०॥

नखदन्तक्षतोत्पन्नान् विच्छिन्नांश्च विसर्पिणः।
अत्यन्तपूयबहुला अस्रावा; कुपिताश्चये ॥ १२१ ॥
व्रणाच्छोधयेद्रोपं पक्वाभीरहान्यथा।
शोधयेद्रोपयेच्चैव यथाभिहितभोजिनः ॥ १२२ ॥

इति स्नुह्याद्यं तैलम्।

मांसीखरसर्संसिद्ध' कटुतैल' चतुष्पलम्।
मनःशिला तथा मांसं राजीवजञ्च गन्धकम् ॥ १२३ ॥
शाणमात्रैस्तदभ्यङ्गा हन्त्यवश्यमरूंषिकाम्।
पामां विचर्चिकाञ्चैव तथान्याञ्छिरसो व्रणान् ॥ १२४ ॥

इति मांसीतैलम्।

इन्द्रलुप्तोक्त विधिना तैलेनानेन वा जयेत्।

---

## अथ निदानमाह।

दारुणाकंडूराख्या केशभूमिश्च जायते।
कफमारुतकोपेन विद्याद्दारुणकं भिषक् ॥ १२५ ॥

---

## अथ चिकित्सामाह।

दारुणे तु शिरां विध्येत् स्निग्धां खिन्नां ललाटजाम्।
अवपीडशिरोवस्ती नभ्यंगाश्चावचारयेत् ॥ १२६ ॥
कोद्रवाणां तृणक्षार पानीयं परिधावने ॥ १२७ ॥
कार्य्योदारुणकेमूर्द्धि प्रलेपो मधुसंयुतः।
प्रियालबीजमधुक कुष्टमाषैः ससैन्धवैः ॥ १२८ ॥
नीलोत्पलस्य किञ्जल्क' धात्रीफलसमन्वितम्।

यष्टीमधुकसंयुक्तं प्रलेपाद्दारुणं जयेत् ॥ १२९ ॥
गुञ्जाफलैः शृतं तैलं भृङ्गराजरसेन वा ।
कंडूदारुणहृत्कुष्ठ कपालव्याधिनाशनम् ॥ १३० ॥

इति गुञ्जातैलम् ।

कीचकानां पलैः पिष्टैः कटुतैलं विपाचयेत् ।
सगोमूत्रं तदभ्यङ्गात् कपालव्याधिनाशनम् ॥ १३१ ॥

इति कीचकाद्यं तैलम् ।

चित्रकं दन्तीमूलञ्च कोशातकीसमन्वितम् ।
कल्कं पिष्ट्वा पचेत्तैलं केशदद्रुविनाशनम् ॥ १३२ ॥

इति चित्रकाद्यं तैलम् ।

भृङ्गराजत्रिफलोत्पलशारि लोहपुरीषसमन्वितकारि ।
तैलमिदं पचदारुणहारि कुञ्चितकेशघनस्थिरकारि ॥ १३३ ॥

इति भृङ्गराजतैलम् ।

—०—

## अथ निदानमाह ।

रोमकूपानुगं पित्तं वातेन सह मूर्च्छितम् ।
प्रच्यावयति रोमाणि ततः श्लेष्मा सशोणितः ॥ १३४ ॥
रुणद्धि रोमकूपांस्तु ततोऽन्येषामसम्भवः ।
तदिन्द्रलुप्तं खालित्यं रुह्येति च विभावयेत् ॥ १३५ ॥

—०—

## अथ चिकित्सामाह ।

इन्द्रलुप्ते शिरां मुक्त्वा स्निग्धस्विन्नस्य मोक्षयेत् ।
कल्कैः समरिचैर्दिह्या च्छिन्नाकाशीसतुत्थकैः ॥ १३६ ॥

कुटजवटादारुकल्क लेपनं वा प्रशस्यते ॥ १३७ ॥
तिक्तापटोलीपत्र स्वरसे घृष्ट्वा शमं याति ।
चिरकालजापिरुह्या नियतं दिनत्रयादेव ॥ १३८ ॥
अवगाढ़पदं वापि प्रच्छयित्वा पुनः पुनः ।
गुञ्जाफलैश्चिरं लिम्पेत् केशभूमिं समंततः ॥ १४९ ॥
इन्द्रलुप्तापहो लेपो मधुना बृहतीरसः ।
गुञ्जामूलफलं वापि भल्लातकरसोऽपि वा ॥ १४० ॥
गुञ्जापत्रं विषं तैलं तिलामधुककाञ्जिकम् ।
पतत्यनेन नो केशा लेपाद्रोहन्ति चाद्भुतम् ॥ १४१ ॥
गोक्षुरं तिलपुष्पाणि तुल्ये च मधुसर्पिषी ।
शिरः प्रलेपितं तेन केशैः समुपचीयते ॥ १४२ ॥
हस्तिमन्तमषीं कृत्वा श्राजं चीरं रसाञ्जनम् ।
लोमान्यनेन जायन्ते नृणां पाणितलेष्वपि ॥ १४३ ॥
मधुकेन्दीवरं मूर्वा तैलाज्यगोचीरभृङ्गलेपेन ।
अचिराद्भवन्ति केशा दृढ़मूलायता ऋजवः ॥ १४४ ॥
चतुष्पदानां त्वग्रोम नखशृङ्गास्थिभस्मभिः ।
तैलाक्ताकेशभूमिश्च ऽऽप्रक्ताकेशयुता भवेत् ॥ १४५ ॥
शोर्य्यस्तु वापि केशेषु बहुशो व्यधयेच्छिराम् ।
मूर्द्धि तैलं प्रकुर्वीत नस्यकर्मविरेचनैः ॥ १४६ ॥
मालतीकरवीराग्नि नक्तमालैर्विपाचितम् ।
तैलमभ्यञ्जने शस्त मिन्द्रलुप्तहरं परम् ॥ १४७ ॥

—०—

स्नुहीपयः पयोऽर्कस्य लाङ्गलीमार्कवो विषम् ।
श्राजमूत्रं सगोमूत्रं रतिकासेन्द्रवारुणी ॥ १४८ ॥
सिद्धार्थकं तीक्ष्णगंधा गर्भं दत्वा विपाचितम् ।

वह्निना मृदुना पक्वं तैलं खालित्यनाशनम् ॥ १४८ ॥
कूर्म्मपिष्टसमानापि रूच्चायारोमतस्करी ।
दिग्धा सानेन जायेत ऋचशारीरलोमशा ॥ १५० ॥

इति क्षुद्रादिखालित्यहरं तैलम् ।

तैलं सयष्टीमधुकैः चीरे च त्रैफलैः शृतम् ।
नस्ये दत्तं जनयति केशान् श्मश्रूणि चाप्यथ ॥ १५१ ॥

इति यष्टीमधुकाद्यं तैलम् ।

—०—

## अथ निदानमाह ।

क्रोधशोकश्रमकृतः शरीरोष्माशिरोगतः ।
पित्तञ्च केशान् पचति पलितं तेन जायते ॥ १५२ ॥

—०—

## अथ चिकित्सामाह ।

धात्रीफलं द्वय पथ्ये द्वे तथैकं विभीतकीम् ।
लोहचूर्णस्य कर्षन्तु दद्यादं चूतमज्जतः ॥ १५३ ॥
पिष्ट्वा लोहमये पात्रे स्थापयेदुषितं निशाम् ।
लेपोऽयं हन्ति न चिरा दकालपलितं महत् ॥ १५४ ॥
पयोरजो भृङ्गराज त्रिफलाकृष्णमृत्तिका ।
स्थितमिक्षुरसे मासं समूलं पलितं जयेत् ॥ १५५ ॥
लोहमलामलककल्कैः सजयाकुसुमैर्नरः सदास्नायी ।
पलितानीह न पश्यति गङ्गास्नायीव नरकानि ॥ १५६ ॥
त्रिफलानीलिकापत्रं लोहभृङ्गरजः समम् ।
आविमूत्रेण संयुक्तं कृष्णीकरणमुत्तमम् ॥ १५७ ॥

निम्बस्य बीजानि हि भावितानि भृङ्गस्य तोयेन तथाऽसनस्य।
तैलञ्च तेषां विनिहन्ति नस्यादुग्धान्नभोक्तुः पलितं समूलम् ॥१५८॥

इति निम्बबीजतैलम्।

केतकं भृंगनीलीका पार्थपुष्पं सबीजकम्।
सहचरं तिलाकृष्णा पिण्डीतकमयो रजः ॥ १५९ ॥
अमृता चोत्पलं श्यामा त्रिफलापद्मकर्दमैः।
कल्कैरेभिः पचेत्तैलं त्रिफलाक्वाथमार्कवैः ॥ १६० ॥
अकालपलितं हन्ति नाशयेदुपजिह्विकाम्।
केशाश्च तेन जायन्ते स्निग्धाश्चाञ्जनसन्निभाः ॥ १६१ ॥

इति केतक्यादितैलम्।

अञ्जनं मधुकं श्यामा तार्क्ष्यजं शारिवोत्पलम्।
त्रिफलानीलिकापत्रं काशीसं मुस्तकं तिलाः ॥ १६२ ॥
आम्रास्थितालपत्रञ्च फलं विभीतकस्य च।
जम्ब्वाम्रार्जुनपुष्पाणि कूर्म्मपित्तं सतुत्थकम् ॥ १६३ ॥
शिंशिपाभूतकेशी च मार्कवञ्च त्रिकण्टकम्।
पृथक्कर्षसमान् भागान् तथा लोहरजःसमम् ॥ १६४ ॥
तैलप्रस्थमजाक्षीरं धात्रीभृङ्गरसाढ़कम्।
अश्वकस्य रसस्यापि लोहपात्रे विपाचयेत् ॥ १६५ ॥
पक्वं तल्लोहभाण्डस्थं शिरसोऽभ्यञ्जनस्ययोः।
यत्नेन योजयेत्तैलं वराङ्गे विनिपातयेत् ॥ १६६ ॥
पतन्ति बिन्दवो यत्र क्षणं तदुपजायते।
भवन्ति कुटिलाः शीघ्रं कचाः षट्पदकोपमाः ॥ १६७ ॥
खालित्यं पलितञ्चैव इन्द्रलुप्तञ्च नाशयेत्।
मध्यं चक्षुष्यमायुष्यं बलवर्णकरं परम्।

नीलबिन्दितिविख्यातं विश्वामित्रेण पूजितम् ॥ १६८ ॥

इति नीलबिन्दुतैलम् ।

काश्मर्यार्जुनजबू सहचरकुसुमानि चूतफलमध्यम् ।
पिण्डीतकफलत्रिफलातैलस्य फलाष्टकं विपाचयेत् ॥ १६९ ॥
दत्वा पयश्चतुर्गुणं मधुभृङ्गस्य मधुकफलरसमिश्रम् ।
सिद्धेन तेन दिग्धा भवन्ति धवलाप्यलिकुलनिभाः ॥ १७० ॥
कुन्देन्दुशङ्खधवलेष्वितमपि केशैः शीर्षे मासेन
भञ्जनभृङ्गश्यामं भवति सदा नस्यतोऽव्दशतम् ॥ १७१ ॥

इति काश्मर्याद्यं तैलम् ।

काश्मर्यामूलमादौ सहचरकुसुमं केतकीनाञ्च मूलं
सायश्चूर्णं सभृङ्गं त्रिफलजलयुतं तैलमेभिः पचेद्यः ।
कृत्वा लोहस्य भाण्डे क्षितितिलनिहितं स्थापयेन्मासमेकम् ।
केशाः काशप्रकाशाभ्रमरकुलनिभास्त्वचणादेवमुक्ताः ॥ १७२ ॥

इति केशरञ्जनतैलम् ।

केतकीत्रिफलादार्वी नतफलं मदनत्वचः ।
आम्रास्थिमज्जकुष्टञ्च तिलाभृङ्गरसोऽञ्जनम् ॥ १७३ ॥
पिण्डीतकमयश्चूर्णं नीलोपद्मञ्च पद्मजम् ।
कल्कैरेतैः पचेत्तैलं वचाभृङ्गरसेन तु ॥ ॥ १७४ ॥
शिरोऽभ्यंगात्प्रणश्यन्ति दारुणं चेन्द्रलुप्तकम् ।
अकालपलितं कंडू लूतिकां दद्रुमेव च ॥ १७५ ॥
करोति कुञ्चितान् केशान् भ्रमरोदरसन्निभान् ।
केतकाद्यमिदं नाम्ना विदेहादिप्रकीर्त्तितम् ॥ १७६ ॥

इति केतकाद्यं तैलम् ।

शिखिपित्तविशालास्थि मदयन्त्यञ्जनोत्पलैः ।
मनोलभृङ्गकाशीसै स्तके तैलं विपाचयेत् ॥ १७७ ॥
लोहभाण्डे स्थितं मास मकालं पलितं जयेत् ॥ १७८ ॥

इति मयूरपित्ताद्यं तैलम् ।

क्षीरात्समार्कवरसा द्विप्रस्थं मधुके पले ।
विपचेत्तैलकुड़वं तन्नस्यं पलितापहम् ॥ १७९ ॥

इति मधुकतैलम् ।

प्रपौण्डरीकमधुक पिप्पलीचन्दनोत्पलैः ।
सिद्धं धात्रीरसे तैलं नस्येनाभ्यञ्जनेन वा ।
सर्वान् मूर्द्धगतान् हन्ति पलितानि च शीलितम् ॥ १८० ॥

इति प्रपौण्डरीकाद्यं तैलम् ।

—०—

## अथ निदानमाह ।

कक्षाभागेषु ये स्फोटा जायन्ते मांसदारणाः ।
अन्तर्दाहज्वरकरा दीप्तपावकसन्निभाः ॥ १८१ ॥
सप्ताहाद्वादशाहाद्वा पक्षाद्वा घ्नन्तिमानवम् ।
तामग्निरोहिणीं विद्या दसाध्यां सन्निपातिकीम् ॥ १८२ ॥

—०—

## अथ चिकित्सामाह ।

पित्तवीसर्पविधिना साधयेदग्निरोहिणीम् ।
रोहिण्यां लङ्घनं कुर्य्या द्रक्तमोक्षं विरूक्षणम् ।
शरीरस्य च संशुद्धि स्तां त्यजेद्दर्धितां पुनः ॥ १८३ ॥

———

## अथ निदानमाह ।

ग्रीवां सकक्षां करपाददेशे सन्धौ गले वा त्रिभिरेवदोषैः ।
ग्रन्थिः सवल्मीकवदक्रियाणां जातः क्रमेणैव गतः प्रवृद्धिम् ॥१८४॥
मुखैरनेकैः स्रुततोदवद्भिर्विसर्पवत्सर्पति चोन्नताग्रैः ।
वल्मीकमाहुर्भिषजो विकारं निष्प्रत्यनीकं चिरजं विशेषात् ॥१८५॥

—०—

## अथ चिकित्सामाह ।

शस्त्रेनोत्कृत्यवल्मीकं क्षाराग्नीभ्यां प्रसाधयेत् ।
विधानेनावुर्दोक्तेन शोधयित्वा च रोपयेत् ॥ १८६ ॥
वल्मीकन्तु भवेद्यस्य नातिवृद्धस्य मर्म्मजम् ।
तत्र संशोधनं कृत्वा शोणितं मोचयेद्भिषक् ॥ १८७ ॥
कुलित्थिकायामूलैश्च गुडूच्यालवणेन वा ।
आरग्वधस्य मूलैश्च दन्तीमूलैस्तथैव च ॥ १८८ ॥
श्यामामूलैः सपललैः सक्तुमिश्रैः प्रलेपयेत् ।
सुस्निग्धैश्च सुखोष्णैर्वा भिषक्तमुपनाहयेत् ॥ १८९ ॥
पक्वं वातं विजानीयाद् गताः सर्वा यथाक्रमम् ।
अभिप्रायतत्स्छित्वा प्रदहेन्मतिमान् भिषक् ॥ १९० ॥
संशोध्यदुष्टमांसानि क्षारेण प्रतिसारयेत् ।
व्रणं विशुद्धं विज्ञाय रोपयेन्मतिमान् भिषक् ॥ १९१ ॥

—०—

मनःशिलालभल्लात सूक्ष्मैलागुरुचन्दनैः ।
जातिपक्षवतक्रैश्च निम्बतैलं विपाचयेत् ॥ १९२ ॥
वल्मीकं नाशयेत्तद्धि वहुच्छिद्रं सशूलम् ।

पाणिपादोपरिष्टात्तु छिद्रैर्बहुभिरावृतम्।
वल्मीकं येऽस्मिरोफं स्याद्वर्ज्यं तत्तु विजानता॥ १९३॥
इति मनःशिलाद्यं तैलम्।

—०—

## अथ निदानमाह।

प्रवाहनातिसाराभ्यां निर्गच्छति गुदो बहिः।
रूक्षदुर्बलदेहस्य गुदभ्रंशं तमादिशेत्॥ १९४॥

—०—

## अथ चिकित्सामाह।

गुदभ्रंशे गुदं स्विन्नं स्नेहेनाक्तं प्रवेशयेत्।
प्रविष्टं रोहयेद्यत्नाद् गव्यसच्छिद्रचर्मणा॥ १९५॥
पद्मिनीकोमलं पत्रं यः खादेच्छर्करान्वितम्।
एतन्निश्चित्यनिर्दिष्टं न तस्य गुदनिर्गमः॥ १९६॥
गुदञ्च गव्यवसया म्रक्षयेदसकृन्नरः।
दुष्प्रवेशो गुदभ्रंशो विशत्याशु न संशयः॥ १९७॥
मूषकानां वसाभिर्वा गुदभ्रंशे प्रलेपनम्।
सुस्विन्नमूषिकामांसे नाथवास्वेदकुर्वेदम्॥ १९८॥
हृप्याम्लानलचांगेरी विल्वं पाठायवाग्रजम्।
तक्रेण शीलयेत्याशु भ्रंशार्त्तोऽनलदीपनम्॥ १९९॥

—०—

मूषिकाकुडवं मांसं चित्रकस्य पलं तथा।
दशमूलपलानाञ्च पलं भल्लातकस्य च॥ २००॥
त्रिफलायाः पञ्चैषां कल्कं दत्वा चतुर्गुणे।
क्षीरे तैलं पचेदस्य मभ्यङ्गाच्च प्रशाम्यति॥ २०१॥

गुदनिस्सरणं शूलं दुष्टव्रणविशोधनम्।
मूषकाद्यमिदं तैलं कृष्णात्रेयेण पूजितम्॥ २०२॥
इति मूषकाद्यं तैलम्।

मूषिकामांसकुड़वं दशमूलं पलोन्मितम्।
चित्रस्य द्वे पले वापि निष्क्वाथ्याष्टगुणेऽम्भसि॥ २०३॥
पादशेषेण तेनैव तैलप्रस्थं पयः समम्।
जीवनीयप्रतिवापं पाचयेन्मृदुनाग्निना॥ २०४॥
अभ्यङ्गान्नाशयत्याशु गुदभ्रंशं सुदारुणम्।
भगन्दरं गुदे शूलं नाड़ीदुष्टव्रणापहम्॥ २०५॥
इति द्वितीयमूषकाद्यं तैलम्।

निरन्त्रं मूषिकं पक्त्वा पञ्चमूलपयोयुतम्।
तैलं वातहरैः सिद्धं गुदभ्रंशहरं परम्॥ २०६॥
तुल्यमंशं समादाय पञ्चमूलांशुमांसयोः।
क्षीरपाकविधानेन विपाच्यैतत्समाहितः।
पचाद्वातहरैः कल्कैः पक्तव्यमूषकादिकम्॥ २०७॥
इति तृतीयमूषकाद्यं तैलम्।

मूषकानां पलशतं जलद्रोणे विपाचयेत्।
पादशेषे पचेत्तैलं दुग्धं तैलचतुर्गुणम्॥ २०८॥
मूषिकानां शिरः कल्कं वस्तावभ्यञ्जने हितम्।
गुदनिस्सरणे शूले रक्तस्रावे च तद्धितम्॥ २०९॥
इति चतुर्थमूषकाद्यं तैलम्।

—०—

## अथ निदानमाह।

सदाहो रक्तपर्यन्तस्त्वक्पाकोतीव्रवेदनः।

कंडूमान् ज्वरकारी च सस्याच्छूकरदंष्ट्रकः॥ २१०॥

---

## अथ चिकित्सामाह।

सर्षपरजनीकल्क स्तालमूलीसंयुतो लेपात्।
शमयति शूकरदंष्ट्रं पिडिकादाहान्वितं पुंसाम्॥ २११॥
भृङ्गराजस्य मूलस्य रजन्या सहितस्य च।
चूर्णस्य सहसालेपा द्वराहद्विजनाशनम्॥ २१२॥
रजनीमार्कवमूलं पिष्टं शीतेन वारिणा तुल्यम्।
हन्ति विसर्पं लेपाद्वराहदशनाह्वयं घोरम्॥ २१३॥
सूर्य्यावर्त्तजटां सुधी वारिणोत्पाव्यवुद्धिमान्।
पिष्ट्वा भङ्गांबुनालेपा द्वराहद्विजनाशनम्॥ २१४॥
विसर्पोक्तः प्रतीकारः कार्य्यः शूकरदंष्ट्रयोः॥ २१५॥
मूलकबीजमुद्धृत्य चोन्मत्तकदलानि तु।
सूर्य्यावर्त्तशकाह्वाश्च मेध्यावी[1]रसपाचितम्॥ २१६॥
तैलं मेध्याविकं नाम वराहद्विजनाशनम्।
कण्डुकुष्ठप्रशमनं कच्छ्रं दद्रुविनाशनम्॥
बलवर्णकरश्चैव क्षणाद्वेगेण भावितम्॥ २१७॥
इति मेध्याविकतैलम्।

---

## अथ निदानमाह।

मर्दनात्पीडनाद्वापि तथैवाप्यभिघाततः।
मेढ्रचर्म्म यदा वायुर्भजते सर्वतश्चरन्॥ २१८॥

---

[1] मेध्यावी ब्राह्मी।

तदा वातोपसृष्टत्वा चर्मतत्परिवर्तते ।
अवेदनं सदाहश्च पाकं व्रजति चाशुकृत् ॥ २१९ ॥
मणेरधस्तात् कोपश्च ग्रन्थिरूपेण लक्ष्यते ।
परिवर्त्तिकेति तां विद्यात् सरुजां वार्त्तिसम्भवाम् ॥
सकण्डूकठिना वापि सैव श्लेष्मसमुत्थिता ॥ २२० ॥

—०—

## अथ चिकित्सामाह ।

परिवर्तीं घृताभ्यक्तां सुस्विन्नामुपनाहयेत् ।
त्रिरात्रं पञ्चरात्रं वा वातघ्नैः साल्वनादिभिः ॥ २२१ ॥
ततोऽभ्यज्य शनैश्चर्म वेशयेत्पीडयेन्मणिम् ।
प्रविष्टे च मर्मणि मणौ स्वेदयेदुपनाहनैः ॥ २२२ ॥
दद्याद्वातहरान् वस्तीन् स्निग्धान्यन्नानि भोजयेत् ॥ २२३ ॥

—०—

## अथ निदानमाह ।

अल्पीयःखां यदा हर्षा द्बलाद्गच्छेति स्त्रियं नरः ।
हस्ताभिघातादथवा चर्मण्युद्वर्तते बलात् ॥
यस्यावपाट्यते चर्म तां विद्यादवपाटिकाम् ॥ २२४ ॥
वातात्परुषरूक्षाभा सूक्ष्मात्क्षणारुगन्विता ।
पित्तात्सपीतारक्ताभा दाहतृष्णासमन्विता ।
श्लैष्मिकोकठिनास्निग्धा कण्डूमत्यल्पवेदना ॥ २२५ ॥

—०—

## अथ चिकित्सामाह ।

स्नेहस्वेदैस्तथैवैनां चिकित्सेदवपाटिकाम् ॥ २२६ ॥

—०—

## अथ निदानमाह।

वातोपसृष्टे मेढ्रे च चर्म्मसंश्रयते मणिम्।
मणिचर्म्मोपनद्धस्तु मूत्रस्रोतो रुणद्धि च॥ २२७॥
निरुद्धप्रकशे तस्मिन्मन्दधारमवेदनम्।
मूत्रं प्रवर्त्तते जन्तोर्मणिर्विव्रियते न च॥
निरुद्ध प्रकशं विद्यात्सरुजं वातसम्भवम्॥ २२८॥

—•—

## अथ चिकित्सामाह।

निरुद्धप्रकशे नाड़ीं लौहीमुभयतो मुखीम्।
दारवीं वा जतुकृतां सहृतां वा प्रवेशयेत्॥ २२९॥
परिषिञ्चेद्वसां मज्जां शिशुमारवराहयोः।
चक्रतैलं तथा योज्यं,वातघ्नद्रव्यसंयुतम्॥ २३०॥
त्र्यहात् स्थूलपरां सम्यङ् नाड़ीं मार्गे प्रवेशयेत्।
स्रोतः प्रवर्द्धयेदेवं स्निग्धमन्नञ्च भोजयेत्॥
भित्वा वा सेवनीं मुक्त्वा सद्यः क्षतवदाचरेत्॥ २३१॥

---

## अथ निदानमाह।

वेगसन्धारणाद्वायु र्विहितो गुदसंश्रितः।
निरुणद्धि महत्स्रोतः सूक्ष्मद्वारं करोति च॥ २३२॥
मार्गस्य सौक्ष्म्यात् कृच्छ्रेण पुरीषं तस्य गच्छति।
सन्निरुद्धगुदं व्याधि मेनं विन्द्यात् सुदुस्तरत्॥ २३३॥

—०—

## अथ चिकित्सामाह ।

सन्निरुद्धगुदे तैलैः सेको वातहरैः हितः ।
तथा निरुद्धप्रकाश क्रमः कार्यो विजानता ॥ २३४ ॥

—०—

## अथ निदानमाह ।

शकृन्मूत्र समायुक्तेऽधौतेऽपाने शिशोर्भवेत् ।
स्विन्ने वाऽस्नाप्यमाने वा कंडूरक्तकफोद्भवा ॥ २३५ ॥
कंडूयनात्ततः चिप्रं स्फोटः स्रावश्च जायते ।
एकीभूतं व्रणं घोरं तं विद्यादहिपूतनम् ॥ २३६ ॥

---

## अथ चिकित्सामाह ।

ततः संशोधनैः पूर्वं धात्रीस्तन्यं विशोधयेत् ॥ २३७ ॥
त्रिफलाखदिरक्वाथैर्व्रणानां धावनं सदा ।
शङ्खसौवीरयष्ठ्याह्वैः लेपः कार्योऽतिपूतने ॥ २३८ ॥
कंडूरक्तोत्कटे कुर्य्याद्रक्तस्रावं जलौकसा ।
करञ्जत्रिफलातिक्तैः सर्पिः सिद्धं शिशोर्हितम् ॥ २३९ ॥
कासीसरोचना तुत्थ हरितालरसांजनैः ।
अम्लपिष्टैः प्रलेपोऽयं व्रणकंडू हि पूतने ॥ २४० ॥
पटोलपत्रत्रिफला रसाञ्जनविपाचितम् ।
पीतं घृतं नाशयति कृच्छ्रमप्यहि पूतनम् ॥ २४१ ॥

इति पटोलाद्यघृतम् ।

—०—

## अथ निदानमाह।

स्नानोत्सादनहीनस्य मलो वृषणसंस्थितः।
यदा प्रक्लिद्यते स्वेदात् कंडूं जनयते तदा ॥ २४२ ॥
कंडूयनात्ततः क्षिप्रं स्फोटः स्रावश्च जायते।
प्राहुर्वृषणकच्छुं तां श्लेष्मरक्तप्रकोपजाम् ॥ २४३ ॥

—o—

## अथ चिकित्सामाह।

भिषक् वृषणकच्छुं तु चिकित्सेत्पामरोगवत्।
अहिपूतननिर्दिष्ट क्रिययापि च तां हरेत् ॥ २४४ ॥
सर्जाह्वकुष्टसैन्धव सितसिद्धार्थैः प्रकल्पितो योगः।
उद्वर्त्तनेन नियतं शमयति वृषणकण्डूतिम् ॥ २४५ ॥

—o—

## अथ निदानमाह।

समुत्थाननिदानाभ्यां चर्मकीलं प्रकीर्तितम् ॥ २४६ ॥

—o—

कट्वीकापालिकामूलं पूतीकं सैन्धवं तथा।
शम्बूकेन स्वचापिष्टं चर्मकीलकनाशनम् ॥ २४७ ॥
प्रायेण क्षुद्ररोगेषु शस्त्रक्षारानलक्रिया।
लेपनं शोणितस्राव मिति सामान्यसंग्रहः ॥ २४८ ॥

## इति वङ्गसेने क्षुद्ररोगनिदानचिकित्साधिकारः समाप्तः ॥ ६३ ॥

—o—

## अथ मुखरोगनिदानमाह ।

मुखरोगा. पञ्चषष्टिः सप्तस्वायतनेषु च[1] ।
तत्र चायतनान्योष्ठौ दन्तादन्ताशनं तथा ॥ १ ॥
तालुकण्ठश्च जिह्वा च मुख सर्वञ्च सप्तमम् ॥ २ ॥
आनूपपिशितक्षीर दधिमाषादिसेवनात् ॥
मुखमध्ये गदान् कुर्युः क्रुद्धा दोषाः कफोत्तराः ॥ ३ ॥
कर्कशौ परुषौ स्तब्धौ संप्राप्तानिलवेदनौ ।
दाल्येते परिपाट्येते चोष्ठौ मारुतकोपतः ॥ ४ ॥
चीयते पिटिकाभिश्च सरुजाभिः समन्ततः ।
सदाहपाकपिडिकौ पीताभासौ च पित्ततः ॥ ५ ॥
सवर्णाभिस्तु चीयेते पिटिकाभिरवेदनौ ।
भवतस्तु कफादोष्ठौ पिच्छिलौ शीतलौ गुरु ॥ ६ ॥
सकृत् कृष्णौ सकृत्पीतौ सकृच्छ्वेतौ तथैव च ।
सन्निपातेन विज्ञेयावनेक पिटिकान्वितौ ॥ ७ ॥
खर्जूरफलवर्णाभि पिटिकाभिर्निपीडितौ ।
रक्तोपसृष्टौ रुधिरं स्रवत. शोणितप्रभौ ॥ ८ ॥
मांसदुष्टौ गुरुस्थूलौ मांसपिण्डवदुन्नतौ ।
कृमयश्चात्र मूर्च्छन्ति नरस्योभयतो मुखात् ॥ ९ ॥
सर्पिर्मण्डप्रतिकाशौ मेदसाकंडूरौ गुरू ।
स्वच्छं स्फटिकसङ्काशं मासावं स्रवतो भृशम् ॥

---

[1] दन्तेष्वष्टा ८ वोष्टयोश्च ८ मूलेषु दशपञ्च च १५ ।
नव ९ तालुनि जिह्वायां पञ्च ५ सप्तदशमयाः १७ ।
कण्ठे त्रय. सर्वसरा एकषष्टिचतुःपरे ॥ ६५ ॥

तयोर्व्रणं न संरोहेन्मृदुत्वं न च गच्छति ॥ १० ॥
ओष्ठौ पर्यवदीर्येते पाल्येते चाभिघातत: ।
ग्रथितौ च तथाख्याता ओष्ठौ कंडूसमन्वितौ ॥ ११ ॥

---

## अथ चिकित्सामाह ।

मुखदन्तमूलदशनच्छदेषु रोगा: कफास्रभूयिष्ठा: ।
तस्मात्तेषामसकृद्रुधिरं विस्रावयेद् दुष्टम् ॥ १२ ॥
स्नेहास्तथोष्णान् परिषेकलेपान् घृतस्य पानं रसभोजनञ्च ।
अभ्यञ्जनस्वेदनलेपनानि चौष्ठे विदध्यात्पवनाभिभूते ॥ १३ ॥
चतुर्विधेन स्नेहेन मधूच्छिष्टयुतेन च ।
वातजेऽभ्यञ्जनं कुर्य्या न्नाडीस्वेदञ्च बुद्धिमान् ॥ १४ ॥
मस्तिष्के चैव नस्ये च तैलं वातहरं हितम् ।
स्वेदोऽभ्यङ्ग. स्नेहपानं रसायनमिहेष्यते ॥ १५ ॥
तैलं घृतं सर्जरसं ससिक्थं रास्नागुडं सैन्धवगैरिकञ्च ।
पक्कं समासं दशनच्छदानां त्वग्भेदहृद् प्रवदन्ति लेपम् ॥ १६ ॥
श्रीवेष्टकं सर्जरसं गुग्गुलं सुरदारु च ।
यष्टीमधुकचूर्णञ्च विदध्यात्प्रतिसारणम् ॥ १७ ॥
वेधं शिराणां वमनं विरेकं तिक्तस्य पानं रसभोजनञ्च ।
शीतान् प्रदेहान् परिषेचनञ्च पित्तोपसृष्टेष्वधरेषु कुर्य्यात् ॥१८॥
रक्तपित्तोपघातोत्थे जलौकाभिरुपाचरेत् ।
पित्तविद्रधिवच्चापि क्रियां कुर्य्यादशेषत. ॥ १९ ॥
शिरोविरेचनं धूमः स्वेद: कवल एव च ।
हृते रक्ते प्रयोक्तव्य ओष्ठपाके कफात्मके ॥ २० ॥
त्रिकटुस्सर्जिकाक्षार: क्षारश्च यवशूकजः ।

क्षौद्रयुक्तं विधातव्य मेतच्च प्रतिसारणम् ॥ २१ ॥
शूले विवर्णं सलसीकमोष्ठं सकंडूरं तीव्ररुजं प्रवातम् ।
लिखेच्च फेनद्विपलासबाले निष्पीड्य वातक्षतसारयेद्वा ॥ २२ ॥
जीवन्तिकल्कं पयसा समांशं तैलं विपक्वा मधुना विमिश्रम् ।
श्लोष्टास्ययोः सर्जरसाष्टभागं व्रणं निहन्यात् सकृदेव लेपात् ॥२३॥
मेदोजे स्वेदिते भिन्ने शोधिते ज्वलनो हितः ।
प्रियंगुत्रिफलालोध्रं सक्षौद्रं लेपने हितम् ॥ २४ ॥
हितञ्च त्रिफलाचूर्णं मधुयुक्तं प्रलेपनम् ।
एतद्दोषप्रकोपानां साध्यानां कर्म्मकीर्तितम् ॥ २५ ॥
छिन्नं क्षतोष्टमुल्लिख्य पीड़येत् सुसमाहितः ।
शतधौतघृताभ्यक्तं दद्यात्कवलिकां क्षते ॥ २६ ॥
छिन्नव्रणे च तत्सर्वं त्यक्त्वा व्रणवदाचरेत् ॥

इत्योष्ठगतदोषोपक्रमः ।

—०—

## अथ सामान्यमुखरोगलक्षणमाह ।

मुखामये मारुतजेतु शोष कार्कश्यरौक्ष्याणि चलारुजश्च ।
कृष्णारुणं निष्पतनं मशैत्यं प्रस्पन्दनं स्रंसनतोददाहाः ॥ २७ ॥
तृष्णाज्वरस्फोटकदाहपाका धूमायनं चास्य विदीर्णता च ।
पित्तात्समूर्च्छाविविधारुजश्च मुखं च पीतारुणवर्णयुक्तम् ॥ २८ ॥
कंडूगुरुत्वं सितपिच्छलत्वं स्वेदोऽरुचिर्जाड्यकफप्रसेकौ ।
उत्क्लेशनं दालनभावतंद्रारुजश्च मन्दाकफवक्त्ररोगे ॥ २८ ॥
द्विदोषलिङ्गानि भवन्ति यत्र द्विदोषजो वक्त्रगदः सवेद्यः ।
लिङ्गानि सर्वाणि मुखे च यस्य भवन्ति तस्यैव तु सन्निपातात् ॥३०

इति तन्त्रान्तरात्सामान्यलक्षणमुक्तम् ।

—०—

## अथ दन्तवेष्टरोगनिदानमाह ।

शोणितं दन्तवेष्टेभ्यो यस्याऽकस्मात्प्रवर्त्तते ।
दुर्गन्धीनि सकृष्णानि प्रक्लेदीनि मृदूनि च ॥ ३१ ॥
दन्तमांसानि शीर्य्यन्ते पचन्ति च परस्परम् ।
शीतादो नामसव्याधिः कफशोणितसम्भवम् ॥ ३२ ॥
दन्तयोस्त्रिषु वा यस्य जायते श्वयथुर्महान् ।
दन्तपुप्पुटकोनाम सव्याधिः कफरक्तजः ॥ ३३ ॥
स्रवन्ति पूयरुधिरं चलादन्ता भवन्ति च ।
दन्तवेष्टः सविज्ञेयो दुष्टशोणितसम्भवः ॥ ३४ ॥
श्वयथुर्दन्तमूलेषु रुजावान् कफरक्तजः ।
लालास्रावि सविज्ञेयः शौषिरोनामनामतः ॥ ३५ ॥
दन्ताश्चलन्ति वेष्टेऽभ्य स्तालु चाप्य वदीर्य्यते ।
यस्मिन्,ससर्वजो व्याधि र्महाशौषिरसंज्ञितः ॥ ३६ ॥
दन्तमांसानि शीर्य्यन्ते यस्मिन् ष्ठीवति चाप्यसृक् ।
पित्तासृक्कफजोव्याधि र्ज्ञेयः परिदरो हि सः ॥ ३७ ॥
वेष्टेषु दाहः पाकश्च ताभ्यां दन्ताश्चलन्ति च ।
अत्यर्दिताः प्रस्रवन्ति शोणितं मन्दवेदनाः ॥ ३८ ॥
आध्मायन्ते स्रुते रक्ते मुखं पूति च जायते ।
यस्मिन् सोपकुशोनाम पित्तरक्तकृतो गदः ॥ ३९ ॥
घृष्टेषु दन्तमांसेषु संरम्भो जायते महान् ।
भवन्ति यश्चलादन्ताः सवैदर्भोऽभिघातजः ॥ ४० ॥
मारुतेनाधिको दन्तो जायते तीव्रवेदनः ।
खल्लिवर्द्धनसंज्ञोऽसौ संजाते रुक् च शाम्यति ॥ ४१ ॥
शनैः शनैः प्रकुरुते वायुर्दन्तसमाश्रितः ।
करालान् विकटान् दन्तान् करालो न च सिध्यति ॥ ४२ ॥

हानव्ये पश्चिमे दन्ते महान्श्वयथो महारुजः ।
लालास्रावीकफक्षतो विज्ञेयः सोऽधिमांसकः ॥ ४३ ॥
दन्तमूलगतानाद्यः पञ्च ज्ञेयायथेरिताः ॥ ४४ ॥

—०—

## अथ दन्तरोगनिदानमाह ।

दीर्य्यमाणेष्विवरुजा भृशं दन्तेषु जायते ।
दालनोनाम सव्याधिः सदागतिनिमित्तजः ॥ ४५ ॥
कृष्णच्छिद्रश्चलस्रावी ससंरम्भो महारुजः ।
अनिमित्तरुजो वातात् सज्ञेयः कृमिदन्तकः ॥ ४६ ॥
वक्त्रं वक्रं भवेद्यस्य दन्तभङ्गश्च जायते ।
कफवातकृतो व्याधिः सभञ्जनकसंज्ञितः ॥ ४७ ॥
शीतरूक्षप्रवाताम्ल स्पर्शानामसहाद्विजाः ।
पित्तमारुतकोपेन दन्तहर्षः सनामतः ॥ ४८ ॥
दन्तमांसमलैः सास्रै र्वाह्यतः श्वयथुर्महान् ।
सदाहरुक्स्रवेद्भिन्नः पूयास्रं दन्तविद्रधिः ॥ ४९ ॥
मलोदन्तगतो यस्तु कफमारुतशोषितः ।
शर्करेव खरस्पर्शा साज्ञेयादन्तशर्करा ॥ ५० ॥
कपालेष्विवदीर्य्यत्सु दन्तानां सैव शर्करा ।
कपालिकेति साज्ञेया सदा दन्तविनाशिनी ॥ ५१ ॥
योऽसृङ्मिश्रेण पित्तेन दग्धोदन्तस्त्वशेषतः ।
श्यावतां नीलतां वापि गतः सश्यावदन्तकः ॥ ५२ ॥
हनुमोक्ष इति ज्ञेयो व्याधिरर्दितलक्षणः ॥ ५३ ॥

—०—

## अथ चिकित्सामाह।

सामान्येन निदानेन ये निर्दिष्टासुखामयाः।
तान्विदित्वा त्विदं कुर्य्या यथार्स्व भेषजक्रियाम् ॥ ५४ ॥
तेजोह्वामागधीमूलं समङ्गाकटुकाघनम्।
पाठाज्योतिष्मतीलोध्रं दार्व्वीकुष्टञ्च चूर्णयेत् ॥ ५५ ॥
दन्तानां घर्षणं कंडू रक्तस्रावरुजापहम् ॥ ५६ ॥
शीतादेह्वतरक्ते तु तोयं नागरसर्षपान्।
निष्काथ्यत्रिफलाञ्चापि कुर्य्यात्कंडूपधारणम्।
प्रियङ्गवश्च मुस्ता च त्रिफला च प्रलेपनम् ॥ ५७ ॥
काशीसलोध्रकृष्णा मनःशिला सप्रियंतु तेजोह्वा।
एषां चूर्णं मधुयुक् शीतादे पूतिमांसहरम् ॥ ५८ ॥
प्रपौण्डरीकमधुकं त्रिफलोत्पलसाधितम्।
तैलं घृतं वा वातघ्नं शीतादे संप्रशस्यते ॥ ५९ ॥
कुष्टं दार्व्वीलोध्रमब्दं समङ्गा पाठातिक्तातेजनीपीतिका च।
चूर्णं शस्तं घर्षणं तद्द्विजानां रक्तस्रावं हन्ति कंडूं रुजाञ्च ॥६०॥
पाठालोध्रसमङ्गा पर्पटगदतेजनीनिशायुगलैः।
कंडूं रुक्स्रावयुतं चूर्णीकृतैर्विघर्षयेच्छूलैः ॥ ६१ ॥
दन्तपुप्पुटके कार्य्यं तरुणे रक्तमोचणम्।
शिरोविरेकश्च हितो नस्यं स्निग्धञ्च भक्षणम् ॥ ६२ ॥
तिलभववीजपावक सितत्तर सिद्धार्थकल्पितः कवलः।
उष्णांबुसंप्रयुक्तो द्विजतलसंजातशोथहर ॥ ६३ ॥
विस्राविते दन्तवेष्टे व्रणस्तु प्रतिसारयेत्।
लोध्रं पतङ्गमधुक लाक्षाचूर्णैः मधूत्तरैः ॥ ६४ ॥
गण्डूषे क्षीरिणो योज्याः सक्षौद्रघृतशर्कराः ॥ ६५ ॥
चलदन्तस्थिरकरं कार्य्यं वकुलचर्वणम् ॥ ६६ ॥

भद्रमुस्ताभयाव्योष विड़ङ्गारिष्टपल्लवैः।
गोमूत्रपिष्टैर्वटिकां छायाशुष्कां प्रकल्पयेत् ॥ ६७ ॥
तां निधाय सुखे सुप्या चलदन्तातुरो नरः।
नातःपरतरं किञ्चि चलद्दन्तस्य भेषजम् ॥ ६८ ॥
इति भद्रमुस्तादिवटिका।

दशमूलीकषायेण तैलं वा घृतमेव च।
विपक्वं कवले शस्तं सक्षौद्रं दन्तधावने ॥ ६९ ॥
दन्तचाले दन्तहर्षे मुखरोगे च वातिके।
सुखोष्णमथवा शीतं तैलकल्कोदकं हितम् ॥ ७० ॥
शौषिरे क्षतरक्ते तु लोध्रमुस्तारसाञ्जनैः।
सक्षौद्रैः शस्यते लेपो गण्डूषे क्षीरिणो हिताः ॥ ७१ ॥
माक्षिकं पिप्पलीसर्पिः मिश्रितं धारयेन्मुखे।
दन्तशूलहरं प्रोक्तं प्रधानमिदमौषधम् ॥ ७२ ॥
हिंगुकाट्फलकाशीस स्वर्जिकाकुष्ठवल्कजम्।
वदक्लं जयत्याशु मक्षास्थं दशने धृतम् ॥ ७३ ॥
शारिवोत्पलयष्ट्याह्व शारिवागुरुचन्दनैः।
क्षीरे दशगुणे सिद्धं सर्पिर्नस्ये च पूजितम् ॥ ७४ ॥
क्रियां परिदरे कुर्य्या च्छीतादोक्तां विचक्षणः।
संशोध्योभयतः कार्यं शिरोवोपकुशे तथा ॥ ७५ ॥
काकोदुम्बरिकापत्रै र्स्रवं विस्रावयेद्भिषक्।
लवणैः क्षौद्रयुक्तैश्च सव्योषैः प्रतिसारयेत् ॥ ७६ ॥
पिप्पलीसर्षपाः श्वेता नागरं नैचुलं फलम्।
सुखोदकेन संसृष्टं कवलश्चापि धारयेत् ॥ ७७ ॥
घृतं मधुरकैः सिद्धं हितं कवलनस्ययोः।
क्षौद्रद्वितीयाः पिप्पल्याः कवलश्चात्र कीर्त्तितः ॥ ७८ ॥

पटोलनिम्बत्रिफला कषायश्चात्र धावने।
शिरोविरेकश्च हितो धूमो वैरेचनश्चयः॥ ७९॥
नाडीव्रणहरं कर्म दन्तनाडीषु कारयेत्।
यद्दन्तमध्ये जायेत नाडी त न्दन्तमुद्धरेत्॥ ८०॥
छित्वामांसानि शस्त्रेण यदि नोपरिजो भवेत्।
शोधयित्वा दहेच्चापि क्षारेण ज्वलनेन वा॥ ८१॥
भिन्नत्युपेक्षिते दन्ते हनुकास्थिगतिर्ध्रुवम्।
समूलं दशनं तस्मा दुद्धरेद्भग्नमस्थि च॥ ८२॥
उद्धृते तूत्तरे दन्ते शोणितं संप्रसिच्यते।
रक्तातियोगात् पूर्वोक्ता घोरारोगा भवन्ति च॥ ८३॥
काणः सञ्जायते जन्तु रर्दितं चास्य जायते।
चलमप्युत्तरं दन्त मतो नापहरेद्भिषक्॥ ८४॥
धावने जातिमदन स्वादुकण्टकखादिरम्॥ ८५॥

—०—

कषायं जातिमदनकण्टकीस्वादुकण्टकैः।
लोध्रखदिरमञ्जिष्टायष्ट्याह्वैश्चापि तत्कृतम्।
तैलं संशोधनं तद्धि हन्याद्दन्तगतां गतिम्॥ ८६॥
कषाय परतः कृत्वा पिष्टा लोध्रादिकल्कितम्।
कण्टकीमदनो योज्यः स्वादुकण्टो विकङ्कतः॥ ८७॥

—०—

एभिः कृतं कषायमपि नाडीधावनार्थं योज्यम्।

इति जात्यादितैलम्। इति दन्तवेष्टोपक्रमः।

—०—

## अथ दन्तोपक्रममाह ।

सुखोष्णाः स्नेहकवलाः सर्पिषस्त्रिवृतस्य च ।
निर्यूहश्चानिलघ्नानां दन्तहर्षप्रमर्दनाः ॥ ८८ ॥
स्नैहिकश्च हितो धूमो नस्यं स्नैहिकमेव च ।
रसोरसयवाग्वश्च चीरं सन्तानिका घृतम् ॥
शिरोबस्ति हितश्चापि क्रमो यश्चानिलापहः ॥ ८९ ॥
दन्तानां तोदहर्षौ तु जायेते वाततस्तयोः ।
उष्णतैलाज्यवातघ्न निर्यूहाः कवलग्रहाः ॥ ९० ॥
अहिंसन्दन्तमूलानि शर्करामुद्धरेद्भिषक् ।
लाचाचूर्णैर्मधुयुतैस्ततस्तां प्रतिसारयेत् ॥ ९१ ॥
दन्तहर्षक्रियां चापि कुर्य्यान्निरवशेषतः ।
कपालिका कृच्छ्रतमा तत्राप्येषा क्रिया हिताः ॥ ९२ ॥
कृमिदन्तकमादौ तु सकृमिं गुडपूरणम् ।
दहेच्छलाकयाचोरःमार्कवं कृमिनाशनम् ॥ ९३ ॥
जयेद्विस्रावणैः स्विन्न मचलं कृमिदन्तकम् ।
तथावपीडैर्वातघ्नैः स्नेहगंडूषधारणैः ॥ ९४ ॥
भद्रदार्व्वादिवर्षाभू लेपैः स्निग्धैश्च भोजनैः ।
कृमिदन्तापहं कोष्णं हिंगुदन्तान्तरे स्थितम् ॥ ९५ ॥
बृहती भूमिकादम्बी पञ्चांगुलकण्टकारिकाक्वाथः ।
गंडूषस्तैलयुतः कृमिदन्तकवेदनाशमनः ॥ ९६ ॥
नीलीवायसजङ्घास्नुक् दुग्धीनान्तु मूलमेकैकम् ।
सञ्चर्व्यदशनविधृतं दशनकृमिपातनं प्राहुः ॥ ९७ ॥
बीजपूरकमूलस्य पाकुचीनां तथैव च ।
भागाभ्यां तु समं कृत्वा पिष्ट्वावर्त्तिन्तु कारयेत् ॥ ९८ ॥

एपारदस्थवर्त्तिस्तु दन्तैर्दन्तैर्निपीडयेत् ।
सद्योऽवस्थितमात्रा तु क्रमिदन्तरुजापहा ॥ ९९ ॥
दन्तीसुवर्णदुग्धा कासीसविडङ्गवत्सकफलानाम् ।
चूर्णैरर्कस्नुह्योः पयोभिर्वा पूरणं श्रेष्ठम् ॥ १०० ॥
चलमुद्धृत्य च स्थानं विदहेच्छुषिरस्य च ।
ततो विदारीयष्ट्याह्व शृङ्गाटककसेरुभिः ॥
तैल दशगुणे क्षीरे सिद्धं नस्ये हितं भवेत् ॥ १०१ ॥

इति विदार्यादितैलम् ।

हनुमोचे समुद्दिष्टां कुर्य्यादर्दितवत् क्रियाम् ॥ १०२ ॥
बकुलस्य फल लोध्रं वज्रवल्लीकुरण्टकम् ।
चतुरगुलबब्बोल वाजिकर्णारिमाशनम् ॥ १०३ ॥
तेषां तु क्वाथकल्काभ्यां तैलं पक्वं मुखे धृतम् ।
स्थैर्यं करोति दन्तानां चलतां पवनेन च ॥ १०४ ॥

इति बकुलाद्यं तैलम् ।

तुलां धृतां नीलसहाचरस्य द्रोणेऽम्भसः सम्रपयेद्यथावत् ।
पूते चतुर्भागरसे तु तैलं पचेच्छनैरर्द्धपलप्रयुक्तैः ॥ १०५ ॥
कल्कैरनन्ता खदिरारिमेदा जंब्वाम्रयष्टीमधुकोत्पलानाम् ।
तत्तैलमास्येव धृत मुखेन स्थैर्यं द्विजाना विदधाति सद्यः ॥१०६॥

इति सहचराद्यं तैलम् ।

उभे हरिद्रे पिप्पल्यः सैन्धवं देवदारु च ।
विडङ्ग चित्रकं विल्वं रोहितस्य च पल्लवाः ॥ १०७ ॥
गन्धं सौवर्चलं द्राक्षा मञ्जिष्टा मधुकं बला ।
वेतसस्य च मूलानि पद्मकोशीरचन्दनैः ॥ १०८ ॥
विल्वप्रमाणैः कल्कैस्तु तैलप्रस्थं विपाचयेत् ।

द्विगुणं च पयो दद्यात् तत्सिद्धं नस्यतां नयेत् ॥ १०८ ॥
श्लेष्मजं सन्निपातोत्थं शिरोरोगं नियच्छति ।
उपजिह्वां च मालाञ्च कण्ठशालूकमर्बुदम् ॥ ११० ॥
विदारिकां मांसघाकं मुखशोकं गलग्रहम् ।
दन्तचालं हनुस्तम्भं तैलमेतन्नियच्छति ॥ १११ ॥

इति हरिद्राद्यं तैलम् ।

तैलं लाक्षारसं क्षीरं पृथक् प्रस्थं समं पचेत् ।
चतुर्गुणमितैः क्वाथै द्रव्यैश्च पलसंमितैः ॥ ११२ ॥
लोध्रकट्फलमञ्जिष्टा पद्मकेशरपद्मकैः ।
चन्दनोत्पलयष्ट्याह्वैः तैलं गंडूपधारणम् ॥ ११३ ॥
दालनं दन्तचालञ्च दन्तमोचं कपालिकाम् ।
शीतादं पूतिवक्त्राञ्च ह्यरुचिं विरसास्यताम् ॥ ११४ ॥
हन्यादाशु गदानेतान् कुर्य्याद्दन्तानपि स्थिरान् ।
लाक्षादिकमिदं तैलं दन्तरोगेषु पूजितम् ॥ ११५ ॥

इति लाक्षाद्यं तैलम् ।

इरिमेदत्वक् पलशत मभिनवमापोथ्य खण्डशः कृत्वा ।
तोयाढकैश्चतुर्भिः निःक्वाथ्यचतुर्थशेषेण ॥ ११६ ॥
क्वाथेन तेन मतिमां स्तैलस्यार्धाढकं पचेच्छनकैः ।
कल्कैरचसमांसै मंञ्जिष्टा लोध्रमधुकानाम् ॥ ११७ ॥
इरिमेदखदिरकट्फल लाक्षान्यग्रोधमुस्तसूक्ष्मैला ।
कर्पूरागुरुपद्मकलवङ्गकक्कोलजातीनाम् ॥ ११८ ॥
फलपतङ्गगैरिकवरांगगजकुसुमधातकीनाञ्च ।
सिद्धं भिषग्विदध्यादिदं मुखोत्थेषु रोगेषु ॥ ११९ ॥
परिशीर्णदन्तविद्रधि शौषिरशीतादिदन्तहर्षेषु ।
कृमिदन्तदरणचलित प्रदुष्टमांसास्यशीर्णेषु ॥ १२० ॥

मुखदौर्गन्ध्येषु च कार्यं प्रागुक्तेष्वामयेषु तैलमिदम् ।

इतीरिमेदाद्यं तैलम् ।

खदिरस्य तुलां सम्यग् जलद्रोणे विपाचयेत् ।
शेषेऽष्टभागे तत्रैव प्रतिवाप प्रदापयेत् ॥ १२१ ॥
जातिकर्पूरपूगानि कङ्कोलकफलानि च ।
इत्येषा गुटिका कार्य्या मुखसौभाग्यवर्धिनी ॥
दन्तौष्ठगलरोगेषु जिह्वा ताल्वामयेषु च ॥ १२२ ॥

इति स्वल्पखदिरवटिका ।

गायत्रिसारतुलयारिमवल्कलानां
सार्द्धं तुलायुगलमम्बुघटैश्चतुर्भिः ।
निःक्वाथ्यपादमवशेष सुवस्त्रपूतं
भूयः पचेदथ शनैर्मृदुपावकेन ॥ १२३ ॥
तस्मिन् घनत्वमुपगच्छति चूर्णमेषां
श्लक्ष्णं क्षिपेच्च कवलग्रहभागिकानाम् ।
एलामृणालसितचन्दनचन्दनानां
श्यामातमालविकसानललोहयष्टी ॥ १२४ ॥
लज्जाफलत्रयरसाञ्जनधातकीनां
श्रीपुष्पगैरिककटाह्वयकट्फलानाम् ।
पद्माह्वलोध्रवटरोहयवासकानां
मांसीनिशासुरभिवल्कलसंयुतानाम् ॥ १२५ ॥
कक्कोलजातिफलकोशलवङ्गकानां
चूर्णीकृतानि विदधीतपलांशकानाम् ।
शीतेऽवतार्य घनसारचतुष्पलञ्च
क्षिप्त्वा कलायसदृशीं गुटिकां प्रकुर्यात् ॥ १२६ ॥

गुष्कामुखे विनिहिता विनिवारयन्ति
रोगान् गलोष्टरसनाधरतालुजातान् ।
कुर्य्यान्मुखे सुरभितां पटुतां रुचिञ्च
स्थैर्य्यान्वितञ्च दशनं रसनालघुत्वम् ॥ १२७ ॥

इति महाखदिरवटिका ।

फलान्यम्लानि शीताम्बु रूक्षान्नं दन्तधावनम् ।
तथातिकठिनान् भक्ष्यान् दन्तरोगी विवर्जयेत् ॥ १२८ ॥

इति दन्तरोगोपक्रमः ।

—०—

## अथ जिह्वारोगनिदानमाह ।

जिह्वाऽनिलेन स्फुटिता प्रसुप्ता भवेच्च शाकच्छदनप्रकाशा ।
पित्तेन दह्यत्युपचीयते च दीर्घैः सरक्तैरपि कण्टकैश्च ॥ १२८ ॥
कफेन गुर्वी बहुला चित्ता च
मांसोच्छ्रयैः शाल्मलिकण्टकाभैः ॥ १३० ॥
जिह्वातले यः श्वयथुः प्रगाढ़ः सोऽलाससंज्ञः कफरक्तमूर्त्तिः ।
जिह्वां स तु स्तंभयति प्रवृद्धो मूले च जिह्वा भृशमेति पाकम् ॥१३१
जिह्वाग्ररूपः श्वयथुर्हि जिह्वा मुन्नम्यजातः कफरक्तमूलः ।
लालाकरः कंडूयुतः सचोषः सातूपजिह्वा कथिता भिषग्भिः ॥१३२॥

—०—

## अथ चिकित्सामाह ।

जिह्वागतविकाराणां शस्तं शोणितमोक्षणम् ।
गुडूचीपिप्पलीनिम्ब क्वथनः कटुभिर्युतः ॥ १३३ ॥

पटोलकटुकव्योष पाठासैन्धवगर्भिभिः।
चूर्णैर्मधुयुतैर्लेपः कवलो मधुतैलिकः ॥ १३४ ॥
विडङ्गपिप्पलीभ्यां तु धावनं सरसाञ्जनम् ॥ १३५ ॥
ओष्टप्रकोपेऽनिलजे यदुक्तं प्राक् चिकित्सितम्।
कण्टकेष्वनिलोत्थेषु तत्कार्यं भिषजा खलु ॥ १३६ ॥
पित्तजेषु विघृष्टेषु निःस्रुते दुष्टशोणिते।
प्रतिसारणगंडूषं नस्यञ्च मधुरं हितम् ॥ १३७ ॥
कण्टकेषु कफोत्थेषु लिखितेष्वसृजः चये।
पिप्पल्यादिर्मधुयुतः कार्य्यस्तु प्रतिसारणे ॥ १३८ ॥
गृह्णीयात् कवलांश्चापि गौरसर्षपसैन्धवैः।
पटोलनिम्बवार्त्ताकु चारयूषैश्च भोजयेत् ॥ १३९ ॥
उपजिह्वां तु संलिख्य चारेण प्रतिसारयेत्।
शिरोविरेकगंडूष धूमैश्चैनामुपाचरेत् ॥ १४० ॥
व्योषचाराभयावह्नि चूर्णमेतत्प्रघर्षणम्।
उपजिह्वा प्रशान्त्यर्थं मेभिस्तैलं विपाचयेत् ॥ १४१ ॥
वासाक्वाथो माक्षिक सैन्धवश्टङ्गधूममालतीयुक्तः।
कुलित्थकेन निहन्यादुपजिह्विकां कण्ठघर्षणतः ॥ १४२ ॥

इति जिह्वारोगः।

—०—

## अथ तालुरोगनिदानमाह।

श्लेष्मासृग्भ्यां तालुमूलात् प्रवृद्धो दीर्घः शोथो ध्मातवस्तिप्रकाशः।
तृष्णाकासश्वासकृत्तं वदन्ति व्याधिं वैद्याः कण्ठशुण्डीति नाम्ना १४३॥
शोथः स्थूलस्तोददाह प्रपाकी
प्रागुक्ताभ्यां तुण्डिकेरी मता तु।

शोथो मन्दो लोहितः शोणितोत्थो
ज्ञेयोऽध्रुषः सज्वरस्तीव्ररुक् च ॥ १४४ ॥
कूर्मोत्सन्नो वेदनो शीघ्र जन्मा रोगो ज्ञेयः कच्छपः श्लेष्मणा वा।
पद्माकारं तालुमध्ये तु शोथं विद्याद्रक्तादर्बुदं प्रोक्तलिङ्गम् ॥१४५॥
दुष्टं मांस नीरुजं तालुमध्ये श्लेष्मावद्धं मांससंघातमाहुः।
नीरुक् स्थायीकोलमात्रः कफेन मेदोयुक्तः पुप्पुटस्तालुदेशे ॥१४६॥
शोथोऽत्यर्थं दीर्य्यते चापि तालु श्वासश्चोग्रस्तालुशोषोऽनिलाच्च।
पित्तं कुर्य्यात् पाकमत्यर्थघोरं तालुन्येवं तालुपाकं वदन्ति ॥१४७॥

—०—

## अथ चिकित्सामाह।

युञ्ज्यात् कफहरं गुण्ड्या रसं गंडूषधारणे ॥ १४८ ॥
कुष्टोषणा वचासिन्धु कणापाठाप्लवैः सह।
सक्षौद्रैर्भिषजा कार्यं गलशुण्डीप्रघर्षणम् ॥ १४९ ॥
अङ्गुष्ठांगुलिसन्दंशे नाकृष्यगलशुण्डिकाम्।
छेदयेन्मण्डलाग्रेण जिह्वोपरि तु संस्थिताम् ॥ १५० ॥
नोत्कृष्टचैव हीनश्च त्रिभागं छेदयेद्भिषक् ॥ १५१ ॥
अत्यादानात् स्रवेद्रक्तं तन्निमित्तं म्रियेत च।
हीनच्छेदाद्भवेच्छोथो लालास्रावो भ्रमस्तथा ॥ १५२ ॥
तस्माद्वैद्यः प्रयत्नेन दृष्टकर्मा विशारदः।
गलशुण्डीं छेदयित्वा कुर्य्यात्प्राप्तमिमं क्रमम् ॥ १५३ ॥
नातिमूलेन चाप्यग्रे सम्यक् छेदं समाचरेत्।
छित्वा तां व्योमसिन्धुग्रामचौद्रैः प्रतिसारयेत् ॥ १५४ ॥
गलशुण्डीमसं याति वचोचौरेण लेपनात् ॥ १५५ ॥
वचामतिविषां पाठां रास्नां कटुकरोहिणीम्।

निःक्काथ्य पिचुमन्दञ्च कवलं तत्र योजयेत् ॥ १५६ ॥
क्षारसिद्धेषु मुद्गेषु यूषाश्चाप्यशने हिताः ॥ १५७ ॥
इङ्गुदीकिण्वहीदन्ती सरलं देवदारु च।
पञ्चाङ्गां कारयेद्वर्त्तिं मेतां गन्धोत्तरां भिषक् ॥
तस्या धूमं पिबेज्जन्तु र्हिरङ्गः कफनाशनम् ॥ १५८ ॥
तुण्डिकेर्य्यध्रुषे कूर्मे संघाते तालुपुप्पुटे ।
एष एव विधिः कार्यो विशेषः शस्त्रकर्म्मणि ॥ १५९ ॥
तालुपाके तु कर्त्तव्य विधानं पित्तनाशनम् ।
स्नेहस्वेदौ तालुशोषे विधिश्चानिलनाशनः ॥ १६० ॥

इति तालुरोगोपक्रमः।

—०—

## अथ गलरोगनिदानमाह ।

गलेऽनिलः पित्तकफौ च मूर्च्छितौ
प्रदूष्यमांसं च तथैव शोणितम् ।
गलोपसंरोधकरैस्तथांकुरै-
र्निहन्त्यसून् व्याधिरयं हि रोहिणी ॥ १६१ ॥

जिह्वासमन्ताद्भृशवेदनास्तु मांसांकुराः कण्ठनिरोधनाः स्युः ।
सारोहिणीवातकृता प्रदिष्टा वातात्मकोपद्रवगाढयुक्ता ॥ १६२ ॥
क्षिप्रोद्गमाक्षिप्रविदाहपाका तीव्रज्वरापित्तनिमित्तजातु ।
स्रोतोनिरोधन्यचलोऽश्रता च स्थिरांकुराया कफसम्भवा सा ॥१६३॥
गम्भीरपाकिन्यनिवार्यवीर्या त्रिदोषलिङ्गाचितयोत्थिता तु ॥१६४॥
स्फोटैश्चितापित्तसमानलिङ्गा साध्या प्रदिष्टारुधिरात्मका तु ॥१६५॥

सद्यस्त्रिदोषजा हन्ति त्र्यहाच्छ्लेष्मसमुद्भवा ।
पञ्चाहात्पित्तसंभूता सप्ताहात्पवनान्विता ॥ १६६ ॥

कोलास्थिमात्रः कफसम्भवो यो ग्रन्थिर्गले कण्टकशूकभूतः ।
खरः स्थिरः शस्त्रनिपातसाध्यस्तं कण्ठशालूकमिति ब्रुवन्ति ॥१६७॥
जिह्वाग्ररूपः श्वयथुः कफाच्च जिह्वोपरिष्टादपि रक्तमिश्रात् ।
ज्ञेयोऽधिजिह्वः खलु रोग एष विवर्जयेदागतपाकमेनम् ॥ १६८॥
बलास एवायतमुन्नतञ्च ग्रन्थिं करोत्यन्नगतिं निवार्य्य ।
तं सर्व्वथैवाऽप्रतिवार्य्यवीर्य्यं विवर्जनीयं बलयं वदन्ति ॥ १६९ ॥
गलोपरोधं कुरुतः प्रवृद्धौ श्लेष्मानिलौ श्वासरुजोपपन्नम् ।
मर्म्मच्छिदं दुस्तरमेतदाहुर्बलाससंज्ञं निपुणा विकारम् ॥ १७० ॥
वृत्तोन्नतोऽन्तः श्वयथुः सदाहः सकंडूरोऽपाक्यऽमृदुर्गुरुश्च ।
नाम्नैकवृन्दः परिकीर्त्तितोऽसौ व्याधिर्बलासक्षतजप्रसूतः ॥ १७१ ॥
समुन्नतं वृत्तममन्ददाहं तीव्रज्वरं वृन्दमुदाहरन्ति ।
तच्चापि पित्तक्षतजप्रकोपात् ज्ञेयं सतोदं पवनात्मकन्तु ॥ १७२ ॥
वर्त्तिर्घनाकण्ठनिरोधिनी तु चितातिमात्रं पिशितप्ररोहैः ।
अनेकरुक् प्राणहरी त्रिदोषात् ज्ञेया शतघ्नी तु शतघ्निरूपा ॥१७३॥
ग्रन्थिर्गलेत्वामलकास्थिमात्रः स्थिरोऽल्परुक् यः कफरक्तमूर्त्तिः ।
सलच्यते सक्तमिवाशनञ्च सशस्त्रसाध्यस्तु गिलायुसंज्ञः ॥ १७४ ॥
सर्वं गलं प्राप्यसमुत्थितो यः शोथो रुजः संति च यत्र सर्वाः ।
ससर्वदोषो गलविद्रधिस्तु तस्यैव तुल्यः खलु सर्वजस्य ॥ १७५ ॥
शोथो महानन्नजलावरोधी तीव्रज्वरो वायुगतेर्निहन्ता ।
कफेन जातो रुधिरान्वितेन गले गलौघः परिकीर्त्तितोऽसौ ॥१७६॥

यस्ताम्यमानः श्वसिति प्रसक्तं
भिन्नस्वरः शुष्कविमुक्तकण्ठः ।
कफोपदिग्धेष्वनिलायनेषु
ज्ञेयः सतोदः श्वमनात् स्वरघ्नः ॥ १७७ ॥

प्रतानवान्यः श्वयथुः सकष्टो गलोपरोधं कुरुते क्रमेण ।

समांसतानः कथितोऽवलम्बो प्राणप्रणुत्सर्वकृतो विकारः॥ १७८॥
सदाहतोदं श्वयथुं सुताम्रमन्तर्गले पूतिविशीर्णमांसम्।
पित्तेन विद्याद्वदने विदारीं पार्श्वविशेषात्स तु येन शेते॥ १७९॥

## अथ चिकित्सामाह।

साध्यानां रोहिणीनाञ्च हितं शोणितमोचणम्।
छर्दनं धूमपानञ्च गंडूषो नस्यकर्म च॥ १८०॥
तथान्तर्वाह्यतः स्विन्नां वातरोहिणिकां लिपेत्।
अंगुलीशस्त्रकेनाशु स्वट्टचुक्रेण खेनवा॥ १८१॥
वातजो तु हृते रक्ते लवणैः प्रतिसारयेत्।
सुखोष्णान् स्नेहकवलान् धारयेच्चाप्यभीक्ष्णशः॥ १८२॥
विश्राव्यपित्तसंभूतां सिताक्षौद्रप्रियंगुभिः।
घर्षयेत् क्षौद्रपतङ्गैः शर्कराभिस्तथायुतैः॥ १८३॥
द्राक्षापरुपकक्वाथो हितश्च कावलग्रहे।
उपाचरेदेवमितां सुवैद्यः पित्तसंभवाम्॥ १८४॥
आगारधूमकटुकैः कफजां प्रतिसारयेत्॥ १८५॥
श्वेताविडङ्गदन्तीभिस्तैलं सिद्धं ससैन्धवम्।
नस्यकर्मणि दातव्यं कवलञ्च कफोच्छ्रये॥ १८६॥
रोहिणीकण्ठशालूक तुण्डिकेरी गलायुपु।
विद्रधौ वृन्दके श्रेष्टं रोचना तार्क्ष्यगैरिकाः॥
सलोध्रमधुपतङ्गक्षौद्रै गण्डूषधारणम्॥ १८७॥
विस्राव्यकण्ठशालूकं साधयेत्तुण्डिकेरिवत्।
एककालं यवान्नञ्च भुञ्जीत स्निग्धमल्पशः॥ १८८॥
उपजिह्वकवच्चापि साधयेदधिजिह्विकाम्।

उद्वाम्यजिह्वामाक्रम्य वडिशेनाधिजिह्विकाम् ॥
छेदयेन्मण्डलाग्रेण तीक्ष्णोष्णैर्घर्षणादिभिः ॥ १८८ ॥
एकवृन्दं तु विस्राव्य विधिं शोधनमाचरेत् ।
शिलायुश्चापि यो व्याधि स्तं च शस्त्रेण साधयेत् ॥ १९० ॥
अमर्माश्रयन्तु सम्पक्वं छेदयेद्गलविद्रधिम् ।
कण्ठरोगेष्वसृङ्मोक्षस्तीक्ष्णै र्नस्यादिकर्म च ॥ १९१ ॥
क्वाथं पिबेच्च दार्वी त्वक् निम्बतार्क्ष्यकलिङ्गजम् ।
हरीतकीकषायो वा पिबेतो माक्षिकसंयुतः ॥ १९२ ॥
कटुकातिविषादारु पाठामुस्तकलिङ्गजः ।
गोमूत्रक्वथितः पीतः कण्ठरोगविनाशनः ॥ १९३ ॥
मृद्वीकाकटुकाव्योषं दार्वी त्वक् त्रिफलाघनम् ।
पाठारसाञ्जनमूर्वा तेजोह्वेति सुचूर्णितम् ॥ १९४ ॥
क्षौद्रयुक्तं विधातव्यं गलरोगे भिषक्तमम् ।
योगाश्चैते त्रयः प्रोक्ता वातरक्तकफापहाः ॥ १९५ ॥
सितातमालपत्राभ्यां मरिचं द्विगुणं न्यसेत् ।
तेन सर्पिर्विपक्वन्तु नस्याद्धन्याद्गलग्रहान् ॥ १९६ ॥

इति सितादिघृतनस्यम् ।

गृहधूमो यवक्षारः पाठाव्योषं रसाञ्जनम् ।
तेजोह्वात्रिफलालोध्रं चित्रकश्चेति चूर्णितम् ॥ १९७ ॥
सक्षौद्रं धारयेदेतद् गलरोगविनाशनम् ।
कालकं नाम तच्चूर्णं दन्तास्यगलरोगनुत् ॥ १९८ ॥

इति कालकं चूर्णम् ।

मनःशिलायवक्षारो हरितालं ससैन्धवम् ।
दार्वीत्वक् चेति तच्चूर्णं माक्षिकेण समायुतम् ॥ १९९ ॥

मूर्च्छितं घृतमण्डेन कण्ठरोगेषु धारयेत्।
मुखरोगेषु च श्रेष्ठं पीतकं नाम कीर्त्तिम् ॥ २०० ॥

इति पीतकं नामचूर्णम्।

यवाग्रजं तेजवतीं सपाठां रसाञ्जनं दारुनिशाञ्च कृष्णाम्।
क्षौद्रे ण कुर्य्याद्गुटिकां मुखेन तां धारयेत्सर्वगलामयेषु ॥२०१॥

इति यवक्षारादिगुटिः।

पञ्चकोलकतालीश पत्रैलामरिचत्वचः।
पलाशमुष्ककक्षार यवक्षाराश्च चूर्णिताः ॥ २०२ ॥
गुड़े पुराणे द्विगुणे क्वथिते गुटिकाः कृताः।
कर्कन्धुमात्राः सप्ताहं स्थिता मुष्ककभस्मनि ॥ २०३ ॥
कण्ठरोगेषु सर्वेषु धार्य्यास्युरमृतोपमाः।

इति क्षारगुटिका। इति कण्ठरोगः।

—o—

## अथ सर्वमुखगतरोगनिदानमाह।

स्फोटैः सतोदैर्वदनं समन्ताद्यस्याऽऽचितं सर्वसरः सवातात्।
रक्तैः सदाहैस्तनुभिः सपीतैर्यस्याचितञ्चापि सपित्तकोपात् ॥२०५॥
अवेदनैः कण्डुयुतैः सवर्णैर्यस्याचितञ्चापि सवै कफेन ॥ २०६ ॥

—o—

## अथ चिकित्सामाह।

वातात्सर्वसरं चूर्णैं लवणैः प्रतिसारयेत्।
तैलं वातहरैः सिद्धं हितं कवलनस्ययोः ॥ २०७ ॥
ततोऽम्ले स्नैहिकं धूममिमं दद्याद्विचक्षणः।
शालराजादनैरण्ड सारैगुद्गिमधूकजाः ॥ २०८ ॥

मञ्जानी गुग्गुलुध्याम मांसीकालानुशारिवा।
यौसर्जरसशैलेय मधूच्छिष्टानि वा हरेत् ॥ २०९ ॥
तत्सर्वं सुक्षतं चूर्णं स्नेहेनालोड्ययुक्तितः।
टुण्टूकवल्कं सक्षौद्रं मतिमांस्तेन लेपयेत् ॥ २१० ॥
एष सर्वसरे धूमः प्रशस्तः स्नैहिको मतः।
कफघ्नो मारुतघ्नश्च मुखरोगविनाशनः ॥ २११ ॥

इति स्नैहिको धूमः।

पित्तात्मके सर्वसरे शुद्धकायस्य देहिनः।
सर्वपित्तहरः कार्यो विधिर्मधुरशीतलः ॥ २१२ ॥
प्रतिसारणगडूष धूमसंशोधनानि च।
कफात्मके सर्वसरे क्रमं कुर्यात् कफापहम् ॥ २१३ ॥

इति सर्वसरोपक्रमः।

मुखपाके शिरावेधः शिरः कायविरेचनम्।
मधुमूत्रघृतक्षीरैः शीतैश्च कवलग्रहः ॥ २१४ ॥
जातीपत्रामृता द्राक्षा यासदार्वीफलत्रिकैः।
क्वाथः क्षौद्रयुतः शीतो गंडूषो मुखपाकनुत् ॥ २१५ ॥
कार्यश्च बहुधा नित्य जातीपत्रस्य चर्वणम्।
कृष्णजीरककुष्टेन्द्र यवचर्वणतस्त्र्यहात्।
मुखपाकव्रणक्लेद दौर्गन्ध्यमुपशाम्यति ॥ २१६ ॥
पटोलनिम्बजम्ब्वाम्र मालतीनवपल्लवैः।
पञ्चपल्लवजः श्रेष्टः कषायो मुखधावने ॥ २१७ ॥
स्वरसः कथितो दार्व्या घनीभूतो रसक्रिया।
सक्षौद्रा मुखरोगासृग्दोषनाड़ीव्रणापहा ॥ २१८ ॥
माक्षिकदोगौरपटोलमुस्ताहरीतकी तिक्तकरोहिणीभिः।
यष्ट्याह्वराजद्रुमचन्दनैश्च क्वाथं पिबेत्पाकहरं मुखस्य ॥२१९॥

पटोलशुण्ठीत्रिफलाविशाला
त्रायन्तितिक्तादिनिशामृतानाम् ।
पीतः कषायो मधुना निहन्ति
मुखे स्थितश्चास्यगदानशेषान् ॥ २२० ॥
तिलानीलोत्पलं सर्पिः शर्कराचीरमेव च ।
क्षौद्राढ्यो दग्धवक्त्रस्य गंडूषो मुखपाकनुत् ॥ २२१ ॥
आस्वादिता च सकृदपि मुखगन्धं सकलमपनयति ।
त्वग्बीजपूरफलजा पवनमुपक्वं च नाशयति ॥ २२२ ॥
जातीफलजातिपत्री फणिज्झवाह्लीककुष्टसखरिता ।
अपहरतिपूतिगन्धं मुखविवरे संस्थिता गुटिकाः ॥ २२३ ॥
कुष्टैलवालुकैला मुस्ताधान्यकयष्टीमधुकबलाः ।
हरति मुखपूतिगन्धं रसोनमदिरादिगन्धञ्च ॥ २२४ ॥
हरिद्रानिम्बपत्राणि मधुकं नीलमुत्पलम् ।
तैलमेभिः विपक्तव्यं मुखपाकहरं परम् ॥ २२५ ॥

—०—

यष्टीमधुपलमेकं विंशन्नीलोत्पलस्य तैलस्य ।
प्रस्थञ्च द्विगुणं पयो विधिना पक्वन्तु नस्येन ॥ २२६ ॥
निशिवदनस्य स्रावं चपयति गात्रस्य दोषसंघातम् ।
वपुः स्वर्णत्वमवश्यं क्रमशोऽभ्यङ्गेन जन्तूनाम् ॥ २२७ ॥
इति यष्टीतैलम् ।

—०—

## अथ मुखरोगेष्वसाध्यनाह ।

ओष्टप्रकोपे वर्ज्याः स्युः मांसरक्तत्रिदोषजाः ।
दन्तमुलेषु वर्ज्या च त्रिलिङ्गगतिशौषिरौ ॥ २२८ ॥

दन्तेषु च न सिध्यन्ति श्यावदानलभञ्जनाः ।
जिह्वागतेष्वलासस्तु तालुजेष्वर्बुदं तथा ॥ २२८ ॥
स्वरघ्नो वलयो वृन्दो बलासः सविदारिकः ।
गलौघो मांसतानश्च शतघ्नोरोहिणीगले ॥ ॥ २३० ॥
असाध्याः कीर्त्तिता ह्येते रोगानवदशैव तु ।
तेषु चापि क्रियां वैद्यः प्रत्याख्याय समाचरेत् ॥ २३१ ॥

## इति वङ्गसेने मुखरोगनिदानचिकित्साधिकारः समाप्तः ॥ ६४ ॥

—०—

## अथ कर्णरोगनिदानमाह ।

समीरणश्रोत्रगतोऽन्यथाचरन् समन्ततः शूलमतीवकर्णयोः ।
करोति दोषैश्च यथा स्वमावृतः सकर्णशूलः कथितो दुराचरः ॥१॥
कर्णस्रोतः स्थिते वाते शृणोति विविधान् स्वरान् ।
भेरीमृदङ्गशङ्खानां कर्णनादः स उच्यते ॥ २ ॥
यदा शब्दवहं वायुः स्रोत आवृत्य तिष्ठति ।
शुद्धः श्लेष्मान्वितो वापि बाधिर्य्यन्तेन जायते ॥ ३ ॥
वायुः पित्तादिभिर्युक्तो वेणुघोषोपमं स्वनम् ।
करोति कर्णयोः क्ष्वेडं कर्णक्ष्वेडः सकीर्तितः ॥ ४ ॥
शिरोभिघातादथवा निमज्जनाज्जले प्रपाकादथवापि विद्रधेः ।
स्रवेद्धि पूयं श्रवणोऽनिलार्दितः सकर्णसंस्राव इति प्रकीर्तितः ॥५॥
मारुतः कफसंयुक्तः कर्णकण्डूं करोति च ।
पित्तोष्मशोषितः श्लेष्मा जायते कर्णगूथकः ॥ ६ ॥
सकर्णगूथो द्रवतां यदागतो विलायितो घ्राणमुखं प्रपद्यते ।

तदा सकर्णप्रतिनाहसंज्ञितो भवेद्विकारः शिरसोऽर्द्धभेदकृत् ॥७॥
यदा तु मूर्च्छन्त्यथवापि जन्तवः सृजन्त्यपत्यान्यथवापि मक्षिकाः।
तदञ्जनत्वाच्छ्रवणो निरुच्यते भिषग्भिराद्यैः कृमिकर्णको गदः ॥८॥

पतङ्गाः शतपद्यश्च कर्णस्रोतः प्रविश्य हि।
अरतिं व्याकुलत्वञ्च भृशं कुर्वन्ति वेदनाम् ॥ ९ ॥
कर्णो निस्तुद्यते तस्य तथा फुरफुरायते।
कीटे चरति रुक्तीव्रा निस्पन्दे मन्दवेदना ॥ १० ॥

क्षताभिघातप्रभवस्तु विद्रधिर्भवेत्तथा दोषकृतोऽपरः पुनः।
सपीतनीलारुणमस्रमास्रवेत्प्रतोदधूमायनदाहचोषवान् ॥ ११ ॥

कर्णपाकस्तु पित्तेन कोथविक्लेदकृद्भवेत्।
कर्णविद्रधिपाकाद्वा जायते चाम्बुपूरणात् ॥ १२ ॥
पूयं स्रवति वा पूति सज्ञेयः पूतिकर्णकः।
कर्णशोफार्बुदार्शांसि जानीयादुक्तलक्षणैः ॥ १३ ॥

नादोऽतिरुक्कर्णमलस्य शोषः स्रावस्तनुश्चाश्रवणञ्च वातात्।
शोथः सरागोदरणं विदाहः सपीतपूतिस्रवणञ्च पित्तात् ॥ १४ ॥
वैश्रुत्यकण्डूस्थिरशोथयुक्ता स्निग्धास्रुतिः श्लेष्मभवेऽल्परुक् च।
सर्वाणि रूपाणि च सन्निपातात् स्रावश्च तत्राधिकदोषवर्णः ॥१५॥

सौकुमार्याच्चिरोत्सृष्टे सहसैवातिवर्द्धिते।
कर्णे शोथो भवेत्पाल्यां सरुजः परिपोटवान् ॥
कृष्णारुणनिभः स्तब्धः सवातात्परिपोटकः ॥ १६ ॥
गुर्वाभरणसंयोगात्ताडनात् घर्षणादपि।
शोथः पाल्यां भवेच्छ्यावो दाहपाकरुजान्वितः ॥
रक्तो वा रक्तपित्ताभ्यामुत्पातः सगदो मतः ॥ १७ ॥
कर्णं बलाद्वर्द्धयतः पाल्यां वायुः प्रकुप्यति।
कफं संगृह्य कुरुते शोफं स्तब्धमवेदनम् ॥

उन्मन्थकः सकण्डूको विकारः कफवातजः ॥ १८ ॥
संवर्द्धमाने दुर्विद्धे कण्डूदाहरुजान्वितः ।
शोथो भवति पाकश्च त्रिदोषो दुःखवर्द्धनः ॥ १९ ॥
कफासृक् क्रिमयः क्षुद्राः सर्षपाभा विसर्पिणः ।
कुर्वन्ति पिटकाः पाल्यां कण्डूदाह समन्विताः ॥ २० ॥
कफासृक् क्रिमिसंभूतः सविसर्पश्चितस्ततः ।
लिहेच्च सकलां पालीं परिलेहीति सस्मृतः ॥ २१ ॥

—०—

## अथ चिकित्सामाह ।

कर्णशूलेप्रणादे च बाधिर्ये क्ष्वेड़ एव च ।
चतुर्णामपि रोगाणां सामान्यं भेषजं विदुः ॥ २२ ॥
स्निग्धं वातहरैः स्नेहैः नरं वापि विरेचयेत् ।
भुक्तोपरिहितं सर्पि र्वस्तिकर्म च पूजितम् ॥ २३ ॥
कोष्णं पयोनुपानञ्च विरात्रं पाययेद् घृतम् ॥ २४ ॥
अश्वत्थपत्र खल्लं वा विधाय बहुपत्रकम् ।
तैलाक्तमङ्गारपूर्णं निदध्याच्छ्रवणोपरि ॥ २५ ॥
यत्तैलं च्यवते तस्मात् खल्लादङ्गारतापितात् ।
तत्प्राप्तं श्रवणस्रोतः सद्यो गृह्णाति वेदनाम् ॥ २६ ॥
शृङ्गवेरञ्च मधुकं सैन्धवं तैलमेव च ।
कटूष्णं कर्णयोर्देय मेतद्वा वेदनापहम् ॥ २७ ॥
कपित्थमातुलुङ्गाम्ल शृङ्गवेररसैः शुभैः ।
सुखोष्णैः पूरयेत्कर्णं कर्णशूलोपशान्तये ॥ २८ ॥
लशुनार्द्रकशिग्रूणां सुरङ्ग्यामूलकस्य च ।
कदल्याः स्वरसः श्रेष्ठः कटूष्णं कर्णपूरणे ॥ २९ ॥

कर्णं कोष्णेन शुक्तेन पूरयेत्कर्णशूलिनः।
ससुद्रफेनचूर्णेन शुक्तयावाप्यवचूर्णयेत् ॥ ३० ॥
अर्कांकुरानम्लपिष्टां स्तैलान्लवणान्वितान्।
सन्निसध्यात् स्नुहीकाण्डे कोरिते तच्छदाहृते ॥ ३१ ॥
पुटपाकक्रमात् स्विन्नं पीड़येदारसागमात्।
सुखोष्णं तद्रसं कर्णे दापयेच्छूलशान्तये ॥ ३२ ॥

—०—

महतः पञ्चमूलस्य काष्टान्यष्टांगुलानि च।
क्षौमेनावेष्ट्य संसिच्य तैलेनादीपयेत्ततः ॥ ३३ ॥
यत्तैलं च्यवते तेभ्यः सुखोष्णं तत्प्रदापयेत्।
ज्ञेयं तद्दीपिकातैलं सद्यो गृह्णाति वेदनाम् ॥ ३४ ॥
एवं कुर्य्याद्भद्रकाष्टे कुष्टे काष्टे च सारले।
मतिमान् दीपिकातैलं कर्णशूलनिवारणम् ॥ ३५ ॥

इति दीपिकातैलम्।

अर्कस्य पत्रं परिणामपीतं माज्येन लिप्तं शिखिनावतप्तम्।
आपीड्यतोयं श्रवणे निषिक्तं निहन्ति शूलं बहुवेदनञ्च ॥ ३६ ॥
तीव्रशूलातुरे कर्णे सशब्दे क्लेदवाहिनि।
छागमूत्रं प्रशंसन्ति कोष्णं सैन्धवसंयुतम् ॥ ३७ ॥
एरण्डपत्रं पुटपाकविधाचिताम्बु
तुल्यार्द्रकस्य सलिलं मधुकेन मिश्रम्।
पक्त्वा च तैललवणेन युतं सुखोष्णं
कर्णे रुजं हरति तत्क्षणमेव दत्तम् ॥ ३८ ॥
बिल्वैरण्डार्कवर्षाभू दधित्थोन्मत्तशिग्रुभिः।
वत्सगन्धाश्वगन्धाभ्यां तर्कारीयवरेणुभिः ॥ ३९ ॥

धारनालमूतैरेभि र्नाडोस्वेदः प्रयोजितः ।
कफवातसमुत्थानं कर्णशूल निवारयेत् ॥ ४० ॥

रास्नामृतैरण्डसुराह्वविश्वं तुल्यं पुरेणापि विमृद्य खादेत् ।
वातामयो कर्णशिरोगदो च नाड़ीव्रणो चैव भगन्दरो च ॥ ४१ ॥

इति रास्नागुग्गुलुः ।

वंशावलेखसंयुक्ते मूत्रे वाऽऽजाविके भिषक् ।
तैलं पचेत्तेन कर्णं पूरयेत्कर्णशूलिनः ॥ ४२ ॥
धारयेत् पूरणं कर्णे कर्णशूलं विमर्दयेत् ।
रुजः स्यान्मार्दवं याव न्मात्राशतमवेदनम् ॥ ४३ ॥
यावत्पर्येति हस्ताग्रं दक्षिणं जानुमण्डलम् ।
निमिषोन्मेषकालेन समं मात्रा तु सा स्मृता ॥ ४४ ॥
तैल श्योनाकमूलेन मन्दाग्नौ परिसाधितम् ।
हरेदाशु त्रिदोषोत्थं कर्णशूलं प्रपूरणात् ॥ ४५ ॥

इति श्योनाकतैलम् ।

हिंगुतुम्बुरुशुण्ठिभिः सार्धं तैलं ससार्षपम् ।
कर्णशूले प्रधानं तत् पूरणं हितमुच्यते ॥ ४६ ॥

इति हिंग्वाद्यं तैलम् ।

देवदारुवचाशुण्ठि शताह्वाकुष्टसैन्धवैः ।
तैलं सिद्धं हि गोमूत्रे कर्णशूलनिवारणम् ॥ ४७ ॥

इति देवदार्वादितैलम् ।

पिप्पल्यो बिल्वमूलञ्च कुष्टं मधुकमेव च ।
सूक्ष्मैलादेवदारूणि मांसीव्याघ्रीनखो गुरु ॥ ४८ ॥
गर्भेणानेन तैलस्य प्रस्थं मृद्वग्निना पचेत् ।
केयूरमूलकरमी दद्यात् स्रे हेन मतुतो ॥ ४८ ॥

तेन कर्णे पिचुं दद्या द्वस्तिकर्म्म च कारयेत्।
तेनोपशाम्यते चिप्रं कर्णशूलं सुदारुणम्॥ ५०॥

इति पिप्पल्याद्यं तैलम्।

वातरोगे च निर्दिष्टा क्रिया चात्र प्रयोजयेत्।
स्नान शीतांबुमंपानं मैथुनञ्च विवर्जयेत्॥ ५१॥
पित्तजे शर्करायुक्तं घृतस्निग्धं विरेचनम्।
द्राचायष्टीशृतं चीरं शस्यते कर्णपूरणम्॥ ५२॥
पित्तवद्रक्तजे कुर्य्या च्छिराया रक्तमोचणम्।
कफजे मागधीसिद्धं हविः दुग्धं प्रवाप्य च॥
कुर्य्याद्गण्डूषसंस्वेदं धूपनं कफनाशनम्॥ ५३॥
कर्णक्ष्वेड़े कर्णनादे कटुतैलेन पूरयेत्।
नादवाधिर्य्ययोः कुर्य्यात् कर्णशूलोक्तमौषधम्॥ ५४॥
कफजे.श्चाचरेत् पूर्वं वमनाद्यैः क्रियाक्रमम्।
वातजे कुष्टजं वापि लाङ्गलीचोरमिश्रितम्॥ ५५॥
दलेनाश्वत्थपत्रस्य वेष्टित सुविपाचितम्।
सतैललवणं कोष्णं वाधिर्य्ये कर्णपूरणम्॥ ५६॥
एरण्डशिग्रुवरुण मूलिकापत्रजे रसे।
चतुर्गुणे पचेत्तैलं चीरे चाष्टगुणान्विते॥ ५७॥
यष्ट्याह्वचीरकाकोली कल्कयुक्तं निहन्ति तत्।
नादवाधिर्य्यशूलानि नावनाभ्यङ्गपूरणैः॥ ५८॥

इत्येरण्डादितैलं कर्णपूरणे।

कल्कक्वाथेश्च यष्ट्याह्व काकोलीद्वयमाषकैः।
सूकरस्य वसा पक्वा कर्णनादातिनाशिनी॥ ५९॥

इति सूकरवसा।

स्वर्जिकामूलकं शुष्कं हिङ्गु कृष्णामहौषधम् ।
शतपुष्पा च तैस्तैलं पक्वं शुक्ते चतुर्गुणे ॥ ६० ॥
प्रणादशूलबाधिर्यं स्रावं चाशु व्यपोहति ॥ ६१ ॥

इति स्वर्जिकातैलम् ।

मयूरनालगोमांसं लशुनं शुष्कमूलकम् ।
सशुक्तं साधितं तैलं कर्णनादार्त्तिनाशनम् ॥ ६२ ॥

इति मयूरनालाद्यं तैलम् ।

गवां मूत्रेण विल्वानि पिष्ट्वा तैलं विपाचयेत् ।
सजलञ्च सदुग्धञ्च बाधिर्ये कर्णपूरणम् ॥ ६३ ॥

इति विल्वतैलम् ।

अपामार्गक्षारजले तत् कृतकल्केन साधितं तैलम् ।
अपहरति कर्णनादं बाधिर्यं चापि पूरणतः ॥ ६४ ॥

इत्यपामार्गतैलम् ।

बालमूलकशुण्ठीनां क्षारो हिङ्गुसनागरम् ।
शतपुष्पावचाकुष्ठं दारुशिग्रुरसाञ्जनम् ॥ ६५ ॥
सौवर्चलं यवक्षारः स्वर्जिकोद्भिदसैन्धवम् ।
भूर्जग्रन्थिविडं मुस्तं मधुशुक्तं चतुर्गुणम् ॥ ६६ ॥
मातुलुङ्गरसश्चैव कदल्यारस एव च ।
तैलमेभिर्विपक्तव्यं कर्णशूलहरं परम् ॥ ६७ ॥
बाधिर्यं कर्णनादश्च पूयस्रावश्च दारुणः ।
पूरणादस्य तैलस्य कृमयः कर्णमाश्रिताः ॥ ६८ ॥
क्षिप्रं विनाशमायान्ति कृष्णात्रेयस्य शासनात् ।
क्षारतैलमिदं श्रेष्ठं सुखं कर्णामयापहम् ॥ ६९ ॥

इति क्षारतैलम् ।

जम्बीराणां फलरसः प्रस्थैकः कुडवोन्मितम्।
माक्षिकं तत्र दातव्यं पिप्पली चपलोन्मिता ॥ ७० ॥
घृतभांडे विनिःक्षिप्य धान्यराशौ निधापयेत्।
मासेन तज्जातरसं मधुशुक्तमुदाहृतम् ॥ ७१ ॥
एष एव विधिः कार्य्यः प्रणादे नस्यपूर्वकः।
गुड़नागरतोयेन नस्यं स्यादुभयोरपि ॥ ७२ ॥
कर्णस्रावे पूतिकर्णे तथैव कृमिकर्णके।
सामान्यं कर्म्मकुर्वीत योगान्वैशेषिकानपि ॥ ७३ ॥
शिरोविरेचनं चैव धूपनं पूरणं तथा।
प्रमार्जनं धावनञ्च वीक्ष्य वीक्ष्यावचारयेत् ॥ ७४ ॥
राजवृक्षादितोयेन सुरसादिजलेन च।
कर्णप्रक्षालनं कार्यं चूर्णैरेतैस्तु पूरणम् ॥ ७५ ॥
चूर्णं पञ्चकषायाणां कपित्थरससंयुतम्।
कर्णस्रावे प्रशंसन्ति पूरणं मधुना सह ॥ ७६ ॥
तिन्दुकान्यभयालोध्रं समङ्गा चामलक्यपि।
पञ्चकषायमन्येन ग्राह्यमेतद्धि बोधितम् ॥ ७७ ॥

इति पञ्चकषायः।

सर्जत्वक् चूर्णसंयुक्तं बीजपूररसं क्षिपेत्।
कर्णस्रावे रुजा दाहाः प्रणश्यन्ति न संशयः ॥ ७८ ॥
सर्जत्वक् चूर्णसंयुक्तः कार्पासीफलजो रसः।
योजितो मधुना वापि कर्णस्रावे प्रशस्यते ॥ ७९ ॥
पुटपाकक्रमस्विन्नो हस्तिविड्जातकवजः।
रसः सतैलसिन्धूत्थः कर्णस्रावहरः परः ॥ ८० ॥
जंब्वाम्रपत्रं तरुणं समांशं कपित्थकर्पासफलञ्च सार्द्रम्।
क्षुण्णारसं तन्मधुना विमिश्रं स्रावापहन्तं प्रवदन्ति तज्ज्ञाः ॥

एतैः शृतं निम्बकारञ्जतैलं ससार्षपं स्रावहरं प्रदिष्टम् ॥ ८१ ॥

इति जंब्वाद्यं तैलम् ।

अर्कस्य पत्रस्वरसं निर्गुण्डीस्वरसं तथा ।
राजवृक्षादितोयेन सूर्य्यावर्त्तरसं तथा ॥ ८२ ॥
चित्रकोद्भवसमिश्रं वज्रीक्षीरं तथैव च ।
तथा कुलकुलतोयेन प्रत्येकेन क्रमेण तु ॥ ८३ ॥
तैलप्रस्थं पचेत्तस्मिन् हरितालपलद्वयम् ।
सैन्धवञ्च पलं योज्यं विषं पादांशकं तथा ॥ ८४ ॥
एतत्तैलं हरेत् क्षिप्रं कर्णशूलञ्च दुस्तरम् ॥

इति विषगर्भतैलम् ।

मुसलीबाकुचीचूर्णं खादेद्वाधिर्य्यशान्तये ॥ ८५ ॥

इति ग्रन्थान्तरादत्रोक्तम् ।

बिल्वोदुम्बरजम्बूदधित्थचूतानां वल्कलैः सिद्धम् ।
श्रुतिरोधञ्च निहन्ति तैलं प्रपाकपूतिश्रुतं जयति ॥ ८६ ॥

इति पञ्चवल्कलतैलम् ।

आम्रजंबूप्रबालानि मधुकस्य वटस्य च ।
एभिः ससाधितं तैलं पूतिकर्णोपशान्तये ॥ ८७ ॥

इति चतुष्पर्णतैलम् ।

वरुणार्ककपित्थाम्रजंबूपल्लवसाधितम् ।
पूतिकर्णापहं तैलं जातीपत्ररसोऽथवा ॥ ८८ ॥

इति चतुष्पल्लवतैलम् ।

निर्गुण्डीस्वरसे तैलं सिन्धुधूमरजो गुडः ।
पूरणात् पूतिकर्णस्य शमनो मधुसंयुतः ॥ ८९ ॥
जातीपत्ररसे तैलं विपक्वं पूतिकर्णजित् ॥ ९० ॥

---

घृष्टं रसाञ्जनं नार्य्याः चीरेण मधुसंयुतम्।
प्रशस्यते चिरोत्थेषु सस्रावे पूतिकर्णके ॥ ८१ ॥

—०—

कुष्टं हिंगुवचादारु शताह्वाविश्वसैन्धवैः।
पूतिकर्णापहं तैलं वस्तमूत्रेण साधितम् ॥ ८२ ॥

इति कुष्ठाद्यं तैलम्।

शम्बूकस्य तु मांसेन कटुतैलं विपाचयेत्।
तस्य पूरणमात्रेण कर्णनाड़ीप्रशाम्यति ॥ ८३ ॥

इति शंबूकतैलम्।

चूर्णेन गन्धकशिलारजनीभवेन
मुष्टं शकेन कटुतैलपलाष्टकञ्च।
धत्तूरपत्ररसतुल्यमिदं विपक्वं
नाड़ीं जयेच्चिरभवामपि कर्णजाताम् ॥ ८४ ॥

गन्धकादीनामत्र मिलित्वा पलं ग्राह्यम्।

इति गन्धकाद्यं तैलम्। इति कर्णनाडीचिकित्सा।

कृमिकर्णविनाशाय कृमिघ्नां कारयेत्क्रियाम्।
वार्त्ताकुधूमश्च हितः सर्षपस्नेह एव च ॥ ८५ ॥
पूरणं हरितालेन गवां मूत्रयुतेन च।
धूपने कर्णदौर्गन्ध्ये गुग्गुलुः श्रेष्ठ उच्यते ॥ ८६ ॥
सूर्य्यावर्त्तस्य स्वरसं सिन्धुवाररसं तथा।
लाङ्गलीमूलजरसं त्र्यूषणं चूर्णितं तथा ॥ ८७ ॥
पूरयेत् कृमिकर्णन्तु जन्तूनां नाशनं परम्।

इति योगचतुष्टयम्।

हलिरविभत्तिव्योपानेकीक्षत्यप्रगालयेद्‌ध्रुवा ।
वसनेन तस्य रसेन श्रवणे परिपूरयेत्सुतराम् ॥ ९८ ॥
कर्णजलौकानियतं कृमिकीटपिपीलिकास्तथान्येपि ।
निपतन्तिनिरवशेषाः कारण्डायापि मुण्डस्थाः ॥ ९९ ॥
अथ कर्णप्रतीनाहे स्नेहस्वेदौ प्रयोजयेत् ।
ततो विरक्तशिरसः क्रियां प्राप्तां समाचरेत् ॥ १०० ॥
विद्रधौ चापि कुर्वीत विद्रध्युक्तां चिकित्सितम् ।
कर्णपाकस्य भैषज्यं कुर्य्यात् क्षतविसर्पवत् ॥ १०१ ॥
प्रक्लेद्यधीमांस्तैलेन प्रविलाप्य च शोधयेत् ।
कर्णगूथन्तु मतिमान् भिषक् सम्यक् शलाकया ॥ १०२ ॥
स्वेदस्वेदौ च वमनं धूमो मूर्द्धि विरेचनम् ।
विधिश्च कफहृत्सर्वः कर्णकंडूमपोहति ॥ १०३ ॥
वाधिर्य्यं वालवृद्धोत्थं चिरोत्थञ्च विवर्जयेत् ॥ १०४ ॥
इति कर्णरोगचिकित्सा ।

—०—

## अथ पर्णपालीचिकित्सामाह ।

पालीसंशोषणे कुर्य्यां द्वातकर्णरुजः क्रियाम् ।
स्वेदयेद्यत्नतस्ताञ्च स्निग्धां संवर्द्धयेत्तिलैः ॥ १०५ ॥
माहिषनवनीतयुतं सप्ताहं धान्यराशिपर्युषितम् ।
नवमूर्मलिकन्दचूर्णं वृद्धिकरं कर्णपालिनाम् ॥ १०६ ॥
शतावरीवाजिगन्धा पयस्यैरण्डबीजकैः ।
तैलं विपक्वं सक्षीरं पालीनां पुष्टीकृत्परम् ॥ १०७ ॥
इति शतावरी तैलम् ।
कल्केन जीवनीयेन तैलं पयसि पाचितम् ।

आनूपमांसक्वाथेन पालीशोषणवर्द्धनम् ॥ १०८ ॥
एतेनैव हि तैलेन चिकित्सेद्भिषजां वरः।
कृतास्त्रं परिपोटञ्च चट्रिकाञ्च प्रयत्नतः ॥ १०९ ॥

इति जीवनीयतैलम्।

शीतैर्लेपैर्जलौकाभि रुत्पातं समुपाचरेत् ॥ ११० ॥
गोपनीयावलायष्टी जम्ब्वाम्रपल्लवोत्पलैः।
सधान्याम्लैः समश्लिष्टैः सिद्धैर्लोध्रान्वितैः समैः।
तैलमभ्यङ्गतः सिद्धं कर्णोत्पातहरं परम् ॥ १११ ॥
वायन्त्यश्वगन्धार्क वाकुचीबीजसिन्धुजैः।
फलिनीसुरसाभ्याञ्च गोधाकङ्कवसान्वितैः ॥
तैलमभ्यङ्गतः पक्व मुत्पातं नाशयेद्ध्रुवम् ॥ ११२ ॥
दुःखवर्द्धनकं सिक्त्वा जम्ब्वाम्राश्वत्थपत्रजैः।
क्वाथैस्तैलेन सुस्निग्धं तच्चूर्णैश्चूर्णयेत् ॥ ११३ ॥
बहुशो गोमयपिण्डैः स्वेदितं परिलेहिकम्।
मेषसारैः समालिम्पे द्दधिमूत्रेण कल्कितैः ॥ ११४ ॥

## इति वङ्गसेने कर्णरोगकर्णपालीरोगनिदान-चिकित्साधिकारः समाप्तः ॥ ६५ ॥

—०—

## अथ नासारोगनिदानमाह।

आनह्यते यस्य विशुष्यते च प्रक्लिद्यते धूप्यति चैव नासा।
नवेत्ति यो गन्धरसांश्च जन्तु र्जुष्टं व्यवस्येत्तमपीनसेन ॥
तञ्चानिलश्लेष्मभवं विकारं ब्रूयात्प्रतिश्याय समानलिङ्गम् ॥ १ ॥

दोषैर्विदग्धैर्गलतालुमूले संमूर्च्छितो यस्य समीरणस्तु ।
निरेति पूतिर्मुखनासिकाभ्यां तं पूतिनस्यं प्रवदन्ति रोगम् ॥२॥
घ्राणाश्रितं पित्तमरूंषि कुर्याद्यस्मिन् विकारे बलवांश्च पाकः ।
तं नासिकापाकमिति व्यवस्येद्विक्लेदकोऽथावयवापि यत्र ॥ ३ ॥
दोषैर्विदग्धैरथवापि जन्तोर्ललाटदेशेऽभिहतस्य तैस्तैः ।
नासास्रवेत् पूयमसृग्विमिश्रं तं पूयरक्तं प्रवदन्ति रोगम् ॥ ४ ॥
घ्राणाश्रितो मर्मणि संप्रदुष्टो यस्यानिलो नासिकया निरेति ।
कफानुयातो बहुशोऽतिशब्दस्तं रोगमाहुः क्षवथुं विधिज्ञाः ॥५॥
तीक्ष्णोपयोगादतिजिघ्रतो वा भावान् कटूनर्कनिरीक्षणाद्वा ।
सूत्रादिभिर्वातरुणास्थिमर्मण्युद्घाटितेऽन्यः क्षवथुर्निरेति ॥ ६ ॥
प्रभ्रश्यते नासिकयैव यस्य सान्द्रो विदग्धो लवणः कफस्तु ।
प्राक् सञ्चितो मूर्धनि सूर्यतप्तस्तं भ्रंशथुं रोगमुदाहरन्ति ॥ ७ ॥
घ्राणे भृशं दाहसमन्विते तु विनिःसरेद्धूम इवोर्ध्ववायुः ।
नासाप्रदीप्तेव च यस्य जन्तोर्व्याधिन्तु तं दीप्तमुदाहरन्ति ॥ ८ ॥
उच्छ्वासमार्गन्तु कफः सवातो रुन्ध्यात्प्रतिनाह मुदाहरेत्तम् ।
घ्राणाद्घनः पीतसितस्तनुर्वा दोषः स्रवेत् स्रावमुदाहरेत्तम् ॥९॥

घ्राणात् सपिच्छिलः श्लेष्मा अवलीढव उल्बणा ।
अजरः स्यन्दते घ्राणानामास्रावं तमादिशेत् ॥ १० ॥

घ्राणाश्रिते स्रोतसि मारुतेन पित्तेन गाढं परिशोषिते च ।
कृच्छ्राच्छ्वसेदूर्ध्वमधश्च जन्तुर्यस्मिन् स नासापरिशोष उक्तः ॥११॥
दोषैस्त्रिभिर्वा पृथगेकशश्च ब्रूयात्तथार्शांसि तथैव शोफान् ।
शालाकमिहन्तमवेक्ष्य चापि सर्वात्मकं सर्वगमर्बुदं स्यात् ॥ १२ ॥

शिरोगुरुत्वमरुचि र्नासास्रावस्तनुस्वरः ।
क्षामः ष्ठीवत्यथा भीक्ष्णं मामपीनसलक्षणम् ॥ १३ ॥
आमनिद्रान्वितः श्लेष्मा घनः खेषु निमज्जति ।

स्वरवर्णविशुद्धिश्च परिपक्वस्य लक्षणम् ॥ १४ ॥

---

## अथ चिकित्सामाह ।

सर्व्वेषु पीनसेष्वादौ निवातागारगो भवेत् ।
शिरसोऽभ्यञ्जनैः स्वेदैर्नस्यैः कट्वम्लभोजनैः ॥
वमनैर्घृतपानैश्च नासारोगानुपाचरेत् ॥ १५ ॥
पञ्चमूलीशृतं क्षीरं चित्रकञ्च हरीतकी ।
सर्पिर्गुडः षडङ्गश्च यूषः पीनसशान्तये ॥ १६ ॥
सर्व्वेषु सर्व्वकालं पीनसरोगेषु जातमात्रेषु ।
मरिचं गुड़ेन दध्ना भुञ्जीतनरः सुखं लभते ॥ १७ ॥
कटुत्रिकं चित्रकतित्तिड़िकं तालीशपत्रं चविकाम्लसंज्ञम् ।
विचूर्णितं जीरकचूर्णयुक्तमेलात्वचा तत्सुरभीकृतं च ॥
मिश्रं पुराणेन गुड़ेन दद्यात्तत्पीनसानां परिपाचनार्थम् ॥ १८ ॥

इति कटुत्रिकादिचूर्णं गुटिका च ।

कट्फलं शृङ्गवेरञ्च पिप्पलीमरिचानि च ।
शठीपुष्करमूलञ्च भार्गीमधुरसावरा ॥ १९ ॥
अभयाकृष्णलवणं शृङ्गीकर्कटकस्य च ।
एतच्चूर्णवरं प्रोक्तं क्वाथो वा मूत्रमूर्च्छितः ॥ २० ॥
पीनसे स्वरभेदे च तमके सहलीमके ।
सन्निपातेऽनिलकफे कासे श्वासे च शस्यते ॥ २१ ॥

इति कट्फलादिचूर्णम् ।

पूर्व्वोद्दिष्टे पूतिनस्ये च कुर्य्यात् स्नेहस्वेदौ छर्दनं स्रमनं वा ।
युक्तं भुक्तं तीक्ष्णमल्पं लघुस्यादुष्णं तोयं धूमपानञ्च कार्य्यम् ॥२२॥

स्निग्धस्य छर्दनैर्दीप्ताग्निर्हरेद्वातपीनसे ।
पित्ते सर्पिः पिबेत्सिद्ध शृङ्गवेरेण वा पयः ॥ २३ ॥
देयं कफघ्नमुष्णञ्च भोजनं रूक्षणं हितम् ।
विरेक वमन ह्यादौ लङ्घनं कफपीनसे ॥ २४ ॥
स्नेहसेकश्च वा कार्यौ लिप्ते शिरसि सर्षपैः ।
लशुन मुद्गचूर्णैश्च व्योषक्षारयुतैर्हितः ॥ २५ ॥
सकासे पीनसे पूति घ्राणे स्नावि सकण्डुरे ।
धूम प्रस्तोऽवपीलश्च कटुभिः कफपीनसे ॥ २६ ॥
कफघ्नमन्नं वार्त्ताक कुलित्थाढकिमुद्गजा ।
यूषा प्रशस्ता सव्योषा स्तथा तोयोष्णसेवनम् ॥ २७ ॥
कलिङ्गहिंगुमरिच लाक्षासुरसकट्फलैः ।
कुष्ठोग्राशिग्रुजन्तुघ्नै रवपीडः प्रशस्यते ॥ २८ ॥
तैरेव मूत्रमयुक्तैः कटुतैलं विपाचयेत् ।
अपीनसे पूतीनस्ये शमनं कीर्तितं परम् ॥ २९ ॥
व्याघ्रिचित्रकतालीश तिन्तिडिकाम्लवेतसम ।
सचव्याजाजीतुल्याश्च मैलात्वक् पत्रपादिकाम् ॥ ३० ॥
व्योषादिकमिदं चूर्णं पुराणगुडसंयुतम् ।
पीनसश्वासकासघ्नं रुचिस्वरकरं परम् ॥ ३१ ॥
इति व्योषाद्यं चूर्णम् ।
व्याघ्रीदन्तीवचाशिग्रु सुरसाव्योषसिन्धुजैः ।
पाचितं नावनं तैलं पूतिनासागदापहम् ॥ ३२ ॥
इति व्याघ्रीतैलम् ।
त्रिकटुकविडङ्गसैन्धव बृहतीफलशिग्रुसुरसदन्तीभिः ।
तैलं गोजलमिद्धं नस्यं स्यात् पूतिनस्यस्य ॥ ३३ ॥
इति त्रिकटुकाद्यं तैलम् ।

शिग्रुसिंहिनिकुम्भानां बीजैः सव्योपसैन्धवैः।
बिल्वपत्ररसे तैलं नावनं पूतिनस्यजित् ॥ ३४ ॥

इति शिग्रुतैलम्।

चित्रककषायपलशत मम्रताजातीरसञ्च तुल्यांशम्[1]।
प्रक्षिप्यगुड़शतञ्च द्विपञ्चमूलीकषायेण ॥ ३५ ॥
तत्तुल्येन च हरितक्याढ़कमेकं विपाच्यगुड़पाकम्।
अर्द्धप्रस्थं मधुनस्तस्मिन् दद्यात्ततो वैद्यः ॥ ३६ ॥
द्वे द्वे पले निदद्यादेलात्वक् पत्रत्रिकटुकानाम्।
यवक्षारादर्द्धपलं प्रयोजयेदग्निवर्द्धनं पुंसाम् ॥ ३७ ॥
एतद्रसायनोत्तममश्विभ्यां निर्मितं सुविख्यातम्।
उपयुक्तवतां पुंसां चक्षणकाष्टान्यपि च जीर्य्यति ॥ ३८ ॥
अजितमपि भेषजशतैः पीनसरोगं त्र्यहाज्जयति।
नृपतिरसायनमेत दाहारयन्त्रणारहितञ्च ॥ ३९ ॥

इति राजरसायनम्।

नासापाके पित्तहृत् विधानं कार्यं सर्वं बाह्यमाभ्यन्तरञ्च।
हृत्वा रक्तं चीरवृक्षत्वचश्च योज्याः सेकाः सघृताश्च प्रदेहाः ॥४०॥
सर्ज्जार्जुनोदुम्बरवत्सकानां त्वचां कषायैः परिधावनीयः।
कषायकल्कैरपि चैभिरेव सिद्धं घृतं घ्राणविपाकनुत्परम् ॥ ४१ ॥
पूयास्रे रक्तपित्तघ्नाः कषाया नावनानि च।
पाकदाहादिरोगेषु शीतलेपादिकाः क्रियाः ॥ ४२ ॥
वान्ते सम्यक् चावपीड़ं विदध्यात्तीव्रं धूमं शोधनं चात्र नस्यम्।
श्रेष्ठं नस्यं मूर्द्धवैरेचनीयैः नाड्या चूर्णं क्षुत्रदे भ्रंशथौ वा ॥ ४३ ॥

---

१ जाति धात्री।

घृतगुग्गुलुमिश्रस्य सिक्थकस्य प्रयत्नतः ।
धूमः क्षवथुरोगघ्नो भ्रंशथुघ्नश्च निर्दिशेत् ॥ ४४ ॥
सपिप्पलीकुष्टमहौषधानां विडङ्गमद्वीककषायकल्कैः ।
तैलं विपक्वं क्षवथौ च नस्यं वसां पचेत्तैलमथो घृतञ्च ॥ ४५ ॥

इति पिप्पलीतैलम् ।

द्रव्याणि यानि क्षवथौ प्रदिष्टान्येतानि सर्वाणि सकट्फलानि ।
चूर्णानि कृत्वा प्रथमेत नस्ये शस्तञ्च दत्तं भ्रंशथुं निहन्यात् ॥४६॥
शुण्ठिकुष्टकणाविल्व द्राक्षाकल्ककषायवत् ।
साधितं तैलमाज्यश्च नस्यात् क्षवथुरुग्जयेत् ॥ ४७ ॥

इति शुण्ठीतैलं घृतं च ।

दीप्ते रोगे पित्तकृत् संविधानं कार्यं सर्वं माधुरं शीतलञ्च ॥ ४८ ॥
नस्यं हितं निम्बरसाञ्जनाभ्यां दीप्ते शिरः स्वेदनमल्पशस्तु ।
नस्ये कृते क्षीरजलावसेक्तान् शंसन्ति भुञ्जीत च मुद्गयूषैः ॥४८॥
नासानाहे स्नेहपानं प्रधानं स्निग्धा धूमा मूर्द्धवस्तिश्च नित्यम् ।
बलातैलं सर्वथैवापि युञ्ज्याद्वातव्याधावन्यदुक्तं च यद्यत् ॥ ५० ॥
नासास्रावे घ्राणतश्चूर्णमुक्तं
नाद्या देयं येऽवपीडाश्च पथ्याः ।
तीक्ष्णान् धूमान् देवदार्व्यग्निकाभ्यां
मांसं त्वाजं पथ्यमत्रादिशन्ति ॥ ५१ ॥
नासाशोषे क्षीरसर्पिः प्रधानं सिद्धं तैलं चाणुकल्पेन नस्ये ।
सर्पिः पीतं भोजनं जाङ्गलेय स्नेहस्वेदौ स्नैहिकश्चापि धूमः ॥५२॥

इति पीनसोपक्रमः ।

—०—

## अथ निदानमाह ।

सन्धारणाजीर्णरजोऽतिभाष्यक्रोधर्त्तुवैषम्य शिरोऽभितापैः ।
प्रजागरातिस्वपनांबुशीतै रवश्यया मैथुनबाष्पशोकैः ॥
संस्त्यानदोषे शिरसि प्रवृद्धो वायुः प्रतिश्यायमुदीरयेत्तु ॥ ५३ ॥
चयङ्गतामूर्धनि मारुतादयः पृथक् समस्ताश्च तथैव शोणितम् ।
प्रकुप्यमाना विविधैःप्रकोपनैर्नृणां प्रतिश्यायकरा भवन्ति हि ॥५४
चवप्रवृत्तिः शिरसोऽतिपूर्णतास्तंभोऽङ्गमर्दः परिहृष्टरोमता ।
उपद्रवाश्चाप्यपरे पृथग्विधा नृणां प्रतिश्यायपुरःसराः स्मृताः ॥५५॥
आनद्धा पिहितानासा तनुस्रावप्रसेकनी ।
गलताल्वोष्ठशोषश्च निस्तोदः शङ्खयोस्तथा ।
भवेत्स्वरोपघातश्च प्रतिश्यायेऽनिलात्मके ॥ ५६ ॥
उष्णः सपीतकः स्रावो घ्राणात् स्रवन्ति पैत्तिके ।
कृशोऽतिपांडुः सन्तप्तो भवेदुष्णाभिपीड़ितः ॥
सधूममग्निं सहसा वमतीव च नासया ॥ ५७ ॥
घ्राणात्कफः कफकृते स्वेतः पांडुः स्रवेद्बहुः ।
शुक्लावभासः शूनाक्षो भवेद्गुरुशिरा नरः ।
कण्ठताल्वोष्ठशिरसां कण्डुभिरतिपीडितः ॥ ५८ ॥
भूत्वा भूत्वा प्रतिश्यायो योऽकस्माद्विनिवर्त्तते ।
संपक्वो वाप्य पक्वो वा ससर्वप्रभवः स्मृतः ॥ ५९ ॥
प्रक्लिद्यते पुनर्नासा पुनश्च परिशुष्यति ।
पुनरानह्यते वापि पुनर्विव्रियते तथा ॥ ६० ॥
निःश्वासे वातिदौर्गन्ध्यं नरो गन्धान्न वेत्ति च ।
एवं दुष्टप्रतिश्यायं जानीयात् कष्टसाधनम् ॥ ६१ ॥
रक्तजे तु प्रतिश्याये रक्तस्रावः प्रवर्त्तते ।

ताम्राचस्तु भवेज्जन्तु करोघातप्रपीडितः ॥
दुर्गन्धोच्छ्वासवदनो गन्धानपि नवेति सः ॥ ६२ ॥
सर्व एव प्रतिश्याया नरस्याप्रतिकारिणः ।
दुष्टतां यान्ति कालेन तदाऽसाध्या भवन्ति च ॥ ६३ ॥
मूर्च्छन्ति चात्र क्रिमयः श्वेताः स्निग्धाः स्तथाणवः ।
क्रिमिजो यः शिरोरोग स्तुल्यन्तेनास्यलक्षणम् ॥ ६४ ॥
वाधिर्य्यमान्ध्यमघ्रत्वं घोरांश्च नयनामयान् ।
शोथाग्निसादकासांश्च वृद्धाः कुर्वन्ति पीनसाः ॥ ६५ ॥
अर्वुदं सप्तधा शोथ श्चत्वारोऽर्शश्चतुर्विधम् ।
चतुर्विधं रक्तपित्त मुक्तं प्राणेऽपि तद्विदः ॥ ६६ ॥
शिरोललाटतालूनां गौरव दुःखनिद्रता ।
अर्शसामर्वुदानाञ्च दोषकोपाकृतिः समा ॥ ६७ ॥
अर्शांसि गोस्तनाकाराण्यर्वुदं कोलसन्निभम् ॥ ६८ ॥

—०—

## अथ चिकित्सामाह ।

प्रतिश्यायेषु सर्वेषु गृहं वातविवर्ज्जितम् ।
वस्त्रेन गुरुणोष्णेन शिरसो वेष्टनं हितम् ॥ ६९ ॥
विडङ्गं सैन्धवं हिंगु गुग्गुलुः समनःशिलाः ।
प्रतिश्यायी वचायुक्तं चूर्णमाघ्राय नश्यति ॥ ७० ॥
अथवा सघृतान्सक्तून् कृत्वामलकसंपुटे ।
सर्वप्रतिश्यायवतां धूमो वैद्यः प्रयोजयेत् ॥ ७१ ॥
घृततैलेन संयुक्तं सक्तुधूमं पिवेन्नरः ।
प्रतिश्यायहरं प्रोक्तं कासहिक्कानिवारणम् ॥ ७२ ॥
प्रतिश्याये पिवेद्धूमं सर्वगन्धसमायुतम् ।

चातुर्जातकचूर्णं वा घ्रेयं वा कृष्णजीरकम् ॥ ७३ ॥
पुटपाकं जयापत्रं सिन्धुतैलसमन्वितम्।
प्रतिश्यायेषु सर्वेषु शीलितं परमौषधम् ॥ ७४ ॥
भक्षयति भुक्तमात्रे सलवणं सुस्विन्नमाषमत्युष्णम्।
शमयति सर्वसमुत्थं चिरजातं च प्रतिश्यायम् ॥ ७५ ॥
शठीतामलकीव्योष चूर्णं सर्पिर्गुड़ान्वितम्।
हन्तिघोरं प्रतिश्यायं पार्श्वहृद्वस्तिशूलनुत् ॥ ७६ ॥
कुलित्थयवधान्याम्ल यूषं तित्तिडिपत्त्रजम्।
स्वेदोष्णञ्च हिमं भोज्यं पाचनाय प्रशस्यते ॥ ७७ ॥
गुड़ान्वितं चार्द्रमथादिशन्ति शुक्तोषितं तत्परिपाचनाय ॥७८॥
वृषपत्रं गुडसंयुक्तं स्निग्धं दुग्धाम्लभोजनम्।
प्रतिश्यायहरं प्रोक्तं विशेषात्कफनाशनम् ॥ ७९ ॥
ततः पक्वं कफं ज्ञात्वा हरेच्छीर्षविरेचनैः।
पिप्पल्यः शिग्रुबीजानि विड़ङ्गं मरिचानि च ॥
अवपीड़ः प्रशस्तोऽयं प्रतिश्यायनिवारणः ॥ ८० ॥
शिरसोऽभ्यञ्जनं स्वेदं नस्यं कट्वम्लभोजनैः।
वमनैः क्षतपानैश्च नान्यथा समुपाचरेत् ॥ ८१ ॥
वातके तु प्रतिश्याये पिबेत्सर्पिर्यथाबलम्।
पञ्चभिर्लवणैः सिद्धं प्रथमेन गणेन च ॥ ८२ ॥
नस्यादिषु विधिं कृत्स्नं मवेक्षेतार्दितेरितम् ॥ ८३ ॥
रक्तपित्तोत्थयोः पेयं सर्पिर्मधुरकैः शृतम्।
परिषेकान् प्रदेहांश्च कुर्यादपि च शीतलान् ॥ ८४ ॥
शुक्षरते कवलांश्चात्र विरेको मधुरैरपि ॥ ८५ ॥
हितं पित्तप्रतिश्याये पाचनार्थं शृतं पयः।
शृङ्गवेरेण पयसा शृङ्गवेरमथापि वा ॥ ८६ ॥

धवत्वक् त्रिफलाश्यामा तिल्वकैर्मधुकेन च ।
श्रोपर्णीरजनीमिश्रैः क्षीरे दशगुणे पचेत् ॥
तैलं कालोपयुक्तं तु नस्यं स्यादनयोर्हितम् ॥ ८७ ॥

इति धवाद्यं तैलम् ।

कफजे सर्पिषास्निग्धं तिलमाषविपक्वया ।
यवाग्वा वामयित्वा च शेषघ्नं क्रममाचरेत् ॥ ८८ ॥
उभे बले बृहत्यौ च विडङ्गं सविकङ्कतम् ।
श्वेतामूलं महाभद्रां वर्षाभूं चापि संहरेत् ॥ ८९ ॥
तैलमेभिर्विपक्वन्तु नस्य मस्योपकल्पयेत् ॥

इति बलाद्याद्यं तैलम् ।

दार्वीङ्गुदिनिकुम्भैश्च किणिह्या सरलेन च ।
वर्त्तयोऽत्र कृता योज्या धूमपाने यथा विधिः ॥ ९० ॥
सर्पिषिकटुसिद्धानि तीक्ष्णधूमाः कटूनि च ।
भेषजान्युपयुक्तानि घ्नन्युः सर्वप्रकोपजम् ॥ ९१ ॥
रसाञ्जने सातिविषे मुस्तायां देवदारुणि ।
तैलं विपक्वं नस्यार्थं विदध्यादत्र बुद्धिमान् ॥ ९२ ॥

रसाञ्जनाद्यं तैलम् ।

मुस्ता तेजोवतीपाठा कट्फलं कटुकावचा ।
सर्षपापिप्पलीमूलं पिप्पलीसैन्धवाग्निकौ ॥ ९३ ॥
तुल्यं करञ्जवीजञ्च लवणं भद्रदारु च ।
पलैः कृतं कषायञ्च कवले तच्च धारयेत् ॥ ९४ ॥
हितं शिरोविकारे च तैलमेभिर्विपाचयेत् ।

इति मुस्तकादितैलम् ।

क्षीरमर्द्धजलं क्वाथ्यं जाङ्गलैर्मृगपक्षिभिः ।
पुष्पैर्विमिश्रं जलजैर्वातघ्नैरौषधैरपि ॥ ९५ ॥

हिमे चोरावशिष्टेऽस्मिन् घृतमुत्पाद्य यत्नतः।
सर्वगन्धामितानन्ता मधुकं चन्दन तथा ॥ ९७ ॥
अवाप्य विपचेद्भूयो दशचोरञ्च तद्घृतम्।
नस्यप्रयुक्तमुद्रिक्तान् प्रतिश्यायान् व्यपोहति ॥ ९८ ॥
गोमूत्रपिष्टाश्चोद्दिष्टा क्रियाः क्रमिषु योजयेत्।
धावनानि क्रमिघ्नानि भेषजानि च बुद्धिमान् ॥ ९९ ॥
शेषाणान्तु विकाराणां स्वयं कुर्य्याच्चिकित्सितम्।
घ्राणार्वुदेऽधिमांसे च क्रियां शेषेषु वीक्ष्य च ॥ १०० ॥
गृहधूमकणादारु चारनक्ताह्वसैन्धवैः।
सिद्धं शिखरिबीजैश्च तैलं नासार्शसां हितम् ॥ १०१ ॥

इति गृहधूमतैलम्।

शिग्रुकान्तावचाव्योष द्राक्षासुरससैन्धवैः।
नस्य दानाज्जयेत्सिद्धं तैलं नासागदे नृणाम् ॥ १०२ ॥

इति शिग्रुतैलम्।

रक्तकरवीरपुष्पं जात्यशनमल्लिकायाश्च।
एतैः समन्तु तैलं नासार्शो नाशनं श्रेष्ठम् ॥ १०३ ॥

इति करवीराद्यं तैलम्।

व्योषं धान्यककुसुमं गण्डीरकमवल्गुजं बीजम्।
एभिस्तैलं पक्वं नासार्शो नाशनं सिद्धम् ॥ १०४ ॥

इति व्योषाद्यं तैलम्।

इति बङ्गसेने नासारोगनिदानचिकित्साधिकारः
समाप्तः ॥ ६६ ॥

---

उदीर्णवेदनं नेत्रं रागोद्रेकसमन्वितम्।
घर्षनिस्तोदशूलाद्यु युक्तमामान्वितं विदुः॥ १२॥
मन्दवेदनताकंडूः मरम्भाश्रुप्रशान्तता।
प्रसन्नवर्णता चाच्णोः संपक्वं दोषमादिशेत्॥ १३॥
कंडूपदेहाश्रुयुतः पक्वोदुम्बरसन्निभः।
संरम्भीपच्यते यस्तु नेत्रपाकः सशोथजः॥ १४॥
शोथहीनानि लिङ्गानि नेत्रपाके त्वशोथजे॥ १५॥
उपेक्षणादक्षि यदाधिमन्थो वातात्मकः सादयति प्रसह्य।
रुजाभिरुग्राभिरसाध्य एष हताधिमन्थः खलु नामरोगः॥१६॥
वारंवारं च पर्येति भ्रुवौ नेत्रे च मारुतः।
रुजश्च विविधास्तीव्राः सज्ञेयो वातपर्य्ययः॥ १७॥
यत् कूणितं दारुणरूक्षवर्त्म संदह्यते चाविलदर्शनञ्च।
सुदारुणं यत्प्रतिबोधने च शुष्काक्षिपाकोपहतं वदन्ति॥ १८॥
यस्याऽवटूः कर्णशिरो हनुस्थो मन्यागतो वाप्यनिलोऽन्यतो वा।
कुर्य्याद्रुजं वै भ्रुविलोचने च तमन्यतोवातमुदाहरन्ति॥ १९॥
श्यावं लोहितपर्य्यन्तं सर्वं चाक्षिप्रपच्यते।
सदाहशोथं सास्रावमम्लाध्युषितमम्लतः॥ २०॥
अवेदना वापि सवेदना वा यस्याक्षिराज्यो हि भवन्ति ताम्राः।
मुहुर्विरज्यंति च याः स तादृग्व्याधिः शिरोत्पात इति प्रदिष्टः॥२१॥
मोहाच्छिरोत्पात उपेक्षितस्तु जायेतरोगः सशिराप्रहर्षः।
ताम्राश्रुमच्छं स्रवति प्रगाढ़ं तथा न शक्नोत्यभिवीक्षितुञ्च॥२२॥

—०—

## अथ चिकित्सामाह।

अक्षिकुक्षिभवा रोगाः प्रतिश्याय व्रणज्वराः।

पञ्चैते पञ्चरात्रेण रोगाः शाम्यन्ति लङ्घनैः ॥ २३ ॥
लङ्घनालेपनस्वेद शिराव्यधविरेचनैः ।
उपाचरेदभिष्यन्दा नञ्जनाश्च्योतनादिभिः ॥ २४ ॥
स्वेदः प्रलेपस्तिक्तान्नं सेको दिनचतुष्टयम् ।
लङ्घनं चाचिरोगाणां मामानां पाचनानि षट् ॥ २५ ॥
मारुतऽनशनाऽस्वप्नक्रोधशोकसमुद्भवान् ।
न लङ्घयेदभिष्यन्दान् वातव्याधि नराश्च ये ॥ २६ ॥
अभिष्यन्देऽधिमन्थे च वातोत्थे वातपर्य्यये ।
शुष्कपाकेऽन्यतो वाते सामान्यो वक्ष्यते विधिः ॥ २७ ॥
स्नेहस्वेदविधिः कृत्स्नो ग्राम्यानूपोदकामिषम् ।
नस्य चोरष्टताभ्याञ्च शिरावेधश्च शस्यते ॥ २८ ॥
अथवा वेदनार्तस्य न शिराव्यधनक्रमः ॥ २९ ॥
तत उपाचरेद्वैद्यः सामान्यविधिना नरम् ।
पुराणसर्पिषा चैव सम्यक् स्नेहविरेचनैः ॥ ३० ॥
तर्पणैः पुटपाकैश्च धूमैराश्च्योतनैस्तथा ।
नस्यैः स्नेहपरिषेकैः शिरोवस्तिभिरेव च ॥ ३१ ॥
कुरण्टपुष्पयष्ट्याह्व सिताविश्वैः समस्तुभिः ।
शुण्ठीसैन्धवयष्ट्याह्व लोध्रभृष्टैर्घृतैरपि ॥ ३२ ॥
श्रीवासद्विनिशालोध्रै र्चूर्णितैरल्पसैन्धवैः ।
अव्यक्तेऽक्षिगते कार्यं प्रोतस्थैर्गुण्डनं बहिः ॥ ३३ ॥
धात्रीफलनिर्य्यासो नवहृत्कोपं निहन्ति पूरणतः ।
एरण्डपत्रमसक रसोऽथवा सैन्धवसंयुक्तः ॥ ३४ ॥
नवहृत्कोपशमनः चोद्रयुतः शिग्रुमूलरससेकः ।
नश्यत्यशयमथवा काञ्जिकपुनर्नवासैन्धवैर्विहितैः ॥ ३५ ॥
वातपित्तकफसन्निपातजां नेत्रयोर्बहुविधामपि व्ययाम् ।

शीघ्रमेव विनिहन्ति योजितः शिग्रुपल्लवरसः समाक्षिकः ॥३६॥

गोमूत्रे छगलरसेऽम्लकाञ्जिके च
स्त्रीस्तन्ये हविषि विषे च माक्षिके च।
यत्तुत्थं ज्वलितमनेकशो निषिक्तं
तत्कुर्याद्गरुडसमं नरस्य चक्षुः ॥ ३७ ॥

सूर्योपरागानलविद्युदादि विलोकनेनोपहतेक्षणस्य।
संतर्पणं स्निग्धहिमादियोज्यं तथाञ्जनं माक्षिकहेमघृष्टम् ॥ ३८ ॥
करवीरतरुणकिसलयच्छिन्नोद्भवरसातिसपूर्णम्।
नयनयुगं भवति दृढं सहसैव तत्क्षणात् कुपितम् ॥ ३९ ॥

सैन्धवदारुहरिद्रागैरिकपथ्यारसाञ्जनैः पिष्टैः।
दत्तो बहिः प्रलेपो भवत्यशेषाक्षिरोगहरः ॥ ४० ॥
बहिरवलिप्तं लोचनमभिकुपितमपि प्रसीदति क्षिप्रम्।
लोध्ररसाञ्जनचन्दनमनःशिलाकुष्टपथ्याभिः ॥ ४१ ॥

भूम्यामलकीपिष्टासैन्धवघृष्टवारियोजिता ताम्रे।
जाता घनत्वमक्ष्णोर्जयति बहिर्लेपतः पीडाम् ॥ ४२ ॥

आर्कञ्च मूलमापोथ्य मुहूर्तं वारिणि न्यसेत्।
एतदाश्च्योतनं दृष्टं नयनामयनाशनम् ॥ ४३ ॥
निम्बस्य चोदुम्बरवल्कलस्य एरण्डयष्टीमधुचन्दनस्य।
पिण्डीविधेया नयने प्रकोपिते कफेन पित्तेन समीरणेन ॥४४॥

यदाक्षिशूलमन्येत सरुजं व्यक्तलक्षणम्।
वेदनानिग्रहार्थञ्च कुर्यादाश्च्योतनं तदा ॥ ४५ ॥
आश्च्योतनमभिष्यन्दी युञ्जीतार्वाक् दिनत्रयम्।
अञ्जनं पक्वदोषस्य नेत्ररोगेऽनिलात्मके ॥ ४६ ॥
शोथञ्च दाहरोगञ्च क्लेदकण्डू तथारुणम्।
अक्ष्णो रक्तप्रसेकञ्च क्षिप्रमाश्च्योतनं हरेत् ॥ ४७ ॥

ग्रीष्मे वर्षाशरत्काले ह्यस्रपित्तामयेषु च ।
मुहुर्मुहुः स्वादुशीतं क्रमादाश्च्योतनं तथा ॥ ४८ ॥
वातश्लेष्मणि हेमन्ते वसन्ते शिशिरेषु च ।
तीक्ष्णोष्णमम्लञ्चैव कार्य्यमाश्च्योतनं बुधैः ॥ ४९ ॥
पक्ष्मे च श्लैष्मिके व्याधौ पाणिः शुक्तिश्च वातिके ।
आश्च्योतने प्रमाणं स्या हे शुक्ती चाथ पैत्तिके ॥ ५० ॥
अष्टौदशद्वादशविंदवस्तु संलेखनस्नेहनरोपणेषु ।
आश्च्योतने च क्रमशो विधेया मात्रास्तु तिस्रो नयनामयेषु ॥५१॥
इत्याश्च्योतनमात्राविधिः ।

आश्च्योतने मारुतजे क्वाथो विल्वादिभिर्हितः ।
कोष्णः सैरण्डबृहती तर्कारीमधुशिग्रुभिः ॥ ५२ ॥
शूलघ्नं वारुणीदीच्य यष्टीसैन्धवसाधितम् ।
ह्रीवेरचक्रमञ्जिष्ठा दुम्बरत्वक्सुसाधितम् ॥
साम्भसापयसा तेन शूले चाश्च्योतन परम् ॥ ५३ ॥
सर्पिषाश्च्योतनं श्रेष्ठं सर्पिषा चोपनाहनम् ।
परिषेकः सुखोष्णेन मूर्ध्नितैलविधारणम् ॥ ५४ ॥
पूर्वभक्तं हितं सर्पिः क्षीरस्याप्यथ भोजनम् ।
जात्यापुष्पं घृतभ्रष्टं चक्षुष्यमुपनाहनम् ॥ ५५ ॥
तथा शावरकं लोध्रं घृतभ्रष्टं विडालकः ।
कार्यो हरीतकी तद्वद् घृतयुक्ता रुजापहा ॥ ५६ ॥
सुखाम्बुपिष्टैः संयुक्तं शर्करालोध्रसैन्धवैः ।
दग्ध्वा ससैन्धवं लोध्रं मधूच्छिष्टयुते घृते ॥
पिष्टमञ्जनलेपाभ्यां सद्यो नेत्ररुजापहम् ॥ ५७ ॥
ततः संपक्वदोषस्य प्रासमञ्जनमाचरेत् ॥ ५८ ॥
हेमन्ते शिशिरे चैव मध्याह्नेऽञ्जनमिष्यते ।

पूर्वाह्णे चापराह्णे च ग्रीष्मे शरदि चेष्यते ॥ ५९ ॥
वर्षास्वनभ्रे नात्युष्णे वसन्ते च सदैव हि।
प्रातः सायं च तत् कुर्य्या न च कुर्य्यात्सदैव हि ॥ ६० ॥
हरेणुमात्रां कुर्वीत वर्तिस्तीक्ष्णाञ्जने भिषक्।
प्रमाणं मध्यमे सार्द्धं द्विगुणं तु मृदौ भवेत् ॥ ६१ ॥
विडङ्गमात्रं त्वधमं मध्यं द्वियोत्तमन्त्वयम्।
रसक्रियाणां वर्तीनां प्रमाणं परिकीर्तितम् ॥ ६२ ॥
वैरेचनिकचूर्णन्तु द्विशलाकाविधीयते।
मृदौ तुत्रिशलाका स्याच्चतस्रः स्नेहिकेऽञ्जने ॥ ६३ ॥
सुवर्णरूप्यताम्रायः कांस्या स्यास्थिमयाः शुभाः।
शलाकाश्चाञ्जने कार्य्या अष्टांगुलमिता बुधैः ॥ ६४ ॥
बृहत्यैरण्डमूलत्वक् शिग्रुमूलं ससैन्धवम्।
अजाक्षीरेण पिष्टं स्या_द्वर्त्तिर्वाताक्षिरोगनुत् ॥ ६५ ॥
हरिद्रां मधुकं पथ्यां देवदारु च पेषयेत्।
आजेन पयसा श्रेष्ट मभिष्यन्दे तदञ्जनम् ॥ ६६ ॥
सैन्धवं दारु शुण्ठी च मातुलुङ्गरसो घृतम्।
स्तन्योदकाभ्यां कर्त्तव्य शुष्कपाके तदञ्जनम् ॥ ६७ ॥
शुष्काक्षिपाके हविषः पान मक्ष्णोश्च तर्पणम्।
घृतेन जीवनीयेन नस्य तैलेन चाम्बुना ॥ ६८ ॥
यावन्मज्जति पक्ष्माग्र भ्रुवोरन्तरनेत्रयोः।
तावच्च पूरयेन्नेत्रे तत उन्मीलयेच्छनैः ॥ ६९ ॥
मारुते दशधार्य्याणि पित्तेऽष्टौ वा शतानि।
निर्दिष्टानि कफे षड्वा व्याधौ व्याधिवशेन वा ॥ ७० ॥

इति तर्पणमात्रा।

परिषेके हितं चात्र पयः कोष्णं ससैन्धवम्।

रजनीदारुसिद्ध वा सैन्धवेन समायुतम् ॥ ७१ ॥
सर्पिर्युक्त स्तन्यघृष्टमञ्जन च महौषधम् ।
वाताभिष्यन्दशमन हित मारुतपर्य्यये ॥ ७२ ॥
वाताभिष्यन्दवच्चात्र वाते मारुतपर्य्यये ।
पूर्व तत्र हित सर्पि क्षीर वाप्यथ भोजनम् ॥ ७३ ॥
हृचादन्याह्वया चैव पञ्चमूली महत्यपि ।
सक्षीर कर्कटरसे सिद्ध वापि पिबेद् घृतम् ॥ ७४ ॥
इति हृचादन्याद्य तैलम् । इति वाताभिष्यन्द ।
अनेनैव विधानेन भिषक् तमपि साधयेत् ।
अभिष्यन्दमधिमन्थ मन्यानपि च पित्तजान् ॥ ७५ ॥
व्याधीनुपाचरेद्धीमा स्त्रोच्णे सुस्निग्धशीतलै ।
आश्च्योतने परिषेके पुटपाके सतर्पणे ॥ ७६ ॥
स्नेहैर्विरेचनैर्लेपैरक्षस्य च विमोचणे ।
प्रपुण्डरीकयष्ट्याह्व निशामलकपद्मके ॥
सितामधुसमायुक्ते सकपित्थैश्च रोगनुत् ॥ ७७ ॥
निम्बस्य पत्रे परिलिप्य लोध्र स्वेदाग्निना चूर्णमथापि कल्कम् ।
आश्च्योतन मानुषदुग्धमिश्र पित्तास्रवातापहमग्र्यमुक्तम् ॥ ७८ ॥
द्राक्षामधुकमञ्जिष्ठा जीवनीयै शृत पय ।
प्रातराश्च्योतन पथ्य शोथशूलाक्षिरोगनुत् ॥ ७८ ॥
चन्दनारिष्टपत्राणि यष्टी दार्वी ससैन्धवम् ।
पिष्टाम्भसा भवेत्सेक पित्तक्षौद्रसमन्वित ॥ ८० ॥
पैत्तिके चन्दनानन्ता मञ्जिष्ठाभिर्विडाणक ।
कार्य्य सपद्मयष्ट्याह्व सामीकाल्नीयकैस्तथा ॥ ८१ ॥
'धात्रीलोध्र' घृते भृष्ट शिलायुक्त सुवर्त्तितम् ।
प्रमृज्येद् गुटिका कृत्वा कुपिते लोचने यदि ॥ ८२ ॥

उदुम्बरफलं लोध्रं घृष्टा चात्यन्तधूपितम्।
साज्यं समाक्षिकं दाह शूलरोगाश्रुजिद्भवेत्॥ ८३॥
चन्दनं मधुकं लोध्रं जातिपत्राणि गैरिकम्।
प्रलेपो दाहरोगघ्न स्रोदाभिष्यन्दनाशनः॥ ८४॥
भृष्टाष्टतैन नागरतिरोटधात्रीघ्नन:शिलागुटिका।
उपर्युपरिमार्जनेन चपयति शूलं चणेनाच्णोः॥ ८५॥
गुन्द्रां शालिं सैन्धवं शैलभेदं दर्भामिक्षुं लोध्रकं वेतसञ्च।
दार्वीं द्राक्षांचन्दनं चोत्पलं वा स्त्रीणां स्तन्यं शर्करां चौद्रकञ्च ८६
पद्मात्पत्रं यष्टिकाह्वं हरिद्रा तालानन्ते चापि सङ्कल्पमर्वान्।
सिद्धं सर्पिः तर्पणे नावने च शस्तं चोरंश्चोतने चैव सेके॥ ८७॥
क्रियाः सर्वाः पित्तहर्य्यः प्रशस्तास्त्र्यहादूर्ध्वं चीरसर्पिश्च नस्यम्।
पालाशं स्याच्छोणितं चाञ्जनार्थं शङ्कया वा शर्कराचौद्रयुक्तम् ८८
तिक्तस्य सर्पिषः पानं बहुशश्च विरेचनम्।
अम्लाध्युषितशान्त्यर्थं कुर्य्यात्के पान् सुशीतलान्॥ ८९॥
तैल्वकं त्रैफलं सर्पि जीर्णं वा केवलं पिवेत्।
शिराव्यधं विना कार्य्यः पित्तष्यन्दहरो विधिः॥ ९०॥
कोष्णस्य सर्पिषः पानं विरेकासेकलेपनैः।
स्वादुशीतैः प्रशमयेच्छुक्तिकमञ्जनैस्तत.॥ ९१॥
प्रवालमुक्तावैडूर्य्य शङ्खस्फटिकचन्दनम्।
सुवर्णरजतचौद्र मञ्जनं शुक्तिकापहम्॥ ९२॥
धूमदर्शी पिवेत्सर्पिः सर्वपित्तामयं जयेत्॥ ९३॥

इति पित्ताभिष्यन्दः।

अभिष्यन्दमधिमन्थं रक्तोत्थमथवार्जुनम्।
शिरोत्पातं शिराहर्षं मन्यान् वातोद्भवान् गदान्॥

स्निग्धस्य कोष्णं नाज्येन शिरावेधैः शमं नयेत् ॥ ८४ ॥
तिरीटत्रिफलायष्टी शर्कराभद्रमुस्तकैः ।
पिष्टैः शीताम्बुना सेको रक्ताभिष्यन्दनाशनः ॥ ८५ ॥
लोध्रचूर्णं घृते भृष्टं रुजमाश्चशोतनं हरेत् ।
शर्करात्रिफलाचूर्णं मिदमाश्चशोतनं परम् ॥ ८६ ॥
लाक्षामधुकमञ्जिष्ठा लोध्रं कालानुशारिवा ।
प्रपुण्डरीकसंयुक्ताः सेको रोगहरो हितः ॥ ८७ ॥
कशेरुमधुकानाञ्च चूर्णमम्बरसंभृतम् ।
न्यस्तमप्स्वन्तरिच्या सुहितमाश्चशोतनं भवेत् ॥ ८८ ॥
नीलोत्पलोशीरकटंकटेरीकालीययष्टीमधुमुस्तलोध्रैः ।
सपद्मकैर्धौतघृतप्रदिग्धैस्त्रिस्रः प्रसेकाः प्रहिता प्रयुक्तान् ॥ ८९ ॥
रुजायां चातितीव्रायां स्वेदाश्च मृदवो हिताः ।
अक्ष्णोः समन्ततः कार्यं पातनञ्च जलौकसाम् ॥ १०० ॥
घृतस्य महतीमात्रां पीत्वा चार्त्तिं नियच्छति ।
पित्ताभिष्यन्दशमनो विधिश्चाप्युपपादितः ॥ १०१ ॥
कशेरुमधुकानाञ्च चूर्णमम्बरसंभृतम् ।
छागीचोरे घृते सेकः पित्तरक्ताभिघातजित् ॥ १०२ ॥
श्रीपर्णीपाटलाधात्री धातकीतिल्वकार्जुनात् ।
पुष्पाण्यथ सुहल्याश्च विबीतोभ्रञ्च तुल्यशः ॥ १०३ ॥
समञ्जिष्ठानि मधुना पिष्टानीक्षुरसेन वा ।
रौधिरस्यन्दशान्त्यर्थं मेतदञ्जनमिष्यते ॥ १०४ ॥
मृणालचन्दनोशीर पद्मकोत्पलयष्टिभिः ।
परिषेकं प्रकुर्वीत रक्तजेष्येतदेव तु ॥ १०५ ॥
सुमनःचारकं शङ्खं त्रिफलां मधुकं बलाम् ।
पित्तरक्तापहावर्त्तिः पिष्ट्वा दिव्येन वारिणा ॥ १०६ ॥

दार्वीपटोलं मधुकं सनिम्बं पद्मकोत्पलम्।
प्रपौण्डरीक चैतानि पचेत्तोये चतुर्गुणे ॥ १०७ ॥
विपाच्य पादशेषन्तु तत्पुनः कुडवं पचेत्।
शीते तस्मिन्मधुसिते दद्यात्पादांशिके ततः।
रसक्रियेयं दाहाऽश्रुरोगरक्तरुजापहा ॥ १०८ ॥
सर्पिः क्षौद्राञ्जनञ्च स्याच्छिरोत्पातस्य भेषजम्।
तद्वत्सैन्धवकासीसं स्तन्यपिष्टञ्च पूजितम् ॥ १०९॥
शीराहर्षेऽञ्जनं कार्यं फाणितं मधुसंयुतम्।
मधुना तार्क्ष्यशैलं वा कासीसं वा समाक्षिकम् ॥
वेतसाम्लं स्तन्ययुक्तं फाणितं तु ससैन्धवम् ॥ ११० ॥

इति रक्ताभिष्यन्दः।

कफजे लङ्घनं स्वेदो नस्यं तिक्तादिभोजनम्।
तीक्ष्णैः प्रधमनं कुर्य्यात्तीक्ष्णैरेवोपनाहनम् ॥ १११ ॥
उष्णैस्तथाश्च्योतनसंविधानैस्तथैव तीक्ष्णैः पुटपाकयोगैः ॥११२॥
अभिष्यन्देऽधिमन्थे च सञ्जाते श्लेष्मसम्भवे।
स्निग्धस्विन्नोत्तमाङ्गस्य स्निग्धतीक्ष्णैर्विरेचयेत् ॥ ११३ ॥
स्रावैः प्रपीडैः प्रधमैर्धूमैश्च विविधैर्मुहुः।
रूक्षैस्तीक्ष्णविरेकैश्च मलं सम्यग्विनिर्हरेत् ॥ ११४ ॥
रसाञ्जनेन वा लेपः पथ्याबिल्वदलैरपि।
वचाहरिद्राविश्वाभिस्तथानागरगैरिकैः ॥ ११५ ॥
शिलाह्वाश्वेतमरिचं लोध्रञ्च परिपूरितम्।
सितवस्त्रेण संबद्धं शस्तमक्ष्णोः प्रघर्षणात् ॥ ११६ ॥
निम्बपत्रैः कृतं चूर्णं लोध्रचूर्णसमन्वितम्।
वस्त्रबद्धं जले क्षिप्तं पूरणं नेत्ररोगनुत् ॥ ११७ ॥

फणिज्जकास्फोतकपित्थ विल्वधत्तूरपीलुसुरसार्ज्जभृङ्गैः ।
स्वेदं विदध्यादथवा प्रलेपं वर्हिष्टशुण्ठीसुरदारुकुष्टैः ॥ ११८ ॥
शुण्ठीनिम्बदलैः पिण्ड. सुखोष्णः स्वल्पसैन्धवः ।
धार्य्यश्चक्षुषिसंचेपा श्वोथकण्डूव्ययापहः ॥ ११९ ॥
ससैन्धवं लोध्रमथाज्यभृष्टं सौवीरपिष्टं सितवस्त्रबद्धम् ।
धायश्रीसनं तन्नयनस्य कुर्य्यात्सर्वाचिरोगप्रशमार्थमेतत् ॥१२०॥
द्वौ द्वौ भागौ रजन्योश्च भागिकौ धूमसर्षपौ ।
कफाभिष्यन्दजिद् भृष्टं पिष्टमाश्चीतमम्भसा ॥ १२१ ॥
लोध्रं सपेथ्यसपक्वं खदिराजाजिसर्षपैः ।
नागरारिष्टसिन्धूत्थैर्युक्तं दृषदिचूर्णितम् ॥ १२२ ॥
सिते वाससितद्बद्धं न्यसेत् स्वच्छाम्लकाञ्जिके ।
तद्दृष्णोः पूरणं कार्यं चक्षुसवर्त्मरोगजित् ॥ १२३ ॥
बल्कलं पारिजातस्य तैलसैन्धवकाञ्जिकम् ।
कफवाताचिशूलघ्नं तरुघ्नं कुलिशं यथा ॥ १२४ ॥
सौवीरं सैन्धवं तैलं मूर्वामूलं तथैव च ।
कांस्यपात्रे विघृष्टं स्या दृष्णोः शूलनिवारणम् ॥ १२५ ॥
सैन्धवं त्रिफलाव्योषं शङ्खनाभिसमुद्रजः ।
फेनीप्रलेपकः सर्ज्जो वर्तिः श्लेष्माचिरोगनुत् ॥ १२६ ॥
निम्बार्कपत्रसंपक्वं लोध्रं भागचतुष्टयम् ।
धूमसर्षपयोर्भागैः कफसेकः सुखांबुना ॥ १२७ ॥
नागरं त्रिफलानिम्ब वासानिम्बरसः कफे ।
माज्यं विल्वदलं घृष्टं पात्रे ताम्रमये दृढ़े ॥
शोथद्बद्दह्निनाधूमं छागक्षीरपरिप्लुतम् ॥ १२८ ॥
विल्वपत्ररसः पूतः साज्यः सिन्धुभयान्वितः ।
शुल्वे वराटिकां घृष्टा धूपितो.गोमयाग्निना ॥ १२९ ॥

पयसालोड़ितश्चाच्णोः पूरणाच्छोथशूलजित्।
अभिष्यंदेऽधिमन्थे च रक्तस्रावे च शस्यते ॥ १३० ॥

इति बिल्वाञ्जनम्।

सलवण कटुतैलं काञ्जिकं कांस्यपात्रे
घनितमुपलघृष्टं धूपितं गोमयाग्नौ।
सपवनकफकोपं छागदुग्धावसिक्तं
जयति नयनशूलं स्रावशोथं सरागम् ॥ १३१ ॥

इति कफाभिष्यंदः।

कोष्णमाश्चोतनं मिश्रैर्भेषजैः सान्निपातिके।
यष्टीं गुडूचीं त्रिफलां सदार्वीं सच्चामये सर्वगते पिबेद्वा।
आश्चोतनं सर्वरसेन दार्व्याः शस्तं सदा चौद्रयुतं नराणाम् ॥१३२॥

गुडूचीत्रिफलाक्काथो मधुना सह योजयेत्।
पीतः सर्वाक्षिरोगघ्नः कृष्णाचूर्णावचूर्णितः ॥ १३३ ॥
प्रपौण्डरीकयष्ट्याह्व दार्वीलोध्रैः सचन्दनैः।
एरण्डाम्बुयुतैः सेकः सर्वनेत्ररुजापहः ॥ १३४ ॥
श्वेतलोध्रं घृते भ्रष्टं चूर्णितं ताप्यतुल्यकम्।
उष्णांबुना विमर्दितं सेकः शूलहरः परः ॥ १३५ ॥

पिष्टैर्निम्बस्य पत्रैरतिविमलतरैः जातिसिन्धूत्थमिश्रा।
अन्तर्गर्भं दधाना पटुतरगुटिका पिष्टलोध्रेण भ्रष्टा ॥
तूलैः सौवीरकार्द्रैरतिशयमृदुभिर्वेष्टिता सा समन्तात्।
चक्षुः कोपोपशान्तिं चिरमुपरि दृशो भ्राम्यमाणा करोति ॥१३६॥

यष्टीगैरिकसिन्धूत्थ दार्वीतार्क्ष्यैः समांसकैः।
जलपिष्टैर्बहिर्लेपः सर्वनेत्ररुजापहः ॥ १३७ ॥
शिग्रुपल्लवनिर्यासः सुपिष्टस्ताम्रसंपुटे।
घृतेन सिधुना पीतो हन्ति शोथास्रवेदनाः ॥ १३८ ॥

षोडशभि सलिलपलै स्तथैव काण्टकार्य्या पय सिद्धाम् ।
श्रिला चिर विमृद्य तद्रस सर्व नेत्ररोगहर ॥ १३९ ॥
एरण्डपत्रवेष्टित विल्वच्छदकल्कनिक्षिप्त लोध्र.।
कुकूनपक्व पिष्ट सुसिन्धूद्भवेन मयुक्त ॥ १४० ॥
घनतरवस्त्रपरिस्रुतदारुहरिद्रा कषायमध्यगत ।
आश्च्योतनेन हन्यात्सर्वान्येवाक्षिशूलानि ॥ १४१ ॥
अयमे विधि सर्वो मन्यादिष्वपि शस्यते ।
अधिमन्थेषु सर्वेषु ललाटे व्यधयेच्छिराम् ॥
अशान्तौ सर्वथा मन्थे भ्रुवोरुपरिदाहयेत् ॥ १४२ ॥

इति सर्वाभिष्यन्द ।

जलोकापातन शस्त नेत्रपाके विरेचनम् ।
शिराव्यध वा कुर्वीत सेको लेपस्तु शक्रनुत् ॥ १४३ ॥
बिभीतकशिवाधात्री पटोलारिष्टवासकै ।
क्वाथो गुग्गुलुना पेय शोथाक्षिपाकरोगनुत् ॥ १४४ ॥
पिल्लञ्च सव्रण शुक्ररागार्दीश्च विनाशयेत् ।
एतैश्चापि घृत पक्व रोगास्ताश्च व्यपोहति ॥ १४५ ॥

इति षडङ्गगुग्गुलु क्वाथ घृतञ्च ।

आटरूपाभयानिम्ब धात्रीमुस्तकवल्कलै ।
रक्तस्राव कफ हन्ति चक्षुष्य वासकादिकम् ॥ १४६ ॥

इति वासकादि क्वाथ ।

वासाघन निम्बपटोलपत्रतिक्तामृताचन्दनवत्सकत्वक् ।
कलिङ्गधात्रीदहनं च शुण्ठी भूनिम्बधात्रीतिक्तार्कमिश्रीतम् ॥ १४७ ॥
पीत समागे क्वथिते कषायो न्टभिस्तु सुख्यानखिलाक्षिरोगान् ।
तैमिर्य्यकडूपटलार्बुदश्च शुक्र तथा सव्रणमव्रण च ॥ १४८ ॥

सदाहरागं सरुजं सपिच्छं हन्यात्समस्तानपि नेत्ररोगान् ।
वातामयान् पित्तकफामयांश्च वासादिकोऽयं मुनिभिः प्रदिष्टः ॥१४९॥

पथ्यास्तिस्रो बिभीतक्यः षट्धात्रो द्वादशैव तु ।
प्रस्थार्द्धे सलिले क्वाथ्यमष्टभागावशेषितम् ॥ १५० ॥
पित्ताभिष्यन्दमास्रावं रोगं वा तिमिरं जयेत् ।
सरभदाहशूलास्रङ् नाशनं दृक् प्रसादनम् ॥ १५१ ॥

इति नेत्रपाकः । इति सर्वनेत्ररोगाः ।

—०—

## अथ कृष्णागतरोगनिदानमाह ।

निमग्नरूपन्तु भवेद्धि कृष्णे सूच्येव विद्धं प्रतिभाति यच्च ।
स्राव स्रवेदुष्टमतीव यच्च तत्सव्रण शुक्रमुदाहरन्ति ॥ १५२ ॥
दृष्टेः समीपेन भवे तु यच्च नचावगाढं नच संस्रवेच्च ।
अवेदनं वा नच युग्मशुक्रं तत्सिद्धिमायाति कदाचिदेव ॥ १५३ ॥
स्यन्दात्मकं कृष्णगतं सचोषं शङ्खेन्दुकुन्दप्रतिमावभासम् ।
वैहायसाभ्रप्रतनुप्रकाश मथाऽव्रणं साध्यतमं वदन्ति ॥ १५४ ॥
गंभीरजातं बहुलञ्च शुक्रं चिरोत्थितञ्चापि वदन्ति कृच्छ्रम् ॥१५५॥
विच्छिन्नमध्यं पिशितावृतं वा चलं शिरासूक्ष्मसदृष्टिकृच्च ।
द्वित्वगतं लोहितमन्ततश्च चिरोत्थितं चापि विवर्जनीयम् ॥१५६॥
उष्णाश्रुपातः पिडिका च नेत्रे यस्मिन् भवेन्मुद्गनिभञ्च शुक्रम् ।
तदप्यसाध्यं प्रवदन्ति केचिदन्ये तु यत्तित्तिरिपक्षतुल्यम् ॥१५७॥
श्वेतः समाक्रामति सर्वतो हि दोषेण यस्याऽसितमण्डलन्तु ।
तमक्षिपाकात्ययमक्षिरोगं सर्वात्मकं वर्जयितव्यमाहुः ॥ १५८ ॥
मिथ्योपचाराद्रोगाणां दोषादाघाततोऽपि च ।
अजका जायते नेत्रे कृष्णाद्दृष्टिसमाऽसृजा ॥ १५९ ॥

अजापुरीषप्रतिमो रुजावान् सलोहितो लोहितपिच्छलाश्रु ।
विगृह्य कृष्णं प्रचयोऽभ्युपैति तच्चाजकाजातमिति व्यवस्येत् ॥१६०॥

अजापुरीषसङ्काशा मृद्वीकाफलसन्निभा ।
वातरक्तसमुत्थाना प्रायशस्त्वजका हि सा ॥ १६१ ॥
मूर्द्धाचिकर्णभ्रूगण्ड शङ्खचर्माश्रिताजका ।
जायते व्यथते नेत्रं मथ्यमानामिवान्तरा ॥ १६२ ॥
उष्णमसृक् स्रवत्यचि दूयते छिद्यते भृशम् ।
असाध्यरोगसंभूतां दृष्टिजाश्च विवर्जयेत् ॥
सुप्रभिन्नां च कठिनां चिरकालोत्थितामपि ॥ १६३ ॥

—o—

## अथ चिकित्सामाह ।

साध्यरोगसमुत्पन्नां कृष्णजान्त्वजकां जयेत् ॥ १६४ ॥
साध्यान्यवेध्य शुक्राणि स्निग्धस्याऽसृग्विमोक्षणैः ।
आश्चोतनमुखालेप घर्षणाञ्जनवस्तिभिः ॥
पुटपाकैश्च नस्यैश्च सामान्यं शुक्रभेषजम् ॥ १६५ ॥

धात्रीफलं निम्बकपित्थपत्रं यष्ट्याह्वलोध्रं खदिरं तिलाश्च ।
क्वाथः सशीतो नयने निषिक्तः सर्वप्रकारं विनिहन्ति शुक्रम् ॥ १६६ ॥

फणिज्झकरसे बीजं पलाशस्य विभावितम् ।
गोपयित्वा सुपिष्टं तत् चाञ्जनाच्छुक्रहृत्परम् ॥ १६७ ॥

जात्याप्रवालं मधुकं ससर्पि भृष्टं सुखोष्णाम्बु सुशीतरश्मिः ।
आश्चोतनं शुक्रहरं प्रदिष्टं शुक्रापहं क्षीरपयसा महार्हम् ॥१६८॥

सैन्धवं हस्तीमूलं ताम्रचूर्णं मनागरम् ।
धात्रीरसेन पिष्टा च ताम्रपात्रं प्रलेपयेत् ।
तत्पूते धूमयेच्चैनं गूढशुक्रं व्यपोहति ॥ १६८ ॥

शुद्धशुक्रे निशायष्टी शारिवाशावराम्भसा।
सेचयेन्नेत्रयोर्द्दृष्टौ क्षणांभोमग्नजां तथा ॥ १७० ॥
क्षुद्रपुन्नागपर्णेन परिभावितवारिणा।
श्यामाकाथाम्बुना वाथ सेवनं शुक्रनाशनम् ॥ १७१ ॥
सैन्धवं त्रिफलाकृष्णा कटुकाशंखनाभयः।
सताम्ररजसो वर्त्तिः शुद्धशुक्रविनाशिनी ॥ ७२ ॥
स्थिरशुक्रे घने चैव बहुशोपहरेदसृक्।
शिरः कायविरेकांश्च पुटपाकांश्च कारयेत् ॥ १७३ ॥
समुद्रफेनसिन्धूत्थ शङ्खदचाण्डवल्कलैः।
शिग्रुबीजयुतैर्वर्त्तिः शुक्रादीन्कृत्स्नवल्लिखेत् ॥ १७४ ॥
वटक्षीरेण संयुक्तं श्लक्ष्णकर्पूरज रजः।
क्षिप्रमञ्जनतो हन्ति शुक्रं वापि घनोन्नतम् ॥ १७५ ॥
शिरीषबीजनिर्वेश्य पिप्पलीसैन्धवैरपि।
शुक्रे प्रघर्षणं कार्य्य मथवा सैन्धवेन च ॥ १७६ ॥
वंशजारुष्करौ तालं नारिकेलञ्च तद्दहेत्।
विस्राव्य क्षारवच्चूर्णं भावयेत्करभास्थिजम्।
बहुशोऽञ्जनमेतस्या च्छुक्रवैवर्ण्य नाशनम् ॥ १७७ ॥
बहुशः पलाशकुसुमस्वरसैः परिभाविताजयत्यचिरात्।
नक्ताह्वबीजवर्त्तिः कुसुमचय इत्युचिरजमपि ॥ १७८ ॥
स्फटिकोपणयव्याह्व शङ्खगोदन्तसैन्धवैः।
पिष्टैः सचन्दनैर्वर्त्ति शुक्रघ्नीशिग्रुवारिणा ॥ १७९ ॥
मंष्टुष्यपिप्पलीचूर्णं सफेनं कांस्यभाजने।
सक्षौद्रं सैन्धवोपेत मञ्जनं शुक्रनाशनम् ॥ ८० ॥
समुद्रफेनमभयां ह्रीबेर सकुटन्नटम्।
पिष्ट्वा धात्रीफलक्वाथे वर्त्तिः स्याच्छुक्रनाशिनी ॥ १८१ ॥

चन्दनं सैन्धवं पथ्या पलाशतरुशोणितम् ।
मधुनाञ्जनयोगाः स्यु श्चत्वारः शुक्रनाशनाः ॥ १८२ ॥
त्रिफलाचन्दनं व्योषं मञ्जिष्ठानागरं निशा ।
प्रियंगुशारिवानन्ता यष्टिदारुञ्च चूर्णितम् ॥ १८३ ॥
क्षौद्रसैन्धसर्पिर्भिः संयोज्य विधिवत्पचेत् ।
पुटपाकः प्रशस्तोऽयं शुक्राणां लेखनः परः ॥ १८४ ॥

इति त्रिफलादिपुटपाकाञ्जनम् ।

लामज्जकोत्पलसिता चन्दनद्वयकार्षिकान् ।
चिप्ता च शारिवाप्रस्थं क्वाथयेत्सलिलाढकम् ॥ १८५ ॥
पादशेषं परिस्राव्य पचेदादर्विलेपनात् ।
भाजने लोहशैले वा तस्मातः सायमञ्जनम् ॥ १८६ ॥
प्रधानमेतच्छुक्रघ्नं व्रणशुक्रं शमं नयेत् ॥ १८७ ॥

इति लामज्जकाद्यमञ्जनम् ।

व्रणशुक्रप्रशान्त्यर्थं षडङ्गं गुग्गुलुं पिबेत् ।
शिरसो वा हरेद्रक्तं जलौकाभिश्च लोचनात् ॥ १८८ ॥
ससैन्धवत्रिवृत्क्वाथे त्रीन्वारान् पाचितं घृतम् ।
पीत्वा सर्वेषु शुक्रेषु शीघ्रं कुर्याच्छिराव्यधम् ॥ १८९ ॥
यष्ट्याह्वदार्व्युत्पलपद्मलाक्षा प्रपौण्डरीकं नलदं लता च ।
आश्चोतनं स्तोपयसाविपक्वं निहन्ति तस्रव्रणदाहशुक्रम् ॥१९०॥
श्यामामूलं कषायं वा मधुना व्रणशुक्रिणाम् ।
रसाभिदन्ताः शङ्खाणि धातत्र्य फलत्रुटिः ।
करञ्जबीजं लशुनो व्रणघ्नादि च भेषजम् ॥ १९१ ॥
सव्रणाव्रणगम्भीर त्वक् शुक्रघ्नमयाञ्जनम् ।
हितान्येतानि सर्वाणि नराणां व्रणशुक्रिणाम् ॥ १९२ ॥

कतकस्य फलं शङ्खं तिन्दुकं रूप्यमेव च।
कांस्ये निघृष्यस्तन्येन क्षतशुक्रार्त्तिरोगजित्॥ १८३॥
चन्दनं गैरिकं लाक्षा मालतीकलिकाः समाः।
व्रणशुक्रहरीवर्त्तिः शोणितस्य प्रणाशनी॥ १८४॥

इति चन्दनादिवर्त्तिः।

दन्तैर्दन्तिवराहोष्ट्र गजाश्वाजखरोद्भवैः।
सशङ्खमौक्तिकाम्भोऽधि फेनैर्मरिचपादिकैः॥ १८५॥
जलपिष्टैः क्षतासर्वै र्दन्तवर्त्तिरिति स्मृता।
तिमिरार्बुदकाचार्म्म व्रणशुक्रविनाशिनी॥ १८६॥

इति दन्तवर्त्तिः।

ताम्रे च मस्तुनोद्घृष्टं तुत्थकं श्यावतां गतम्।
सर्वाभिष्यन्दशुक्रार्म शिराशूलजिदञ्जनात्॥ १८७॥
दृचाण्डत्वक् शिलाशङ्ख रक्तचन्दनसैंधवैः।
तुल्यैरञ्जनयोगोऽयं पुष्पार्म्मादिविलेखनः॥ ८८॥
गोशकृत्क्षमयः सप्त पीताभाः क्षौद्रसयुताः।
घृष्टाशुक्रहराद्दष्टाः क्षतजस्य विशेषतः॥ १८८॥
एकं वा पुण्डरीकञ्च गवां क्षीरावशेषितम्।
रागाऽश्रुवेदनां हन्यात् क्षतपाकाजकास्तथा॥ २००॥
सौवीरमञ्जनं तुत्थं ताप्यं धात्री मनःशिला।
चतुर्हरेणुमधुकं लोहं शुक्रघ्नमञ्जनम्॥ २०१॥

इति पेषमञ्जनम्।

कुक्कुटाण्डकपालानि शङ्खकाचोऽपि चन्दनम्।
सैन्धवार्द्धांशसयुक्त मञ्जनं शुक्रलेखनम्॥ २०२॥
शङ्खस्रोतोऽञ्जनं लाक्षा मरिचं समनःशिलम्।

यवान्युदधिजं फेन ताम्रचूर्णं समाचिकम् ॥
श्यामावर्तिर्लिखत्येव शुक्रकाचार्मपिष्टकम् ॥ २०३ ॥
रसाञ्जनं सशैलेय कुंकुमं सुमनःशिला ।
शङ्खञ्च श्वेतमरिचं शर्करा चेति सप्तमम् ॥ २०४ ॥
एषा चन्द्रोदया नाम्ना वर्त्तिर्वैद्येन निर्मिता ।
हन्यान् पिल्लञ्च कण्डूञ्च शुक्रं सतिमिरार्वुदम् ॥ २०५ ॥
अय· सयष्टित्रिफला कणाना चूर्णानि तुल्यानि पुरेण नित्यम् ।
सर्पिर्मधुभ्या सह भक्षितानि सर्वाणि शुक्राणि निहन्ति शीघ्रम् २०६
शङ्खस्य भागायत्वार स्ततोऽर्द्धेन मनःशिला ।
मन.शिलार्द्धं मरिचं मरिचार्द्धेन सैन्धवम् ॥ २०७ ॥
एतच्चूर्णाञ्जनं श्रेष्ठं शुक्रयोस्तिमिरेषु च ।
पिञ्चटे मधुना योज्य मर्वुदे मस्तुना तथा ॥ २०८ ॥

इति चूर्णाञ्जनम् ।

स्नेहनस्याञ्जनैः शुक्रं निम्नमाशु समुद्धरेत् ।
शुक्रं करोति निर्मूलं पुटपाकै. सलेखनैः ॥ २०९ ॥
पटोलं कटुकां दार्वीं निम्बं वासां फलत्रिकम् ।
दुरालभां पर्पटकं त्रायन्तीञ्च पलोन्मिताम् ॥ २१० ॥
प्रस्थमामलकानान्तु क्वाथयेत्तल्वणेऽम्भसि ।
तेन पादावशेषेण घृतप्रस्थं विपाचयेत् ॥ २११ ॥
कल्कैर्भूनिम्बकुटज मुस्तायष्ट्याह्वचन्दनैः ।
सपिप्पलीकैस्तत्सिद्धं घृतं शुक्रयोर्हितम् ॥ २१२ ॥
घ्राणकर्णाक्षिवर्त्मत्वङ् मुखरोगव्रणापहम् ।
कामलाज्वरवीसर्प गण्डमालापहं परम् ॥ २१३ ॥

इति पटोलाद्यं घृतम् ।

द्राक्षाचन्दनमञ्जिष्ठा काकोलीद्वयजीरकैः।
सिताशतावरीमेदा पुण्ड्रह्वमधुकोत्पलैः॥ २१४॥
पचेज्जीर्णं घृतप्रस्थं समक्षीरं विचूर्णितैः।
हन्तितच्छुक्रतिमिरं रक्तराजीं शिरोरुजम्॥ २१५॥

इति द्राक्षाद्यं तैलम्।

कृष्णाविडङ्गमधुयष्टिकसिन्धुजन्म
विश्वौषधैः पयसिसिद्धमिदं छगल्याः।
तैलं नृणां तिमिरशुक्रशिरोऽक्षिशूल
पाकात्ययान् जयति नस्यविधौ सुयुक्तम्॥ २१६॥

इति कृष्णाद्यं तैलम्।

न विना शोणितं शुक्रक्षतपाकात्ययोजकाः।
भवन्ति रुधिरं तेन जलौकाभिरतो हरेत्॥ २१७॥

इति व्रणशुक्रम्।

अजकायां शिरां मुक्त्वा त्रिवृच्चूर्णैर्विरेचयेत्।
घृतवातहरैः सिद्ध मजकायां प्रयोजयेत्॥
सेके पाने तथाऽभ्यङ्गे भोज्ये दृष्टिविदांवरः॥ २१८॥
पक्ववटपत्रपुटके विधायमांसं बब्बूरकर्कव्याः।
पुटवद्विदध्याद्दत्ता तद्रससेको जयेदजकाम्॥ २१९॥
गवामस्थित्वचं कांस्ये विनिर्घृष्यसुखांबुना।
पूरयेदक्षि तेनाशु प्रशाम्यत्यजकामयः॥ २२०॥
सैन्धवं वाजिपादश्च गोरोचनसमायुतम्।
शैलत्वग्रससंयुक्तं पूरणं वाजकापहम्॥ २२१॥

—o—

प्रशकस्य कषायेण घृतप्रस्थं विपाचयेत्।
कल्कं दद्यात्तु सक्षीरं यथोक्तान् कर्षसम्मितान्॥ २२२॥

शारिवामधुकं लाक्षा चन्दनं नीलमुत्पलम्।
बलाचातिबलाचैव मृणालं पद्मकं तथा ॥ २२३ ॥
कार्षिकं सविषालोध्रं जीवनीय गणान्वितम्।
घृतमेतत्प्रयोक्तव्यं पाने नस्ये च पूरणे ॥ २२४ ॥
अजकामर्जुनं काचं पटलं शुक्रमेव च।
तथाक्षिरोगान् सकलान् वातपित्तोत्तरं जयेत् ॥ २२५ ॥
इति बृहच्छ्रृगकाद्यं घृतम्। इति कृष्णगतरोगाः।

—०—

## अथ दृष्टिगतरोगनिदानमाह।

प्रथमे पटले दोषो यस्य दृष्ट्यां व्यवस्थितः।
अव्यक्तानि च रूपाणि कदाचिदथ पश्यति ॥ २२६ ॥
दृष्टिर्भृश विह्वलति द्वितीय पटलङ्गते।
मक्षिकान् मशकान् केशान् जालकानि च पश्यति ॥ २२७ ॥
मण्डलानि पताकाश्च मरीचीन् कुण्डलानि च।
परिप्लवांश्च विविधान् वर्षमभ्रतमांसि च ॥ २२८ ॥
दूरस्थानि च रूपाणि मन्यते ससमीपतः।
समीपस्थानि दूरे च दृष्टेर्गोचरविभ्रमात् ॥ २२९ ॥
यत्नवानपि चात्यर्थं सूचीपाशं च पश्यति ॥ २३० ॥
ऊर्ध्वं पश्यति नाधस्तात्तृतीयं पटलं गते।
महान्त्यपि च रूपाणि छादितानीव चाम्बरैः ॥ २३१ ॥
कर्णनासाक्षिहीनानि विकृतानीव पश्यति।
यथा दोषश्च रज्येत दृष्टिर्दोषे बलीयसि ॥ २३२ ॥
अधःस्थे तु समीपस्थं दूरस्थं चोपरिस्थिते।
पार्श्वस्थिते तथा दोषे पार्श्वस्थानेव पश्यति ॥ २३३ ॥

समन्ततः स्थिते दोषे संकुलानीव पश्यति ।
दृष्टिमध्यस्थिते दोषे महद्वस्व पश्यति ॥ २३४ ॥
दोषे दृष्ट्या स्थिते तिर्य्य गेकं वै मन्यते द्विधा ।
द्विधास्थिते द्विधापश्ये द्दहुलञ्चाऽनवस्थिते॥ २३५ ॥
तिमिराख्य: स वै दोषयतुर्थं पटलं गतः ।
रुणद्धि सर्वतो दृष्टिं लिङ्गनाशमतःपरम् ॥ २३६ ॥
अस्मिन्नपि तमोभूते नातिरूढ़े महागदे ।
चन्द्रादित्यौ सनक्षत्रा वन्तरिक्षे च विद्युतः ॥ २३७ ॥
निर्मलानि च रूपाणि भ्राजिष्णूनि च पश्यति ।
स एव लिङ्गनाशस्तु नीलिकाकाचसंज्ञितः ॥ २३८ ॥
वातेन चात्र रूपाणि भ्रमन्तीव च पश्यति ।
आविलान्यरुणाभानि व्याविद्धानीव मानवः ॥ २३९ ॥
पित्तेनादित्य खद्योत शक्रचापतड़िद्गुणान् ।
नृत्यंतश्चापि शिखिनः सर्वं नीलञ्च पश्यति ॥ २४० ॥
कफेन पश्येद्रूपाणि स्निग्धानि च सितानि च ।
सलिलप्लावितानीव जालकानीव मानवः ॥ २४१ ॥
पश्येद्रक्तेन रक्तानि तमांसि विविधानि च ।
हरितान्यथ कृष्णानि पीतान्यपि च मानवः ॥ २४२ ॥
सन्निपातेन चित्राणि विप्लुतानीव पश्यति ।
बहुधा च द्विधा वापि सर्वाण्येव समन्ततः ॥
हीनाधिकाङ्गान्यथवा ज्योतींष्यपि च भूयसा ॥ २४३ ॥
पित्तं कुर्य्यात्परिम्लायि मूर्च्छितं रक्ततेजसा ।
पीतादिशस्तथोद्यन्तमादित्यमिव पश्यति ॥
विकीर्य्यमाणा खद्योतै र्वृक्षांस्तेजोभिरेव च ॥ २४४ ॥
वक्ष्यामि षड्विधं रागैर्लिङ्गनाशमतःपरम् ॥ २४५ ॥

रागोद्दणो मारुतजः प्रदिष्टोम्लायीचनीलश्च तथैव पित्तात्।
कफात्सितः शोणितजश्च रक्तः समस्तदोषप्रभवे विचि चः ॥२४६॥

अरुणं मण्डलं दृष्ट्यां स्थूलकाचारुणप्रभम्।
परिम्लायिनि रोगे स्यात् म्लायिनीलञ्च मण्डलम् ॥
दोषक्षयात् क्षयं चात्र कदाचित् स्यात्सुदर्शनम् ॥ २४७ ॥
अरुणं मंडलं वाता चञ्चलं परुषं तथा।
पित्ततो मंडलं नीलं कांस्याभं पीतमेव च ॥ २४८ ॥
श्लेष्मणा बहुलं स्निग्धं शङ्खकुन्देन्दुपाण्डुरम्।
चलत्पद्मपलाशस्थः शुक्लोविन्दुरिवाम्भसः ॥ २४९ ॥
मृद्यमाने तु नयने मंडलं तद्विसर्पति।
प्रवालपद्मपत्राभं मंडलं शोणितात्मकम् ॥ २५० ॥
दृष्टिरोगो भवेच्चित्रो लिङ्गनाशे त्रिदोषजे।
यथास्वं दोषलिङ्गानि सर्वेष्वेव भवन्ति हि ॥ २५१ ॥

यथा नरः पित्तविदग्धदृष्टिः कफेन चान्यस्त्विह धूमदर्शी।
यो ह्रस्वजात्यो नकुलान्धता च गम्भीरसंज्ञा च तथैव दृष्टिः॥२५२॥

षड्लिङ्गनाशाः षडिमे च रोगाः
दृष्ट्याश्रयाः षट् च षडेव च स्युः ॥ २५३ ॥

पित्तेन दुष्टेन यदा च दृष्टिः पीता भवेद्यस्य नरस्य किञ्चित्।
पीतानि रूपाणि च मन्यते यः स वै नरः पित्तविदग्धदृष्टिः ॥२५४॥
प्राप्ते तृतीयं पटलं च दोषे दिवानपश्येन्निशि वीक्ष्यते सः।
रात्रौ च शीतानुगृहीतदृष्टिः पित्ताल्पभावादपितानि पश्येत् २५५
तथा नरः श्लेषविदग्धदृष्टिस्तान्येव शुक्लानि च मन्यते तु ॥ २५६ ॥
त्रिषु स्थितोऽल्पः पटलेषु दोषोनक्तान्ध्यमापादयति प्रसह्य।
दिवाससूर्यानुगृहीतदृष्टिः पश्येत रूपाणि कफाल्पभावात् ॥२५७॥
शोकज्वरायासशिरोभितापैरभ्याहता यस्य नरस्य दृष्टिः।

सधूमकान् पश्यति सर्वभावान् सधूमदर्शीति नरः प्रदिष्टः ॥२५८॥
यो ह्रस्वजात्यो दिवसेऽतिकृच्छ्राद्ध्रस्वानि रूपाणि च तेन पश्येत्।
रात्रौ पुनर्यः प्रकृतानि पश्येत्स ह्रस्वजात्यो मुनिभिः प्रदिष्टः ॥२५९॥
विद्योतते यस्य नरस्य दृष्टिर्दोषाभिपन्ना नकुलस्य यद्वत्।
चित्राणि रूपाणि दिवा सपश्येत्स वै विकारो नकुलान्ध्यसंज्ञः २६०
दृष्टिर्विरूपाश्वसनोपसृष्टा सङ्कोच्यतेऽभ्यन्तरतस्तु याति।
रुजावगाढं च तमक्षिरोगं गम्भीरिकेति प्रवदन्ति तज्ज्ञाः ॥२६१॥
बाह्यौ पुनर्द्वौ विह संप्रदिष्टौ निमित्ततश्चाप्यनिमित्ततश्च।
निमित्ततस्तत्र शिरोभितापाद् ज्ञेयस्त्वभिष्यन्दनिदर्शनः सः ॥२६२॥
सुरर्षिगन्धर्वमहोरगाणां सन्दर्शनेनापि च भास्करस्य।
हन्येत दृष्टिर्मनुजस्य यस्य सलिङ्गनाशस्त्वनिमित्तसंज्ञः ॥ २६३ ॥
तत्राक्षिविस्पष्टमिवावभाति वैडूर्य्यवर्णा विमला च दृष्टिः।
विभिद्यते सीदति हीयते च नृणामभीघातहता च दृष्टिः ॥२६४॥
इति द्वादशदृष्टयः।

—०—

## अथासाध्यानाह।

वर्जयेदुपसर्गोत्थं[1] गम्भीरं ह्रस्वसंज्ञितम्।
काचांस्तु याप्यते सर्वा न्नकुलान्ध्यं तथैव च ॥ २६५ ॥
तिमिरं नेत्ररोगेषु कष्टं तद्यत्नतो हरेत् ॥

—०—

## अथ चिकित्सामाह।

मूलं दृष्टिविनाशस्य तिमिरं समुदाहृतम्।

१ निमित्तोत्थम्।

ऋषिभिस्तूदितं तस्मात्तस्य कुर्याच्चिकित्सितम् ॥ २६६ ॥
द्वे पादमध्ये पृथुसन्निवेशे शिरे गते ते बहुधा च नेत्रे ।
तम्प्रक्षणाच्छादनलेपनादीन् पादप्रयुक्तान्नयनं नयन्ति ॥ २६७ ॥
मलोष्णसंघट्टनलेपनाद्यै स्तादूषयन्ते नयनानि दुष्टाः ।
भवेद्वरो दृष्टि हितानि तस्मादुपानदभ्यञ्जनधावनानि ॥२६८॥
त्रिफलाघृतमधुयवाः पादाभ्यङ्गः शतावरीमुद्गाः ।
चक्षुष्यः संक्षेपाद् वर्गः कथितो भिषग्भिरयम् ॥ २६९ ॥
जीवन्ति शाकं सुनिषण्णकञ्च सतंडुलीयम्बरवास्तुकञ्च ।
चिल्ली तथा मूलकपोतिका च दृष्टेर्हितं शाकुनजाङ्गलञ्च ॥२७०॥
पटोलकर्कोटककारवेल्ल वार्ताकतर्कारिकरीरजानि ।
शाकानि शिग्वार्त्तगलानि चैव हितानि दृष्टे घृतसाधितानि ॥२७१
कट्वम्लगुरुतीक्ष्णोष्ण माषनिष्पावमैथुनम् ।
मद्यं बल्लूरपिण्याकं मत्स्य' शाकं विरूढकम् ॥
विदाह्यन्यन्नपानानि नेत्ररोगीविवर्जयेत् ॥ २७२ ॥
स्निग्धानि नस्याञ्जनशोधनानि पाकाः पुटानामथ तर्पणञ्च ।
घृतस्य पानान्यथ वस्तिकर्म्म कुर्यादभीक्ष्णं तिमिरेऽनिलोत्थे ॥२७३॥
रास्नाफलत्रयक्वाथे दशमूलरसे शृतम् ।
कल्केन जीवनीयानां घृतं तिमिरनाशनम् ॥ २७४ ॥
वातिके तिमिरे पक्वं दशमूलरसे घृतम् ।
त्रिवृच्चूर्णसमायुक्तं वैरेकार्थं प्रयोजयेत् ॥ २७५ ॥
त्रिफलादशमूलानां निर्यूहं दुग्धमिश्रितम् ।
गन्धर्वतैलसंयुक्तं प्रयुञ्जीतविरेचनम् ॥ २७६ ॥

इति वाततिमिरम् ।

शीताञ्जनाश्चोतनतर्पणैश्च नस्यैर्विरेकैर्मृदुभिर्घृतैश्च।
तिक्तप्रधानैस्तिमिरं निहन्यात्पित्तात्मकं शोणितमोक्षणैश्च ॥२७७॥

पित्तजे तिमिरे सर्पिं र्जीवनीयवरा शृतम्।
पाययित्वा शिरां विध्येत्त्रितैलाकुम्भसम्भवैः॥ २७८॥
चूर्णैर्माक्षिकसंयुक्तैरेचनं कारयेत्तराम्।
शीतलां लेपसेकांश्च शिरोवदनचक्षुषु॥ २७९॥
बलाशतावरीवीरा सितासैरेयकैः पचेत्।
त्रिफलासहितं सर्पि स्तिमिरघ्नमनुत्तमम्॥ २८०॥
शारिवाशावरोशीर मुक्तापद्मकचन्दनम्।
पिष्टं वर्त्तिकृतं हन्ति पित्तोत्थं तिमिरं नृणाम्॥ २८१॥

इति पित्ततिमिरम्।

तीक्ष्णानि नस्याञ्जनशोधनानि पाकाः पुटानामथ तर्पणानि।
घृतानि वासात्रिफलापटोलसंज्ञानि कुर्य्यात्तिमिरे कफोत्थे॥२८२॥

कफोद्भवे वराचव्या सृताक्काथ शृतं हविः।
पाययित्वा शिरां विध्ये द्रेचनं तिमिरे भिषक्॥ २८३॥
यूथीपथ्या कणाशुण्ठी कुसुम्भस्याम्बुनिर्भरः।
गोमूत्रक्कथिताशुण्ठी त्रिवृत्सिद्धं विरेचयेत्॥
नस्यं मरिचयष्ट्याह्व विडङ्गामरदारुभिः।
नैपालत्रिफलाशङ्ख कान्ताव्योषञ्च पेषिताः॥
वर्त्तीं कृत्वा बलासोत्थ मञ्जनं तिमिरं हरेत्॥ २८५॥
संसर्गे सन्निपाते च यथा दोषोदयक्रिया।
धात्रीरसाञ्जनं चौद्रं सर्पिर्भिस्तु रसक्रिया।
पित्तानिलाक्षिरोगघ्नी तैमिर्य्यपटलापहा॥ २८६॥
दध्यान्मसूरनिर्यूहं चूर्णितं कणसैन्धवम्।
तच्छृतं सघृतं भूयः पचेत् चौद्रं घने ततः॥
शीते चास्मिन् हितमिदं सर्वजे तिमिरे हितम्॥ २८७॥
मधुकामलकक्वाथं पित्तघ्नं तिमिरापहम्।

वचाद्यैः स्नानमिच्छन्ति श्रेयघ्नं तिमिरापहम् ॥ २८८ ॥
स्नानं कृष्णतिलैश्चापि चक्षुष्यं तिमिरापहम् ।
आमलैः सततं स्नानं परं दृष्टिबलावहम् ॥ २८९ ॥
चित्रकमूलत्रिफला पटोलयवसाधितं पिबेदम्भः ।
सघृतं निशिचक्षुष्यं तिमिराणि विशेषतो हन्ति ॥ २९० ॥
कल्कः क्वाथोऽथवा चूर्णं त्रिफलाया निषेवितम् ।
मधुना हविषा वापि समस्ततिमिरान्तकृत् ॥ २९१ ॥
त्रिफलालोहचूर्णं वा माक्षिकं मधुयष्टिका ।
साय मध्वान्वितं भुक्तं सद्यस्तिमिरनाशनम् ॥ २९२ ॥

इति सप्तामृतागुटिका ।

कुष्ठमुत्पलयष्टी च पिप्पलीरक्तचन्दनम् ।
अञ्जनच्चन्दनच्चैव सद्यस्तिमिरनाशनम् ॥ २९३ ॥
धात्रीसैन्धवकृष्णाभि स्तुल्याभिर्मरिचं समम् ।
क्षौद्रयुक्तं निहन्त्याशु पटलञ्च रसक्रिया ॥ २९४ ॥

लिह्यात्सदा वा त्रिफलां सुचूर्णितां
घृतप्रगाढ़ां तिमिरेऽथ पित्तजे ।
समीरणे तैलयुतां कफात्मके
मधुप्रगाढ़ां विदधीतयुक्तितः ॥ २९५ ॥

सघृतं वा वराक्वाथं शीलयेत्तिमिरामये ।
पायसं वा वरीयुक्तं शीतं समधुशर्करम् ॥ २९६ ॥
शतावरीपायस एव केवल स्तथा कृतो वामलकेषु पायसः ।
प्रभूतसर्पिस्त्रिफलोदकोत्तरो यवौदनो वा तिमिरं व्यपोहति ॥२९७॥
त्रिफलायाकषायस्तु धावनार्थे वरोगजित् ।
कवलोमुखरोगघ्नः पानतः कामलापहः ॥ २९८॥
पेयस्तं त्रिफलाक्वाथं सर्पिषासहयोजितम् ।

भुक्तोपरिपिबेत्सायं मासेनान्धोऽपि पश्यति॥ २९९॥
पुराणसर्पिस्तिमिरेषु सर्वतो हितं भवेदायसभाजनस्थितम्।
हितञ्च विद्यात्त्रिफलाघृतं सदा क्षतञ्च यत्सर्पविषाणनामभिः॥३००
त्रिफलायाः कषायेण प्रातर्नयनधावनात्।
जातारोगाविनश्यन्ति न भवन्ति कदाचनः॥ ३०१॥
जलगंडूषैः प्रातर्भूयोऽम्भोभिः प्रपूर्यमुखरन्ध्रम्।
निर्दयमुच्चरचि चपयति तिमिराणि ना सद्यः॥ ३०२॥
भुक्तापाणि तलं घृष्ट्वा चक्षुषोर्यद्दिदीयते।
अचिरेणैव तद्वारि तिमिराणि व्यपोहति॥ ३०३॥
त्रिफलाक्वाथयुक्तेन चौद्रमिश्रेण गुग्गुलुम्।
युक्तागन्धर्वतैलेन रेचनं तिमिरापहम्॥ ३०४॥
अञ्जनं गैरिकं पत्रं कर्पूरं नीलमुत्पलम्।
सनागपुष्पं मधुकं मञ्जनं तिमिरापहम्॥ ३०५॥
कंतकस्य फलं घृष्टं मधुना सह योजयेत्।
प्रभूततिमिरस्रावे धूपितञ्च प्रशाम्यति॥ ३०६॥
त्रिफलापायसं चूर्णं क्वाथयित्वा विचक्षणः।
घृतत्रिभागसयुक्त मभयाकर्षमेव च॥ ३०७॥
भक्तस्योपरिपानं स्या द्द्वौमांसेन भोजनम्।
पटलं तिमिरं काच मर्बुदं कंडुवेदनम्॥
ससप्तात्रोपयोगेन अन्धोऽपि तेन पश्यति॥ ३०८॥
कृष्णापथ्ये क्रमाद्वृद्धे भृङ्गराजरसप्लुते।
छायाशुष्के हतः सद्य स्तिमिरं वापि योजिते॥ ३०८॥

—०—

चिंगद्वागन्तु नागस्य गन्धपाषाणपञ्चकम्।
शुल्वातामकयो द्वौ द्वौ वङ्गस्यैकोऽञ्जनत्रयम्॥ ३१०॥

अथमूपागतं धातं पक्वं विमलमञ्जनम् ।
तिमिरान्तककल्लोके द्वितीयो भास्करो यथा ॥ ३११ ॥

इति भास्करवर्त्तिः ।

सलिलमकरन्दसर्पिस्तैलैः प्रत्येकमस्तु सप्ताहम् ।
विनिहन्ति तिमिरमचिरादंजनतश्चन्दनं रक्तम् ॥ ३१२ ॥
छागसर्पं सृतं न्यस्य चतुरश्चापि हृश्चिकान् ।
घोरकुम्भे त्रिसप्ताहं क्लेदयित्वा प्रमन्थयेत् ॥ ३१३ ॥
तत्र यन्नवनीतं स्यात् त्युष्णीयात्तेन कुक्कुटम् ।
अन्धस्तस्य पुरीषेण पश्यति ध्रुवमञ्जनात् ॥ ३१४ ॥

इत्यन्धसुदर्शकमञ्जनम् ।

कैतकस्य फलं शङ्खं त्र्यूषणं सैन्धवं सिता ।
फेनोरसाञ्जनं चौद्रं विडङ्गानि मनःशिला ॥ ३१५ ॥
कुक्कुटाण्डकपालानि वर्त्तिरेषाव्यपोहति ।
तिमिरं पटलं काचं मर्मोग्रक्वं सुखावती ॥ ३१६ ॥

इति सुखावतीवर्त्तिः ।

भागार्द्धं मरिचं द्वौ च पिप्पल्यर्णवफेनयोः ।
भागार्द्धं सैन्धवाच्छोणात् सौवीरस्य जलेन च ॥ ३१७ ॥
पिष्टं सप्तुष्टं चित्रायां चूर्णाञ्जनमिदं शुभम् ।
काचकंडूकफार्त्तानां मलानाञ्च विशोधनम् ॥ ३१८ ॥
रूप्यसर्षपसारचौद्रं रसौधाञ्चरारमक्रिया ।
प्रस्तासर्वाचिरोगेषु वैदेहपतिनिर्मिता ॥ ३१९ ॥

—०—

मुक्ताकर्पूरकाचा गुरुमरिचकणा सैन्धवैलाप्रवाला ।
शुण्ठीकङ्कोलकांस्यं त्रपु रजनि शिला शङ्खनाभ्यभ्रतुत्थम् ॥

१
दन्ताण्डत्वक् च साचचतजयुतगिवाक्कोतकं राजवर्त्तम्।
जातीपुष्पं तुलस्याक्कुसममभिनव बीजमस्यास्तथैव ॥३२०॥
पूतीकनिम्बाञ्जनभद्रमुस्तं सताम्रसारं रसगर्भयुक्तम्।
प्रत्येकमेषां खलु माषकैर्क्षं पाषाणपिष्टं मधुना च सूक्ष्मम् ॥३२१॥
भवन्ति रोगानयनाश्रिताये नितान्तमात्रोपचिताश्च तेषाम्।
विधीयते शान्तिरवश्यमेव मुक्तादिनानेन महाञ्जनेन ॥ ३२२ ॥
इति मुक्तादिमहाञ्जनम्।

हरीतकीवचाकुष्टं पिप्पलीमरिचानि च।
विभीतकस्य मज्जा च शङ्खनाभिर्मनःशिला ॥ ३२३ ॥
सर्वमेतत्समं कृत्वा त्वजाक्षीरेण पेषयेत्।
नाशयेत्तिमिरं कंडूपटलान्यर्बुदानि च ॥ ३२४ ॥
अधिकानि च मांसानि यश्च रात्रौ न पश्यति।
अपि द्विवार्षिकं पुष्पं मासेनैकेन शाम्यति ॥ ३२५ ॥
वर्त्तिश्चन्द्रोदया नाम नृणां दृष्टिविशोधिनी ॥
इति चन्द्रोदयावर्त्तिः।

हरीतकीहरिद्रा च पिप्पलीलवणानि च।
कंडूतिमिरजिद्वर्त्तिर्न क्वचित्प्रतिहन्यते ॥ ३२६ ॥
इति हरीतक्यादिवर्त्तिः।

त्रिफलाकुक्कुटाण्डत्वक् काशीशमयसोरजः।
नीलोत्पलं विडङ्गानि फेनश्च सरितां पतेः ॥ ३२७ ॥
आज्येन पयसा पिष्ट्वा भावयेत्ताम्रभाजने।
सप्तरात्रं स्थितं भूयः पिष्ट्वा क्षीरेण वर्त्तयेत् ॥ ३२८ ॥

---

१ घृतजमत्र कुङ्कुमम्।

एषा दृष्टिप्रदावर्त्तिं रन्धस्याऽभिन्नचक्षुषः ॥

इति त्रिफलाद्या वर्त्तिः ।

शङ्खस्य भागाश्चत्वार स्ततोर्धेन मनःशिला ।
मनःशिलार्धं मरिचं मरिचार्धेन सैन्धवम् ॥ ३२९ ॥
वारिणा तिमिरं हन्ति चार्वुदं हन्ति मस्तुना ।
पिचटं मधुना हन्ति स्त्रीचीरेण तथार्जुनम् ॥ ३३० ॥

इति शङ्खादिवटी ।

कतकं चन्दनं लाचां मधुकं मरिचोत्पलम् ।
तुत्थाद्यामलकाबीजं मनोह्वासुमनासिता ॥ ३३१ ॥
विडङ्गोदधिफेनैला शङ्खनाभिरसाञ्जनम् ।
एषा दृष्टिप्रदा नाम्ना वर्त्तिर्वैद्येन निर्मिता ॥ ३३२ ॥
नित्योपयोगात्पटलं तिमिरं शुक्रराजिकाम् ।
शुक्रं शुक्राचिरोगञ्च विहृद्वं वाऽर्म एव च ॥
निहन्ति सहसा रोगान् त्रिदोषानपि दुस्तरान् ॥ ३३३ ॥
अशीतिस्तिलपुष्पाणि षष्टिर्मागधितण्डुलाः ।
जातीकुसुमपञ्चाश न्मरिचानि च षोडश ॥ ३३४ ॥
एषा कुसुमिकावर्त्तिं र्गतं चक्षुर्निवर्त्तयेत् ॥

इति कुसुमिकावर्त्तिः ।

चन्दनत्रिफलापूग पलाशतरुशोणितैः ।
जलपिष्टैरियं वर्त्ति रशेषतिमिरापहा ॥ ३३५ ॥

इति चन्दनाद्यावर्त्तिः ।

व्योषोत्पलाभया कुष्टतार्क्ष्यैर्वर्त्तिः कृता हरेत् ।
अर्वुद पटलं काचं तिमिरार्मास्रुनिस्रुतिम् ॥ ३३६ ॥

इति व्योषाद्यावर्त्तिः ।

त्रिफलाव्योषसिन्धूत्थ यष्टीतुत्थरसाञ्जनम्।
प्रपौण्डरीकं जन्तुघ्नं लोध्रं ताम्रं चतुर्दश ॥ ३३७ ॥
द्रव्याण्येतानि संचूर्ण्य वर्त्तिः कार्य्यानभोम्बुना।
नागार्जुनेन लिखिता स्तम्भे पाटलिपुत्रके ॥ ३३८ ॥
नाशनी तिमिराणाञ्च पटलानां तथैव च।
सद्यः कोपञ्च स्तन्येन स्त्रिया विजयते ध्रुवम् ॥ ३३९ ॥
किंशुकस्वरसेनाथ पिलुपुष्पकरञ्जता।
अञ्जनाल्लोध्रतोयेन आसन्नतिमिरं जयेत् ॥ ३४० ॥
चिरसञ्छादिते नेत्रे वस्तमूत्रेण संयुता।
उन्मूलयत्य कृच्छ्रेण प्रसादं चाधिगच्छति ॥ ३४१ ॥

इति नागार्जुनाञ्जनम्।

वर्त्त्यार्कतूलैः कृतया शशचर्म्मगर्भया।
प्रदीप्तयामषी ग्राह्या सर्वनेत्रामयान्तकृत् ॥ ३४२ ॥

इति शशचर्म्मगर्भामषी।

त्रपुगैरिककर्पूर यष्टीनीलोत्पलाञ्जनम्।
नागकेसरसंयुक्त मशेषतिमिरान्त कृत् ॥ ३४३ ॥

शतावरीसूर्य्य[१]समा प्रदेया एला तथा वारणमूर्द्ध[२]तुल्या।
देयं विडङ्गं वसुभिः[३] समानमृतोः[४] समं चामलकाखिबीजम् ॥३४४॥
विष्णोर्भुजै[५]स्तुल्यगुणं मरीचं तद्विक्रमै[६]र्मागधिका प्रदेया।
चूर्णं समध्वाञ्जनकर्षमर्द्धमक्ष्यामयानां विनिवारणार्थम् ॥ ३४५ ॥

---

१ सूर्य्याः १२। २ वारणमूर्द्धानि २१। ३ वसवः ८। ४ ऋतवः ६। ५ विष्णुभुजाः ४। ६ विष्णुविक्रमाः ३।

कंडू सधूमं तिमिरं सुघोरं मर्माणि काचं पटलं त्रिदोषम्।
ये चापरे रक्तभवा विकारास्तांश्चामयांश्चूर्णवरो निहन्ता ॥३४६॥

इति शतावर्य्यादिचूर्णाञ्जनम्।

रसेन्द्रभुजगौ तुल्यौ ताभ्यां तुल्यमथाञ्जनम्।
ईषत्कर्पूरसंयुक्तमञ्जनं नयनामृतम् ॥ ३४७ ॥

इति नयनामृताञ्जनम्।

मनोह्लातुल्यकस्तूरी मांसीमलयनागरम्।
समांश शङ्खकर्पूर मशीतिगुणमञ्जनम् ॥
एतच्चूर्णीकृतं सर्वं षड्विधे तिमिरे हितम् ॥ ३४८ ॥
कृष्णसर्पवदने सहविष्कं दग्धमञ्जनमनिर्गतधूमम्।
चूर्णितं नलदपत्रविमिश्रं भिन्नसारमपि रक्षति चक्षुः ॥ ३४८ ॥
त्र्यूषण त्रिफलाचक्रं सैन्धवालमनःशिला।
कृ दोषदाहकण्डूघ्ना वर्त्तिः शस्ताकफापहा ॥ ३५० ॥
सौवीरमञ्जनं नित्यं पथ्यमक्ष्णोस्ततो भजेत्।
पञ्चरात्राष्टरात्रं वा स्रावणार्थं रसाञ्जनम् ॥
चक्षुस्तेजोमयं तेन भवेन्न श्लेष्मतो भयम् ॥ ३५१ ॥
सूतकं गन्धकोपेतं चाङ्गेरीरसमूर्च्छितम्।
अजनं दृष्टिदं नृणां नेत्रामयविनाशनम् ॥ ३५२ ॥
त्रिफलाभृङ्गमहौषध सर्पिर्गोमूत्रमध्वजाक्षीरे।
नागं सप्तनिषिक्तं करोति गरुडोपमं चक्षुः ॥ ३५३ ॥

—०—

त्रिफलाभसिभृङ्गरसे च हविषिमधुन्यजादुग्धे च पक्तेन सप्त
कृत्वः श्रीसेनोत्पादितयांजनं कार्यं प्रत्यहमंजनतश्चक्षुमा जिता
प्रियरोगेन वर्षायामपि पश्चेत्पिपीलिका दृष्टमयनमिति।

त्रिफलसलिलयोगे भृङ्गराजद्रवे च।
हविषि च विषकल्के चीर आजे मधूये॥
प्रतिपदमभितप्तसप्तधा शीसमेकम्।
प्रणिहितगति पश्चात्कारयेत्तच्छलाकाम्॥ ३५४॥
तिमिरपटलकण्डूस्रावरक्तप्रकोपा-
नुपचितबहुरोगान् सन्धिवर्त्माभिजातान्।
सवितुरुदयकाले सांजना व्यंजना वा
हरति नयनरोगाञ्छोध्यमाना शलाका॥ ३५५॥

इति शीसकशलाका।

शृङ्गवेरं भृङ्गराजं यष्टीतैलेन मिश्रितम्।
नस्यमेतेन दातव्यं महापटलनाशनम्॥ ३५६॥
पिण्डीतकमूलन्तु चौद्रेण सह योजयेत्।
अपक्वं पटलं हन्यात् पक्वञ्च परिशोधयेत्॥ ३५७॥
दिवा तु न प्रयोक्तव्यं नेत्रयोस्तीक्ष्णमञ्जनम्।
विरेकदुर्बलादृष्टि रादित्यं प्राप्यसीदति॥ ३५८॥
तस्मात्साध्यं निशायान्तु ध्रुवमञ्जनमिष्यते।
रात्रन्धगुणितं चापि पुष्पत्यञ्जनकार्पितम्॥ ३५९॥
दोषप्रतिनिहतस्तु हन्याद्दृष्टिबलं तथा।
यथावनाद्दृष्टिस्तिष्ठन् भूयः सञ्जनयेन्नयम्॥ ३६०॥
श्रान्ते भीते प्ररुदिते मद्यपीते नवज्वरे।
उष्णे वेगविघाते च अञ्जनं न प्रशस्यते॥ ६१॥
वैमल्यार्थं यथा दर्शे सतैलमवधारणम्।
तद्वदञ्जनसंयोगा दक्ष्णोर्मलनिवर्हणम्॥ ३६२॥
प्रसन्नविमलाशुद्धा स्थिरादृष्टिर्भवेदतः।
प्रातःकुर्य्यात्सदैवेत दञ्जनं व्याधिनाशनम्॥ ३६३॥

## अथ नेत्रनिर्म्माणप्रकारमाह ।

पुत्रिणीलिङ्गिनोलिङ्ग तन्नाशो लिङ्गनाशनः ।
सर्व्वेषु लिङ्गनाशेषु वेध्य एकः कफात्मकः ॥ २६४ ॥
नोनविंशतिवर्षस्य नाशीत्यभ्यधिकस्य च ।
नाप्यपूर्णस्य नोर्णां च लिङ्गनाशन्तु वेधयेत् ॥ २६५ ॥
कासश्वासक्षतक्षीण कर्णशूलाक्षिरोगिणाम् ।
गर्भिणीचामभीरूणां वृथाभुक्तवतोऽन्यथा ॥ २६६ ॥
मद्यतैलज्वराजीर्ण क्षयशुक्रविकारिणाम् ।
पटोलाद्येन संस्निग्ध त्रिफलाद्येन सर्पिषा ॥ २६७ ॥
लिङ्गनाशे समुद्भूते यथावद्विधिपूर्वकम् ।
विद्धादैवकृते छिद्रे नेत्रं स्तन्येन सेचयेत् ॥ २६८ ॥
ततो दृष्टेषु रूपेषु शलाकापहृतेच्छनैः ।
नयनं सर्पिषाभ्यज्य वस्त्रपट्टेन वेष्टयेत् ॥ २६९ ॥
ततो गृहे निराबाधे शयीतोत्तानमेव च ॥ २७० ॥
उद्गारकासं क्षवथुः ष्ठीवनं कम्पनानि च ।
तत्कालं नाचरेदूर्द्ध्वं यन्त्रणा स्नेहपीतवत् ॥ २७१ ॥
व्यहाव्यहाच्च धावेत कषायैरनिलापहैः ।
वायोर्भयाच्च्यहादूर्द्ध्वं स्वेदयेदक्षिपूर्ववत् ॥ २७२ ॥
दशरात्रस्थितं सम्यग् घृतं दृष्टिप्रसाधनम् ।
पश्चात्कर्म्म च मंसेव्यं लघ्वन्नं चापि न स्त्रियः ॥ २७३ ॥
रागः शोफोऽर्व्वुदश्चोषं बुद्बुदं केकराक्षिता ।
अधिमन्थादयश्चान्ये रोगाः स्युर्दुष्टवेधजाः ॥ २७४ ॥
अहिताचारतो वापि यथास्वन्तानुपाचरेत् ।
रुजायामक्षिरोगे वा भूयो योगान्निबोध मे ॥ २७५ ॥

सदुग्धा सघृता दूर्वा यवगैरिकशारिवाः।
मुखालेपः प्रयोक्तव्यो रुजारागोपशान्तये ॥ ३७६ ॥
पयस्याशारिवापत्रै मंञ्जिष्ठामधुकैरपि।
अजाक्षीरान्वितैर्लेपः सुखोष्णः पथ्य उच्यते ॥ ३७७ ॥
लोध्रसैन्धवमृद्वीका मधुकैः छागलं पयः।
शृतमाश्च्योतने पथ्यं रुजारोगविनाशनम् ॥ ३७८ ॥
वातघ्नसिद्धे पयसि सिद्धं सर्पिश्चतुर्गुणे।
काकोल्यादिप्रतिवापं प्रयुञ्ज्यात् सर्वकर्मसु ॥ ७९ ॥
शाम्यत्येवं नचेच्छूलं स्निग्धस्विन्नस्य मोचयेत्।
ततः शिरां दहेच्चापि मतिमान् कीर्त्तितं यथा ॥ ३८० ॥
दृष्टेरतः प्रसादार्थं संजनं शृणु मे शुभम्।
मेषशृङ्गस्य पुष्पाणि शिरीषधवयोरपि।
मालत्याश्चैव तुल्यानि मुक्ता वैदूर्य्यमेव च ॥ ३८१ ॥
अजाक्षीरेण संपिष्य ताम्रे सप्ताहमावपेत्।
प्रणिधाय च तद्वर्त्तीं योजयेदंजने भिषक् ॥ ३८२ ॥
स्रोतोजं विद्रुमं फेनं सागरस्य मनःशिला।
मरिचानि च तावन्ति कारयेच्चापि पूर्ववत् ॥ ३८३ ॥
मासेकेन समालिप्य पटलं दृष्टिहृत्क्षत्।
शम्बूकमांससंजातो रसः पीतोऽनुवासनम् ॥ ३८४ ॥
आढ़कीमूलमरिच हरितालरसांजनैः।
विद्धेऽक्षिण सगुडावर्त्ति र्योज्यादिव्यांबुपेषिता ॥ ३८५ ॥
त्रिफलाव्योषसिन्धूत्थैः घृतं सिद्धं पिबेन्नरः।
चक्षुष्यं भेदनं हृद्यं दीपनं कफनाशनम् ॥ ३८६ ॥
इति त्रिफलाद्यं घृतम्।
फलत्रिकाभीरुकषायसिद्धं दुग्धेन यष्टीमधुकल्कयुक्तम्।

सर्पिः समं चौद्रचतुर्थभागं हन्यात्त्रिदोषं तिमिरं सुदारुणम् ॥३८६

इति फलत्रिकाद्यं घृतम् ।

त्रिफलाव्यूषणं द्राक्षा मधुकं कटुरोहिणी ।
प्रपौण्डरीकं सूक्ष्मैला विडङ्गं नागकेसरम् ॥ ३८८ ॥
नीलोत्पलं शारिवे द्वे चन्दनं रजनीद्वयम् ।
कार्षिकैः पयसातुल्यैः त्रिगुणं त्रिफलारसम् ॥ ३८९ ॥
घृतप्रस्थं पचेदेतत् सर्वनेत्ररुजापहम् ।
तिमिरं दोषमास्राह्वं कामलां काचमर्बुदम् ॥ ३९० ॥
विसर्पं पटलं कण्डूं तोदनं क्षयथुं तथा ।
खालित्यं पलितञ्चैव केशानां पतनं तथा ॥ ३९१ ॥
अन्ये च बहवो रोगा नेत्रजावर्त्मजाश्च ये ।
तान्सर्वान्नाशयत्याशु भास्करस्तिमिरं यथा ॥ ३९२ ॥
न चैवाऽस्मात्परं किञ्चि द्भेषजं काश्यपादिभिः ।
दृष्टिप्रसादनं दृष्टं यथा स्यात्त्रिफलाघृतम् ॥ ३९३ ॥

मध्यमत्रिफलाद्यं घृतम् ।

त्रिफलायारसप्रस्थं प्रस्थं भृङ्गरसस्य च ।
वृषस्य च रसप्रस्थं शतावर्य्याश्च तत्समम् ॥ ३९४ ॥
अजाक्षीरं गुडूच्याश्च आमलक्यारसं तथा ।
प्रस्थं प्रस्थं समाहृत्य सर्वैरेभिर्घृतं पचेत् ॥ ३९५ ॥
कल्कैः कणासिताद्राक्षा त्रिफलानीलमुत्पलम् ।
मधुकं चीरकाकोली मधुपर्णी निदग्धिका ३९६ ॥
तत्साधुसिद्धं विज्ञाय शुभे भाण्डे निधापयेत् ।
ऊर्ध्वपानमधःपानं मध्ये पानञ्च शस्यते ॥ ३९७ ॥
यावन्तो नेत्ररोगास्तान् पानादेवापि कर्षयेत् ।

सरक्ते रक्तदुष्टे च रक्ते चातिस्रुतेऽपि च ॥ ३९८ ॥
नक्तांधे तिमिरे काचे नीलिका पटलार्बुदे ।
अभिष्यन्देऽधिमन्थे च पक्ष्मकोपे सुदारुणे ॥ ३९९ ॥
नेत्ररोगेषु सर्वेषु वातपित्तकफेषु च ।
अदृष्टिं मन्ददृष्टिञ्च कफवातप्रदूषिताम् ॥ ४०० ॥
स्रवतो वातपित्ताभ्यां सकण्डूासन्नदूर कृत् ।
गृध्रदृष्टिकरं सद्यो बलवर्णाग्निवर्द्धनम् ॥
सर्वनेत्रामयं हन्या त्रिफलाद्यं महाघृतम् ॥ ४०१ ॥

इति महात्रिफलाद्यं घृतम् ।

शतमेकं हरितक्या त्रिगुणञ्च विभीतकम् ।
धात्रफलानां चत्वारि वृषमार्कवयोः समम् ॥ ४०२ ॥
चतुर्गुणोदकं दत्वा शनैर्मृद्वग्निना पचेत् ।
चतुर्भागस्थितं ज्ञात्वा तदेवमवतारयेत् ॥ ४०३ ॥
शर्करामधुकं द्राक्षा मधुयष्टीनिदग्धिका ।
काकोलीक्षीरकाकोली त्रिफलानागकेसरम् ॥ ४०४ ॥
पिप्पलीचन्दनं मुस्तं त्रायमाणा तथोत्पलम् ।
घृतप्रस्थं समं क्षीरं कल्कैरेतैर्विपाचयेत् ॥ ४०५ ॥
हन्यात्तिमिरं काचं नक्तान्ध्यं शुक्रमेव च ।
तथा स्रावञ्च कण्डूञ्च क्षययुञ्च कषायताम् ॥ ४०६ ॥
कलुषत्वञ्च नेत्रस्य विन्दर्मपटलापहम् ।
बहुनात्र किमुक्तेन सर्वान्नेत्रामयान् हरेत् ॥ ४०७ ॥
यस्य चोपहता दृष्टिः सूर्याग्निभ्यां प्रशस्यते ।
तस्मै तद्वेषजं प्रोक्तं मूर्ध्वजत्रुगदापहम् ॥ ४०८ ॥
यथादर्शो मले नीते निर्मलत्वं नियच्छति ।
तद्वदेतेन प्रीतेन दृष्टिर्निर्मलतां व्रजेत् ॥ ४०९ ॥

वारिद्रोणद्वयश्चैव वृषभङ्गकयोस्तुले ॥ ४१० ॥

इति द्वितीयं महात्रिफलाद्यं घृतम् ।

कृष्णा सशर्करा द्राक्षा चतुर्मधुकयष्टिका ।
एकद्वित्रिचतुर्थांश भागाः सर्वेषु कल्पिताः ॥ ४११ ॥
मृदग्निना पचेद्धीमान् बहुदर्व्या विघट्टयन् ।
भास्कराख्यमिदं सर्पि र्ब्रह्मणा निर्मितं पुरा ॥ ४१२ ॥
तिमिरं शुक्तिकं हन्ति पिल्लं वाऽध्युषितानि च ।
श्रदृष्टिं मन्ददृष्टिञ्च दिवा नक्तान्ध्यमेव च ॥ ४१३ ॥
श्रस्योपयोगादत्यन्तं संहारादतिवर्त्तयेत् ।
वयस्तम्भनमायुष्यं बलीपलितनाशनम् ॥
प्रदरञ्च क्षयं श्वासं शुक्रमूत्रमलार्तिनुत् ॥ ४१४ ॥

इति भास्कराद्यं घृतम् ।

पटोलं कटुकं दार्वी निम्बवासाफलत्रिकम् ।
दुरालभापर्पटकं त्रायन्तीघनचन्दनम् ॥ ४१५ ॥
किराततिक्तयष्ट्याह्वे पिप्पलीकौटजं फलम् ।
सामज्जकं मृणालञ्च तत्फलं च समं भवेत् ॥ ४१६ ॥
एतैस्तु कार्षिकैः कल्कै विपचेत्सर्पिरुत्तमम् ।
चामलक्यारसं देयं शतावर्य्याः समन्वितम् ॥ ४१७ ॥
सुरदारुकषायञ्च भृङ्गराजरसं तथा ।
प्रस्थं प्रस्थञ्च गृह्णीया द्विप्रस्थं सर्पिषः पचेत् ॥ ४१८ ॥
पाने च भोजने दद्यात् सर्वमूर्धामयापहम् ।
विशेषादक्षिरोगघ्नं तिमिरं च त्रिदोषजम् ॥ ४१८ ॥
पटलं रक्तराजिञ्च व्रणशुक्रहरं तथा ।
काचार्म नाततमान्ध्यञ्च कण्डूपिल्लामयान्हरेत् ॥ ४२० ॥

वर्त्म गोथहरं चैव दृष्टिरोगकुलापहम्।
आसन्नतिमिराणाञ्च यश्च दूरान्न पश्यति॥
अदृष्टिं मन्ददृष्टिञ्च सर्व्वनेत्रामयापहम्॥ ४२१॥
बलवर्णकरं धन्यं दृष्टिपुष्टिविवर्द्धनम्।
महापटोलाद्यमिदं ख्यातं वैदेहनिर्म्मितम्॥ ४२२॥

इति महापटोलाद्यं घृतम्।

रास्नाफलत्रयक्वाथे दशमूले च तत्कृते।
कल्के च जीवनीयानां घृतं तिमिरनाशनम्॥ ४२३॥

इति रास्नाद्यं घृतम्।

विभीतकशिवाधात्री पटोलारिष्टवासकैः।
आढ़कीरससंसिद्धं तैलं तिमिरनुत्परम्॥ ४२४॥

इति विभीतकाद्यं तैलम्।

संपिष्य त्रिफलालोध्र मुशीराणि प्रियंगुकम्।
तैलमेतैर्विपक्वं स्या च्छ्रेष्ठं सिक्तं नस्यमुत्तमम्॥ ४२५॥

इति त्रिफलाद्यं तैलम्।

गवां शकृत् क्वाथविपक्व मुत्तमं हितञ्च तैलं तिमिरे च नस्यतः।
घृतं हितं केवलमेव पैत्तिके तथाऽणुतैलं पवनासृगुत्थयोः॥ ४२६॥

इति गोमयतैलम्।

भृङ्गराजरसप्रस्थे यष्टीमधुपलेन च।
तैलस्य कुडव पक्वं सद्यो दृष्टिं प्रसादयेत्॥
नस्याद्वलीपलितघ्नं मासेनैतन्न संशयः॥ ४२७॥

इति भृङ्गराजतैलम्।

भृङ्गप्रस्थे तैलात् कुडवं तथा पलञ्च मधुकस्यापि।
क्षीरप्रस्थविपक्वं गतमपि चक्षुर्विनिवर्त्तयेत्॥ ४२८॥

इति द्वितीयभृङ्गराजतैलम्।

तैलस्य पचेत् कुड़वं मधुकस्य पलेन कल्कपिष्टेन ।
आमलकरसप्रस्थं चीरप्रस्थेन संयुतं कृत्वा ॥ ४२९ ॥
अजितं नाम्ना तैलं तिमिरं हन्यान्निमिप्रोक्तम् ।
विमलां कुरुते दृष्टिं नष्टामप्यानयेन्नयने ॥ ४३० ॥

इत्यजितं तैलम् ।

नीलोत्पलं मधुकनागरपुण्डरीक
द्राक्षासुयष्टीमधुकांशुमतीकषाय ।
कण्टारिकामलकशाबर चोध्रगन्धाः
कासीसशर्करबलाह्वयभाय रास्ना ॥ ४३१ ॥
मञ्जिष्टया सह समैरपि सूक्ष्मपिष्टै-
स्तैलं पचेत्तु पयसा च चतुर्गुणेन ।
नस्यं नृणां तिमिरकाचनिशान्ध्ययुक्तान्
पाकात्ययान् सपटलार्जुननीलिकांश्च ॥ ४३२ ॥
पिल्लार्बुदार्मरुधिरस्रुतिवर्त्म कण्डून्
स्यन्दं जयेद्विहितभोजनभङ्गुराणाम् ।
बाधिर्यमर्दितहनुग्रहदन्तचालं
नासास्यपूयगलगण्डकृकाटिकार्त्तान् ॥ ४३३ ॥
कर्णाधिशूलदशनामयशीर्षरोगां
जिह्वामयान् जयति कण्ठगतांश्च सर्वान् ।
अभ्यञ्जनेन नियतं शिरसि प्रयत्नात्
सर्वान्निहन्ति वदनाक्षिशिरोविकारान् ॥ ४३४ ॥

इति नीलोत्पलाद्यं तैलम् ।

क्षीरकर्षभकौ मेदा द्राक्षांशुमती निदग्धिकाहण्डे ।
मधुकं घनाविड़ङ्गं मञ्जिष्ठा शर्करारास्ना ॥ ४३५ ॥

नीलोत्पलं श्वदंष्ट्रा प्रपौण्डरीकं पुनर्नवालवणम्।
पिप्पल्यः सर्व्वेषां भागैरर्द्धांशिकैः पिष्टैः॥ ४३६॥
तैलं वा यदि सर्पिर्दत्वा क्षीरं चतुर्गुणं पक्वम्।
धात्र्यैय निर्मितमिदं तैलं नृपवल्लभं नाम्ना॥ ४३७॥
तिमिरं पटलं काचं नक्तान्ध्यमर्व्वुदं तथान्ध्यञ्च।
श्वेतञ्च लिङ्गनाशं नाशयति नीलकाव्यङ्गम्॥ ४३८॥
मुखनासादौर्गन्ध्यं पलितञ्च कालजं दन्तुस्तम्भम्।
श्वासं कासञ्च हिक्कां शोषं स्तम्भं तथान्यांश्च॥ ४३९॥
मुखजाड्यमर्द्धभेदं रोगं बाहुग्रहं शिरःस्तम्भम्।
रोगानथोर्ध्वजत्रोः सर्व्वानचिरेण नाशयति॥ ४४०॥

इति नृपवल्लभं तैलम्।

पिप्पलीमधुकं द्राक्षा शर्कराजीवकर्षभौ।
सोत्पलं पुण्डरीकञ्च मधुपर्णीफलत्रयम्॥ ४४१॥
धावनीक्षीरकाकोली मञ्जिष्ठाबृहतीबला।
पुनर्नवाशताह्वा च विड़ङ्गं गोक्षुरस्थिरा॥ ४४२॥
एतान्यर्द्धपलानीह श्लक्ष्णपिष्टानि पाचयेत्।
त्रिफलाभृङ्गवासानां प्रपौण्ड्रप्रस्थसम्मितान्॥ ४४३॥
बीजसारोवरस्तस्य प्रस्थमेकं तु दापयेत्।
ग्रष्टीक्षीरस्य प्रस्थौ च द्वौ द्वौ तस्य प्रदापयेत्॥ ४४४॥
मृदग्निना पचेत्पात्रे शनैः सम्यक् पचेद्भिषक्।
त्रिफलाद्येन पयसा सम्यग् दृष्टन्तु मानवम्॥ ४४५॥
मोदकेनाभयाद्येन कृत्वा संशोधनं ततः।
यथोक्तेन विधानेन भिषग्वश्यं प्रदापयेत्॥ ४४६॥
तिमिरे च रात्र्यान्ध्ये शुक्रे काचे चतुर्विधे।
आसन्नं यो न पश्येत यश्च दूरान्न पश्यति॥ ४४७॥

प्रकाशमायतं वा यो नष्टदृष्टिश्च मानवः ।
मन्ददृष्टिः स्वप्नदृष्टि रधोदृष्टिश्च योजयेत् ॥ ४४८ ॥
अतिरिक्ते प्रदिष्टे च रक्ते वाताश्रिते तथा ।
वातपित्तप्रदुष्टे च्चि पित्तश्लेष्मप्रदूषिते ॥ ४४९ ॥
कड्यूते च स्रवति पित्तेनात्याकुलाचता ॥ ४५० ॥
विद्युत् खद्योतवत्पश्ये त् सूर्य्यचन्द्रसमप्रभाम् ।
सर्वदा चक्रता दृष्टिः सर्वनेत्रविकारनुत् ॥ ४५१ ॥

इति महापिप्पल्याद्य तैलम् । इति तिमिरोपक्रमः ।

—०—

## अथ क्रमो काचचिकित्सामाह ।

काचे रक्तं जलौकाभिः हृत्वा पूर्वोक्तमाचरेत् ॥ ४५२ ॥
शाणार्द्धं मरिच द्वे च पिप्पल्यर्णवफेनयोः ।
शाणार्धं सैन्धवाच्छाण नवसौवीरकाञ्जनात् ॥ ४५३ ॥
पिष्ट सूक्ष्म शिलायाञ्च चूर्णाञ्जनमिदं शुभम् ।
कण्डूकाचकफार्त्तानां मलानाञ्च विशोधनम् ॥ ४५४ ॥

इति मरिचादिचूर्णाञ्जनम् ।

समेषशृङ्गाञ्जनभागसम्मितः शङ्खाञ्जनः काचमलं व्यपोहति ॥४५५॥

इति मेषशृङ्गाद्यञ्जनम् ।

शिलासैन्धवकासीस शङ्खव्योषरसांजनैः ।
सक्षौद्रैः काचशुक्रार्म तिमिरघ्नोरमक्रिया ॥ ४५६ ॥
टोयाधिर्त्तिमिरान्धे च तिमिरोक्तं क्रम हितम् ॥ ४५७ ॥
वचात्रिफ़लचन्दनकुण्डली च भूनिम्बनिम्बे रजनी सवासा ।
मस्यं सलस्य क्वथिताष्टभागं पिबेत्सुजीर्णे नकुलान्ध्यरोगे ॥ ४५८ ॥

काचं निशान्ध्यं तिमिरं तथाऽन्यान्नेत्रामयांस्तस्य च वर्त्मसंधौ।
चिरप्रवृत्तानचिरेण हन्ति वज्रो यथाद्रीन् सुराजमुक्तः॥ ४५८॥

—०—

## अथ नक्तान्ध्यचिकित्सामाह।

करञ्जपद्मकिञ्जल्कं चन्दनोत्पलगैरिकैः।
गोशकृद्रससंपिष्टैः नक्तान्ध्ये ऽञ्जनमिष्यते॥ ४६०॥
रसाञ्जनं निशादारु जातिपत्ररसो मधु।
नक्तान्ध्यतांजयेदेत दञ्जनं साधुयोजितम्॥ ४६१॥
रसांजनं हरिद्रे द्वे मालतीमधुपल्लवाः।
गोशकृद्रससंयुक्ता वर्त्तीरात्र्यन्धनाशिनी॥ ४६२॥
जातीपत्ररसक्षौद्र निशाद्वयरसांजनैः।
नक्तान्ध्यमञ्जनं हन्यात् कृष्णायागोमयान्वितम्॥ ४६३॥
दध्नाविघृष्टं मरिचं रात्र्यन्ध्याञ्जनमिष्यते।
पिप्पल्योऽपि हितास्तद्व द्गोशकृद्रसभाविताः॥ ४६४॥
कणाच्छागयकृन्मध्ये पक्वा तत्राणुपेषिता।
अचिराद्धन्ति नक्तान्ध्यं तद्वत्सक्षौद्रसूषणम्॥ ४६५॥
पचेच्च गोधायकृदर्द्धपाटितं सुपूरितं मागधिकाभिकाभिरग्निना।
निषेवितं तद्यकृदञ्जनेन निहन्ति नक्तान्ध्यमसंशयं खलु॥ ४६६॥
इति रात्र्यन्ध्योपक्रमः।

—०—

## अथ दृष्टिरोगचिकित्सामाह।

नीलोत्पलस्य किञ्जल्कं गैरिकञ्च शकृद्रसम्।
गुटिकाञ्जनमेतस्या द्दिनरात्र्यन्धयोर्हितम्॥ ४६७॥

नदीजशंखत्रिकटून्यथाञ्जनं
मनःशिलार्द्धं च निशे गवां शकृत् ।
सचन्दनेयं गुटिकाथ चाञ्जने
प्रशस्यते रात्रिदिनेष्वपश्यताम् ॥ ४६८ ॥
सूर्यदर्शनदग्धायां क्रियां शीतां प्रयोजयेत् ।
क्लिन्नं घृष्टं घृतोपेत मञ्जनञ्चोपशस्यते ॥ ४६९॥
रसांजनं घृतं चौद्रं तालीसं स्वर्णगैरिकम् ।
गोशकृद्रससयुक्तं पित्तोपहतदृष्टये ॥ ४७० ॥
काश्मरीपुष्पमधुक दार्वीलोध्ररसांजनैः ।
सचौद्रमञ्जन कुर्य्यात् पित्तव्याधिप्रशान्तये ॥ ४७१ ॥
इति दृष्टिगतरोगोपक्रमः ।

—०—

## अथ शुक्लगतरोगनिदानमाह ।

प्रस्तार्य्यर्मतनुस्तीर्णं श्यावं रक्तं निभं सिते ।
सश्वेत मृदुशुक्लार्म्म शुक्ले तद्वर्द्धते चिरात् ॥ ४७२ ॥
पद्माभ मृदुरक्तार्म्म यन्मांसञ्चीयते सिते ।
पृथुमृद्वधिमांसार्मं बहुलञ्च यकृन्निभम् ॥ ४७३ ॥
स्थिरं प्रस्तारिमांसाढ्यं शुष्कं स्नाय्वर्मपञ्चमम् ॥ ४७४ ॥
श्यावाः स्युः पिशितनिभास्तु बिन्दवो ये ।
शुक्त्याभाः सितनियताः सशुक्तिसञ्ज्ञः ।
एकोयः शशरुधिरोपमश्च बिन्दुः
शुक्लस्थो भवति तदर्जुनं वदन्ति ॥ ४७५ ॥
श्लेष्ममारुतकोपेन शुक्ले मांसं समुन्नतम् ।
पिष्टवत् पिष्टकं विद्धि मलाक्तादर्शसन्निभम् ॥ ४७६ ॥

जालाभः कठिनशिरो महान् सरक्तः
सन्तानः स्मृत इह जालसंज्ञितन्तु।
शुक्लस्थाः सितपिड़िकाः शिराहृतायाः
स्ताभ्यादसितसमीपजाः शिराजाः ॥ ४७७ ॥
कांस्याभोऽस्मृदुरथ वारिबिन्दुकल्पो
विज्ञेयो नयनसिते बलाससंज्ञः ॥ ४७८ ॥

—०—

## अथ चिकित्सामाह।

प्रस्तार्यर्म च स्नाय्वर्म तथैवार्माधिसंज्ञकम्।
लोहितार्म च शुक्लार्म कृष्णं प्राप्तानि छेदयेत् ॥ ४७९ ॥
अर्मवाल्यं दधिनिभं नीलं रक्तमथापि वा।
धूसरं तनुयच्चापि शुक्लवत्तमुपाचरेत् ॥ ४८० ॥
कृष्णालोहरजस्ताम्रं शंखविद्रुमसिन्धुजैः।
समुद्रफेनकाशीश स्रोतोऽञ्जनसुमस्तुभिः।
लेपनं वा कृतं नस्यं परमुत्तममर्मणि ॥ ४८१ ॥
पिप्पलीत्रिफलालाचा लोहचूर्णं ससैन्धवम्।
भृङ्गराजरसे पिष्टं गुटिकांजनमिष्यते ॥ ४८२ ॥
अर्म सतिमिरं काचं कंडुं शुक्रं तथार्जुनम्।
अजकां नेत्ररोगांश्च हन्यान्निरवशेषतः ॥ ४८३ ॥
संचूर्णमरिचाऽथे च रजन्यारसमर्दिते।
लेपनादर्मणां नाशं करोत्येष प्रयोगराट् ॥ ४८४ ॥

पुष्पाघृताच्च जसितोदधिफेनशङ्ख
सिन्धूत्थगैरिकशिलामरिचैः समांशैः।

पिष्टैस्तु माचिकरसेन रसक्रियेयं
हन्त्यर्मकाचतिमिरार्जुनवर्त्मरोगान् ॥ ४८५ ॥
क्रियां शुक्लामये कुर्य्यात्पित्ताभिष्यन्दजिच्छुभाम् ॥ ४८६ ॥
बलासाह्वयपिष्टे तु कार्य्यं शोणितमोचणम् ।
कफाभिष्यन्दवत्सर्वं क्रमं कुर्य्याद्विचक्षणः ॥
अञ्जनं कट्फलं व्योषं बीजपूररसाञ्जनैः ॥ ४८७ ॥
अर्जुने शर्करा मस्तु चोद्रैराश्च्योतनं हितम् ।
शङ्खं चौद्रेण संयुक्तः कतकः सैन्धवेन वा ॥
सितयाऽर्णवफेनो वा पृथगंजनमर्जुने ॥ ४८८ ॥

इति शुक्लजाः ।

—०—

## अथ सन्धिजानां निदानमाह ।

पक्वः शोथः सन्धिजो यः सतोदः पूयस्रावी सोऽत्र पूयालसाख्यः ।
ग्रन्थिर्नाल्पो दृष्टिसन्धावपाकी कण्डूप्रायो नीरुजस्तूपनाहः ॥४८९॥
गत्वा सन्धीनश्रुमार्गेण दोषाः कुर्युस्रावांस्तच्चणैः स्वैरुपेतान् ।
तं हि स्रावं नेत्रनाडीति चैके तस्या लिङ्गं कीर्त्तयिष्ये चतुर्धा ॥४९०
पाकात्सन्धौ संस्रवेद्यस्तु पूयं पूयस्रावोऽसौ गदः सर्वजस्तु ।
श्वेतं सान्द्रं पिच्छिलं यः स्रवेत्तु श्लेष्मास्रावः सविकारो मतस्तु॥४९१॥
रक्तास्रावः शोणितोत्थो विकारः रक्तं चोष्णं संस्रवेत्तत्प्रभूतम् ।
हारिद्राभं पीतमुष्णं जलाभं पित्तात् स्रावं संस्रवेत्सन्धिमध्यात् ४९२
ताम्रा तन्वी दाहशूलोपपन्ना रक्तात् ज्ञेया पर्वणी वृत्तशोथा ।
जाता सन्धौ कृष्णशुक्लेऽलजी स्यात्तस्मिन्नेवख्यापिता पूर्वलिङ्गैः ४९३
क्रिमिग्रन्थिर्वर्त्मनः पक्ष्मणश्च कंडूं कुर्युः क्रिमयः संधिजाताः ।
नानारूपावर्त्मशुक्लान्तसन्धौ चरन्त्यन्तर्लोचनं दूषयन्तः ॥ ४९४ ॥

—०—

## अथ चिकित्सामाह।

पूयालसे शिरां भित्त्वा ततस्तमुपनाहवत्।
नेत्रपाकविधिं कुर्यात् परं मुक्ताञ्जनं हितम्॥ ४९५॥
भित्त्वोपनाहं कफजं पिप्पलीमधुसैन्धवैः।
विलिखेन्मण्डलाग्रेण प्रच्छयेद्वा समन्ततः॥ ४९६॥
त्रिफलाम्रतकासीस सैन्धवैः सरसांजनैः।
रसक्रिया कृमिग्रन्थौ भिन्ने स्यात्प्रतिसारणम्॥ ४९७॥
पर्वणीं पिटिकां सन्धिभागे छिन्द्यादसंशयम्।
हितं चाप्यधिके छिन्ने च्योतनं मधुसैन्धवैः॥ ४९८॥
स्रावेषु त्रिफलाक्वाथं यथा दोषं प्रयोजयेत्।
क्षौद्रेणाज्येन पिप्पल्या मिश्रं विध्येच्छिरां तथा॥ ४९९॥
पथ्याक्षधात्रीफलमध्यबीजैस्त्रिद्व्येकभागैर्विदधीत वर्त्तिम्।
तयाऽञ्जयेदश्रुमतिप्रवृद्धं मक्ष्णोर्हरेत्कष्टमपि प्रकोपम्॥ ५००॥
सद्राक्षाशारिवानन्ता कालीयागरुचन्दनैः।
शतपुष्पाश्वगन्धानां चूर्णैस्तैलं विपाचयेत्॥ ५०१॥
पयस्यष्टगुणे नस्य मेतदश्रुहरं परम्॥ ५०२॥
चक्षुः स्रावप्रशान्त्यर्थं कार्य्यमेतन्महौषधम्।
हिज्जलस्य फलं घृष्ट्वा पानीये नित्यमंजनम्॥ ५०३॥
कार्पासीफलजंब्वाम्रं जलैर्घृष्टं रसांजनम्।
मधुयुक्तं चिरोत्थञ्च चक्षुः स्रावमपोहति॥ ५०४॥
इति संधिगतरोगोपक्रमः।

---

## अथ वर्त्मजानां निदानमाह।

अभ्यन्तरमुखीताम्रा बाह्यतो वर्त्मनश्च या।

सोत्सङ्गोत्सङ्गपिटिका रक्तजा स्थूलकंडुरा ॥ ५०५ ॥
वर्त्मान्ते पिटिकाध्माता भिद्यन्ते च स्रवन्ति च ।
भिषग्भिराद्यैस्ताः प्रोक्ताः कुम्भिकाः सन्निपातजाः ॥ ५०६ ॥
स्राविण्यः कण्डुरा गुर्व्यो रक्तसर्षपसन्निभाः ।
रुजावन्त्यश्च पिड़िकाः पोथक्य इति कीर्त्तिताः ॥ ५०७ ॥
पिटिका या स्थिरा स्थूला सूक्ष्माभिरभिसंहता ।
वर्त्मस्था शर्करा नाम सरोगो वर्त्मदूषकः ॥ ५०८ ॥
एर्वारुबीजप्रतिमाः पिटिका मन्दवेदनाः ।
श्लक्ष्णाः खराश्च वर्त्मस्थास्तदर्शोवर्त्म कोर्त्यते ॥ ५०९ ॥
दीर्घांकुरः खरस्पर्शो दारुणोऽभ्यन्तरोद्भवः ।
व्याधिरेषोऽतिविख्यातः शुष्कार्श इति कीर्त्यते ॥ ५१० ॥
दाहतोदवतीताम्रा पिटिकावर्त्मसम्भवा ।
मृद्वीमन्दरुजासूक्ष्मा ज्ञेया साञ्जननामिका ॥ ५११ ॥
वर्त्मोपचीयते यस्य पिटिकाभिः समन्ततः ।
सवर्णाभिः स्थिराभिश्च विद्याद्बहुलवर्त्मतत् ॥ ५१२ ॥
कंडूमताल्पतोदेन वर्त्मशोथेन यो नरः ।
न सम छादयेदक्षि सभवेद्वर्त्मवन्धकः ॥ ५१३ ॥
मृद्वल्पवेदनं ताम्रं यद्वर्त्मसम एव च ।
अकस्माच्च भवेद्रक्तं क्लिष्टवर्त्मेति तद्विदुः ॥ ५१४ ॥
क्लिष्ट पुनः पित्तयुतं शोणितं विदहेद्यदा ।
ततः क्लिन्नत्वमापन्नं मुच्यते वर्त्म कर्दमम् ॥ ५१५ ॥
वर्त्म यदाह्यतोऽन्तश्च श्यावं शूनं सवेदनम् ।
तदाहु श्याववर्त्मेति वर्त्मरोगविशारदाः ॥ ५१६ ॥
अरुजं वाह्यतः शूनं वर्त्म यस्य नरस्य हि ।
अक्लिन्नवर्त्म तद्विद्यात् क्लिन्नमल्यमन्ततः ॥ ५१७ ॥

यस्य धौतान्यधौतानि सबध्नन्ति पुनः पुनः।
वर्त्मान्युपरिपक्वानि विद्यादक्लिन्न वर्त्म तत् ॥ ५२८ ॥
विमुक्तसन्धिनिश्चेष्टं वर्त्म यस्य न मील्यते।
एतद्वातहतं वर्त्म सरुजं यदि वा रुजम् ॥ ५१८ ॥
वर्त्मान्तरस्थं विषमं ग्रन्थिभूतमवेदनम्।
विज्ञेयमर्बुदं पुंसां सरक्तमविलम्बितम् ॥ ५२० ॥
निमेषिणीः शिरावायुः प्रविष्टो वर्त्मसंश्रयः।
चालयत्यथ वर्त्मानि निमेष इति तद्विदुः ॥ ५२१ ॥
वर्त्मस्थो यो विवर्धेत लोहितो मृदुरंकुरः।
तद्रक्तजं शोणितार्शः छिन्नं छिन्नं विवर्धते ॥ ५२२ ॥
अपाकिकठिनः स्थूलो ग्रन्थिर्वर्त्मभवो रुजः।
सकंडूः पिच्छलः कोल संस्थानोलगणस्तु सः ॥ ४२३ ॥
त्रयो दोषा बहिः शोथं कुर्युश्छिद्राणि वर्त्मनोः।
प्रस्रवन्त्यन्तरुदकं बिसवद्बिसवर्त्म तत् ॥ ५२४ ॥
वाताद्या वर्त्मसंकोचं जनयन्ति यदा मलाः।
तदा द्रष्टुं न शक्नोति कुञ्चनं नाम तद्विदुः ॥ ५२५ ॥
प्रचालितानि वातेन पक्ष्माण्यक्षिविशन्ति हि।
घृष्यन्त्यक्षिमुहुस्तानि संरम्भं जनयन्ति च ॥ ५२६ ॥
असिते च सिते भागे मूलकोशात्पतन्त्यपि।
पक्ष्मकोपः स विज्ञेयो व्याधिः परमदारुणः ॥ ५२७ ॥
वर्त्मपक्ष्माशयगतं पित्तं रोमाणि शातयेत्।
कंडूदाहञ्च कुरुते पक्ष्मशातं तमादिशेत् ॥ ५२८ ॥

---

## अथ चिकित्सामाह।

उत्सङ्गिनीबहलकर्दमवर्त्मनी च श्यावञ्च यच्च पठितं त्विह वन्धवर्त्म।

क्लिष्टञ्च पोथकियुतं खलु वर्त्म यच्च
कुम्भीकिनो च सह शर्करया च लेख्याः ॥ ५२८ ॥
श्लेष्मोपनाहलगणौ च विसं च भेद्याः
ग्रन्थिश्च यः क्रिमिकृतोऽञ्जननामिका च ॥ ५३० ॥
स्विन्नां भित्वा विनिष्पीड्य भिन्नामञ्जननामिकाम् ।
शिलैलानतसिन्धूत्थैः सक्षौद्रैः प्रतिसारयेत् ॥ ५३१ ॥
रसाञ्जनमधुभ्यां वा भित्वा शस्त्रेण कर्मवित् ।
प्रतिसार्य्याञ्जनैर्युञ्ज्यादुष्णैर्दीपशिखोद्भवैः ॥ ५३२ ॥
स्वेदयेद् घृष्टयांगुल्या हरेद्रक्तं जलौकसा ।
करे संघृष्य दुर्वर्णं मज्जयेल्लोचनं मुहुः ॥
द्वित्रिवारं शमयति कंडूं दीपान्विताञ्जनम् ॥ ५३३ ॥
रसाञ्जनं व्योषयुतं संपेष्य वटकीकृतम् ।
कंडूपाकान्वितां हन्ति नूनमञ्जननामिकाम् ॥ ५३४ ॥
रोचनाक्षारतुत्थानि पिप्पल्यः क्षौद्रमेव च ।
प्रतिसारणमेकैकं भिन्ने लगण इष्यते ॥ ५३५ ॥
निमेषं नाशमायाति सर्पिस्तेन च पूरणम् ॥ ५३६ ॥
स्वेदयित्वा विसग्रन्थिं छिद्राण्यस्य निराश्रयः ।
पक्वं भित्वा तु शस्त्रेण सैन्धवेन च पूरयेत् ॥ ५३७ ॥
आलदारुवचापिष्टा सुरसापत्रवारिणा ।
छायाशुष्कक्कृतावर्त्ति क्लिन्नवर्त्मनिवारिणी ॥ ५३८ ॥
रसाञ्जनं सर्जरसो जातीपुष्पं मनःशिला ।
समुद्रफेनो लवणं गैरिकं मरिचानि च ॥ ५३९ ॥
एतत्समांशं मधुना पिष्टा प्रक्लिन्नवर्त्मनि ।
अञ्जनं क्लेदकण्डूघ्नं पक्ष्मणाञ्च प्ररोहणम् ॥ ५४० ॥

—०—

## अथ पिल्ललक्षणमाह।

पित्तश्लेष्मप्रकोपेन वर्त्मान्तः संप्रकुप्यति।
नाम्नाऽतिलोमग्नं वापि विक्लिष्टं पिल्लमेव च ॥ ५४१ ॥

—०—

## तस्य चिकित्सामाह।

वर्त्मोऽवलेखं बहुशस्तथा शोणितमोक्षणम्।
पुनः पुनर्विरेकश्च पिल्लरोगातुरो भजेत् ॥ ५४२ ॥
पिल्लीस्निग्धो वमेत्पूर्वं शिरया च स्रुतेऽसृजि।
शिलारसाञ्जनव्योष गोपित्तैर्वर्त्तिरञ्जनम् ॥ ५४३ ॥
पिल्लघ्नं छागमूत्रेण भावितं देवदारु च ॥ ५४४ ॥
हरितालवचादारु सुरसारसपिष्टितम्।
अभयारससंपिष्टं तगरं पिल्लनाशनम् ॥ ५४५ ॥
काकमाचीफलैकेन घृतयुक्तेन बुद्धिमान्।
धूपयेत्पिल्लरोगार्त्तं पतन्ति क्रमयोऽचिरात् ॥ ५४६ ॥
तुत्थकस्य पलं श्वेतमरीचानि च विंशतिः।
त्रिंशताकाञ्जिकपलैः पिष्ट्वा ताम्रे निधापयेत् ॥ ५४७ ॥
पिल्लानपिल्लान् कुरुते बहुवर्षोत्थितानपि।
तत्सेकेनोपदेहाश्रु कंडूशोथांश्च नाशयेत् ॥ ५४८ ॥
सैन्धवं गुहांबुयुक्तं सपामार्गजटया ताम्रे, घृष्ट्वा।
वर्त्मबिलेखनं विधिना सप्ताहाच्छिपिटपिल्लहरम् ॥ ५४९ ॥
काशीशजातिकलिका रसाञ्जनक्षौद्रमरिचतुल्यांशैः।
अपनयति पिल्लकत्वं पिष्टैः पयसाञ्जनं सद्यः ॥ ५५० ॥
ताम्रपात्रे गुहामूलं सिन्धूत्थं मरिचान्वितम्।
आरनालेन संघृष्ट मञ्जनं पिल्लनाशनम् ॥ ५५१ ॥

पुष्पकाशीशचूर्णं वा सुरसारसभावितम् ।
ताम्रे दशाहं तत्पिल्ल पक्ष्मशातनमञ्जनम् ॥ ५५२ ॥
प्रलेपाच्छमयेदूनं चिपिटाख्यं गदं नृणाम् ।
शठीपत्रकनिर्य्यासं रसघृष्टं हरीतकी ॥ ५५३ ॥
लाक्षानिर्गुण्डीभृङ्गदार्वीरसेन
श्रेष्टं कार्पासं भावितं सप्त क्रत्वः ।
दीपाः प्रज्वाल्याः सर्पिषां तत्समुत्था
श्रेष्टा पिल्लानां रोपणार्थं मपीसा ॥ ५५४ ॥
याप्यः पक्ष्मोपरोधस्तु रोमोद्धरणलेखनैः ।
वर्त्मन्युपचितं लेख्यं स्राव्यमुल्लिष्टशोणितम् ॥ ५५५ ॥

—०—

## अथोपपक्ष्मलक्षणमाह ।

अन्तर्मुखानि पक्ष्माणि जनयन्ति मलास्त्रयः ।
बाधां कुर्वन्ति रोमाणि तमाहुरुपपक्ष्मकम् ॥ ५५६ ॥

—०—

## अथ तस्य चिकित्सामाह ।

प्रहृष्टान्तर्मुखं रोमसहिष्णोरुद्धरेच्छनैः ।
सन्देशेनोद्धरेद् दृष्ट्यां पक्ष्मरोमाणि बुद्धिमान् ॥ ५५७ ॥
सर्पिषाशतधौतेन सेचयेद्व्रणरोपणैः ।
यष्टीसिद्धं घृतं सेकात् सद्यो हरति वेदनाम् ॥ ५५८ ॥
सेचनात् पाचितं छित्वा गैरिकेनावचूर्णयेत् ।
रसाञ्जनाम्बुना सेकान् कुर्य्याल्लाक्षारसेन तु ॥ ५५९ ॥
द्वौ च भ्रुवोरधोभागौ पक्ष्मान्तादेकमेव च ।
भागं त्यक्त्वा तु शस्त्रेण व्यध्येत्तिर्य्यग्गदं स्थितम् ॥५६०॥

रक्तं वस्त्रेण गृह्णीयात् स्थिते रक्ते च सेचयेत् ।
सुक्ष्मावाम्लरेभागे वेध्यात्पट्टं ललाटतः ॥ ५६१ ॥
सूच्यग्रेणाग्निवर्णेन रोमकूपाणि निर्दहेत् ।
प्रदेहाः शीतलाः कार्य्याः क्रिया पक्ष्मोपरोधनी ॥ ५६२ ॥
रचत्रचिदहेत्पक्ष्म तप्तलोहशलाकया ।
पक्ष्मकोपे पुनर्नैव कदाचिद्रोमसम्भवः ॥ ५६३ ॥
इति वर्त्मपक्ष्मरोगोपक्रमः ।

—०—

## अथ सशैल्यनेत्रलक्षणमाह ।

सवत्यश्रुचयत्नेत्रं व्रक्त लोहितराजिभि. ।
निमिषोन्मेषणाऽशक्तिं सशैल्यं तं विनिर्दिशेत् ॥ ५६४ ॥

—०—

## तस्य चिकित्समाह ।

नेत्रे त्वभिहितं कुर्या च्छीतमाश्च्योतनं हितम् ।
अन्तःस्नोस्तन्यसेकश्च रक्तमोचश्च शस्यते ॥ ५६५ ॥
दृष्टिप्रसादजननं विधिमाशु कुर्य्यात् ।
स्निग्धैर्हिमैश्च मधुरैश्च तथा प्रयोगै. ॥
स्वेदाग्निधूमभयशोकरुजाभिघातैः
अभ्याहतामपि तथैव भिषक् चिकित्सेत् ॥ ५६६ ॥
आगन्तुदोषं प्रसमोच्यकार्यं वक्त्रोष्मणा स्वेदनमादितस्तु ।
आश्च्योतनं स्तोपयसा तु सद्यो यच्चापि पित्तक्षतजापहं स्यात् ५६७
सूर्य्योपरागाम्बरविद्युदादि विलोदनेनोपहतेक्षणस्य ।
सन्तर्पणं स्निग्धहिमादिकार्यं साय निषेव्या त्रिफलाप्रयोगाः ॥५६८॥
निशाब्दत्रफलादार्वी सितामधुसमन्वितम् ।

अभिघाताच्छिशूलघ्नं नारीक्षीरेण पूरणम् ॥ ५६८ ॥
इत्यटांकुरजस्तद्वत् स्वरसो नेत्रपूरणम् ॥ ५७० ॥
वटपत्रपुटे क्षिप्तं कलिङ्गं सघृतं पचेत् ।
तद्रसस्तर्पणे चाक्ष्णो रेवं स्युर्जाङ्गलारसाः ॥ ५७१ ॥
श्राजं घृतं क्षीरपानं मधुकं सोत्पलानि च ।
जीवकर्षभकौ मेदा पिष्ट्वा सर्पिर्विपाचयेत् ॥
सर्वनेत्राभिघातेषु सर्पिरेतत्प्रशस्यते ॥ ५७२ ॥

इत्याजं घृतम् । इति नयनाभिघातः ।

सितमरिचनागरकेशर नीलोत्पलकल्कवर्त्तितावर्त्तिः ।
शमयति सततं निद्रां सूर्य्यस्तमश्चन्द्रलेखेव ॥ ५७३ ॥
हृहतीफलसैन्धव यष्टीमधुकल्कीतकैर्नस्यम् ।
अतिविततामपि सततां निद्रामिव सततं हन्यात् ॥ ५७४ ॥
क्षौद्राश्वलालासंघृष्टै र्मरिचैर्नेत्रमञ्जयेत् ।
अतिनिद्राशमंयाति तमः सूर्य्योदयादिव ॥ ५७५ ॥

## इति वङ्गसेने नेत्ररोगनिदानचिकित्साधिकारः समाप्तः ॥ ६७ ॥

—०—

## अथ शिरोरोगनिदानमाह ।

शिरोरोगास्तु जायन्ते वातपित्तकफैस्त्रिभिः ।
सन्निपातेन रक्तेन क्षयेण क्रिमिभिस्तथा ॥ १ ॥
सूर्य्यावर्त्तानन्तवात शंखकोर्द्धावभेदकैः ।
एकादशविधस्याऽस्य लक्षणानि प्रवक्ष्यते ॥ २ ॥
यस्याःऽनिमित्तं शिरसो रुजश्च भवन्ति तीव्रानिशि चातिमात्रम् ।

सन्धोपतापैश्च भवेद्विशेषः शिरोऽभितापः समसीरणेन ॥ ३ ॥
यस्योष्णमङ्गारचितं तथैव धूप्येच्छिरो दह्यति चाक्षिनासा ।
शीतेन रात्रौ च भवेद्विशेषः शिरोऽभितापः स तु पित्तकोपात् ॥४॥
शिरो भवेद्यस्य कफोपदिग्धं गुरुप्रतिष्टब्ध मथो हिमञ्च ।
शूनाक्षिकूटं वदनञ्च यस्य शिरोऽभितापः सकफः प्रकोपात् ॥५॥
शिरोऽभितापे त्रितयप्रवृत्ते सर्वाणि लिङ्गानि समुद्भवन्ति ।
रक्तात्मकः पित्तसमानलिङ्गः स्पर्शासहत्वं शिरसो भवेच्च ॥ ६ ॥
असृग्वसा श्लेष्मसमीरणानां शिरोगतानामिह सञ्चयेण ।
क्षयः प्रवृत्तिः शिरसोऽभितापः कष्टो भवेदुग्ररुजोऽतिमात्रम् ॥
सस्वेदनच्छर्दनधूमनस्यै रसृग्विमोक्षैश्च विवृद्धिमेति ॥ ७ ॥
निस्तुद्यते यस्य शिरोऽतिमात्रं संभक्ष्यमाणं स्फुरतीव चान्तः ।
घ्राणाच्च गच्छेद्रुधिरं सपूयं शिरोऽभितापः कृमिभिः सघोरः ॥ ८ ॥
सूर्योदयं या प्रतिमन्दमन्द मक्षि भ्रुवं रुक्समुपैतिगाढ़म् ।
विवर्द्धते चांशुमता सहैव सूर्यापवृत्तौ विनिवर्त्तते च ॥ ८ ॥
शीतेन शान्तिं लभते कदाचिदुष्णेन जन्तुः सुखमाप्नुयाद्वा ।
सर्वात्मकं कष्टतमं विकारं सूर्यापवृत्तं तमुदाहरन्ति ॥ १० ॥

दोषाः प्रदुष्टास्त्रय एवमन्यां संपीड्यगाढ़ं सरुजां सुतीव्राम् ।
कुर्वन्ति चाक्षि भ्रुवि शंखदेशे स्थितिं करोत्याशु विशेषतस्तु ॥११॥
गण्डस्य पार्श्वे तु करोति कम्प हनुग्रहं लोचनजांश्च रोगान् ।
अनन्तवातं तमुदाहरन्ति दोषत्रयोत्थं शिरसो विकारम् ॥१२॥

रूक्षाशनाध्यशनप्राग् वातावश्याय मैथुनैः ।
वेगसन्धारणायास व्यायामैः कुपितोऽनिलः ॥ १३ ॥
केवलः सकफो वार्द्ध गृहीत्वा शिरसो वलो ।
मन्याभ्रूशंखकर्णाक्षि ललाटार्द्धेऽतिवेदनाम् ॥ १४ ॥
शस्त्रारणिनिभां कुर्य्यात् तीव्रां सोर्द्धावभेदकः ।

नयन वाथवा श्रोत्र मतिवृद्धो विनाशयेत् ॥ १५ ॥
रक्तपित्तानिलादुष्टा शङ्खदेशे विमूर्च्छिता ।
तीव्ररुग्दाहरागं हि शोथं कुर्वन्ति दारुणम् ॥ १६ ॥
सशिरो विषवद्वेगी निरुध्याशु गलं तथा ।
त्रिरावाज्जीवितं हन्ति शङ्खको नामतः परम ।
त्र्यहाज्जीवतिभैषज्यं प्रत्याख्यायाऽस्य कारयेत् ॥ १७ ॥

---

## अथ चिकित्सामाह ।

वातिके शिरसोरोगे स्नेहस्वेदान् सनावनान् ।
पानाहारोपनाहांस्तु कुर्य्याद्वातामयापहान् ॥ १८ ॥
पिण्डोपनाहस्वेदश्च धन्वमासकृतो हितः ।
वातघ्नदशमूलादि सिद्धक्षीरेण सेचनम् ॥ १९ ॥
धूमं चास्य यथा कालं योजयेत् स्नैहिकं भिषक् ॥ २० ॥
पानाभ्यञ्जननस्येषु वस्तिकर्मणि सेचने ।
विदध्याच्चैहृत तैलं बलातैलमथापि वा ॥ २१ ॥
मुद्गान् माषान् कुलित्थांश्च खादेच्च निशिकेबलान् ।
कटुकोष्णान् ससर्पिष्कान् तृष्णं वापि पिबेत्पयः ॥ २२ ॥
पिबेद्वा पयसा तैलं तत्कालं चाति मानवः ।
पञ्चमूलीशृतं क्षीरं नस्यं दद्याच्छिरो गदे ॥ २३ ॥
कुष्टमेरण्डमूलञ्च लेपात्काञ्जिकपेषितम् ।
शिरोऽर्त्तिं नाशयत्याशु पुष्पं वा मुचुकुन्दजम् ॥ २४ ॥
देवदारुनतं कुष्टं नलदं विश्वभेषजम् ।
लेपं काञ्जिकसंपिष्टं स्नेलयुक्तं शिरोऽर्त्तिनुत् ॥ २५ ॥

वातकोपभयादत्र नोक्तं रक्तावसेचनम्।
आशिरोव्यापनश्चर्म्म कृत्वाष्टांगुलमुच्छ्रितम्।
तेनावेष्ट्यशिरोऽधस्तात् माषकल्केन लेपयेत्॥ २६॥
निश्चलस्योपविष्टस्य तैलैः कोष्णैः प्रपूरयेत्।
धारयेदारुजः शान्ते यामं यामार्द्धमेव वा॥ २७॥
शिरोवस्तिर्जयत्येष शिरोरोगं मरुद्भवम्।
हनुमन्याक्षिकर्णार्त्तिं मर्दितं मूर्द्धकम्पनम्॥ २८॥
तैलेनापूर्य्यमूर्द्धानं पञ्चमात्राशतानि च।
तिष्ठेत् श्लेष्मणिपित्तेऽष्टौ दशवाते शिरोगते॥ २९॥
एष एव विधिः कार्य्यः तथा कर्णाक्षिपूरणे।
विनाभोजनमेवैष शिरोवस्तिः प्रयुज्यते॥ ३०॥
घटिकाधिकयामैकं वृद्धवैद्योपदेशतः।
प्रयोज्यस्तु शिरोवस्तिः पञ्चाह मप्त एव च॥ ३१॥

ततः स्नेहमपनीयकर्णतो वस्तिबन्धनं विमोच्य शिरःस्कन्ध-ग्रीवापृष्ठललाटान् सुखञ्च पाणिभ्यां मर्द्दीयात्। ततः सुखोष्ण-जलेन परिषिक्तगात्रः शालिषष्टिकादिभिर्जाङ्गलानूपरसैर्दाड़िमा-म्लैर्माचया भोजयेत्। इति शिरोवस्तिः।

हेमन्तकाले शिशिरे वसन्ते सेव्य हि मायूरसुगन्ति सर्पिः।
उष्णो हि वर्हीं विषभोजनश्च वर्षाशरद्ग्रीष्मसुखेष्वपथ्यः॥ ३२॥
दशमूलबलारास्ना मधुकैस्त्रिफलैः सह।
मयूरं पचपित्ताम्ल शकृत्पादास्यवर्जितम्॥ ३३॥
जले पक्वाघृतप्रस्थं तस्मिन् क्षीरसमं पचेत्।
मधुरैः कार्षिकैः कल्कैः शिरोरोगार्दितापहम्॥ ३४॥
कर्णनासाक्षिजिह्वास्य गलरोगविनाशनम्।
मायूरमितिविख्यात मूर्द्धजत्रुगदापहम्॥ ३५॥

दशमूलादिनातुल्यो मयूर इह गृह्यते ।
अन्ये त्वाऽऽकृतिमानेन मयूरग्रहणं विदुः ॥ ३६ ॥
एषां जलद्रोणे पादावशेषः क्वाथः
कर्त्तव्यः मधुराणि च जीवनीयानि दश ।

इति मयूरघृतम् ।

एतेनैव कषायेण घृतप्रस्थं विपाचयेत् ।
चतुर्गुणेन पयसा कल्कैरेभिश्च कार्षिकैः ॥ ३७ ॥
समङ्गाचविकाभार्गी काश्मरीकुक्कुटाह्वयैः ।
आत्मगुप्तामहामेदा तालखर्जूरमस्तुकैः ॥ ३८ ॥
मृणालबिसखर्जूर मधुकैश्च सजीवकैः ।
शतावरीविदारीचु बृहतीशारिवायुगैः ॥ ३९ ॥
मूर्वा श्वदंष्ट्रा शार्दूल शृङ्गाटककशेरुकैः ।
स्थिरामलकराम्नाभिः सूक्ष्मैलाशठिपोष्करैः ॥ ४० ॥
पुनर्नवातुगाचोरी काकोलीद्वयवासकैः ।
मधुकाचोटवाताम गुञ्जानाभिशुकैरपि ॥ ४१ ॥
द्रव्यैरेतैर्यथा लाभं पूर्वकल्केन साधितम् ।
पाने बस्तौ तथाभ्यङ्गे नस्ये चैव प्रयोजयेत् ॥ ४२ ॥
शिरोरोगेषु सर्वेषु कासे श्वासेऽतिदारुणे ।
मन्याहृष्टिग्रहे शोषे स्वरभेदे तथार्दिते ॥ ४३ ॥
योन्यसृक् शुक्रदोषेषु शस्तं बन्ध्यासुतप्रदम् ।
महामायूरमित्येतद् घृतमात्रेय पूजितम् ॥ ४४ ॥

इति महामायूरघृतम् ।

बलाविल्वशृते क्षीरे घृते मण्डं विपाचयेत् ।
तस्य शुक्तिं प्रकुञ्चं वा नस्यं शीर्षगतेऽनिले ॥ ४५ ॥

इति बलादिघृतमण्डः । इति वातशिरोरोगः ।

पित्तात्मके शिरोरोगे स्निग्धं सम्यग्विरेचयेत्।
मृद्वीकात्रिफलेचूर्णं रसैः चीरैर्घृतैरपि ॥ ४६ ॥
शर्कराचीरसलिलैः शिरश्च परिषेचयेत्।
सर्पिषः शतधौतस्य शिरसा धारणं हितम् ॥ ४७ ॥
निमज्जनञ्च शिरसः शीतले शस्यते मुहुः ॥ ४८ ॥
कमलोत्पलपद्मानां शीतानां चन्दनाम्बुभिः।
स्पर्शः स्निग्धश्च पवनः सेव्यो दाहार्त्तिनाशनः ॥ ४९ ॥
चन्दनोशीरयष्ट्याह्व बलाव्याघ्रनखोत्पलैः।
चीरपिष्टैः प्रदेहः स्यात् तच्छीतैर्वा परिषेचनम् ॥ ५० ॥
मृणालविसशालूक चन्दनोत्पलकेशरैः।
स्निग्धैः शीतैः शिरोदिह्यात् सहदामलकोत्पलैः ॥ ५१ ॥
यष्ट्याह्वचन्दनानन्ता चीरसिद्धं हितं घृतम्।
नावनं शर्करद्राक्षा मधुकैश्चापि पित्तजे ॥ ५२ ॥
त्वक्पत्रशर्करापिष्टा नावनं तण्डुलाम्बुना।
चीरसर्पिर्हितं नस्यं जाङ्गला वा शुभारसाः ॥ ५३ ॥
पद्मचन्दनकर्पूरं नागरं नीलमुत्पलम्।
प्रदेहः सघृतः कार्य्यः शिरःशूलहरो नृणाम् ॥ ५४ ॥
इति पित्तशिरोरोगचिकित्सा।

रक्तजे पित्तवत्सर्वं भोजनालेपसेचनम्।
शीतोष्णयोश्च विन्यासो विशेषाद्रक्तमोक्षणम् ॥ ५५ ॥
इति रक्तशिरोरोगचिकित्सा।

कफजे लेपनं स्वेदो रूक्षोष्णैः पाचनात्मकैः।
तीक्ष्णावपीडाधूमाश्च तीक्ष्णाश्च कवला हिताः ॥ ५६ ॥
भुञ्जीतकटुतीक्ष्णोष्णैर्यूषैस्तिक्तोपसम्भृतैः।
पुराणयवगोधूमा ञ्छुष्कमूलकयुतान् ॥ ५७ ॥

अच्छञ्च पाययेत्सर्पिः पुराणं स्वेदयेत्ततः ।
मधूकसारेण शिरः स्विन्नञ्चास्य विरेचयेत् ॥ ५८ ॥
हरेणुनतशैलेय सुस्तैलागुरुदारुभिः ।
रास्नाश्वौषेयनलदै रूचोष्णैर्लेपयेच्छिरः ॥ ५९ ॥
सरलागुरुशाङ्गष्टा देवकाष्ठैः सरोहिषैः ।
चीरपिष्टैः मलवणैः सुखोष्णैर्लेपयेच्छिरः ॥ ६० ॥
कृष्णाब्दशुण्ठीमधुका शताह्नोत्पलपावकैः ।
जलपिष्टैः शिरोलेपः सद्यः शूलनिवारणः ॥ ६१ ॥
यवषष्ठिकयोरन्नं व्योषं चारसमन्वितम् ।
पटोलमुद्गकौलित्थै र्मात्रावद्भोजयेद्रसैः ॥ ६२ ॥

—०—

उभे हरिद्रे पिप्पल्यः सरलं देवदारु च ।
विड़ङ्गं चित्रको विल्वं रोहिषस्य च पल्लवाः ॥ ६३ ॥
गन्धं सौवर्चलं द्राचा मञ्जिष्टामधुकं बला ।
वेतसस्य च मूलानि पद्मकोशीरचन्दनम् ॥ ६४ ॥
एभिर्विल्वप्रमाणैस्तु तैलप्रस्थं विपाचयेत् ।
द्विगुणञ्च पयो दद्यात् सिद्धं तन्नस्यतो जयेत् ॥ ६५ ॥
श्लेष्मज सन्निपातञ्च शीर्षरोग नियच्छति ।
उपजिह्विका गण्डमालां कण्ठशालूकमर्वुदम् ॥ ६६ ॥
विदारिका मांसपाक मुखशोषंगलग्रहम् ।
दन्तचालं हनोःकम्पं तैलमेतन्नियच्छति ॥ ६७ ॥

इति हरिद्राद्य तैलम् । इति कफशिरोरोगचिकित्सा ।

सन्निपात भवे कार्य्या सन्निपातहरीक्रिया ।
पुराणसर्पिषः पानं विशेषेणादिशान्ति हि ॥ ६८ ॥

श्यामानागरमिश्रेण श्वेतस्यन्देन तत्चणात्।
नाशयन्ति त्रिदोषोत्था शिरोऽर्त्तिः संप्रलेपनात्॥ ६८॥
त्रिकटुकपुष्करजनी रास्नासुरदारुतुरगगन्धानाम्।
क्वाथः शिरोऽर्त्तिजालं नासापीतो निवारयति॥ ७०॥
नागरकल्कविमिश्रं चीरं नस्येन योजितं पुंसाम्।
नानादोषोद्भूतां शिरोरुजां हन्ति तीव्रतराम्॥ ७१॥
सचुन्नाः शर्करार्द्धांशा दाड़िमीकलिकाः शुभाः।
नश्यन्ति योजिताः सद्यः शिरःशूलहराः पराः॥ ७२॥
करञ्जशिग्रुबीजानि पत्रकं शर्करावचा।
सर्वेषां शीर्षरोगाणा मेतच्छीर्षविरेचनम्॥ ७३॥
नावनं सगुड़ं विश्वं पिप्पली वा ससैन्धवम्।
भुजस्तम्भादिरोगेषु सर्वमूर्द्धगदेषु च॥ ७४॥

—०—

यष्टीमधुकविड़ङ्गैः सभृङ्गराजनागरैर्घृतं सिद्धम्।
षड्विन्दुनस्यदाना देतच्छीर्षामयं हन्यात्॥ ७५॥
पततां शिरोरुहाणां दन्तानां भ्रंशतां दृढ़ीकरणम्।
नैत्रसुपर्णप्रतिमं करोति वै दृढ़ं बलञ्चापि॥ ७६॥

इति षड्विन्दुघृतम्।

एरण्डमूलं तगरं शताह्वा जीवन्तीरास्ना सह सैन्धवञ्च।
भृङ्गं विडङ्गं मधुयष्टिकाच विश्वौषधं कृष्णतिलस्य तैलम्॥७७॥
अजापयस्तैलविमिश्रितञ्च चतुर्गुणे भृङ्गरसे विपक्वम्।
षड्विन्दवो नासिकया विधेयाः सर्वाणि हन्युः शिरसो विकारान् ७८
च्युतांश्च केशांश्चलितांश्च दन्तान् निर्बन्धमूलान् सुदृढ़ी करोति।
सुपर्णदृष्टिप्रतिमं च चक्षुर्बाह्वोर्बलञ्चाप्यधिकं करोति॥ ७८॥

इति षड्विन्दुतैलम्।

शताह्वैरण्डमूलोग्राचक्रव्याघ्रीफलैः शृतम्।
तैलं नस्यान्मरुच्छ्रेष्मतिमिरोर्ध्वगदापहम्॥ ८०॥

इति शताह्वातैलम्।

जीवकर्षभकौ द्राक्षा सितायष्टीवलोत्पलैः।
तैलं नस्यं पयः पक्वं वातपित्तशिरोगदे॥ ८१॥

इति जीवकाद्यं तैलम्।

बलाजीवन्तिनिर्यासैः पयोभिर्यमकं पचेत्।
जीवनीयैश्च नस्यैश्च सर्वजत्रूर्ध्वरोगजित्॥ ८२॥

इति बलाद्यं तैलम्।

चयजे चयमासाद्य कर्त्तव्यो बृंहणो विधिः।
पाने नस्ये च सर्पिः स्यात् वातघ्नैर्मधुरैः शृतम्॥
चयकासापहं चात्र सर्पिः पथ्यतमं सदा॥ ८३॥
क्रिमिजे व्योपनक्ताह्व शिग्रुबीजैश्च नावनम्।
अजामूत्रयुतं नस्यं कर्त्तव्यं क्रिमिजित्परम्॥ ८४॥
शोणितं नस्ततो दद्यात्तेन मूर्च्छन्ति जन्तवः।
मत्ताः शोणितगन्धेन समायान्ति यतस्ततः॥ ८५॥
सुतीक्ष्णधूमनस्याभ्यां कुर्य्यान्निर्हरणं भृशम्।
पूतिमांसकृतान् धूमान् क्रिमिघ्नांश्च प्रयोजयेत्॥
भोजनानि क्रिमिघ्नानि पानानि विविधानि च॥ ८६॥
कृष्णशिग्रुकबीजैर्वा कांस्यनीलीसमायुतैः।
क्रिमिघ्नै रवपीडैश्च मूत्रपिष्टैः समाचरेत्॥ ८७॥
विड़ङ्गस्वर्जिकादन्ती हिंगुगोमूत्रसंयुतम्।
विपक्वं सार्षपं तैलं क्रिमिघ्नं नस्यमुत्तमम्॥ ८८॥

इति विड़ङ्गतैलम्।

अपामार्गफलं व्योप निशाचारकरामठैः ।
सविडङ्गं शृतं मूत्रे तैलं नस्यं क्रमिं जयेत् ॥ ८९ ॥

इत्यपामार्गतैलम् ।

सूर्य्यावर्त्ते विधातव्यं नस्यकर्मादि भेषजम् ।
पाययेत्सगुडं सर्पि र्घृतपूरांश्च भक्षयेत् ॥ ९० ॥
सूर्य्यावर्त्ते शिरावेधो नावन क्षीरसर्पिषा ।
हितः क्षीरघृताभ्यास स्ताभ्याञ्चैव विरेचनम् ॥ ९१ ॥
क्षीरपिष्टैस्तिलैः स्वेदो जीवनीयैश्च शस्यते ॥ ९२ ॥
महौषधस्य स्वरसं वचापिप्पलिभिर्युतम् ।
अवपीड प्रयोक्तव्य सूर्य्यावर्त्तविभेदनम् ॥ ९३ ॥
भृङ्गराजरसश्छागक्षीरतुल्योऽर्कतापितः ।
सूर्य्यावर्त्तं निहन्त्याशु नस्येनैव प्रयोजितः ॥ ९४ ॥
जाङ्गलानि च मांसानि कारयेदुपनाहनम् ।
तेनास्य शाम्यते व्याधिः सूर्य्यावर्त्तः सुदारुणः ॥ ९५ ॥
मयूरान् कुक्कुटान् छागान् क्षीरेणैव विपाचयेत् ।
तत्क्षीरात्समुद्भूत नवनीतमथोद्धरेत् ॥ ९६ ॥
तत्क्षीरे षड्गुणे साध्यं जीवनीयौषधैः सह ।
तस्य नस्यं प्रदातव्यं सूर्य्यावर्त्त विनाशनम् ॥ ९७ ॥
क्रतमालपल्लवरसैः खरिमञ्जरीमूलकल्कनवनीतम् ।
नस्येन जयति नियतं सूर्य्यावर्त्तं सुदारुण पुंसाम् ॥ ९८ ॥
अर्धावभेदके पूर्वं स्नेहस्वेदो हि योजितम् ।
विरेकः कायशुद्धिश्च धूमः स्निग्धोष्णभोजनम् ॥ ९९ ॥
तिलकल्कारसं तैलं सक्षौद्रलवणान्वितम् ।
तेनास्य लेपनं शीर्षे मर्द्धभेदं व्यपोहति ॥ १०० ॥
विड़ङ्गानि तिलान् कृष्णान् समं कृत्वा तु पेषयेत् ।

नस्यकर्मणि दातव्य मर्द्धभेदं व्यपोहति ॥ १०१ ॥
शालिपर्णम्भसा पिष्टा नस्यमर्द्धविभेदजित्।
चक्रमर्दकबीजैर्वा लेपः काञ्जिकपेषितः ॥ १०२ ॥
यद्यस्ति ते शिरसि शूलमतीवगाढं सूर्योदये समसितञ्च पयपिबत्वम्।
नासाफुटेन परमार्थमचिन्त्यशक्तिं दृष्ट्वाऽऽमयेतदनुभूतफलं सदैव१०३
शारिवोत्पलयष्ट्याह्व कुष्ठैर्लेपोऽम्बुसंयुतैः।
घृतपूराश्च सेव्या वा सूर्य्यावर्त्तार्द्धभेदयोः ॥ १०४ ॥
दशमूलीकषायन्तु सर्पिः सैन्धवसंयुतम्।
नस्यमर्द्धाविभेदघ्नं सूर्य्यावर्त्तशिरोर्त्तिनुत् ॥ १०५ ॥
शृङ्गाख्ये कुङ्कुमं किञ्चित् पिहितं सितया समम्।
पिष्टं छगल्या चीरेण भुक्त पित्तविनाशकम् ॥
एतदर्द्धावभेदघ्न सूर्य्यावर्त्त शिरोर्त्तिनुत् ॥ १०६ ॥
अपामार्गस्य बीजानि विश्व सक्षौद्रशर्करम्।
नस्यं प्रयोजयेन्नित्यं सूर्य्यावर्त्ताऽर्द्धभेदयोः ॥ १०७ ॥
एष एव प्रयोक्तव्यः शिरोरोगे कफात्मके ॥ १०८ ॥
अनन्तवाते कर्त्तव्यः सूर्य्यावर्त्तैरितो विधिः।
शिराव्यधश्च कर्त्तव्यो ऽनन्तवातप्रशान्तये ॥ १०९ ॥
आहारश्च विधातव्यो वातपित्तविनाशनः।
मधुमिश्रकसंयाव घृतपूरैश्च भोजनैः ॥ ११० ॥
सशर्करं कुङ्कुममाज्यभृष्टं नस्यं विधेयं पवनासृगुत्थे।
भ्रूशङ्खकर्णाक्षिशिरोर्द्धशूले सूर्य्योदये शङ्कसार्धभेदे ॥१११॥
शिरोपमूलकफलैरवपीडञ्च योजयेत्।
अवपीडो हितो वा स्या द्वचापिप्पलिभिः कृतः ॥ ११२ ॥
पीत्वा शशसुण्डरस मरिचैरवचूर्णितं समभ्यस्तम्।
संसाद भक्तादौ सूर्य्यावर्त्तार्द्धभेदको हन्यात् ॥ ११३ ॥

धात्रौत्तपथ्या सनिशागुडूची भूनिम्बनिम्बैः क्वथितः षड़ङ्गः।
भ्रूशङ्खकर्णाचिशिरोऽर्द्धशूले सूर्योदये शङ्खकमर्द्दभेदे ॥ ११४ ॥
नक्ताम्ध्यकाचे पटले सशुक्रे पाकेऽस्युपाते तिमिरेऽचिरोगे।
पच्चप्रकोपे विनिहन्ति चैष सद्यो गदं वायुरिवाभ्रवृन्दम् ॥ ११५ ॥

शर्करा कुंकुमं द्राचा चतुर्थांशेन निचिपेत्।
नवनीते ततस्तेन कृत्वैकं नस्यमाचरेत् ॥ ११६ ॥
नस्यमेतत्प्रशंसन्ति सूर्य्यावर्त्तार्द्धभेदके।
शिरोरोगे परं वापि वातपित्त समुद्भवे ॥ ११७ ॥
सूर्य्यावर्त्तहरः कल्पो विधिरप्यत्र शस्यते ॥ ११८ ॥
जीवकर्षभकौ द्राचा मधूकं मधुकं बला।
नीलोत्पलं चन्दनञ्च विदारीशर्करा तथा ॥ ११९ ॥
तैलप्रस्थं पचेदेभिः शनैः पयसि षड्गुणे।
जांगलस्य तु मांसस्य तुलार्द्धस्य रसेन तु ॥ १२० ॥
सिद्धमेतद्भवेन्नस्यं तैलमर्द्धावभेदकम्।
बाधिर्य्यं कर्णशूलञ्च तिमिरं गलशुण्डिकाम् ॥ १२१ ॥
वातिकं पैत्तिकञ्चैव शीर्षरोगं नियच्छति।
दन्तचालं शिरश्चालं मर्दितञ्चापकर्षति ॥ १२२ ॥

इति जीवकाद्यं तैलम्।

सूर्य्यावर्त्ते हितं यत्त च्छंखके खेदवर्जितम्।
चीरसर्पिः प्रशंसन्ति नस्ये पाने च शंखके ॥ १२३ ॥
शतावरीं कृष्णतिला न्मधुकं नीलमुत्पलम्।
दुर्वापुनर्नवां वापि लेपे साध्ववचापयेत् ॥ १२४ ॥
भद्रश्रियं पुण्डरीकं मधुकं नीलमुत्पलम्।
पद्मकं चेतसं दूर्वां लामज्जकमथापि वा ॥ १२५ ॥
दार्व्वीहरिद्रामञ्जिष्ठा फेनिलोशीरमेव च।

एतदालेपनं कुर्य्या च्छङ्खकस्य प्रशान्तये ॥ १२६ ॥
सूर्य्यावर्त्तोपद्दं चाक्षि नवपोड़ं प्रयोजयेत् ॥ १२७ ॥
क्रौञ्चकादवहंसानां शराय्याः कच्छपस्य च ।
रसैः संहं हितस्याथ तस्य शङ्खस्य सन्निजाः ॥ १२८ ॥
शङ्खकस्य शिरां प्राज्ञो विध्यैदेव न ताड़येत् ।
सर्पिषाचीरपानन्तु नस्येनापि सुखेन वा ॥ १२९ ॥
एष एव विधिः श्रेष्टः शङ्खके शर्करान्वितः ।
शर्कराचीरसलिलैः शिरश्च परिषेचयेत् ॥ १३० ॥
वातोरूचादिभिः क्रुद्धः शिर कम्पमुदीरयेत् ॥ १३१ ॥
तत्रामृताबलारास्ना महाश्वेहातिगन्धकैः ।
स्नेहस्वेदोऽतिवातघ्नं शस्तं नस्यञ्च तर्पणम् ॥ १३२ ॥
कृष्णमत्स्यं विनिष्पीड्य निर्द्वीसत्वयत्नतः ।
कास्तुरामूलनिर्य्यासो माषयूषावलोडितम् ॥ १३३ ।
भक्षित शमयेचूर्णं शिरःकम्पमसंशयम् ।
नस्यकर्म्म च कुर्वीत शिरोरोगेषु शास्त्रवित् ॥ १३४ ॥
कम्पदाहार्दिते कुर्य्या द्वातव्याधिक्रियाविधिः ॥ १३५ ॥

## इति श्रीवङ्गसेने शिरोरोगनिदानचिकित्साधिकारः समाप्तः ॥ ६८ ॥

---

## अथ स्त्रीरोगाधिकारमाह ।

### अत्र प्रथमं नष्टकुसुमस्य प्रतिक्रियामाह ।

---

गृहचिरस्थितमङ्गल चूतदलैः संस्कृतं जलं पेयम् ।
मरिचासनाप्रमदिरा पानस्तारसलिलस्य ॥ १ ॥

इक्ष्वाकुबीजदन्ती चपलागुड़मदनकिण्वयावशूकैः।
सस्नुक् चीरैर्वर्त्ति र्योनिगता कुसुमसञ्जननी ॥ २॥
सलिलनिपतितं कुसुमं रक्तजयाया गुहांबुसंपीतम्।
जनयति कुसुमं नार्य्या भृष्टं ज्योतिष्मतीपत्रम् ॥ ३ ॥
पद्मरूहाणां मूलं पिष्टकमशितं तथा सुराबीजम्।
हिमसलिलेन निपीतं भवतीह कुसुमाय नारीणाम् ॥ ४ ॥
इति कुसुमजननविधिः।

—०—

## अथ स्त्रीरोगनिदानमाह।

विरुद्धमद्याध्यशनादजीर्णा द्गर्भप्रपातादतिमैथुनाच्च।
यानाध्वशोकादतिकर्षणाच्च भाराभिघाताच्छयनाद्दिवा च ॥५॥
असृग्दरं भवेत्सर्वं साङ्गमर्दं सवेदनम् ॥ ६ ॥
तस्यातिवृद्धौ दौर्बल्यं भ्रमो मूर्च्छामदस्तृषा।
दाहः प्रलापः पांडुत्वं तन्द्रारोगाश्च वातजाः ॥ ७ ॥
तं श्लेषपित्तानिलसन्निपातैश्चतुःप्रकारं प्रदरं वदन्ति।
आमं सपिच्छाप्रतिमं सपाण्डु पुलाकतोय प्रतिमं कफात्तु ॥८॥
सपीतनीलासितरक्तमुष्णं पित्तार्त्तियुक्तं भृशवेगि पित्तात्।
रूक्षारुणं फेनिलमल्पमल्पं वातार्ति वातात्पिशितोदकाभम् ॥९॥
सचौद्रसर्पिः हरितालवर्णं मज्जः प्रकाशं कुणपं त्रिदोषम्।
तं चाप्यसाध्यं प्रवदन्ति तज्ज्ञा
न तत्र कुर्वीत भिषक् चिकित्साम् ॥ १० ॥
शश्वत् स्रवन्तीमास्रावं तृष्णादाहज्वरान्विताम्।
चीणरक्तां दुर्बलाञ्च तामसाध्यां विनिर्दिशेत् ॥ ११ ॥
मासान्निःपिच्छदाहार्तिः पञ्चरात्रानुबन्धि च।

नेवातिबहुलात्यल्प मार्त्तव शुद्धमादिशेत् ॥ १२ ॥
शशास्त्रक् प्रतिम यच्च यद्वा लाक्षारसोपमम् ।
तदार्तव प्रशसन्ति यद्वासो न विरञ्जयेत् ॥ १३ ॥

—०—

## अथ चिकित्सामाह ।

असृग्दर प्राणहर स्त्रीणा सर्वत्र कीर्तित ।
तस्मात्तस्य प्रशमने पर यत्न समाचरेत् ॥ १४ ॥
नारीणा प्रदरार्ताना योगान् वक्ष्याम्यत परम् ।
योनिशूलापहान् सिद्धान् गर्भसस्थापनान् परान् ॥ १५ ॥
सनपु पूर्व वमन प्रशस्त रसैचुद्राक्षोदकतर्पणैश्च ।
सपिप्पलीभिर्मधुमण्डकल्कैर्मुस्ता यवानाश्च गुडाम्बुमिश्रै ॥१६॥
पद्मकोत्पलबीजानि त्रापुसानि शतावरी ।
विदारी चेक्षुमूलञ्च पिष्ट्वा धौतघृतायुतम् ॥
योन्या शिरसिगात्रे च प्रदेहोऽसृग्दरापह ॥ १७ ॥
मुद्गपर्णीविपक्वेन तैलेन पिचुधारणम् ।
कर्त्तव्यं रक्तनाशाय मार्दवाय सुखाय च ॥ १८ ॥
दध्नासौवर्चलाजाजी मधुक नीलमुत्पलम् ।
पिबेत् क्षौद्रयुत नारी वातासृग्दरपीडिता ॥ १९ ॥
तिलचूर्ण दधिघृत फाणित शौकरी वसाम् ।
क्षौद्रेण सयुत पेय वातासृग्दरनाशनम् ॥ २० ॥
*वाराहस्य रसो मिध्य सकौलित्थो निशाधिक ।*
वातासृग्दरशान्त्यर्थं पिबेदप्ता वराङ्गना ॥ २१ ॥
पित्तासृग्दरशान्त्यर्थ पिबेदिक्षुरसेन वा ॥ २२ ॥

इति वातासृग्दर ।

पिबेद्दैणेयकं रक्तं शर्करामधुसंयुतम्।
वासकस्वरसं पित्ते गुडूच्यारसमेव वा॥ २३॥
चन्दनोशीरपत्तङ्ग मधुकं नीलमुत्पलम्।
त्रपुसैर्वारुबीजानि धातकीकदलीफलम्॥ २४॥
कोललाचावटारोह पद्मकं पद्मकेशरम्।
एतान् कल्कान् मधुयुतान् पाययेत्तंडुलांबुना॥ २५॥
त्र्यहात्प्रशमयेदेतत् योषितां पैत्तिकं रजः॥ २६॥

चन्दनादिकल्कम्।

शर्कराक्षौद्रसयुक्तं यष्ट्याह्वं नागरं दधि।
पयस्योत्पलशालूक विसकालीयज रजः॥
पयसाशर्कराक्षौद्र युतेनासृग्दरे पिबेत्॥ २७॥
कपित्थवेणुपत्रञ्च सममेकत्र पेषयेत्।
मधुना सह दातव्य तीव्रप्रदरनाशनम्॥ २८॥
अशोकवल्कलक्वाथ शृतं दुग्ध सुशीतलम्।
यथा बल पिबेत्प्रात स्त्रीप्राऽसृग्दरनाशनम्॥ २९॥
क्षौद्रयुक्त फलरसं काकोडुम्बरजं पिबेत्।
असृग्दरविनाशाय सशर्करापयोऽन्नभुक्॥ ३०॥

इति पित्तासृग्दरः।

मधुकं त्रिफलालोध्र मुस्तं सौराष्ट्रिकां मधु।
मद्यैर्निम्बगुडूच्यौ तु कफजेऽसृग्दरे पिबेत्॥ ३१॥
रोहितकान्मूलकल्कं पाण्डुरेऽसृग्दरे पिबेत्।
जलेनामलकीबीज कल्कं वा ससितामधु॥
पिबेद्दिनत्रयेणैव श्वेतप्रदरनाशनम्॥ ३२॥
काकजङ्घाकमूलं वा मूलं कार्पासमेव वा।

पाण्डुप्रदरनाशाय पिबेत्तण्डुलवारिणा ॥ ३३ ॥
तक्राशनरता सम्यक् संपिबेन्नागकेशरम् ।
त्र्यहं तक्रेण संपीष्य श्वेतप्रदरशान्तये ॥ ३४ ॥
फलत्रिकं दारुवचा सवासा लाजा सदूर्वाकलशीसमङ्गा ।
क्षौद्रान्वितं क्वाथमिदं सुशीतं सर्वात्मके पेयमसृग्दरे हि ॥३५॥

दार्वीरसाञ्जनवृषाब्दकिराततिल्व
भल्लातकैरवकृतो मधुना कषायः ।
पीतो जयत्यतिबलं प्रदरं सशूलं
पीतासितारुणविलोहितनीलशुक्लम् ॥ ३६ ॥

लिप्ते ललाटपट्टे बलतरखञ्जनैचकल्केन ।
प्रदरं शाम्यति नित्यं विचिविताद्रव्यशक्तिरियम् ॥ ३७ ॥
आखोः पुरीषं पयसा निपीय वङ्गेर्बलादेक महद्दाषं वा ।
स्त्रियो महाशोणितवेगनद्याः चयेन पारं परमाप्नुवन्ति ॥ ३८ ॥
मधुना तार्क्ष्यसंयुक्तं मूलं स्यात्तण्डुलीयकम् ।
तण्डुलाम्बुयुतं पानात् सर्वप्रदरनाशनम् ॥ ३९ ॥
कुशमूलं समाहृत्य पाययेत्तण्डुलाम्बुना ।
एतत्पीत्वा त्र्यहं नारी प्रदरात्परिमुच्यते ॥ ४० ॥
प्रदरं शमयति नार्याः क्वथितं सलिलेन वा पयसा ।
मूलं वास्तुकाशयोः पीतं दिवसत्रयेणैव ॥ ४१ ॥
भूम्यामलकीबीजन्तु पीतं तण्डुलवारिणा ।
दिनद्वयत्रयेणैव स्त्रीरोगं नाशयेद् ध्रुवम् ।
मेढ्रजं रुधिरस्रावं रक्तातिसारसुल्बणम् ॥ ४२ ॥
असितोत्पलशालूकं निस्तुषारक्तशालयः ।
यवानीगैरिकं यासा समभागेन चूर्णिता ॥
क्षौद्रेण तांश्च संयोज्य लिह्यात्प्रदरपीडिता ॥ ४३ ॥

तण्डुलीयकमूलञ्च सक्षौद्रं तण्डुलाम्बुना।
रसाञ्जनञ्च लाक्षाञ्च छागेन पयसा पिबेत् ॥ ४४ ॥
प्रदरं हन्ति बलाया मूलं दुग्धेन समधुनापीतम्।
कुशवाट्यालकमूलं तण्डुलसलिलेन रक्ताख्यम् ॥ ४५ ॥
दग्धामूषकविष्टान्तु लोहिते प्रदरे पिबेत् ॥ ४६ ॥
शर्कराया: पलं पिष्ट्वा मधुकस्य चतुष्पलम्।
तण्डुलोदकसंयुक्तं लोहितप्रदरे पिबेत् ॥ ४७ ॥
काश्मर्यवटशुङ्गानि पृथग्दन्त्यास्तथैव च।
घृतं सिद्धं भवेच्छ्रेष्ठं शोणितप्रदरे पिबेत् ॥ ४८ ॥

इति काश्मर्यादिघृतं त्रयम्।

तरुण्याहितसेविण्या स्वादल्पोऽपद्रवं भिषक्।
रक्तपित्तविधानेन यथा वत्समुपाचरेत् ॥ ४९ ॥
हितश्चात्र विशेषेण लेह्योय: कुटजाष्टकः॥ ५० ॥
पाठाजम्वाम्रयोर्मध्यं शिलाभेदं रसाञ्जनम्।
अम्बष्टकीमोचरस: समङ्गापद्मकेसरम् ॥ ५१ ॥
वाह्लीकातिविषामुस्तं विल्वं लोध्रं सगैरिकम्।
कट्फलं मरिचं शुण्ठी मृद्वीकारक्तचन्दनम् ॥ ५२ ॥
कट्वङ्गवत्सकानन्ता धातकीमधुकार्जुनम्।
पुष्येणोद्धृत्य तुल्यानि श्लक्ष्णचूर्णानि कारयेत् ॥ ५३ ॥
तानि क्षौद्रेण संयुज्य पाययेत्तंडुलाम्बुना।
असृग्दरातिसारेषु रक्तं यच्चोपविश्यते ॥ ५४ ॥
दोषागन्तु कृताये च बालानां तांश्च नाशयेत्।
योनिदोषं रजोदोषं श्वेतनीलं सपीतकम् ॥ ५५ ॥
स्त्रीणां श्यावारुणा यच्च तत् प्रसह्य निवर्त्तयेत्।

चूर्णं पुष्यानुगं नाम हितमात्रेय पूजितम् ॥ ५६ ॥

इति पुष्यानुगं चूर्णम् ।

अशोकवल्कलप्रस्थं तोयाढ़कविपाचितम् ।
चतुर्भागावशिष्टेन घृतप्रस्थं विपाचयेत् ॥ ५७ ॥
तंडुलांबुलजाचीरं घृततुल्यं प्रदापयेत् ।
जीवकस्य रसश्चापि केशराजोद्भवस्तथा ॥
जीवनीयैः प्रियालैश्च परूषैः सरसाञ्जनैः ॥ ५८ ॥
यष्ट्याह्वाशोकमूलञ्च मृद्वीका च शतावरी ।
तंडुलीयकमूलञ्च कल्कैरेभिः पलार्द्धिकैः ॥ ५९ ॥
शर्कराया: पलान्यष्टौ गर्भं दत्वा सुचूर्णितम् ।
पुष्ययोगेन तत्सर्पिः शनैर्मृद्वग्निना पचेत् ॥ ६० ॥
पीतमेतद्घृतं हन्त्या सर्वदोषसमुद्भवम् ।
श्वेतं नीलं तथा कृष्णं प्रदरं हन्ति दुस्तरम् ॥ ६१ ॥
कुक्षिशूलं कटिशूलं योनिशूलञ्च सर्वगम् ।
मन्दाग्निमरुचिं पांडुं कृशत्वं श्वासकासकम् ॥ ६२ ॥
आयुः पुष्टिकरं धन्यं बलवर्णप्रसादनम् ।
देयमेतद्वरं सर्पि विष्णुना परिकीर्त्तितम् ॥ ६३ ॥

इत्यशोकघृतम् ।

कुमुदं पद्मकोशीरं गोधूमारक्तशालयः ।
मुद्गपर्णीपयस्या च काश्मरीमधुयष्टिका ॥ ६४ ॥
बलातिबलयोर्मूलं सुत्पलं तालमस्तकम् ।
विदारीशतमूली च शालपर्णी सजीवका ॥ ६५ ॥
फलं[१] त्रपुसबीजानि प्रत्यग्रं कदलीफलम् ।

१ फलमत्र त्रिफला ।

एषामर्द्धपलान् भागान् गवां चीरं चतुर्गुणम् ॥ ६६ ॥
पानीयं द्विगुणं दत्वा घृतप्रस्थं विपाचयेत्।
प्रदरे रक्तगुल्मे च रक्तपित्ते हलीमके ॥ ६७ ॥
बहुरूपञ्च यत्पित्तं कामलावातशोणिते।
अरोचके ज्वरे जीर्णे पाण्डुरोगे मदे भ्रमे ॥ ६८ ॥
तरुणी चाल्पपुष्पा या या च गर्भं न विन्दति।
अहन्यहनि च स्त्रीणां भवति प्रीतिवर्द्धनम्।
शीतकल्याणकं नाम परमुक्तं रसायनम् ॥ ६९ ॥

इति शीतकल्याणकघृतम्।

शतावरीरसप्रस्थं क्षोदयित्वा च पीडयेत्।
घृतप्रस्थसमायुक्तं चीरं द्विगुणितं तथा ॥ ७० ॥
अन्तः कल्कानिमान्दद्यात् कार्षिकान् सूक्ष्णपेषितान्।
जीवनीयानि यान्यष्टौ यष्टी चन्दनपद्मके ॥ ७१ ॥
श्वदंष्ट्रा चात्मगुप्ता च बलानागबला तथा।
शालपर्णीपृष्टपर्णी विदारीशारिवाद्वयम् ॥ ७२ ॥
शर्करा च समा देया काश्मर्य्याश्च फलानि च।
सम्यक् सिद्धन्तु विज्ञाय तदेतदवतारयेत् ॥ ७३ ॥
रक्तपित्तविकारेषु वातपित्तक्षतेषु च।
वातरक्तं चयं श्वासं हिक्कां कासञ्च दुस्तरम् ॥ ७४ ॥
अंगदाहं शिरोदाहं रक्तपित्तसमुद्भवम्।
असृग्दरं सर्वभूतं मूत्रकृच्छ्रञ्च दारुणम् ॥
एतान् रोगान् शमयति भास्करस्तिमिरं यथा ॥ ७५ ॥

इति शतावरीघृतम्।

मुद्गमाषस्य निर्यूहे रास्नाचित्रकनागरैः।

सिद्धं सपिप्पलीविश्वैः सर्पिः श्रेष्ठमसृग्दरे ॥ ७६ ॥

इति मुद्गघृतम् ।

शाल्मलीपुष्पनिर्यासः पृश्निपर्णस्तथैव च ।
काश्मर्यं चन्दनञ्चैषां कल्केन स्वरसेन च ॥ ७७ ॥
एभिः पचेद् घृतप्रस्थ मवतार्य्य सुशीतलम् ।
पिबेत्सर्पिरिदं नारी सर्वप्रदरशान्तये ॥ ७८ ॥

इति शाल्मलीघृतम् ।

काश्मरीवदरानन्ता गडूचीमधुकैः शृतम् ।
छाजेन पयसासिद्ध मेतद्घृतमसृग्दरे ॥ ७९ ॥

इति काश्मरीघृतम् । इत्यसृग्दरनिदानचिकित्सा ।

—०—

स्त्रीणामतिप्रसंगाद्वा शोकाद्वापि श्रमादपि ।
अतिसारकरोगाद्वा गरदोषात्तथैव च ॥ ८० ॥
आपः सर्वशरीरस्थाः क्षुभ्यन्ति प्रस्रवन्ति च ।
तस्यास्ताः प्रच्युताः स्थाना न्मूत्रमार्गं व्रजन्ति हि ॥ ८१ ॥
प्रसन्ना निर्मलाः शीता निर्गन्धा नीरुजाः सिताः ।
स्रवन्ति चातिमात्रन्ताः सा न शक्नोति दुर्बला ॥ ८२ ॥
वेगं धारयितुं तासां न विन्दति सुखं क्वचित् ।
शिरसः शिथिलत्वञ्च मुखतालुकशोषणम् ॥
मूर्च्छा जृम्भा प्रलापश्च त्वग्रूक्षा चातिमात्रतः ॥ ८३ ॥
भक्ष्यैर्भोज्यैश्च पेयैश्च तृप्तिं न लभते सदा ।
सोमरोग इति ज्ञेयो देहे सोमक्षयात् स्त्रियाः ॥ ८४ ॥
शरीरधारणाच्चापि सोमद्रव्याभिशब्दितः ।
तस्मात्सोमक्षयाद्देहो निश्चेष्टश्च भवेत्सदा ॥ ८५ ॥

—०—

## अथ सोमरोगचिकित्सामाह।

कदलीनां फलं पक्वं धात्रीफलरसं मधु।
शर्करा सहितं खादेत् सोमधारणमुत्तमम्॥ ८६॥
माषचूर्णं समधुकं विदारीं मधुशर्कराम्।
पयसा पाययेत्प्रात स्तृपां धारणमुत्तमम्॥ ८७॥
कदलीनां फलं पक्वं विदारीञ्च शतावरीम्।
क्षीरेण पाययेत्प्रात स्तृपां धारणमुत्तमम्॥ ८८॥
स एव सकजः सोमो मूत्रेण स्रवते मुहुः।
तत्रैलापत्रचूर्णेन पाययेत्तरुणीं सुराम्॥ ८९॥

---

## अथ मूत्रातिसारमाह।

सोमलक्षणसंसृष्टा कालातिक्रान्तयोगतः।
ह्यतिक्रान्तक्रमेणैव स्रवेन्मूत्रमभीक्ष्णशः॥ ९०॥

इति स्त्रीणां सोमोपक्रमः।

---

अथ स्त्रीणां विद्वेषमभिधास्ये सत्रिविधो विद्वेषः तद्यथा दैवकृत. अदृष्टपुरुषत्वयोगकृतः सपत्नीकृतश्चेति। तत्र प्रथमो विरुद्धनक्षत्रकृतपरिणयतादिदोषात् आदित एव जायते। द्वितीयश्च विदग्धपुरुषसंयोगात्। तृतीयस्त्वौषधकृत अनियत एव काले प्रजायते। तत्र प्रथमे विवाहकालक इति तद्धोमः कर्त्तव्यः। ततः प्रदोषे भक्तपुत्तलिकां कृत्वा गन्धधूपादिपूजितां वस्त्राहतजीवन्तिका दीपसहितां रक्तपुष्पमालार्चितां कृशचण्डिकां कोणेषु च चतुर्वर्णध्वजायुक्ताम्। तस्या दर्शनं पूजनञ्च कृत्वा विनयान्विता

मन्त्रं जपेत्, ततः कुमारीश्च पूजयेद्भोजयेच्च। ततः संपद्यते सुखं ॐ ह्रूं ह्रं वं वशीकरणं कुरुष्व स्वाहा। इति वशीकरणमन्त्रः।

द्वितीये च लज्जालुमूलेन गजान्वितेन कर्पूरमिश्रितेन वराङ्गे प्रलेपं कृत्वा प्रसिद्धनरनारीविभ्रमधूमधूपेन कृताङ्गधूपः। समालम्बनादिकृतशृङ्गारकावेशः। नारीं गृहसम्बन्धबद्धस्त्रियं चाटुवचनां विपर्य्योचितां समाहितः पुरुषोऽनिच्छन्तामभिगच्छेत् कुमारीणाञ्च भोजनमुत्सृजेत्। ततः सम्पद्यते शुभम्। तृतीये प्रियंगुकमयूरशिखाश्वेतपुनर्नवामूलं पिष्ट्वा छागलपयसालोड्य योनिं प्रक्षालयेत्। पिष्टसूकरमांसेन रचितां स्त्रीप्रमाणां पुत्तलिकां कृत्वा। गन्धादिना समालभ्य पूजयित्वा स्त्रियं निर्मथयित्वा श्मशाने रात्रिप्रहरैकगते टापयेत्। कुमारीश्च पूजयेत् ततः संपद्यते शुभम्। ॐ घोराख्ये प्रियजननि ह्रं स्वाहा। इत्यपि वशीकरणमन्त्रः। इति नागार्जुनकृतौ योगसारे स्त्रीदोषचिकित्सा परिच्छेदः।

---

## अथ निदानमाह।

विंशतिर्व्यापदो योनेर्निर्दिष्टा रोगसंग्रहे।
मिथ्याचारेण ताः स्त्रीणां प्रदुष्टेनार्त्तवेन च ॥ ८१ ॥
जायन्ते बीजदोषाच्च दैवाच्च शृणु ताः पृथक् ॥ ८२ ॥
सा फेनिलमुदावर्त्ता रजः कृच्छ्रेण मुञ्चति।
वन्ध्यां नष्टार्त्तवां विद्या द्विप्लुतां नित्यवेदनाम् ॥ ८३ ॥
परिप्लुतायां भवति ग्राम्यधर्मेण रुग्भृशम्।
वातलाकर्कशास्तब्धा शूलनिस्तोदपीडिता।
चतसृष्वपि चाद्यासु भवन्त्यनिलवेदनाः ॥ ८४ ॥

सदाह चीयते रक्तं यस्यां सा लोहितचया ।
सवातमुद्गिरेद्वीजं वामिनीरजसायुतम् ॥ ९५ ॥
प्रस्रंसिनीस्रंसते तु चोभिताद्दु प्रजायिनी ।
स्थितं स्थितं हन्ति गर्भं पुत्रघ्नीरक्तसञ्चयात् ॥ ९६ ॥
अत्यन्तपित्तलायोनि दाहपाकज्वरान्विता ।
चतसृष्वपि चाद्यासु पित्तलिङ्गोच्छ्रयो भवेत् ॥ ९७ ॥
अत्यानन्दा न सन्तोषं ग्राम्यधर्मेण गच्छति ।
कर्णिन्यां कर्णिकायोनौ श्लेष्मासृग्भ्याञ्च जायते ॥ ९८ ॥
मैथुनाचरणात्पूर्वं पुरुषादतिरिच्यते ।
बहुशश्चातिचरणा तयोर्वीजं न विन्दति ॥ ९९ ॥
श्लेष्मलापिच्छलायोनिः कण्डूयुतातिशीतला ।
चतसृष्वपि चाद्यासु श्लेष्मलिङ्गोच्छ्रयो भवेत् ॥ १०० ॥
अनार्त्तवाऽस्तनीषण्ढी खरस्पर्शा च मैथुने ।
अतिकायगृहीताया स्तरुण्यास्त्वण्डिनी भवेत् ॥ १०१ ॥
विवृताऽतिमहायोनि सूचीवक्त्रा निसंवृता ।
सर्वलिङ्गसमुत्थाना सर्वदोषप्रकोपजा ॥ १०२ ॥
चतसृष्वपि चाद्यासु सर्वलिङ्गोच्छ्रयो भवेत् ।
पञ्चासाध्याभवन्तीह योनयः सर्वदोषजाः ॥ १०३ ॥

---

## अथ योनिरोगचिकित्सा ।

योनिव्यापत्सुभूयिष्टं कर्त्तव्य कर्म्मवातजित् ।
स्नेहस्वेदनवस्त्यादि विशेषाद्वातजासु च ॥ १०४ ॥
स्निग्धस्विन्ना तथा योनिं दुःस्थितां स्थापयेच्च ताम् ।
मधुरौषधसंसिद्धान् वेषवराश्च योनिषु ॥ १०५ ॥

निक्षिप्य धारयेच्चापि पिचुतैलं यथा बलम् ।
योनिशूलरुजादीःस्य शोफस्रावप्रशान्तये ॥ १०६ ॥
कर्णिन्यां वर्त्तयो देया शोधनद्रव्यसंयुता ॥ १०७ ॥
स्रंसनीं घृताभ्यक्तां चीरखिन्नां प्रशान्तयेत् ।
विधायवेशवारैश्च ततो बन्धं समाचरेत् ॥ १०८ ॥
पाणिनानामयेज्जिह्मां संवृतां वर्द्धयेत् पुनः ।
प्रवेशयेन्निःसृताञ्च विस्मृतां परिवर्जयेत् ॥ १०९ ॥
वचोपकुञ्चिकाजाजी कृष्णाहपकसैन्धवम् ।
अजमोदां यवक्षारं चित्रकं शर्करान्वितम् ॥ ११० ॥
पिष्ट्वा प्रसन्नयालोड्य खादेत्तद् घृतभर्जितम् ।
योनिपार्श्वार्त्तिहृद्रोग गुल्मार्शो विनिवृत्तये ॥ १११ ॥
सुखं नारीपिबेत्काले योनिशूलनिपीड़िता ।
रास्नाश्वगन्धाहपकैः शृतं शूलहरं पयः ।
गुडूचीत्रिफलादन्ती क्वाथैश्च परिषेचनम् ॥ ११२ ॥
मूषकवसयाभ्यङ्गो निस्सृतयोनेः प्रवेशाय ॥ ११३ ॥
मूषकवसयाभ्यङ्गो निस्सृतयोनेः प्रवेशाय ॥ ११३ ॥
गुडूचीत्रिफलाभीरु शुण्ठनासानिशाह्वयैः ।
श्रीपर्णीशैर्यकद्राक्षा कासमर्दकविल्वकैः ॥ ११४ ॥
परुषकान्वितैरच्छ समैः प्रस्थो घृतः शृतः ।
योनिवातविकारघ्नो गर्भदः परमो भवेत् ॥ ११५ ॥

इति गुडूच्यादिघृतम् ।

तैलप्रस्थं गवां मूत्रे क्षीरे द्विगुणिते पचेत् ।
गुडूच्यादेस्तु कल्केन तद्युक्तञ्च भिगग्वरः ॥
वातार्त्तायां पिचुं दद्या द्योनौ संचारयेत्सदा ॥ ११६ ॥

इति गुडूच्यादितैलम् ।

नतवार्त्ताकिनीकुष्ट सैन्धवामरदारुभिः।
तैलप्रसाधितो धार्य्यः पिचुर्योनौ रुजापहः॥ ११७॥
इति नताद्य तैलम्।

पित्तलानान्तु योनीनां सेकाभ्यङ्गपिचुक्रियाः।
शीताः पित्तहराः कार्य्याः स्नेहनार्थं घृतानि च॥ ११८॥
वरीघृतं बलातैलं युञ्ज्यात्पित्तविकारनुत्।
दोष ज्ञात्वाऽसृज योज्यं प्रदरघ्नं क्रियाक्रमम्॥ ११९॥
काश्मरीकुटजक्वाथे सिद्धमुत्तरवस्तिना।
रक्तयोन्यरजस्का याऽपुत्रातासां हितं घृतम्॥ १२०॥
योन्यां बलासदुष्टायां सर्वं रूक्षौष्णमौषधम्।
तैलं सिन्धुयवान्वञ्च यथारिष्टञ्च योजयेत्॥ १२१॥
पिप्पल्याः मरिचैर्माषैः शताह्वाकुष्टसैन्धवैः।
वर्त्तिस्तुल्याप्रदेशिन्या धार्य्यायोनिविशोधिनी॥ १२२॥
छिन्नाकल्कान्तु वातार्त्ता कोष्णमभ्यज्य धारयेत्।
पञ्चवल्कस्य पित्तार्त्ता श्यामादीनां कफार्दिता॥ १२३॥
स्तब्धायां कर्कशायाञ्च कुर्य्यान्मार्दवकारकम्।
सन्निपातसमुत्थायां क्रम साधारणं हितम्॥ १२४॥
एला सधातकीजम्बू समङ्गामोचसर्जकम्।
दुर्गन्धे पिच्छले स्विन्ने स्तम्भिते चूर्णमिष्यते॥ १२५॥
दुर्गन्धानां कषायं स्या त्तैलं कल्क एव च।
चूर्णं वा सर्वगन्धानां पूतिगन्धापकर्षणम्॥ १२६॥

—०—

## अथ गर्भप्रदयोगानाह।

लक्ष्मणाचन्दनं लोध्र सुषीरं पद्मकं शठी।

द्वे हरिद्रे वचाकुष्टं पद्मकेशरमुत्पलम् ॥ १२७ ॥
शारिवे द्वे विडङ्गानि सुमनः कुसुमानि च।
मांसीदारु श्वदंष्ट्रा च रेणुकं चोत्पलं तथा ॥ १२८ ॥
मधुकं शतपुष्पा च मात्रैषां कार्षिका भवेत्।
एभिर्वाजघृतप्रस्थं चीरं दत्वा चतुर्गुणम्।
तत्कषाय दशगुणं स्नेहपाकविधि पचेत् ॥ १२९ ॥
गुणांस्तस्य प्रवच्यामि घृतस्यास्य महात्मनः।
गर्भिणीनाञ्च नारीणां पानाभ्यञ्जनभोजनैः ॥ १३० ॥
बालानां ग्रहजुष्टानां घृतमेतत्प्रशस्यते।
बन्ध्यापुष्टिप्रदं पौष्य मपुत्राणाञ्च पुत्रदम् ॥ १३१ ॥
श्रेष्ट वा योनिरोगे स्या दस्रगद्‌रविनाशनम्।
यन्मया निर्मितं ख्यात लक्ष्मणाद्य घृतं महत् ॥ १३२ ॥

इति लक्ष्मणाद्यं घृतम्।

सहचरे द्वे त्रिफलां गुडूचीं सपुनर्नवाम्।
शुकनासां हरिद्रे द्वे रास्नां मेदां शतावरीम् ॥ १३३ ॥
कल्कीकृत्य घृतप्रस्थ पचेत् चीरचतुर्गुणम्।
तत्सिद्ध प्रपिबेन्नारी योनिशूलनिपीड़िता ॥ १३४ ॥
पीडिता चलिता योनि र्निःसृता विवृता च या।
पित्तयोनिश्च विस्रस्ता षण्ढयोनिश्च या स्मृता ॥ १३५ ॥
प्रपद्यन्ते तु ता स्थानं गर्भं गृह्णन्ति चासकृत्।
एतत् फलघृतं नाम योनिदोषहर परम् ॥ १३६ ॥

इति फलघृतम्।

एवं योनिषु शुद्धासु गर्भं विन्दन्ति योषितः।
अदुष्टे प्राकृते बीजे बीजोपक्रमणे सति ॥ १३७ ॥
बीजस्य प्लवनं न स्याम् हृदिमूत्रञ्च फेनिलम्।

पीत्वा च लभते पुत्रं वीर्य्यवन्तमसंशयः ॥ १४९ ॥
पुष्योद्धृतं लक्ष्मणाया मूलं पिष्टञ्च कन्यया।
ऋत्वंते घृतदुग्धाभ्यां पीत्वा प्रोत्यबला सुतम् ॥ १५० ॥
तिलतैलकुड़वमेकं हयसलिलैर्मंयुतं पक्वम्।
ऋतुकालान्ते पीत्वा गर्भं विदधाति वन्ध्यापि ॥ १५१ ॥
जीवकपुत्रकबीजं चीरेण पिबेत्सपत्रमूलञ्च।
दारकनष्टा वनिता जनयति दीर्घायुषं पुत्रम् ॥ १५२ ॥
चीरेण श्वेतबृहतीमूलं नासिकया पिबेत्।
दक्षिणयात्मजार्थं वा कन्यार्थं वामया तथा ॥ १५३ ॥
पुष्योद्धृते लक्ष्मणाया यक्राङ्गायास्तु कन्यया।
पिष्टं मूलं च विदुग्धं पीतमृतौ तु पुत्रदम् ॥ १५४ ॥
न्यग्रोधशुङ्गासनकं प्रवालचूर्णञ्च सवर्णवत्सायाः।
गोचीरं परिपीतं पुत्रं प्रकरोति पुष्यर्चे ॥ १५५ ॥
रोमराजी भवेद्यस्या वामपार्श्वेति मूर्च्छिता।
कन्यां तस्या विजानीया इक्षिणे च तथा सुतः ॥ १५६ ॥
इति गर्भोत्पादनविधिः।

मुस्ताकुष्ठं हरिद्रे द्वे पिप्पलीकटुरोहिणी।
काकोलीचीरकाकोली विडङ्गं त्रिफलावचा ॥ १५७ ॥
मेदाराखाश्वगन्धा च विशाला च प्रियंगुका।
द्वे शारिवे शताह्वा च दन्तीमधुकमुत्पलम् ॥ १५८ ॥
अजमोदा महामेदा चन्दनं रक्तचन्दनम्।
जातीपुष्पन्तुगाचीरी शर्कराहिंगुकट्फलम् ॥ १५९ ॥
चतुर्गुणेन पयसा विपचेद्धोमयाग्निना।
नक्षत्रे पुष्पसम्पन्ने भांडे ताम्रमये दृढ़े ॥ १६० ॥
कलिशे वापि कल्याणि कृतकौतुकमङ्गलः।

सर्पिरेव नरः पीत्वा स्त्रिषु नित्यं वृषायते॥ १६१ ॥
एतद्वन्ध्या पिबेन्नारी या च कन्याप्रजायिनी।
या चैवास्थिरगर्भा स्याद्या च सूता पुनः स्थिता ॥ १६२ ॥
अनायुषं वा जनयेद्या वा जनयते मृतम्।
सा नारी जनयेत्पुत्रं वेदवेदाङ्गपारगम् ॥ १६३ ॥
रूपलावण्यसम्पन्नं मजरञ्च शतायुषम्।
वृहत्कल्याणकं सर्पिर्भारद्वाजेन भाषितम् ॥ १६४ ॥
अनुक्तं लक्ष्मणामूलं चिपन्त्यत्र चिकित्सकाः ॥

इति वृहत्कल्याणघृतम्।

मञ्जिष्ठामधुकं कुष्टं त्रिफलाशर्करावला।
मेदापयस्या काकोली मूलं चैवाश्वगन्धजम् ॥ १६५ ॥
अजमोदाहरिद्रे द्वे हिंगु कटुकरोहिणी।
उत्पलं कुमुदं द्राक्षा काकोल्यौ चन्दनद्वयम् ॥ ६६ ॥
एतेषां कार्षिकैर्भागैर्घृतप्रस्थं विपाचयेत्।
शतावरीरसक्षीरं घृताद्देयं चतुर्गुणम् ॥ १६७ ॥
सर्पिरेतन्नरः पीत्वा स्त्रीषु नित्यं वृषायते।
पुत्रं जनयते नारी मेधाढ्यं प्रियदर्शनम् ॥ १६८ ॥
या चैवास्थिरगर्भा स्याद्या वा जनयते मृतम्।
अल्पायुषं वा जनयेद्या च कन्यां प्रसूयते ॥ १६९ ॥
योनिदोषे रजोदोषे परिस्रावे च शस्यते।
प्रजावर्द्धनमायुष्यं सर्वग्रहनिवारणम् ॥ १७० ॥
नाम्ना फलघृतञ्चैतदश्विभ्यां परिकीर्तितम्।
अनुक्तं लक्षणामूलं चिपन्त्यत्र चिकित्सकाः ॥ १७१ ॥

इति वृहत्फलघृतम्।

पीत्वा च लभते पुत्रं वीर्य्यवन्तमसंशयः ॥ १४९ ॥
पुष्योद्धृत लक्ष्मणाया मूलं पिष्टञ्च कन्यया।
कृत्वते घृतदुग्धाभ्यां पीत्वा प्रोत्यबला सुतम् ॥ १५० ॥
तिलतैलकुडवमेकं द्विपसलिलैर्मयुतं पक्वम् ।
ऋतुकालान्ते पीत्वा गर्भं विदधाति बन्ध्यापि ॥ १५१ ॥
जीवकपुत्रकबीजं चीरेण पिबेत्सपत्रमूलञ्च ।
दारकनष्टा वनिता जनयति दीर्घायुषं पुत्रम् ॥ १५२ ॥
चीरेण श्वेतबृहतीमूलं नासिकया पिबेत् ।
दचिणयात्मजार्थं वा कन्यार्थं बामया तथा ॥ १५३ ॥
पुष्योद्धृतं लक्ष्मणाया चक्राङ्गायास्तु कन्यया ।
पिष्टं मूलं हविर्दुग्ध पीतसृतौ तु पुत्रदम् ॥ १५४ ॥
न्यग्रोधशृङ्गासनकं प्रवालचूर्णञ्च सवर्णवत्सायाः ।
गोचीरं परिपीतं पुत्रं प्रकरोति पुष्यर्चे ॥ १५५ ॥
रोमराजी भवेद्यस्या वामपार्श्वेति मूर्च्छिता ।
कन्यां तस्या विजानीया द्दचिणे च तथा सुतः ॥ १५६ ॥
इति गर्भोत्पादनविधि. ।

मुस्ताकुष्टं हरिद्रे द्वे पिप्पलीकटुरोहिणी ।
काकोलीचीरकाकोली विडङ्गं त्रिफलावचा ॥ १५७ ॥
मेदारास्नाश्वगन्धा च विशाला च प्रियंगुका ।
द्वे शारिवे शताह्वा च दन्तीमधुकमुत्पलम् ॥ १५८ ॥
अजमोदा महामेदा चन्दनं रक्तचन्दनम् ।
जातीपुष्पन्तुगाचीरी शर्कराहिंगुकट्फलम् ॥ १५९ ॥
चतुर्गुणेन पयसा विपचेद्रोमयाग्निना ।
नक्षत्रे पुष्यसम्पन्ने भांडे ताम्रमये दृढे ॥ १६० ॥
कलिशे वापि कल्याणे कृतकौतुकमङ्गलः ।

सर्पिरेव नरः पीत्वा स्त्रिषु नित्यं वृषायते, ॥ १६१ ॥
एतदभ्या पिबेन्नारी या च कन्याप्रजायिनी ।
या चैवास्थिरगर्भा स्या द्या च सूता पुनः स्थिता ॥ १६२ ॥
अनायुर्षं वा जनये द्या वा जनयते सृतम् ।
सानारीजनयेत्पुत्रं वेदवेदाङ्गपारगम् ॥ १६३ ॥
रूपलावण्यसम्पन्न मजरञ्च शतायुषम् ।
वृहत्कल्याणकं सर्पि र्भारद्वाजेन भाषितम् ॥ १६४ ॥
अनुक्तं लक्षणामूलं चिपन्त्यत्र चिकित्सिकाः ॥

इति वृहत्कल्याणघृतम् ।

मञ्जिष्ठामधुकं कुष्टं त्रिफलाशर्करावला ।
मेदापयस्या काकोली मूलं चैवाश्वगन्धजम् ॥ १६५ ॥
अजमीदाहरिद्रे द्वे हिंगु कटुकरोहिणी ।
उत्पलं कुमुदं द्राक्षा काकोल्यौ चन्दनद्वयम् ॥ ६६ ॥
एतेषां कार्षिकैर्भागै र्घृतप्रस्थं विपाचयेत् ।
शतावरीरसक्षीरं घृताद्देयं चतुर्गुणम् ॥ १६७ ॥
सर्पिरेतन्नरः पीत्वा स्त्रीषु नित्यं वृषायते ।
पुत्रं जनयते नारी मेधाढ्यं प्रियदर्शनम् ॥ १६८ ॥
या चैवास्थिरगर्भा स्या द्या वा जनयते सृतम् ।
अल्पायुषं वा जनये द्या च कन्यां प्रसूयते ॥ १६९ ॥
योनिदोषे रजोदोषे परिस्रावे च शस्यते ।
प्रजावर्द्धनमायुष्यं सर्वग्रहनिवारणम् ॥ १७० ॥
नाम्ना फलघृतञ्चैतदश्विभ्यां परिकीर्तितम् ।
अनुक्तं लक्षणामूलं चिपन्त्यत्र चिकित्सिकाः ॥ १७१ ॥

इति वृहत्फलघृतम् ।

शतावर्थ्याविदार्य्याय तथा माषात्मगुप्तयोः ।
खदंष्ट्रायाश्च निःक्वाथे नल्वणे च पृथक् पृथक् ॥ १७२ ॥
साधयित्वा घृतप्रस्थं पयश्चतुर्गुणे पचेत् ।
शर्करामधुसंयुक्तं मिलित्वा तत्प्रयोजयेत् ॥ १७३ ॥

इति शतावरीघृतम् ।

वृद्धदारुकमूलेन घृतं पक्वं पयोन्वितम् ।
एतद्दृष्यतमं सर्पिः पुत्रकामः पिबेन्नरः ॥ १७४ ॥

---

## अथ संजातगर्भलक्षणमाह ।

छर्दिरम्ले रुचिर्नित्यं ष्ठीविकारोमराजिका ।
अरुचिस्तनयोः कार्ष्यं ग्लानिराटोपवर्जितम् ॥
कुचेरक्ष्णोः पक्ष्मलत्वं गर्भिणी स्फुटलक्षणम् ॥ १७५ ॥
यस्याः कुक्षौ भवेद् ग्लानिः पुनराध्मानमेव च ।
गर्भिण्या दृश्यते नार्य्याः तस्याः नागोदरं विदुः ॥ १७६ ॥
व्यवायखेदवर्जिन्या स्तस्याः स्याद्धी हृदं हितम् ॥ १७७ ॥

---

## अथ गर्भस्रावपातयोरवधिपूर्वकलक्षणमाह ।

भयाभिघातात्तिक्ष्णोष्ण पानाशननिषेवणात् ।
गर्भपतति रक्तस्य सशूलं दर्शनं भवेत् ॥ १७८ ॥
आचतुर्थात्ततो मासात् प्रस्रवेद्गर्भविद्रवः ।
ततः स्थिरशरीरस्य पातः पञ्चमषष्टयोः ॥ १७९ ॥

---

## अथ स्रावपातयोश्चिकित्सामाह।

सेकावगाहना लेपाः शस्यन्ते तत्र शीतलाः।
लोध्रेनाद्यैः शृतक्षीरं पानञ्चैव सशर्करम्॥ १८०॥

—०—

## अकालपाते निदानपूर्वकं दृष्टान्तमाह।

गर्भोऽभिघातविषमाशनपीडनाद्यैः
पक्वं द्रुमादिव फलं पतति क्षणेन॥ १८१॥

—०—

## अथोचितकाले मूढगर्भलक्षणमाह।

मूढः करोति पवनः खलु मूढगर्भं
शूलञ्च योनिजठरादिषु मूत्रसंगम्।
भुग्नोऽनिलेन विगुणेन ततः सगर्भः
संख्यामतीत्य बहुधा समुपैति योनिम्॥ १८१॥
द्वारं निरुध्य शिरसाजठरेण कश्चित्
कश्चिच्छरीरपरिवर्त्तनकुब्जदेहः।
एकेन कश्चिदपरस्तु भुजद्वयेन
तिर्य्यग्गतो भवति कश्चिदवाङ्मुखोऽन्यः॥ १८२॥
पार्श्वापवृत्तगतिरेति तथैव कश्चि-
दित्यष्टधागतिरियं ह्यपरा चतुर्धा॥ १८३॥
सङ्कीलकः प्रतिखुरः परिघोऽथ बीज-
स्तेषूर्ध्वबाहुचरणैः शिरसा च योनिम्।
संङ्गीचयो भवति कीलकवत् स कीलो
दृश्यैः खुरैः प्रतिखुरः स हि कायसङ्गी॥

गच्छेद्भुजद्वयशिरा: स च बीजकाख्यो
योनौ स्थित: सपरिघ: परिघेन तुल्य: ॥ १८४ ॥

—०—

## अथासाध्यमूढ़गर्भगर्भिण्योर्लक्षणमाह ।

अपविद्वशिराया तु शीताङ्गीनिरपत्नया ।
नोलोद्भूतशिरा हन्ति सा गर्भं च स तां तथा ॥ १८५ ॥
गर्भास्पन्दनमावीनां प्रणाश: श्यावपांडुता ।
भवेदुच्छ्वासपूतित्वं शूनतांतर्मृते शिशौ ॥ १८६ ॥
मानसागन्तुभिर्मातु रुपतापै: प्रपीड़ित: ।
गर्भो व्यापद्यते कुक्षौ व्याधिभिश्च निपीड़ित: ॥ १८७ ॥
योनिसंवरणं सङ्ग: कुक्षौ मारुत एव च ।
हन्यु: स्त्रियं मूढ़गर्भा यथोक्ताश्चाप्युपद्रवा: ॥ १८८ ॥
इति मूढ़गर्भनिदानम् ।

गर्भस्य गतयश्चित्रा जायन्तेऽनिलकोपत: ।
तत्राऽनल्पमतिर्वैद्यो वर्त्तते मतिपूर्वकम् ॥ १८८ ॥
मृतं गर्भं भिषक् प्राज्ञ: छित्वा कर्षेत्प्रयत्नत: ।
धान्वन्तरिमताभिज्ञ: साध्यज्ञातश्च ग्रन्थवित् ॥ १८० ॥
अभिघातान्मृतायास्तु गर्भ: प्रस्पन्दते यदि ।
जन्मकाले तत: शीघ्रं पाटयित्वोदरेच्छिशुम् ॥ १८२ ॥

गर्भाशयं परिहरनथ गर्भिणीञ्च
यत्नं करोति सहसा महदाशुकर्मा ।
वैद्यस्तु चेद्भवति शास्त्रगतिप्रवीण:
प्राप्नोति मित्रधनधान्ययशांसि लोके ॥ १८२ ॥

गर्भस्य सन्ति गतयोऽष्टविधा: पुरोक्ता:

भ्राम्यन्ति वैरतिपु वातगति स्वभावात्।
अंसे त्रिके शिरसि भूयसितस्य सद्गा
उत्तानकाय विनिकुञ्चितसक्थिदेशम् ॥ १८३ ॥
कव्यांससुन्नमित वाससि सन्निपस्य
स्फिग्देशसंस्थमथ पाणितले निजे च।
स्वच्छात्मलैर्घृतयुतैः परिमार्जयित्वा
गर्भं समानयति रचति योषिताञ्च ॥ १८४ ॥
सक्थ्या गतं सततमुन्नतमं सदेशं
स्निग्धे समागतकपूर्वनिपीड़ितेन।
सक्थिप्रसार्य्य परिधाय तथैव तिर्य्य-
गुत्क्षिप्य यत्पथ गतं ननु योनिमार्गम् ॥ १८५ ॥
पार्श्वागतस्य परिवृत्यशिरो निपीड्य
पूर्वं समुन्नतिशिरोपरिणीय योन्याम्।
हस्तेन तं सपदि तं परिलभ्य शस्त्रैः
छित्वा हरेन्मृतकगर्भशरीरदेशान् ॥ १८६ ॥
यद्यदङ्गं हि गर्भस्य तत्तत्सज्जति सन्निपक्।
सम्यग्विनिर्हरेच्छित्वा रत्तेनारीञ्च यत्नतः ॥ १८७ ॥
सचेतनं तु शस्त्रेण न कथचन दारयेत्।
आत्मानं जननीञ्चैव हन्यादाशु ह्यचेतनः ॥ १८८ ॥
नचोपेक्षेत मृतं गर्भं मुहूर्त्तमपि पण्डितः।
सद्यश्च जननीं हन्ति निरुच्छासं पशु यथा ॥ १८८ ॥
मण्डलाग्रेण कर्त्तव्यं छेद्यमन्तर्विजानता।
वृद्धिपत्रन्तु तीक्ष्णाग्रं नयोनाववचारयेत् २०० ॥

—०—

## अथ प्रतिमासं सवेदनागर्भिणीचिकित्सामाह ।

प्रथमाद्वादशं यावन्मासं गर्भच्युतौ रुजि ।
जानीयात् क्रमसञ्ज्ञात योगानेतान् भिषग्वरः ॥ २०१ ॥
मधुकं शाकबीजन्तु पयस्यासुरदारु च ।
अश्मन्तकः कृष्णतिला स्ताम्रवल्लीशतावरी ॥ २०२ ॥
वृक्षादनीपयस्या च लता सोत्पलशारिवा ।
अनन्ताशारिवारास्ना पद्माऽथ मधुयष्टिका ॥
शृङ्गाटकं विसं द्राक्षा कशेरुमधुकं सिता ॥ २०३ ॥
सप्तैतान् पयसा योगा नर्द्धश्लोकसमापनान् ।
क्रमात्सप्तसु मासेषु गर्भे स्रवति योजयेत् ॥ २०४ ॥
कपित्थबिल्वबृहती पटोलेक्षुनिदिग्धिका ।
मूलानि क्षीरसिद्धानि पाययेद्भिषगष्टमे ॥ २०५ ॥
संप्राप्ते चाष्टमे मासि मैथुनं परिवर्जयेत् ।
यदि गच्छति दुर्मेधाः काममोहादचेतनात् ॥ २०६ ॥
विपद्यते तदा गर्भं पततेनात्र संशयः ।
अन्धमूकादिवधिरो जायते कुब्जमेव च ॥ २०७ ॥
नवमे मधुकानन्ता पयस्याशारिवाः पिबेत् ।
पयस्तु दशमे शुण्ठ्या शृतशीतं प्रशस्यते ॥ २०८ ॥
सक्षीरा वा हिताशुण्ठी मधुकं देवदारु च ॥ २०८ ॥
क्षीरिकामुत्पलं दुग्धं समङ्गामूलकं शिवाम् ।
पिबेदेकादशे मासि गर्भिणीशूलशान्तये ॥ २१० ॥
सिताविदारीकाकोली क्षीरे चैव मृणालिका ।
गर्भिणीद्वादशे मासि पिबेच्छूलप्रशमौषधम् ॥
एवमाप्यायते गर्भः स्त्रियोरुक् चोपशाम्यति ॥ २११ ॥

कुशकाशोरुबूकानां मूलैर्गोक्षुरकस्य च।
शृतं दुग्धं सितायुक्तं गर्भिण्याः शूलनुत्परम् ॥ २१२ ॥
कशेरुशृङ्गाटकजीवनीयैः पद्मोत्पलैरेण्डशतावरीभिः।
सिद्धं पयः शर्करयाविमिश्रं संस्थापयेद्गर्भमुदीर्णशूलम् ॥२१३॥
कशेरुशृङ्गाटकपद्मकोत्पलं समुद्गपर्णीमधुकं सशर्करम्।
सशूलगर्भस्रुतिपीडिताङ्गना पयो विमिश्रं पयमात्रभुक् पिबेत् २१४

व्यवस्थिते च गर्भे गव्येनोदुम्बरशलाटुसिद्धेन पयसाभोजयेद्गर्भे पतिते तीक्ष्णं मद्यं पेयं तस्योपद्रवशान्त्यै। त्यागोपवशाद्दा न पिबति मद्यं या तु सा च कोलसाधितां पेयामेवाश्नातु अतीते स्नेहलवणवर्ज्याभिर्यवागूभिरुद्दालकादीनां पाचनीयोपसंस्कृताभिरुपक्रमेत्। यावन्तो मासागर्भस्य तावन्त्यहानीति। इति गर्भशूलम्।

—०—

## अथ गर्भिणीज्वरचिकित्सामाह।

मधूकचन्दनोशीर शारिवापद्मयष्टिकैः।
शर्करामधुसंयुक्तः कषायो गर्भिणीज्वरे ॥ २१५ ॥
चन्दनं शर्करालोध्रं मृद्धीकाशर्करान्वितम्।
क्वाथं कृत्वा प्रदातव्य गर्भिणीज्वरशान्तये ॥ २१६ ॥
पिबेद्विश्वमजाचीरं नाशयेद्विषमज्वरम् ॥ २१७ ॥
आम्रजवूत्वचं क्वाथ्य लेहयेल्लाजसक्तुभिः।
अनेन लीढमात्रेण गर्भिणीग्रहणीं जयेत् ॥ २१८ ॥
ह्रीवेराऽरलुरक्तचन्दनबला धान्याकवत्सादनी
मुस्तोशीरयवासपर्पटविषाक्वाथ पिबेद्गर्भिणी।
नानावर्णरुजातिसारकगदे रक्तस्रुतौ वा ज्वरे
योगोऽयं मुनिभिः पुरा निगदितः सूत्यामये सत्तमः ॥२१९॥
गोधामांसं प्रयत्नेन गर्भिणीञ्च प्रदापयेत्।

वातपित्तकफोद्रिक्ता ग्रहोत्थायेष्युपद्रवाः ॥
गर्भिण्युपद्रवान् सर्वान् गोधामांसं विनाशयेत् ॥ २२० ॥
समधुच्छागदुग्धेन कुलालकरमृत्तिका ।
अवश्यं स्थापयेद्गर्भं वलिनं पानयोगतः ॥ २२१ ॥
पारावतशकृत्पीतं शालितण्डुलवारिणा ।
गर्भपातान्तरोत्थे च गर्भस्रावनिवारणम् ॥ १२२ ॥

—०—

## अथ गर्भिणीप्रसवविलम्वे चिकित्सामाह।

जीवतिगर्भे सूतिका गर्भनिर्हरणे प्रयत्तेत । निहर्त्तुमशक्ये । च्यवनान्मन्त्रानुपशृणुयात् । तान्वक्ष्यामः ॥

—०—

इहामृतञ्च सोमश्च चित्रभानुश्च भामिनि ।
उच्चैः श्रवाश्च तुरगो मन्दिरे निवसन्तु ते ॥ २२३ ॥
इदममृतमपां समुद्धृतं वै तवलघुगर्भमिमं विमुञ्चतुस्त्रि ।
तदनलपवनार्कवासवास्ते सह लवणाम्बुधरैर्दिशन्तु शान्तिम्॥२२४
मुक्ताः पशोर्विपाशाश्च मुक्ताः सूर्य्येण रश्मयः ।
मुक्तः सर्वभयाद्गर्भः एह्येहि माचिरं स्वाहा ॥ २२५ ॥
जलं च्यवनमन्त्रेण सप्तवाराभिमन्त्रितम् ।
पीत्वा प्रसूयते नारी दृष्ट्वा चोभयविंशकम् ॥ २२६ ॥

इति च्यवनमन्त्राः ।

नाड़ी १६, ऋतु ६, वसुभिः ८, महपच २, दिग १०, द्वादश १८, भिरेव च । अर्क १२, भुवन १४, वेद ४, सहितैरुभयविंशकमार्य्यम् ॥

| | | |
|---|---|---|
| १६ | २ | १२ |
| ६ | १० | १४ |
| ८ | १८ | ४ |

—०—

क्षितिर्जलं वियत्तेजो वायुर्विष्णुः प्रजापतिः।
ते गर्भं पातुनैरुज्यं वै शल्यञ्च दधत्यपि ॥ २२७ ॥
प्रसूयत्वमविक्लिष्ट मविक्लिष्टे शुभानने।
कार्त्तिकेयद्युतिं पुत्रं कार्त्तिकेयाभिरक्षितम् ॥ २२८ ॥

—०—

प्रसवकाले गर्भिण्याः कर्णे एतत्सप्तवारान् जप्तव्यम् ॥

—०—

परुषकशिफालेपः स्थिरामूलकृतोऽपि वा।
नाभिवस्तिभगे लेपः सुखं नारीप्रसूयते ॥ २२९ ॥
तुषाम्बुपरिपिष्टेन कन्देन परिलेपयेत्।
लाङ्गल्याश्चरणौ सूते क्षिप्रमापन्नगर्भिणी ॥ २३० ॥
सितया चर्वणं कृत्वा कोकिलाक्षस्य मूलकम्।
तत्कर्णपूरणेनाशु सुखं नारीप्रसूयते ॥ २३१ ॥
श्यामासन्दर्शनाभ्यान्तु लताभ्यां परिकल्पितम्।
क्षिपेत्कुड़वकं मूर्ध्नि यावत्पादतलं व्रजेत् ॥
उद्धृतगात्रपीड़ायाः सुखप्रसवकारकम् ॥ २३२ ॥
अपामार्गशिखां योनिमध्ये निःक्षिप्य धार्य्यते।
सुख प्रसूयते नारी भेषजस्यास्य योगतः ॥ २३३ ॥
पाठामूलन्तु तद्वत्या दाटरूपकमूलकम्।
लेपनाद्धारणाद्वापि सुखप्रसवकारकम् ॥ २३४ ॥
मूलञ्च शालिपर्ण्यास्तु पिष्टं वा तण्डुलाम्बुना।
नाभिवस्तिभगालेपात् सुखं नारी प्रसूयते ॥ २३५ ॥
सितपिकलोचनवर्णं चर्वणपूर्वस्य कर्णपूरणतः।
अपि विषमगर्भपीड़ितवनिता सुखं सूतिमभितनुते ॥२३६॥

पिष्ट्वा पाठापत्रं नारीचोरेण या पिबेद्बला ।
सा गर्भमूढजनितव्यथया प्रविमुच्यते झटिति ॥ २३७ ॥
मातुलुङ्गस्य मूलानि मधुकं मधुसंयुतम् ।
घृतेन सह पातव्यं सुखं नारी प्रसूयते ॥ २३८ ॥
इक्षोरुत्तरदिङ्मूलं स्त्रीप्रमाणेन तन्तुना ।
बद्धा कट्याञ्च नियतं सुखं नारीप्रसूयते ॥ २३८ ॥
तालस्य चोत्तरं मूलं स्त्रीप्रमाणेन तन्तुना ।
बद्धा कट्याञ्च नियतं सुखं नारीप्रसूयते ॥ २४० ॥
पञ्चाङ्गं हास्तिशौण्डं लोध्रपत्राभ्यां विमिश्रितं कृत्वा ।
मरिचियविपाच्य पिष्टं भक्षितमात्रेण सूतिवनितायाः ॥
गङ्गाप्रवाहतुल्यं रक्तं वै स्वास्थ्यमति कुरुते ॥ २४१ ॥
वेगाघाताद्वायुः योनिं सधार्य्य वेदनां कुरुते ।
तत्र विधेयः कल्कः शतपुष्पायाः सलिलेन लेपेन ॥ २४२ ॥
करङ्कीभूतगोमूर्द्ध सूतिका भवनोपरि ।
स्थापितस्तत् चणात्नार्य्याः सुखं प्रसवकारकः ॥ २४३ ॥

—०—

गोशिरः करङ्कीभूत मस्थिमात्रमेव स्थितम् ।

इति मूढगर्भम् ।

कटुतुम्बर हि निर्मोक कृतवेधन सर्षपैः ।
कटुतैलान्वितैर्योनिं धूमः पातयतेऽपराम् ॥ २४४ ॥
भूर्ज्जगुग्गुलुधूपेन योन्याश्चास्याः प्रधूपनम् ॥
अपरा पातनं शस्तं सद्यः शूलनिवारणम् ॥ २४५ ॥
कचवेष्टितयांगुल्या घृष्टे कण्ठे सुखं पतत्यपरा ।
मूलेन लाङ्गलक्याः संलिप्ते पाणिपादे वा ॥ २४६ ॥

कुष्टं सशालिमूलञ्च सगोमूत्रञ्च पाययेत्।
अपरा पतिता क्षिप्रं छिन्नं पर्च वक्तं यथा॥ २४७॥

इत्यपरापातनविधिः।

हिंगुपिप्पलीपाटल्यौ भार्गीमेदा महौषधम्।
रास्नामतिविषाचव्य मेभिर्दोषः प्रसिध्यति।
योनिश्च शुद्धी भवति योनिशूलञ्च शाम्यति॥ २४८॥
विल्वमार्कवजं मूलं कल्कं मद्येन पाययेत्।
तेन योनिगतं शूल माशु शाम्यति योषिताम्॥ २४९॥
शालिमूलाक्षमात्रन्तु मूत्रे णाम्लेन वा युतम्।
सोपकुञ्चिकां पिप्पलीं मदिरां लाभतः पिवेत्॥
सौवर्चलेन संयुक्तं योनिशूलनिवारणम्॥ २५०॥
अथापतन्तीमपरां पातयेत् पूर्ववद्भिषक्।
हस्तेनापहरेद्वापि पार्श्वाभ्यां परिपीड्य वा॥ २५१॥
धुनुयाद्वा मुहुर्नारीं पीडयेद्वा सपिण्डिकाम्।
तैलाक्तयोनेरेव तां पातयेन्मतिमान् भिषक्॥ १५२॥
प्रसूतिकुशला योपि द्विधिरेन् करोति सा।
एव निष्क्रन्तशल्या तां सिञ्चेदुष्णेन वारिणा॥ २५३॥
ततोऽभ्यक्तशरीराया योनौ स्नेह निधापयेत्।
एव शुद्धो भवेद्योनि स्तच्छूलं चोपशाम्यति॥ २५४॥

—०—

## अथ मक्कलशूलस्य लक्षणमाह।

वायुः प्रकुपितः प्रकुर्य्यात् संरुध्य रुधिरं सुतम्।
सुताया हृच्छिरोवस्ति शूलमक्कलसंज्ञितम्॥ २५५॥
पृथिव्यां पतिते गर्भे योनौ पीडनमीष्यते।

अपूर्वेणो यथा यायो रुजस्य संरचणक्रिया ॥
इदस्तिशूलमाधान प्रविष्टे तत्र जायते ॥ २५६ ॥

—०—

## अथ चिकित्सामाह ।

मंचूर्णितयवच्चारं पिबेत्कोष्णे न वारिणा ।
सर्पिषा वा पिबेत्क्षारो मक्कल्लस्य निवृत्तये ॥ २५७ ॥
त्रिकटुचातुर्जातक कुस्तुम्बरीचूर्णसंयुक्तम् ।
खादेद् गुडं पुराणं नित्यं नारीमक्कदलनाय ॥ २५८ ॥
मातुलुङ्गस्य मूलन्तु मल्लिकामूलमेव च ।
विल्वमुस्तमिदं लेपं शिरोरोगविनाशनम् ॥ २५९ ॥
त्रूषणं पिप्पलीमूलं दारुचव्यं सचित्रकम् ।
रजन्यौ हपुषाजाजी सच्चारलवणत्रयम् ॥
कल्कमुष्णांबुना पीत्वा सुखेनाशु विरिच्यते ॥ २६० ॥
इति मक्कल्लशूलम् ।

—०—

## अथ सूतिकारोगनिदानमाह ।

प्रलापो वैपर्युयस्याः सूतिका सा उदाहृता : २६१ ॥
अङ्गमर्दो ज्वरः कम्पः पिपासा गुरुगात्रता ।
शोथः शूलातिसारौ च सूतिकारोगलक्षणम् ॥ २६२ ॥
मिथ्योपचारात्संक्लेशा द्विषमाजीर्णभोजनात् ।
सूतिकायास्तु जायन्ते ये रोगास्ते सुदारुणाः ॥ २६३ ॥
ज्वरातिसारशोफाश्च शूलानाह बलक्षयाः ।
तन्द्रारुचिप्रसेकाद्याः कफवातामयोद्भवाः ॥ २६४ ॥

कृच्छ्रसाध्या हि ते रोगाः क्षीणमांसबलाश्रिताः।
ते सर्वे सूतिका नाम्ना रोगास्ते चाप्युपद्रवाः ॥ १६५ ॥

—०—

## अथ चिकित्सामाह।

दशमूलकृतं तोयं कोष्णञ्च हविषान्वितम्।
पथ्याशिन्या द्रुतं नार्य्या पीतं सूतीरुजं जयेत् ॥ २६६ ॥

कृत्वोपवासमबला सुतजन्मवस्रे
प्रातर्निपीयकृमिशत्रुभवं हि मूलम्।
वासाम्भसा किमथवा हविषापि पीत्वा
सूतीजयेत् यदिति रोगसमूहमुग्रम् ॥ २६७ ॥

क्षुद्रैरण्डजटाशृङ्गी कणाशुण्ठी सुखास्तृदशम्।
सूतिका च प्रशान्त्यर्थं निःक्वाथ्य मधुना पिबेत् ॥ २६८ ॥
निम्बवल्कलवल्कस्तु सर्पिषा काञ्जिकेन तु।
पीतं प्रशान्तयेन्नूनमचिरात् सूतिकागदम् ॥ २६९ ॥
पञ्चमूलकषायन्तु सूतिका लवणान्वितम्।
सुखोष्णं पाययेत् पूतं सूतिकारोगनाशनम् ॥ २७० ॥
सूतिकारोगशान्त्यर्थं कुर्य्याद्वातहरा क्रिया।
स्वेदोपनाहनाभ्यङ्गैः सावगाहैः प्रशस्यते ॥ २७१ ॥
पञ्चमूलस्य वा क्वाथं तप्तलोहेन सङ्गतम्।
*सूतिकारोगनाशाय पिबेद्वातहरं सुरम्* ॥ २७२ ॥
सुतप्तलोहमाक्षिप्य वारूण्यान्तु निधापयेत्।
सूतिकोपद्रवान् सर्वान् हन्ति पीत्वा न संशयः ॥ २७३ ॥
वह्नौ तप्तेन लोहेन सुक्षयूषं सुवापितम्।
पीत्वेन सूतिकागारी सर्वव्याधीन् व्यपोहति ॥ २७४ ॥

प्रसूतानागरसहचर भद्रोत्कटपञ्चमूलजलदनलम् ।
शीतं पीतं मधुना सह शमयति सूतिकान्तकम् ॥ २७५ ॥
सहचरकुलित्थपुष्कर वैकङ्कतदारुवेतसः क्वाथः ।
पीतः सहिंगुलवणः शमयति शूलज्वरौ सूत्याः ॥ २७६ ॥
सहचरमुस्तगुडूची भद्रोत्कटविश्वबालकैः क्वथितम् ।
पेयमिदं मधुमिश्रं सद्योज्वरशूलनुत् सूत्याः ॥ २७७ ॥
देवदारुवचाकुष्टं पिप्पलीविश्वभेषजम् ।
कट्फलं मुस्तभूनिम्ब तिक्ताधान्यहरीतकी ॥ २७८ ॥
गजकृष्णा च दुस्पर्शा गोक्षुरं धन्वयासकम् ।
बृहत्यतिविषाछिन्ना कर्कटं कृष्णजीरकम् ॥ २७९ ॥
समभागान्वितैरेतैः सिन्धुरामठसंयुतम् ।
क्वाथमष्टावशेषन्तु प्रसूतां पाययेत् स्त्रियम् ॥ २८० ॥
शूलकासज्वरश्वास मूर्च्छाकम्पशिरोऽर्त्तिनुत् ।
युक्तं प्रलापतृड्दाह तन्द्रातीसारवान्तिभिः ॥
निहन्ति सूतिकारोग वातपित्तकफोत्थितम् ॥ २८१ ॥
सिद्धं द्विपञ्चमूलाभ्यां पयः शर्करयायुतम् ।
सूतिकोपद्रवान् हन्ति पीतमात्रं न संशयः ॥ २८२ ॥
कृष्णातमूलशुण्ठेरला हिंगुभार्गी मदीप्यकम् ।
वचामतिविषां रास्नां चव्यं संचूर्ण्यपाययेत् ॥ २८३ ॥
स्नेहेन दोषशान्त्यर्थं वेदनोपशमाय च ।
क्वाथश्चैषां तथा कल्कं चूर्णं वा स्नेहभर्जितम् ॥ २८४ ॥
शाकत्वगृधिङ्गतिविषा पाठाकटुकरोहिणी ।
तथा तेजोवती चापि पाययेत् पूर्वशङ्कितम् ॥ २८५ ॥
दशाहं भोजने देयं क्षीरं वातहरैः शृतम् ।
रसेनाद्यं दशाहश्च शिरोषो धावने हितः ॥ २८६ ॥

प्रजापत्येन विधिना जातकर्म्मादिकारयेत्।
पञ्चमेऽह्नितीये वा स्त्रीणां स्तन्यं प्रवर्त्तते ॥ २८७ ॥
प्रथमे दिवसे तस्मा त्रिकालं मधुसर्पिषी।
अनन्तामिश्रिते मन्त्रो पाययेत्रे रिते त्रिशुम् ॥ २८८ ॥

—०—

चत्वारः सागराः पुण्याः स्तनयोः क्षीरवाहिनः।
भवन्तु सुभगे नित्यं बालस्यायुर्वलप्रदाः ॥ २८९ ॥
पिबन्बालोऽमृतसमं पयस्तवशुभानने।
दीर्घमायुरवाप्नोति देवाः प्राश्याऽमृतं यथा ॥ २९० ॥
इति स्तनाभिमन्त्रणम्।

यष्टीनिशाविशेषेण कृतरक्षोवलिक्रियाः।
जगर्जुर्बान्धवास्तस्य दधन्तः परमां मुदम् ॥ २९१ ॥
दशमे दिवसे पूर्णे विधिभिः कुशलोचितैः।
कारयेत् सूतिकोत्थानं नाम बालस्य वार्चितम् ॥ २९२ ॥
तुम्बीपत्रं तथा लोध्रं समभागानि कारयेत्।
दद्याल्लेपं भगस्येदं प्रसूताप्यक्षता भवेत् ॥ २९३ ॥
वेतसस्य तु मूलानि क्वाथयेन्मृदुवह्निना।
भगः प्रक्षालितस्तेन गाढ़त्वमुपगच्छति ॥ २९४ ॥
मूषिकाणां वसायाश्च वल्गुलीनां तथैव च।
योनीषु म्रक्षणं श्रेष्ठं कन्या करणमुत्तमम् ॥ २९५ ॥
पलाशोदुम्बरफलं तिलतैलसमन्वितम्।
मधुना योनिमालिप्य गाढीकरणमुत्तमम् ॥ २९६ ॥
इति योनिगाढीकरणम्।

प्रसूतवनिता ह्यद्विकुचिक्काशायसंपिवेत्।
प्रातर्मथितसंमिश्रं त्रिसप्ताहं कषायुगम् ॥ २९७ ॥

घस्तानागरसहचर भद्रोत्कटपञ्चमूलजलदजलम् ।
पीतं पीतं मधुना सह शमयति सूतिकान्तकम् ॥ २७५ ॥
सहचरकुलित्थपुष्कर वैकङ्कतदारुवेतसः क्वाथः ।
पीतः सहिंगुलवणः शमयति शूलज्वरौ सूत्याः ॥ २७६ ॥
सहचरमुस्तगुडूची भद्रोत्कटविश्ववालकैः क्वथितम् ।
पेयमिदं मधुमिश्रं सद्योज्वरशूलनुत् सूत्याः ॥ २७७ ॥
देवदारुवचाकुष्टं पिप्पलीविश्वभेषजम् ।
कट्फलं मुस्तभूनिम्ब तिक्ताधान्यहरीतकी ॥ २७८ ॥
गजकृष्णा च दुस्पर्शा गोक्षुरं धन्वयासकम् ।
बृहत्यतिविषाछिन्ना कर्कटं कृष्णजीरकम् ॥ २७९ ॥
समभागान्वितैरेतैः सिन्धुरामठसंयुतम् ।
क्वाथमष्टावशेषन्तु प्रसूतां पाययेत् स्त्रियम् ॥ २८० ॥
शूलकासज्वरश्वास मूर्च्छाकम्पशिरोऽर्त्तिनुत् ।
युक्तं प्रलापहृड्दाह तन्द्रातीसारवान्तिभिः ॥
निहन्ति सूतिकारोगं वातपित्तकफोत्थितम् ॥ २८१ ॥
सिद्ध द्विपञ्चमूलाभ्यां पयः शर्करयायुतम् ।
सूतिकोपद्रवान् हन्ति पीतमात्रं न संशयः ॥ २८२ ॥
क्षण्यातम्मूलशुण्ठेलाः द्विगुभार्गी सदीप्यकम् ।
वचामतिविषां रास्नां चव्यं संचूर्ण्यपाययेत् ॥ २८३ ॥
स्नेहेन दोषशान्त्यर्थं वेदनोपशमाय च ।
क्वाथमेषां तथा कल्कं चूर्णं वा स्नेहभर्जितम् ॥ २८४ ॥
शाकत्वग्विद्वतिविषा पाठाकटुकरोहिणी ।
तथा तेजोवती चापि पाययेत् पूर्ववद्भिषक् ॥ २८५ ॥
दशाहं भोजने देयं चीरं वातहरैः शृतम् ।
रसेनाद्यं दशाहञ्च शिरोपो धावने हितः ॥ २८६ ॥

प्रजापत्येन विधिना जातकर्म्मादिकारयेत्।
पञ्चमेऽह्नि तृतीये वा स्त्रीणां स्तन्यं प्रवर्त्तते ॥ २८७ ॥
प्रथमे दिवसे तस्मा त्रिकालं मधुसर्पिषी।
अनन्तामिश्रिते मन्त्री पाययेत्रे रिते शिशुम् ॥ २८८ ॥

—o—

चत्वारः सागराः पुण्याः स्तनयोः क्षीरवाहिनः।
भवन्तु सुभगे नित्यं बालस्यायुर्बलप्रदाः ॥ २८९ ॥
पिबन्वालोऽमृतसमं पयस्तवशुभानने।
दीर्घमायुरवाप्नोति देवाः प्राश्याऽमृतं यथा ॥ २९० ॥
इति स्तनाभिमन्त्रणम्।

यष्टीनिशाविशेषेण कृतरक्षोवलिक्रियाः।
जगर्ज्जुर्बान्धवास्तस्य दधन्तः परमां मुदम् ॥ २९१ ॥
दशमे दिवसे पूर्णे विधिभिः कुशलोचितैः।
कारयेत् सूतिकोत्थानं नाम बालस्य वार्चितम् ॥ २९२ ॥
तुम्बीपत्रं तथा लोध्रं समभागानि कारयेत्।
दद्यात्तेपं भगस्येदं प्रसूताप्यचता भवेत् ॥ २९३ ॥
वेतसस्य तु मूलानि क्वाथयेन्मृदुवह्निना।
भगः प्रक्षालितस्तेन गाढ़त्वमुपगच्छति ॥ २९४ ॥
मूषिकानां वसायाश्च वल्गुलीनां तथैव च।
योनीपु म्रक्षणं श्रेष्टं कन्या करणमुत्तमम् ॥ २९५ ॥
पलाशोदुम्बरफलं तिलतैलसमन्वितम्।
मधुना योनिमालिप्य गाढीकरणमुत्तमम् ॥ २९६ ॥
इति योनिगाढीकरणम्।

प्रसूतवनिता वह्निकुचिकाासायसंपिबेत्।
प्रातर्मथितसंमिश्रं त्रिसप्ताहं कणायुगम् ॥ २९७ ॥

सूताया: कुम्भमुदरं पीतं तक्रेण मालतीमूलम्।
घृतमधुलीढा सहसा करोति धात्रीशमं निशा च ॥२८८॥

१ १ १ ३ ५ ८ १६ १
एकेन्दुचन्द्रानलवाणकुम्भी कलैकभागं क्रमशो विमिश्रम्।
सूताभ्रगन्धोपणलोहशङ्खवनोत्पलाभस्म विषं सुपिष्टम् ॥२८९॥
प्रसूतचापानलदन्तवन्ध्यान् पुराऽमृताब्दत्रिफलायुतोऽयम्।
आर्द्राम्बुना वा किल सन्निपातान् गुदांकुरान् वल्लमितोनिहन्ति३००
निजानुपानैर्निजपथ्यभुक्तान् सर्वातिसारग्रहणीगदांश्च।
प्रतापलंकेश्वरनामधेयं स्तुतश्च प्रोक्तो गिरिराजपुत्र्या ॥ ३०१ ॥
इति प्रतापलंकेश्वरो रसः।

शुण्ठ्यग्निमूलं निर्गुण्डीमेव शृङ्गीप्रसारिणी।
स्वरस: परिमृष्ट: स्या हिङ्गुजीरकसंस्कृतः ॥ ३०२ ॥
कटुतैलेन या नारी नक्तं भुञ्जीत वा पिवेत्।
निहन्ति सूतिकारोगान् बलमग्नेर्लभेत्त सा ॥ ३०३ ॥

—o—

यवकोलकुलित्थांश्च मुद्गमाषसमन्वितान्।
द्विपञ्चमूलसहितान् क्वाथयेत्सलिलाढके ॥ ३०४ ॥
तत्क्वाथे तक्रसंयुक्ते यूषं कृत्वा सजीरकम्।
घृतं घृताद्यमात्रेण सैन्धवेन च योजितम् ॥ ३०५ ॥
एष यूषः प्रदातव्य चतुर्भागावशेषितः।
एतेनैव समश्नीयात् पुराणाच्छालिषष्टिकान् ॥ ३०६ ॥
वातशूलं सविष्टम्भं हन्तिमक्कल्लसन्निभम्।
सूतिकारोगशमनो यूषोऽयं परिकीर्त्तितः ॥ ३०७ ॥
इति यवादिर्यूषः।

'यवकोलकुलित्थानां शाल्मिमूलं तथैव च।

शस्तोऽयं सूतिकातङ्के यूषः सर्व्वज्वरापहः ॥ ३०८ ॥

इति यवादिर्द्वितीयोयूषः।

पिप्पलीदेवकाष्ठञ्च भद्रमुस्तकमेव च।
अगुरुपिप्पलीमूलं श्लक्ष्णपिष्टञ्च कारयेत् ॥ ३०९ ॥
तक्रेण सहसंयुक्तं पचेद्यूषं विचक्षणः।
अयन्तु घृतसंयुक्तः पीतमात्रो न संशयः ॥ ३१० ॥
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम्।
सूतिकोपद्रवं हन्ति वृत्रमिन्द्राशनिर्यथा ॥ ३११ ॥

इति पिप्पल्यादिर्यूषः।

यवकोलकुलित्थानां शालिमूलं तथैव च।
क्वाथयेदप्रमत्तस्तु सुपुते सलिलाढ़के ॥ ३१२ ॥
तत्पादावस्थितं क्वाथं सर्पिर्युतं सजीरकम्।
पक्वं घृताच्चमात्रेण सैन्धवेन समायुतम् ॥ ३१३ ॥
एतेनैव च यूषेण चाश्नीयाच्छालिषष्टिकम्।
सूतिकोपद्रवं हन्ति भुक्तमात्रन्नसंशयः ॥ ३१४ ॥

इति यवाद्यं घृतम्।

पिप्पलीदेवकाष्ठञ्च आर्द्रकं गजपिप्पली।
चित्रकं सैन्धवञ्चैव पिप्पलीमूलमेव च ॥ ३१५ ॥
सुखोष्णं योजयेदेतत् सूतिकारोगशान्तये।
वातिकान् पैत्तिकांश्चैव श्लैष्मिकान् सान्निपातिकान् ॥
सूतिकोपद्रवान् हन्ति पीतं ह्येतन्नसंशयः ॥ ३१६ ॥

इति पिप्पल्यादिक्वाथः।

—०—

पिप्पली पिप्पलीमूलं चित्रको हस्तिपिप्पली।
चव्यञ्च रजनीदेवा भद्रमुस्तवचाभयाः ॥ ३१७ ॥

धान्याकमजमोदा च सपञ्चलवणानि च।
भद्रदारुयवानी च भार्गीकुटजतण्डुलाः ॥ ३१८ ॥
कण्टकार्य्याश्च मूलं वै बृहतीबिल्वपेशिका।
मरिचानि विडङ्गानि कल्कैरेतैश्च पादिकैः ॥ ३१९ ॥
यवकोलकुलित्थानां निर्यूहे च चतुर्गुणे।
दधिप्रस्थ पयःप्रस्थे दत्वा प्रस्थं घृतं पचेत् ॥ ३२० ॥
वातिकान् पैत्तिकांश्चैव श्लैष्मिकान् सान्निपातिकान्।
सूतिकोपद्रवान् सर्वा नभ्यङ्गादेवनाशयेत् ॥ ३२१ ॥
इति पिप्पल्याद्यं घृतम्।

समूलपञ्चशाखन्तु शतं भद्रोत्कटस्य च।
वारिद्रोणेन साध्यं सात् स्थाप्य पादावशेषितम् ॥ ३२२ ॥
घृतप्रस्थं विपक्तव्यं गर्भं दत्वा च कार्षिकम्।
सव्योषं पिप्पलीमूलं चित्रको जीरक तथा ॥ ३२३ ॥
पञ्चमूलं कनिष्टन्तु रास्नैरण्डसमायुतम्।
बलासिन्धुयवक्षार स्वर्जिकाकृष्णजीरकम् ॥ ३२४ ॥
सिद्धमेतद् घृतं सद्यो निहन्यात् सूतिकागदान्।
ग्रहणीं पांडुरोगञ्च अर्शांसि जठरं तथा ॥
अग्निञ्च कुरुते दीप्तिं स्त्रीणा स्तन्यस्य शोधनम् ॥ ३२५ ॥
इति भद्रोत्कटाद्यं घृतम्।

जीरकं हपुषाधान्यं शताह्वाबदराणि च।
यवानीमिथिकाहिंगु पत्रिकाकासमर्दकम् ॥ ३२६ ॥
पिप्पली पिप्पलीमूल मजमोदाथ यापिका।
चित्रकञ्च पलांशानि तथा धान्यश्च तुष्पलम् ॥ ३२७ ॥
कसेरुक नागरञ्च यष्टीदीप्यकमेव च।
गुडस्य च शतं दद्याद् घृतप्रस्थं तथैव च ॥ ३२८ ॥

क्षीरद्विप्रस्थसंयुक्तं शनैर्मृदग्निना पचेत्।
पञ्चजीरकमित्येतत् सूतिकानां प्रशस्यते ॥ ३२९ ॥
गर्भार्थिनीनां नारीणां वृंहणीये समारुते।
विंशतिं व्यापदो योनेः श्वास कासं स्वरक्षयम् ॥ ३३० ॥
हलीमकं पांडुरोगं दौर्बल्यं मूत्रकृच्छ्रताम्।
हन्ति पीतोन्नतकुचाः पद्मपत्रायतेक्षणाः ॥
उपयोगात् स्त्रियो नित्य मलक्ष्मीमलवर्जिताः ॥ ३३१ ॥
इति पञ्चजीरकगुडः। इति सूतिकारोगाः।

—०—

## अथ स्तनरोगनिदानमाह।

सक्षीरौ वाप्यदुग्धौ वा प्राप्यदोषः स्तनौ स्त्रियाः।
प्रदूष्यमांसं रुधिरं स्तनरोगाय कल्पते ॥ ३३२ ॥
यत्सरक्तं तनुस्रावं रुधिरामिषगन्धकम्।
शोथवृद्धिसमायुक्तं सरुजञ्च पयोधरम् ॥ ३३३ ॥
पञ्चानामपि तेषां हि रक्तजं विद्रधिं विना।
लक्षणानि समानानि बाह्यविद्रधिलक्षणैः ॥ ३३४ ॥

—०—

## अथ चिकित्सामाह।

शोथं स्तनोत्थितमवेक्ष्य भिषग्विदध्याद्
यद्विद्रधावपिहितं बहुधा विधानम्।
आमे विदाहिनि तथैव गते च पाकं
तस्याः स्तनौ सततमेव विनिर्दुहीतः ॥ ३३५ ॥
जलौकोभिर्हरेद्रक्तं न स्तनावुपनाहयेत्।
दुःखस्तना तु या नारी सा शीघ्रं सुखिनी भवेत् ॥ ३३६ ॥

लेपोविशालमूलेन हन्ति पीडां स्तनोत्थिताम् ।
निशाकनककल्काभ्यां लेपश्चापि स्तनार्त्तिहा॥ ३३७ ॥
लेपो निहन्ति मूलं वन्ध्याकर्कोटीभवं शोथम् ।
निर्वाप्यतप्तलोहं सलिले तद्वा पिबेत्तत्र ॥ ३३८ ॥
यष्टिर्निम्बं हरिद्रा च निर्गुण्डीधातकीसमम् ।
चूर्णं स्तनव्रणे देयं रोपणं कुरुते भृशम् ॥ ३३९ ॥
इति स्तनरोगाः ।

—०—

## अथ स्तन्यरोगनिदानमाह ।

गुरुविदग्धाहारैस्तु दुष्टैर्दोषैः प्रदूषितम् ।
चीरं धात्र्याः कुमारस्य नानारोगाय कल्पते ॥ ३४० ॥
लवणं तनु चाम्लञ्च कटुकं फेनिलं तथा ।
मांसधावनसङ्काशं पीतकञ्च तथैव च ॥ ३४१ ॥
एतत्सप्तविधं चीरं प्रदुष्टं जीवकोऽब्रवीत् ।
करोति लवणं चीरं बालस्य मलनिर्गमम् ।
तनुचीरं कफं कुर्य्या दम्लञ्च मुखपाकताम् ॥ ३४२ ॥
मांसधावनसंकाशं छर्दिञ्च कुरुते शिशोः ।
फेनिलं श्वासकासन्तु मूत्रलं कटुपीतकम् ॥ ३४३ ॥
कषायं सलिलप्लावि स्तन्यं मारुतदूषितम् ।
कट्वम्ललवण पीतराजिमत् पित्तसंयुतम् ॥ ३४४ ॥
कफदुष्टं घनं तोये निमज्जति सपिच्छलम् ।
द्विलिङ्गं द्वन्द्वजं विद्यात् सर्वलिङ्गं त्रिदोषजम् ॥ ३४५ ॥
अदुष्टं चाम्बुनि चिप्त मेकीभवन्ति पाण्डुरम् ।
मधुरञ्च विवर्णञ्च प्रसन्नं तत्प्रशस्यते ॥ ३४६ ॥

—०—

## अथ चिकित्सामाह।

तत्र वातात्मके स्तन्ये दशमूलन्त्र्यह पिबेत्।
वातव्याधिहरं सर्पिः पीत्वा मृदुविरेचयेत् ॥ ३४७ ॥
बस्तिकर्म्मततः कुर्य्यात् स्नेहादींयानिलापहान् ॥ ३४८ ॥
पित्तदुष्टे सृताभीरु पटोलं निम्बचन्दनम्।
धात्रीकुमारय पिबेत् क्वाथयित्वा सशर्करम् ॥ ३४९ ॥
अथवा त्रिफलोशीर निम्बं कटुकरोहिणी।
शारिवादिगणैः सिद्धं घृतं पीत्वा ततोऽनु च ॥
पित्तघ्नं रेचनं कुर्य्यां च्छीतं चाभ्यङ्गलेपनम् ॥ ३५० ॥
कफदुष्टे घृतं पीत्वा यष्टीसैन्धवसंयुतम्।
रामपुष्पैः स्तनौ लिम्पे च्छिशोश्च दशनच्छदौ ॥
सुखमेवं वमेद्बाल स्त्रीच्छर्धात्रीश्च वामयेत् ॥ ३५१ ॥

---

## अथ अन्यदपिलक्षणमाह।

स्तन्ये त्रिदोषसंदुष्टे शकृदामं जलोपमम्।
नानावर्णरुजं चार्द्रं विवद्धमुपवेश्यते ॥ ३५२ ॥
भ्रमारोचकवम्यास्य पाकस्तृष्णाज्वरादयः।
स्युर्यद्वतं विजानीयात् चीरालसकसञ्ज्ञितम् ॥ ३५३ ॥

---

बालं तत्र च धात्रीञ्च मृदुरेकै विरेचयेत् ॥ ३५४ ॥
क्रमं पेयादिकञ्चैव मुस्तादिः संप्रयोजयेत्।
पेयादिकं क्रमं कृत्वा मुस्तादिपाययेद् घृतम् ॥ ३५५ ॥
धात्रीचोरविशुद्धयर्थं मुद्गयूषरसाशिनी।
भार्गीदारुवचापाठाः पिबेत्सातिविषाः शृताः ॥ ३५६ ॥
पाठामूर्वा च भूनिम्ब दारुशुण्ठीकलिङ्गकाः।

शारिवामृततिक्ताख्या क्वाथ स्तन्यविशोधन ॥ ३५७ ॥
हरिद्राद्य वचाद्य वा पिबेत् स्तन्यविशुद्धये ॥ ३५८ ॥
पटोलनिम्बासनदारुपाठा मूर्वा गुडूची कटुरोहिणीच्च ।
सनागर वा क्वथितञ्च तोये धात्री पिबेत् स्तन्यविशुद्धि हेतो ॥३५९

इति स्तन्यविशुद्धि ।

भूमिकूष्माण्डमूल पिबति चीरेण या नारी
सशर्करेणैव पुष्टा ह्यतिशयदुग्धवती सा भवति ॥ ३६० ॥
कमलस्य तंडुलाना कल्क चीरेण दधि पिबेदबला ।
सा भवति प्रचुरचीरा घनकुचयुगलापि वार्द्धिक्ये ॥ ३६१ ॥
वनकर्पासिकेचूणा मूल सौवीरकेण च ।
विदारीकन्दस्वरस पिबेद्वा स्तन्यवर्द्धनम ॥ ३६२ ॥
पिप्पली पिप्पलीमूल चव्यशुण्ठ्यवानिका ।
जीरके द्वे हरिद्रे च विड सौवर्चल तथा ॥ ३६३ ॥
एतैरवौषधै पिष्टैरारणाल विपाचयेत् ।
आमवातहरं श्रेष्ठ कफघ्न वह्निदीपनम ॥ ३६४ ॥
वज्रक काञ्जिकं नाम स्त्रीणामग्निप्रवर्द्धनम ।

इति वज्रकाञ्जिकम् ।

स्वर्णशेफालिकापत्र स्नुहीपत्र तथैव च ।
चित्रकस्य च पत्राणि पत्र स्फोटकस्य च ॥ ३६५ ॥
वासित काञ्जिकाम्लेन वातश्लेष्मगदापहम् ।
पत्रकाञ्जिकमाख्यात स्त्रीणा चीरविवर्द्धनम् ॥ ३६६ ॥

इति पत्रकाञ्जिकम् । इति चीरवर्द्धनविधि ।

अलम्बुषाकणाकल्कै सिद्ध तैलं करोति वनितायाः ।
पिचुधारणनस्यदानात् कुचद्वयं श्रीफलाकारम् ॥ ३६७ ॥

इत्यलम्बुषाद्य तैलम् ।

श्रीपर्णीरसकल्काभ्यां तैलं सिद्धं तिलोद्भवम्।
तत्तैलं तूलकेऽन्यस्य स्तनयोः परिधारयेत्॥ ३६८॥
पतितावुत्थितौ स्त्रीणां भवेयातां पयोधरौ।
गजकुम्भसमाकारौ उत्पन्नौ परिमण्डलौ॥ ३६९॥
इति श्रीपर्णीतैलम्।

शङ्खचूर्णस्य भागौ द्वौ हरितालञ्च भागिकम्।
शुक्तेन सह संयुक्तं लोमशातनमुत्तमम्॥ ३७०॥
तैलं कुसुम्भकस्याथ स्नुहीचीरं तथैव च।
प्रगृह्यैकत्र मतिमान् लोमशातनमुत्तमम्॥ ३७१॥
कदलीदीर्घवृन्तानां भस्मालं लवणं शमी।
बीजं शीताम्भसापिष्टं लोमशातनमुत्तमम्॥ ३७२॥
कासीसतुरगगन्धा सावरगजपिप्पली विपक्केन।
तैलेन यान्ति वृद्धिं स्तनकर्णपालिलिङ्गानि॥ ३७३॥
इति कासीसाद्यं तैलम्।

हरितालभाग एको भागाः पञ्चैव शङ्खचूर्णस्य।
भागः पलाशभस्मत एतल्लेपात् कचानस्युः॥ ३७४॥
करवीरशिग्रुदन्ती चोणिकोशातकानि च।
रम्भाचारोदके तैलं प्रशस्तं लोमशातनम्॥ ३७५॥
इति करवीराद्यं तैलम्।

कर्पूरभल्लातकशङ्खचूर्णं चारो यवानां सुमनःशिला च।
तैलं विपक्कं हरितालमिश्रं लोमानि निर्मूलयति चणेन॥३७६॥
इति कर्पूराद्यं तैलम्। इति लोमशातनप्रकारः।

—०—

## अथ निदानमाह।

दिवास्वप्नादतिक्रोधा द्व्यायामादतिमैथुनात्।

चताच नखदन्ताद्यै र्वाताद्या: कुपिता यदा ॥ ३७७ ॥
पूयशोणितसंकाशं लकुचाकृति सन्निभम् ।
उत्पद्यते यदा योनौ नाम्ना कन्दस्तु योनिज: ॥ ३७८ ॥
रूच विवर्णं स्फुटितं वातिकन्तु विनिर्दिशेत् ।
दाहरागज्वरयुतं विद्यात् पित्तात्मकन्तु तत् ॥ ३७९ ॥
नीलपुष्पप्रतिकाशं कडूमन्तं कफात्मकम् ।
सर्वलिङ्गसमायुक्तं सन्निपातात्मकं वदेत् ॥ ३८० ॥

—०—

## अथ चिकित्सामाह ।

स्वेदयेद्वातिकं कन्दं पैत्तिकन्तु विरेचयेत् ।
कफजे वमनं भूय सर्वजे सर्वमर्हति ॥ ३८१ ॥
त्रिफलाया: कषायेण मधुयुक्तेन सेचयेत् ।
प्रमदायोनिकन्देन व्याधिना परिमुच्यते ॥ ३८२ ॥
गैरिकाञ्जनजन्तुघ्न कट्फलाम्रास्थिचूर्णतै: ॥
पूरयेत् सततं योनिं निशाचोद्रसमायुतै: ॥ ३८३ ॥
पूरयेच्चाभयारिष्ट मध्वारिष्टमथापि वा ।
मद्यामायूरमथवा वस्तौ पाने प्रयोजयेत् ॥ ३८४ ॥
कोलभेकस्य मांसेन कन्द: शाम्यति योषिताम् ।
मूषिकामांससमयुक्तं तैलमातपभावितम् ।
अभ्यङ्गाद्धन्ति कन्दं या स्वेदं तन्मांससैन्धवै: ॥ ३८५ ॥
मार्जारमांसं सपदि बहुधा सूक्ष्मखण्डीकृतंयत्
तैले पाच्य द्रवति नियतं यावदेतेन सम्यक् ।
तत्तैलाक्तं वसनमनिशं योनिभागे दधानं
हन्ति व्रीडाकरभगफलं नात्र सन्देहबुद्धि: ॥ ३८६ ॥

पिष्टं शंबूकमांसञ्च पक्वं तित्तिडिसंयुतम्।
लेपमात्रेण नारीणां योनिकन्दहरं परम्॥ ३८७॥
घोपकस्वरसः पीतो मस्तुना च समन्वितः।
योनिकन्दं निहन्त्याशु तन्नाडी चैव धूपतः॥ ३८८॥
सद्यो व्रीड़ाकरं कन्द योनेर्बहुविकारजम्।
शलाकया तप्तया वा दहति कुशलो भिषक्॥ ३८९॥
एतत्कन्दस्य निर्दिष्टं समासेन चिकित्सितम्॥

## इति वङ्गसेने स्त्रीरोगनिदानचिकित्साधिकारः समाप्तः॥ ६९॥

—o—

## अथ बालरोगनिदानमाह।

त्रिविधः कथितो बालः क्षीरान्नोभयवर्त्तकः।
स्वास्थ्यं ताभ्यामदुष्टाभ्यां दुष्टाभ्यां रोगसम्भवः॥ १॥
दन्तोद्भेदस्तु सर्वेषां रोगाणामपि कारणम्।
विशेषाज्ज्वरविड्भेद कासच्छर्दिशिरोरुजः।
अभिष्यन्दश्च शोथश्च विसर्पश्चापि जायते॥ २॥
पृष्टभङ्गे विडालानां बर्हिणाञ्च शिखोद्गमे।
दन्तोद्भेदे च बालानां न ते किञ्चिन्न दूयते॥ ३॥
वातदुष्टं शिशुः स्तन्यं पिबन्वातगदातुरः।
क्षामस्वरः कृशाङ्गः स्यात् बद्धविण्मूत्रमारुतः॥ ४॥
खिन्नोभिन्नमलो बालः कामलापित्तरोगवान्।
तृष्णालुरुष्णसर्वांगः पित्तदुष्टं पयः पिबन्॥ ५॥
कफदुष्टं पिबेत् क्षीरं लालालुः श्लेष्मरोगवान्।

निद्रार्दितो जड़ः शूलः शुक्लाख्यः छर्दनः शिशु ॥ ६ ॥
द्वन्द्वजे द्वन्द्वजं रूपं सर्वजे सर्वलक्षणम् ।
शिशोस्तीव्रामतीव्राञ्च रोदनाल्लक्षयेद्रुजम् ॥ ७ ॥
क्षुद्ररोगे च कथिते ह्यजगल्ल्यां हि पूतने ।
ज्वराद्या व्याधयः सर्वे महतां ये पुरेरिताः ॥ ८ ॥
बालदेहेऽपि ते तद्वद्विज्ञेयाः कुशलैः सदा ।
अनुबन्धे यथा व्याधिः प्रतिकुर्वीत कालवित् ॥ ९ ॥
यथा दोषं यथा रोगं यथोद्रेकं यथा बलम् ।
विभज्यदेशकालादीं स्तत्र युञ्ज्याद् भिषग् हितम् ॥ १० ॥
भैषज्यं पूर्वमुद्दिष्टं महतां यज्ज्वरादिषु ।
कार्यं तदेव भैषज्यं तेषु दाहादिकं विना ॥ ११ ॥
त एव दुष्या दोषाश्च ज्वराद्या व्याधयश्च ये ।
अतस्तदेव भैषज्यं मात्रास्तस्य कनीयसी ॥ १२ ॥
स्तन्योऽधिकश्लेष्मगतो विकारः कुकूणको नाम शिशोः प्रदिष्टः ।
नन्दिपद्मो नाम महानिहास्ति विज्ञायते वै शमयेद्यथावत् ॥१३॥

—०—

## अथ चिकित्सामाह ।

विडङ्गफलमात्रन्तु जातमात्रस्य भेषजम् ।
मासिमासि प्रयोक्तव्यं विड़ङ्गानां प्रवर्द्धनम् ॥ १४ ॥
अब्दादूर्ध्वं कुमारस्य दद्यात् कोलास्थिमात्रकम् ।
क्षीराश्चादः शिशोः कोलमन्नादो बदरोपमम् ॥ १५ ॥
क्षीरपस्यौषधं धात्र्याः क्षीराद्यस्य चोभयोः ।
आत्मन्यशनैर्देयं मौषधं भेषजं सदा ॥ १६ ॥
यथारोगं स्तनौ लिम्पेत् स्वौषधैः पाययेच्छिशुम् ।

मात्रया लङ्घयेद्धात्रीं शिशोर्नोक्तं विलङ्घनम् ॥ १७ ॥
सर्वं निवार्य्यते बाले स्तन्यं न प्रतिवार्य्यते।
स्तन्याभावे पयः छागं गव्यं वा तद्गुणं पिबेत् ॥ १८ ॥
मृत्पिण्डेनाग्निवर्णेन क्षीरसिक्तेन सोष्मणा।
स्वेदयेदुत्थितां नाभिं शोथस्तेनोपशाम्यति ॥ १९ ॥
दग्धेन छागशकृता नाभिपाकेऽवचूर्णनम्।
त्वक्चूर्णैः क्षीरिणां वापि कुर्य्याच्चन्दनरेणुना ॥ २० ॥
नाभिपाके निशालोध्र प्रियंगुमधुकैः शृतम्।
तैलमभ्यञ्जने शस्त मेभिर्वा ह्यवचूर्णनम् ॥ २१ ॥

—०—

बालो यश्चिराज्जातः स्तन्यं न गृह्णाति तस्य सैन्धवधात्रीमधुघृतपथ्या कल्केनोद्घर्षयेज्जिह्वाम्।

—०—

कुष्ठाभयावचाब्राह्मी कनकं क्षौद्रसर्पिषाः।
सपाठामधुना लीढा स्तन्यदोषनिवर्हणाः ॥ २२ ॥
प्रियंगुखर्जिकासिन्धु मधुना लेहयेच्छिशुम्।
क्षीरामयं निहन्त्याशु विडङ्गेन युतं क्रमीन् ॥ २३ ॥
पीतं पीतं वमति यः स्तन्यं तं मधुसर्पिषा।
द्विवार्ताकीफलरसं पञ्चकोलञ्च लेहयेत् ॥ २४ ॥
शर्कराक्षौद्रसंयुक्ता तिक्तालीढाज्ज्वरं जयेत्।
लिम्पेन्मुहुर्मुहुर्बालं तत्कल्केन च बुद्धिमान् ॥ २५ ॥
भद्रमुस्ताभयानिम्ब पटोला मधुकैः कृतः।
क्वाथः सोष्णस्तु बालाना मशेषज्वरनाशनः ॥ २६ ॥

—०—

पलङ्कषावचाकुष्ठं गजचर्मविचर्म च ।
निम्बस्य पत्रं माक्षीकं संयियुक्तान्तु धूपनम् ॥
ज्वरवेगं निहन्त्याशु बालानान्तु विशेषतः ॥ २७ ॥
इति पलङ्कषादिधूपः ।
सर्पत्वक् सर्षपारिष्टपल्लवं तेजनीवचा ।
रसोनहिंग्वजालोम शृङ्गीमरिचमाचिकैः ॥
धूपः सर्वग्रहघ्नोऽयं कुमाराणां ज्वरापहः ॥ २८ ॥
इति सर्पत्वगादिधूपः ।
मध्वरिष्टदलश्वेत सर्षपैर्योजितोज्वरम् ।
बालानां शमयेद्धूपो मृतगोकुचिरोमजः ॥ २८ ॥
आम्रत्वक् कांचजम्बूत्थ कषाये पादशेषिते ।
शालिसिद्धां यवागूञ्च भुक्त्वा कुच्यामयं जयेत् ॥ ३० ॥
समङ्गाशाल्मलीवेष्टं धातकीपद्मकेसरैः ।
पिष्टैरेतैर्यवागूः स्या दतीसारविनाशिनी ॥ ३१ ॥
विल्वञ्च पुष्पाणि च धातकीनां गजं सलोध्रं गजपिप्पली च ।
क्वाथावलेही मधुना विमिश्री बालेषु योज्यावतिसारितेषु ॥३२॥
इति बालविल्वादिः क्वाथोऽवलेहश्च ।
नागरातिविषामुस्ता बालकेन्द्रयवैः शृतम् ।
जलं हन्ति कुमाराणां कुचिरोगमसंशयम् ॥ ३३ ॥
षड्गोटमूलधातक्यौ विल्वपेशीमहौषधम् ।
क्वथितं शीतलं पेयं कुचिगेर्भविनाशनम् ॥ ३४ ॥
समङ्गाधातकीलोध्रं शारिवाभिः शृतं जलम् ।
विदहेऽपि शिशोर्देयं मतीसारे समाचिकम् ॥ ३५ ॥
पिद्दा पटोलमूलञ्च शृङ्गवेरं वचामपि ।
विड़ङ्गान्यजमोदाञ्च पिप्पलीतण्डुलानि च ॥ ३६ ॥

एतान्यालोड्यसर्वाणि सुखतप्तेन वारिणा।
आमप्रवृत्तेऽतीसारे कुमारं योजयेद्भिषक् ॥ ३७ ॥
पीड़ितास्थिकक्कोत्थ स्वरसं मधुना सह।
कोष्टभेदी शिशुः शीर्णो न चिरात् स्वस्थतां व्रजेत् ॥ ३८ ॥
शालीपर्णी पृश्निपर्णी घोटात्वक् कथितं जलम्।
क्षौद्रयुक्तं त्रिदोषघ्नं सर्वातिसारनाशनम् ॥ ३९ ॥
हरिद्राद्वयपद्माह्व सिंहीशक्रयवैः शृतम्।
शिशोर्ज्वरातिसारघ्नं श्वासकासवमीहरम् ॥ ४० ॥
धातकीविल्वधान्याक लोध्रेन्द्रयववालकैः।
लेहः क्षौद्रेण बालानां ज्वरातीसारवातनुत् ॥ ४१ ॥
लोध्रेन्द्रयवधान्याक धात्रीह्रीवेरमुस्तकम्।
मधुना लेहयेद्वालं ज्वरातिसारनाशनम् ॥ ४२ ॥
मधुसर्पिर्विड़ङ्गानि सरलं देवदारु च।
पटोलकुटजारिष्ट सप्तपर्णयवानिका ॥
ज्वरं छर्दिमतिसारं शमयेच्चूर्णकं त्विदम् ॥ ४३ ॥
कल्कः प्रियङ्गुकोलास्थि मधुमुस्ताञ्जनैः कृतः।
क्षौद्रलीढः कुमारस्य छर्दितृष्णातिसारनुत् ॥ ४४ ॥
हरीतकीफलमूलत्वक् कृष्णाग्रन्थिकसंभवः।
तुगाचीरीयुतः क्वाथः पीतो हन्ति शिशोर्वमिम्।
मूर्च्छां श्वासं ज्वरं कासं मतिसारञ्च पीनसम् ॥ ४५ ॥
धान्यमतिविषाशृङ्गी गजाह्वाम्रत्वाचूर्णितम्।
बालानां छर्द्यतीसारं मधुना हन्ति लेहनात् ॥ ४६ ॥
ह्रीवेरशर्कराक्षौद्रं पीतं तंडुलवारिणा।
शिशोः सर्वातिसारघ्नं तृट्छर्दिज्वरनाशनम् ॥ ४७ ॥
श्वेतकमलकिञ्जल्कं संपिष्टं तंडुलांबुना।

मत्स्यण्डिमधुसंयुक्तं चिप्रं हन्ति प्रवाहिकाम् ॥ ४८ ॥
विल्वमूलकषायेण लाजाश्चैव सशर्करा: ।
आलोड्य पाययेद्बालं छर्द्यतीसारनाशनम् ॥ ४९ ॥
फलिन्यञ्जनमुस्तानां चूर्णं पीतं समाक्षिकम् ।
तृष्णां छर्दिमतीसारं शिशूनामुद्धतं हरेत् ॥ ५० ॥
आम्रजम्बूप्रवालानि शालूकातिविषाणि च ।
चीरीणाञ्च प्रवालानि यष्टीमधुकमेव च ॥ ५१ ॥
दर्भमूलोगिराबुक्र क्वथितानि जलेन तु ।
शर्करामधुसंयुक्तं तृष्णाच्छेदनमुत्तमम् ॥ ५२ ॥
दाड़िमस्य तु वीजानि जीरकं नागकेशरम् ।
चूर्णः सशर्कराक्षौद्रो लेहस्तृष्णाविनाशनः ॥ ५३ ॥
हिंगुसैन्धवपालाश्र चूर्णं माक्षिकसंयुतम् ।
लीढ़ं निवारयत्याशु शिशूनामुद्धतां तृषाम् ॥ ५४ ॥
शृङ्गीं समुस्तातिविषां विचूर्ण्य लेहं विदध्यान्मधुना शिशूनाम् ।
कासज्वरच्छर्दिभिरर्दितानां समाक्षिकां चातिविषां तथैकाम् ॥५५॥
मुस्तकातिविषायास कणाशृङ्गीरजो लिहन् ।
मुच्यते मधुना बालः कासैः पञ्चभिरुत्थितैः ॥ ५६ ॥
चीरादस्य शिशोः कास शुष्क दृष्ट्वा गुदारुणम् ।
माषयूषं पिवेद्धात्री पिप्पलीघृतभर्जितम् ॥ ५७ ॥
द्राक्षां पिप्पलीशुण्ठीना चूर्णं माक्षिकसर्पिषा ।
लीढ़ं निवारयेच्छीघ्र काम पञ्चविधं शिशोः ॥ ५८ ॥
व्याघ्रीकुसुमसञ्जात केशरं रलेहिका ।
जरमापि चिरज जात शिशो कास व्यपोहति ॥ ५९ ॥
धान्यं शर्करयायुत तडुलोदकसंयुतम् ।
पानमेतत्प्रदातव्य कासश्वासापह शिशोः ॥ ६० ॥

गुडोदकञ्च क्वथितं व्योषमेन्धवसंयुतम्।
सुखोष्णं पाययेद्बालं कासरोगप्रशान्तये ॥ ६१ ॥
कुलीरशृङ्गीचूर्णञ्च मूलकस्य फलं तथा।
युक्तोयं मधुसर्पिर्भ्यां लेहः श्वासापहं शिशोः ॥ ६२ ॥
कृष्णादुरालभाद्राक्षा कर्कटाख्या तुगाह्वया।
चूर्णितामधुसर्पिर्भ्यां लीढ़ा हन्ति शिशोर्गदान् ॥
श्वासं कासं सतमकं ज्वरं वापि नियच्छति ॥ ६३ ॥
द्राक्षादुरालभा चैव पिप्पल्योऽथ हरीतकी।
एतानि कृत्वा चूर्णानि योजयेन्मधुसर्पिषा ॥ ६४ ॥
त्रिरात्रं पञ्चरात्रं वा चूर्णमेतन्निषेवितम्।
कासः श्वासश्च बालानां तमकश्चोपशाम्यति ॥ ६५ ॥
हिंगुकर्कटशृङ्गी च गैरिकं मधुयष्टिका।
त्रुटिः क्षौद्रं नागरञ्च हिक्काश्वासविनाशनम् ॥ ६६ ॥
चातुर्जातकसंयुक्तो गव्यस्य शकृतो रसः।
लेहोऽयं मधुना देयः छर्दिशमनः परः ॥ ६७ ॥
नागरं पिप्पलीपाठा भार्गी च मरिचानि च।
लेहोऽयं मधुना कास श्लेष्मछर्दिनिसूदनः ॥ ६८ ॥
निशाकृष्णाञ्जनं लाजा शृङ्गीमरिचमाक्षिकैः।
लेहः शिशोर्विधातव्यः छर्दिकासरुजापहः ॥ ६९ ॥
पत्रैर्वदरचाङ्गेरी काकमाचीकपित्थजैः।
शिशोरुग्रस्यतीसारं नाशनं मूर्द्धलेपनम् ॥ ७० ॥
आम्रास्थिलाजसिन्धूत्थैः लेहक्षौद्रेण छर्दिनुत्।
शिशोर्यद्युपर्णं पीतं बीजपूररसेन वा ॥ ७१ ॥
जंबूकतिन्दुकानाञ्च पुष्पाणि च फलानि च।
घृतेन मधुना लीढ़ा मुच्यते हिक्कया शिशुः ॥ ७२ ॥

पिप्पलीमधुकानाञ्च चूर्णं समधुमर्करम् ।
रसेन मातुलुङ्गस्य हिक्काछर्दिनिवारणम् ॥ ७३ ॥
चूर्णं कटुकरोहिण्या मधुना सह योजितम् ।
हिक्कां प्रशमयेत् क्षिप्रं छर्दिं चातिचिरोत्थिताम् ॥ ७४ ॥
सुवर्णगैरिकस्यापि चूर्णानि मधुना सह ।
लीढ्वा सुखमवाप्नोति क्षिप्रं हि छर्दितः शिशुः ॥ ७५ ॥

—०—

## अथ निदानमाह ।

विसर्पस्तु शिशोः प्राण नाशनो वस्तिशीर्षजः ।
पद्मवर्णो महापद्मो रोगो दोषचयोद्भवः ॥ ७६ ॥
शङ्खाभ्यां हृदयं याति हृदयाच्च गुदं व्रजेत् ॥ ७७ ॥

—०—

## अथ चिकित्सामाह ।

पटोलं त्रिफलारिष्टं हरिद्रां त्रिफलां पिबेत् ।
क्षतविस्फोटवीसर्प ज्वराणां शान्तये शिशुः ॥ ७८ ॥
शारिवोत्पलकह्लार भद्रश्रीमुस्तचन्दनैः ।
प्रपुण्डरीकमञ्जिष्ठा यष्टीमधुकसर्षपैः ॥
कुमाराणां प्रशस्तोऽयं लेपो वीसर्पनाशनः ॥ ७९ ॥
अभ्यङ्गविषये कार्यं वालानां पद्मकं घृतम् ।
विस्फोटरोगे निर्दिष्टं नात्र कार्या विचारणा ॥ ८० ॥
न्यग्रोधोदुम्बरोऽश्वत्थ प्लक्षवेतसजम्बुजैः ।
त्वग्भिर्यष्ट्याह्वमञ्जिष्ठा चन्दनोशीरपद्मकैः ॥ ८१ ॥
शुक्ष्णपिष्टैः यथा नाभं शिशोः कार्यं प्रलेपनम् ।
सदाहरागविस्फोट वेदना व्रणशान्तये ॥ ८२ ॥

गृहधूमनिशाकुष्ठ सर्जकेन्द्रयवैः शिशोः।
चन्दनोशीरपद्मैश्च सिध्मापामाविचर्चिनुत् ॥ ८३ ॥
वचाकुष्ठविडङ्गानां कोष्टक्वाथावगाहनम्।
कच्छूविचर्चिकाकंडू दद्रुभिर्मुच्यते शिशुः ॥ ८४ ॥
तिलतंडुलयोर्नाड़ी मूलाभ्यां लेपनाद्द्रुतम्।
बालानां ब्राह्मणीयष्टी रोगः शाम्यति साम्प्रतम् ॥ ८५ ॥
कणोपणसिताचौद्र सूक्ष्मैला सैन्धवैः कृतैः।
मूत्रग्रहे प्रदातव्यः शिशूनां लेह उत्तमः ॥ ८६ ॥
घृतेन हिंगुविश्वैला हिंगुभार्गीरजो लिहन्।
आनाहं वातिकं शूलं हन्यात्तोयेन वा शिशोः ॥ ८७ ॥
पिप्पलीत्रिफलाचूर्णं घृतचौद्रपरिप्लुतम्।
रुदते त्रस्यते वापि लेहं दद्यात् सुखावहम् ॥ ८८ ॥
छुच्छुन्दरमलो माया हरिद्राविल्वपत्रकम्।
इन्द्रं शिरीषपत्रञ्च धूमैनैतत्प्रयोजितम् ॥
निहन्ति रोदनं रात्रौ बालस्याशु न संशयः ॥ ८९ ॥

—०—

## अथ कुकूणकनिदानमाह।

कुकूणकः चीरदोषा च्छिशूनामेव वर्त्मनि।
जायते तेन तन्नेत्रं कंडुरञ्च स्रवेन्मुहुः ॥ ९० ॥
शिशोः कुर्य्याल्ललाटाक्षि कूटनासावघर्षणम्।
न शक्तोऽर्कप्रभां द्रष्टुं न वर्त्मोन्मीलनक्षमः ॥ ९१ ॥

—०—

## अथ चिकित्सामाह।

वहगोशकृतोष्णेन कुकूणं स्वेदयेत्ततः ॥ ९२ ॥

पिप्पलीमधुकानाञ्च चूर्णं समधुशर्करम् ।
रसेन मातुलुङ्गस्य हिक्काछर्दिनिवारणम् ॥ ७३ ॥
चूर्णं कटुकरोहिण्या मधुना सह योजितम् ।
हिक्कां प्रशमयेत् क्षिप्रं छर्दिं चातिचिरोत्थिताम् ॥ ७४ ॥
सुवर्णगैरिकस्यापि चूर्णानि मधुना सह ।
लीढ्वा सुखमवाप्नोति क्षिप्रं हि छर्दितः शिशुः ॥ ७५ ॥

—०—

## अथ निदानमाह ।

विसर्पस्तु शिशोः प्राण नाशनो वस्तिशीर्षजः ।
पद्मवर्णो महापद्मो रोगो दोषत्रयोद्भवः ॥ ७६ ॥
शङ्खाभ्यां हृदयं याति हृदयाच्च गुदं व्रजेत् ॥ ७७ ॥

—०—

## अथ चिकित्सामाह ।

पटोलं त्रिफलारिष्टं हरिद्रां त्रिफलां पिबेत् ।
घृतविस्फोटवीसर्प ज्वराणां शान्तये शिशुः ॥ ७८ ॥
शारिवोत्पलकह्लार भद्रश्रीमुस्तचन्दनैः ।
प्रपुण्डरीकमञ्जिष्ठा यष्टीमधुकसर्पपैः ॥
कुमाराणां प्रशस्तोऽयं लेपो वीसर्पनाशनः ॥ ७९ ॥
अभ्यङ्गविषये कार्यं बालानां पद्मकं घृतम् ।
विस्फोटरोगे निर्दिष्टं नात्र कार्या विचारणा ॥ ८० ॥
न्यग्रोधोदुम्बरोऽश्वत्थ प्रचयेतमजवुजैः ।
त्वग्भिर्यष्ट्याह्वमञ्जिष्ठा चन्दनोशीरपद्मकैः ॥ ८१ ॥
श्लक्ष्णपिष्टैः यथा न्याय्यं शिशोः कार्यं प्रलेपनम् ।
महादाहरागविस्फोट वेदना प्रशमान्तये ॥ ८२ ॥

गृहधूमनिशाकुष्ठ सर्जकेन्द्रयवैः शिशोः।
चन्दनोशीरपद्मैश्च सिध्मापामाविचर्चिनुत् ॥ ८३ ॥
वचाकुष्टविडङ्गानां कोष्टक्वाथावगाहनम्।
कच्छूविचर्चिकाकंडू दद्रुभिर्मुच्यते शिशुः ॥ ८४ ॥
तिलतंडुलयोर्नाड़ी मूलाभ्यां लेपनाद्दद्रुतम्।
बालानां ब्राह्मणीयष्टी रोगः शाम्यति साम्प्रतम् ॥ ८५ ॥
कणोपणसिताचौद्र सूक्ष्मैला सैन्धवैः कृतैः।
मूत्रग्रहे प्रदातव्यः शिशूनां लेह उत्तमः ॥ ८६ ॥
घृतेन हिंगुविश्वैला हिंगुभार्गीरजो लिहन्।
आनाहं वातिकं शूलं हन्यात्तोयेन वा शिशोः ॥ ८७ ॥
पिप्पलीत्रिफलाचूर्णं घृतचौद्रपरिप्लुतम्।
रुदते वस्यते वापि लेह दद्यात् सुखावहम् ॥ ८८ ॥
छुच्छुन्दरमलौ माषा हरिद्राबिल्वपत्रकम्।
इन्द्रं शिरीपपत्रञ्च धूमेनैतत्प्रयोजितम् ॥
निहन्ति रोदनं रात्रौ बालस्याश न संशयः ॥ ८९ ॥

—०—

## अथ कुकूणकनिदानमाह।

कुकूणकः क्षीरदोषा च्छिशूनामेव वर्त्मनि।
जायते तेन तन्नेत्रं कंडुरञ्च स्रवेन्मुहुः ॥ ९० ॥
शिशोः कुर्य्यात्ललाटाचि कूटनासावघर्षणम्।
न शक्तोऽर्कप्रभां द्रष्टु न वर्त्मोन्मीलनक्षमः ॥ ९१ ॥

—०—

## अथ चिकित्सामाह।

वत्सगोमयतोष्णेन कुकूणं स्वेदयेत्ततः ॥ ९२ ॥

माढस्तन्यकटुस्त्रे ह काञ्जिकैर्भावितो जयेत् ।
खेदादीपशिखातमो नेत्रामयमलक्तक: ॥ ८३ ॥
हिनिशालोध्रयष्ट्याह्व रोहिणी निम्बपल्लवैः ।
कुकूणके हिता वर्त्ति: पिष्टैस्ताम्ररजोन्वितैः ॥ ८४ ॥
फलत्रिकं लोध्रपुनर्नवे च सशृङ्गवेरं बृहतीद्वयञ्च ।
आलेपनं श्लेष्महरं सुखोष्णं कुकूणके कार्य्यमुदाहरन्ति ॥८५॥
व्योषं सशृङ्ग समनःशिलालं करञ्जबीजञ्च सुपिष्टमेतत् ।
कटूर्दितानामथ वर्त्मनान्तु श्रेष्टं शिशूनां नयने विदध्यात् ॥८६॥
स्वरस बृहदारस्य काचिकेण समन्वितम् ।
आश्चोतनेन बालानां कुकूणामयनाशनम् ॥ ८७ ॥
क्रमिघ्नालशिनादार्वी लाक्षागैरिककाञ्जिकैः ।
चूर्णाञ्जनं कुकूणे स्या च्छिशूनां पोथकीषु च ॥ ८८ ॥
मनःशिलाशङ्खनाभिः पिप्पल्योऽय रसाञ्जनम् ।
वर्त्ति: चौद्रेण सयुक्ता बालसर्वाक्षिरोगनुत् ॥ ८९ ॥

इति कुकूणकचिकित्सा ।

---

## अथ परिगर्भिकनिदानमाह ।

मातुः कुमारो गर्भिण्याः स्तन्यं प्रायः पिबन्नपि ।
कासाग्निसादवमथू तन्द्राकार्श्याऽरुचिभ्रमैः ॥ १०० ॥
युज्यते कोष्टवृद्धा च तमाहुः पारिगर्भिकम् ।
रोगं परिभवाख्यञ्च युञ्ज्यात्तत्राग्निदीपकम् ॥ १०१ ॥

---

## तस्य चिकित्सामाह ।

पारिगर्भिकरोगे तु युज्यते बह्रिदीपनम् ॥ १०२ ॥

---

## अथ तालुकण्टकनिदानमाह।

तालुमध्ये कफः क्रुद्धः कुरुते तालुकण्टकम्।
तेन तालुप्रदेशस्य निम्नता मूर्ध्नि जायते॥ १०३॥
तालुपातः स्तनद्वेषः कृच्छ्रात्पानं शकृद्द्रवम्।
तृड्चिकण्ठास्यरुजा ग्रीवादुर्धरता वमिः॥ १०४॥

—०—

## अथ चिकित्सामाह।

तालुपाके यवक्षारं मधुना प्रतिसारणम्॥ १०५॥
हरीतकीवचाकुष्ठं कल्कं माक्षिकसंयुतम्।
पीत्वा कुमारः स्तन्येन मुच्यते तालुकण्टकात्॥ १०६॥
शारिवातिललोध्राणां कषायो मधुकस्य च।
विस्राविते मुखे शस्तो धावनार्थं शिशोः सदा॥ १०७॥
मुखपाके तु बालाना माम्रसारमयो रजः।
गैरिक चौद्रसंयुक्तं भेषजं सरसाञ्जनम्॥ १०८॥
अश्वत्थत्वग्दलक्षौद्रैः मुखपाके प्रलेपनम्।
दार्वीयष्ट्याभयाजाजी पत्रक्षौद्रैस्तया परम्॥ १०९॥
गुदपाके तु बालानां पित्तघ्नीं कारयेत् क्रियाम्।
रसाञ्जनं विशेषेण पानालेपनयोर्हितम्॥ ११०॥
शंखयष्ट्यञ्जनैश्चूर्णं शिशूनां गुदपाकनुत्॥ १११॥
गोजिह्वादन्तकालेपः पेयं वा सितचन्दनम्।
शंखसौवीरयष्ट्याह्वै र्लेपो देयोऽहिपूतने॥ ११२॥
गुदपाकोत्कटे कुर्या द्रक्तस्रावं जलौकसा॥ ११३॥

—०—

## अथ कश्चिद्रोगनिदानमाह।

दुष्टं मलादिभिर्मातुः स्तन्यं संपिबतः शिशोः।
यदा हि कुपितं पित्तं गुदं समभिधावति ॥ ११४ ॥
तदा सञ्जायते तत्र जलौकोदरसन्निभः।
व्रणः सदाहः आरक्तो ज्वरकासकरः परः ॥ ११५ ॥
करोति पीतकश्चापि वर्चः स्तम्भं भवेदपि।
व्रणः पद्मात्तकं नाम व्याधिः परमदारुणः ॥ ११६ ॥

—०—

## अथ चिकित्सामाह।

तत्र संपातयेद्युक्त्या जलौकास्र छदारधीः।
चीरद्रुचकषायेण किञ्चिदुष्णेन धावयेत् ॥ ११७ ॥
पिष्टा मधुरकं वापि लेपः पद्मात्तके हितः।
चन्दनं शारिवेदे च ग्रखनाभिसमायुतम् ॥
पद्मात्तके प्रलेपोऽयं मया लेहय शस्यते ॥ ११८ ॥
अशनस्य तु पुष्पाणि श्लक्ष्णचूर्णानि कारयेत्।
गुटिकां कारयेद्वैद्य स्तां च भक्तस्य वारिणा ॥
एतां पद्मात्तके दद्या द्बालेषु मतिमान् भिषक् ॥ ११८ ॥
चलम्बुषाजटाकल्कः सर्जचूर्णसमन्वितः।
बहुधा कटुतैलेन मिश्रयित्वा च पाचितम् ॥
संदद्यात्तन्तुलोभावं गते विद्यां प्रलेपनम् ॥ १२० ॥
संभ्यज्य तिलतैलेन मर्जचूर्णावचूर्णिताम्।
विच्छिन्नयेत् स्थिरैरण्ड वीजाभ्याश्च प्रलेपनात् ॥ १२१ ॥
चामलकाः पलान्यष्टौ गोमूत्रे मासभावयेत्।
भावयित्वा तपे पद्मा द्विर्द्विलिहात्प्रशाम्यति ॥ १२२ ॥

मरिचं नवनीताढ्यं शोथघ्नं भक्षयेच्छिशुः।
मुस्ताकूष्माण्डबीजानि भद्रदारुकलिङ्गकान्॥
पिष्ट्वा तोयेन लेपोऽयं शोथघ्नः परमः शिशोः॥ १२३॥
अम्लकाञ्जिकसम्पिष्टं शतपुष्पां ससैन्धवम्।
कुष्ठं स्नेह तदल्पुष्णं लोमशोद्वर्त्तनं शिशोः॥ १२४॥
मसूरं गुडपानीये विरसं वाथ पेषितम्।
सनिशं वाथवा तद्वद्यवचूर्णं शिशोर्हरेत्॥ १२५॥

—०—

## अथान्यद्रोगविशेषाणां निदानमाह।

अङ्गुलीग्रहपादोयः स्थाप्याभक्तं निवेश्य तत्।
क्षतमूत्रार्थभूभागे जानुभ्यां धरणीं गतः॥
तण्डुलोत्थाय यः खादेत् सशय्यामूत्रणं त्यजेत्॥ १२६॥

—०—

## अथ तस्य चिकित्सामाह।

क्षतमूत्रार्थभूभागे भ्रष्ट भ्रष्ट्वा तुषोदके।
सचूर्णं मधुसर्पिर्भ्यां लीढ्वा तल्पविमूत्रणम्॥
न करोति नरो जातु भ्रष्टमेनं निरन्तरम्॥ १२७॥
इन्द्रगोपं ससिद्धार्थं मधुसर्पिः समायुतम्।
पक्वं कच्छपतैले तु युञ्ज्यायुर्बलवर्द्धनम्॥ १२८॥

—०—

## अथ निदानमाह

कपालयोनिला दुष्टा गर्भस्तस्याथ जायते।
सवर्णो निर्व्यथः शोथ स्तं विद्यादुपशीर्षकम्॥ १२९॥

यथा दोषोद्भवं विद्या त्पिड़िकार्बुदविद्रधीम् ।

—०—

## अथ चिकित्सामाह ।

उपशीर्षनावनं शस्तं वातव्याधिचिकित्सितम् ।
पक्वे विद्रधिवत्तस्मिन् क्रमं कुर्य्याद्यथोदितम् ॥ १३० ॥
व्योषशिवोग्रारजनीकल्कं वा पीतमथ पयसा ।
क्षुनिपिक्तं कुरुते पांडुताबलस्य चाभ्यस्तम् ॥ १३१ ॥
स्रोतस्सु कफरुद्धेषु शिशोः शीतादिरेचनात् ।
ज्वरेऽरुचौ प्रतिश्याये कामश्वसनसम्भवे ॥ १३२ ॥
प्रशाम्यति यदा बालः स्वस्थः स्निग्धमुखेक्षणः ।
पञ्चकोलकतिक्तानां चूर्णं मधुघृतं युतम् ॥
तदा तस्य प्रयोक्तव्यं ज्वरारुच्यादिशान्तये ॥ १३३ ॥
सैन्धवं व्योषशार्ङ्गष्टा पाठागिरिकरञ्जकान् ।
गृध्यते मधुसर्पिर्भ्यां गुडूच्यादिञ्च योजयेत् ॥ १३४ ॥
यदा तु दुर्बलोबालः क्षुधयापीडितोऽग्निवान् ।
विदारीकन्दगोधूम यवचूर्णं घृतप्लुतम् ॥
पाययेदनु च क्षीरं शृतं समधुशर्करम् ॥ १३५ ॥

—०—

## अथ निदानमाह ।

दन्तामूलाश्रितो वायु र्दन्तवेष्टान्विशोषयन् ।
यदा शिशोः प्रकुपितो नोत्तिष्ठन्ति तदा द्विजाः ॥ १३६ ॥

—०—

## अथ चिकित्सामाह ।

दन्तपालिन्तु मधुना चूर्णेन प्रतिसारयेत् ।

धातकीपुष्पपिप्पल्यो धात्रीफलरसेन वा ॥ १३७ ॥
लावतित्तिरवल्लूररजः पुष्परसप्लुतम्।
द्रुतं करोति बालानां दन्तकेसरवत्सुखम्॥ १३८ ॥

—०—

## अथाकालदन्तोत्पातलक्षणमाह।

दन्तोत्पातभवे रोगे न बालमतिपीड़येत्।
पाते दन्ते हि शाम्यन्ति स्वयं तद्दन्तकागदाः ॥ १३९ ॥
सद्यो जातस्य दृश्येत यस्य दन्तस्य सम्भवः।
तं बालं राक्षसं विद्यात् सर्वलोकभयावहम् ॥
अचिरेणैव कालेन माता तस्य विनश्यति ॥ १४० ॥
एकमासे द्विमासे च त्रिमासे दन्तदर्शनात्।
पिता तस्य विनश्येत वैवस्वतसमोद्दिसः ॥ १४१ ॥
चतुर्थे भ्रातरं हन्या यदादं तस्य दर्शनात्।
मासे तु पञ्चमे हन्या न्मातरं भ्रातरं तथा ॥ १४२ ॥
षष्टे मासे तु दन्तस्य दर्शनं हि यदा भवेत्।
मातापित्रोर्धनञ्चैव नष्टं भवति निश्चितम् ॥ १४३ ॥
सप्तमे यदि दृश्येत दन्तानां हि समुद्भवः।
शिशोर्वा तपति चैव दासी दासान् गुरुंस्तथा ॥ १४४ ॥
अष्टमे नवमे चैव दशमैकादशे तथा।
द्वादशे त्रयोदशे चैव तथा चैव चतुर्दशे ॥
दन्तायैव हि दृश्यन्ते सदा दन्ताः शुभावहाः ॥ १४५ ॥

—०—

## अथ प्रायश्चित्तम्।

सदन्तो जायते बालो जातेऽप्यस्य द्विजोद्भवः।

कुर्वन्ति तस्मिन् त्याते शान्तिं च द्विजातयः ॥ १४६ ॥
शिशुं सदक्षिणं दद्यात्रे गमिपञ्च पूजयेत् ।
बलस्य मधुलाजानां प्राङ्मुख दधिदीपयोः ॥
चुम्बेत्कुमारं त्रीन्वारान् प्रायश्चित्तमिदं स्मृतम् ॥ १४७ ॥
नौकामारोहयेद्बालं सह धात्र्या गजोत्तमम् ।
भोजयेद्भोजनं धात्रीं सर्पिपायसाऽथवा ॥ १४८ ॥
इत्यकालदन्तोत्पातशान्तिप्रकारम् ।

—०—

## अथ निदानमाह ।

रूक्षाग्निनो हि बालस्य चालपत्यनिलः शिराः ।
हन्वाः शय्याप्रसुप्तस्य दन्तैः शब्दं करोत्यतः ॥ १४९ ॥

—०—

## अथ चिकित्सामाह ।

कर्कटशाकविपक्वं क्षीरेण चरणतललेपनादचिरात् ।
दन्तदष्टागत शब्दं शमयति बहुधैव दृष्टमिदम् ॥ १५० ॥
योषिद्वशो बत्सरादूर्ध्वं बालो नो याति दोषताम् ।
मन्दाग्निर्बहुविरमूत्रो दृश्यमानास्थिपञ्जरः ॥ १५१ ॥
शुष्कः स्थिरमहद्रोगः पूर्वन्तं मृदुशोध्य च ।
क्षणास्थिहत्ययो मांसं वस्तौ स्न हं च योजयेत् ॥ १५२ ॥
पादकल्कोऽश्वगन्धायाः क्षीरे दशगुणे पचेत् ।
घृतं पेयं कुमाराणां पुष्टिकृद्बलवर्द्धनम् ॥ १५३ ॥

इत्यश्वगन्धाद्यं घृतम् ।

रास्नाश्वगन्धाकाकोली पयस्या मुद्गपर्णिभिः।
विडङ्गजीरकाभ्याञ्च घृतमृषभकेन च॥
श्रिघृतमाङ्गनिर्यूहे सिद्धं पुष्टिविवर्द्धनम्॥ १५४॥

इति रास्नाद्यं घृतम्।

गौरीयष्टीवचालोध्रं पर्ण्यौ राजादनं सिता।
चन्दनं पद्मकं लाक्षा सपद्मं कुमुदोत्पलम्॥ १५५॥
जीवकर्षभकौ मेदा काकोलीशारिवाद्वयम्।
पञ्चत्वग्दशमूलाम्बु क्षीरे प्रस्थं घृतं पचेत्॥ १५६॥
योजितं पित्तवीसर्पे मुखपाके ग्रहार्त्तिषु।
शस्तं गौर्यादिकं नाम बालानां सर्वरोगनुत्॥ १५७॥

इति गौर्याद्यं घृतम्।

लाक्षाकुष्टविडङ्गानि सरलं रजनीद्वयम्।
सूक्ष्मैलापद्मकं लोध्रं पद्मकं नागकेशरम्॥ १५८॥
दधित्थतुल्यशैरीय शैरेयोद्दालपत्रकम्।
घृतप्रस्थं पचेदेतैर्यावत्पाकञ्च गच्छति॥ १५९॥
कीटाखुसर्पदष्टेषु स्फोटेषु विविधेषु च।
विसर्पेषु कुमाराणां लूतामूत्रक्षतेषु च॥
गण्डमालासु नारीषु सर्पिरेतद्यथामृतम्॥ १६०॥

इति लाक्षाद्यं घृतम्।

अजाक्षीरसमं सर्पिः चांगेरी स्वरसाढ़के।
समङ्गाधातकीलोध्रं कपित्थोत्पलसैन्धवैः॥ १६१॥
सव्योषकुष्टबिल्वाब्दैः पिष्टैः प्रस्थोन्मितं घृतम्।
पचेद् ग्रहण्यतीसारान् हन्ति पथ्यभुजः शिशोः॥ १६२॥

इति चांगेरीघृतम्।

पाठामतिविषां कुष्ठं सरलं देवदारु च।
द्विपिप्पल्यौ तेजवतीं चित्रकं विश्वभेषजम् ॥ १६३ ॥
उभे हरिद्रे सरलं फलानि कुटजस्य च।
गण्डीरी[1]मजमोदाञ्च विडङ्गं कटुरोहिणीम् ॥ १६४ ॥
वचां सर्पसुगन्धा[2]ञ्च श्रेयसीं मरिचानि च।
मातुलुङ्गस्य मूलानि दाडिमस्य रसेन तु ॥ १६५ ॥
श्लक्ष्णपिष्टानि संयोज्य क्षीरे सर्पिर्विपाचयेत्।
मृदग्निर्यं कुमारः स्यात् क्रिमिकोष्ठश्च यो भवेत् ॥ १६६ ॥
अरोचकग्रहीतश्च तथा यश्चातिसार्य्यते।
एतत्सर्पिः प्रयोक्तव्यं कुमारो बलवान् भवेत् ॥ १६७ ॥
पाण्डुरोगाच्च गुल्माच्च तथा श्वयथुसञ्चयात्।
कृशभावाच्च दैन्याच्च स्वरभेदात्तथैव च ॥ १६८ ॥
प्रज्वालावर्णभेदाच्च क्षिप्रमेव विमुच्यते।

इति पाठाद्य घृतम्।

सिद्धार्थकवचाब्राह्मी शङ्खपुष्पीपुनर्नवा।
पयस्या मधुयष्ट्याङ्क कटुतैलफलत्रयम् ॥ १६८ ॥
शारिवे रजनीपाठा शृङ्गाटकसुवर्चला।
मञ्जिष्ठात्रिफलाश्यामा वृषपुष्पं सगैरिकम् ॥ १७० ॥
एभिः पक्वा घृतप्रस्थ मन्यद्यन्त्राभिमन्त्रितम्।
हिमाम गर्भिणीनारी पञ्चमासानुपयोजयेत् ॥ १७१ ॥
सर्वंघ्नं जनयेत्पुत्र सर्वामयविवर्जितम्।
न यद्रैरभिभूयेत बलवर्णान्वितः सुखी ॥ १७२ ॥

---

१ गण्डीरी वराहक्रान्ता २ सर्पसुगन्धानागजिह्वा ॥

अस्य प्रयोगात् कुक्षिस्थः स्फुटवाग् व्याहरत्यपि।
योनिदुष्टाश्च या नार्य्यः शुक्रदुष्टाश्च ये नराः॥ १७३॥
बन्ध्यापि लभते पुत्रं शूरं पण्डितमानिनम्।
खञ्जगद्गदमूकत्वं पानादेवापकर्षति॥ १७४॥
सप्तरात्रिप्रयोगेण नरः श्रुतिधरो भवेत्।
नाग्निर्दहति तद्वेश्म न वज्रमपहन्ति च॥
न तत्र म्रियते बालो यत्रास्ते सोमसंज्ञकः॥ १७५॥

---

फलत्रयमत्र द्राक्षाकाश्मपरुषकाणि॥

इति सोमघृतम्।

बचाकुष्टं तथा ब्राह्मी सिद्धार्थकमथापि वा।
शारिवासैन्धवं चैव पिप्पलीघृतमष्टमम्॥ १७६॥
मेध्यं घृतमिदं सिद्धं पातव्यं मासमेव च।
दृढ़स्मृतिः क्षिप्रमेधाः कुमारो बुद्धिमान् भवेत्॥ १७७॥
न पिशाचा न रक्षांसि न दैत्या न च मानवाः।
बाधन्ते च कुमाराणां पिबतामष्टमङ्गलम्॥ १७८॥

इत्यष्टमङ्गलघृतम्।

शङ्खपुष्पीवचाब्राह्मी कुष्टं त्रिफलया सह।
द्राक्षा सशर्कराशुण्ठी जीवन्ती जीवकं बला॥ १७९॥
शठीदुरालभाविल्व दाड़िमं सुरसा तथा।
मुस्तं पुष्करमूलञ्च सूक्ष्मैला गजपिप्पली॥ १८०॥
एषां कर्षसमैर्भागै घृतप्रस्थं विपाचयेत्।
कषाये कण्टकार्य्याश्च क्षीरं तस्माच्चतुर्गुणम्॥ १८१॥
एतत्कुमारकल्याण घृतरत्नं सुखप्रदम्।
बलवर्णकरं धन्यं कोष्ठाग्नेरतिवर्द्धनम्॥ १८२॥

छायासर्वग्रहाऽलक्ष्मी क्रमिदन्तगदापहम् ।
सर्वबालामयहरं दन्ताङ्कुरे विशेषतः ॥ १८३ ॥
वसामज्जायवा तैल मेभिरेव विपाचितम् ।
पूर्वार्थक्रियया शास्ये इभकालोपपादितम् ॥ १८४ ॥

इति कुमारकल्याणकं घृतम् ।

खदिरार्जुनतालीस कुष्टस्यन्दनजे रसे ।
सक्षीरं साधितं सर्पिः क्षयथुञ्च नियच्छति ॥ १८५ ॥

इति खदिराद्यं घृतम् ।

वराहारस्य, सिद्धार्थकवचापयस्याब्राह्मीप्रपामार्गशतावरीशारिवापिप्पलीकुष्टसैन्धवैः सिद्धं सर्पिः पातुं प्रयच्छति । सिद्धार्थकाद्यं घृतम् ।

चीराव्रादस्य, मधुकवचात्रिफलासिद्धम् । इति मधुकाद्यं घृतम् । अन्नादस्य, द्विपञ्चमूलीक्षीरतगरभद्रदारुमरिचविड़ङ्गमधुकद्राक्षासिद्धम् । तेन बालस्यारोग्यबलमेधायूंषि भवन्ति । इति द्विपञ्चमूलाद्यं घृतम् ।

—०—

वचाद्विबृहतीपाठा कटुकातिविषाघनैः ।
मधुरैश्च घृतं सिद्धं शस्तं दशनजन्मनि ॥ १८६ ॥

इति वचाद्य घृतम् ।

श्यामाजयामतिक्तानां पुष्पाणां क्वाथसाधितम् ।
यष्टीगर्भं घृतं पीत्वा कामश्वासी जयेच्छिशुः ।
रक्तपित्तं पिपासाञ्च मूर्च्छां निरवशेषतः ॥ १८७ ॥

इति श्यामाद्यं घृतम् ।

नागरं सुयवाभार्गी नैचुलानि फलानि च ।
कस्केरसमैरेतैः प्रस्थार्धं सर्पिषः पचेत् ॥ १८८ ॥

द्विगुणेन जलेनैव जीर्णाहारः पिबेन्नरः ।
घृतमेतन्निहन्त्याशु कासश्वासापतन्त्रकान् ॥ १८८ ॥

इति नागराद्यं घृतम् ।

चोरद्वयं देवदारु विश्वाजाजी सदीप्यकम् ।
ग्रन्थिकं पिप्पलीतिक्ता द्रव्यैरेतैः समैर्घृतम् ॥ १८० ॥
सौवीरदधिमद्यैश्च कल्कैरेतैः पचेद्भिषक् ।
प्रयुक्तं हन्ति तत्सर्पिः शिशोः परिभवाख्यकम् ॥ १८१ ॥

इति चोरद्वयाद्यं घृतम् ।

बिभीतकं बचाकुष्ठं हरितालं मनःशिला ।
एभिः तैलं विपक्वन्तु बालानां पूतिकर्णके ॥ १८२ ॥

इति बिभीतकाद्यं तैलम् ।

लाक्षारससमं तैलं सिद्धं मस्तुचतुर्गुणम् ।
रास्नाचन्दनकुष्ठाब्द वाजिगन्धानिशा युतैः ॥ १८३ ॥
शताह्वादारुकुष्ठाह्व मूर्वातिक्ताह्वरेणुभिः ।
बालानां ज्वररक्षोघ्न मभ्यङ्गाद्दलवर्णकृत् ॥ १८४ ॥

इति लाक्षाद्यं तैलम् । इति बालकरोगचिकित्सा ।

—०—

## अथ बालग्रहनिदानमाह ।

क्षणादुद्विजते बालः क्षणात्त्रस्यति रोदति ।
नखैर्दन्तैर्दारयति धात्रीमात्मानमेव च ॥ १८५ ॥
ऊर्ध्वं निरीक्षते दन्तान् खादेत् कूजति जृम्भते ।
भ्रुवौ क्षिपति दन्तोष्ठं फेनमुद्वमति चासकृत् ॥ १८६ ॥
क्षामोऽतिनिशिजागर्त्ति शूलाङ्गो भिन्नविट् स्वरः ।

मांसशोणितगन्धश्च नचाघ्राति यथा पुरा ॥ १८७ ॥
सामान्यग्रहदुष्टानां लक्षणं समुदाहृतम् ।

—०—

## अथ चिकित्सामाह ।

रसोननिम्बपत्राणि जन्तुवंशावलेखनम् ।
सिद्धार्थनिम्बपत्राणि वशत्वग् जतुना सह ॥ १८८ ॥
सर्पनिर्मोककोशानि निर्माल्यं गौरसर्षपाः ।
धूपत्रय समपिष्क मेतत्सर्वग्रहापहम् ॥ १८९ ॥
द्वीपिव्याघ्राऽहि सिंहर्च चर्मभिर्घृतमिश्रितैः ।
पूतिकरञ्जसिद्धार्थ वचाभल्लातदीप्यकैः ॥
सकुष्टैः सघृतैर्धूपः सर्वग्रहविमोचनः ॥ २०० ॥
काकजङ्घामलाश्वेता कपित्थचोरपादिकैः ।
सकरञ्जकदंवैश्च धूपं स्नातस्य वाचरेत् ॥ २०१ ॥

—०—

## अथ स्कन्दग्रहजुष्टनिदानमाह ।

एक नेत्रस्य गात्रस्य स्रावः स्पन्दनकम्पनम् ।
अर्द्धदृष्ट्यानिरीक्षेत वक्त्रास्योरक्तगन्धिकः ॥ २०२ ॥
दन्तान् खादर्तिवित्रस्तः स्तन्यं नैवाभिनन्दति ।
स्कन्दग्रहगृहीतानां रोदनं चाल्पमेव च ॥ २०३ ॥

—०—

## अथ चिकित्सामाह ।

स्कन्दोपसृष्टानां कुमाराणाञ्च शस्यते ।
वातघ्नद्रुमपत्राणां निष्क्वाथः परिषेचने ॥ २०४ ॥

तेषां मूलेन सिद्धञ्च तैलमभ्यञ्जने हितम्।
सर्वगन्धसुरामण्ड कैटर्य्यावापमिष्यते ॥ २०५ ॥
देवदारुशिरास्नायां मधुरेषु गणेषु च।
सिद्धं सर्पिश्च सक्षीरं पानमस्मै प्रदापयेत् ॥ २०६ ॥
सर्षपाः सर्पनिर्मोको वचाकाकादनोघृतम्।
उष्ट्राजाविगवां वापि रोमाख्युद्धपनं शिशोः ॥ २०७ ॥
रक्तानि माल्यानि तथा पताकारक्ताश्च गन्धाविविधाश्च भक्ष्याः।
घण्टा च देवायवलिर्निवेद्यः सकुक्कुटः स्कन्दग्रहे हिताय ॥
स्नानं त्रिरात्रं निशि च त्वरेषु कुर्य्यात्परं शालियवैर्निवेद्यम् ॥२०८
गायत्रिपूताभिरथाद्भिरग्निं प्रज्वालयेदाहुतिभिश्च धीमान् ॥२०९॥
सोमवल्लीमिन्द्रवल्लीं वृन्दाकं बिल्वजं शमीम्।
मृगादन्याश्च मूलानि ग्रथितान्यथ धारयेत् ॥ २१० ॥
एलावालुकदार्व्येला कुष्टलाचाहरेणुभिः।
रास्नाग्निमा समञ्जिष्टा क्लीवेरगुरुचन्दनैः ॥
स्कन्दग्रहे प्रलेपोऽयं स्नक्ष्णपिष्टैः ममहितः ॥ २११ ॥
विल्वाग्निमन्थतर्कारी कासीमैरण्डपल्लवैः।
पाटल्या स्फोतवासाभिः सार्यं पानं प्रशस्यते ॥ २१२ ॥
जीवनीयविपक्वन्तु घृतपानं प्रशस्यते।
शतपुष्पादिभिः सिद्धं तैलमभ्यञ्जने हितम् ॥ २१३ ॥
रक्षामतः प्रवक्ष्यामि बालानां ग्रहनाशिनीम्।
अहन्यहनि कर्त्तव्या याभिः षड्भिरतन्द्रितैः ॥ २१४ ॥
तपसां तेजसाञ्चैव वपुषां यशसां तथा।
विधानं योऽव्ययो देवः सते स्कन्दः प्रसीदतु ॥ २१५ ॥
ग्रहसेनापतिर्देवो देवसेनापतिर्विभुः।
देवसेनारिपुहरः पातु त्वां भगवान् गुहः ॥ २१६ ॥

देवदेवस्य महतः पावकस्य च यः सुतः ।
गङ्गोमाकृत्तिकानाञ्च स ते शर्म्म प्रयच्छतु ॥ २१७ ॥
रक्तमाल्याम्बरः श्रीमान्रक्तचन्दनभूषितः ।
रक्तदिव्यवपुर्देवः पातु त्वां क्रौञ्चनाशनः ॥ २१८ ॥

इति स्कन्दग्रहजुष्टचिकित्सा ।

—०—

## अथ स्कन्दापस्मारग्रहजुष्टनिदानमाह ।

नष्टसंज्ञो वमेत् फेनं संज्ञवानतिरोदति ।
पूयशोणितगन्धित्वं स्कन्दापस्मारलक्षणम् ॥ २१९ ॥

—०—

## अथ चिकित्सामाह ।

विल्वः शिरीषो गोलोमी सुरसादिश्च यो गणः ।
परिषेके प्रयोक्तव्यः स्कन्दापस्मारशान्तये ॥ २२० ॥

सुरसादिगणमाह ।

—०—

सुरसाश्वेतसुरसा पाठाफञ्जीफणिज्जकः ।
सौगन्धिकं भूस्तृणको राजिकाश्वेतबर्वरी ॥ २२१ ॥
कट्फलं खरपुष्पा च कासमर्दश्च शल्लकी ।
विडङ्गमयनिर्गुण्डी कर्णिकार उदम्बरः ॥ २२२ ॥
वला च काकमाची च तथा च विषमुष्टिका ।
कफकृमिहरः ख्यातः सुरसादिरयं गणः ॥ २२३ ॥

—

वस्तमूत्रविपक्वान्तु तैलमभ्यञ्जने हितः ॥ २२४ ॥
क्षीरद्रुमकषाये तु काकोल्यादौ गणे तथा ।

विपक्कव्यं घृतञ्चापि पानीयं पयसा सह ॥ २२५ ॥
उत्सादनं वचाहिंगु युक्तं स्कन्दग्रहे हितम् ।
गृध्रोलूकपुरीषाणि केशाहस्तिनखोघृतम् ॥
वृषभस्य तु रोमाणि योज्यान्युद्धूपनेऽपि च ॥ २२६ ॥
अनन्तां कुनटीं बिम्बीं मर्कटीञ्चापि धारयेत् ।
पक्वापक्वानि मांसानि प्रसन्नं रुधिरं तथा ॥ २२७ ॥
भूतोदनो निवेद्यश्च स्कन्दापस्मारिणे वटे ।
चतुष्पथे च कर्त्तव्यं स्नानमस्य यतात्मना ॥ २२८ ॥
स्कन्दापस्मारसंज्ञोयः स्कन्दस्य दयितः सखा ।
विशाखसञ्ज्ञ शिशोः शिवोऽस्तु विकृताननः ॥ २२९ ॥

इति स्कन्दापस्मारग्रहरक्षाप्रकारः ।

---

## अथ शकुनिग्रहनिदानमाह ।

स्रस्ताङ्गो भयचकितो विहङ्गगन्धिः
सास्रावव्रणपरिपीडितः समन्तात् ।
स्फोटैश्च प्रचिततनुः सदाहपाकै
र्विज्ञेयो भवति शिशुर्युतः शकुन्या ॥ २३० ॥

---

## अथ चिकित्सामाह ।

शकुन्यभिपरीतस्य कार्यो वैद्येन जानता ।
वेतसाम्रकपित्थानां निःक्वाथः परिषेचने ॥ २३१ ॥
कषायमधुरैस्तैल कार्य्यमभ्यञ्जने शिशोः ॥ २३२ ॥
मधुकोशीरह्रीवेर शारिवोत्पलपद्मकैः ।

लोध्रं प्रियंगुमञ्जिष्टा गैरिकैः प्रदिहेच्छिशुम् ॥ २३३ ॥
व्रणे पूतानि चूर्णानि पथ्यानि विविधानि च ।
स्कन्दग्रहे धूपनानि तानीहापि प्रयोजयेत् ॥ २३४ ॥
शतावरीमृगैर्वारु नागदन्तीनिदग्धिकाः ।
लक्ष्मणां सहदेवीञ्च वृहतीञ्चापि धारयेत् ॥ २३५ ॥
तिलतंडुलकं माल्यं हरितालं मनःशिला ।
वलिरेष करञ्जेषु निवेद्यो नियतात्मना ॥ २३६ ॥
निकुञ्जे च प्रयोक्तव्यं स्नानमस्य यथा विधिः ।
श्वेतशिरीषगन्धाष्ट कुष्टगुग्गुलुसर्षपैः ॥ २३७ ॥
सिद्धमभ्यञ्जने तैलं धारणं पूर्वमेव तु ।
शकुनिग्रहशान्त्यर्थं प्रदेहं कारयेद्धितम् ॥ २३८ ॥
स्कन्दापस्मारशमनं घृतञ्चापीह योजयेत्
कुर्य्याच्च विविधां पूजां शकुन्याः कुशमैः शुभैः ॥ २३९ ॥
अन्तरीक्षचरादेवी सर्वालङ्कारभूषिता ।
अधोमुखोतीक्ष्णतुण्डा शकुनी ते प्रसीदतु ॥ २४० ॥
इति शकुनीग्रहरक्षा ।

—•—

## अथ रेवतीग्रहनिदानमाह ।

व्रणैः स्फोटैर्चितं गात्रं पङ्कगन्धं स्रवेदसृक् ।
भिन्नवर्चाज्वरीदाही रेवतीग्रहलक्षणम् ॥ २४१ ॥

—•—

## अथ चिकित्सामाह ।

अश्वगन्धाजशृङ्गी च शारिवाय पुनर्नवा ।
सहे विदारी च तथा कषायं परिषेचने ॥ २४२ ॥

तैलमभ्यञ्जने कार्य्यं कुष्टे सर्जरसे तथा ॥
पलकषाये नलदे तथा गिरिकदम्बके ॥ २४३ ॥
धवाम्रकर्णककुभ धातकीतिन्दुकेषु च ।
काकोल्यादौ गणे चापि पानीयं सर्पिरिष्यते ॥ २४४ ॥
कुलित्थाः शंखचूर्णञ्च प्रदेहः सर्वगन्धिका ।
गृध्रोलूकपुरीषाणि वचायवफलं घृतम् ॥
सन्ध्ययोरुभयोः कार्य्य मेतद्‌दूपन शिशोः २४५ ॥
शुक्लाः सुमनसो लाजा पयः शाल्योदन तथा ।
वलिर्निवेद्योगोतीर्थे रेवत्यैः प्रयतात्मना ॥ २४६ ॥
सङ्गमे च भिषक् स्नानं कारयेत् स्त्रीकुमारयोः ॥ २४७ ॥
नानावस्त्रधरादेवी चित्रमाल्यानुलेपनैः ।
चलत् कुण्डलिनीश्यामा रेवती ते प्रसीद तु ॥ २४८ ॥

इति रेवतीग्रहरक्षा ।

—०—

## अथ पूतनाग्रहनिदानमाह ।

अतिसारोज्वरस्तृष्णा तिर्य्यक्प्रेक्षणरोदनम् ।
नष्टनिद्रस्तथोद्विग्नो ग्रहपूतनया शिशुः ॥ २४९ ॥

—०—

## अथ चिकित्सामाह ।

अरलुकपोतवङ्का च वरुणः पारिभद्रक ।
आस्फोता चैव योज्याः स्युः बालानां परिषेचने ॥ ५० ॥
वचावयस्थागोलोमी हरितालं मनःशिला ।
कुष्टं सर्जरसश्चैव तैलार्थे वर्ग इष्यते ॥ २५१ ॥

हितं घृतं तुगाचीर्य्यां सिद्धं मधुरकेषु च ॥ २५२ ॥
कुष्टतालीशतगरं चन्दनस्यन्दने तथा ।
ब्रह्मास्थिमूलसंयुक्तं कुशमूलञ्च सप्तकम् ॥ २५३ ॥
दूर्वायाः पत्रकं वापि तण्डुलांश्च च्युतांस्तथा ।
धूपनात् पूतनां हन्ति स्तम्भं वाप्युपजायते ॥ २५४ ॥
हस्त्यस्थिशकलं गृह्य वारिणापरिपेषयेत् ।
गात्रलेपात् कुमाराणां पानाद्वा पूतनां जयेत् ॥ २५५ ॥
गन्धनाकुलीकुम्भीका मज्जानो वदरस्य च ।
कुक्कुटास्थिघृतञ्चापि धूपनं सह सर्षपैः ॥ २५६ ॥
धवः कदम्बः कुष्टेले तथा गिरिकदम्बकः ।
देवाह्वं रेणुकाहिंगु प्रलेपः पूतनाग्रहे ॥ २५७ ॥
मत्स्योदनञ्च कुर्वीत कृशरां पललं तथा ।
*शरावसपुटे कृत्वा बलिं शून्यगृहे भिषक् ॥ २५८ ॥*
काकादनीं चित्रफलां बिम्बीं गुञ्जाञ्च धारयेत् ॥ २५९ ॥
मलिनांवरसंवीता मलिनारूक्षमूर्द्धजा ।
शून्यागाराश्रयादेवी दारकं पातुपूतना ॥ २६० ॥
इति पूतनाग्रहरक्षा ।

—०—

## अथान्धपूतनाग्रहनिदानमाह ।

छर्दिः कासोज्वरस्तृष्णा वसागन्धोऽतिरोदनम् ।
स्तन्यद्वेषोऽतिसारश्च अन्धपूतनया भवेत् ॥ २६१ ॥

—०—

## अथ चिकित्सामाह ।

तिक्तद्रुमाणां पत्रैस्तु क्वाथः कार्य्योऽभिषेचने ॥ २६२ ॥

सुरासौवीरकं कुष्टं हरितालं मनःशिला।
तथा सर्जरसञ्चापि तैलार्थमुपसंहरेत्॥ २६३॥
पिप्पल्यः पिप्पलीमूलं वर्गोमधुरको मधु।
शालिपर्णीबृहत्यौ च घृतार्थमुपदिश्यते॥ २६४॥
सर्वगन्धैः प्रदेहश्च गात्रे प्रच्छाद्य शीतलैः॥ २६५॥
पुरीषं कौक्कुटं केशा चर्मसर्पभवन्तथा।
जीर्णञ्चाभीच्णशो वासो धूपनायोपकल्पयेत्॥ २६६॥
काकादनीमृगैर्वारु तुम्बीसत्रिफलावचा।
धारणं शिरसाशस्त मन्धपूतनयाग्रहे॥ २६७॥
कुक्कुटीं मर्कटीं बिम्बी मनन्ताञ्चापिधारयेत्॥ २६८॥
आममांसं तथा पक्वं शोणितञ्च चतुष्पथे।
निवेदयन्त्स्य गृहे शिशोः रचानिमित्ततः॥ २६९॥
शिशोश्च स्नपनं कुर्य्यात् सर्वगन्धादिकैः शुभैः।
कुंकुमागुरुकर्पूर कस्तूरीचन्दनैः समैः॥
सर्वगन्ध इति ख्यातो गणो ह्युत्तमगन्धकः॥ २७०॥
करालापिङ्गलामुण्डी कषायांवरवासिनी।
देवीबालमिमं प्रीता सरचत्वन्धपूतना॥ २७१॥

इत्यन्धपूतनारचा।

—o—

## अथ निदानमाह।

वेपते कासते चीणे नेत्ररोगो विगन्धिता।
छर्दतीसारयुक्तश्च शीतपूतनयाशिशुः॥ २७२॥

—o—

## अथ चिकित्सामाह ।

विम्बीं कपित्थं सुवर्चां तथाविल्वप्रचीबले ।
नन्दी भल्लातकञ्चैव परिषेके प्रयोजयेत् ॥ २७३ ॥
वत्समूत्रं गवां मूत्रं मुस्ताञ्चामरदारु च ।
कुष्टञ्च सर्वगन्धञ्च तैलार्थमवचारयेत् ॥ २७४ ॥
रोहिणीसर्जखदिर पलाशककुभत्वचः ।
निष्क्वाथ्यतस्मिंस्त्रिःक्वाथे सक्षीरं विपचेद् घृतम् ॥ २७५ ॥
प्रदेहः पूतनोक्तो यः स शस्तोत्र यदौषधम् ।
शीतपूतनयाग्रस्ते तदेवहितमुच्यते ॥ २७६ ॥
गृध्रोलूकपुरीषाणि वत्सगन्धामहित्वचम् ।
निम्बपत्राणि मधुकं धूपनार्थं प्रयोजयेत् ॥ २७७ ॥
धारयेदपिलम्बाञ्च गुञ्जां काकादनीन्तथा ।
नद्यां मुद्गौदनैश्चापि तर्पयेच्छीतपूतनाम् ॥ २७८ ॥
जलाशयान्ते बालस्य स्नपनञ्चोपदिश्यते ।
देव्यै देयश्चोपहारो वारुणोरुधिरं तथा ॥ २७९ ॥
मुद्गौदनाशनादेवी सुराशोणितपायनी ।
जलाशयरतादेवी पातुत्वां शीतपूतना ॥ २८० ॥

इति शीतपूतनारचाविधानम् ।

—०—

## अथ मुखमण्डिकानिदानमाह ।

प्रसन्नवर्णवदनः शिराभिरभिसम्भृतः ।
मूत्रगन्धोशुष्कवासो मुखमण्डिकयाग्रहे ॥ २८१ ॥

—०—

## तस्य चिकित्सामाह ।

कपित्थविल्वतर्कारी वांसीगन्धर्वहस्तकाः ।
कुवेराची च योज्याः स्यु र्बालानां परिषेचने ॥ २८२ ॥
स्वरसैर्भृङ्गवृचाणां तथाजहयगन्धयोः ।
तैलं वसाञ्च संयोज्य पचेदभ्यञ्जने शिशोः ॥ २८३ ॥
मधूलिकायां पयसि तुगाचीर्य्यां गणे तथा ।
मधुरे पञ्चमूले च कनीयसि घृतं पचेत् ॥ २८४ ॥
वचासर्जरसः कुष्ठं सर्पिश्चोडूपने हितम् ।
धारयेदपि जिह्वाश्च चापचीरक्तिसर्पजाः ॥ २८५ ॥
वर्णकं चूर्णकं माल्य मञ्जनं पारदं तथा ॥
मनःशिलां चोपहरे द्गोष्टमध्ये वलिं तथा ॥ २८६ ॥
पायसं तु पुरोडाशं वल्यर्थमुपनाहयेत् ।
मन्त्रपूताभिरद्भिश्च तत्रैव स्नपनं हितम् ॥ २८७ ॥
अलङ्कृता रूपवती सुभगा कामरूपिणी ।
गोष्टमध्यालयरता पातु त्वां मुखमण्डिका ॥ २८८ ॥

इति मुखमण्डिकारक्षाविधानम् ।

—०—

## अथ नैगमेषग्रहनिदानमाह ।

छर्दिस्पन्दनकण्ठास्य शोषो मूर्च्छाविगन्धिता ।
ऊर्ध्वं पश्येद्दशेद्दन्तान्नैगमेषं ग्रहं वदेत् ॥ २८९ ॥

—०—

## अथ चिकित्सामाह ।

विल्वाग्निमन्थपूतीकाः कार्य्याः स्युः परिषेचने ।
सुरासौवीरधान्याकं परिषेके प्रशस्यते ॥ २९० ॥

प्रियंगुसरलानन्ता शतपुष्पा कुटंनटैः ।
पचेत्तैलं सगोमूत्रे दधिमस्त्वम्लकाञ्जिकैः ॥ ॥ २८१ ॥
पञ्चमूलद्वयक्वाथे क्षीरे च मधुके तथा ।
पचेद् घृतञ्च मतिमान् खर्जूर्य्यां मस्तकेऽथवा ॥ २८२ ॥
वचां वयःस्थां गोलोमीं जटिलां वापि धारयेत् ।
उत्सादनं हितं चात्र स्कन्दापस्मारनाशनम् ॥ २८३ ॥
सिद्धार्थकं वचाहिंगु कुष्टं चैवाचतैः सह ।
भल्लातकाजमोदञ्च हितमुद्धूपनं शिशोः ॥ २८४ ॥
अधस्तात् क्षीरवृचस्य स्नपनं चोपदिश्यते ॥ ८२५ ॥
मर्कटोलूकगृध्राणां पुरीषाणि पिढग्रहे ।
धूपः सुप्ते जने कार्य्यो बालस्य हितमिच्छता ॥ २८६ ॥
तिलतंडुलकं माल्यं भच्याणि विविधानि च ।
कुमारपिढमेषाय द्दचमूले निवेदयेत् ॥ २८७ ॥
अजाननश्चलाचिभ्रूः कामरूपी महायशाः ।
बालं पालयिता देवो नैगमेषोऽभि रचितु ॥ २८८ ॥

## अथान्यत् निदानमाह ।

यः स्त्रगः शास्त्रद्रव्योघो वृद्धदाहा प्रतिघातकृत् ।
कुर्य्याच साहसंकर्म्म सहसा कामपीडितः ॥ २८८ ॥
सशब्दं वीच्यते रात्रौ यो नाश्नाति सुभुक्षितः ।
शुष्कास्यो बलिकामेन सगदितोऽपि बाध्यति ॥ ३०० ॥

## अथ चिकित्सामाह ।

महासुगन्धितिक्तोदीच्य क्वाथस्नानं महापहम् ।
सप्तच्छदामयनिशा चन्दनैश्चानुलेपनम् ॥ ३०१ ॥

समूला सदला पिष्टा मूर्वा तिक्तासमन्विता।
शिशोरुद्दर्त्तनं कुर्य्यात् सर्वग्रहनिवारणम्॥ ३०२॥
सर्पत्वक्लशुनं मूर्वा सर्षपारिष्टपल्लवाः।
विडालविड्नारोम मेषशृङ्गीवचामधु॥
धूपः शिशोर्ज्वरघ्नोऽयं मशेषग्रहनाशनः॥ ३०३॥
मृतगोकुक्षिसंस्थेन गोमयेन च धूपनम्।
हन्ति सर्वग्रहांश्चाशु ज्वरघ्नन्तु न संशयः॥ ३०४॥
बालिशाभीष्टकर्माणि कार्य्याणि ग्रहशान्तये॥ ३०५॥
ग्रहेष्वधिपतिः स्कन्दः सर्वरोगेषु रेवती।
पूजनीयौ ततस्तस्मा त्तौ बालानां हितेच्छया॥ ३०६॥
स्वस्ति ते सन्मुखः स्कन्दो महाभागा च रेवती।
दिशः सूर्य्योऽन्तरिक्षञ्च स्वस्ति कुर्वन्ति सर्वदा॥ ३०७॥
तेजसा ब्रह्मणाश्चाथ विष्णोरिन्द्रस्य तेजसा।
सिद्धानां तेजसा चैव रक्षितोऽस्मिन् सुखी भव॥ ३०८॥
मन्त्रैरेतैर्भिषक् पश्चाद्रक्षां कुर्वीतबालके।
भवन्ति निग्रहा बालाः सुखिता रोगवर्जिताः॥ ३०९॥
बालरोगाधिकारोक्त मष्टमंगलकं घृतम्।
भिषजा तत्प्रयोक्तव्य मायुर्वेदविचारिणा॥ ३१०॥
ग्रहोपसृष्टबालास्तु दुश्चिकित्स्यतमाः स्मृताः।
वैकल्य' मरणं वापि ध्रुवं स्कन्दग्रहे नृणाम्॥ ३११॥

इति बालग्रहाः।

## इति वङ्गसेने बालरोगनिदानचिकित्साधिकारः समाप्तः॥ ७०॥

—०—

## अथ विषनिदानमाह ।

कुलीनं धार्मिकं स्निग्धं सुभृतं सततोत्थितम् ।
अलुब्धमशठं भक्तं कृतज्ञं प्रियदर्शनम् ॥ १ ॥
क्रोधपारुष्य मात्सर्य मदालस्य विवर्जितम् ।
जितेन्द्रियं क्षमावन्तं शुचिं शीलदयान्वितम् ॥ २ ॥
मेधाविनमविश्रान्तमनुरक्तं हितैषिणम् ।
पटुं प्रगल्भं निपुणं दक्ष मायाविवर्जितम् ॥ ३ ॥
पूर्वोक्तैश्च गुणैर्युक्तं नित्यं सन्निहिताऽगदम् ।
महानसे प्रयुञ्जीत वैद्यं तद्विद्यपूजितम् ॥ ४ ॥
प्रशस्तदिग्देशकृत शुचिभाण्डं महाशुचिः ।
सजालकं गवाक्षाढ्य माप्तवर्गनिषेवितम् ॥ ५ ॥
विकक्षसृष्टसंसृष्ट सवितानं कृतार्चनम् ।
परीक्षितस्त्रीपुरुषं भवेच्चापि महानसम् ॥ ६ ॥
माहानसिकवोढारः सौपोदनिकपौपिकः ।
भवेयुर्वैद्यवशगा ये चाप्यन्ये तु केचन ॥ ७ ॥

इति माहानसिकस्य लक्षणम् ।

—०—

## अथ विषलक्षणमाह ।

स्थावरं जङ्गमञ्चैव द्विविधविषमुच्यते ।
मूलाद्यात्मकमाद्यं स्यात् परं सर्पादिसम्भवम् ॥ ८ ॥
स्थावरस्य ज्वरं हिक्का दन्तहर्षं गलग्रहम् ।
फेनच्छर्द्यरुचिश्वासं मूर्च्छाञ्च कुरुते विषम् ॥ ९ ॥

निद्रां तन्द्रां क्लमं दाहं सपाकं लोमहर्षणम्।
शोथं चैवातिसारञ्च कुरुते जङ्गमं विषम्॥ १०॥

—०—

## अथ विषदातुर्लक्षणमाह।

इङ्गितज्ञो मनुष्याणां वाक् चेष्टामुखवैकृतैः।
जानीयाद्विषदातारमेभिर्लिङ्गैश्च बुद्धिमान्॥ ११॥
न ददात्युत्तरं पृष्टो विवक्षुर्मोहमेति च।
अपार्थं बहुसंकीर्णं भाषते चापि मूढवत्॥ १२॥
हसत्यकस्मात् स्फोटयेदङ्गुलीर्विलिखेन्महीम्।
वेपथुश्चास्य भवति त्रस्तश्चैकैकमीक्षते॥ १३॥
विवर्णवक्त्रोध्यामश्च नखैः किञ्चिच्छिनत्यपि।
वर्त्तते विपरीतश्च विषदाता विचेतनः॥ १४॥

—०—

## अथ विषयुक्तान्नपरीक्षाक्रममाह।

नृपभुक्ते भुविन्यस्ते क्रौञ्चश्च मदमिच्छति।
हृष्येन्मयूरस्तद्दृष्ट्वा क्रोशतः शुकशारिके॥ १५॥
हंसः क्ष्वेडति चात्यर्थं भृङ्गराजस्तु कूजति।
शुनको विसृजत्यस्तु विष्ठां मुञ्चति मर्कटः॥ १६॥
उपक्षिप्तस्य चान्नस्य बाष्पान्यर्धं विसर्पते।
हृत्पीड़ोत्पाद्य नेत्रत्वं शिरो दुःखञ्च जायते॥ १७॥

—०—

## अथ चिकित्सामाह।

सद्य स्यादञ्जने कुष्टं लामज्जं नलदं मधु।

कुर्य्याच्छिरीषरजनी चन्दनैश्च प्रलेपनम् ॥ १८ ॥
हृदिचन्दनलेपश्च कृत्वा वै सुखमाप्नुयात् ।
प्राणिप्रासं पाणिदाहं नखशान्ति करोति च ॥ १९ ॥
तत्र प्रलेपे श्यामेन्द्र गोपीश्यामोत्पलानि च ।
सचैतः प्रमोदामोह स्वदन्नमुपसेवते ॥ २० ॥
ततो स्याष्टीलवज्जिह्वा भवत्यरसवेदनी ।
तुद्यते दह्यते वापि श्लेष्मा चास्ये प्रवर्त्तते ॥ २१ ॥
तत्र वाप्येरितं कर्म्म यच्च स्याद्यातु कर्पितम् ॥ २२ ॥

—०—

मूर्च्छाछर्दिभ्रमोदाह मद्वन्यद्वनि एव च ।
इन्द्रियाणां च वैकल्य कुर्य्यादामाशये गतम् ॥ २३ ॥

—०—

तत्राश्मदनालाबु विम्बघोषवतीफलैः ।
छर्दनं दध्युदश्विद्भ्यां मथवा तंडुलांवुना ॥ २४ ॥
कोशातक्यग्निकः पाठा सूर्य्यवर्णामृताभया ।
शैलं शिरीषकिणही हरिद्रे ह्यतोहयम् ॥ २५ ॥

—०—

## अथ निदानमाह ।

उद्वेष्टनं मूलविषैः प्रलापो मोह एव च ।
जृम्भनं वेपनं श्वासो ज्ञेयं पत्रविषेण तु ॥ २६ ॥
मुष्कशोथः फलविषे दाहोऽन्नद्वेष एव च ।
भवेत्पुष्पविषैः छर्दि राध्मानं श्वास एव च ॥ २७ ॥
त्वक्सारनिर्य्यासविषे रुपयुक्ते भवन्ति हि ।
आस्यदौर्गन्ध्यपारुष्य शिरोरुक् कफसंस्रवाः ॥ २८ ॥

फेनागमः क्षीरविषे विड्भेदो गुरुजिह्वता ।
हृत्पीडनं धातुविषे मूर्च्छादाहश्च तालुनि ॥ २९ ॥
प्रायेण कालघातीनि विषाण्येतानि निर्दिशेत् ॥ ३० ॥

—०—

## अथ विषलिप्तशस्त्रहतस्य लक्षणमाह ।

सद्यः क्षतं पच्यते यस्य जन्तोः स्रवेद्रक्तं पच्यते चाप्यभीक्ष्णम् ।
कृष्णीभूत क्लिन्नमत्यर्थपूतिं क्षतान्मांसं शीर्य्यते यस्य चापि ॥३१॥
तृष्णामूर्च्छाज्वरदाहौ च यस्य दिग्धाहतन्तं मनुजं व्यवस्येत् ।
लिङ्गान्येतान्येव कुर्य्यादमित्रैर्व्रणे विषं यस्य दत्तं प्रमादात् ॥३२॥
प्रतातं कृष्णधूमाभं पुरीषं योतिसार्य्यते ।
फेनमुद्वहते चापि विषपीतं तमादिशेत् ॥ ३३ ॥

—०—

## अथ जङ्गमविषलक्षणमाह ।

वातपित्तकफात्मानो भोगीमण्डलराजिलाः ।
यथा क्रमं समाख्याताद्व्यन्तराद्वन्द्वरूपिणः ॥ ३४ ॥
दर्वीभोगिक्षतः कृष्णः सर्ववातविकारकृत् ।
पीतोमण्डलिनो शोथो मृदुः पित्तविकारवान् ॥ ३५ ॥
राजिलोत्थो भवेद्दंशो स्थिरशोथश्च पिच्छलः ।
पांडुः स्निग्धोऽतिसान्द्रासृक् सर्वश्लेष्मविकारवान् ॥ ३६ ॥
लघुव्यक्तरस सूक्ष्मं रूक्षोष्णाशुव्यवायि च ।
विकाशिविशदं तीक्ष्णं विषं दशगुणं स्मृतम् ॥ ३७ ॥
मघार्द्राकृत्तिकाश्लेषा भरणीषु प्रयत्नतः ।
पूर्वासुसर्पदष्टस्य कस्य चिज्जीवितं भवेत् ॥ ३८ ॥
नवमीपञ्चमीषष्ठी तथा कृष्णचतुर्दशी :

चतुर्योसन्धिके द्वे च दष्टा एषु न जीविताः ॥ ३८ ॥

—०—

## अथ सामान्यचिकित्सामाह ।

चन्दनं व्रणच्छेद दाहस्रावाः प्रकीर्त्तिताः ।
पूर्वं दष्टस्य पानञ्च हृदयावदरणं हृतम् ॥ ४० ॥

—०—

## अथ निदानमाह ।

अश्वत्थदेवायतनश्मशानं वल्मीकसन्ध्यासु चतुष्पथेषु ।
याम्ये च दष्टाः परिवर्जनीया ऋक्षेनराममर्मसुये च दष्टाः ॥
दर्वीकराणां विषमाशुघाति सर्वाणि चोष्णे द्विगुणी भवन्ति॥४१
अजीर्णपित्तश्रमपीडितेषु बालेषु वृद्धेषु बुभुक्षितेषु ।
क्षीणे क्षते मेहनिकुष्ठजुष्टे रूक्षेऽबले गर्भवतीषु चापि ॥ ४२ ॥
शस्त्रक्षते यस्य न रक्तमस्तिराज्यो लताभिश्च न संभवन्ति ।
शीताभिरद्भिश्च न रोमहर्षो विषाभिभूतं परिवर्जयेत्तम् ॥ ४३ ॥
जिह्मं मुखं यस्य च केशशातो नामावसादश्च सकण्ठभङ्गः ।
कृष्णः सरक्तः श्वयथुश्च दंशो हन्वोः स्थिरत्वञ्च स वर्जनीयः ॥ ४४ ॥
वर्त्तिर्घनायस्य निरेति वक्त्राद्रक्तं स्रवेदूर्ध्वमधश्च यस्य ।
दष्टाभिघातायतुरश्च यस्य स चापि वैद्यैः परिवर्जनीयः ॥ ४५ ॥
उन्मत्तमत्यर्थमुपद्रुतञ्च हीनस्वरं वाप्यथवा विवर्णम् ।
मारिष्टमत्यर्थमवेगिनञ्च जह्यान्नरं यत्र न कर्म्मकुर्य्यात् ॥४६॥

—०—

## अथ दूषीविषलक्षणमाह ।

जीर्णं विषघ्नौषधिभिर्हतं वा दावाग्निवातातपशोषितं वा ।
स्वभावतो वा गुणविप्रहीनं विषं हि दूषीविषतामुपैति ॥ ४७ ॥

वीर्य्याल्पभावान्न निपातयेत्तत्कफान्वितं वर्षगुणानुबंधि।
तेनार्दिनो भिन्नपुरीषवर्णो विगधवैरस्ययुतः पिपासी॥
मूर्च्छां भ्रमं गद्गदवाग्वमिञ्च विचेष्टमानोऽरतिमाप्नुयाद्वा॥ ४८॥
आमाशयस्थे कफवातरोगी पक्काशयस्थेऽनिलपित्तरोगी।
भवेत्समुदस्तशिरोरुहांगो विलूनपचस्तु यथा विहङ्गः॥ ४९॥
स्थित रसादिष्वथवा यथोक्तान् करोति धातुप्रभवान् विकारान्।
कोपञ्च शीतानिलदुर्दिनेषु यात्याशु पूर्वं शृणु तस्य रूपम्॥ ५०॥
निद्रागुरुत्वञ्च विजृम्भणञ्च विश्लेषहर्षावथवाङ्गमर्दम्।
ततः करोत्यन्नमदाविपाका वरोचक'मण्डलकोठजन्म॥ ५१॥
मांसक्षय पादकरप्रशोथ मूर्च्छा न्तथा छर्दिमथातिसारम्।
दूषीविषश्वासतृषाज्वरांश्च कुर्य्यात्प्रवृद्धिं जठरस्य चापि॥ ५२॥
उन्मादमन्यज्जनयेत्तथान्यदानाहमन्यत् क्षयते च शुक्रम्।
गद्गदमन्यज्जनयेच्च कुष्टं तांस्तान् विकारांश्च बहुप्रकारान्॥५३॥
दूषितं देशकालान्न दिवास्वप्नैरभीक्ष्णशः।
यस्मात्सन्दूषयेद्धातून् तस्माद् दूषीविषं स्मृतम्॥ ५४॥
साध्यमात्मवतः सद्यो याप्यं संवत्सरोषितम्।
दूषीविषमसाध्यं स्यात् क्षीणस्याऽहितसेविनः॥ ५५॥

## अथ गरविषमाह।

सौभाग्यार्थं स्त्रियः स्वेदरजोनानाङ्गजान्मलान्।
शत्रुप्रयुक्तांश्च मलान् प्रयच्छन्त्यन्नमिश्रितान्॥ ५६॥
तैः स्यात्पांडुः कृशोऽल्पाग्निः गरश्चास्योपजायते।
मर्म्मप्रधमनाध्मानं हस्तयोः शोथलक्षणम्॥ ५७॥
जठर ग्रहणीरोगी यक्ष्मगुल्मयकृज्ज्वराः।
एवंविधस्य चान्यस्य व्याधेर्लिङ्गानि निर्दिशेत्॥ ५८॥

—०—

## अथ वृश्चिकादिदष्टानां लक्षणमाह।

दहत्यग्निरिवादौ तु भिनत्तीवोर्ध्वमाशु च।
वृश्चिकस्य विषं याति दंशे पश्चात्तु तिष्ठति॥ ६७॥
दष्टोऽसाध्यस्तु हृद्‌घ्राणरसनोपहतो नरः।
मांसैः पतद्भिरत्यर्थं वेदनार्त्तो जहात्यसून्॥ ६८॥

—०—

विसर्पः श्वयथुः शूलं ज्वरश्छर्दिरथापि वा।
लक्षणं कणभैर्दष्टे दंशश्चैव विशीर्य्यते॥ ६९॥

—०—

हृष्टरोमोच्चिटिङ्गेन स्तब्धलिङ्गो भृशार्तिमान्।
दष्टः शीतोदकेनैव सिक्तान्यङ्गानि मन्यते॥ ७०॥

—०—

एकदष्टार्पितः शूनः सरुजः पीतकः सदृट्।
छर्दिर्निद्रा च सविषैर्मण्डूकैर्दष्टलक्षणम्॥ ७१॥

—०—

मत्स्यास्तु सविषाः कुर्युर्दाहं शोथं रुजं तथा।
कंडूं शोथं ज्वरं मूर्च्छां सविषास्तु जलौकसः॥ ७२॥

—०—

विदाहं श्वयथुं तोदं स्वेदञ्च ग्रहगोधिका।
दंशे स्वेदं रुजं दाहं कुर्याच्छतपदीविषम्॥ ७३॥

—०—

कंडूमान्मशकैरीष च्छोथः स्यान्मन्दवेदनः।
असाध्यकीटसदृश मसाध्यं मशकक्षतम्॥ ७४॥

—०—

## अथ लूताविषनिदानमाह ।

यस्माल्लूनं तृणं प्राप्ता मुनेः प्रस्वेदविन्दवः ।
तस्माल्लूताः प्रभाषन्ते सङ्ख्ययास्तास्तु षोडश ॥ ५९ ॥
ताभिर्दष्टे दंशकोथः प्रवृत्तिः क्षतजस्य च ।
ज्वरोदाहोऽतिसारश्च गदाः स्युश्च त्रिदोषजाः ॥ ६० ॥
पिड़िका विविधाकारा मण्डलानि महान्ति च ।
शोथा महान्तो मृदवो रक्ताः श्यावाश्चलास्तथा ॥
सामान्यं सर्वलूतानामेतद्दंशस्य लक्षणम् ॥ ६१ ॥
दूषीविषाभिर्लूताभिस्तं दष्टमिति निर्दिशेत् ॥ ६२ ॥
शोथाः श्वेताः सितारक्ताः पीता सपिडिका ज्वराः ।
प्राणान्तिकाभिर्जायन्ते श्वासहिक्काशिरोग्रहाः ॥ ६३ ॥

—०—

## अथाखुविषलक्षणमाह ।

आदंशाच्छोणितं पांडुमण्डलानि ज्वरोऽरुचिः ।
रोमहर्षश्च दाहश्चा प्याखुदूषीविषार्दिते ॥ ६४ ॥
मूर्च्छाङ्गशोथवैवर्ण्य क्लेदगन्धाऽश्रुतिज्वराः ।
शिरोगुरुत्वं लालासृक् छर्दिश्चासाध्यमूषिकैः ॥ ६५ ॥

—०—

## अथ कृकलासदष्टलक्षणमाह ।

कार्श्यं श्यावत्वमथवा नानावर्णत्वमेव च ।
व्यामोहो वर्चसो भेदो दष्टः स्यात् कृकलासकैः ॥ ६६ ॥

—०—

## अथ वृश्चिकादिदष्टानां लक्षणमाह।

दहत्यग्निरिवादौ तु भिनत्तीवोर्ध्वमाशु च।
वृश्चिकस्य विषं याति दंशे पश्चात्तु तिष्ठति ॥ ६७ ॥
दष्टोऽसाध्यस्तु हृद्घ्राणरसनोपहतो नरः।
मांसैः पतद्भिरत्यर्थं वेदनार्त्तो जहत्यसून् ॥ ६८ ॥

—o—

विसर्पः श्वयथुः शूलं ज्वरश्छर्दिरथापि वा।
लक्षणं कणभैर्दष्टे दंशश्चैव विशीर्य्यते ॥ ६९ ॥

—o—

हृष्टरोमोच्चिटिङ्गेन स्तब्धलिङ्गो भृशार्तिमान्।
दष्टः शीतोदकेनेव सिक्तान्यङ्गानि मन्यते ॥ ७० ॥

—o—

एकदंष्ट्रार्पितः शूनः सरुजः पीतकः सदट्।
छर्दिर्निद्रा च सविषैर्मण्डूकैर्दष्टलक्षणम् ॥ ७१ ॥

—o—

मत्स्यास्तु सविषाः कुर्युर्दाहं शोथं रुजं तथा।
कण्डूं शोथं ज्वरं मूर्च्छां सविषास्तु जलौकसः ॥ ७२ ॥

—o—

विदाहं श्वयथुं तोदं स्वेदञ्च गृहगोधिका।
दंशे स्वेदं रुजं दाहं कुर्य्याच्छतपदीविषम् ॥ ७३ ॥

—o—

कण्डूमान्मशकैरीषच्छोथः स्यान्मन्दवेदनः।
असाध्यकीटसदृशमसाध्यं मशकक्षतम् ॥ ७४ ॥

—o—

सद्यः प्रस्रावणी स्थावा दाहमूर्च्छाज्वरान्विता ।
पिटकामचिकादंशे तासान्तु स्थगिकाऽसुहृत् ॥ ७५ ॥

—०—

चतुष्पाद्भिर्द्विपाद्भिर्वा नखदन्तविषञ्च यत् ।
शूयते पच्यते वापि स्रवति ज्वरयत्यपि ॥ ७६ ॥

—०—

## अथावतरितविषलक्षणमाह ।

प्रसन्नदोषं प्रकृतिस्थ धातुमन्नाभिकामं सममूत्रविट्कम् ।
प्रसन्नवर्णेन्द्रियचित्तचेष्टं वैद्योऽवगच्छेदविषं मनुष्यम् ॥ ७७ ॥

—०—

## अथ चिकित्सामाह ।

स्थावरेण विषेणार्त्तं नरं यत्नेन वामयेत् ।
वमनेन समं नास्ति यतस्तस्य चिकित्सितम् ॥ ७८ ॥
विषमत्यर्थमुष्णञ्च तीक्ष्णञ्च कथितं यतः ।
अतः सर्वविषेपूक्तं शातशीतावसेवनम् ॥ ७९ ॥
पाययेन्मधुसर्पिभ्यां विषघ्नं भेषजं द्रुतम् ।
यष्टीक्वाथेन शीतेन घृतं वा मधुना पिबेत् ॥ ८० ॥
अथवा गोपुरीषस्य रसेन मधुना सह ।
हृदयावदरणं सर्पि र्गवां चैव प्रयोजयेत् ॥ ८१ ॥
रजनीसैन्धवक्षौद्र संयुक्तं घृतमुत्तमम् ।
पानं मूलविषार्तस्य दग्धविद्धस्य चेष्यते ॥ ८२ ॥
खादिते खाद्यमाने च खादितव्ये च यो विषे ।
पद्मगन्धाजटां भुङ्क्ते तत्र नैव विषं क्रमेत् ॥ ८३ ॥

तुल्याज्यमधुपानात्ते लघुकोष्ठो घृतं पिवेत्।
ततो निम्बाम्बुपानं वा क्षविमन्तु विनाशयेत् ॥ ८४ ॥

## अथ निदानमाह।

प्रायो वातोल्वणाभेक मूपपिंगाः सवृषिकाः।
वातपित्तोल्वणाः कीटाः श्लैष्मिकाः कणभादयः ॥ ८५ ॥
यस्य यस्य च दोषस्य लिङ्गाधिक्यं प्रवर्त्तयेत्।
तस्य तस्यौषधैः कुर्य्याद्विपरीतगुणैः क्रियाम् ॥ ८६ ॥
हृत्पीड़ा चानलस्तम्भः शिरायामोस्थिपर्वरुक्।
घूर्णनोद्वेष्टनं गात्रे व्यामता वातिके विषे ॥ ८७ ॥
संज्ञानाशस्तु निःश्वासो हृद्दाहकटुकास्यता।
दन्तावदरण शोथो रक्तपित्तञ्च पैत्तिके ॥ ८८ ॥
छर्द्यरोचकहृल्लास प्रसेकक्लेशगौरवैः।
सशैत्यमुखमाधुर्य्ये विद्याच्छ्लेष्माधिकं विषम् ॥ ८९ ॥

## अथ चिकित्सामाह।

घृतेन बहुलो लेप स्तैलाभ्यङ्गश्च वातिके।
स्वेदनाड़ीप्रलेपाद्यै र्वृंहणश्च हितो विधिः ॥ ९० ॥
सुशीतैस्तम्भयेच्छेकैः प्रदेहैश्चापि पैत्तिके।
लेपनच्छेदनस्वेद वमनैः श्लैष्मिकं जयेत् ॥ ९१ ॥
शालयः षष्टिकाश्चैव कोरदूषाः प्रियंगवः।
भोजनार्थे प्रशस्यन्ते लवणार्थे च सैन्धवम् ॥ ९२ ॥
तंडुलीयकजीवन्तो वार्ताकुः सुनिषण्णकः।
मडूकपर्णीकुलकं शाकवर्गे च शस्यते ॥ ९३ ॥
हरेणुमुद्गौ यूषार्थं मस्तार्थं धात्रीदाडिमम्।
रसार्थञ्च प्रशस्ता वा लावतित्तिरपर्वताः ॥ ९४ ॥

विषघ्नौषधसंयुक्ता रसायुषाश्च संस्कृताः ।
अविदाहीनि पानानि विषार्त्तानां च दापयेत् ॥ ८५ ॥
उष्णवर्ज्यो विधिः कार्य्यो विषार्त्तानां विजानता ।
मुक्त्वा कीटविषं तच्च शीतेनातिप्रवर्द्धते ॥ ८६ ॥
दिवास्वप्नं व्यवायञ्च व्यायाम क्रोधमातपम् ।
सुरातिलकुलित्थांश्च वर्जयेच्च विषातुरः ॥ ८७ ॥

—०—

## अथ जङ्गमविषचिकित्सामाह ।

सर्वैरेवादितः सर्पैः शाखादुष्टस्य देहिनः ।
बध्नीयाद्गाढ़मुपरि दंशन्तु चतरंगुलम् ॥ ८८ ॥
प्लोतचर्मान्तवल्कानां मृदुनान्यतमेन च ।
न गच्छति विषं देहं सरिष्टाभिर्निवारितम् ॥ ८९ ॥
दहेद्दंशमथोत्कृत्य यत्र बन्धो न जायते ।
आचूषणच्छेदाहा सर्वत्रैव तु पूजिता ॥ १०० ॥
प्रतिपूर्य्यमुखं वस्त्रैर्हितमाचूषणं भवेत् ।
सदष्टव्योऽथवा सर्पो लोष्टयापि हि तत्क्षणात् ॥ १०१ ॥
मूले तेण्डुलवारिणा पिबति यः प्रत्यङ्गिरा सम्भवम् ।
निष्पिष्टं शुचिभद्रयोगदिवसे तस्याऽहिभीतिः कुतः ॥
दर्पादेव फणी यदा दशति तं मोहान्वितो निष्पतन् ।
स्थाने तत्र तदैव याति नियतं वक्त्रं यमस्याचिरात् ॥१०२॥
मसूरनिम्बपत्राभ्यां योऽत्तिमेषगते रवौ ।
अब्दमेकं न भीतिः स्याद्विषार्त्तस्य न संशयः ॥ १०३ ॥
क्षेपणः कर्णरूढ़स्य वामनासिकया कृतः ।
लेपं हन्याद्विषं घोरं नृमूत्रसेवितं तथा ॥ १०४ ॥

कुलकमूलनस्येन कालदष्टोऽपि जीवति ॥ १०५ ॥
पिण्डीतगरकं नेत्रे पुष्येणोत्पाट्य योजितम्।
चालयत्यत्र नोचित्रं पुरुषं दष्टमृतं खलु ॥ १०६ ॥
शिरीषपत्रस्वरसे सप्ताहं मरिचं सितम्।
भावितं सर्पदष्टानां नस्यपानाञ्जनैर्हितम् ॥ १०७ ॥
वन्ध्याकर्कोटमूलञ्च छागमूत्रेण भावितम्।
नस्यं काञ्जिकसंपिष्टं विषोपहतचेतसः ॥ १०८ ॥
गृहधूमं हरिद्रे द्वे समूलं तंडुलीयकम्।
अपि वासुकिना दष्टः पिबेद्दधिघृतप्लुतम् ॥ १०९ ॥
श्लेष्मातकीकट्फलमातुलुङ्गश्वेतागिरिह्वा किणिही सिता च।
सतंडुलीयोऽगद एषमुख्यो विषेषु दर्वीकरराजिलानाम् ॥११०॥
*निर्गुण्डीसहितं पानात्सद्यः फणिविषापहम्।*
स्वरसेनैव मूलञ्च भावितं सिन्धुवारिजम् ॥ १११ ॥
सैन्धवं मरिचं तुल्यं निम्बबीजसमं कृतम्।
मधुसर्पिर्युतं हन्ति विषं स्थावरजङ्गमम् ॥ ११२ ॥
सचतुर्मरिचः कर्षः चाङ्गेर्याः सह सर्पिषा।
हन्ति पानप्रलेपाभ्यां चोग्रसर्पविष भयम् ॥ ११३ ॥
पारावतामिषं शुण्ठी पुष्कराह्वं सितं हितम्।
गरलघ्नारुचिश्वास कासहिक्कापहं परम् ॥ ११४ ॥
द्राक्षाश्वगन्धानगमृत्तिका च श्वेता च पिष्टा सदृशैः स्वभागैः।
देयो विभागः सुरसाच्छदस्य कपित्थबिल्वादपि दाडिमाच्च ॥
एषोऽगदक्षौद्रयुतो निहन्ति विशेषतो मण्डलिनां विषाणि॥११५॥

—०—

प्रपौण्डरीकं सुरदारुमुस्ता कालानुसारी कटुरोहिणी च।
स्थौणेयकं ध्यामकगुग्गुलूनिपुन्नागतालीससुवर्चिकाश्च ॥ ११६ ॥'

कुटन्नटैलासितसिन्धुशारशैलेय कुष्टं तगरं प्रियंगु ।
लोधाञ्जन काञ्चनगैरिकञ्च समागन्धं चन्दनसैन्धवञ्च ॥११७॥
सूक्ष्माणि चूर्णानि समानि कृत्वा शृङ्गे निदध्यान्मधुसयुतानि ।
एषोऽगदस्तार्क्ष्य इति प्रसिद्धो विषं निहन्यादपितक्षकस्य ॥११८॥

इति तार्क्ष्योऽगदः ।

त्रिहृदि शाले मधुकं हरिद्रे मञ्जिष्टवर्गौ लवणाय सर्वे ।
कटुत्रिकं चैव विचूर्णितानि शृङ्गे निदध्यान्मधुसंयुतानि ॥११९॥
अय गदो हन्त्युपयुज्यमानः पानाञ्जनाभ्यञ्जनमस्य योगैः ।
धावार्य्यवीर्यो विषवेगहन्ता महागदो नाम महाप्रभावः॥१२०॥

इति महागदः ।

बिल्वपुष्पत्वचौ मांसी फलिनीनागकेसरम् ।
शिरीषं तगरं कुष्टं हरितालं मनःशिला ॥ १२१ ॥
एतानि समभागानि पेषयेत्सलिलेन तु ।
समभ्यज्य ततो गात्रं सर्पदष्टार्त्तिदारणः ॥ १२२ ॥
विषान्वाभक्षवेदुग्रान् गरांश विविधान् हरेत् ।
कन्यासवरणं गच्छेद्युद्धे देवासुरोपमः ॥ १२३ ॥
राजद्वारेषु सर्वेषु धूपेनैवापराजितः ।
बृहस्पतिरिति प्रोक्तो ब्रह्मणा निर्मितः स्वयम् ॥ १२४ ॥
नाग्निर्दहति तद्वेश्म प्रभवन्ति न राक्षसाः ।
न म्रियन्ते तथा बाला दशाङ्गो यत्र तिष्ठति ॥ १२५ ॥

इति दशाङ्गोऽभ्यङ्गो धूपश्च ।

वटशुङ्गं समच्छिष्टं जीवकर्षभकौ सिता ।
काश्मर्य्यमुदकं चैव पानं मण्डलदष्टके ॥ १२६ ॥
कोल्लोकुष्टं नतं व्योषं मधुकातिविषामधु ।

गृहधूमस्य पानेन घ्नन्ति सर्पभवं विषम्॥ १२७॥
मांसिचन्दनसिन्धूत्थ कषायव्यूषणोत्पलैः।
अञ्जनं स्यात्सगोपित्तं विषसुप्तस्य बोधनम्॥ १२८॥
नक्तमालफलं व्योषं बिल्वमूलं निशाद्वयम्।
सौरसं पत्रमाजञ्च मूत्रं बोधनमञ्जनम्॥ १२९॥
बीजकल्कं ससिन्धूत्थं मयूरकशिरीषयोः।
नस्यं यवफलं बीजं सपाठं वा प्रबोधकम्॥ १३०॥
सम्यङ्मधूकसारेण गोमूत्रे भावितेन तु।
दद्याद्विषहरं नस्यं सिध्मघ्नञ्च प्रलेपनम्॥ १३१॥
मयूरपित्तेन च तण्डुलीयकं काकाण्डयुक्तं प्रपिबेदनल्पम्।
विषाणि च स्थावरजङ्गमानि सोपद्रवाण्याप्यचिरेण हन्ति॥१३२॥
शिरीषारिष्टनक्ताह्व त्वक्कोशातकीफलैः।
हन्ति गोमूत्रसपिष्टैः विषं स्थावरजंगमम्॥ १३३॥
वचोपणशिलादारु नक्ताह्व द्विनिशाञ्जनम्।
शिरीषपिप्पलीयुक्तं गरदोषनिसूदनम्॥ १३४॥
तिक्ततुम्बीजबीजानि गोपित्तेन प्रलेपयेत्।
एष सर्वविषध्वंसो ब्रह्मपुत्रादिनाशनः॥ १३५॥
मूलत्वक्पत्रपुष्पाणि बीजञ्चेति शिरोषतः।
गवां मूत्रेण सपिष्टं भेषजं विषवारणम्॥ १३६॥
मञ्जिष्टैलानिशाद्राक्षा मांसीयष्टीहरेणुका।
क्षौद्रं चेति विषघ्नोऽय मगदः काशिकोऽब्रवीत्॥ १३७॥
लवणानि त्रिहृदन्ती विशालात्र्यूषणं निशा।
मञ्जिष्टामधुकं शृङ्गं ह्यगदः सर्वकर्मकृत्॥ १३८॥

—०—

चन्दनञ्च शिलाकुष्ट त्वक्पत्रैलाब्दसर्षपाः।

मांसीपद्मकवल्काऽसृक्‌-सुरभीभवरोचना ॥ १३९ ॥
सृक्काहिंग्वंवुलामज्ज शतपुष्याप्रियंगवः ।
पिष्ट्वा सर्वविषोन्मन्थो नाम्ना चन्द्रोदयो गदः ॥ १४० ॥
इति चन्द्रोदयोऽगदः ।
श्यामिभपाटलीकृष्णा मञ्जिष्ठाकिणहीशिला ।
कोविदारोपणें चक्र निशि दृष्यपराजितम् ॥ १४१ ॥
वृहतीमधुकञ्चैव गोमूत्रेण प्रपेषयेत् ।
एष सूर्योदयो नाम्ना विषरक्षामयो गदः ॥ १४२ ॥
इति सूर्योदयोऽगदः ।
अपामार्गस्य बीजानि शिरीषस्य तथैव च ।
द्वे मेदे काकमाची च गवां मूत्रेण पेषयेत् ॥ १४३ ॥
सर्पिरेतेषु संसिद्धं विषसंशमनं परम् ।
अमृतं नाम विख्यात मपिसञ्जीवयेन्मृतम् ॥ १४४ ॥
इत्यमृतघृतम् ।
नागदन्तीत्रिवृद्दन्ती स्नुक्पयः पलिकैः समैः ।
गवां मूत्राढ़के सिद्धं सर्पिः सर्वविषापहम् ।
सर्पकीटविषार्त्तानां गरार्त्तानाञ्च शस्यते ॥ १४५ ॥
इति नागदन्त्याद्यं घृतम् ।
तंडुलीयकमूलेन गृहधूमेन चैकतः ।
क्षीरेण सघृतं सिद्धं समस्तं विषरोगनुत् ॥ १४६ ॥
इति तंडुलीयघृतम् ।
मधुकं तगरं कुष्टं भद्रदारु हरेणवः ।
पुन्नागमेलयाल्नूकं नागपुष्पोत्पलं सिता ॥ १४७ ॥
विडङ्गं चन्दनं पत्रं प्रियंगु ध्यामकं तथा ।
हरिद्रे द्वे वृहत्यौ च शारिवां शुमतो बला ॥ १४८ ॥

कल्कैरेतैर्घृतं सिद्ध मजेयमिति विश्रुतम्।
विषाणि हन्ति सर्वाणि शीघ्रमेवाजितं क्वचित् ॥ १४९ ॥
इत्यजेयघृतम्।

सरोध्रमभयाकुष्ट मर्कपुष्पीं तथोत्पलम्।
नलवेतसमूलानि गरलं सुरसां तथा ॥ १५० ॥
सकालिन्दीं समञ्जिष्ठा मनन्तां सशतावरीम्।
शृङ्गाटकं समङ्गाञ्च पद्मकेसरमित्यपि ॥ १५१ ॥
कल्कीकृत्वा पचेत्सर्पिः पयो दत्वा चतुर्गुणम्।
सम्यक् पक्वेऽवतीर्णे च शृतशीते विनिक्षिपेत् ॥ १५२ ॥
सर्पिस्तुल्यं भिषग् चौद्रं कृतरक्षं निधापयेत्।
विषाणि हन्ति दुर्गाणि जङ्गमस्थावराणि च ॥ १५३ ॥
कृत्रिमाणि च यावन्ति गरदोषकृतानि च।
स्पर्शादेव विषं हन्ति गरैरुपहतत्वचम् ॥ १५४ ॥
योगोऽयं तमकं कंडूं मांसादञ्च विसंज्ञताम्।
नाशयत्यञ्जनाभ्यङ्ग पानवस्तिषु भोजने ॥ १५५ ॥
सर्पकीटाखुलूताभिर्दष्टानां विषणुत्परम्।
मृत्युपाशहरं नाम घृतमेतत्प्रकीर्तितम् ॥ १५६ ॥
इति मृत्युपाशापहं घृतम्।

---

## अथ दूषीविषचिकित्सामाह।

दूषीविषार्तं सुस्विन्नमूर्ध्वं चाधश्च शोधितम्।
पाययेदगदं मुख्य मिदं दूषीविषापहम् ॥ १५७ ॥
पिप्पलीध्यामकं मांसी लोध्रमेला सुवर्चला।
बालकं परिपेला च तथा कनकगैरिकम् ॥ १५८ ॥

क्षौद्रयुक्तो गदो ह्येष दूषीविषमपोहति।
दूषीविषारिनामायं न कैश्चिदपि बाध्यते॥ १५९॥

इति दूषीविषचिकित्सा।

—०—

अन्यैरुपविषैस्तीव्रैरेकीकृत्वा तु भूरिभिः।
कालान्तरजिघांसायै क्रियते च गरस्तु तत्॥ १६०॥
घ्राणालस्यारुचिश्वासां स्ततः कुर्य्याग्निमार्दवम्।
अविपाकाबलत्वञ्च कुर्य्यादुपचितो गरः॥ १६१॥

—०—

अङ्कोटमूलं निःक्राथ्य सफाणितघृतं लिहेत्।
तैलाक्तः खिन्नसर्वाङ्गो गरदोषविषापहम्॥ १६२॥
शर्कराक्षौद्रसंयुक्तं चूर्णं ताम्य सुवर्णयोः।
लेहः प्रशमयत्युग्रं नानायोगकृतं विषम्॥ १६३॥

—०—

हृषनिम्बपटोलानां क्वाथेनापि पचेद् घृतम्॥
अभया गर्भितं तोय एतदारोग्यदं परम्॥ १६४॥

इति हृषाद्यं घृतम्।

रजनीद्वयमञ्जिष्ठा पतङ्गगजकेशरैः।
शीताम्बुपिष्टैरालेपः सद्यो लूतां विनाशयेत्॥ १६५॥
कटभ्यर्ज्जुनशैरीष शैलुक्षीरीद्रुमत्वचः।
कषायकल्कचूर्णाः स्युः कीटलूताव्रणापहाः॥ १६६॥
चन्दनं पद्मकं कुष्टं नतं चोशीरपाटले।
निर्गुण्डीशारिवाशेलु लूताविषहरोऽगदः॥ १६७॥
चन्दनं पद्मकोशीरं शिरीषं सिन्धुवारिणा।
क्षीरशुक्ला नतं कुष्टं शारियोदीथ्यपाटलाः॥

शैलुं वरी च पिष्टोऽयं लूतायाः विषनाशनः ॥ १६८ ॥
फलिनीद्विनिशाचोद्र सर्पिर्भिः पद्मकाह्वयैः ।
अशेषकीटलूताना मगदः सर्वकामिकः ॥ १६९ ॥
करञ्जार्कपयो वाजि मारकैः सविषानलैः ।
साचोटस्वरसैः सिद्धं तैलं लूताव्रणापहम् ॥ १७० ॥
इति लूताविषचिकित्सा ।

—•—

छर्दनं जालिनीक्वाथैः शुकाख्यां कोटयोरपि ।
विरेचने त्रिवृद्दन्ती त्रिफलाकल्क इष्यते ॥ १७१ ॥
शैरीषस्य च मूलं वा सक्षौद्रं तंडुलांबुना ।
अङ्कोटकस्य वा मूलं बस्तमूत्रेण कल्कितम् ॥
पानालेपनयोरुक्तं सर्वाखुविषनाशनम् ॥ १७२ ॥
विशालांकोटमूलञ्च तिलमूलं सितामधु ।
इतेनाखुविषं हन्ति पीतमाशु च दुस्तरम् ॥ १७३ ॥
कुसुम्भपुष्पगोदन्त स्वर्णक्षीरीकपोतविट् ।
दन्तीत्रिवृत्सैन्धवैला किणिही फाणितं तथा ॥
क्षीरेणाखुविषं हन्ति पीता तिलकमञ्जरी ॥ १७४ ॥
त्रिकटुकाद्यश्च हितो गोमयस्वरसोऽञ्जने ।
कपित्थगोमयरसो सक्षौद्रो लेह इष्यते ॥ १७५ ॥
मार्जारकस्य पित्तेन पीतो मांसरसो स्वना ।
सोपद्रवमपि क्षिप्रं जयेन्मूषकजं विषम् ॥ १७६ ॥
गवाक्षीबिल्वकाकोल तिलमूलाः सशर्कराः ।
मध्वाज्यसयुताः पीताः मूषिकाविषनाशनाः ॥ १७७ ॥
बिल्वकाकोलयोर्मूलं गिरिकर्ण्यास्तिलस्य च ।
एतेषां मधुसर्पिर्भ्यां पानमाखुविषापहम् ॥ १७८ ॥

तंडुलीयकमूलेन सिद्धं सर्पिः पिबेन्नरः ।
मूषिकाणां विषं तेन नाशमायाति सत्वरम् ॥ १७८ ॥

इत्याखुविषचिकित्सा ।

दंशस्त्वलर्कदष्टस्य दुग्धयुक्तेन सर्पिषा ।
मसिस्त्वगादगदैस्तैस्तैः पुराणञ्च घृतं पिबेत् ॥ १८० ॥
मूलस्य शरपुङ्खायाः कर्षं धत्तूरकान्वितम् ।
सतंडुलोदकैः पिष्ट्वा छायोन्मत्त भवैर्दलैः ॥
पञ्चालर्कविषेणार्त्तः खादेत्तद्विषनाशनम् ॥ १८१ ॥
पिबेद्धत्तूरकशिफां क्षीरेण परिपेषिताम् ।
अङ्कोलवंशजां वापि श्वविषघ्नीं प्रयत्नतः ॥ १८२ ॥
काकोदुम्बरमूलन्तु धत्तूरफलकान्वितम् ।
पिबेत्तंडुलतोयेन सारमेयविषापहम् ॥ १८३ ॥
अङ्कोटोत्तरमूलोत्थं कषायस्य पलद्वयम् ।
सर्पिषश्च पलं पीतं मलर्कविषनाशनम् ॥ १८४ ॥
रसोनोपणवैदेही वचागोपित्तकल्किताः ।
पाननस्याञ्जनालेपैः श्वदंष्टाविषहाः पराः ॥ १८५ ॥
जलवेतसहृद्यस्य मूलं कुष्टं पचेज्जले ।
सक्काथः शीतलः पेयः परश्च विषनाशनः ॥ १८६ ॥

इत्यलर्कविषम् ।

सद्यो वृश्चिकजं दंशं चुक्रतैलेन सेचयेत् ।
विदारिगन्धासिद्धेन कवोष्णेनेतरेण वा ॥ १८७ ॥
लवणोत्तमयुक्तेन सर्पिषा वा पुनः पुनः ।
सिञ्चेत्कोष्णारनालेन सक्षीरलवणेन वा ॥ १८८ ॥
शिखिकुक्कुटपर्णाणि सैन्धवं तिलसर्पिषा ।
धूपो हन्ति प्रयुक्तस्तु कीटवृश्चिकजं विषम् ॥ १८९ ॥

घृतेन सैन्धवं पीत्वा वृश्चिकस्य विषं जयेत् ॥ १८० ॥
तालनिम्बदलं कैशाजीर्णाख्य लवणं घृतम्।
धूपो वृश्चिकविद्धस्य शिखिपत्रं घृतेन वा ॥ १८१ ॥
अर्कक्षीरेण संपिष्टं लेपाद्बीजं पलाशजम्।
वृश्चिकार्त्तिं हरेत् कृष्णा सशिरीषफला तथा ॥ १८२ ॥
मनोह्वासैन्धवं हिंगु जातीपत्रं सनागरम्।
गोसकृद्रससंपिष्टं गुटिका वृश्चिकार्त्तिनुत् ॥ १८३ ॥
जीरकस्य कृत कल्को घृतसैन्धवसंयुतः।
सुखोष्णो वृश्चिकार्त्तानां प्रलेपो मधुना सह ॥ १८४ ॥
गन्धमाघ्राय स्वदितसूर्य्यावर्त्तदलस्य च।
वृश्चिकैर्व्यथितो जन्तुः चणाद्भवति निर्विषः ॥ १८५ ॥
कामसर्दकपत्रञ्च मूलञ्च कुशकाशयोः।
चर्वयित्वा च फुत्कारः कर्णे वृश्चिकजं हरेत् ॥ १८६ ॥
पारावतशकृत्पथ्या तगरं विश्वभेषजम्।
बीजपूररसोपेतः परमो वृश्चिकागदः ॥ १८७ ॥

इति वृश्चिकविषम्।

सोमवल्क्योऽश्वकर्णश्च गोजिह्वाहंसपादिका।
रजन्यौ गैरिको लेपो नखदन्तविषापहः ॥ १८८ ॥
शमीनिम्बजटापत्र वल्कलैः क्वथितैर्जलैः।
नखदन्तक्षतं पुंसां नाशाय परिषेचयेत् ॥ १८९ ॥
मञ्जिष्टापद्मकोशीरै धान्यकैः परिपेषितैः।
सघृतैर्लेपनं दद्या न्नखदन्तविषापहम् ॥ २०० ॥
द्विनिशागैरिकं लेपो नखदन्तविषापहः।
गोजिह्वामधुना लेपो नखदन्तविषप्रणुत् ॥ २०१ ॥

इति नखदन्तज विषम्।

लेपः प्रदीप्ततैलेन खर्जूरविषनाशनः ।
हरिद्राद्वयलेपो वा सगैरिकामनःशिलः ॥ २०२ ॥
कुङ्कुमं तगरं शिग्रु पद्मकं रजनीद्वयम् ।
अगदो जलपिष्टोयं शतपद्विषनाशनः ॥ २०३ ॥

—o—

कृष्णवेत्रस्य निःक्वाथः कल्को वा घृतमिश्रितः ।
शृङ्गीमत्स्यविषं हन्ति धूमो वा बर्हिपत्त्रजः ॥ २०४ ॥

—o—

कीटदष्टक्रियाः सर्वाः समानाः स्युर्जलौकसाम् ॥२०५॥
शिरीषकटभीपार्थ शेलुचोरिद्रुमत्वचः ।
विषं जलौकसां घ्नन्ति प्रयुक्ताः पानलेपयोः ॥ २०६ ॥

इति जलौकोविषम् ।

कीटघ्नन्तुलसीमूलं पीतं यष्टी सुकल्कितम् ।
मेघनादहृद्‌मूलं तथा गव्येन सर्पिषा ॥ २०७ ॥
क्षीरिद्रुमत्वचालेपः कीटदष्टविषापहः ॥ २०८ ॥
हिंगुकुष्टनतव्योषपाठाजन्तुघ्नसैन्धवैः ।
सक्षारातिविषैस्तुल्यैर्लेपः कीटविषप्रणुत् ॥ २०९ ॥
लाङ्गलीनिर्गुण्डीयालावू जालिनीमूलबीजकैः ।
लेपो धान्याम्बुना पिष्टः पिण्डिका कीटनाशनः ॥ २१० ॥
वचाहिंगुविडङ्गानि सैन्धवं गजपिप्पली ।
पाठाप्रतिविषाव्योषं काश्यपेन विनिर्मितम् ॥
दशाङ्गमगदं पीत्वा सर्वकीटविषं जयेत् ॥ २११ ॥

इति कीटविषम् ।

पिप्पलिकाभिर्दष्टानां मक्षिकामशकैस्तथा ।
गवां मूत्रयुतो लेपः कृष्णवल्मीकमृत्कृतः ॥ २१२ ॥

गुग्गुलुधूपं दत्वा कोमलरविपत्रपिण्डिका सघृता।
बद्धा सर्वेऽतिलोहितकाचण्डादंशविक्षतिहरी ॥ २१३ ॥
सर्जरसेन सेको संदंशेनापि कण्टकोद्धरणम्।
वरटीदंष्ट्रविषस्य प्रशमनमेतद्द्वयं दृष्टम् ॥ २१४ ॥
मरिचं नागरोपेतं सिन्धुसौवर्चलान्वितम्।
फणिज्झकरसंघृष्टन्यालेपनाद्वरटीविषम् ॥ २१५ ॥
शतपुष्पासमायुक्तं सैन्धवं परिपेषितम्।
सघृतं लेपनं दद्यान्मक्षिकाविषनाशनम् ॥ २१६ ॥
केशरं तगरं शुण्ठी मरिचञ्च प्रलेपनात्।
मक्षिकादंशजा पीड़ा नाशं याति ध्रुवं नृणाम् ॥ २१७ ॥

इति मक्षिकाविषम्।

स्नुग्क्षीरपरिपिष्टेन बीजेन परिलेपनम्।
शिरीषस्य व्रजत्यस्तं विषं दर्दुरजं क्षणात् ॥
दुर्वारापि व्यथा क्षिप्रं मत्स्यदंशात्तु तत्क्षणात् ॥ २१८ ॥
अङ्कोटपत्रधूपेन धूपिता रुक्प्रशाम्यति।
कटुतैलसक्तुकेशानां धूपाद्दंशस्य च व्यथा ॥ २१९ ॥
यवतिक्ततैललेपा न्मीनजस्य विनश्यति ॥ २२० ॥

इति मत्स्यविषम्।

वृकव्याघ्रतरक्षर्क्ष शृगालहयशृङ्गकैः।
दष्टानां तत्क्षणात्तैल मत्क्षणञ्च चिकित्सितम् ॥ २२१ ॥
घण्टाबीजस्य पत्रं वा मूलं पिष्टं प्रलेपनात्।
निहन्ति शूकजं घोरं विषं कूष्माण्डपत्रकम् ॥ २२२ ॥
सेक्षुसर्जरसोपेतं सर्षपापत्रकैः सह।
सुवर्णभास्करतरोः कुसुमैरर्जुनस्य च ॥
धूपो वा धूपितो हन्ति विषं स्थावरजङ्गमम् ॥ २२३ ॥

न तत्र कीटा न विषा दर्दुरा न सरीसृपाः ।
न क्षत्यकर्म्म तत्र स्या द्दूपोऽयं यत्र दह्यते ॥ २२४ ॥
बिल्वाढकीयवक्षार पाटलावह्निकोत्पलम् ।
श्रीपर्णीशाल्मलीयुक्ता निःक्वाथ्य प्रोक्षणं परम् ॥
सम्प्रोक्षयितस्तेन सद्यो भवति निर्विषः ॥ २२५ ॥
छत्रीसर्जरसश्चैव भवेद्रात्री तथा दिवा ।
तच्छाया शब्दवित्रस्ताः प्रणश्यन्ति हि पन्नगाः ॥ २२६ ॥

—०—

## असाध्यलक्षणानाह ।

सोत्कम्पं पुलकावृतं प्रतिमुहुर्वक्त्रं समालोकते ।
दन्तेनाधरपल्लवं दशति चेच्छीतान्वितः कूजति ॥
यस्यायं जडतामुपैति नितरामन्तश्च सोत्कण्ठते ।
यद्वस्यास्थि सितामलांवरवती रौद्रीश्मशानस्थली ॥२२७॥
नेत्रे शुक्लतरे च यस्य यदि वा स्वल्पं व्रजेद् शंकः ।
सन्ध्यायाञ्च सुरेन्द्रगोपसदृशे रात्रौ च नीलप्रभे ॥
दृश्ये रक्तजलाविलेऽतिसुभगे भर्त्ता न किञ्चिद्दिशो ।
भावं मालभते तदेव नियतं पिचालयं गच्छति ॥ २२८ ॥
नासावर्त्मं विहाय यस्य पवनो वर्त्मेण याति द्रुतम् ।
नेत्रे याति विकासिते वहति यो ग्रीवाञ्च वक्रमनन्तम् ॥
चन्द्रं पश्यति भानुबिम्बसदृशं सूर्यं शशाङ्काकृतिम् ।
दष्टो याति स एव गेहमचिरात् कालाभिधानस्य वै ॥ २२९ ॥
विरुद्धाध्वगनक्रोध क्षुद्व्यायामसमैथुनम् ।
वर्जयेद्विषजुष्टोऽपि दिवास्वप्नं विषेपरः ॥ २३० ॥

**इति श्रीवङ्गसेने विषनिदानचिकित्साधिकारः समाप्तः ॥ ७१ ॥**

## अथ जलदोषादियोगाधिकारमाह।

भोजनादौ तु संभुङ्क्ते शशिठराज्यभयोत्थितम्।
कल्कन्तु सहते नित्यं नानादेशोद्भवं जलम्॥ १॥
महार्द्रकयवक्षारौ पीत्वा चैवोष्णवारिणा।
नानादेशोद्भवञ्चैव वारिदोषमपोहति॥ २॥
नागरंगफलचोचमातपे शोषितं तदनुचूर्णितमेक।
कर्षमात्रमुपयुज्य गुडेन वारिकर्म्म कुरुते न कदापि॥ ३॥
यो लेढिशयनसमये मधुमिश्रं बीजपूरदलचूर्णम्।
स च पीड़ाकरवातप्रसरनिरोधात् सुखं स्वपिति॥ ४॥
दत्वैव दुग्धभक्तं विप्रायोत्पाट्य सितबलामूलम्।
पुष्ये कन्यापिष्टं दत्तमनिच्छाहरं भक्ष्ये॥ ५॥
भूयः स्वार्त्तवशोणित भावितगोरोचनरचिततिलकानि।
नारी यं यं पश्यति पुरुषं तं तं वशीकुरुते॥ ६॥
सुरदारुशर्वरीद्वयकमलोद्भवकेशरैः कृतो लेपो।
दुर्जययोषिद्विहितो रुचिकर इति गीयते बहुभिः॥ ७॥
जबूधातकिपर्णैस्तद्भवकल्कैश्च धूपितो योनिः।
त्यजति समस्त विकारं जन्मान्तरसञ्चितश्चापि॥ ८॥
नालसमेतं कमलं पिष्ट्वा क्षीरेण वर्तिता गुटिका।
योषिद्योनौ विहिता तदैव कन्याकरं चित्रम्॥ ८॥
तालकचन्दनसहितं कुटजकदम्बोद्भवं फलं पिबति।
आसवमिश्रं कान्तार या सा वन्ध्या भवेन्नियतम्॥ १०॥
एकं माचिकमिश्रं लेपात्कोशातकी भव चूर्णम्।
योन्यांवरांगपाते कुरुते रेतः स्रुतिः तस्याः॥ ११॥
पथ्योपभोगविधिना परितः संवेष्ट्य वाससा विहताम्।
विहिता जलौका योनौ पातस्तनयोः कदापि न स्यात्॥१२॥

चूर्णं हयगन्धाया सितया सहितञ्च सर्पिषा लीढम् ।
विदधाति नष्टनिद्रे निद्रामाश्वेव सिद्धमिदम् ॥ १३ ॥
किमत्र चित्रं यदि वज्रपर्णीविचाश्वगन्धा जलशूकचूर्णम् ।
अन्तर्विदग्धं नवनीतमिश्रं करोति मेढ्रं गजमेढ्रतुल्यम् ॥ १४ ॥
मुष्कशिराजं मूलं दृढमंगुल्या निपीड्य रतिकाले ।
चिन्तान्तरनिहितमना स्तम्भोरेत: च्युतं जयति ॥ १५ ॥
शुष्केन्दीवरकुसुमं तंडुलसहितं सदा शितं सायम् ।
तनुते सुगन्धिवदनं विकसितनीलोत्पलाभोदम् ॥ १६ ॥
कोमलवरुणजपत्रं कारस्रंदित सदा स्तने निहितम् ।
तन्नतपुसां हृदि हरिद्रुतसिद्धमिद दृष्टम् ॥ १७ ॥
कच्छपमस्तकचरणं तिलजे सिद्धं विनाशयत्यचिरात् ।
धातुचीणं षण्डं कुरुते बलं रतौ तथोग्रम् ॥ १८ ॥
शमयति गोक्षुरचूर्णं छागक्षीरेण साधितं समधु ।
भुक्तं क्षपयति पाण्डुरं यज्जनितं प्राक् प्रयोगेण ॥ १९ ॥
निर्गुण्डिकनकवाशा श्रीफलामलकासनोत्पपवाणि ।
गन्धर्वहस्तमूलं दूर्वा कुसुमं तथा रजनी ॥ २० ॥
सिद्धार्थैडगजत्व गिति समभागं प्रक्षिप्य नवनीते ।
उद्वर्त्तनं विधेयं सततं वलिनाशनं दृष्टम् ॥ २१ ॥

इति वङ्गसेने जलदोषवीर्य्यस्तम्भादियोगाधिकार:
समाप्त: ॥ ७२ ॥

—०—

## अथ रसायनाधिकारमाह ।

माषस्याढकमादाय जलद्रोणे विपाचयेत् ।
अर्धावशेषं तस्पतं दत्वा चेक्षुरसं तत: ॥ १ ॥

आर्द्रकस्य रसञ्चैव प्रस्थत्रयसमन्वितम्।
संयोज्यमेकतः कृत्वा स्थापयेद्भाजने दृढे ॥ २ ॥
त्रिरात्रे पञ्चरात्रे वा माषचूर्णं विनिक्षिपेत्।
मासेन तज्जातरसं दशरात्रं स्थितं तथा ॥ ३ ॥
शुक्तञ्च तत्प्रयोज्यं स्यात्तैले बस्तौ घृतेऽपि वा।
एतच्छुक्तं प्रशंसन्ति मन्दाग्नेर्दीपनं परम् ॥ ४ ॥

इति शुक्तम्।

जम्बीरस्य फलरसं पिप्पलीमधुसंयुतम्।
मधुभाण्डे विनिक्षिप्य रसार्द्धं तत्पिधापयेत् ॥
मासेन तज्जातरसं मधुशुक्तमुदाहृतम् ॥ ५ ॥

इति मधुशुक्तम्।

गुडमधुकाञ्जिकतक्रं यथोत्तरं द्विगुणभागसहृदम्।
न्यस्तन्तु धान्यराशौ त्रिदिवसमिति भवेच्छुक्तम् ॥ ६ ॥

इति गुडतक्रम्।

पिप्पलीक्षीरसंसिद्धं सर्वरोगहरं घृतम्।
कालीयकहरिद्राभ्यां कामलामेहनुत्परम् ॥ ७ ॥
बृहतीरसकल्काभ्यां दुष्टकासक्षयापहम्।
गुडूचीरसकल्काभ्यां वातरक्तविकारनुत् ॥ ८ ॥
खदिराष्टकसंसिद्धं श्वित्रकुष्टविसर्पनुत्।
मृद्वीकारसकल्काभ्यां रक्तपित्तज्वरान्तकृत् ॥ ९ ॥
पिप्पलादिघृतं षट्कं वैदेहाधिपकीर्त्तितम् ॥ १० ॥

—o—

आनूपजो रसो मज्जा वसातैलं नवं घृतम्।
रसक्षीरं पचेत्तस्य गवाश्च मधुरं गणम् ॥ ११ ॥

अश्वगन्धामपामार्गं तथा लाचारसं समम् ।
अथ सिद्धञ्च पूतञ्च चानुगुप्तं निधापयेत् ॥ १२ ॥
तेनाभ्यङ्ग्य सदा कर्णपालिञ्च सुमर्दयेत् ।
अनेन पाल्यो वर्द्धन्ते नीरुजा निरुपद्रवाः ॥
मृदुपुष्पसमाः स्निग्धा जायन्ते भूषणक्षमाः ॥ १३ ॥
इति पालिवर्द्धनचतुःस्नेहः ।

—०—

## अथ शिवगुटिका ।

शिलाजतुषोडशपलं त्रिस्त्रिवारं विभावयेत् ।
वलाया दशमूलस्य गुडूच्याः कर्कटस्य च ॥ १४ ॥
वराया मधुयष्ट्याश्च रसमध्ये च वारिणा ।
क्षीरे सकृत् क्रमेणैव सप्त कृत्वा ततो द्रुतम् ॥ १५ ॥
काकोलियुग्मघनपुष्करवङ्गिरास्ना
मेदायुगर्द्धिचविकागजपिप्पलीनाम् ।
पाठाद्विजीरकनिकुम्भविदारियुग्म
वीरावरीमधुपलांशुमतीद्वयानाम् ॥ १६ ॥
पलिकानामपां द्रोणे सिद्धानां पादशेषिते ।
क्वाथे भावितमित्थं वा गिरिजं द्विपलञ्च तत् ॥ १७ ॥
शुभ्रगाल्कवांटशृङ्गीधात्री व्योषतालीसकुडवेन ।
चूर्णपलेन विदार्यास्त्वक्क्षीर्या वा कर्षयुग्मेन ॥ १८ ॥
द्विपलेन चतुर्जाता त्तैलघृतक्षौद्रशर्कराभिश्च ।
तद्द्विपलाद्विगणाभिः कुर्य्याद् गुटिका ततोऽर्चसमाः ॥१९॥
ताः सिद्धा नवकुम्भे शुष्के जाति पुष्पाधिवासिते स्थाप्या ।
तासामेकां खादेत्प्रतिदिनमनुपानं पेयञ्च ॥ २० ॥

चीरवमदाडिमाम्भः शीतजलमधुरामवान्यतमम्।
जीर्णाद्वे लघुभोज्यं यूषः पयांसि पिशितनिर्यूहैः॥ २१॥
सप्ताहमात्रमेवं सामान्यमतः क्रमं भवेत्परितः।
भुक्तस्यान्ते प्राग्वा गुटिका न विरुध्यते चैषा॥ २२॥
निष्पापाभूरिफला परिहार सुखोपयोजिता जयति।
प्रबलवातशोणित मूरुस्तम्भं ज्वरं दीर्घम्॥ २३॥
भगमूत्रशुक्रदोषान् प्लीहार्शः पांडुहृद्वक्त्रदोषान्।
वध्मं वमिगुल्मपीनस हिक्काकासारुचिश्वासान्॥ २४॥
विद्रधिमुदरं कृच्छ्रं श्वित्रं षंढ चय मदं मूर्च्छाम्।
उन्मादमपस्मारं मुखरोगशिरोगदस्तम्भान्॥ २५॥
आनाहमतीसारं हलीमककामलाग्रहणीरोगान्।
ग्रन्थ्यर्बुदांश्च पिण्डिकाभगन्दरं गण्डमालाश्च॥ २६॥
अतिकार्श्यमतिस्थौल्यं स्वेदमतिश्लीपदं गुदे कीलान्।
दंष्ट्राविषं समूल ङ्गरप्रयोगान् सुघोरांश्च॥ २७॥
मन्त्रौषधिप्रयोगान् विप्रमुक्तान् भौतिकांस्तथा भावान्।
पाप्माऽलक्ष्मी चेयं गुटिका शिवा नाम्ना प्रथिता॥ २८॥
हृष्यावस्थाधन्याकान्ति यशः स्त्रीवर्द्धनीमेध्या।
कुरुते स्त्रीवल्लभतां जय विवादे सुखस्यास्य॥ २९॥
वलीपलितरोगरहितो न भवति गात्रं सुदृढमति चैव।
वर्षद्वयप्रयोगाद्वर्षशतचतुष्टयं जीवेत्॥ ३०॥

इति वृहच्छिवागुटिका।

—०—

## अथ गुग्गुलुरसायनमाह।

त्रिफलानागनखदिरामृतवर्षाभूभृङ्गगोक्षुरक्काथे।
सार्द्धाढकं तु गुग्गुलु पलानि त्रिंशच्च लेहवद्विपचेत्॥ ३१॥

मधुघृतसिताविमिश्रं लिहेन्नरः कान्तिबलबुद्धियुक्तः ।
तथा गदैर्विमुक्तो जीवति संवत्सरांस्त्रिशतान् ॥ ३२ ॥

---

## अथ गन्धककल्पमाह ।

चूर्णितत्यपलानि पञ्चनितरां गन्धाश्मनो यत्नत-
स्तच्चूर्णं त्रिगुणे च मार्कवरसे छायाविशुष्कीकृतम् ।
पथ्याचूर्णमयो तथा मधुघृत प्रत्येकमेकं पलम्
वृद्धो यौवनमेति ग्रासयुगलं खादेन्नरः प्रत्यहम् ॥ ३३ ॥

---

## अथ गन्धकरसायणम् ।

गन्धकस्यार्द्धकर्षन्तु मरिचं शाणमात्रकम् ।
असिताम्बरमष्टांशं शिलायां चूर्णितं शुभम् ॥ ३४ ॥
एतच्चूर्णत्रय तैले तिलजे दिवसत्रयम् ।
वर्त्तित्रयं समारभ्य घृते वा स्थापितं तथा ॥ ३५ ॥
तदुद्धृत्यचौरपात्रे दीप प्रज्वाल्य बुद्धिमान् ।
पातयेद्वर्त्तिमत्र च तद्गवा रसरक्तिका ॥ ३६ ॥
पर्णत्रयं समारोप्य तद्द्वाहुञ्जकद्वयम् ।
सम्मूर्च्छ्य भक्षयेत्प्रातः क्षेत्रपालबलिं ततः ॥ ३७ ॥
दत्वा तु विधिना कृत्वा कामचारी भवेत्सदा ।
न चात्र परिहारोस्ति विहाराय नृणां सदा ॥ ३८ ॥
बलीपलितनाशाय वह्निबलविवर्द्धनम् ।
हितमेतत्सदा प्रोक्तं रसायनगुणैषिणाम् ॥ ३९ ॥

## अथ गन्धकद्रुतिमाह।

पलमिह गन्धकचूर्णं राजिकातः कर्षकलितमादाय।
सिततरवसननिबद्धं हविषाप्लुतशोषितं वह्नौ ॥ ४० ॥
तद्द्रवमाज्ये मग्नं त्रिकटुकचूर्णकर्षसंयुक्तम्।
मिलितैकशाणमात्रं प्रातः खाद्यं नियतपथ्यम् ॥ ४१ ॥
वर्णबलयुतमेतज्जनयति कुरुते देहसुखम्।
सततमभ्यासवशादति जनयति सुधाधामलावण्यम् ॥ ४२ ॥

—०—

## अथ गन्धकयोगमाह।

यो गन्धाश्म सुचूर्णितं पिबति ना तैलेन कर्षोन्मित-
मभ्यङ्गोष्णजलावसेचनरतः पेयामृतं प्रत्यहम्।
सप्ताहान्नियतं निहन्ति सकलां पामादि सर्वां रुजम्
नित्याभ्यासवशाद्विनष्ट सकलक्लेशोपतापः पुमान् ॥४३॥

—०—

## अथ गन्धककल्पमाह।

यो वात्युग्रमतिः सुचूर्णितमिदं गन्धाश्म कृष्णासमम्।
पथ्या तुल्यमथापि पूजितगुरुः भूतेशपूजारतः ॥
आहारादिषु यन्त्रणाविरहितः स्यात् पुष्टिशौर्य्यान्वितः।
प्रोत्फुल्लाम्बुजनेत्र एव मजरस्वामीकराभाश्रयः ॥ ४४ ॥
भृङ्गराजरसेनैव लोहपात्रेऽग्निना पचेत्।
द्रावयित्वा विनिक्षिप्य मायूर इव जायते ॥ ४५ ॥
जयाटलरसेनापि वर्द्धमानरसेन च।
शृङ्गवररसेनापि काकमाच्यारसेन ॥ ४६ ॥
रसगन्धद्वयं लक्ष्यं लोहपात्रे प्रियोत्तमे।

एकीकृतं च तावच्च खल्वयेदपि यत्नतः ॥ ४७ ॥
यावच्च नीलवर्णं स्यात् कोलाङ्गारैश्च पाचयेत् ।
गोमयस्यालवालेन स्थापिते कदलीदले ॥ ४८ ॥
ढालयेत्पाकविज्ञाच्च स्ततस्तु प्राशयेन्नरः ।
एवं सति सुखार्थाय पथ्यभुग्भिः प्रसेव्यते ॥ ४९ ॥
गन्धकपर्पटी चैषा सिद्धा कालस्य सिद्धिदा ।
दुर्नामग्रहणीमाम शूलञ्च ग्रहणीगदम् ॥ ५० ॥
कामलां पांडुगञ्च प्लीहगुल्मजलोदरम् ।
भस्मकं चामवातञ्च कुष्टानि च ध्रुवं जयेत् ॥ ५१ ॥
एवमादीनि जित्वैव वपुषा निर्मलः सुखी ।
जीवेद्वर्षशतं पूर्णं बलीपलितवर्जितः ॥
सर्वव्याधिचिकित्सायां कल्कोऽयमिति दुर्लभः ॥ ५२ ॥

इति गन्धकरसपर्पटी ।

तनुपत्रीकृतं ताम्रं नैपालं गन्धकं समम् ।
दत्वा चोर्ध्वमधो मध्ये स्थालिकामध्यसंस्थितम् ॥ ५३ ॥
कृत्वा खल्पपिधानञ्च स्थालीमध्ये निधाय च ।
शर्कराभक्तलेपेन लिप्ताः सन्धीस्तदूर्ध्वतः ॥ ५४ ॥
वालुका पूरिता स्थाली विहितायां पुनस्तथा ।
सुलिप्तायाञ्च यामैकमधोज्वालां प्रदापयेत् ॥ ५५ ॥
तत आकृष्टताम्रस्य मृतस्य त्विह योजना ॥ ५६ ॥
अथ कर्षं गन्धकस्य वह्निस्थं लौहपात्रगम् ।
शिला वर्त्तेन समर्द्य द्रुतं दृष्टं पुनः पुनः ॥ ५७ ॥
रसोऽम्लमथितः शुद्ध स्तावन्मानः प्रदीयते ।
ततस्तथैव समर्द्य पुनराज्यं प्रदापयेत् ॥ ५८ ॥
अष्टविन्दुकमानञ्च मर्दयेन्मूर्च्छितं तथा ।

सवं स्यात्तत ग्राकृष्य शिलावट्टादिकं दृढ़म् ॥ ५८ ॥
संघृत्यालंबुपरस प्रसृतेन विलोडितम् ।
पुनस्तथैव बह्निस्थे लोहपात्रे विमर्दयेत् ॥ ६० ॥
यावद्रसक्षयः पश्चा दाकृष्टं संप्रयोजयेत् ।
ग्रलंबुषारसेनैव गोलकं संप्रकल्पयेत् ॥ ६१ ॥
तं पिण्डं वस्त्रनिष्पीड्य पिण्डे त्रिकटुजे पुनः ।
वसनान्तरिते दत्वा पोटलीं कारयेत् सुधीः ॥ ६२ ॥
ततस्तां पोटलीमाज्ये मग्नां कृत्वा विधारिताम् ।
सूत्रेण दण्डसंलग्नां पाचयेत् कुशलो भिषक् ॥ ६३ ॥
यदा निष्फेनता चाज्ये गुटिका च दृढ़ा भवेत् ।
तदा पक्वं तमाकृष्य पञ्चगुञ्जातुलाधृतम् ॥ ६४ ॥
त्रिकटुत्रिफलाचूर्णं तुल्यं प्रातः प्रयोजयेत् ।
तक्रं स्यादनुपाने तु ग्रम्लपित्तोच्छ्ये पुनः ॥ ६५ ॥
त्रिफलैव समा देया कोष्णं वारि पिबेदनु ।
सप्तमे दिवसे रक्ती हृद्धिस्तावत्तु माषकम् ॥ ६६ ॥
यावत्प्रयोगस्तथैव ह्रासकर्षः पुनर्भवेत् ।
योगोऽयं ग्रहणीयक्ष्म पक्तिशूलाम्लपित्तहा ॥ ६७ ॥
रसायनं समुद्दिष्टं गुदकीलादिनाशनम् ।
न चात्र परिहारः स्याद्विहाराहारकर्मसु ॥
ताम्ररसायनमिदं सर्वव्याधिहरं परम् ॥ ६८ ॥

—०—

घृतमधुशर्करया हितं लेह्यवमर्दनीयम् ॥

इति ताम्ररसायनम् ।

कण्टकवेधनयोग्यं ताम्रस्य पत्रं कृतं समादाय ।
कर्षाधिकपलमात्रं भस्माग्नौ निर्दहेद्भिषक्कुशलः ॥ ६९ ॥

एवं पुनरपि वारद्वितीयं विमर्द्यमतिगाढ़म् ।
प्रत्येकं मिलितेष्वपि तथैव वारत्रयं दद्यात् ॥ ७० ॥
इन्द्रस्वरसभावित गन्धकलिप्तन्तु ताम्रकं कृत्वा ।
खर्परसंपुटमध्ये विनिधायमृदातमुपलिम्पेत् ॥ ७१ ॥
हस्तप्रमाणवदने गर्त्ते चतुर्हस्तपरिमाणे ।
दत्वेन्धनंकरीष न्तुषमध्ये दहनमादाय॥ ७२ ॥
तदुपरि दत्वा ताम्रसंपुटं निहितं पुनश्च करीषाभिः ।
संछाद्य तत्र वह्निं प्रज्वालयेद्भिषग्विशङ्कः ॥ ७३ ॥
तावत् पुटं प्रदेयं यावत्ताम्रञ्च मृत्युमायाति ।
मृतमधिगम्य च भाण्डे क्वचिदपि तत्स्थापयेत् पुटितम् ॥७४॥
तदनु तावत्प्रमाणपारद मादाय खल्वयेन्निपुणः ।
खल्वशिलायां मध्ये गृहधूमनिम्बेष्टका चूर्णैः ॥ ७५ ॥
पश्चाद्वारिविधानं पुनश्च त्रिकटुना लक्षयेन्निपुणः ।
खल्लितसूतस्यैवं पातन यन्त्रेण चोद्धारः ॥ ७६ ॥
समकृतगन्धकसहितं पुनरपि कृत्वा खल्लयेत्त्रिदिनम् ।
एवं तन्मृतसूतकमृतमात्रकमिश्रितं कुर्य्यात् ॥ ७७ ॥
दुग्धपलाष्टकमाज्य तत्समञ्च नारिकेलजलम् ।
द्विपलं कलितत्रिफला क्वाथञ्च चतुर्गुणं दद्यात् ॥ ७८ ॥
सुदृढे ताम्रकटाहे मार्त्ते वा स्थापयेद्विविधविधिज्ञः ।
दर्व्या च ताम्रमय्याऽऽयस्या चाल्य पुनः पचेद्वैद्यः ॥ ७९ ॥
ज्ञात्वा पाकं भूयो झटिति कडाहमवतारयेन्निपुणः ।
तदनुज तस्मिन्नष्टलक्षणांश्च विश्राम्य क्रियतेऽपि ॥ ८० ॥
त्रिकटुत्रिफलालोहित चित्रकविडङ्गकभद्रमुस्तानाम् ।
जीरकयोः प्रत्येकं कर्षकलितचूर्णनिक्षेपः ॥ ८१ ॥
पुनरैलाकङ्कोललवङ्ग जातिफलजातिकोषाणाम् ।

चूर्णं गुड़त्वचोऽपि मापाष्ट परिमितं दद्यात् ॥ ८२ ॥
ततः सुशीतं ताम्रं मापाष्टकमति विकीर्य्य घनसारम्।
ताम्रमयादिनि भाण्डे स्निग्धे मार्त्तवास्थाप्यम् ॥ ८३ ॥
मनसि च विधाय सूर्य्यपूजां कृत्वा शुभे दिने चर्चे।
आदायमापमेकं दधिमधुना सह भक्षयेत्सुचिरम् ॥ ८४ ॥
तदनु च कण्ठप्रायः क्षीरं कार्य्यमनुपानमधिकाल्पम्।
नक्तमनल्पं पुनरपि तांबूलं भक्षयेत्सरुजः ॥ ८५ ॥
रक्तोदयमथ त्रितयं पञ्चकं वृद्धे मापकं यावत्।
स्थितमतश्चोपरिष्टात्प्रतिलोमं ह्रासयेत्तदनु ॥ ८६ ॥
खादितमेतन्नियतं यस्य न ताम्रं प्रवर्त्तते प्रायः ॥
तत्रापि सयवचार त्रिफलाक्काथोऽत्र पानीयः ॥ ८७ ॥
प्रारब्धेऽस्मिंस्ताम्रे कतिचिद्दिवसान्नभक्षयेन्मत्स्यान्।
क्रोधञ्च दिवानिद्रां वेगनिरोधांस्त्यजेद्वैरम् ॥ ८८ ॥
शाकं चाम्लं वर्ज्यं दधि बहिरम्लं भक्षयेदेव।
जह्यात्तिक्तकषायं जह्यात्तत्कालिकीं पुष्टिम् ॥ ८९ ॥
हृद्यं मधुरं शीतलमथ शाल्यन्नं मधुघृतमश्नीयात्।
मंद्गुररोहितशकुलशशक्रगैणादिकं मांसम् ॥ ९० ॥
खादन्ने तद्रोपजमजीर्णं च न भवति न जानाति।
जयति च कफमतिगाढ़ं कासं श्वासं च निवारयति ॥ ९१ ॥
विरचितमेतत्ताम्रं धर्म्माध्यक्षेण धर्म्मपालेन।
बन्ध्यावटो यः पिण्डित दृढानिबन्धचर्य्याभिः ॥ ९२ ॥

इति ताम्ररसायनम्।

जातीफलं जातिपत्रं लवङ्गं केसरं तथा।
चातुर्जातकशुण्ठी च पिप्पलीलूणानि च ॥ ९३ ॥
चित्रकं पिप्पलीमूलं वरीमूलन्तु वंशजम्।

सर्वं पिष्ट्वा सुसूक्ष्मञ्च वाससा परिशोधयेत् ॥ ८४ ॥
लौहचूर्णं तथाभ्रञ्च ताम्रभस्म च वङ्गकम् ।
रसराजञ्च नागञ्च कल्कस्यार्द्धं प्रयोजयेत् ॥ ८५ ॥
नागवल्लीरसेनैव अथवा माक्षिकेन च ।
गुटिका तत्र संकार्या माषद्वयप्रमाणिका ॥ ८६ ॥
पञ्चसांख्यावभेदाय यथोक्तं भक्षयेद्बुधः ।
गोदुग्धस्यानुपानञ्च उष्णं चैव विशेषतः ॥ ८७ ॥
वर्द्धनं सप्तधातूनां वीर्यबुद्धिबलप्रदम् ।
बलभाकान्तिरुचिरमग्नेः संदीप्तिकारकम् ॥ ८८ ॥
कफरोगहरञ्चैव बुद्धिज्ञानस्य कारणम् ।
वन्ध्या च लभते गर्भं षण्ढोऽपि पुरुषायते ॥ ८९ ॥
नपुंसको याति पुंस्त्वं रामाः कामायते शतम् ।
वज्रकायः शुचिर्धातुर्दिव्यदृष्टिस्तु जायते ॥
जराव्याधिविनिर्मुक्तो वर्षसेवी यदा भवेत् ॥ १०० ॥

इति पञ्चामृतनामरसः ।

गन्धकस्य पलं प्रोक्तं रसस्य द्विपलं तथा ।
नैपालस्य विशुद्धस्य ताम्रस्य च पलं भवेत् ॥ १०१ ॥
ततो गन्धार्द्धचूर्णेन ताम्रं संयुज्य चूर्णयेत् ।
शेषार्द्धगन्धकं कृत्वा पारदं खल्लयेद्भिषक् ॥ १०२ ॥
रसेन हस्तशुण्ड्याश्च लौहपात्रे पचेच्छनैः ।
कृत्वा पङ्कसमं पाकं ताम्रेण सह योजयेत् ॥ १०३ ॥
तच्च गन्धकचूर्णेन स्वेदयेद्धविषा सह ।
पाचयीत भिषक् प्राज्ञः पाकविन्मृदुवह्निना ॥ १०४ ॥
आलोड्य मधुसर्पिभ्यां भुक्त्वा तक्रं पिबेदनु ।

अग्निमान्द्यमजीर्णञ्च ग्रहणीपांडुकामलाम् ॥ १०५ ॥
परिणामरुजं चाशु नाशयेत्तु प्रयोजितम् ॥

इति ताम्रकम्।

जीर्णं ताम्ररसं चैव गन्धकञ्च सुचूर्णितम्।
स्वर्णमाचीकमादाय धत्तूरकरसे पचेत् ॥ १०६ ॥
यावत्पाकं तथा कृत्वा शास्त्रविन्मन्दवह्निना।
त्रिफलापिण्डिकावेष्ट्य विधिवत्सर्पिषा पचेत् ॥ १०७ ॥
ज्ञात्वा पाकं समुत्तार्य्य शीते निष्कास्य भक्षयेत्।
विमर्द्य मधुसर्पिर्भ्यां नारिकेलं पिबेदनु ॥ १०८ ॥
पांडुरोगञ्च कासञ्च ज्वरांश्च विषमांस्तथा।
गुल्मं प्लीहामयञ्चैव विनाशयति भक्षणात् ॥ १०९ ॥

इति द्वितीयताम्रकम्।

गन्धकं जीर्णताम्रञ्च सूतकञ्च समांशकम्।
तंडुलीयकमूलस्य रसेऽहिलवणस्य च ॥ ११० ॥
लौहपात्रे पचेत्ताव द्यावत्तद्गुलिकायते।
तद्दले पोटलीं बद्धा वेष्टयेत्तां सुपिष्टया ॥ १११ ॥
आमलक्या ततः पक्का सर्पिषा मृदुवह्निना।
शर्करामधुसर्पिर्भ्यां मालोड्य विधिवल्लिहेत् ॥ ११२ ॥
नारिकेलपयः पेयं तक्रं चानु यथाविधिः।
आचरेद्ब्रह्मचर्य्यन्तु हितार्थं वैद्यवत्सलः ॥ ११३ ॥
दुर्नामप्लीहपांडुत्व ज्वरकासादिकान् गदान्।
अग्निमान्द्यकृतान् सर्वा न्निहन्यात् क्षिप्रमेव तु ॥ ११४ ॥

इति ताम्रामृताख्य रसायनम्।

रसगन्धकताम्राणां चूर्णं कृत्वा समांशकम्।

पुटपाकविधौ पक्का मधुनालोड्य संलिहेत् ॥ ११५ ॥
सर्वरोगहरश्चैव त्पर्पटाख्यं रसायनम् ।

इति पर्पटाख्यं रसायनम् ।

गन्धकं त्रिफलाभृङ्गी समभागन्तु कारयेत् ।
भक्षयेत्कर्षमात्रन्तु वर्षान्मृत्युजरापहः ॥ ११६ ॥

—०—

शुद्धगन्धपलान्यष्टौ मृततीक्ष्णपलद्वयम् ।
सूर्य्यपाके त्रिसप्ताहं दत्वा कन्याद्रवं पचेत् ॥ ११७ ॥
कर्षकं घातयेत् क्षीरे वर्षमेकं निरन्तरम् ।
दिव्यदृष्टिर्भवेन्मर्त्यो जीवेचन्द्रार्कतारकम् ॥ ११८ ॥
मन्त्रमत्र प्रवक्ष्यामि गंधराजस्य भक्षणे ॥ ११९ ॥
ॐह्र: अमृतोय अमृतशक्तोय अमृतगंधोपजीवनिष्पन्नचन्द्रामृत आज्ञापनममृतत्व कुरु स्वाहा । इति मन्त्रः ।

—०—

कुर्य्याद्गंधकयोगानां क्षीरशाल्यन्नभोजनम् ।
केवलं वा पिवेत् क्षीरमन्यत्सर्वं विवर्जयेत् ॥ १२० ॥

इति गंधकरसायनम् ।

अतिकृष्णमतिस्निग्धं वज्रमञ्जनसन्निभम् ।
सर्वदोषपरित्यक्तं विशेषोपलवर्जितम् ॥ १२१ ॥
गिरिदोषोज्झितं शुद्धं प्रयुञ्ज्यात्सर्वकर्मसु ।
विहितं मस्तके नित्यं रसं रसायनादिषु ॥ १२२ ॥
एतद्वज्राख्यमाख्यातं सर्वदेवनमस्कृतम् ।
सर्वव्याधिहरं नूनमजरामरकारकम् ॥ १२३ ॥
तद्वत्तेनैव पञ्चलं कृत्वा च सुविचक्षणः ।
कृत्वाथ मृन्मये भाण्डे दृढे संस्थाप्य बुद्धिमान् ॥ १२४ ॥

यथोक्तं सेवनादस्य निर्य्यासे याति संप्लुतम्।
स्थापयेद्दिवसं पञ्च चतुष्टयमथापि वा ॥ १२५ ॥
स्थापयेद्रससंछन्नं छायया दिव्यमौषधम्।
मतीक्ष्णमसृणायाञ्च शिलायां पेषयेत्ततः ॥ १२६ ॥
पिष्ट्वा तथैव संस्थाप्य संस्थानोपरिसंवृतः।
अतः पुनः पञ्चदिने पुटयेत्सुदृढं तदा ॥ १२७ ॥
बलवांस्तद्रसेनैव पिष्ट्वा संस्थापयेत्ततः।
एवमादिक्रमेणैव पेषणं क्रियते सदा ॥ १२८ ॥
पूर्वोक्तक्रमयोगेन धात्रीव्योषविडङ्गकैः।
संमिश्रं पेषयेद्धीरो यावन्निश्चन्द्रको भवेत् ॥ १२९ ॥
निश्चन्द्रिकेऽतिसंपीड्य अगुष्टाग्रप्रमाणतः।
गुटिकां कारयेत्सर्वां छायायाञ्चैव शोषयेत् ॥ १३० ॥
एकैकां भक्षयेत्प्राज्ञो वर्षमेकं निरन्तरम्।
द्वितीये च पुनर्वर्षे भक्षयेद् गुटिकाद्वयम् ॥ १३१ ॥
एवं संवत्सरेणैव एकैकां वर्द्धयेद् गुटीम्।
अनेनैव विधानेन व्योम्नः शतपलं नरः ॥ १३२ ॥
अद्याद्यविघ्न सदेहो वज्रकायो महाबलः।
मासत्रयेण रक्ताख्य क्षय कासं सुदारुणम् ॥ १३३ ॥
पञ्चकासञ्च हृच्छूलं ग्रहण्यर्शो गदांस्तथा।
आमवातं तथा शोथं पांडुरोगं सुदारुणम् ॥ १३४ ॥
मृत्युकल्पं महाव्याधिं वातपित्तकफोद्भवम्।
हन्त्यष्टादशकुष्टानि यथोक्तपथ्यसेवनात् ॥ १३५ ॥

इत्यभ्रककल्पः।

गगनं कज्जलसन्निभ स्निग्धमदोषं वियोगितम्।
बहुशः दूर्वालनुपमूलैर्युक्तं वस्त्रे विबद्धञ्च ॥ १३६ ॥

दत्वा सलिलं तावत्करेण घर्षञ्च पङ्कतां नीतम्।
निपुण गृहीतमुदकादञ्जनपुञ्जघनीभूतम् ॥ १३७ ॥
द्वित्रिवारपरिपुटित रवितरुमथितात्पदुग्धकादिरसे।
चूर्णितमथितं शिलायां कुडवमिकं तदादाय ॥ १३८ ॥
प्रथम चतुरष्टगुणे गोमूत्रे वा पचेन्मृदुज्वालम्।
निपुणमनलं दत्वा समुद्रयाभ्र तया दुग्धे ॥ १३९ ॥
श्लक्ष्ण विडङ्गचूर्णं गगनार्धं त्रिकटुसम्भवञ्च रजः।
त्रिकटुसमं त्रिफलोत्थं पृथक् तदर्द्धञ्च वन्ध्यायाः ॥ १४० ॥
नतकरिकर्णीद्वदारुक रक्तानलनीलकानाञ्च।
मूलस्य नालमूलीरक्ताम्रमारहपुषानाञ्च ॥ १४१ ॥
पत्रक सवाजिगधाशतावरीमूलसम्भवञ्चापि।
अमलिन पुनर्नवार्कं तर्कारी सवाव्यानमूलस्य ॥ १४२ ॥
चूर्णं कण्टकपर्णी भवं सम्हताभृङ्गराजस्य।
विहतास्याया स्त्रिभुवनविजयस्य केशराजस्य ॥ १४३ ॥
सुविदितपाकं शीतं गगनचूर्णञ्च भाजने सर्वम्।
समधुमितैरनुरूपैः समिश्रं मध्वाज्यकर्षेण ॥ १४४ ॥
पिष्ट तदनुशिलायां स्निग्धभाण्डे निधाय सविधिज्ञः।
सोत्साह. सुविनीतो गृह्णीयादराभ्रकं कल्पम् ॥ १४५ ॥
मृदुकृतं वमनविरिकं वैद्य प्रदृष्टेन सात्मप्रयोगेन।
याति शरीरविशुद्धिर्दीपित देहानलो नीरुक् ॥ १४६ ॥
पूजितगुरुदेवानलवितिथि सिद्धसाधुमान्यजनः।
स्निग्धौदनपरिक्षसः दीनग्लानि रक्षितः सत्कृतः ॥ १४७ ॥
स्थिरसंकल्पो विनीत सर्वेन्द्रियः प्रशान्तसर्वात्मा च।
परिकृतपरोपकार. वाम समुज्झितो जितक्रोधः ॥ १४८ ॥
श्रद्धावानश्नीयाद्वेपजराजस्य मापकान्नष्टौ।

पुण्ये दिवसे कृत्वा गुटिकां तथा भक्षयेत्प्रातः ॥ १४८ ॥
अनुपानं शीतजलं सततमन्नातिभोजनं नात्र।
हिताहिताद्यं सुखदं शाकाम्लदधिपरिहीनञ्च ॥ १५० ॥
अतितिक्तकटुकषाय क्षाराभिष्यन्दि तीक्ष्णरूक्षाणि।
वातलविदाहिदुर्जरगुरूण्यसेव्यानि वस्तूनि ॥ १५१ ॥
पानं दूराध्ययनं रतिमतिशीतलं दिवास्वप्नञ्च।
प्रत्युपदेशं द्वेषं वातातपजागरणोद्गतान् ॥ १५२ ॥
चिन्ताशोकविषादव्यायाम मदकरोन्मादकरान्।
पिशितञ्चानूपदेशं शीतपानं वर्जयेदनिशम् ॥ १५३ ॥
क्षारमयूरकलावक तित्तिरिशशकाजमेषमारङ्गम्।
जांगलं पिशितं श्याम माषं पटोलञ्च वार्त्ताकुम् ॥ १५४ ॥
पथ्याशीपिशितं रसं सैन्धवं सघृतकं सधान्याकम्।
स्वस्तिकषष्टिकलोहित शालीनति निस्तुषान्मुद्गान् ॥ १५५ ॥
क्रमुकफलानि द्राक्षापक्वाम्रफलानि चैव शस्तानि।
स्वादु च परिणति मधुरं कलिकरञ्चापि वाऽऽसवन्तोयम् ॥१५६॥
प्रतिसप्ताहकमेतत् क्रमाद्वा प्रवर्द्धयेद्धोमान्।
युक्तिविचाराभिज्ञो भेषजस्य पर्य्यन्तं भवति ॥ १५७ ॥
रसायनराज कुर्वन् मनुजो मनोभिलाषं प्राप्नोति।
नागार्जुनोपदिष्टं षण्मासोपविहितविधिना च ॥ १५८ ॥
अपगतसकलव्याधिः वलिपलितवर्जितोऽति महातेजाः।
शूरः प्राज्ञो वाग्मी त्रिवर्गफलभाजनो दक्षः ॥ १५९ ॥
मदमत्तकुञ्जरबलः सौकुमार्य्योत्साहसपन्नश्च।
षोड़शवर्षकरो बहु प्रसूतः सुचिरजीविनोपेतः ॥ १६० ॥
जीवेद्वर्षसहस्रं सतताभ्यासाच्च सर्वसम्पन्नः।
चन्द्रकमनीयकान्तिः पवनवलो धामसमधामा ॥ १६१ ॥

शोषयकृदतिसार शोहापस्मारसिध्मयक्ष्मण: ।
कासश्वासविसर्पग्रहणी गुल्माश्मरीशोथान् ॥ १६२ ॥
प्रदरजलोदरभस्मकवमिपामाश्लीपदप्रमेहांश्च ।
विबन्धभगन्दरकुष्ट विषमज्वरपांडुरोगांश्च ॥ १६३ ॥
श्रुतिवदनोदरलोचन मस्तकरोगान् समूत्रकृच्छ्रांश्च ।
आशु रसायनराज: शमयति युक्त्या प्रयुक्तस्तु ॥ १६४ ॥

सामं समीरमुपहन्ति कफं सपित्तं
सास्रञ्च पित्तमथ जाठरवह्निमान्द्यम् ।
वातप्रकोपजनितान् कफजांश्च सर्वान्
पित्तोद्भवांश्च निखिलान् सगदांस्तथैव ॥ १६५ ॥
नागार्जुनोदितरसायणसंहितायां
मालोच्य चात्मनि समस्तरुजाविधाने ।
राजानमेनमुपयुज्य रसायनानां
श्रीविश्वरूपमुपसंस्कृतवान् कृतार्थ: ॥ १६६ ॥

इति महाबलविधानाभ्रकम् ।

गगनमुलूखलक्षुण्णं काञ्जिकहस्तीव जलदनादरसै: ।
कुलिररसमुनिरसाभ्यां पिष्टा प्रत्येकश: पुटितम् ॥ १६७ ॥
सौवीरादिरसेन सम्पन्नं प्राप्यरविकरै: शोष्यम् ।
मिलितत्रिफला त्रिकटुकविडङ्गचूर्णञ्च पादसमम् ॥ १६८ ॥
घृतमधुसिताविमिश्रं प्रात: कृत्वाष्टमाषपरिमाणम् ।
शिशिरसलिलानुपानं भोजनमिह मांसमुद्गादि ॥ १६९ ॥
साधितं य: सदा भुंक्ते पञ्चभूतमिदं नर: ।
अभ्रकमूर्चिमस्तत्र जायन्ते ये गुणानथ ॥ १७० ॥
घननिविडगूढसन्धि: श्वसनबलोत्मत्तकुञ्जरप्राण: ।

सर्व्वद्वन्द्वसहिष्णु र्द्दिरष्टवर्षाक्षतिर्य्येव ॥ १७१ ॥

इत्यभ्रकम्।

रजनीकराच्चयपक्षे प्रशस्ततिथिनक्षत्रकरणयोगेन।
सितकुसुमाद्यैस्तु बलिं दद्यात्साधुप्रयत्नेन ॥ १७२ ॥
अङ्गारराशिदहनज्वालातिध्मातमग्निवर्णं तत्।
आकरदोषोत्थित्यै पयसि सुवाप्य धारयेत्तदनु ॥ १७३ ॥
असकृत् कृतैकपत्रं मरिचजलेन त्र्यहश्च पर्य्युषितम्।
शुक्लामलमसृणायां शिलायां वर्त्तयेद्दहुशः ॥ १७४ ॥
शुचिभाजनोदरस्थं सम्यक् सितविपुलवस्त्रसंछन्नम्।
परिपीतसकलसलिलं दिनकरकिरणैस्तु कुर्व्वीत ॥ १७५ ॥
घनरजसः पलमेकं तंडुलमेकञ्च परिगृह्य।
त्रिंशत्यन्नानि पयसो व्योषं सदुग्धघृतमन्नभुक् ॥ १७६ ॥
मासेन गुणगणांश्च सम्प्राप्नोति नरस्तमाख्यातः।
घनकुंञ्चितनीलकचो दुन्दुभि नादविरहितश्रवणः ॥ १७७ ॥
सनरो वाग्मीश्रुतिवान् शास्त्रविज्ञोवेद्रह्माणो दिवसम्।

इत्युमाभाषितमभ्रकं।

अभ्रं चतुष्पलं ग्राह्य ममलं धौतशोषितम्।
पचितं लोहपात्रस्थं तंडुलीयरसाप्लुतम् ॥ १७८ ॥
गोजीरसेन संमर्द्य मृदुपङ्कसमं कृतम्।
वचाविडङ्गचूर्णेण तुल्यभागेन योजितम् ॥ १७९ ॥
झिण्टीप्रवर्त्तकाकास भृङ्गराजतिलद्रवैः।
प्रत्येकं क्रमशो दत्वा प्रस्थार्द्धं घट्टयेत्ततः ॥ १८० ॥
पिष्टाष्टमासकं दत्वा वटिकान् वर्त्तयेद्भिषक्।
कवर्णाद्यञ्च द्रव्यादि सप्ताहत्रितयं त्यजेत् ॥ १८१ ॥
ततो यथेष्टं कुर्व्वीत व्यवायाश्रमभोजनम्।

हन्त्येतदम्लपित्तञ्च शूलामवातपाण्डुताः ॥
प्लीहाग्निसादशोथार्शो विष्टम्भग्रहणीगदान् ॥ १८२ ॥
इति तृतीयमभ्रकम् ।

कृष्णाभ्रकपलमेकं संकुट्योलूखले तु मुसलेन ।
अम्लरसायनमेतत् चेथ्या टङ्कोन्मिता पथ्या ॥ १८३ ॥
आर्द्रकरसेन भाव्यं शुष्कं कृत्वैतत् क्षिपेच्चूर्णञ्च ।
त्रिकटुत्रिफलामुस्तकचित्रक पयसाञ्च पिचुमानम् ॥१८४॥
कृमिरिपु चात्रद्वितयं प्रक्षेप्यं चात्र गगनमानमयः ।
कृत्वा तोयेन वटीं पणमांपोन्मितां भुक्त्वा च ॥ १८५ ॥
अम्लं वार्य्यनुपेयं दधियुक्तं धार्य्यमनुदिवसम् ।
शूलं कफाम्लपित्तं विनिहन्ति वातरुजां सद्यः ॥ १८६ ॥
इति पानीयभक्तवटी ।

त्रिफलात्रिकटुकमुस्तविडङ्गभल्लातककेसराणाम् ।
करिवर्त्तच्छदन्ती तंडुलिकापुनर्नवात्रिहृत्ता ॥ १८७ ॥
चित्रद्विजीरकचूर्णान्येकत्र कर्षमितानि कार्य्याणि ।
गन्धतिलाः कर्षार्धं गगनपलशोधितं विधिवत् ॥ १८८ ॥
अम्लयुक्तं भक्तपयसी दत्वा कुर्य्यादर्धमापिकां वटिकाम् ।
अम्लं वार्य्यनुपेयं कार्य्यं तदधिविहितपथ्यम् ॥ १८९ ॥
कफातिदुष्टवह्नेर्नातःपरमत्र भेषजं दृष्टम् ।
हन्यात्तदामवातं ग्रहणीगदगुल्मशूलरुजः ॥ १९० ॥
इति द्वितीयपानीयभक्तवटी ।

ग्रन्थिकं त्रिफलाचित्रं त्रिवृल्लोहितकुम्भकी ।
एषां कर्षार्द्धकं चूर्णं प्रत्येकं तावदुन्मितम् ॥ १९१ ॥
त्र्यूषणं लवणं पाक्यं विडङ्गं कार्षिकं पृथक् ।
पलं कृष्णाभ्रकञ्चैव मन्तर्दग्ध्वा विनिक्षिपेत् ॥ १९२ ॥

तेनैव पेषणं कृत्वा सर्वमेकत्र योजयेत् ।
शिखयार्द्रकनिर्गुण्डी नागवल्लग्रस्थिसंहृता ॥ १८३ ॥
रसेर्द्विपलिकैरेषां वटो भाव्याक्षसंमिता ॥

इति तृतीयपानीयभक्तवटी ।

विडङ्गं पिप्पलीमूलं त्रिफलामुनिज फलम् ।
लौहकं गन्धकं चित्रं पलार्द्धं चूर्णितं पृथक् ॥ १८४ ॥
त्रूषणं चूर्णितं ग्राह्यं सार्द्धं द्विपलिकं पृथक् ।
अस्लगुडाभ्रकपलं कर्षार्धं पारदस्य च ॥ १८५ ॥
अस्थिसंहारनिर्गुण्डी नागवल्लगार्द्रकैः शुभैः ।
रसेश्चतुष्पलैरेवं भावयित्वा पृथक् पृथक् ॥ १८६ ॥
यथाग्निं भक्षयेदेतां वटीमनुपिबेज्जलम् ।
वारिभक्तञ्च भुञ्जीत कुर्य्यात् पूर्वोक्तकान् जयान् ॥ १८७ ॥

इति चतुर्थपानीयभक्तवटी ।

गन्धार्द्रकरसस्तुल्यो विडङ्गमरिचार्द्रकैः ।
त्रिफलाचित्रतावह्निः कणादन्तीपुनर्नवा ॥ १८८ ॥
त्वक्चीरं माणिकुलिश यवागूरागखण्डिकाः ।
प्रत्येकैकं पलं चूर्णं सुरूपानीयक ह्यविः ॥ १८९ ॥
अभ्राच्चतुष्पलं चूर्णं मेकीकृत्वार्द्रकांबुना ।
त्रिफलापयमाभाव्या कोलार्द्धमानकोवटी ॥ २०० ॥
भक्तोदकानुपानेन सेव्यावह्निप्रदीपनी ।
अस्लपित्तामवातादीन् हन्ति पयमाषभोजनम् ॥ २०१ ॥

इति पञ्चमपानीयभक्तवटी ।

भेकदन्तावरुणार्द्रे दण्डोत्पलखण्डवरुणशिखरिभिः ।
वचाभृङ्गराजमानेखण्डुन्नीयकामरावतीभिः ॥ २०२ ॥

सूरणपुनर्नवाभिः गगनं पृथगेव भावितं नूनम् ।
खरतरखिकरायेण शोषणशुद्धिर्विधातव्या ॥ २०२ ॥
पलमेकं छिन्नरुहा कृष्णागुडूचीसत्वपलमेकम् ।
अभ्रकमानं त्रिफलात्रिकटुरजः पारदानाच्च ॥ २०३ ॥
प्रथमञ्च मधुसर्पिर्भ्यां मूर्च्छितेन रसेन मर्दयेन्नवाम् ।
तदनुत्रिफलारजसा तदनुगुडूच्याः सत्वेन ॥ २०४ ॥
तदनु त्रिकटुरजोभूयिष्टमवनितममृतमवदाय ।
स्निग्धे निधाय भांडे रचन् सुवस्त्रपिहितमुखे ॥ २०५ ॥
खादेद्भोजनमादौ मध्ये चान्ते च वारमेवैकम् ।
जलमभि पिबेद्रसाम्लं रक्तोद्वहार द्विगुणमेव ॥ २०६ ॥

जीरं दधि चात्र घृतं सपूतमस्थि मांसानि ।
नाद्यादशेषशाकं मद्यं जीर्णमन्नञ्च ॥ २०७ ॥

हरति चाम्लपित्तं ग्रहणी दुर्नामकामलादिरुजः ।
जनयत्यचिराद्रुधिरं जठरानलपुष्टिदं परम् ॥ २०८ ॥

इत्यभ्रकसन्धानम् ।

माणकन्दोऽश्वकर्णश्च त्रिवृता मुस्तकं समम् ।
त्रिकटुत्रिफलाभृङ्ग मपामार्गञ्च दाड़िमम् ॥ २०९ ॥
लावीद्वहतिकाजाती द्वयञ्च शतपुष्पिका ।
सूर्य्यावर्त्तस्तालमूली चूर्णमेषाञ्च कार्षिकम् ॥ २१० ॥
विडङ्गचूर्णं द्विगुणं पादहीनञ्च गन्धकम् ।
चतुर्गुणाभ्रकं कार्यं गुडूचीमपि तद्गुणाम् ॥ २११ ॥
सुचूर्णमभ्रकं वस्त्रपातितं काञ्जिके क्षिपेत् ।
अम्ले पयसि वा पश्चा दुद्धरेत्पञ्चमेऽहनि ॥ २१२ ॥
मंडूरपेषितापेष्य वंशपत्ररसेन च ।
ततः पुटानि देयानि वक्ष्यमाणैर्महौषधैः ॥ २१३ ॥

वंशपत्ररसैः पूर्वं पुटयेदातपे भिषक्।
मंडूकपर्णीचित्रञ्च दन्तीरसं पुनर्नवा॥ २१४॥
त्रिवृतातालपटोलं चास्थिसंहार एव च।
आर्द्रकं तालमूली च सूर्य्यावर्त्तञ्च शिम्बिका॥ २१५॥
केशराजो भृङ्गराजः शतमूली च मुस्तकम्।
ततः प्रचिप्य चूर्णानि द्विगुनाथ चतुष्टयम्॥ २१६॥
सप्तधा पेषयेद्गाढं त्रिफलाक्काथवारिणा।
तेनैव गुटिका कुर्य्या न्माषैकैकप्रमाणिका॥ २१७॥
वटिका द्वितयं भक्ष्य मम्लवार्य्यानुपानतः।
वयोवस्थामग्निबलं व्याधिं प्रकृतिमेव च॥ २१८॥
दृष्ट्वा मात्रां प्रयुञ्जीत यथा चेपः मदीयते।
ग्रहणीमम्लपित्तञ्च पित्तश्लेष्माणमेव च॥ २१९॥
अर्शांसि वह्निसादञ्च प्लीहानमरुचिन्तथा।
वटिकेयं निहन्त्याशु नात्र कार्य्या विचारणा॥ २२०॥
निर्वापयेच्च मंडूरं त्रिफलाया रसे शुभे।
सूर्य्यावर्त्तरसे वाथ उभयत्र च वा भिषक्॥ २२१॥
तत्तु सुचूर्णितं वस्त्र पतितं स्थापयेद्भिषक्।
ततः काञ्जिकनिचेपं समुद्वारादिसंस्कृतम्॥ २२२॥

इति पटीपानीयभक्तवटिका।

—०—

## अथ लोहरसायनमाह।

सर्वेषां लोहजातीनां कान्त भवति कान्तिदम्।
तथा कान्तं विशेषेण भवेत्तद्गुणद स्मृतम्॥ २२३॥
एकान्ते च पचेल्लोहमादौ प्रशस्ते दिने ततः।

धात्रीपिण्डारकोद्भूत स्वरसेनार्करश्मिभिः ॥ २२४ ॥
स्थापयेद्यद्भवेच्चूर्णं ग्राहयेत्तु पृथक् पृथक् ।
उच्चटास्वरसेनैव पूर्वोक्तेनैव भावयेत् ॥ २२५ ॥
धात्र्यश्वगन्धयोः पिण्डारकस्यापि रसेन च ।
मिलित्वैवं पुनर्भाव्यं प्रचंडरविरश्मिभिः ॥ २२६ ॥
काकमाचीरसेनैव स्थापनीयं पुनः पुनः ।
भावनान्ते च सर्वत्र खल्लितव्यं प्रयत्नतः ॥ २२७ ॥
पश्चाच्चूर्णं विधातव्य मप्रमत्तेन धीमता ।
इद सूर्य्यमयूखेन मारण प्रकीर्त्तितम् ॥ २२८ ॥

—०—

धात्रीपिंडारकरजः स्वरसेन प्रकल्पयेत् ।
नारिकेलस्य पात्रे तु भावना विधिरिष्यते ॥ २२९ ॥
इति सूर्य्यमयूखेन लोहमारणम्।

एकपत्रीकृतं तस्य मभ्रका वज्रसन्निभम् ।
भावयेद्दिनिदिवस जम्बीररसकाञ्जिकैः ॥ २३० ॥
त्रिफलायारसे भाव्यं ततः शिग्रुरसे पुन ।
प्रत्येकश. शोधितव्य सूक्ष्म खल्लेन बुद्धिमान् ॥ २३१ ॥
ततो लज्जालुकरसे वाजिगन्धारसे तथा ।
भावन खल्लके कार्य्यमिति चाभ्रकमारणम् ॥ २३२ ॥
भावना नारिकेलस्य पात्रेनान्यत्र शस्यते ।
इति सूर्य्यमयूखेनाभ्रकमारणम् ।

त्रिहृताचित्रक मुस्तं त्रिफलाव्यूषण तथा ।
एक कशोमितो भाग स्यादर्व रसगन्धयो ॥ २३३ ॥
लोहाभ्रकविडङ्गाना भागश्च द्विगुणो भवेत् ।
एतत्सकलचूर्णन्तु चूर्णयित्वा विचक्षण. ॥ २३४ ॥

त्रिफलायाः कषायेण गुटिकां कारयेद्भिषक्।
तत्रैकां भक्षयेत्प्रात र्भक्तवारिपिबेदनु ॥ २३५ ॥
पक्तिशूलं त्रिदोषोत्थ मम्लपित्तं वमिं तथा।
हृच्छूलं पार्श्वशूलञ्च वस्तिकुक्षिगुदारुजम् ॥ २३६ ॥
कासं श्वासं तथा कुष्टं ग्रहणीदोषमामजम्।
यकृत्प्लीहोदरं गुल्मं यक्ष्माणं ग्रहमेव च ॥ २३७ ॥
विष्टम्भमामदौर्बल्य मग्निसादं नियच्छति।
सर्वानेतान् शमयति भास्करस्तिमिरं यथा ॥ २३८ ॥
इति सप्तमीपानीयभक्तवटिका।

गव्येन नवनीतेन स्वर्णमाचिकहृयिकौ।
निष्पिष्यलेपयेल्लोहं कान्तपाण्ड्वादिसम्भवम् ॥ २३८ ॥
ध्मापयेत्कर्मकाराग्नौ सिक्तासिक्ता पुनः पुनः।
त्रिफलाक्वाथतोयेन ततो निर्वापयेत्सुधीः ॥ २४० ॥
पश्चात् संपिष्यते लोहं दाहयेत् पुटवह्निना।
अग्नेराकृष्यविधिना जलधौतं प्रयत्नतः ॥ २४१ ॥
श्लक्ष्णचूर्णं ततः कृत्वा बहुघृष्टन्तु कारयेत्।
पलं चतुष्टयं तस्य मधूकस्यापि तत्समम् ॥ २४२ ॥
पथ्याधात्रीविभीतक्या रसय त्रिकटोस्तथा।
वचावह्निविडङ्गानि कृष्णजीरकजीरकैं ॥ २४३ ॥
दन्तीपुनर्नवामुली प्रत्येकं पलसंख्यया।
एलायाः कर्षकं दद्यात् कार्षिकं कटुरोहिणी ॥ २४४ ॥
एलार्धं गन्धकं देयं पलार्द्धं गुग्गुलुत्वचम्।
चूर्णयित्वा विधानेन सर्वमेकत्र कारयेत् ॥ ३४५ ॥
घृतमष्टपलं दत्वा क्षीरं चतुः शरावकम्।
चतुर्विंशपलक्वाथ त्रिपलशेषवारिणा ॥ २४६ ॥

वस्त्रपूतेन विधिवत् पाचयेत्ताम्रभाजने ।
दार्वीं लोहमयीं गृह्य पाकं कुर्य्याद्विपाकवित् ॥ २४७ ॥
शीतलञ्च ततः कुर्य्यात् स्निग्धे भाण्डे निधापयेत् ।
रक्तिकादिक्रमेणैव घृतेन मधुना सह ॥ २४८ ॥
संमर्द्य लोहदण्डेन लोहपात्रे च भक्षयेत् ॥
क्षीरानुपानं दातव्यं पित्तदुष्टापरोगिणे ॥ २४९ ॥
तथामकोष्टिने दद्या द्यवक्षारस्य वारिणा ।
मूर्च्छाछर्दि तृषा रक्त पित्तशूलादिसम्भवे ।
क्षीरं शर्करयामिश्रं ह्यनुपानं प्रयोजयेत् ॥ २५० ॥
चतुर्धा ग्रहणी ज्ञेया वातपित्तकफोद्भवा ।
ज्ञात्वा कुक्षौ मनाक् शूल मामगन्धं सलोहितम् ॥ २५१ ॥
कुक्षौ दक्षिणतः शूलं नाभिमण्डलतोपरि ।
वातपित्तनिदानं हि लक्षयित्वा प्रदीयते ॥ २५२ ॥
नारिकेलञ्च समधु-पानञ्च हितमिच्छता ।
रक्तछर्द्यां विगन्धत्व मौपत्यानन्तु पैत्तिके ॥
क्षीरं शर्करयायुक्त मनुपानन्तु दापयेत् ॥ २५३ ॥
कटिशूले त्रिकशूले कुक्षिशूल अरोचके ।
आमवातनिदाने च मुखस्रावे प्रकीर्त्तितम् ॥ २५४ ॥
पार्श्वशूले त्रिकशूले नाभिमण्डलतोपरि ।
ज्वरे सशूले सामे च वायुमामं निवर्त्तयेत् ॥ २५५ ॥
क्वचिन्नाभेरधः शूले वामपार्श्वे क्वचिद्भवेत् ।
शूले वा परिणामे च भ्रमे पृष्टे क्वचित् क्वचित् ॥ २५६ ॥
शीतलेन यवक्षार मनुपानञ्च वारिणा ।
प्रकम्पश्चोर्ध्ववायुश्च हस्तकम्पं मुहुर्मुहुः ॥
कुक्षिशूलं मूर्द्धशूल मूर्ध्वधूमश्च नश्यति ॥ २५७ ॥

हरीतकीयवक्षारं सैन्धवं सितशर्करा ।
हिङ्गुयुतं नारिकेल जलेन त्वनुपानकम् ॥ २५८ ॥
शुक्राश्मरीशुक्रस्रावे मूत्रशूलञ्च पंक्तिकम् ।
कुक्षौ नाभौ भवेच्छूलं मेहत्वं परिणामकम् ॥ २५९ ॥
रसं कूष्मांडमज्जाया यवक्षारं सशर्करम् ।
एकीकृत्यानुपानन्तु दद्यादश्मरिरोगिणे ॥ २६० ॥
शर्कराछागलं क्षीरं शृङ्गाटककशेरुकौ ।
त्रिफलायारसं ग्राह्यं मूलमाम्रातकस्य च ॥
एकीकृत्यानुपानेन शाम्येच्छुक्रप्रमेहकम् ॥ २६१ ॥
इति सर्वतो भद्रलोहः ।

त्रिगुणमायसंचूर्णं त्रिफला चाभ्रकाद्रसात् ।
द्विरष्टभागिनिवारि ष्वष्टशिष्टन्तु कारयेत् ॥ २६२ ॥
तेन पादावशेषेण समे नाज्येन यत्नतः ।
रसेन बहुपुत्रायाः द्विगुणक्षीरसम्मितम् ॥ २६३ ॥
लोहमय्याऽऽपयद्दर्व्या पात्रे चायसि मृण्मये ।
दिव्यौषधहतं लोहं प्रहृत्तं संपुटादिभिः ॥ २६४ ॥
पचेत्पाकविधिज्ञैस्तु वह्निना मृदुना शनैः ।
अभ्रकं निहतं कृष्णं सूतकञ्च विमूर्च्छितम् ॥ २६५ ॥
अयसश्चार्द्धभागञ्च त्वादौ पाके प्रयोजयेत् ।
रसेन त्रिफलादन्ती विड़ंगं जीरकद्वयम् ॥ २६६ ॥
पलाशबीजं हपुषा चित्रक्यं देवदारुकम् ।
लतापलाशमूलञ्च वृहत्यत्रं गुड़त्वचम् ॥ २६७ ॥
व्योषं समं ग्रन्थिकञ्च गुडूचीतालमूलकम् ।
शिग्रुमन्थौ तथा यास स्तथा च चीरकञ्चुकौ ॥ २६८ ॥
कापालिकाकलिङ्गाख्यं गन्धानिम्बयवानिकम् ।

चूर्णीकृत्यचिपेद्यत्ना लौहाभ्रकसमं भिषक् ॥ २६९ ॥
वातश्लेष्मप्रधानस्य सस्कृतं नागरेण च ।
निहन्ति वातसन्दिग्धं कफजुष्टं तथैव च ॥ २७० ॥
सद्योवह्निकरं श्लेत बलपुष्टिकरं तथा ।
रसायनमिदं दिव्य ममृताख्यं परं शुभम् ॥ २७१ ॥
इति वातश्लेष्मप्रकृतौ रसायनम् ।
कफपित्तविनाशाय लिख्यते चाधुना पुनः ।
अरुचिं सकलां पुंसां व्यपोहतिवरः सदा ॥ २७२ ॥
मधुकं पिण्डखर्जूरं धान्यकं जीरकद्वयम् ।
व्योषं हविष्यमार्जेय शर्करा च पलद्वयम् ॥ २७३ ।
तिक्तं बकञ्च तालीशं सविडङ्गं गुडत्वचम् ।
मेघाच्छदबीजञ्च चविकञ्चैलकं तथा ॥ २७४ ॥
गुडूचीत्रिवृतादन्ती वचा च चविकास्तथा ।
बलापलाशशिग्रुञ्च कुङ्कुमं हृद्दारुकम् ॥ २७५ ॥
ग्रन्थिकं चित्रकं वापि कलिङ्गं भद्रमुस्तकम् ।
वृहत्यत्वं पृथुलिका काकजङ्घापुनर्नवाम् ॥ २७६ ॥
संचूर्ण्य चूर्णमादाय गगन द्विगुणं मतम् ।
रसायनविधियुक्तं सर्वोपद्रवनाशनम् ॥ २७७ ॥
मन्दाग्निग्रहणीदोषाः कफपित्तभवाश्च ये ।
भस्मत्व यान्ति वै क्षिप्रं काष्टभङ्गो यथाग्निना ॥ २७८ ॥
इति कफपित्तप्रकृतौ रसायनम् ।
तर्त्सिद्धं सिद्धनाथेन निर्मितं सत्वहेतुना ।
आमवातादिनाशाय लिख्यते चाधुनेरितम् ॥ २७९ ॥
धान्यनागरविडङ्गं गुडूचीजीरकद्वयम् ।
पलाशबीजं कोलञ्च पिप्पलीमुस्तकन्तथा ॥ २८० ॥

त्रिवृच्च त्रिफलादन्ती एलकं बृहतीद्वयम्।
चविकाग्रन्थिकाचित्रं सर्वञ्च द्रुदारुकम्॥ २८१॥
पञ्चायम. पलानाञ्च प्रत्येकं तद्विकार्षिकम्।
आमवातघ्नचूर्णञ्च यथाविधि निषेवितम्॥ २८२॥

इत्यामवातादिव्याधौ रसायनम्।

शिरःशूलमुखश्वास कफपित्तापनुत्तये।
लिख्यते चाधुना दिव्यं रसायनमनुत्तमम्॥ २८३॥
शर्करामधुकं द्राक्षा मुसलीत्रायमाणकम्।
वासागुडूचीकालिङ्गं व्योषञ्च त्रिफलात्रिवृत्॥ २८४॥
दन्ती कृमिहरं चूर्णं द्रुदारं पलोन्मितम्।
मृदुपाके विनिक्षिप्तं क्षिप्तपाकमनाकृति॥ २८५॥
सेवितं हरते नित्यं रक्तपित्त सुदारुणम्॥

इति श्वासादिव्याधौ रसायनम्।

वातरक्ते महाकुष्टे जङ्घोर्वोः स्तब्धतां गते।
सर्वाङ्गके तथा वाते क्रियमाणं रसायनम्॥ २८६॥
अभ्रकेन समं गन्धं नवनीतामलच्छवि।
मूर्च्छितञ्च तथा सूतं त्रिकटुत्रिफलावचा॥ २८७॥
विडङ्गं जीरके द्वे च पलाशवीजमैन्लकम्।
द्रुदारत्वचं कन्दं सविडङ्गं सचित्रकम्॥ २८८॥
श्यामाकं शिग्रुदन्ती च त्रिवृतावर्गदूषिका॥ २८९॥
प्रत्येकं कार्षिकं मात्रं पाके खरतरे क्षिपेत्।

इति वातरक्तादिव्याधौ रसायनम्।

प्लीहोदरं यकृद्गुल्म गम्भच्चाराग्निभिर्विना।
विनाशाय प्रयोज्यानि चूर्णानीमानि देहिनाम्॥ २९०॥
कन्दं कांपालिकाचव्य विडङ्गं सद्वद्दलम्।

शरपुंखा च पाठा च चित्रकं समहौषधम् ॥ २८१ ॥
एषान्तु पलिकां मात्रां चिपेल्लोहरसायने ।
लवणानि च सर्वाणि सचारं वृद्धदारकम् ॥ २८२ ॥
दीप्यकञ्च प्रयुञ्जीत पाकार्थमभयासुरी ।
प्लीहोदरविनाशाय द्वे पले च पृथक् पृथक् ॥ २८३ ॥
मानेन दण्डकर्णेन सूरणेनाधिकं पुनः ।

इति प्लीहोदरव्याधौ रसायनम् ।

राजयक्ष्मणि श्वासे च कासे रक्तोल्वणे हितम् ।
महौषधं सतालीशं काकणं नागकेशरम् ॥ २८४ ॥
जीवन्तिमभयां मृद्वीं सर्वाभ्यो द्विगुणान्तथा ।
शर्कराञ्च चिपेत्तत्र गुडूची सत्वमेव च ॥ २८५ ॥

इति राजयक्ष्मादिव्याधौ ।

त्रिफलायाः प्रकुर्वीत प्रत्येकं पलसप्तकम् ।
वारिण्यष्टगुणे पक्का पञ्चभागेन शेषयेत् ॥ २८६ ॥
षट्शरावास्तु दुग्धस्य हविषः पलपञ्चकम् ।
पुटिनाद्रायसः पञ्च शुद्धाभ्रस्य पलद्वयम् ॥ २८७ ॥
विडङ्गं त्रिफला जीरं द्वयं त्रिकटुचूर्णितम् ।
लोहचूर्णं सम ग्राह्यं गुणवृद्धं ततः पचेत् ॥ २८८ ॥
ग्रहणीगदमत्युग्रं हन्त्येतद्वारिसम्भवम् ॥

इति वातग्रहण्याम् ।

बिभीतकाभयाधात्री प्रत्येकं तु पलाष्टकम् ।
वारिण्यष्टगुणे साध्यं षड़ंशेनावतारिते ॥ २८९ ॥
अतः पलानि पञ्चैव पयसोष्टौ शरावकान् ।
सर्पिषो दशपलान्यत्र दद्याल्लोहं विपाचयेत् ॥ ३०० ॥

त्रिकटुत्रिफलाचूर्णं प्रत्येकं तु द्विकार्षिकम्।
विडङ्गं भद्रमुस्तञ्च जीरकं द्वयमेव च ॥ ३०१ ॥
पृथगर्धपलं ग्राह्य कुर्य्यात्पाकन्तु मध्यमम्।
पैत्तिके ग्रहणीरोगे योजयेन्मतिमान् भिषक् ॥ ३०२ ॥

इति पित्तग्रहण्याम्।

प्रत्येकं षट्पलं धात्री शिवा वैभीतकत्वचम्।
उदकानां शरावैस्तु षड्विंशत्या विपाचयेत् ॥ ३०३ ॥
पञ्चभागावशिष्टेन लौहं पञ्चपलानि च।
तावद्दत्वा दधि तस्मिन् खरपाकं विपाचयेत् ॥ ३०४ ॥
त्रिकटुत्रिफलावह्नि विडङ्गं भद्रमुस्तकम्।
चूर्णं लौहसमं चात्र प्रक्षिपेदवतारिते ॥
श्लैष्मिकं ग्रहणीदोषं हन्यादेतद्रसायनम् ॥ ३०५ ॥

इति श्लेष्मग्रहण्याम्।

लौहं पूर्वं पुटेच्छुद्धं गृहित्वा पलपञ्चकम्।
पुनर्नवावरीमूलं त्रिफलापुटितं पुनः ॥ ३०६ ॥
वराचतुर्गुणं लौहं पचेदष्टगुणे जले।
सप्तभागावशेषेण द्विशराव पयः क्षिपेत् ॥ ३०७ ॥
शतावरीरसञ्चापि लौहतुल्यं प्रदापयेत्।
पलानि दश चाज्यस्य मृदुपाकेऽवतारिते ॥ ३०८ ॥
द्विजीरकं विडङ्गञ्च पलाशबीजमेव च।
शूरपर्ण त्रिफलाचव्यं चूर्णमेषां पयः समम् ॥ ३०९ ॥

इति वातपित्तग्रहण्याम्।

अष्टादशपलान्यत्र त्रिफलायाविपाचयेत्।
सलिलेद्रोणके चास्मिन्नवभागावशेषितम् ॥ ३१० ॥

विपचेत्पूर्ववल्लोहं पुटितं वच्यमाणकैः ।
वराया: केशराजस्य चार्द्रकस्य रसेन च ॥ ३११ ॥
एतत्पञ्चपलं ग्राह्यं सर्पिर्दशपलानि च ।
शतावरीरसस्याष्टौ नारिकेलोदकस्य च ॥ ३१२ ॥
पलार्द्धं मरिचं कृष्णा नागरं पलसम्मितम् ।
षड्विंशमाषकं चूर्णं त्रिफलायाः प्रकल्पयेत् ॥ ३१३ ॥
त्रिचत्वारिंशतामाषैरधिकं चूर्णितं पलम् ।
चित्रकस्य विडङ्गस्य पचेत्पाकखरं ततः ॥ ३१४ ॥
वातश्लेष्मोत्तरे चैव कुक्षिरोगे तथा घृतम् ॥

इति वातश्लेष्मग्रहण्याम् ।

मूर्च्छितं पुटितं शुद्ध मायसः पलपञ्चकम् ।
शतावरीरसे सम्यक् पुटित पञ्चधा पुनः ॥ ३१५ ॥
अष्टौ पलानि गृह्णीया त्रिफलायाः पृथक् पृथक् ।
सलिलस्यार्मणे पक्का पादशिष्टेऽवतारिते ॥ ३१६ ॥
द्वात्रिंशच्च पलान्यत्र सर्पिरष्टादशैव तु ।
मध्यपाकं ततः पक्का चैषां कर्षद्वयं पृथक् ॥ ३१७ ॥
त्रिकटुं त्रिफलां वह्निं विडङ्गं भद्रमुस्तकम् ।
पलाशस्य च वीजानि चिप्त्वा कुर्याद्रसायनम् ॥
पित्तश्लेष्माधिकञ्चैव निहन्याद् ग्रहणीगदम् ॥ ३१८ ॥

इति पित्तश्लेष्मग्रहण्याम् ।

आज्यं चतुष्पलं शुद्धं घनं तान्तवविस्तृतम् ।
क्षुद्राद्रीरिष्टपत्रैश्च मधूकपर्णिकादिभिः ॥ ३१९ ॥
तिग्मांशुकरसं पक्वं पुटिताभ्रचतुष्पलम् ।
प्रस्थार्द्धं पयसो दद्या न्नारिकेलोदकस्य च ॥ ३२० ॥
पचेत्पाकविधानज्ञो वह्निना मृदुनाशनैः ।

त्रिफलात्रिकटुवह्नि विडङ्ग जीरकद्दयम् ॥ ३२१ ॥
जातीफल जातीकोष लवङ्ग भद्रमुस्तकम् ।
कङ्कोलकञ्च संचूर्ण्य शाणमात्रं चिपेत् पृथक् ॥ ३२२ ॥
पाक ज्ञात्वा समुद्धृत्य भ्रामराष्टपलान्वितम् ।
रसकादिविधानेन खादेन्माषाष्टक पुन ॥ ३२३ ॥
सर्वव्याधिविनिर्मुक्तो जीवेद्दर्षशतं सुखी ।
नागार्जुनेन रचितं रसाख्यमिदमुत्तमम् ॥ ३२४ ॥
विनापि परिहाराद्यै र्लोहोदितफलप्रदम् ॥

इति लौहाभ्रकम् ।

शङ्खस्य नाभिचूर्णञ्च सुराचारञ्च सैन्धवम् ।
टङ्कणञ्च खटीशुभ्रा वराटोभयमाचिकम् ॥ ३२५ ॥
शण गुडञ्चयशदं पूर्वोक्त शुभताम्रकम् ।
तुरटीधूमसारञ्च नवसार निशासिता ॥ ३२६ ॥
सर्वं समं गृहीत्वा तु ह्ये कविंशतिभिर्दिनै ।
जलोपितञ्च तत्सर्वं स्थापयेद्दिधिविन्निपक् ॥ ३२७ ॥
तत उद्धृत्य सक्षुद्य शिलाया पेषयेन्नर ।
पिष्ट्वा पिष्ट्वा पुन पिष्ट्वा त्रिधा पिष्टि प्रकारयेत् ॥ ३२८ ॥
शरेषु ताञ्च सलेप्य कोष्टिकायन्त्रगे पचेत् ।
तीव्राग्निना दिनेकेन पक्व पक्व समाहरेत् ॥ ३२९ ॥
एतद्रसायनं दिव्य खर्पराख्य महोत्तमम ।
सर्वनेत्रामयान् हन्ति विषमज्वरनाशनम् ॥ ३३० ॥

इति खर्पराख्य रसायनम ।

—०—

हनुमन्यास्तम्भार्दितशिर कम्पभ्रमशङ्खतोदश्रवण दशनशूलाव-
भेदशयन नयनेन्द्र लुप्तघ्राणादच्छे ड वाधिर्यपीनस पूयरक्त मतिनाह

घ्राणाचिग्रीवातिमिराभिष्यन्दमूर्द्दहतानाम्। शिरोवस्ति प्रधान अनायाश्रये पिठे स्थापयित्वा पादाभ्यङ्ग कार्य पुरा भुक्तवता वस्तिचर्म गव्य माहिष वा कषायमष्टागुलोच्छ्रितं द्विमुख शिर प्रमाणमादाय त निर्बलीक कृत्वा ललाटे सूत्रेण बद्रा। सुखो ष्णाम्बुपरिक्लिन्नमाषपिष्टानुलिप्तमपरिस्रावीकृत्य ततोऽस्य यथा व्याधिदोषहृङितभेषजसिद्धमन्यतर स्नेहमासिञ्चेत्। केशभूमेरु पर्य्यष्टागुल तावच्च धार्य्यो यावत्कर्णमुखनासाभ्य स्नेहस्रावी वेद नोपशमो वा न भवेत् विशेषतस्तु वातविकारेष्वष्टादशमात्रा सहस्राणि पित्तरक्तजेष्वष्टौ ,षट्कफजेषु सहस्रमारोग्य प्रति सर्व कालप्रतिषिद्ध । प्रयोज्यस्तु शिरोवस्ति त्र्यहानि पञ्चाहानि सप्त दिनानि वा तत पानीयन्तु स्नेह विमोच्य वस्ति शिर' स्कन्द ग्रीवापृष्टललाटादीननुसुख पाणिभ्या मृद्नीयात्। तत सुखो ष्णाम्बुपरिसिक्तगात्र शालिपिष्टकादीना जाङ्गलानूपरसेन दाडि माम्लैर्मात्रा भोजयेत्।

सर्वेन्द्रियाणा हि बल केशाना दृढमूलताम्।
करोति वाग्विशुद्धिञ्च मूर्ध्नि तैलाबुसेचनात्॥ ३३१॥

इति शिरोवस्ति ।

—०—

सप्तोत्तर मर्म्मशतम्। तानि मर्माणि पञ्चात्मकानि। तद्यथा मासमर्म्माणि, शिरमर्म्माणि, स्नायुमर्म्माणि, अस्थिमर्म्माणि, सन्धि मर्म्माणि चेति। तत्रैकादशमासमर्म्माणि, एकचत्वारिंशत् सिरा मर्म्माणि। सप्तविंशति स्नायुमर्म्माणि अष्टावस्थिमर्म्माणि। वि शतिसन्धिमर्म्माणि, तदेतत् सप्तोत्तर मर्म्मशतम्। तेषामेकादशै कस्मिन् सक्थ्रिभवन्ति। एतेनेतरसक्थ्यिबाहू च विख्यातौ। उदरोरसोर्द्वादश चतुर्दशपृष्टे ग्रीवा प्रत्यूर्ध्व सप्तत्रिंशत्। तत्र

सक्थिमर्म्माणि क्षिप्रतलहृदयकूर्च्चकूर्च्चशिरो गुल्फेन्द्रवस्तिजान्वाण्यूर्व्वीलोहिताक्षाणि विटपश्चेति। एतेनेतरसक्थिव्याख्यातम्। उदरोरसस्तु गुदवस्तिनाभिहृदयस्तनमूलस्तनरोहितापलापान्यपस्तम्भौ चेति। पृष्टमर्म्माणि तु कटिकतरुणकुकुन्दरनितम्बपार्श्वसन्धिबृहत्यंसफलकान्यंसौ चेति। बाहुमर्म्माणि तु क्षिप्रतलहृदयकूर्च्चकूर्च्चशिरो मणिबन्धेन्द्रवस्तिकूर्परारण्यूर्व्वी लोहिताक्षाणि कक्षधरश्चेति। एतेनेतरो बाहुर्व्याख्यातः। जत्रूर्ध्वं मर्म्माणि चतस्रो धमन्योऽष्टौ मातृका द्वे कृकाटिके द्वे विधुरे द्वौ फणौ द्वावपाङ्गौ द्वावावर्त्तौ द्वावुत्क्षेपौ द्वौ शङ्खावेकास्थपनी पञ्चसीमन्ताश्चत्वारि-शृङ्गाटकान्येकोऽधिपतिरिति। तत्र तलहृदयेन्द्रवस्तिगुदस्तनरोहितानि मांसमर्म्माणि। नीलधमनीमातृका शृङ्गाटकापाङ्गस्थपनी फणस्तनमूलापलापापस्तम्भहृदयनाभिपार्श्वसन्धि-बृहतीलोहिताक्षोर्व्व्यः शिरामर्म्माणि। आणिविटपकक्षधर-कूर्च्चकूर्च्चशिरोवस्ति क्षिप्रांसविधुरोत्क्षेपाः स्नायुमर्म्माणि। कटिकतरुणनितम्बौ सफलकशङ्खास्त्वस्थिमर्म्माणि। जानुकूर्परसीमन्ताधिपति गुल्फमणिबन्धकुकुन्दरावर्त्तकृकाटिकाश्चेति सन्धिमर्म्माणि। तान्येतानि पञ्चविकल्पानि मर्म्माणि भवन्ति। तद्यथा, सद्यःप्राणहराणि, कालान्तरप्राणहराणि, विशल्यघ्नानि, वैकल्यकराणि, रुजाकराणीति। तत्र सद्यःप्राणहराण्येकोनविंशतिः कालान्तरप्राणहराणि त्रयस्त्रिंशत्, त्रीणि विशल्यघ्नानि चतुश्चत्वारिंशद्वैकल्यकराणि, अष्टौ रुजाकराणीति। उक्ताश्च श्लोकाः।

> शृङ्गाटकान्यधिपतिः शङ्खौ कण्ठशिरोगुदम्।
> हृदयं वस्तिनाभी च घ्नन्ति सद्यो हतानि च॥ ३३२॥
> वक्षोमर्म्माणि सीमन्ततलक्षिप्रेन्द्रवस्तयः।
> कटीकतरुणे सन्धौ बृहत्यौ ये च पार्श्वयोः॥

नितम्बाविति चैतानि कालान्तरहराणि च॥ ३३३ ॥
उत्क्षेपौ स्थापनी चैव विशल्यघ्नानि निर्दिशेत्॥ ३३४ ॥
लोहिताक्षाणि जानूर्वोः कूर्च्चौ विटपकूर्परा: ।
कुकुन्दरे कक्षधरे विधुरे सकृकाटिके ॥ ३३५ ॥
अंसांसफलकापांगा नीले मन्ये फणे तथा ।
वैकल्यकरणान्याहु रावर्त्तौ द्वौ तथैव च ॥ ३३६ ॥
गुल्फौ द्वौ मणिबन्धौ द्वौ द्वे द्वे कूर्च्चशिरांसि च ।
रुजाकराणि जानियादष्टावेतानि बुद्धिमान्॥ ३३७ ॥
सद्यः प्राणहरं हन्ति सप्ताहाभ्यन्तरे हितम् ।
कालान्तरहरं पक्षान्मासाद्वा हन्ति वै क्वचित्॥ ३३८ ॥
यथा चानुविशल्यघ्न वैकल्यञ्च रुजाकरम् ।
पूर्वमुद्धतशल्येन मृत्युदं ये रुजाकरे ॥ ३३९ ॥
विद्धमन्ते तु मर्म्मे तदन्यं यश्चान्तरावकृत् ।
कदाचिद्वैकल्यकर क्षिप्रं हन्याद्वहिसुरतम्॥ ३४० ॥
इन्द्रियार्थेषु संवित्ति र्मनोबुद्धिविपर्य्ययः ।
रुजश्च तीव्रा विविधा भवन्त्याशुहरे हते ॥ ३४१ ॥
हते कालान्तरहरे ध्रुवो धातुक्षये नृणाम् ।
ततो धातुक्षयाज्जन्तु र्वेदनाभिश्च पीड्यते ॥ ३४२ ॥
हते वेकल्यजनने केवलं वैद्यनैपुणात् ।
शरीरक्षयमासाद्य विकलत्वमवाप्नुयात्॥ ३४३ ॥
विशल्यघ्नेषु विज्ञेयं पूर्वोक्तं यच्च कारणम्॥ ३३४ ॥
रुजाकराणि मर्म्माणि क्षतानि विविधा रुजः ।
कुर्वन्ति तानि वैकल्यं कुवैद्यवशगो यदि ॥ ३४५ ॥
छेदभेदाभिघातेभ्यो दहनाद्दारणात्तथा ।
उपघातं विजानीया न्मर्म्मणा तुल्यलक्षणम्॥ ३४६ ॥

अग्निः सोमोऽनिलः सत्त्वं रजश्च तम एव च ।
प्रायेण मर्मसु नृणां भूतात्मा चावतिष्ठते ॥
तस्मान्मर्मस्वभिहता न जीवन्ति शरीरिणः ॥ ३४७ ॥

छिन्नेषु पाणिचरणेषु सिरा नराणां
सङ्कोचमेत्यसृगल्पमतो निरेति ।
प्राप्याऽमितव्यसनमुग्रमतो मनुष्याः
संछिन्नशाखतरुवन्निधनं न यान्ति ॥ ३४८ ॥

क्षिप्रेषु तत्र सतलेषु हतेषु चोग्रं
गच्छत्यसृग्बहुरुजं च करोति वायुः ।
एवं विनाशमुपयान्त्विह तत्र विद्धाः
किञ्जल्कपत्रमथनादिव पङ्कजानि ॥ ३४९ ॥

मर्माण्यधिष्ठाय हि ये विकारा मूर्च्छन्तिकाये विविधा नराणाम् ।
प्रायेण ते कृच्छ्रतमा भवन्ति नरस्य यत्नैरभिसेव्यमानाः ॥३५०॥

इति मर्मनिर्देशः ।

अशीतिर्वातजा रोगाः स्वरभेदो विषादिकम् ।
पादशूल पाददाहं पादयोर्भङ्गसुप्तते ॥ ३५१ ॥
गुल्फग्रहं पिण्डकार्त्ति र्जानुनोर्भेदनं तथा ।
ऊरुस्तम्भोरुसादौ च पांगुल्यं गुल्फगृध्रसी ॥ ३५२ ॥
गुदभ्रंशो गुदस्यार्त्ति राचेपौ मुष्कयोरपि ।
शिरः स्तम्भो वङ्क्षणार्तिः श्रोणिभेदोऽथ खञ्जता ॥ ३५३ ॥
उदावर्तः सविड्भेदः कुब्जत्वं वामनं तथा ।
त्रिकपृष्ठग्रहो कुक्षौ वेष्टकौ पार्श्वमर्दकः ॥ ३५४ ॥
हृद्भेदो हृद्द्रवश्चैव हर्षभेदो च वक्षसः ।
ग्रीवास्तम्भो बाहुशोषो मन्यास्तम्भश्च कम्परुक् ॥ ३५५ ॥
हनुग्रहश्चैव श्यावौ च दन्तशैथिल्यभञ्जने ।

वाक्सङ्गो मूकता चैव शोषश्चास्य कषायता ॥ ३५६ ॥
रसानामनभिज्ञत्वं गन्धनाशोऽथ कर्णके ।
उच्चैः श्रवणबाधिर्य्य मशब्दश्रवणं तथा ॥ ३५७ ॥
वर्त्मनोः स्तंभसंकोचौ तिमिरं नेत्रशूलिनम् ।
अक्षिभ्रुवोः स्फुरत्वञ्च भेदः शङ्खललाटयोः ॥ ३५८ ॥
शिरोर्त्तिः केशविस्फोटोऽर्दिताक्षेपप्रदण्डकाः ।
एकसर्वाङ्गरोगौ च स्तंभः पक्षवधः श्रमः ॥ ३५९ ॥
जृम्भणश्च स्मितत्वञ्च प्रलापो स्वप्नवेपथुः ।
विश्वाचीरौक्ष्यपारुष्यौ ग्लानिः श्यावारुणाभताः ॥ ३६० ॥

—०—

चत्वारिंशच्च पित्तजा श्रोष्टशोषोऽथ धूमकः ।
अम्लको वमथुर्दाहो विपाकः प्रवलोष्मता ॥ ३६१ ॥
अन्तर्दाहोऽग्निसादश्च अतिस्वेदोऽग्निगन्धता ।
अथैकदेशदरणं क्लेदो मांसास्रजोरपि ॥ ३६२ ॥
त्वग्दाहो रक्तपित्तञ्च दारणं मांसमर्मणोः ।
कोठमण्डलविस्फोटाः रक्तास्यं हरितालता ॥ ३६३ ॥
हरिद्रागुलिकाकारं चक्षुः तृष्णा सकामला ।
तिक्तास्यता पूतिमुख मासगन्धि भवेत्तनु ॥ ३६४ ॥
तमः प्रवेशनं चास्य गुदमेढ्राक्षिपक्तयः ।
हरिद्रमूत्रता वक्त्रा जीवादानमलक्षिता ॥ ३६५ ॥

—०—

विंशतिः श्लेष्मजा तन्द्री ह्यतिनिद्राङ्गगौरवम् ।
आलस्यं मुखमाधूर्य्यं स्तिमितत्वं मुखस्रवः ॥ ३६६ ॥
श्लेष्मोद्गारो मुखाधिक्यो वलासो धमनीचयः ।
उरःकण्ठप्रलापौं च गलगण्डोऽतिनिद्रता ॥ ३६७ ॥

श्वेताभो मूत्रबाहुल्य मुर्दद: शीतवह्निना ।
अमोख्याता समालोक्य अष्टी च गुणकर्मभिः ॥ ३६८ ॥
इत्यशीतिर्वातजाय चत्वारिंशच्च पित्तजा: ।
विंशतिः कथितं पूर्वैः श्लेष्मरोगोपदर्शनम् ॥ ३६९ ॥
इति वातपित्तश्लेष्मजरोगाणां गणना ।
चिकित्सितं वातहरं पथ्यसाधनमौषधम् ।
प्रायश्चित्तप्रशमन प्रकृतिस्थापनं हितम् ॥ ३७० ॥
यज्जरा व्याधिविध्वंसि भेषजं तद्रसायनम् ।
दीर्घमायुर्धृतिं मेधा मारोग्यं तरुणं वयः ॥ ३७१ ॥
प्रभां वर्णं स्वरौदार्य्यं देहेन्द्रियबलप्रदम् ।
वाक्सिद्धिं प्रणतां कान्तिं लभतेऽन्यानुसायनात् ॥ ३७२ ॥
पूर्वे वयसि मध्ये वा शुद्धकाय: समाचरेत् ।
नाविशुद्धशरीरस्य युक्तो रासायनो विधिः ॥
न भाति वाससि क्लिष्टे रङ्गयोग इवार्पित: ॥ ३७३ ॥
शीतोदकं पय: चौद्रं घृतमेकैकशो द्विश: ।
त्रिश: समस्तमथवा प्राक्पीतं स्थापयेद्वय: ॥ ३७४ ॥
मंडूकपर्ण्याः स्वरस: प्रभाते प्रयोज्य यष्टीमधुकस्य चूर्णम् ।
रसो गुडूच्यास्तु समूलपुष्प: कल्क: प्रयोज्य: खलु शङ्खपुष्पा: ॥३७५
आयु: प्रदान्यामयनाशनानि बलाग्निवर्णस्वरवर्धनानि ।
मेध्यानि चैतानि रसायनानि मेध्याविशेषेण च शङ्खपुष्पी ॥३७६॥
मधुकेन तुगाक्षीर्या पिप्पल्या लवणेन च ।
त्रिफलासितया वापि युक्तासिद्धं रसायनम् ॥ ३७७ ॥
असिततिलसमेतैश्छिन्नपत्रस्य भृङ्गैः
प्रतिदिनमपियुक्तैः स्यान्नरः कामरूपः ।
अमृतफलसिताद्यैर्भक्षितैस्तैर्द्विमासात्

प्रहतगणसमूहः कृष्णकेशश्चिरायुः ॥ ३७८ ॥
चूर्णीकृतं भृङ्गरजस्य पत्रं कृष्णैस्तिलैरामलकैश्च सार्द्धम्।
सितासमं भक्षयतां नराणां न व्याधयो नैव जरानमृत्युः ॥३७
सम्यग् भृङ्गरजः चूर्णं वस्त्रपूतः प्रयत्नतः।
क्षीरन्तु समभागेन मासमेकं नियोजयेत् ॥ ३८० ॥
वर्षेनान्धो गमनरहितो मत्तमातङ्गगामो
मूको वाग्मीश्यवणरहितो दूरशब्दानुश्रावी।
षण्डः पुली भवति पलितो नीलजीमूतकेशो,
जीर्णादन्ताः पुनरपि दृढावज्रदेहा भवन्ति ॥ ३८१ ॥
तिस्रस्तिस्रस्तु पूर्वाह्णे भुक्ता वा भोजयेन्नरः।
पिप्पल्यः किंशुकक्षार भाविताघृतभर्जिताः ॥ ३८२ ॥
प्रयोज्या मधुसर्पिर्भ्यां रसायनगुणैषिणा।
जेतुं श्वासं क्षयं शोथं हिक्कां कासं गलग्रहम् ॥ ३८३ ॥
अर्शांसिग्रहणीरोगं पांडुतां विषमज्वरम्।
वैस्वर्यं पीनसं शोथं गुल्मवातबलासकम् ॥ ३८४ ॥
सिन्धूत्थशर्करागुण्ठो कणामधुगुडैः क्रमात्।
वर्षादिष्वभयाप्राश्या रसायनगुणैषिणा ॥ ३८५ ॥
ग्रीष्मे तुल्यगुडां ससैन्धवयुतां मेघावनद्धांवरे।
सार्द्धं शर्करया शरद्यमलया शुण्ठ्यां तुषारागमे॥
पिप्पल्याशिशिरे वसन्तसमये क्षौद्रेण संयोजिता।
राजन् भक्षहरीतकीं प्रतिदिनं नश्यन्ति ते व्याधयः ॥ ३८६ ॥
जरणान्तेऽभयामेकां प्राग्भुक्ते च विभीतकम्।
भुक्ते तु मधुसर्पिर्भ्यां चत्वार्यामलकानि च ॥ ३८७ ॥
प्रयोजयेत्समानेकं त्रिफलायारसायनम्।
जीवेद्वर्षशतं पूर्णं मजराव्याधिरेव च ॥ ३८८ ॥

विड़ङ्गासनधात्रीणां चूर्णं लोहरजो घृतम्।
एतत्समप्राश्य वृद्धोऽपि तारुण्यमधिगच्छति ॥ ३८८ ॥
कृमिघ्नामलकापथ्या कृष्णालोहरजो घृतम्।
तैलान्वितं रजो लौहं जरयानाभिभूयते ॥ ३८० ॥
मासं वचाश्वाप्युपसेव्यमाना चीरेण तैलेन घृतेन वापि।
भवन्ति रक्षोऽभिरहष्टरूपामेधाविनो निर्मलवर्य्यवाचः ॥३८१॥
तीव्रेण कुष्टेन परीतमूर्त्तिः यः सोमराजीं नियतेन खादेत्।
सम्वत्सरं कृष्णतिलं द्वितीयं ससोमराजीव वपुर्विधत्ते ॥ ३८२ ॥
पुनर्नवस्यार्धपलं नवस्य पिष्टा पिबेद्यः पयसार्द्धमासम्।
मासत्रयं तत्त्रिगुणं समं वा जीर्णोऽपि भूयः सः पुनर्नवः स्यात् ॥३८३
ये मासमेकं स्वरसं पिबन्ति दिने दिने भृङ्गरजः समुत्थम्।
क्षीराशिनस्ते बलवीर्य्ययुक्ताः समाः शतं जीवितमाप्नुवन्ति ॥३८४
शतावरीमुण्डतिकागुडूची सहस्त्रिकर्णा सह तालमूली।
एतानि कृत्वा समभागयुक्तया सर्पिर्मधुभ्यां सततं विलिह्यात् ॥३८५
जरारुजामृत्युविमुक्तदेहो भवेन्नरः कान्तिबलादियुक्तः।
विभाति देवोपम एव नित्यं शुद्धामयो भूरिविशुद्धबुद्धिः ॥ ३८६॥
पीताऽश्वगन्धा पयसाऽर्धमासं घृतेन तैलेन सुखाम्बुना वा।
कृशस्य पुष्टिं वपुषो विधत्ते बालस्य सस्यस्य यथाम्बुवृष्टिः ॥३८७॥
आभांश्च सोमराजीञ्च समभागविचूर्णिताम्।
नरः चीरेण संपीत्वा सप्तशः स्थूलतां व्रजेत् ॥ ३८८ ॥
देहकम्पे च शोषे च योगमेतत् प्रयोजयेत्।
मासमात्रोपयोगेन मतिमाञ्जायते नरः ॥
मेधावी स्मृतिमांश्चैव बलीपलितनाशनः ॥ ३८८ ॥
अश्वगन्धातसीशुण्ठी निर्गुण्डीमागधी तथा।
षड्ाऽपराजितश्चैव सप्तभागानि कारयेत् ॥ ४०० ॥

कर्षैकं भक्षयेन्नित्यं पयसाऽऽज्यं पिबेदनु ।
सन्निपातं निहन्त्याशु साध्यासाध्य न संशयः ॥
रसायनमिदं प्रोक्तं वलीपलितनाशनम् ॥ ४०१ ॥
वृद्धदारकमूलन्तु योजयेन्मधुसर्पिषा ।
समाहात् क्षीरभक्ताशी किन्नरैः सह गीयते ॥ ४०२ ॥
हस्तिकर्णरजः खादेत् प्रातरुत्थाय सर्पिषा ।
यथेष्टाहारचारोऽपि सहस्रायुर्नरो भवेत् ॥ ४०३ ॥
मेधावी बलवान् कामी स्त्रीशतानि व्रजत्यसौ ।
मधुनाश्वखवेग स्याद्दृष्टिः स्त्रीसहस्रग. ॥ ४०४ ॥
अथ मन्त्रः प्रयोक्तव्यो भिषजा वाऽभिमन्त्रणे ।
ॐ नमो महाविनायकाय अमृतं रक्षरक्षममफलसिद्धिं देहि
रुद्रस्यवचनेन स्वाहा ।
गुडूच्यपामार्गविडङ्गशङ्खिनी वचाभयाशुण्ठिशतावरीसमा ।
घृतेन लीढा प्रकरोति मानवं त्रिभिर्दिनैःश्लोकसहस्रधारिणम् ४०५
ब्राह्मीवचाभयाशामा पिप्पलीमधुसयुता ।
अस्य प्रयोगात्समाहात् किन्नरैः सह गीयते ॥ ४०६ ॥
पञ्चाङ्गमिन्द्राशनशृङ्गचूर्णं पलाष्टकं सप्तसितापलानि ।
सितार्धमानं मधु तस्य चार्द्धं घृतं क्षिपेत्सर्वमिदं विमिश्रम् ॥४०७॥
कृत्वा नरो मासचतुष्टयं यत् पयोऽभक्षीपयसा च भुङ्क्ते ।
विहाय रोगान् समस्तान्मनोजोजीवेच्चिरं यौवनसंश्रितश्री. ॥४०८॥
द्रोणीमार्द्रं पलाशस्य सपिधानं निरूपितम् ।
धात्रीफलसहस्रेण नीरुजा मृद्दारुणी ॥ ४०९ ॥
नीरन्ध्रं निर्दहेत्सम्यक् गोमयस्य च वह्निना ।
स्विन्नमामलकं पुष्प पश्चादुद्धृत्य चूर्णकम् ॥
गोण्डोत्पलचूर्णाना,मध्येवाढकसंयुतम् ॥ ४१० ॥

तत्तुल्येन शिलाह्वस्य विडङ्गस्याढ़केन च।
सर्पिर्मधिकतैलानां माढ़कानां पृथक् पृथक् ॥ ४११ ॥
तत्संस्थाप्य विसृष्टं सुभाण्डे घृतभाविते।
ततोऽग्निबलमालोक्य प्रयुञ्जीत यथाविधिः ॥ ४१२ ॥
एतद्रसायनं श्रेष्टं महामुनि निषेवितम्।
अनेनाब्दमतं पूर्णं वपुस्तिष्ठति निर्जरम् ॥ ४१३ ॥
अङ्गानाञ्च न शैथिल्यं नच लावण्यशून्यता।
जायते नच वैकल्य मिन्द्रियाणां कदाचन ॥ ४१४ ॥
कासश्वासातिसारज्वर पिटककटीकुष्टमेदोविकारान्।
मूत्राघातोदरार्शः श्वयथुगलशिरः स्रावशूलाक्षिरोगान् ॥४१५॥
ये चान्ये वातपित्तश्रमजकफ क्षता व्याधयः सन्ति जन्तो।
तांस्तानभ्यासयोगादपनयति पयः पीतमन्ते निशायाः ॥४१६॥
अम्भसः प्रसृतान्यष्टौ रवावनुदिते पिवेत्।
वातपित्तकफान् हत्वा जीवेद्वर्षशतं नरः ॥ ४१७ ॥
व्यङ्गवलीपलितघ्नं पीनस वैस्वर्य्य कासशोथघ्नम्।
रजनीचर्येम्बुनस्यं रसायनं दृष्टिजननञ्च ॥ ४१८ ॥
विगतघननिशीथे प्रातरुत्थाय नित्यं
पिबति खलु नरो यो घ्राणरंध्रेण वारिं।
स भवति मतिपूर्णश्चक्षुषाताक्ष्य तुल्यो
वलिपलितविहिनः सर्वरोगैर्विमुक्तः ॥ ४१९ ॥
प्रसन्नदृष्टिर्दृढ़दन्तकेशः प्रशान्तवक्त्रः पलितैर्विहीनः।
पिड़िका विनाशः कमलाश्यगन्धी नस्योपसेवी भवतीह मर्त्यः ॥४२०
तत्त्रिफलाम्बु निशिस्थं वलीपलितहरं दृष्टिजननञ्च।
प्रसृतत्रयं प्रपेयं नासिकरंध्रेण नैशिकं तोयम् ॥ ४२१ ॥
दुर्नामश्वासकासज्वरवमथु वपापांडुता नेत्ररोगान्।

हिक्काकुष्ठातिसारस्त्रभ्रमदसहग्राऽजीर्णशूलप्रदोषान् ॥
तृष्णाशूलांसपित्त ज्वरविगतजरारोचकानाह्वातान् ।
हन्यादेतानवश्यं मधुनि परिगता पूतना चाम्लपित्तम् ॥ ४२२ ॥

इति मधुहरीतकी ।

अथ पलं गुग्गुलरत्र योज्यं पलत्रयं व्योषपलानि पञ्च ।
पञ्चानि चाष्टौ त्रिफलारजस्य कर्षं लिहन् यात्यमरत्वमेव ॥४२३॥

इति लोहगुग्गुलु ।

त्रिकण्टविदारिनिस्तुष तिल मधुपली रजयतु प्रस्थम् ।
भल्लातकमस्थयुत तत्समान गुडूच्याश्च ॥ ४२४ ॥
पञ्चत्रिंशन्मधुनो व्योषस्याष्टौ पलानि दशवह्नि ।
द्विगुणवाराही सप्त दशगुणा कर्करा सहता च ॥ ४२५ ॥
खादेद्यथाग्निर्हन्तुं रोगानोकं चयं कासम् ।
अश्मर्युदरभगन्दरकुष्ठवलीपलितपीनसानाख्यम् ॥४२६ ॥
नरसिंहसदृशविक्रममन्यान्यप्यभिवाञ्छितानि लभते ।
बलवर्णस्वरकान्ति पुष्ट्युत्साहसत्वसयुक्ताम् ॥ ४२७ ॥
उपयुञ्ज्य चूर्णमिदं सर्वरोगहरश्च नरसिंहाख्यम् ।
पुत्रान्जनयति वीरान् नरसिंहपराक्रमानरोगान् ॥ ४२८ ॥
वाराहमूर्धवल्कन्दो वाराहीकन्दसंज्ञित ।
भिषजातदलाभेपि चर्मकारालुकोमत ॥ ४२९ ॥

इति नरसिंहचूर्णम् ।

अश्वगन्धापल त्रिंशच्चूर्णयित्वा विचक्षण ।
वृद्धदारकचूर्णेन समभागन्तु कारयेत् ॥ ४३० ॥
स्थापयित्वा घटे दिव्ये सर्पिषा परिभाविते ।
कर्षमेकं समश्नीया च्चूर्णस्य पयसा सह ॥ ४३१ ॥

घवाहिकस्य खेदस्य परिहारो न विद्यते।
करीवनित्य स्रवति सर्वदोषविवर्जितम् ॥ ४३२ ॥
तेजसा प्रभवत्युग्रो रश्मिवानिवभास्करः।
भवत्येव चतुर्मासे वलीपलितवर्जितः ॥ ४३३ ॥

इत्यश्वगन्धाद्यं चूर्णम्।

वृद्धदारुत्रिवृद्दन्ती कदम्बार्जुनगोक्षुरा।
वाट्यालकाजकर्णी च वाजिगन्धाशतावरी ॥ ४३४ ॥
कर्पासीपृश्निपर्णी द्वे वह्निश्चैवापराजिता।
कञ्चुकीतालमूलो च तृहत्पञ्चौ पलाशिका ॥ ४३५ ॥
ग्रन्थिकं चित्रकं चैव विश्वेदेवावचामृता।
बाणपुष्पी च पाठा च विम्बीवरुण एव च ॥ ४३६ ॥
शिग्रु कुलिशभङ्गी च मुण्डी च कोकिलाख्यकः।
अर्कक्षीरं शताह्वा च वचाचव्यफलत्रिकम् ॥ ४३७ ॥
यवानी चाजमोदा च द्विजीरं धान्यतण्डुला।
विडङ्गमुस्ततालीशं निम्बं लवणपञ्चकम् ॥ ४३८ ॥
एलापुष्करनागाह्व त्वक्पत्र हस्तिपिप्पली।
फलीकुष्ट शठीरेणु जलहिंगु सवान्नकम् ॥ ४३९ ॥
पाषाणभेदो वृचाम्ल भद्रोत्कटवितुन्नकः।
पलिकाभागतो ग्राह्या गुडूचीविश्वदारुकम् ॥ ४४० ॥
स्नुहीपलाशमृत्यार्श्व शिखरीविडक गणा।
स्वर्जिका यावशूकाख्या चैषा चार पलोन्मितं ॥ ४४१ ॥
अभ्रकस्य पलान्यष्टौ चत्वारिगन्धस्य च।
पलद्वयरसं ग्राह्यं लोह चाष्टपलं तथा ॥ ४४२ ॥
गवाचीभृङ्गकेशी च शालिंचं केशराजकम्।
माणकन्द, फटिक्षच दहनो हस्तिकर्णक ॥ ४४३ ॥

भल्लातमुसलीशुण्ठी त्रिफलावज्वबल्लापि ।
एषां रसे पृथग्लोहं पुटयेन्मर्दयेत्तथा ॥ ४४४ ॥
ग्रन्थिमान्मारिपर्थ्यैव चारं वृहतीका तथा ।
उल्कटो लोहितो बह्नि माणो बाणरसैः शुभैः ॥ ४४५ ॥
पुटयेदभ्रकञ्चैव मयसञ्च यथाविधिः । ·
काकमामणि पिण्डेन पयसा संयुतेन च ॥ ४४६ ॥
यावत्पिण्डो भवेत्ताव च्छास्त्रविन्मृदुवह्निना ।
एकीकृत्यशुभे भाण्डे स्थापयेद्रसमोपितम् ॥ ४४७ ॥
सर्पिषामकरन्देन भक्षयेत्ल्यंह्नं तु सः ।
अनुपिबेत्पयः क्षीरं यूषं मांसरसं तथा ॥ ४४८ ॥
भोजनं चाग्निसापेक्षं कार्य्यञ्चैव सदं तथा ।
विहितञ्च मितं चाद्या दोषधे पाकमागते ॥ ४४८ ॥
आहारेण समं कार्यं नित्यमेवाल्पवह्निना ॥
अग्निवृद्धिकरः कायारोगाणां चापहारकः ॥ ४५० ।
वाते पित्ते कफे शूले हृद्रोगे श्वासकासयोः ।
क्षये च विविधे घोरे शोथे चैवाङ्गसंगमे ॥ ४५१ ॥
आमवाते त्रिकशूले शक्तिशूले च सर्व्वगे ।
अम्लपित्ते सशूले च शोथे सर्वोदरे तथा ॥ ४५२ ॥
पुत्रकार्य्ये मृते योन्यै पुंस नार्य्याभिपर्त्तोः ।
अयमेव हितो नित्य शुक्रवृद्धिकरः परः ॥ ४५३ ॥

इति वृहदारुकल्कस्थः ।

—०—

जगति ज्योतिष्मतीप्रसिद्धगुणिनो तस्यास्तैलं निष्कासयित्वा जीर्णं पुराणमान्यग्रेन मत्स्यण्डिमधुरेण । पाणितलार्द्ध मंहढा मत्स्यं भक्षयेत दर्शयेत्पञ्च यावत् नातःपरतरं वृद्धिः कार्य्या-

मासस्थितिर्येषा पलमप्युत्तममात्रा हुतभुग्बलानुरोधेन भिषजा-नानुकल्पनीया एव तैलाढ़कमुपयुज्यमहाबलो महाप्राणः षोडश-वर्षाकृतिर्निरोगी भवति। इति ज्योतिष्मतीतैलपानविधिः।

विडङ्गसारो मेघाख्यो रक्तवह्निरुष्करः।
हस्तिकर्णः सितार्कस्तु श्वेतवर्षासमुद्भवम् ॥ ४५४ ॥
वाकुचीमुण्डिकाभृङ्गो राजकों वृद्धदारकः।
गुडूच्यतिबलारास्ना तालमूलीशतावरी ॥ ४५५ ॥
पिण्डारकश्चैडगजो वैडालः केशराजकः।
एकैकं पलमेतेषां ग्राह्यं समधुना घृतम् ॥ ४५६ ॥
रसस्यैकं पलं ग्राह्यं लोहस्य पलविंशतिः।
चत्वारिंशत्तथाभ्रस्य शुल्वं चापि चतुष्पलम् ॥ ४५७ ॥
गन्धकस्य पलान्यष्टौ षट्पलानि मनःशिला।
स्वर्णमाक्षिकचत्वारि षट्पलानि शिलाजतोः ॥ ४५८ ॥
त्रिफलात्रिकटुनाञ्च प्रत्येकञ्च पलत्रयम्।
सर्वाण्येतानि सचूर्ण्य घृतेन मधुना सह ॥ ४५९ ॥
स्निग्धे भाण्डे समालोड्य स्थापयित्वा विचक्षणः।
भक्षयेत् क्रमयोगेन लोह सर्वरसायनम् ॥ ४६० ॥

इति लोहरसायनम्।

पारदं विधिना शुद्धं पलद्वितयमितम्।
चतुष्पलं लोहचूर्णं चतुर्विंशपलं सिता ॥ ४६१ ॥
मनोह्वागन्धपाषाणहरितालञ्च गुग्गुलम्।
कासीसं हिंगुकुष्ठञ्च वचोशीररसाञ्जनम् ॥ ४६२ ॥
सारं खदिरवृक्षस्य जातीफलसमन्वितम्।
द्विपलं सूक्ष्मचूर्णन्तु सर्वषां परिकीर्त्तितम् ॥ ४६३ ॥
गगनाद्द्विपलं ग्राह्यं लोहवत्पुटितात् स्रुतात्।

शास्त्रोक्तपृथगुद्दिष्टैः संयुज्यं विधिनोचितम् ॥ ४६४ ॥
त्रिंशच्च वै फले तोये प्रस्थेन सर्पिषा सह ।
शृङ्गवेररसप्रस्थं निष्क्वाथ्यं वक्ष्यमाणकैः ॥ ४६५ ॥
त्रिवर्णादितचित्रञ्च चास्थिसंहारसूरणम् ।
नामवर्षा सगोधूम भूमिकूष्माण्डतंडुलाः ॥ ४६६ ॥
सौभाञ्जनं तालमूली मोरटं शङ्खपुष्पिका ।
पृथगष्टपलश्चैषां वारिद्रोणे विपाचयेत् ॥ ४६७ ॥
अष्टभागावशिष्टेन कषायं कारयेत्सुधीः ।
मधुनो द्वात्रिंशत्पलं क्षिपेत्तत्र सुशीतले ॥ ४६८ ॥
त्रिकटुत्रिफलासिन्धु विडं सौवर्चलं तथा ।
टङ्कणो यावशूकश्च सुरदारुपरं पराः ॥ ४६९ ॥
अम्लवेतसमृद्वीका महार्द्र मधुयष्टिका ।
शृङ्गीदुरालभामुस्तं विडङ्गं रक्तचन्दनम् ॥ ४७० ॥
जीरकञ्च सधन्याकं चूर्णं पलांशिकं पृथक् ।
दासरसायणं प्रोक्तं नराणां हितकाम्यया ॥ ४७१ ॥
न चात्र परिहारोऽस्ति विहाराहारयन्त्रणे ।
अन्नपानानि सर्वाणि भक्ष्यभोज्यानि यानि च ॥ ४७२ ॥
तानि प्रकृतिभेदज्ञो बुद्धिपूर्वं प्रदापयेत् ।
सर्वव्याधिहरञ्चैतत् स्वस्थोस्वस्थहितं सदा ॥ ४७३ ॥
इति दासरसायनं लोहम् ।
नागार्जुनो मुनीन्द्रः शशासयल्लोहशास्त्रमतिगहनम् ।
तस्यार्थस्य स्मृतये वयमेतद्विशदाक्षरैर्ब्रूमः ॥ ४७४ ॥
मेने मुनिः स्वतन्त्रे भूयः पाकं न पलपञ्चकादर्वाक् ।
सुबहुप्रयामदोषादूर्ध्वञ्च न पलत्रयोदशकात् ॥ ४७५ ॥
तत्रायसि पचनीये पञ्चपलादौ त्रयोदशपलकान्ते ।

लोहास्त्रिगुणत्रिफलाग्राह्या षड्भिः पलैरधिका ॥ ४७६ ॥
मारणपुटनस्थालीपाकास्त्रिफलैकभागसंपाद्याः।
त्रिफलाभागद्वितयं ग्रहणीयं लोहपाकार्थम् ॥ ४७७ ॥
सर्वत्रायः पुटनायथैषां सशरावसंख्यानाम्।
प्रतिपलमेव त्रिगुणं पाकार्थं क्वाथमादेयम् ॥ ४७८ ॥
सप्तपलादौ भागे पञ्चदशान्तेष्वसां शरावैश्च।
यावदेकादशकान्तैरधिकं तद्वारिकर्त्तव्यम् ॥ ४७९ ॥
तत्राष्टमो विभागः शेषः क्वाथस्य यत्नतः स्थाप्यः।
तेन हि मारणपुटनस्थालिपाका भविष्यन्ति ॥ ४८० ॥
पाकार्थे तु त्रिफला भागद्वितये शरावसंख्यातम्।
प्रतिपलमम्बुसमं स्यादधिकं द्वाभ्यां शरावाभ्याम् ॥ ४८१ ॥
तत्र चतुर्थो भागः शेषो निपुणैः प्रयत्नतो ग्राह्यः।
अयसः पाकार्थत्वात् स च सर्वस्मात् प्रधानतमः ॥ ४८२ ॥
पाकार्थमश्मसारे पञ्चपलादौ त्रयोदशपलान्ते।
दुग्धशरावद्वितयं पादैरेकाधिकैरधिकम् ॥ ४८३ ॥
पञ्चपलादिमात्रासद्लाभे तदनुसारतो ग्राह्यम्।
चतुरादिकमेकान्तं शक्तावधिकं त्रयोदशकात् ॥ ४८४ ॥
त्रिफलात्रिकटुकचित्रककान्तक्रामकविड़ङ्गचूर्णानि।
अन्यान्यपि देयानि पत्रागस्य च बीजानि ॥ ४८५ ॥
जातीफलजातीकोषैलाकङ्कोलकलवङ्गानाञ्च।
सितकृष्णजीरकयोरपि चूर्णान् पयसा समानि स्युः।
त्रिफलात्रिकटुविडङ्गा नियता अन्ये यथा प्रकृतिः ॥ ४८६ ॥
कालायसंदीपद्दते जातीफलादेर्लवङ्गकांतस्य।
क्षेपः प्रज्ञानुरूपः सर्वस्योनस्य चैकार्यैः ॥ ४८७ ॥
कान्तिक्रामकमेकं निःशेषप्रदोषमपहरत्ययसः।

द्विगुणत्रिगुणचतुर्गुणमाज्यं देयं यथा प्रकृति ॥ ४८८ ॥
यदि भेषजभूयस्त्वं स्तोकत्वं वा तथापि चूर्णानाम् ।
भयसासाम्यं संख्या भूयोऽल्पत्वेन भूयोऽल्पा ॥ ४८९ ॥
इति साध्यसाधनविधिः।

गजकर्णपत्रमूलैः शतावरीभृङ्गकेशराजरसैः ।
भाव्यस्थालीपाकं दद्यात् प्रत्येकमेकं वा ॥ ४९० ॥
इति स्थालीपाकभेषजानि ।

त्रिफलांबुभृङ्गकेशरशतावरिकाकन्दमाणसङ्कजरसैः।
भल्लातककरिकर्णच्छदमूलपुनर्नवा स्वरसैः ॥ ४९१ ॥
इति पुटभेषजानि । इति नागार्जुनो लेहः ।

समूलपत्रामुत्पाट्य ब्राह्मीं प्रक्षाल्यवारिणा ।
उलूखलेचोदयित्वा रसं वस्त्रेण गालयेत् ॥४९२ ॥
रसे चतुर्गुणे तस्मिन् घृतप्रस्थं विपाचयेत् ।
भेषजानि च पेष्याणि तत्रेमानि प्रदापयेत् ॥ ९३ ॥
हरिद्रामलकं कुष्टं त्रिवृत्तां सहरितकीम्।
एतेषां पलिकान् भागा च्छेषांस्तु कार्षिकान्विदुः ॥ ४९४ ॥
पिप्पल्योऽथ विडङ्गानि सैन्धवं शर्करं वचा ।
सर्वमेतत्समालोड्य शनैर्मृद्वग्निना पचेत् ॥ ४९५ ॥
एतत्प्राशितमात्रेण वाग्विशुद्धिश्च जायते ।
सप्तरात्रप्रयोगेण श्रुतमात्रन्तु धारयेत् ॥ ४९६ ॥
हन्त्याष्टादशकुष्टानि ह्यर्शांसि षड्विधानि च ।
पञ्चगुल्मान् प्रमेहांश्च कासं पञ्चविधं जयेत् ॥ ४९७ ॥
वन्ध्यानाञ्चैव नारीणां नराणामल्परेतसाम् ।
घृतं सारस्वतं नाम वर्णायुर्बलवर्द्धनम् ॥ ४९८ ॥
इति सारस्वतं घृतम्

गुडूच्यपामार्गविड़ङ्गशंखिनी वचाशतावर्य्यभयासमैरौषधैः ।
घृतं विपक्वं पिबतां प्रशस्तं वचस्तु येषां विकलञ्च जल्पताम् ॥४९९॥

इति गुडूच्यादिघृतम् ।

यत्कन्दनालदलकेसरवद्विपक्वं
नीलोत्पलस्य तदपि प्रथितं द्वितीयम् ।
सर्पिश्चतुष्कुवलयं सहिरण्यपात्रं
मेध्यं गवामपि भवेत्किमु मानुषाणाम् ॥ ५०० ॥

इति चतुष्कुवलयघृतम् ।

आजं पयः शृङ्गवेरं वचाग्निमुस्तहरीतकी ।
पिप्पल्यो मरिचं पाठा सैन्धवं दशमं घृतम् ॥ ५०१ ॥
शृङ्गवेरादयोभागा लवणान्ताः पलाष्टकम् ।
चतुर्गुणेन पयसा घृतप्रस्थं विपाचयेत् ॥ ५०२ ॥
एतत्प्राशितमात्रेण किन्नरैः सह गीयते ।
जडगद्गदमूकत्वं पानादेव प्रशाम्यति ॥ ५०३ ॥
नष्टश्च स्मरते ग्रन्थं श्रुतिश्चाप्युपजायते ।
एतत्सारस्वतं नाम स्मृतिमेधाविवर्द्धनम् ॥ ५०४ ॥

इति द्वितीयसारस्वतं घृतम् ।

मण्डूकीं सवचां सशंखकुसुमां सब्रह्मसौवर्चलाम् ।
गुञ्जां श्वेतवतीं शतावरियुतां ब्राह्मीं गुडूचीं तथा ॥ ५०५ ॥
पिष्टाशैः पलिकैरिमानि विधिवद्द्रव्याणि प्रस्थावणम् ।
सर्पिष्प्रस्थमथाढकेन पयसा युक्तिं पचेत्पाचनम् ॥ ५०६ ॥
नाम्नाष्टांगमिदं विदेहरचितं ख्यातं पिबेद्यो घृतम् ।
सश्लोकस्य सहस्रमेकदिवसेनैवाखिलं धारयेत् ॥
यच्चीणाप्रतिहीनवारि मधुरस्पष्टाभिधायी सदा ।

लोके शक्रहस्तसतीसमन्त्या पूज्यश्च नित्यं सदा ॥ ५०७ ॥

अत्यष्टांगमङ्गलं घृतम्

सतताध्ययनं वादः परतन्त्रावलोकनम् ।
सद्विद्याचार्य्यसेवा च बुद्धिमेधाकरो गणः ॥ ५०८ ॥
आयुष्यं भोजनं जीर्णे वेगानामविधारणम् ।
ब्रह्मचर्य्यमहिंसा च साहसानि च वर्ज्जयेत् ॥ ५०९ ॥
न केवलं दीर्घमथायुरश्नुते रसायनं यो विधिवन्निषेवते ।
गतिं सदिव्या मुनिसेवितां शुभां प्रपद्यते ब्रह्म तथैव चाचयम् ॥५१०

## इति वङ्गसेने रसायननिदानचिकित्साधिकारः समाप्तः ॥ ७३ ॥

---

## अथ वाजीकरणाधिकारमाह ।

रक्तेन कुणपं श्लेष्मवाताभ्यां ग्रन्थिसन्निभम् ।
पूयाभं रक्तपित्ताभ्यां क्षीणं मारुतपित्ततः ॥ १ ॥
कृच्छ्राण्येतान्यसाध्यन्तु त्रिदोषं मूत्रविड्निभम् ।
तेष्वाद्याञ्छुक्रदोषांस्तान् स्नेहस्वेदादिभिर्जयेत् ॥ २ ॥
क्रियाविशेषैर्मतिमान् स्तथैवोत्तरवस्तिभि. ।
पाययेत्सरुजं सर्पिः भिषक् शोणितशोषिणाम् ॥ ३ ॥
धातकीपुष्पखदिर दाडिमार्जुनसाधितम् ।
कुणपाख्ये पिबेत्सर्पिः शालिसारादिसाधितम् ॥ ४ ॥
ग्रन्थिभूते पिबेत्सर्पि स्थिनकोशैरथेंगुभिः ।
स्निग्धं वान्तविरिक्तञ्च निरूहमनुवासितम् ॥ ५ ॥
योजयेच्छुक्रदोषार्त्तं सम्यगुत्तरवस्तिना ।
विधिमुत्तरवस्त्यन्तं कुर्य्यादार्त्तवशुद्धये ॥ ६ ॥

स्त्रीणां स्त्रीहादियुक्तानां चतस्वार्त्तवार्त्तिषु।
कुर्य्यात्कल्कमिमञ्चापि पथ्यानां वमनानि च ॥ ७ ॥
ग्रन्थिभूते पिबेत्पाठां त्र्यूषणं वृक्षकाणि च।
दुर्गन्धे पूयसंकाशे मज्जतुल्ये तथार्त्तवे ॥ ८ ॥
पिबेद्भद्रश्रियः क्वाथं चन्दनक्वाथमेव च।
शुक्रदोषहराणाञ्च यथास्वमवधारणम् ॥ ९ ॥
योगैः समस्तैः सघृते क्ष्वेले पूपालिकां पचेत्।
तां भक्षयित्वा पीत्वा ऽनुशर्करामधुना पयः।
नरश्चटकवद्गच्छेद् शतवारं निरन्तरम् ॥ १० ॥
चूर्णं विदार्य्याः सुकृतं स्वरसेनैव भावितम्।
सर्पिःक्षौद्रयुतं लीढ्वा दशगच्छेन्नरोऽङ्गनाः ॥ ११ ॥
एवमामलकचूर्णं स्वरसेनैव भावितम्।
शर्करामधुसर्पिर्भ्यां युक्तं लीढ्वापयः पिबेत्।
एतेनाशीतिवर्षोऽपि युवेव परिहृष्यते ॥ १२ ॥
विदारीकन्दकल्कञ्च घृतेन पयसा नरः।
उदुम्बरसमं खादेद् वृद्धोऽपि तरुणायते ॥ १३ ॥
अश्वत्थफलशुङ्गाग्र मूलं त्वग्भिः शृतं पयः।
पीत्वा सशर्करक्षौद्रं वृद्धोऽपि तरुणायते ॥ १४ ॥
स्वयं गुप्ताक्षुरसयोर्बीजचूर्णं सशर्करम्।
धातोस्तेन नरः पीत्वा पयसा न क्षयं व्रजेत् ॥ १५ ॥
माषाणां पलमेकन्तु संयुक्तं मधुसर्पिषा।
तं लीढ्वानुपिबेत् क्षीरं तेन वाजी भवेन्नरः ॥ १६ ॥
कर्षं मधुकचूर्णन्तु घृतक्षौद्रसमन्वितम्।
पयोनुपानं यो लिह्यात् सगच्छेद्दशचाङ्गनाः ॥ १७ ॥
दृष्टीनां वृद्धवत्सानां माषवर्णभृतां गवाम्।

यस्त्वीरं तत्प्रशंसन्ति बलकामेषु जन्तुषु ॥ १८ ॥
शर्करायास्तुलैकं स्या देकं गव्यस्य सर्पिषा ।
पक्वा पूपालिका खादे ब्रह्मः स्युयस्य योषितः ॥ १९ ॥

इति पूपालिका ।

दध्नोर्धाढ़कमीषदम्लमधुरं खण्डस्य चन्द्रद्युतेः ।
प्रस्थं क्षौद्रपलं पलञ्च हविषः शुण्ठ्याश्चतुर्माषकम् ॥
अत्रार्धं मरिचाद्विडङ्गत इह द्वौ माषकावैकतः ।
क्षत्वा शल्कपटाच्छनैः करतलेनोन्मथ्यविस्त्रावयेत् ॥ २० ॥
मृद्भाण्डे मृगनाभिचन्दनरसस्पृष्टे गुरुधूपिते ।
कर्पूरेण सुगन्धितां तदखिलां संलोड्य संस्थापयेत् ॥
या पीता मधुरस्वरेण सुरसा सेयं रसाला तया ।
स्यातामन्मथदीपनी सुरचिताकान्तेव नित्यं प्रिया ॥ २१ ॥

इति रसाला ।

शुभेक्षितदेशसंभूतं पलशतं सम्यगश्वगन्धायाः ।
पुष्येऽहनि सचूर्णं द्रोणेऽम्भसि पचेत् सुविद्वान् ॥ २२ ॥
ज्ञात्वाष्टभागशेषं गृह्णीयात्तद्रसं सुपरिपूतम् ।
द्वे चैवात्र पलशते दद्याच्छागस्य शुद्धमांसस्य ॥ २३ ॥
सर्पिः प्रस्थमथैकं मेध्यं गोपयश्चतुर्गुणं दद्यात्
कल्कानचसमांशानूर्ध्वमतः सम्प्रवक्ष्यामि ॥ २४ ॥
काकोल्यौद्वे मृद्वी द्वे मेदे जीवकं स्वयं गुप्ताम् ।
ऋषभकमेलां मधुकं मृद्वीकां शूर्पपर्ण्यौ च ॥ २५ ॥
जीवन्तीं सोपकुल्यां बलां विदारीं शतावरीं चापि ।
दत्वा सम्यग्विपचेत्सर्पिरथोद्धृत्य पीत्वा च ॥ २६ ॥
मधुशर्करयोः कुडवं दत्वा भाण्डे स्थिते मृदितम् ।

लीढ़ातत्पाणितल यथेष्टाहारमश्नीयात् ॥ २७ ॥
क्षीणक्षतशिशुवृद्धाः क्षीणेन्द्रियाहीनमासाद्य ।
प्राश्नप्राश्नु यु सद्यो पुष्टिबलारोग्यतेजांसि ॥ २८ ॥
उपयुज्य सर्पिरेतत्समतिवर्षोऽपि युवेव भूत्वा ।
बहुश स्त्रियोऽभिगच्छेत् न चात्र शुक्रक्षयं लभते ॥ २९ ॥
पुत्रार्थिनी च नारीलभते पुत्रान् वयस्यऽतीतेऽपि ।
बन्ध्यापि लभते पुत्र प्रयोगादश्वगन्धायाः ॥ ३० ॥
उपयुक्ते य पुरुषस्त्रिमास सार्धमास वा ।
नारीशत सगच्छेन्नैव भजेद्योषितां तृप्तिम् ॥
खालित्य वलीपलितैर्न चास्य देहोऽभिभूयते चिरम् ॥३१॥
वातव्याधिभिरार्त्तास्तथैव हृद्वस्तिशूलार्त्ता ।
भुजाना सर्पिरिद नरानीरोगा भवन्तीह ॥ ३२ ॥
एवं जगद्धितार्थ सर्पिरिदं वाजिगन्धायाः ।
श्रेष्ठ वाजीकरण निर्दिष्ट पूर्वमश्विभ्याम् ॥ ३३ ॥
इति बृहदश्वगन्धाद्य घृतम् ।
अश्वगन्धाप्रस्थमेक दुग्धश्चैवाढकं द्वयम् ।
घृतप्रस्थमिद दद्यात्क्ष्णनैर्दहनिना पचेत् ॥ ३४ ॥
त्रिकटुकं चतुर्जात विडङ्ग जातिपत्रकम् ।
बला चातिबला चैव श्वदंष्ट्रा वृद्धदारुकम् ॥ ३५ ॥
पलैकञ्च मदातव्य लोह वङ्ग तथाभ्रकम् ।
प्रस्थार्ध माक्षिक दद्यात् प्रस्थार्ध शर्कराशुभा ॥ ३६ ॥
सर्वमेतद्विनिक्षिप्य स्निग्धे भाण्डे निधापयेत् ।
द्वौ कालौ भक्षयेन्नित्य समीक्ष्याग्निबल यथा ॥ ३७ ॥
अंर्दं वात हनुस्तम्भ मन्यास्तम्भ कटिग्रहम् ।
श्रोत्रसन्धिगतं वात मस्थिभङ्गञ्च गृध्रसीम् ॥ ३८ ॥

अग्निदोषञ्च त्वग्दोषं पाददोषं तथैव च।
गर्भप्रसवजान्दोषा नामगर्भस्त्रवाच्च यत् ॥ ३८ ॥
पाण्डुत्वमामवातञ्च शुक्रदोषञ्च शत्रुताम्।
सर्ववातान्निहन्त्येतं यथा सिंहो गजानिव ॥
अश्वगन्धादिविख्यातं सर्ववातरुजापहम् ॥ ४० ॥

इत्यश्वगन्धादिघृतम्।

घृतं शतावरीगर्भं क्षीरे दशगुणे शृतम्।
रेतःशुद्धिकरं तच्च शस्तं चाप्यार्त्तवार्त्तिषु ॥ ४१ ॥
यद्द्रव्यं पुरुषं कुर्य्याद्वाजीवसुरतक्षमम्।
तद्वाजीकरमाख्यातं मुनिभिर्भिषजाम्वरैः ॥ ४२ ॥
क्लीवं स्यात् सुरताशक्तस्तदभावः क्लैव्यमुच्यते।
तच्च सप्तविधं प्रोक्तं निदानं तस्य कथ्यते ॥ ४३ ॥
तैस्तैर्भावैरहृद्यैस्तु रिरंसोर्मनसि क्षते।
ध्वजः पतत्यतो नृणां क्लैव्यं समुपजायते ॥
द्वेष्यस्त्रीसंप्रयोगाच्च क्लैव्यं तन्मानसं स्मृतम् ॥ ४४ ॥
अम्लरूक्षोष्णलवणै रतिमात्रेण सेवितैः।
सौम्यधातुक्षयो दृष्टः क्लैव्यं तस्मात् प्रजायते ॥ ४५ ॥
अतिव्यवायशीलोयो न च वाजीक्रियारतः।
ध्वजभङ्गमवाप्नोति सशुक्रक्षयहेतुकम् ॥ ४६ ॥
महतामेढ्ररोगेण चतुर्थी क्लीवता भवेत्।
वीर्य्यवाहिशिराछेदात् मेहनानुन्नतिर्भवेत् ॥ ४७ ॥
बलिनः क्षुब्धमनसो निरोधाद्ब्रह्मचर्य्यतः।
षष्ठं क्लैव्यं स्मृतं तत्तु शुक्रस्तम्भनिमित्तकम् ॥ ४८ ॥
जन्मप्रभृतियत्क्लैव्यं सहजं तद्धि सप्तमम् ॥ ४९ ॥
असाध्यं सहजं क्लैव्यं मर्म्मच्छेदाच्च यद्भवेत्।

साध्यानामवशिष्टानां कार्यो वाजीकरो विधिः ॥ ५० ॥
नरो वाजीकराश्यक्ते सम्यक् शुद्धो निरामयः।
आसप्ततिं प्रकुर्वीत वर्षादूर्ध्वन्तु षोड़शात् ॥ ५१ ॥
न तु वै षोड़शादर्वाक् सप्तत्याः परतो न च।
आयुष्कामो नरः स्त्रीभिः संयोगं कर्त्तुमर्हति ॥ ५२ ॥
शुष्कं रूचं तथा काष्ठं जन्तुकीटविजर्जरम्।
धृतमाश्वविशीर्येत तथा वृद्धः स्त्रियं व्रजेन् ॥ ५३ ॥
शोषकासज्वराशांसि स्वरकार्श्यातिपाण्डुताः।
अतिव्यवायाज्जायन्ते रोगाश्च चयकादयः ॥ ५४ ॥
आयुष्मन्तो मन्दजरा वपुर्वर्णबलान्विता।
स्थिरोपचितमांसाश्च भवन्ति स्त्रीषु संयताः ॥ ५५ ॥
त्रिभिस्त्रिभिरहोभिश्च सेवेत मदिरां नरः।
सर्वर्त्तुषु नरो ग्रीष्मे पक्षाद्योषां भजेद्बुधः ॥ ५६ ॥
ग्लानिः श्रमश्च दौर्बल्यं धात्विन्द्रियबलच्चयः।
चयवृद्ध्युपदंशाद्या रोगाश्चातीव दुर्जयाः॥
अकालमरणञ्च स्या द्व्रजतः स्त्रियमन्यथा ॥ ५७ ॥
रजस्वलामकामाञ्च मलिनामप्रियामपि।
वर्णबद्धां वयोवृद्धां तथा व्याधिप्रपीड़िताम् ॥ ५८ ॥
हीनाङ्गीं मलिनां द्वेष्यां योनिदोषसमन्विताम्।
स्वगोत्रां गुरुपत्नीञ्च तथा प्रव्रजितामपि ॥
सन्ध्ययोः पर्वकाले च नोपेयात्प्रमदां नरः ॥ ५९ ॥
रजस्वलां गतवतो नरस्यासंयतात्मनः।
दृष्ट्यायुस्तेजसां हानि रधर्मश्च ततो भवेत् ॥ ६० ॥
लिङ्गिनीं गुरुपत्नीञ्च स्वगोत्रामथ पर्वसु।
वृद्धां वा सन्ध्ययोश्चापि गच्छेज्जीवितसंचयम् ॥ ६१ ॥

वयोरूपगुणोपेतां तुल्यशीलगुणान्वयाम् ।
अभिकामोऽभिकामाख्यां हृष्टो हृष्टामलं क्षताम् ॥
सेवेतप्रमदां नित्यं वाजीकरणसेवनः ॥ ६२ ॥
स्नानं सशर्करं चीरं मांसभोज्याणि गौड़काः ।
सुजलं स्वप्नसेवा च व्ययायान्ते हितानि तु ॥ ६३ ॥
स्त्रीस्वच्यं मृगयतां वृद्धानां च रिरंसताम् ।
क्लीवानामल्पशुक्राणां योगा वाजीकरा हिताः ॥ ६४ ॥
इक्षुरगोक्षुरकः शतमूली वानरिनागबलातिवला च ।
चूर्णमिदं पयसानिशिपेयं यस्य गृहे प्रमदाशतमस्ति ॥६५॥

माचीकधातुमधुपारदलोहचूर्णं
पथ्या शिलाजतुविड़ङ्गघृतानि लिह्यात् ।
एकाधिविंशतिं मह्यानि गदार्दितोऽपि
चाशीति कोऽपि रमयेत्प्रबलो युवेव ॥ ६६ ॥

गवां विरूढ़वत्सानां सिद्धं पयसि पायसम् ।
गोधूमैस्तत्सिताचौद्र सर्पिर्मिश्रं सुशीतलम् ।
भुक्त्वा वाप्यतिजीर्णोऽपि दशदारा व्रजत्यपि ॥ ६७ ॥
पिप्पलीलवणोपेतौ वस्ताण्डौ चीरसर्पिषा ।
साधितौ भक्षयेद्यस्तु सगच्छेत्प्रमदाशतम् ॥ ६८ ॥
वस्ताण्डसिद्धे पयसि भावितानसकृत्तिलान् ।
यः खादेत्स नरो गच्छेत् स्त्रीणां शतमपूर्ववत् ॥ ६९ ॥
कुलीरकूर्मनक्राणां मण्डान्येवं हि भक्षयेत् ॥ ७० ॥
उच्चटाचूर्णमप्येवं चीरेणोत्तममुच्यते ।
शतावर्य्युच्चटाचूर्णं पेयमेवं सुखाम्बुना ॥ ७१ ॥
घृतलिप्तं माषविदलं दुग्धे सिद्धं सिताज्यसंयुतम् ।
भुक्त्वा तदेव कुरुते शक्तिं रमणस्य शतयोषाम् ॥ ७२ ॥

त्रिकण्टकात्मगुप्तानां बीजचूर्णं सशर्करम्।
क्षीरेण यः पिबेन्नच्छेद् दृश्यवारं निरन्तरम्॥ ७३॥
घृतं शतावरीगर्भं क्षीरे दशगुणे पचेत्।
शर्करापिप्पलीक्षौद्र युक्तं तद्वृष्यमुच्यते॥ ७४॥

इति शतावरीघृतम्।

माषाणामात्मगुप्तानां बीजानामाढकत्रयम्।
जीवकर्षभकौ मेदे वीराद्धी शतावरी॥ ७५॥
मधुकं चाश्वगन्धा च साधयेत् कुडवोन्मितम्।
तमेवास्मिन् घृतप्रस्थे द्रव्यादृशगुणं पयः॥ ७६॥
विदारिणो दशप्रस्थ प्रस्थमिक्षुरकस्य च।
दत्वा मृदग्निना साध्यं सिद्धं सर्पिर्निधापयेत्॥ ७७॥
शर्करायास्तुगाक्षीर्याः क्षौद्रस्य च पृथक् पृथक्।
भागांश्चतुष्पलांश्चात्र पिप्पल्याश्च द्वयं पलम्॥ ७८॥
पलपूर्वमतो लीढ्वा ततोऽन्नमुपयोजयेत्।
यदीच्छेदक्षयं शुक्रं शेफसश्चोत्तमं बलम्॥ ७९॥

इति माषबलम्।

गोधूमाच्च पलशतं निःक्वाथ्य सलिलाढके।
पादावशेषे पूते च द्रव्याणीमानि दापयेत्॥ ८०॥
गोधूमं मुञ्जातफलं माषद्राक्षापरूषकम्।
काकोलीक्षीरकाकोली विदारी च शतावरी॥ ८१॥
अश्वगन्धा मखर्जूरा मधूकं त्र्यूषणं सिता।
भल्लातकं चात्मगुप्ता समभागानि कारयेत्॥ ८२॥
घृतप्रस्थं पचेदेव क्षीरं दत्वा चतुर्गुणम्।
मृदग्निनाथ सिद्धेऽस्मिन् द्रव्याण्येतानि निक्षिपेत्॥ ८३॥

एवैला पिप्पलीधान्यं कर्पूरं नागकेसरम् ।
यथालाभं विनिक्षिप्य सिताक्षौद्रपलाष्टकम् ॥ ८४ ॥
दत्वेक्षुखण्डमालोड्य विधिवद्विनियोजयेत् ।
शाल्योदनेन भुञ्जीत पिबेन्मांसरसेन वा ॥ ८५ ॥
केवलं वा पिबेदस्य पलमात्रं प्रयत्नतः ।
न तस्य लिङ्गशैथिल्यं नच शुक्रक्षयो भवेत् ॥ ८६ ॥
बल्यं परं वातहरं शुक्रसंजननं परम् ।
परमोजःकरञ्चैव पुष्टिवर्णबलप्रदम् ॥ ८७ ॥
वातपित्तहरं वृष्यं पित्तगुल्महरं परम् ।
मूत्रकृच्छ्रप्रशमनं वृद्धानां चापि शस्यते ॥ ८८ ॥
पलद्वयं तदाश्नीयात् इत्यरात्रमतन्द्रितः ।
स्त्रीणां शतं च भजते पीत्वा ह्यनुपिबेत्पयः ॥ ८९ ॥
अश्विभ्यां निर्मितं चैव गोधूमाद्यं रसायनम् ॥ ९० ॥
जलद्रोणे तु गोधूम क्वाथे तच्छेषमाढकम् ।
मुञ्जातकस्य क्वाथे तु तद्गुणं तालमस्तकम् ॥ ९१ ॥

इति गोधूमाद्यं घृतम् ।

जीवन्त्यतिबलामेदा काकोलीद्वयजीरकैः ।
साभयातिक्तता कृष्णा काकनामा रसायनैः ॥ ९२ ॥
स्वयगुप्ता शटी शृङ्गी जीवकर्षभकादयैः ।
सहाचरवराविश्व पिप्पलीमूलभर्जनैः ॥ ९३ ॥
पिष्टैस्तैलं घृतं पक्वं क्षीरेणाष्टगुणेन च ।
दत्तमनुवासनैर्न्नेयं शुक्राग्निबलवर्द्धनम् ॥ ९४ ॥
बृंहणं वातपित्तघ्नं गुल्मानाहहरं परम् ।
नस्यैः पानैश्च संयुक्तं मूर्ध्वजत्रुगदापहम् ॥ ९५ ॥

इति जीवन्त्याद्यमकम् ।

कूष्माण्डकात्पलशतं सुस्विन्नं निष्कुलीकृतम्।
प्रस्थं च घृततैलस्य तस्मिन् तप्ते निधापयेत्॥ ८६॥
त्वक्पत्रधान्यकव्योषजीरकैलार्द्रकं पलम्।
षड्ग्रन्थाचव्यमातङ्गपिप्पलीशृङ्गवेरकम्॥ ८७॥
शृङ्गाटकं कशेरुञ्च प्रलम्बं तालमस्तकम्।
चूर्णीकृतं पलांशञ्च गुडस्य तु तुलां पचेत्॥ ८८॥
शीतीभूते पलान्यष्टौ मधुनः संप्रदापयेत्।
कफपित्तानिलहरं मन्दाग्नीनां च दीपनम्॥ ८९॥
कृशानां बृंहणं श्रेष्ठं वाजीकरणमुत्तमम्।
प्रमदासु प्रसक्तानां ये च स्युः क्षीणरेतसः॥ १००॥
क्षयेण च गृहीतानां परमेतद्भिषजं मतम्।
कासं श्वासं ज्वरं हिक्कां हन्ति छर्दिमरोचकम्॥
गुड़कूष्माण्डकं ख्यातमश्विभ्यां समुदाहृतम्॥ १०१॥

इति गुड़कूष्माण्डकम्।

यत्किञ्चिन्मधुरं स्निग्धं जीवनं तर्पणं गुरु।
हर्षणं मनसश्चैव सर्वं तद्वृष्यमुच्यते॥ १०२॥
अभ्यंगच्छादनस्नानगन्धमाल्यविभूषणैः।
गृहशय्यासनसुखैर्वासोभिरविदितैः प्रियैः॥ १०३॥
विहङ्गानान्तुतैरिष्टैः स्त्रीणां वाऽऽभरणस्वनैः।
संवादनैर्वरस्त्रीणामिष्टानाञ्च हृषायते॥ १०४॥
सुरूपा यौवनावस्था लक्षणैर्वा विभूषिता।
व्यावश्या शिक्षिता चैव सा स्त्री वृष्यतमा स्मृता॥ १०५॥
जरयाऽऽहृतया शुक्रं व्याधिभिः कर्मकर्षणात्।
नराणां मरणं शस्त्रमधिव्रातादसेवनात्॥
क्षयाद्भयादविस्रावात् स्त्रीकात् स्त्रीदोषकर्षणात्॥ १०६॥

दौर्बल्यं मुखशोषश्च पाण्डुत्वं सदनं भ्रमः ।
क्लैव्यं शुक्राविसर्गश्च क्षीणशुक्रस्य लक्षणम् ॥ १०७ ॥

इति वङ्गसेने वाजीकरणनिदानचिकित्साधिकारः
समाप्तः ॥ ७४ ॥

—०—

अथ स्नेहपानाधिकारमाह ।

तत्र प्रथमरोगाऽनुत्पादनक्रममाह ।

हिताभिर्जुहुयान्नित्यं मन्तराग्निं समाहितः ।
अन्नपानसमिद्भिर्वा मात्राकालविचारवित् ॥ १ ॥
तत्र नित्यं प्रयुञ्जीत स्वस्थान् न परिहार्य्यते ।
अजातानां विकाराणां मनुत्पत्तिकरं हितम् ॥ २ ॥
सर्वमन्यत्परित्यज्य शरीरमनुपालयेत् ।
तदभावे हि भावानां सभावश्च शरीरिणाम् ॥ ३ ॥
नरो हिताहारविहारसेवीसमीक्ष्यकारी विषयेष्वसक्तः ।
दाता समः सत्यपरः क्षमावानाप्तोपसेवी च भवत्यरोगः ॥४॥
मतिश्च वै कर्मसुखानुबन्धी सत्वं विधेयं विपदा च बुद्धिः ।
ज्ञानं तपः सत्यरतीवयोगी यस्यास्ति तस्याभिभवन्ति रोगाः ॥५॥
पर्य्यप्तलभ्येषु कृतप्रयत्नः कृतादरो नित्यमुपायवत्सु ।
जितेन्द्रियं नानुतपन्ति रोगा स्तत्कालयुक्तं यदि नास्ति दैवम् ॥६॥
नागरीनागरस्येव रयस्येव रथी सदा ।
स्वशरीरस्य मेधावी कृतेष्ववहितो भवेत् ॥ ७ ॥

इति रोगानुत्पादनम् ।

वमनं रेचनं नस्यं निरूहश्चानुवासनम्।
ज्ञेय पञ्चविधं कर्म्म विधानं तस्य कथ्यते॥
आपो यथा विरुध्यन्ते स्निग्धासान्नादयन्नतः।
तथा संशोधनद्रव्यैः स्निग्धकोष्टात्कफं नयेत्॥ ८॥
मलापहं रोगहरं बलवर्णप्रसादनम्।
पीत्वा संशोधनं सम्य गायुष्मान् पूज्यते चिरम्॥ १०॥
कक्ष्यु रुजङ्घपादस्थे वाते स्नेहं विशेषतः।
पिबेत्प्राग्भोजनाज्जन्तुः कक्ष्यादीनां मलापहम्॥ ११॥
पिबेत्संशोधनादूर्ध्वं मूर्ध्वजत्रुनिले गदे।
बलितेनेन्द्रियाणाञ्च वैकल्यं चोपजायते॥ १२॥
पञ्चाघातं सहृद्रोगं सेव्यमानं निहन्ति च।
सद्दाने नाग्निनः स्नेहो बलवर्णकरः परः॥ १३॥
सोपानज्ञलघो कोष्टे निरामे वीक्ष्यपावकम्।
पाययित्वा भिषक् स्नेहं कटूष्णं वारि पाययेत्॥ १४॥
यथा दोषं यथा कालं यथा व्याधिर्यथा बलम्।
स्नेहं पक्वमपक्वं वा पाययित्वा चिकित्सकः॥ १५॥
सर्पिः शरदि पातव्यं वसामज्जा च माधवे।
तैलं प्रावृषिनात्युष्णं शीते स्नेहं पिबेन्नरः॥ १६॥
जलसुष्णं घृते पेयं यूषस्तैलेषु शस्यते।
वसामज्जसिमण्डस्तु सर्वपूर्णामथाबु वा १७॥
ऋते भल्लातकस्नेहा सन्नृत्तोयं सुशीतलम्।
त्रिकर्षादर्धकर्षेण हविः सार्धपलं तथा॥ १८॥
ततः कर्षैर्भिर्द्विश्च भवेद्यायत्पलत्रयम्।
ततोऽपि च पलार्धेन हविर्यावच्च षट्पलम्॥ १८॥
मात्रेये स्नेहपानस्य जघन्यामध्यमोत्तमाः॥ २०॥

एकाहमुत्तमापेया त्र्यहमेव तु मध्यमा ।
स्नेहमात्रा यथा योगं सप्ताहन्तु कनीयसी ॥ २१ ॥
अहोरात्रेण महती जीर्य्यत्यह्नि तु मध्यमा ।
दिनार्द्धे चापराः तिस्रः स्नेहमात्राः प्रमाणतः ॥ २२ ॥
केवलं पैत्तिके सर्पि र्वातिके लवणान्वितम् ।
देयं बहुकफे तैलं व्योषक्षारसमायुतम् ॥ २३ ॥
शीतकाले दिवास्नेहमुष्णकाले पिबेन्निशि ।
वातपित्ताधिके रात्रौ वातश्लेष्माधिके दिवा ॥ २४ ॥
पिबेत्पित्तकफे चोष्णे स्नेहमूर्च्छातृषापहम् ।
शीते वातकफार्त्तस्य गौरवारुचिशूलकृत् ॥ २५ ॥
स्युः पच्यमाने हृद्दाहभ्रमोमूर्च्छारुचिक्लमः ।
परिषिंचोऽप्युष्णाङ्भिर्जीर्णस्नेहोऽन्यतो नरः ॥ २६ ॥
यवागूं प्राशयेदुष्णां कृतां षष्टिकतण्डुलैः ।
अल्पस्नेहां विलेपीञ्च जीर्णस्नेहे सुखोदनम् ॥ २७ ॥
हृद्यस्य स्नेहसिद्धेन यूषेनाल्पश्रुतेन वा ।
पिबेत्संशमने स्नेहमन्नकाले प्रकाङ्क्षितम् ॥ २८ ॥
सिद्धार्थं पुनराहारे नैशे जीर्णे पिबेन्नरः ।
स्नेहसात्म्यः क्लेशसहो दृढकाले च शीतले ॥ २९ ॥
अच्छमेव पिबेत् स्नेहमच्छपानं हि शोभनम् ।
द्रव्यान्यनभिष्यन्दि भोज्यमन्नं प्रमाणतः ॥ ३० ॥
नातिस्निग्धमसंकीर्णं सुखं स्वं पातुमिच्छता ।
पिबेत्त्र्यहं चतुरहं पञ्चाहं षडहानि वा ॥ ३१ ॥
सप्तरात्रात्परं स्नेहः सात्म्यभावाय कल्पते ।
मृदुकोष्ठस्त्रिरात्रेण स्निह्यत्यच्छोपसेवया ॥
स्निह्यति क्रूरकोष्ठस्तु सप्तरात्रेण मानवः ॥ ३२ ॥

मिथ्याचाराद्बहुत्वाद्वा यस्य स्नेहो न जीर्यते ।
विष्टभ्य वापि जीर्येत वारिणोष्णेन वामयेत् ॥
ततः स्नेहं पुनर्दद्यात् लघुकोष्ठाय देहिने ॥ ३३ ॥
स्नेहाऽजीर्णविशङ्कायां पुनरुष्णोदकं पिबेत् ।
ततोद्गारो भवेच्छुद्धो रुचिः स्याच्च भवेत्तति ॥ ३४ ॥
स्नेहपीतस्तु तृष्णायां पिबेदुष्णोदकं नरः ।
एवं चानुप्रशाम्यन्तं स्नेहमुष्णाम्बुनोद्धरेत् ॥ ३५ ॥
स्नेहद्विषः शिशून्वृद्धान् सुकुमारान् कृशानपि ।
तृष्णालुं चोष्णकाले च सहभक्तेन पाययेत् ॥ ३६ ॥
बालवृद्धादिषु स्नेहपरिहारासहिष्णुषु ।
योगानिमाननुद्वेगान् सद्यः स्नेहान् प्रयोजयेत् ॥ ३७ ॥
प्राज्यमांसरसान् स्नेहान् पेया वा स्नेहभर्जिताः ।
पिबेत्सुखोष्णं मनुजः सद्यः स्नेहन मुच्यते ॥ ३८ ॥
धारोष्णं स्नेहसंयुक्तं पीत्वा सलवणं पयः ।
दध्नो रसं सारगुडं पीत्वा स्निह्यति मानवः ॥ ३९ ॥
सर्पिष्मतीबहुतिला तथैव स्वल्पतंडुला ।
सुखोष्णा सेव्यमाना तु सद्यः स्नेहन मुच्यते ॥ ४० ॥
शर्कराघृतसंसृष्टे दुग्धाद् गां कलसेऽथवा ।
पाययेदच्चमेतद्धि सद्यः स्नेहनमुच्यते ॥ ४१ ॥
विवर्जयेत् स्नेहपान मजीर्णीतरुणज्वरी ।
दुर्बलो रोचकोस्थूलो मूर्च्छार्त्तो मदपीडितः ॥ ४१ ॥
छर्द्यभिभूतस्तृजिनः श्रन्त.पानक्लमान्वितः ।
वस्तिदत्तो विरिक्तश्च वान्तोयश्चापि मानवः ॥ ४३ ॥
अकाले च प्रसूता स्त्री स्नेहपानं विवर्जयेत् ।
स्नेहपानाद्भवेदेषा रुग्णा नानाविधो गदः ॥ ४४ ॥

गदा वा कृच्छ्रतां यान्ति न सिध्यन्ति तथा पुनः ।
उष्णोदकोपचारी स्याद् ब्रह्मचारी चपाशयः ॥ ४५ ॥
वेगरोधनव्यायामक्रोधशोकहिमातपान् ।
वर्जयेत्प्रयतो नित्यं सेवयेच्छयनासनम् ॥ ४६ ॥
स्नेहं पीत्वा पुनः स्नेहं प्रतिभुञ्जानमेव च ।
स्नेहपथ्यापचारादि जायन्ते दारुणा गदाः ॥ ४७ ॥
पुरीषं ग्रथितं रूक्षं वायुरप्रगुणो विटम् ।
पक्ता खरत्वं रौक्ष्यञ्च गात्रस्याऽस्निग्धलक्षणम् ॥ ४८ ॥
वातानुलोम्यं दीप्ताग्निं वर्चः स्निग्धमसंहितम् ।
मार्दवं स्निग्धता चाङ्गे स्निग्धानामुपजायते ॥ ४९ ॥
पांडुतासदनं तन्द्रा पुरीषस्य विपक्वता ।
उत्क्लेशो जाड्यमरुचिः स्यादतिस्निग्धलक्षणम् ॥ ५० ॥
मिथ्याहारादिना लोके स्नेहः पीतो ज्वरादिकान् ।
प्रकुर्य्याल्लङ्घनं तत्र मलं ज्ञात्वा विरेचनम् ॥ ५१ ॥
रूक्षस्य स्नेहनं स्नेहैरतिस्नेहस्य रूक्षणम् ।
श्यामाककोरदूषान्न तक्रपिण्याकसक्तुभिः ॥ ५२ ॥
दीप्तान्तराग्निः परिशुद्धकोष्टः प्रत्यग्रधातुर्वलवर्णयुक्तः ।
दृढेन्द्रियो मन्दजरः शतायुः स्नेहोपसेवी पुरुषः प्रदिष्टः ॥ ५३ ॥
स्नेहमेव परं विद्याद् दुर्बलानलदीपनम् ।
बलं स्नेहनमिच्छिय समायातः सदुर्बलः ॥ ५४ ॥
स्नेहे व्यायामसंशीत वेगाघातप्रजागरान् ।
दिवास्वप्नमभिष्यन्दि रुक्षाशञ्च विवर्जयेत् ॥ ५५ ॥

इति वङ्गसेने स्नेहपानाधिकारः समाप्तः ॥ ७५ ॥

## अथ स्वेदाधिकारमाह।

येषां नस्यं विधातव्यं वस्तिश्चैवापि देहिनाम्।
शोधनीयाश्च ये केचित् पूर्वं स्वेद्यास्तु ते मताः॥ १॥
पश्चात् स्वेद्या हृते शल्ये मूढगर्भाद्युपद्रवाः।
सम्यक् प्रजाताऽकाले च पश्चात् स्वेद्यैव यत्नतः॥ २॥
स्वेद्यः पूर्वं च पश्चाच्च भगन्दर्यर्शसस्तथा।
अश्मर्या चातुरो जन्तुः शेषास्त्वकाले प्रचक्ष्महे॥३॥
स्नेहक्लिन्न शरीराय तैलाभ्यक्ताय देहिने।
दोषानार्त्तवकालज्ञो ध्यानस्वेदं प्रयोजयेत्॥ ४॥
नानभ्यक्ते नापि चास्निग्ध देहे स्वेदो योज्यः स्नेहवद्भिः कथञ्चित्।
दृष्टं लोके काष्टमस्निग्धमाशु गच्छेद्भङ्गं स्वेदयोगैर्गृहीतम्॥ ५॥
मांसमाषतिलादीनां बालुकानामथापि वा।
कुम्भीपिण्डेऽष्टकास्वेदा भ्राय प्रस्तरसंकरात्॥ ६॥
वातघ्नैर्दशमूलैर्वा शीतैराच्छाद्य चक्षुषी।
मुष्कौ हृदयं दृष्टी स्वेदयेन्मृदुवा न वा॥
मध्यमं वङ्क्षणौ शेषं मङ्गावयवमिष्टतः॥ ७॥
स्वेदो हितस्त्वनाग्नेयो वाते मेदःकफावृते।
निवातगृहमायासो गुरुप्रावरणं भयम्॥ ८॥
उपनाहाहवक्रोध भूरिपानक्षुधातपाः।
स्वेदयन्ति दशैतानि नरमग्निगुणादृते॥ ९॥
सर्वान् स्वेदा निवाते च जीर्णान्ने वा च कारयेत्॥ १०॥
व्याधौ शीते शरीरे च महान् स्वेदो महाबले।
दुर्बले दुर्बलः स्वेदो मध्यमे मध्यमो मतः॥ ११॥
कलासे रूक्षणः स्वेदो रूक्षस्निग्धः कफानिले।

कफमेदो वृते वाते सेवेत् कोष्ण रुद्धं रविम् ॥ १२ ॥

—०—

तत्र तापोष्मस्वेदो विशेषत. श्लेष्मघ्नो । उपनाहस्वेदो वातघ्नः अन्यतरस्मिन् पित्तसंसृष्टे द्रवस्वेद इति कफमेदोऽन्विते वायौ निवातग्रहातपगुरुप्रावरणादिभिः स्वेदमुत्पादयेदिति ।

—०—

स्नेहक्लिन्ना धातुसंस्थाय दोषाः स्वस्थानस्थाये च मार्गेषु लिप्ताः ।
सम्यक् स्वेदैर्योजितैस्ते द्रवत्वं प्राप्ता. कोष्ठं यान्ति देहादशेषात् १३

शीतशूलव्युपरमे स्तम्भगौरवनिग्रहे ।
सञ्जाते मार्दवे देहे स्वेदनाद्विरतिर्मता ॥ १४ ॥

अग्नेर्दीप्तिं मार्दवं त्वक् प्रसादं
भक्तश्रद्धां स्रोतसां निर्मलत्वम् ।
कुर्य्यात् स्वेदो हन्ति निद्रां सतन्द्रां
सन्धीन् स्तब्धांश्चेष्टयेदाशु युक्तः ॥ १५ ॥

स्वेदास्रावो व्याधिहानिर्लघुत्व शीतार्थित्वमार्दवं चातुरस्य ।
सम्यक् स्विन्ने लक्षणं प्राहुरेतत् मिथ्यास्विन्ने व्यत्ययेनैतदेव ॥१६॥
स्फोटोत्पत्तिः पित्तरक्तप्रकोपो मूर्च्छा भ्रान्तिर्दाहतृष्णाक्लमाश्च ।
अतिस्विन्ने सन्धिपीडाव्यथा च क्रिया शीतां तत्र कुर्य्याद्विधिज्ञः॥१७

अतिस्विन्ननराणाञ्च शीतावुपासनं हितम् ।
स्नानमुष्णाम्बुना चापि घ्नतशीघ्रादिभोजनम् ॥ १८ ॥

पांडुर्मेही रक्तपित्ती क्षयार्तः क्षामो जीर्णी चोदरार्तो विषार्तः ।
तृट्छर्द्यार्तो गर्भिणी पीतमद्यो नैते स्वेद्याश्च मर्त्योतिसारी १९
स्वेदादेषां यान्ति देहा विनाशं चासाध्यत्वं यान्ति चैषां विकाराः ।
स्वेदैः साध्यौ दुर्बलाजीर्णभक्तौ यदि स्यातां स्वेदनीयौ ततस्तौ ॥२०॥

इति वङ्गसेने स्वेदाधिकारः समाप्तः ॥ ७६ ॥

## अथ वमनाधिकारमाह ।

शरत्काले वसन्ते च प्रावृट् काले च देहिनाम् ।
वमनं रेचनं चैव कारयेत् कुशलो भिषक् ॥ १ ॥
कफे कफोल्वणे चापि वमन सम्प्रशस्यते ॥ २ ॥
वामयेदतिसारार्तं मधःपित्तास्नरोगिणाम् ।
ग्रन्थिमेहापचीकुष्ट श्लीपदोन्मादरोगिण: ॥ ३ ॥
समस्तदोषपरीसर्प श्वासकासोर्ध्वरोगिण: ।
नवज्वरग्रहीतश्च हृल्लासार्तं विशेषत: ॥ ४ ॥
नवामये तैमिरिकं न गुल्मिन न चापि पांडुदररोगपीड़ितम् ।
स्थूलक्षतक्षीणकृशातिवृद्धानर्शोर्दिताक्षेपकपीड़ितांश्च ॥ ५ ॥
रूक्षे प्रमेहे तरुणे च गर्भे गच्छत्यथोर्ध्वं रुधिरे च तीव्रे ।
दुष्टे च कोष्टे कृमिभिर्मनुष्यं वर्चोऽभिघाते न च वामयेत्तु ॥६॥
एतेऽप्यजीर्णव्यथिता वाम्याये च विषातुरा: ।
अत्युल्वणकफा ये च ते च स्युर्मधुकाम्बुना ॥ ७ ॥
अवम्यावमनात् क्रोधात् कृच्छ्रतां यान्ति देहिन: ।
असाध्यतां वा गच्छन्ति मैते वाम्यास्त्वतिस्रुता: ॥ ८ ॥
दोषा: कदाचित् कुप्यन्ति जिता लङ्घनपाचनै: ।
जिता: संशोधनैर्येतु न तेषां पुनरुद्भव: ॥ ९ ॥
योऽखिलैर्विविधैरन्नै दोषानुत् क्लेश्यदेहिन: ।
स्निग्धस्विन्नायवमन दत्त सम्यक् प्रवर्त्तते ॥ १० ॥
निशिसुप्तश्च पूर्वाह्ने जीर्णाहारकृते क्षणम् ।
वमनं पाययित्वा तु जानुमात्रासने स्थितम् ॥
कण्ठं गन्धर्वनालेन स्पृशन्त वामयेद्भिषग् ॥ ११ ॥
ललाटं वमत: पुंस: पार्श्वौ हस्तेन बोधयेत् ॥ १२ ॥

कफश्च कटुतीक्ष्णोष्णैः पित्तं स्वादुहिमैर्वमेत् ।
सस्वादुलवणाम्लोष्णैः संसृष्टं वायुना कफम् ॥ १३ ॥
पानद्रव्यरसस्योक्तेः स्वरसः पलमिष्यते ।
वमनं रेचनं चाद्यं स्नेहादिग्रमनं परम् ॥ १४ ॥
क्वाथ्यद्रव्यस्य कुडवं श्रपयित्वा जलाढके ।
अर्द्धभागावशिष्टश्च वमनेष्ववचारयेत् ॥ १५ ॥
यष्टीमधुवचाकुष्टं बीजानां कुटजस्य च ।
कल्कं रालीढ्य निम्बस्य कषायं पाययेद्भिषक् ॥ १६ ॥
प्रवृत्तलालाहृल्लासं वामयेत् स्निग्धमातुरम् ।
कृष्णेन्द्रयवबिन्धूत्य राठकल्कयुतं पिबेत् ॥
यष्टीकषायं सक्षौद्रं तेन साधुवमत्यलम् ॥ १७॥
निम्बकषायोपेतं फलिनीगदमदनमधुसिन्धूत्थम् ।
मधुयुतमेतत्पानं कफपरिपूर्णाशये शस्तम् ॥ १८ ॥
तण्डुलसलिलनिपिष्टं यः पीत्वा वमति नरः पूर्वाह्ने ।
फलिनीवल्कलकल्कं हरति गदश्च कफपित्तरुजम् ॥१९॥
पाटरूपवचानिम्बं पटोलं फलिनीत्वचम् ।
क्वाथयित्वा पिबेत्तोयं यान्ति कृष्णमदनान्वितम् ॥ २० ॥
जीमूतकफलेक्ष्वाकु कुटजाः हतवेधनः ।
धामार्गवश्च सर्वोज्य: सर्वथा वमनेष्वमी ॥ २१ ॥
मदनफलमज्जसिद्धं चीरं दधितां गतं तक्रमं वा ।
वमनायकफप्रसेके वमनं कफेषु च प्रयुञ्जीत ॥ २२ ॥

—०—

तत्र सुकुमारं कृशं बालं वृद्धं भीरुं वा वमनमाध्येषु विकारेषु चीरदधितक्रयवागूनामन्यतमेनाकण्ठं पाययित्वा वामयेत् ।

—०—

कंपप्रसेकं हृदयाविशुद्धिः कंडूश्च दुर्वामितलिङ्गमाहुः।
पित्तातियोगश्च विसंज्ञताश्च हृत्कण्ठपीडामपि चातिवान्ते ॥२३॥
पित्ते कफस्यानुसुखं प्रवृत्ते शुद्धेषु हृत्कण्ठशिरःसु चापि।
लघौ च देहे कफसंश्रये च स्थिते सुवान्तं पुरुषं व्यवस्येत् ॥२४॥
पित्तान्तमिष्टं वमनं विरेकादर्द्धं कफान्तञ्च विरेकमाहुः।
द्वित्रीन् सविट्कानपनीयवेगान्मेयं विरेके वमने तु पीतम् ॥२५॥

—०—

सम्यग्वान्तं चैनमभिवीच्यस्नैहिकवैरेचनिकोपशमनीयानामन्यतम धूममाकण्ठं सामर्थ्यतः पाययित्वा आचारिकमुपदिशेत्।

—०—

वान्त्यर्थमौषधे पीते वान्तिर्भवति नो यदि।
पिबेद्धात्रीकणासिन्धु कषायमुष्णवारिणा ॥ २६ ॥
"वमनस्यातियोगे तु शीताम्बुपरिसेवन"।
पिबेत्कटुरसैर्मण्डं सघृतंचोद्रशर्करम् ॥
वमनेऽतिप्रवृत्ते च हृद्यं कार्यं विरेचनम् ॥ २७ ॥
सोद्गारायां भृशं छर्द्यां मूर्च्छायां याममुस्तयोः।
समधूकांजन चूर्णं लेहयेन्मधुसर्पिषा ॥ २८ ॥
वमतोऽन्त.प्रविष्टाया जिह्वायां कवलग्रहः।
नि.श्रिताश्च तिलद्राक्षाकल्कलिप्तां प्रवेशयेत् ॥ २९ ॥
ततो पराह्णे सुविशुद्धदेह मुष्णाभिरद्भिः परिषिक्तगात्रम्।
कुलित्थमुद्गाढकजाङ्गलाना यूपैरसैर्वाप्यपभोजयेत्तम् ॥ ३० ॥
पेयां विलेपीमकृतं कृतं च यूषं रसं त्रीनुभयं तथैकम्।
क्रमेण सेवेत,नरोऽन्नकालान् प्रधानमध्यावरशुद्धिशुद्धः ॥ ३१ ॥
धान्यकल्केन सगुडा नागरेण समन्विता।
सुलघुर्दीपनी पेया वातरक्ते च शस्यते ॥ ३२ ॥

यथाणुरग्निस्तृणगोमयाद्यैः सधुक्षमाणो भवति क्रमेण ।
महान् स्थिरः सर्वपचस्तथैव शुद्धस्य पेयादिभिरन्तराग्निः ॥३४॥
कफप्रसेकस्वरभेदनिद्रा तन्द्रास्यदौर्गन्ध्यविषोपसर्गाः ।
गुरुत्वकंडूग्रहणीप्रदोषा न सन्ति जन्तोर्वमतः कदाचित् ॥३४॥
छिन्ने तरौ पुष्पफलप्रवाला यथा विनाशं सहसा व्रजन्ति ।
तथाहृते श्लेष्मणि छर्दितेन तज्जा विकारा विलयं व्रजन्ति ॥३५॥
वमनादिविधानेषु यावत्कालस्तु गच्छति ।
तावद्धि परिहर्तव्यं शीततोयातिमैथुनम् ॥ ३६ ॥

इति वङ्गसेने वमनाधिकारः समाप्तः ॥ ७७ ॥

---

## अथ विरेचनाधिकारमाह ।

ऋतौ वसन्ते शरदि देहशुद्धौ विरेचयेत् ।
अन्यदात्ययिके काले शोधनं शीलयेद्बुधः ॥ १ ॥
पित्ते विरेचनं युञ्ज्यात् दोषे पित्तोल्वणेऽपि च ।
पित्तमत्युल्वणोक्लत्य स्नेहे स्वेदे कृते मति ॥ २ ॥
वमने च कृते पूर्वं ततः सम्यग्विरेचयेत् ।
अन्यथा योजितं कुर्यात् मन्दाग्निं गौरवारुची ॥ ३ ॥
पित्ताधिको मृदुः कोष्टः पयसापि विरिच्यते ।
वातेन श्लेष्मणा क्रूरो दुर्विरेच्यः स उच्यते ॥ ४ ॥

---

समदोषो मध्यमः साधारण इति । तत्र मृदौ मृद्वीमात्राक्रूरे तीक्ष्णा मध्ये मध्यमा कर्त्तव्येति ।

---

मृदुमध्यक्रूरकोष्टे कर्षमर्द्धपलम्पलम्।
उष्णोदकानुपानन्तु पलं द्वे च पलत्रयम्॥ ५॥
तदर्द्धम्पाययेच्चूर्णमनुपानञ्च तादृशम्।
क्वाथे क्वाथविधिः कार्य्यः स्तदर्द्धः स्वरसोऽपि च।
पिबेत् दद्यात्तथा स्नेहं पलार्द्धं पलमेव वा॥ ६॥

इति विरेचनमात्रा।

यथा वमने प्रसेकौषधपित्तानिलाः क्रमेणायान्ति तथा विरेचने पुरीषपित्तौषधकफा इति।

—०—

स्नेहस्वेदावकृत्वाग्रे यस्तु संशोधनं पिबेत्।
दारुशुष्कमिवानाम्य तद्देहमतिपातयेत्॥ ७॥
स्नेहस्वेदैः प्रचलितारसैः स्निग्धैरुदीरिताः
दोषाः कोष्टगता जन्तोः सुखा हर्त्तुम्बिरेचनैः॥ ८॥
शारदे सौक्ष्म्यतैक्ष्ण्याद्वा विकाशित्वाद्विरेचनम्।
वमनं च हरेद्दोषं सम्यग्युक्तं तथान्यथा॥ ९॥
यात्यधो दोषमादाय पच्यमानं विरेचनम्।
गुणोद्रेकाद्व्रजेदूर्द्ध्वमपक्वं भेषजं पुनः॥ १०॥
मृदुकोष्टस्य दोषाग्ने र्दत्तं सम्यग्विरेचनम्।
न सम्यग्निर्हरेद्दोषा नऽतिमात्रप्रधावितम्॥ ११॥
त्रिवृत् सैन्धवशुण्ठीनां चूर्णमम्लैः पिबेन्नरः।
वातार्दितो विरेकाय जाङ्गलानां रसेन वा॥ १२॥
पित्तोत्तरे त्रिवृच्चूर्णं स्वादुक्वाथादिभिः पिबेत्॥ १३॥
भित्त्वा द्विधेक्षुं परिलिप्य कल्कैस्त्रिमण्डजातैः परिवेष्ट्य रज्ज्वा।
पक्वन्तु सम्यक् पुटपाकयुक्त्या खादेत्तु तां पित्तगदी सुशीताम्॥१४

हरीतकीविडङ्गानि सैन्धवं नागरं त्रिवृत् ।
मरिचानि च तत्सर्वं गोमूत्रेण विरेचनम् ॥ १६ ॥
त्रिवृच्छाणत्रयसमा त्रिफला तत्समानि च ।
क्षारकृष्णाविडङ्गानि तच्चूर्णं मधुसर्पिषा ॥ १७ ॥
लिह्याद्गुडेन गुटिकां कृत्वा वाप्युपयोजयेत् ।
कफवातकृतान् गुल्मान् प्लीहोदरभगन्दरान् ।
हन्त्यन्यानपि चाप्येतन्निरुपायं विरेचनम् ॥१८॥
त्रिफलाक्वाथमूत्रैर्य सव्योषं कफपीडितः ।
कृष्णाशुण्ठीत्रिवृत्क्षार चूर्णं क्षौद्रेण लेहयेत् ॥ १९ ॥
एतद्विरेचनं मुख्यं सर्वश्लेष्मविकारिणाम् ॥ २० ॥
शर्कराक्षौद्रसंयुक्तं त्रिवृच्चूर्णावचूर्णितम् ।
रेचनं सुकुमाराणां त्वक्पत्रमरिचान्वितम् ॥ २१ ॥
पथ्यासैन्धवकृष्णानां कल्कमुष्णाम्बुना पिबेत् ।
विरेकः सर्वदोषघ्नः श्रेष्ठो नाराचसंज्ञितः ॥ २२ ॥
त्रिवृत्पिप्पलिसिन्धूत्थै रन्वितं गुग्गुलुं पिबेत् ।
फलत्रिकक्कपायेन रेचनं सर्वदोषनुत् ॥ २३ ॥
पिप्पलीनागरक्षार श्यामात्रिवृतया सह ।
लेहयेन्मधुना सार्धं कफव्याधौ विरेचनम् ॥ २४ ॥
हरीतक्यास्तु कर्षार्धं कर्षार्धं त्रिवृतस्तथा ।
शीताम्बुना सम्पिष्टा मर्ज्जयेत्सर्पिषा मनाक् ॥ २५ ॥
तद्द्रव्यं शीतलं ज्ञात्वा सिताकर्षेण योजयेत् ।
भुक्त्वा विरिच्यते जन्तुः यावदुष्णं न सेवते ॥ २६ ॥
इत्येतावत्येकदिनमात्रा ।
हरीतकीभिः क्वथितं सुवीरं दन्त्यग्निकृष्णाविडचूर्णयुक्तम् ।
विरेचनं वातवृतैलमिश्रं निरत्ययं योज्यमथामयघ्नम् ॥ २७ ॥

त्रिवृतां कौटजं बीजं पिप्पलीं विश्वभेषजम् ।
समृद्वीकारसंक्षौद्रं वर्षाकाले विरेचनम् ॥ २८ ॥
त्रिवृद्दुरालभामुस्ता शर्करोदीच्यचन्दनम् ।
द्राक्षाम्बुना सयष्ट्याह्वं शीतलञ्च घनात्यये ॥ २९ ॥
त्रिवृता शर्करा तुल्या ग्रीष्मकाले विरेचनम् ।
त्रिवृतां हबुषां दन्तीं सप्तलां कटुरोहिणीम् ॥ ३० ॥
स्वर्णक्षीरीञ्च कम्पिल्लं गोमूत्रे भावयेत्त्र्यहम् ।
एष सर्वर्तुको योगः स्निग्धानां मलदोषहा ॥ ३१ ॥
सक्षौद्रां शर्करां पश्चात् कुर्य्यान्मृद्भाजने नवे ।
दद्याच्छीते त्रिवृच्चूर्णं त्वक्पत्रमरिचैः सह ॥
लिह्यात्तं मात्रया लेहं सौख्यराणां विरेचनम् ॥ ३२ ॥
अभयापिप्पलीमूलं मरिचं विश्वभेषजम् ।
त्वक्पत्रपिप्पलीमुस्त विडङ्गामलकानि च ॥ ३३ ॥
एतानि समभागानि दन्ती च त्रिगुणा भवेत् ।
त्रिवृदष्टगुणादेया षड्गुणा चात्र शर्करा ॥ ३४ ॥
मधुना मोदकान् कृत्वा चाक्षमात्रान् प्रमाणतः ।
एकैक भक्षयेत्प्रातः शीतं चानु पिबेज्जलम् ॥ ३५ ॥
तावद्विरिच्यते जन्तुर्यावदुष्णं न सेवते ।
पानाहारविहारेषु भवेन्नियन्त्रणः सदा ॥ ३६ ॥
पाण्डुत्वकासविषमज्वरवह्निसादान्
जङ्घोरुपृष्ठजघनोदरपार्श्वशूलान् ।
दुर्नामसण्डलभगन्दरशोफगुल्मान्
यक्ष्मोदरभ्रमविदाहकमूत्रकृच्छ्रान् ॥ ३७ ॥
प्लीहाक्षिरोगयकृदश्मरिकुष्ठमेहान्
हन्याद्रसायनमिदं भिषजा प्रयुक्तम् ।

अल्पव्ययं बहुफलं सततं प्रयोज्य
मायुष्करं पलितनाशनमश्लिष्टम् ॥ ३८ ॥

इत्यभयाद्यो मोदकः ।

विडङ्गसारामलकाभयानां पलं पलं स्याच्चिवृतस्त्रयश्च ।
गुडस्य षड्द्वादशभागयुक्ता मानेन त्रिंशद्गुटिका विधेयाः ॥३९॥
निवारणे यक्षवरेण सृष्टः समाणिभद्रः किलशाक्यभिक्षवे ।
श्रय हि कुष्टक्षयकासनाशनो भगन्दरप्लीहगुदोदरार्त्तिजित् ॥४०॥
यथेष्टचेष्टान्नविहारसेवी ह्यनेन वृद्धस्तरुणो भवेच्च ॥

इति माणिभद्रमोदकः ।

गुडस्याष्टपलं पथ्या विंशतिः स्युः पलानि च ।
दन्तीचित्रकयोः कर्षाः पिप्पलीत्रिवृतोर्दश ॥ ४१ ॥
कृत्वैतान्मोदकानेकं दशमे दशमेऽहनि ।
संखादेदुष्णसेवी चाहारे नियन्त्रणास्त्वमी ॥
दोषघ्ना ग्रहणीपांडु रोगार्श कुष्टनाशनाः ॥ ४२ ॥

गुडाद्योमोदकः ।

विरेकार्थौषधं पीतं न सम्यग्यदि रेचयेत् ।
पिबेदुष्टांभसा तत्र सैन्धवं दोषशान्तये ॥ ४३ ॥
हृत्कुक्ष्यशुद्धिपरिदाहकंडूर्विण्मूत्रसंगाश्च न सद्विरिक्ते ।
मूर्च्छागुदभ्रंशकफातियोगाः शूलोद्गमश्चातिविरिक्तलिङ्गम् ॥४४॥
गतेषु दोषेषु कफान्वितेषु नाभ्यान्लघुत्वे मनसश्च तुष्टौ ।
गतेऽनिले चाप्यनुलोमभावं सम्यग्विरिक्तमनुजं व्यवस्येत् ॥४५॥
मन्दाग्निमक्षीणमसद्विरिक्तं न पाययेत्तद्दिवसे यवागूम् ।
क्षीणं तृषार्त्तं सुविरेचितञ्च तन्वीं सुखोष्णां लघु पाययेत्ताम् ॥४६॥
छर्दितोऽर्त्तं स्नानं सर्वं धूपं मुक्त्वा प्रयोजयेत् ।
शोणितस्रावसंशुद्धि स्नेहयोजनलङ्घनैः ॥ ४७ ॥

वह्निर्यस्य ततो मन्दः स्याद्वैद्यस्तमुपाचरेत्।
मद्यपो वातपित्ताढ्यो योऽन्यपित्तकफाश्रयः॥ ४८॥
पेयादिरहितस्तस्य तर्पणादिक्रमं दिशेत्।
आस्थाप्य स्नेहितं तीक्ष्णैरेचयेद्धीनरेचितम्॥ ४९॥
पद्मकोशीरनागाह्व चन्दनानि प्रयोजयेत्।
अतियोगे विरेकस्य पानलेपनसेचनैः॥ ५०॥
सौवीरपिष्टः सहकारकल्को नाभिप्रलेपादतिसारहन्ता॥५१॥
कल्कं शाल्मलीमूलस्य मस्तुना सह संपिबेत्।
गङ्गाप्रवाहतुल्यं हि नाशयेद् ग्रहणीगदम्॥ ५२॥
अञ्जनं चन्दनोशीर मज्जास्त्र चातियोगनुत्।
लाजचूर्णैः पिबेन्मन्थ मतियोगहरं परम्॥ ५३॥
दध्यारनालधात्री चूर्णयुताः शक्तवः प्रलेपेन।
सन्तापारुचिहृष्णा वमनविरेकातियोगहराः॥ ५४॥
क्षीणक्षयोरःक्षतबालवृद्धादीनोऽथ शोषी भयशोकतप्तः।
श्रान्तस्तृषार्त्तो परिजीर्णभक्तो गर्भिण्यधो गच्छति यस्य चासृक् ५५
नवप्रतिश्यायमदात्ययो च नवज्वरीया च नवप्रसूता।
शल्यार्दिताश्चाप्यविरेचनीयाः स्नेहादिभिर्यत्वनुपस्कृताश्च॥ ५६॥
अल्पार्थपित्ताभिपरीतदेहाविरेचयेत्तानपि मन्दवीर्य्यैः।
विरेचनैर्यान्ति नरा विनाश मन्त्रप्रयुक्तैरविरेचनीयाः॥ ५७॥
· नचातिस्निग्धकायस्य दद्यात् स्नेहविरेचनम्।
दोषाः प्रच्याविता भूयो लीयन्ते तेन वर्त्मसु॥ ५८॥
विषाभिघातपिडिका शोफपांडुविसर्पिणः।
नातिस्निग्धा विशोध्याः स्युः स्तथा कुष्ठप्रमेहिणः॥ ५९॥
विरूक्ष्यस्नेहसात्म्यन्तु भूयः संस्नेह्यरेचयेत्।
तेन दोषा हृतास्तस्य भवन्ति शयबन्धनाः॥ ६०॥

बुद्धेः प्रसादम्बलमिन्द्रियाणां धातुस्थिरत्वं ज्वलनाभिवृद्धिम् ।
चिराच्च पाकं वयसः प्रकुर्य्यां द्विरेचनं सम्यगुपास्यमानम् ॥ ६१ ॥
यथोदकानां स्थिरजङ्गमानां जलेऽपनीते ध्रुवमेव नाशः ।
पित्ते हृतेऽत्रैवमुपद्रवाणां पित्तात्मकानां ध्रुवमेव नाशः ॥ ६२ ॥
सव्योषं पिप्पलीमूलं त्रिवृद्दन्ती सचित्रकम् ।
तच्चूर्णं गुडसम्मिश्रं भक्षयेत् प्रातरुत्थितः ॥ ६२ ॥
एतद्गुडाष्टकं चूर्णं बलवर्णाग्निवर्द्धनम् ।
शोथोदावर्त्तगुल्मघ्नं प्लीहपाण्ड्वामयापहम् ॥ ६४ ॥
पश्चाद्विरिक्तो वान्तश्च ततश्चापि निरूहणम् ।
निरूढस्त्वनुवास्यः स्यात् सप्तरात्राद्विरेचितः ॥ ६५ ॥
क्षतः शिराव्यधो यस्य क्षतं यस्य च शोधनम् ।
मासं परिहरेज्जन्तुर्यावच्चो बलवान् भवेत् ॥ ६६ ॥
क्रोधायासौ मैथुनञ्च दिवास्वप्नोच्चभाषणे ।
पानं यानासने स्थानं चिरञ्चक्रमणं हिमम् ॥ ६७ ॥
सम्भोगतोययोः सेवा प्रवातातपयोस्तथा ।
विरुद्धाध्यशनासात्म्य भोजनानि विशेषतः ॥ ७८ ॥

## इति वङ्गसेने विरेचनाधिकारः समाप्तः ॥ ७८ ॥

—०—

## अथ वस्तिकर्म्माधिकारमाह ।

वस्तिर्वाते च पित्ते च कफे रक्ते च शस्यते ।
संसर्गे सन्निपाते च वस्तिरेव सदा हितः ॥ १ ॥
वायोर्वेगं समुद्वृत्तं नान्यावस्तिश्रते क्रिया ।
पवनाविद्धतोयस्य वेला वेगमिवो दधेः ॥ २ ॥
वाते वातोल्वणे व्याधौ वस्तिः शस्तः स च त्रिधा ।

निरूहोन्वासनाख्यश्च लिङ्गे चोत्तरसंज्ञितः ॥ ३ ॥
कषायक्षीरतो वस्ति निरूहः सनिगद्यते ।
यः स्नेहैर्दीयते सस्या दनुवासनसंज्ञकः ॥ ४ ॥
वस्तिभिर्दीयते यस्मा त्तस्माद्वस्तिरिति स्मृतः ।
निरूहस्यापरं नाम प्रोक्तमास्थापनं बुधैः ॥ ५ ॥
निरूहो दोषहरणा द्रोहणादथवातनोः ।
आस्थापये द्वयो देहं यस्मादास्थापनः स्मृतः ॥ ६ ॥
निशानुवासनात् स्नेहोऽन्वासनस्यानुवासनः ॥ ७ ॥
विरिक्तसम्पूर्णहिताशनस्य आस्थाप्यशय्यामनुदीयते यत् ।
तदुच्यते वाप्यनुवासनञ्च तेनानुवासश्च बभूव नाम ॥ ८ ॥
उत्कृष्टावयवे दाना द्वस्तिरुत्तरसंज्ञितः ।
निरूहमात्राप्रथमे प्रकुञ्चो वत्सरे परम् ॥ ९ ॥
प्रकुञ्चवृद्धिः प्रत्यब्दं यावत् षट्प्रसृतास्ततः ।
प्रसृतं वर्द्धयेदूर्द्धं द्वादशाष्टादशावधिः ॥ १० ॥
आसप्ततेरिदं मान दशैव प्रसृतं परम् ।
यथायथं निरूहस्य पादोमात्रानुवासने ॥ ११ ॥
सुवर्णरूप्यत्रपुताम्ररीति कांस्यायसास्थिद्रुमवेणुदन्तैः ।
नलैर्विषाणैर्मणिभिश्च तैस्तैः कार्य्याणि नेत्राणि सुकर्णिकानि ॥१२
षट्द्वादशाष्टांगुलसम्मितानि षड्विंशतिद्वादशवर्षजानाम् ।
स्युर्मुद्गकर्कन्धुसतीनवाहि छिद्राणि वर्त्त्या पिहितानि चापि ॥ १३ ॥
यथा वयोऽङ्गुष्ठकनिष्ठिकाभ्यां मूलाग्रयोः स्युः परिणाहवन्ति ।
ऋजूनि गोपुच्छसमाकृतानि श्लक्ष्णानि च स्युर्गुटिकामुखानि ॥१४॥
स्यात्कर्णिकैकाग्रचतुर्थभागे मूलाश्रिते वस्तिनिबन्धने द्वे ।
जारद्गवी माहिषहारिणी वा स्याच्छौकरी वस्तिरजस्य वापि ॥१५॥
दृढस्तनुर्नष्टशिरोविगन्धः कषायरक्तः सुमृदुस्सु सिद्धः ।

नृणां वयोवीक्ष्य यथानुरूपं नेत्रेषु योज्यस्तु सुबद्धसूत्रः ॥ १६ ॥
नेत्राभावे हितानाड़ी नलवंशास्थिसम्भवा।
वस्त्याभावे हितं चर्म्म वस्त्रं वापि हितं घनम् ॥ १७ ॥
द्वादशांगुलकं नेत्रं कलाय यव रंध्रकम्।
अंगुले कर्णिकायुक्तं मुखे वृत्तं समं मृदुः ॥ १८ ॥
इति नेत्रपरिमाणविधिः।
विरेचनादृते सप्त रात्रे जातबलाय वै।
कृताहारायसायाह्ने वस्तिर्देयोऽनुवासनः ॥ १९ ॥
उत्तमस्य पलैः षड्भि मध्यमस्य पलैस्त्रिभिः।
तदर्द्धं न च हीनस्य विधामात्रानुवासने ॥ २० ॥
प्रसृतस्य पलार्द्धेन पलस्य पिचुना तथा।
तदर्द्धस्यार्द्धकर्षेण वृद्धिः कार्य्या यथा क्रमम् ॥ २१ ॥
षट्पलं त्रिपलं सार्द्धं मपलं पूर्णं यथा भवेत् ॥ २२ ॥
देवदारुवचारास्ना शताव्हाकुष्ठसैन्धवैः।
श्चवचूर्णम्प्रदातव्यं षट्चतुर्द्वयमाषकैः २३ ॥
यद्वा सैन्धवचूर्णेन शताह्वे न च संयुतम्।
चूर्णं माषं पले स्नेहे शिग्रुजम्मशताह्वयोः ॥ २४ ॥
चीरं न चेद्वितरणं प्रदाय द्वाहेत्र्यहे वाप्यनुवासनीयः ॥ २५ ॥
उत्सृष्टानिलविण्मूत्रे नरे वस्तिं निधापयेत्।
अन्यथा निहितो वस्ति नैवान्तः सम्प्रपद्यते ॥ २६ ॥
प्रसुप्तं वामपार्श्वेण कृतात्र मनुवासयेत् ॥ २७ ॥
वामाश्रया हि ग्रहणीगुदश्च तत्पार्श्वमस्यस्य गुदोपसन्धिः।
स्नीयन्त एवम्बलयय तस्मात्सव्ये च पार्श्वे हितयस्तिदानम् ॥२८॥
प्रसारितैकजङ्घेन कार्य्याऽन्योपरिकुञ्चिता।
वस्तिं सव्ये करे कृत्वा दक्षिणे नावपीड़येत् ॥ २८ ॥

तथास्य नेत्रं प्रणयेत् स्निग्धे स्विन्नसुखं गुदे।
उच्छ्रास्य बस्तेर्वदनं बद्धं हस्तमकम्पयन् ॥ ३० ॥
पृष्ठवंशम्प्रति ततो नातिद्रुतविलम्बितम् ।
नातिवेगं नातिमन्दं सकृदेव प्रपीड़येत् ॥ ३१ ॥
सावशेषमकुर्वीत वायुः शेषे हि तिष्ठति ।
निरूहदानेऽपि विधिरयमेव समीरितः ॥ ३२ ॥
शीते वसन्ते च दिवानुवास्यो रात्रौ शरद्ग्रीष्मघनागमेषु ॥३३॥
स्नेहवस्तिर्विधेयस्तु नाविशुद्धस्य देहिनः ।
स्नेहवीर्य्यंस्तथा दत्ते देहं नानुविसर्पति ॥ ३४ ॥
अशुद्धमपि वातेन केवलेनातिपीड़ितम् ।
अहोरात्रस्य कालेषु सर्वेष्वेवानुवासयेत् ॥ ३५ ॥
ततः प्रणिहिते स्नेहे उत्तानो वाक्शतं भवेत् ।
प्रसारितैः सर्वगात्रैस्तथा वीर्यं प्रसर्पति ॥ ३६ ॥
आकुञ्चयेच्छनैस्त्रींस्त्रीन् सक्थिबाहू ततःपरम् ।
ताड़येत्तलयोरेनं त्रींस्त्रीन्वारान् शनैः शनैः ॥ ३७ ॥
स्फिजोश्चैनं ततः श्रोण्यौ शय्यां त्रींस्तूत्क्षिपेद्बुधः ।
एवं प्रणिहिते बस्तौ मन्दायासोऽथ मन्दवाक् ॥ ३८ ॥
स्वास्तीर्णे शयने काम मासीताचारिके ततः ।
कूर्परे जानुनी चैव कुर्य्याच्छ्रोणि गतागतम् ॥ ३९ ॥
पाणिपादतले चास्य हन्तव्ये मुष्टिना तदा ।
त्रिकसंचालनं चापि कुर्य्याद्वारत्रयं ततः ॥ ४० ॥
भवेत् सुखोष्णश्च तथा निरेति सहसा सुखम् ।
यथोचितात्पादहीनं भोजयित्वानुवासयेत् ॥
नित्यमेकान्तरे वापि दोषकायाग्न्यपेक्षया ॥ ४१ ॥
स्नेहेन पार्श्वग्रहनिपिण्डिकाद्या ये चापि गात्रावयवा रुगार्त्ताः ।

तायावमृद्गीतसुख ततश्च निद्रामुपासीतकृतोपधान ॥ ४२ ॥
अनुवासिताय दातव्यमितरेऽह्नि सुखोदकम् ।
धान्यशुण्ठीकषाय वा स्नेहव्यापत्तिनाशनम् ॥ ४३ ॥
पित्तोत्तरे कटुष्णाम्भ स्तावन्मात्र पिबेदनु ।
स्नेहाजीर्णं शमयति श्लेष्माण तद्भिनत्ति च ॥ ४४ ॥
पवनस्यानुकूलत्व कुर्यादुष्णोदक नृणाम ।
क्वाथादेमात्रया प्रात र्धान्यशुण्ठीजल पिबेत् ॥ ४५ ॥
यस्यानुवासनो दत्त सकृदत्र श्रम व्रजेत ।
अत्युष्णो वातिशीतो वा वायुना वा प्रपीडित ॥ ४६ ॥
अमात्रोधिकमात्रो वा गुरुत्वाद्बहुभेषज ।
तस्यान्योऽल्पतरो देयो न हि स्निह्यति तिष्ठति ॥ ४७ ॥
त्रोन्यश्च यामानऽनुवर्त्तते च स्नेहो नर स्यात्तविशुद्धदेह ॥ ४८ ॥
अशुद्धमपि वातेन केवलेनातिपीडितम ।
स्नेहैगाढैर्मतिमान्निरूहै समुपाचरेत् ॥ ४९ ॥
रूक्षस्य बहुवातस्य द्वौ त्रीन्वाप्यनुवासनान् ।
दत्वा स्निग्धतनु ज्ञात्वा तत पश्चान्निरूहयेत् ॥ ५० ॥
न चाभुक्तवत स्नेह प्रणिधेय कथञ्चन ।
सूक्ष्मत्वात् शून्यकोष्ठस्य क्षिप्रमूर्ध्वमधो नयेत् ॥ ५१ ॥
एक तथा त्रीन् कफजे विकारे पित्तात्मके पञ्च तु सप्त वापि ।
वाते तु नैकादशधा पुनर्वा वस्तीनऽयुग्मान् कुशलो विदध्यात् ।५२
सदानुवासयेद्भुक्त सार्द्रपाणि नर भिषक् ।
ज्वर विदग्धभुक्तस्य कुर्यात् स्नेह प्रयोजित ॥ ५३ ॥
न चातिस्निग्धमशन भोजयित्वानुवासयेत् ।
मन्दं मूर्च्छाञ्च जनये द्विधास्नेह प्रयोजित ॥ ५४ ॥
स्नेहवस्ति निरूह वा नैकमेवाभ्यसेच्चिरम् ।

स्नेहात्पित्तकफोत्क्लेशौ निरूहात्पवनाद्भयम् ॥ ५५ ॥
तस्मान्निरूढोऽनुवास्यो निरूह्यश्चानुवासितः।
नैवं पित्तकफोत्क्लेशौ स्यातां न पवनाद्भयम् ॥ ५६ ॥
निरूहशोधितैर्मार्गैः स्नेहः सम्यग्विसर्पति।
अपेतसर्वदोषासु नाड़ीष्विव वहिर्जलम् ॥ ५७ ॥
अहोरात्रादपि स्नेहः प्रत्यागच्छन्न दुष्यति।
कुर्याद्वस्तिगुणांश्चापि जीर्णस्त्वल्पगुणो भवेत् ॥ ५८ ॥
यस्य नोपद्रवं कुर्यात् स्नेहवस्तिरनिःसृतः।
सर्वोऽल्पो वावृतो रौच्यादुपेच्यः संविजानता ॥ ५९ ॥
अनायान्तमहोरात्रात् स्नेहं सोपद्रवं हरेत्।
स्नेहवस्तावनायाते नान्यः स्नेहः प्रशस्यते ॥ ६० ॥
कुष्टकमुवाकल्कन्तु पाययेत्तक्रसंयुतम्।
श्रीष्णात्तैक्ष्णात्सरत्वाच वस्तिं तस्यानुलोमयेत् ॥
गोमूत्रेण त्रिवृत्पथ्या कल्कं वातानुलोमनम् ॥ ६१ ॥
यग्रुद्धस्य मलोन्मिश्रः स्नेहो नैति यदा पुनः।
तदाङ्गसदनाध्माने शूलं श्वासश्च जायते ॥ ६२ ॥
पक्काशय गुरुत्वञ्च तदा दद्यान्निरूहणम्।
तीक्ष्ण तीक्ष्णौषधैरेव सिद्धं चाप्यनुवासनम् ॥ ६३ ॥
भयोन्मादव्यथाशोषा ऽजीर्णारुचिप्रमेहिणः।
मूर्च्छाकुष्टोदरस्थौल्य कासश्वासक्षयातुराः ॥ ६४ ॥
शोषभ्रममदच्छर्दि युताः वस्त्यसहाऽबलाः।
नास्थाप्या नानुवास्याश्च वातरोगादृते नराः ॥ ६५ ॥
उदरी च प्रमेही च कुष्ठीस्थूलश्च मानवः।
अवश्यं स्थापनीयाश्च नानुवास्याः कथञ्चन ॥ ६६ ॥
अनेन विधिना सप्त तथाष्टौ वा नवैव वा।

विधेया वस्तयो नृणामन्तरान्तर्निरूहणम् ॥ ६७ ॥
विष्टब्धानिलविण्मूत्रः स्नेहहीनोऽनुवासनः ।
दाहक्लमपिपासार्त्तिकरश्चाप्यनुवासनः ॥ ६८ ॥
सानिलः सपुरीषश्च स्नेहः प्रत्येति यस्य वा ।
श्रोपचोषौ विना शीघ्रं ससम्यगनुवासितः ॥ ६९ ॥
गुदस्य दूरानुगते स्नेहे स्नेहस्य दर्शनम् ।
मुखे सर्वेन्द्रियाणां वा ह्युपलेपोऽवसादनम् ॥ ७० ॥
स्नेहगन्धि मुखञ्चापि कासश्वासावरोचकाः ।
अतिपीडितवत्तत्र विधिराचापनन्तथा ॥ ७१ ॥
गले निष्पीड्य तत्रास्य कार्म्मयेत्तं प्रयत्नतः ।
कार्य्यं नस्यं सुतीक्ष्णञ्च तीक्ष्णं चापि विरेचनम् ॥ ७२ ॥
उत्क्लेशो ग्लानिरङ्गस्य सादः पर्व्वव्यथारुचिः ।
निरेति स्नेहसंमिश्रं पुरीषं बहुशो मृदु ॥ ७३ ॥
ईषत्स्थौल्य भवेत्कुक्षि गुदवङ्क्षणवस्तिषु ।
स्निग्धस्यैतानि लिङ्गानि जानीयादनुवासने ॥ ७४ ॥
जीर्णान्नमथ सायाह्ने स्नेहप्रत्यागते पुनः ।
लघ्वन्नं भोजयेत्कामं दीप्ताग्निस्तु नरो यदि ॥ ७५ ॥
दत्तस्तु प्रथमो वस्तिः स्नेहयेद्वस्तिवङ्क्षणौ ।
सम्यग्दत्तो द्वितीयस्तु कोष्ठस्थमनिलं जयेत् ॥ ७६ ॥
बलवर्णौ च जनयेत्तृतीयस्तु प्रयोजितः ।
रसं चतुर्थो रक्तन्तु पञ्चमः स्नेहयेदपि ॥ ७७ ॥
षष्ठस्तु स्नेहयेन्मांसं मेदः स्निह्यति सप्तमः ।
अष्टमो नवमश्चास्थि तथा मज्जानमेव च ॥ ७८ ॥
एवं शुक्रगतान् दोषान् द्विगुणः साधु साधयेत् ।
अष्टादशाष्टादशकान् यो वस्तीनां निषेवते ॥

यथोक्तेन विधानेन परिहारक्रमेण तु ॥ ७९ ॥
सकुञ्जरबलोऽश्वस्य जवतुल्योऽमरप्रभः।
वीतपाप्माश्रुतधरः सहस्रायुर्नरो भवेत् ॥ ८० ॥
आपादतलमूर्ध्वस्थान् दोषान् पक्वाशयस्थितः।
वीर्येण वस्तिरादत्ते ह्यपादित्यो रसानिव ॥ ८१ ॥
पक्वाशयादस्तिवीर्य्यं स्वदेहमनुसर्प्यति।
वृक्षमूले निषिक्तानामपाम्पूर इव द्रुमम् ॥ ८२ ॥
स चापि वस्तिः सहसा केवलः समलोऽपि वा।
प्रत्येति वीर्य्यन्त्वनिलै रपानाद्यैः प्रणीयते ॥ ८३ ॥
मूले निषिक्तो हि यथा द्रुमः स्यान्नीलच्छदः कोमलपल्लवश्च।
काले महत्पुष्पफलानुबन्धस्तथा नरः स्यादनुवासनेन ॥ ८४ ॥
स्तब्धाश्च ये संकुचिताश्च केचित् ये पङ्गवो येऽपि च गात्रभग्नाः।
येषाञ्च शाखासु चरन्ति वाताः शस्तो विशेषेण हि तेषु वस्तिः ॥८५
आध्मापिते प्राग्ग्रथिते पुरीषे शूले च भक्तानभिनन्दने च।
एवम्प्रकाराश्च भवन्ति कुक्षौ य आमयास्तेषु च वस्तिरिष्टः ॥८६॥
याश्च स्त्रियो वातकृतोपसर्गा गर्भञ्च विदन्ति नृभिः समेताः।
क्षीणेन्द्रिया ये च नराः कृशाश्च बस्तिः प्रशस्तः परमो हि तेषु ॥८७
उष्णाभिभूतेषु तथातिशीतान् शीताभिभूतेषु तथा सुखोष्णान्।
तत्प्रत्यनीकेऽथ समुक्तयुक्त्या सर्वत्र वस्तीन् प्रविभज्य दद्यात् ॥८८॥
न बृंहणीयान्विदधीतवस्तीन् विशोधनीयेषु गदेषु वैद्यः।
कुष्ठप्रमेहादिषु मेदुरेषु नरेषु ये चापि विशोधनीयाः ॥ ८९ ॥
क्षीणक्षतानामविशोधितानां न शोषिणां नो कृशदुर्बलानाम्।
न मूर्च्छितानां विदधीतवस्तिं येषाञ्च दोषाः पुनरूर्ध्वगाः स्युः ॥९०
शाखागतान् कोष्ठगतांश्च रोगान्ममेडि सर्वावयवाङ्गगांश्च।
ये सन्ति दोषा न तु कश्चिदन्यो वायोः परं जन्मनि हेतुरस्ति ॥९१॥

विषमूत्रपित्तादिमलाशयानां वातायहः सौख्यकरश्च यस्मात्।
तस्माच्च वातिकसमाश्रयाणां वस्तिं विना भेषजमन्यदस्ति ॥
तस्माच्चिकित्सार्धमिति ब्रुवन्ति सर्वां चिकित्सामपि वस्तिमेके ॥८

गुडूच्येरण्डपूतीक भार्ङ्गीवृषक रोहिषम्।
शतावरीं सहचरं काकनासा पलोन्मिताम् ॥ ८३ ॥
यवमाषातसीकोल कुलित्थान् प्रसृतोन्मितान्।
चतुर्द्रोणेऽम्भसः पक्त्वा द्रोणशेषेण तेन च ॥ ८४ ॥
पचेत्तैलाढकं पेष्यै र्जीवनीयैः पलोन्मितैः।
अनुवासनमेतद्धि सर्ववातविकारनुत् ॥ ८५ ॥

इति गुडूचीतैलम्।

जीवन्तीं मदनं मेदां श्रावणीं मधुकं वलाम्।
जीवकर्षभकौ कृष्णां काकनासां शतावरीम् ॥ ८६ ॥
स्वगुप्तां क्षीरकाकोलीं कर्कटाख्यां शटीं वचाम्।
पिष्ट्वातैलं घृतं क्षीरे साधयेत्तु चतुर्गुणे ॥ ८७ ॥
बृंहणं वातपित्तघ्नं वलशुक्राग्निवर्द्धनम्।
मूत्ररेतो रजो दोषान् हरेत्तदनुवासनात् ॥ ८८ ॥

इति जीवन्त्याद्यं यमकम्। इत्यनुवासनवस्तिविधिः।

—•—

## अथ निरूहविधिमाह।

निरूहवस्तिर्बहुधा भिद्यते कारणान्तरैः।
तैरेव तस्य नामानि कृतानि मुनिपुङ्गवैः ॥ ८९ ॥
वातव्याधावुदावर्त्ते वातासृग्विषमज्वरे।
मूर्च्छातृष्णोदरानाह मूत्रदोषाश्मरीषु च ॥ १०० ॥
हृद्ग्रहासृग्दरमन्दाग्नि प्रमेहेषु निरूहणम्।

शूलेऽम्लपित्ते हृद्रोगे योजयेद्विधिवद्बुधः ॥ १०१ ॥
मधुस्नेहनकल्काख्याः कषाया वा मताः क्रमात् ।
त्रोणि षड्द्वादशत्रीणि पलान्यनिलरोगिषु ॥ १०२ ॥
पित्ते चत्वारि चत्वारि द्वे द्वे चैव चतुष्टयम् ।
षट्त्रीणि द्वादशत्रीणि कफे चापि निरूहणम् ॥ १०३ ॥
नात्युच्छ्रितं नाप्यतिनीचपादं सपादपीठं शयनं प्रशस्तम् ।
प्रधानमृद्वास्तरणोपपन्नं प्राक् शीर्षकं शुक्लपटोत्तरीयम् ॥१०४॥
प्रक्षिप्य बस्तौ मथितं खजेन सुबद्धपुञ्छाननिर्वलीकम् ।
अंगुष्ठमध्येन मुखं पिधाय गृहीतवेद्यो निजसव्यहस्ते ॥१०५॥
तैलाक्तगात्रं कृतमूत्रविट्कं नातिक्षुधार्त्तं शयने मनुष्यम् ।
समे सुदेशे नतशीर्षकञ्च नात्युच्छ्रितोनास्तरणोपपन्ने ॥ १०६ ॥
सव्येन पार्श्वेन सुखं शयानं कृत्वर्जु देहञ्च भुजोपधानम् ।
निष्कुञ्च्यसव्येतरमस्य सक्थिवामं प्रसार्य्य प्रणयेच्च बस्तिम् ॥१०७॥
स्निग्धे गुदे नेत्रचतुर्थभागं स्निग्धं शनैरर्चितपृष्ठवंशम् ।
अकम्पनाविपनलाववादीन् पार्श्वोर्गुणोश्चापि हि दर्शयद्भिः ॥१०८
प्रपीड्यचैकग्रहणेन दत्ते नेत्रं शनैरेव ततोपकर्षेत् ।
तिर्य्यक् प्रणीते न गता च धारा गुदं प्रणश्चेश्चलिते च नेत्रे ॥१०८॥
दत्तः शनैर्नाशयमेति बस्तिः कण्ठं प्रधावत्यतिपीड़ितस्तु ।
शीतस्तु विष्टभ्य करोति दाहं मूर्च्छाञ्च तापन्त्वतिमात्रमुष्णः ११०
स्निग्धोऽग्निनाशं पवनं विरूक्षस्तथाल्पमात्रोऽलवणस्त्वयोगम् ।
करोति मात्राभ्यधिकोऽतिरोगं चामन्तुसान्द्रः सुचिरेण चैति १११
दाहातिसारौ लवणोऽतिकुर्य्यात्तस्मात् सुयुक्त्या सममेव दद्यात् ।
विड्वातवेगञ्च विधार्य्य दत्ते निःक्षथ्यमुक्ते प्रणयेच्च शेषम् ॥ ११२ ॥
अनुवासितमभ्यक्तं स्विन्नं स्नेहैर्निरूहयेत् ।
अनुवास्य स्निग्धतनुं तृतीयेऽह्नि निरूहयेत् ॥

मध्याह्ने किञ्चिदावृत्ते निरूहन्तु समाचरेत् ॥ ११३ ॥
सव्यं प्रसारयेत् सक्थि दक्षिणञ्चोपकुञ्चयेत् ।
मध्याह्ने सुमना जीर्णे निरन्नो वाग्यतो नरः ॥ ११४ ॥
वस्तिं सव्ये करे कृत्वा दक्षिणेनाऽवपीड़येत् ।
एकेनैवावपीड़ेन न द्रुतं न विलम्बितम् ॥ ११५ ॥

—०—

ततो नेत्रमपनीयविंशन्मात्राः पीडनकालादवेक्ष्योत्तिष्ठेत्यातुरं ब्रूयात् । आतुरमुपवेशयेदुत्कटकं वस्तेरागमनायेति निरूह प्रत्यागमनकालो मुहूर्त्तो भवति ।

—०—

यावत्प्रत्येति हस्ताग्रं दक्षिणं जानुमण्डलम् ।
निमिषोन्मेषकालश्च मात्रा सा परिकीर्त्तिता ॥ ११६ ॥
अनेन विधिना दद्या द्वस्तिं वस्तिविशारदः ।
द्वितीयं वा तृतीयं वा चतुर्थं वा यथार्हतः ॥ ११७ ॥
सम्यग्निरूढ़लिङ्गे तु प्राप्ते वस्तिं निवारयेत् ।
अपि हीनं क्रमं कुर्य्या नैव कुर्य्यादतिक्रमम् ।
विशेषात् सुकुमाराणां हीन एव क्रमो मतः ॥ ११८ ॥
मृदुर्वस्तिः प्रयोक्तव्यो विशेषाद्बालवृद्धयोः ।
तयोस्तीक्ष्णः प्रयुक्तस्तु ध्रुवं हन्याद्बलौजसी ॥ १८ ॥
सस्नेह एकः पवने निरूहो द्वौ स्वादुशीतौ पयसा च पित्ते ।
त्रयः समूत्राः कटुकोष्णरूक्षाः कफे निरूहा न परं विधेयाः ॥१२
एकोपकर्षत्यनिलं स्वमार्गात्पित्तं द्वितीयस्तु कफं तृतीयः ।
प्रत्यागते कोष्णजलावसिक्तः शाल्यन्नमद्यात्तनुनारसेन ॥ १२१ ॥
जीर्णे च सायं लघु चाल्पमात्रं भुक्तानुवास्यः परिहं हार्यम् ।
निरूहणादागमनेन तैलेनाम्लानिलघ्नौषधमाधितेन ॥ १२२ ॥

दत्वा स्फिजो पाणितलेन ताडं स्नेहस्य शीघ्रागमनायवैद्यः ॥१२३

अल्पाल्पवेगोविड्वात हीनो हीननिरूहणः।
मूर्च्छाशूलकफप्रायो मद्दावेगोऽतिनिरूहितः ॥ १२४ ॥
यस्य मूत्रं पुरीषञ्च कफोवायुश्च गच्छति।
क्रमेण लघुता चैव सुनिरूढ़ः समानवः ॥ १२५ ॥
सुनिरूढं ततो जन्तुं स्नात भुक्तरसोदनम्।
यथोक्तेन विधानेन योजयेत् स्नेहवस्तिना ॥ १२६ ॥
तदहस्तस्य पवना द्भयं बलवदिष्यते।
रसोदनोऽनुगस्तस्य तदहश्चानुवासनम् ॥ १२७ ॥
सम्यग्निरूढं तैलाक्त जलेनोष्णेन सेचितम्।
अल्पस्नेहं जाङ्गलेन रसेनाह्नन्तु भोजितम्॥ १२८ ॥
योजयेदल्पमात्रे ण तत्क्षणं स्नेहवस्तिना।
पश्चादग्निबलं ज्ञात्वा पवनस्य विचेष्टितम् ॥
अस्तोपस्तभिते कोष्टे स्नेहवस्तिर्विधीयते ॥ १२९ ॥

द्वाहे त्राहे चाङ्गाय पञ्चमे च दद्यान्निरूहादनुवासनञ्च ॥१३०॥

विविक्तता मनस्तुष्टिः स्निग्धता व्याधिनिग्रहः।
आस्थापने स्नेहवस्तौ सम्यग्दत्ते तु लक्षणम् ॥ १३१ ॥
अनायान्त मुहूर्त्तान्त निरूहं शोधनैर्हरेत्।
निरूहैरेव मतिमान् क्षारमूत्राम्लसयुतैः ॥ १३२ ॥
विगुणानिलविष्टब्धं चिरं तिष्ठन्निरूहणम्।
शूलारतिज्वरानाहोन्मादमरणाय प्रपद्यते ॥ १३३ ॥
न तु भुक्तवते देय मास्थापनमिति स्थितिः।
आमं तद्धुदरेद्भुक्तं छर्दिं वा जनयेद् भृशम् ॥ १३४ ॥
कोपयेत्सर्वदोषान्वा तस्माद्दद्यादभोजिने ॥ १३५ ॥
आवस्थिकं क्रमं चापि मत्वा कार्यं निरूहणम्।

मलेऽपकृष्टे दोषाणां बलवत्त्वं न विद्यते ॥ १३६ ॥
अतिप्रपीड़ितो वस्तिः प्रकृस्यामाशयं गतः ।
वातेरितो नासिकाभ्यां मुखतो वा प्रपद्यते ॥ १३७ ॥
छर्दिहृल्लासमूर्च्छादीन् प्रकुर्य्याद्दाहमेव च ।
तत्र तूर्णं गलापीडं प्रकुर्य्यादवधूननम् ॥ १३८ ॥
शिरःकायविरेकौ च तीक्ष्णैः सेकांश्च शीतलान् ।

—०—

## अथ द्वादशप्रसृतानाह ।

दत्वादौ सैन्धवस्याक्षं मधुनः प्रसृतद्वयम् ।
विनिर्मथ्य ततो दद्यात् स्नेहस्य प्रसृतत्रयम् ॥ १३९ ॥
एकीभूते ततः स्नेहे कल्कस्य प्रसृतं क्षिपेत् ।
सम्मूर्च्छिते कषायन्तु चतुःप्रसृतसम्मितम् ॥ १४० ॥
वितरेच्च तथा वाप मन्तेद्विप्रसृतोन्मितम् ।
एव प्रकल्पितो वस्तिर्द्वादशप्रसृतो भवेत् ॥ १४१ ॥
धारयेत्त्वौषधं पाणिं न तिष्ठत्यवलिप्य च ।
न करोति च सोमन्तं सुनिरूहः प्रयोजितः ॥ १४२ ॥

इति निरूहणविधिः ।

वातघ्नौषधनिःक्वाथाः सैन्धवत्रिवृता युताः ।
साम्लाः सुखोष्णा देयाः स्युर्वस्तयः कुपितेऽनिले ॥ १४३ ॥
न्यग्रोधादिगणक्वाथः काकोल्यादि समायुत. ।
विधेया वस्तयः पित्ते मधौदघृतशर्कराः ॥ १४४ ॥
न्यग्रोधादिगणक्वाथाः पिप्पल्यादिसमायुताः ।
मधौदमूत्रा देयाः स्युर्वस्तयः कुपिते कफे ॥ १४५ ॥
क्षीरेक्षुरसमधौद घृतयुताः सुशीतलाः ।

क्षीरिद्रुमकषायाख्याः वस्तयः शोणिते हिताः ॥ १४६ ॥
प्रियग्वादिगणक्काथा अम्बष्टादिसमायुताः ।
सक्षौद्राः सघृता वापि वस्तयो ग्राहिणो हिताः॥ १४७ ॥
विदार्येरावतीशेलु शाल्मलीधन्वनांकुराः ।
क्षीरसिद्धाः क्षौद्रयुक्ता नाम्ना पिच्छिलवस्तयः ॥ १४८ ॥
वाराहमाहिषोरभ्र वैडालैणेयकौक्कुटम् ।
सद्यस्कमसृगाजम्वा देयं पिच्छिलबस्तिषु ॥ १४९ ॥
मात्रा पिच्छिलवस्तीनां पलैर्द्वादशभिर्मता ॥ १५० ॥

इति पिच्छिलवस्तयः ।

दद्यात्तुत्क्लेशनं पूर्वं मध्ये दोषहरं पुनः ।
पश्चात्संशमनीयञ्च बस्तिं दद्याद्विचक्षणः ॥ १५१ ॥
एरण्डमूलं मधुकं पिप्पलीसैन्धवं बचा ।
हवुषाफलकल्कश्च बस्तिरुत्क्लेशनः स्मृतः ॥ १५२ ॥

इत्युत्क्लेशनबस्तिः।

शताह्वामधुकं बिल्वं कौटजं फलमेव च ।
सकाञ्जिकः सगोमूत्रो बस्तिर्दोषहरः स्मृतः ॥ १५३ ॥

इति दोषहरवस्तिः ।

प्रियंगुर्मधुकं मुस्तं तथैव च रसाञ्जनम् ।
सक्षीरः शस्यते वस्तिर्दोषाणां शमनः स्मृतः ॥ १५४ ॥
शोधनद्रव्यनिःक्काथास्तत्कल्कैः स्नेहसैन्धवैः ।
युक्त्या खजेन मथिता वस्तयः शोधनाः स्मृताः ॥ १५५ ॥

इति शोधनवस्तिः ।

त्रिफलाक्काथगोमूत्रैः क्षौद्रक्षारसमायुताः ।
ऊषकादिप्रतीवापाबस्तयो लेखनाः स्मृताः ॥ १५६ ॥

इति लेखनवस्तिः ।

बृंहणद्रव्यनिःक्वाथाः कल्कै र्मधुरकैर्युताः ।
सर्पिर्मांसरसोपेताः बस्तयो बृंहणाः स्मृताः ॥ १५७ ॥

इति बृंहणबस्तिः ।

शताह्वा शिग्रु सिद्धार्थ वक्राकौचुवचाघनैः ।
राठेन्द्रयवसिंधूत्थैः पिष्टैर्बस्तिः प्रकल्पितः ॥ १५८ ॥
दशमूलोरसक्षौद्र तैलकाञ्जिकयोगतः ।
शोधनो दीपनाशाय पुष्टिवर्णाग्निवर्द्धनः ॥ १५९ ॥
चत्वारो मदनाः पिष्टाः क्षौद्रतैलचतुष्पलम् ।
कुडवं मांसनिर्यासा दत्वार्द्धं रुचकाद्भवेत् ॥ १६० ॥
बलवर्णकरो बस्तिर्वृष्यो मासबलप्रदः ।
वातशोणितदेहानां बृंहणः स्थैर्यकारकः ॥ १६१ ॥
पटोलनिम्बभूनिम्ब रास्नासप्तच्छदाम्भसः ।
चत्वारः प्रसृता ह्येको घृतात्सर्षपकल्कतः ॥
निरूहः पञ्चतिक्तोऽयं मेहाभिष्यन्दनाशनः ॥ १६२ ॥
विडङ्गत्रिफलादन्ती सुम्बाखुपर्णिकास्तथा ।
कषायाः प्रसृताः पञ्चतैलादिको विमथ्यतान् ।
विडङ्गादिकषायेण निरूहः कफनाशनः ॥ १६३ ॥

इति विडङ्गादिनिरूहः ।

मधुतैलात् प्रकुञ्चाः षट् षट् चैरण्डकषायतः ।
युक्ताः सैन्धवकर्षेण शताह्वार्द्धपलेन च ॥ १६४ ॥
वृष्यो हृद्यो निरूहोऽयं मलघ्नमधुतैलिकः ।
गुल्मोदावर्त्तहृद्रोगी मेहहन्ता निरत्ययः ॥ १६५ ॥
एरण्डक्वाथतुल्यांशं मधुतैलपलाष्टकम् ।
शतपुष्पापलार्द्धं सैन्धवार्द्धेन संयुतः ॥ १६६ ॥

मलवर्णकरो बस्तिर्हृद्यो दीपनहृंहणः।
मेदो गुल्मक्रिमिप्लीह गूथोदावर्त्तनाशनः॥ १६७॥
मधुतैले समे स्यातां काथश्चैरण्डमूलजः।
पलार्द्धं शतपुष्पायाः स्ततोर्द्धं सैन्धवस्य च॥ १६८॥
पलेनैकेन संयुक्तः खजेन तु विलोडितः।
देयः सुखोष्णो भिषजा मधुतैलिकसंज्ञकः॥ १६९॥
तदेव मधुतैलञ्च काथः सरससैन्धवः।
पिप्पलीफलसंयुक्तो वस्तिर्युक्तरथः स्मृतः॥ १७०॥
चतुष्पलं तु मधुनः तैलस्यापि चतुष्पलम्।
एरण्डमूलकाथस्य तथा देयं पलाष्टकम्॥ १७१॥
पलार्द्धं शतपुष्पायाः स्ततोऽर्द्धं सैन्धवस्य च।
मदनस्य फलञ्चैकं योज्य युक्त्या विमर्दयेत्॥ १७२॥
रसक्षीराम्लमूत्राणां मान्यञ्च पलमात्रकम्।
खजेनालोड़ितः कोष्णो मधुतैलिकसंज्ञितः॥ १७३॥
पादहीनोपि देयः स्याद्वस्तिर्लेखनबृंहणः।
दीपनो गाढविट्कघ्नः क्रमीणां नाशनः परः॥ १७४॥
पाचनो निष्परिहारः सुखदो निरुपद्रवः।
पुटकैकं प्रदानेन सिद्धोयं वस्तिरुत्तमः॥ १७५॥

इति मधुतैलिकनिरूहवस्तयः

क्षौद्राज्यक्षीरतैलानां प्रसृतं प्रसृतं भवेत्।
हवुषासैन्धवाचांशो वस्तिः स्याद्यापनः परः॥ १७६॥

इति यापनवस्तिः

गोमूत्रस्य पलान्यष्टौ गुडाऽत्यम्लकयोः पलम्।
शताह्वासैन्धवे स्यातां मचमात्रे प्रमाणतः॥ १७७॥

देय आमेऽनिले रूचस्ताद्दत्तैलपलान्वित.।
उदावर्त्ते वातकोष्टे सिद्दवस्तिरिति स्मृत: ॥ १७८ ॥

इति सिद्दवस्ति:।

सैन्धवार्चं समादाय शताह्वाचसमन्वितम्।
गोमूत्रस्य पलान्यष्टावम्लिकाया. पलद्दयम् ॥ १७९ ॥
गुडस्य तु पले द्वे तु सर्वमालोड्य यन्नत.।
वस्त्रपूत सुखोष्णञ्च वस्तिं दद्याद्दिचक्षण. ॥ १८० ॥
शूल विट्सगमानाह मूत्रकृच्छ्रञ्च दारुणम्।
क्रिम्युदावर्त्तवातादीन् सद्यो हन्यात्प्रयोजित ॥ १८१ ॥

इति चारवस्ति.।

अष्टौ पलानि मूत्रस्य कुसुम्भायास्तथुपलम्।
पलद्दयं तु तैलस्य माचिकप्रसृत तथा ॥ १८२ ॥
रसकचीरसौवीर तिन्तिडीकाम्यलम्पलम्।
गुडादेक पल दद्या मदनैस्य पल तथा ॥ १८३ ॥
शतपुष्पावचारास्ना कुष्टदारुघन निशा।
सिद्दार्थक विल्वपेशो यवानोसैन्धव वला ॥ १८४ ॥
कर्षान्वित स्नदणपिष्ट स्नजेनाशु प्रमथ्य च।
युञ्ज्यान्निरूहवत्प्राज्ञो निरपायं महद्गुणम् ॥ १८५ ॥
मूत्रवस्तिरिति ख्यात सर्वव्याधिहर: पर।

इति मूत्रवस्ति:

सिन्धूद्भवस्य कर्षमम्लोकाया: पलं गुडाद्धपलम्।
सुरभीपयस कुडव मर्दरसै कृतो वस्ति: ॥ १८६ ॥
ईषत्तैलयुतोय सुखे दत्ते निहन्ति रोगगणम्।
कट्यु रुपृष्टगोघं शूलं चामानिल घोरम् ॥ १८७ ॥

चिरभवमूरुस्तम्भं गृध्रसिरोगं च जानुसंकोचम् ।
विषमज्वराणि घोरं क्लैव्यञ्च विनाशयत्याशु ॥ १८८ ॥
वस्तिर्वैतरणोक्तो गुणगणयुक्तः सुविख्यातः ॥ १८९ ॥
भोजयित्वा च सायाह्ने सर्वस्यायं प्रशस्यते ।
अथ चेद्बलवान् जन्तु रभुक्तापि तदा क्वचित् ॥ १९० ॥

इति वैतरणवस्तिः ।

दशमूलीकषायस्य पलान्यष्टौ पलद्वयम् ।
तैलस्य मधुनश्चाथ शताह्वाच्चं प्रयोजयेत् ॥ १९१ ॥
अक्षञ्च सैन्धवस्येष्टं वस्तिरेभिर्महागुणः ।
आत्रेयानुमतो ह्येष भुक्ते योज्यो विचक्षणैः ॥ १९२ ॥
नित्यमेकान्तरं वापि परिहारविवर्जितः ।
सुकुमारेषु वृद्धेषु स्त्रीषु यन्त्रणभीरुषु ॥
द्रीयमानोनिहन्त्याशु दोषानीकान् सुदुस्तरान् ॥ १९३ ॥
वातरक्तं क्षयं कासं कुष्टञ्च विषमज्वरम् ।
अश्मरीमूत्रकृच्छ्रञ्च गुल्मप्लीहहलीमकम् ॥ १९४ ॥
वातपित्तभवान्रोगान् कफजान् सान्निपातिकान् ।
तान् सर्वान्नाशयत्याशु बलवर्णाग्निवर्द्धनः ॥ १९५ ॥
नैरूहिकेषु सर्वेषु वस्तिषु प्रवरो मतः ।
शुक्रसंजननो ह्यथ ह्यार्द्धमात्रिकसंज्ञकः ॥ १९६ ॥
शतशः सन्ति निरूहाः सुश्रुतचरकादिमुनिगदिताः ।
भिषजां पुनरसुनैव व्यवहारश्चार्द्धमात्रेण ॥ १९७ ॥

इत्यर्द्धमात्रिकनिरूहः ।

एरण्डमूलं त्रिफलापलांशा ह्रस्वानि मूलानि पलानि पञ्च ।
रास्नाश्वगन्धा सबलागुडूचीपुनर्नवारग्वधदेवदारु ॥ १९८ ॥

भागा पलाशमदनाष्टयुक्ता जले द्विकंसे क्वथिताष्टशेषे ।
पेयाशताह्वाह्वपुषाप्रियंगु सपिप्पलीकं मधुकं वचा च ॥ १९९ ॥
रसाञ्जनं वासकबीजमुस्तमक्षप्रमाणं लवणांशयुक्तम् ।
समाक्षिकस्तैलयुतः समूत्रो वस्तिर्नृणां लेखनदीपनीयः ॥२००॥
जङ्घोरुपादत्रिकपृष्ठशूलं कफावृतं मारुतनिग्रहञ्च ।
विण्मूत्रवातग्रहणं सशूलमाध्मानकं चाश्मरिशर्कराश्च ॥ २०१ ॥
आनाहमर्शोग्रहणी प्रदोषान् एरण्डवस्तिः शमयेत् प्रयुक्तः ।

इत्येरण्डाद्योनिरूहः ।

क्षीरं गुडं मांसरसं पयश्च धान्यानि मूत्रं मधुसैन्धवञ्च ।
एतान्युक्तान्यपि दापयेच्च निरूहयोगे मदनात् फलञ्च ॥ २०२ ॥
लवणं कार्षिकं दद्यात् फलमेकन्तु मादनम् ।
वाते गुडं सिता पित्ते कफे सिद्धार्थकादयः ॥ २०३ ॥
विट्श्लेष्मपित्तानिलमूत्रकर्षी दार्ढ्यावहः शुक्रबलप्रदश्च ।
विट्कस्थितं दोषचयं निरस्य सर्वान् विकारान् शमयेन्निरूहः २०४
ज्वरे छर्द्यामतीसारे गूढगन्यादितेषु च ।
हृद्रोगे क्षताहारे दुर्बले व्याधिकर्षिते ॥ २०५ ॥
क्षीणे रक्तातिसारे च तथा मूर्च्छातिकर्षिते ।
प्रथितामा नराणाञ्च निरूहो न प्रशस्यते ॥ २०६ ॥
पीतस्नेहस्य श्रान्तस्य विरिक्तस्य सुतारणे ।
निरूहितस्य कायाग्निर्मन्दो भवति देहिनः ॥ २०७ ॥
स चाल्पैर्लघुभिश्चान्नैर्यवपयुक्तैर्विवर्द्धते ।
काष्ठैरणुभिरल्पैश्च मधुचितं इवानलः ॥ २०८ ॥
युक्तोऽग्नौ जीवति चिरं रोगी स्याद्विगति गते ।
शान्तो पञ्चत्वमायाति देहो तस्माद्धरोऽनलः ॥ २०९
कालन्तु वस्तिष्वनुयाति यावत्तावद्भवेद्देपरिहारकाः ।

अत्याशनस्थानवचांसि पान स्वप्नं दिवामैथुनवेगरोधान् ॥
शीतोपवातातपशोकरोषांस्त्यजेदकालाहितभोजनञ्च ॥ २१० ॥
इति निरूहकल्पनाविधिः ।

—०—

## अथोत्तरवस्तिविधिमाह ।

वस्तेरुत्तरसंज्ञस्य विधिं वक्ष्याम्यतःपरम् ।
द्वित्रास्थापनतः शुद्धे निदध्याद्वस्तिमुत्तरम् ॥ २११ ॥
आतुराङ्गुलिमानेन नेत्रन्तु द्वादशाङ्गुलम् ।
वृत्तं गोपुच्छवन्मूलं मध्ययोः कृतकर्णिकम् ॥ २१२ ॥
सिद्धार्थवाहिच्छिद्राग्रं हैमरूप्यादिनिर्मितम् ।
चतुर्दशाङ्गुलं नेत्रं तत्र कार्य्यं विजानता ॥ २१३ ॥
मालती पुष्पवृत्ताभं कर्त्तव्यं छिद्रमेव च ।
मेद्रायामसमं केचिदिच्छन्ति खलु तद्विदः ॥ २१४ ॥
स्नेहप्रमाणं परमं प्रकुञ्चं चात्र कीर्त्तितम् ॥ २१५ ॥
पञ्चविंशतिवर्षाणामधोमात्राद्विकार्षिकी ।
तदूर्द्ध्वम्पलमात्रा च स्नेहस्योक्ता भिषग्वरैः ॥ २१६ ॥
निविष्टकर्णिकं मेढ्रे नारीणां चतुरङ्गुलम् ।
मूत्रस्रोतः परीणाह-मुद्गवाहि दशाङ्गुलम् ॥ २१७ ॥
तासामपत्यमार्गे तु निदध्याच्चतुरङ्गुलम् ।
द्व्यङ्गुलं मूत्रमार्गे तु कन्यानां त्वेकमंगुलम् ।
विधेयश्चांगुलश्चासां विधिवद्वक्ष्यते यथा ॥ २१८ ॥
स्नेहस्य प्रसृतं चात्र,स्वांगुलीमूलसम्मितम् ।
एवं प्रमाण विहितमूर्ध्वाद्बुद्धिविकल्पितम् ॥ २१९ ॥
औरभ्रः शौकरो वापि वस्तिराजश्च पूजितः ।

तदलाभे नियुञ्जीत गलचर्म च पक्षिणाम् ॥२२०॥
अथातुरमुपस्निग्धं स्विन्नं प्रथिताशयम् ।
यवागूं सघृतक्षीरां पीतवन्तं यथाबलम् ॥ २२१ ॥
निषण्णमाजानुसमे पीठे स्नानाश्रये समे ।
अभ्यक्तबस्तिमूर्धानं तैलेनोष्णेन युक्तितः ॥ २२२ ॥
ततः समं स्थापयित्वा नालमस्य प्रहर्षितः ।
पूर्वं शलाकयान्विष्य मार्गं नेत्रमनन्तरम् ॥ २२३ ॥
शनैःशनैर्घृताभ्यक्तं निदध्यादङ्गुलानि षट् ।
ततोऽवपीडयेद्बस्तिं शनैर्नेत्रञ्च निर्हरेत् ॥ २२४ ॥
ततः प्रयोजितस्नेहमपराह्णे विचक्षणः ।
पयसा भोजयेदेनं यूषैर्मांसरसेन वा ॥ २२५ ॥
अनेन विधिना दद्याद्बस्तीन् त्रींश्चतुरोऽपि वा ।
ततः प्रत्यागते स्नेहे स्नेहबस्तिक्रमो हितः ॥ २२६ ॥
स्त्रीणां कनिष्ठिकास्थूलं नेत्रं कुर्याद्दशांगुलम् ।
मूत्रकृच्छ्रविकारेषु बालानां त्वेकमंगुलम् ॥ २२७ ॥
योनिमार्गेषु नारीणां स्नेहमात्रा द्विपालिकी ।
मूत्रमार्गे पलोन्माना बालानाञ्च द्विकार्षिकी ॥ २२८ ॥
उत्तानायै स्त्रियै दद्यादूर्द्ध्वजान्वै समाहितः ।
कन्येतरस्यै कन्यायै तद्वदास्यनिपीडयेत् ॥ २२९ ॥
विकर्णिकेन नेत्रेण दद्याद्योनिमुखं प्रति ।
गर्भाशयविशुद्ध्यर्थं स्नेहेन द्विगुणेन तु ॥ २३० ॥
अप्रत्यागच्छति भिषग्बस्तावुत्तरसंज्ञके ।
भूयो बस्तिं निदध्यात्तु संयुक्तं शोधनौषधैः ॥ २३१ ॥
पायौ बस्तिं निदध्यात्तु प्रोक्तं गुल्मचिकित्सिते ।
प्रवेशयेद्वा मतिमान् फलवर्तिं तु योनिगाम् ॥ २३२

सूत्रे विशिष्टान्तां स्निग्धां शोधनद्रव्यसंयुताम् ।
पीडयेद्वाप्यधोनाभेर्वस्तेरुपरिवेष्टिताम् ॥ २३३ ॥
आरग्वधस्य पत्रेण निर्गुण्ड्याः स्वरसेन च ।
कुर्याद्गोमूत्रपिष्टेन वर्त्तिश्चापि ससैन्धवाम् ॥ २३४ ॥
मुद्गे लासर्षपसमां प्रविभिद्यवयांसि च ।
वस्तेरागमनार्थाय तां निदध्याच्छलाकया ॥ २३५ ॥
आगारधूमबृहतीफलपिप्पलीसैन्धवैः ।
विहताशक्तगोमूत्रसुरापिष्टैः सनागरैः ॥ २३६ ॥
दह्यमाने भिषग्वस्तौ पायौ वस्तिं प्रदापयेत् ।
क्षीरिद्रुमकषायेण पयसा शीतलेन च ॥ २३७ ॥
*शर्करा मधुमिश्रेण शीतेन मधुकाम्बुना ।*
वस्तिः शुक्ररुजः पुंसां स्त्रीणामार्त्तवजारुजः ।
हन्यादुत्तरवस्तिस्तु नोचितो मेहिनां क्वचित् ॥ २३८ ॥
शुक्रं दुष्टं शोणितं चाङ्गनानां कष्टं शान्तिं याति चासृग्दरश्च ।
मूत्राघातं मूत्रदोषान् प्रवृद्धान् योनेर्दोषांश्चापराऽपातसंज्ञम् ॥२३९॥
शुक्रावर्तं शर्करामश्मरीश्च शस्तं वस्तौ वङ्क्षणे मेहने च ।
घोरानन्यान् वस्तिजातांश्च रोगांश्चार्त्ते मेहादुत्तरो हन्ति वस्तिः॥२४०
सम्यग्दत्तस्य लिङ्गञ्च व्यापदः क्रम एव च ।
वस्तेरुत्तरसंज्ञस्य समानं स्नेहवस्तिना ॥ २४१ ॥
घृताभ्यक्ते गुदे चेष्या श्लक्ष्णा स्वांगुष्ठसन्निभा ।
मलप्रवर्त्तिनीवर्त्तिः फलवर्त्तिश्च सा स्मृता ॥ २३६ ॥
इत्युत्तरवस्तिविधिः ।

## इति वङ्गसेने वस्त्यधिकारः समाप्तः ॥ ७० ॥

—०—

## अथ धूमपानाधिकारमाह ।

प्रायोगिकः कासहरश्च धूमो वै रेचनः स्नैहिकवामनीयौ ।
पञ्चप्रकारा गदिताश्च धूमाः सिद्धान्तविद्भिर्मुनिभिश्च वैद्यैः ॥ १ ॥
एलादिना कुष्ठनतोज्झितेन क्षौमं प्रलिप्यांगुलकाष्ठमाना ।
प्रायोगिके वर्त्तिरियञ्च नेत्रमष्टांगुलं षड्गुणितं प्रशस्तम् ॥ २ ॥

बृहत्यौ चूर्णपर्णं शृङ्गी सेंगुदी त्वङ्मनःशिला ।
एषा कासहरा वर्त्तिर्नेत्रं षोडशकांगुलम् ॥ ३ ॥
शिरोविरेचनैर्वर्त्तिर्नेत्रं द्वात्रिंशतं मतम् ॥ ४ ॥
स्निग्धसर्ज्जैर्मधूच्छिष्टस्नेहगुग्गुलुसर्पिषैः ।
स्नैहिके वर्त्तिरेभिस्तु नेत्रं द्वात्रिंशदंगुलम् ॥ ५ ॥
वामनीये तु बल्कुरस्नायुश्रिखुरचर्मभिः ।
वर्त्तिर्दशांगुलं नेत्रं धूमः पञ्चविधो मतः ॥ ६ ॥

अथ सुखोपविष्टः सुमना ऋज्वधोदृष्टिरतन्द्रितः स्नेहाक्तां प्रदीप्ताग्रां वर्त्तिं स्रोतसि प्रणिधाय धूमं पिबेत् ।

—०—

मुखेन तं पिबेत्पूर्वं नासिकाभ्यां पुनः पिबेत् ।
मुखपीतं मुखेनैव वमेत्पीतञ्च नासया ॥ ७ ॥
यो वमेन्नस्ततो धूमं नस्तपीतं मुखेन वा ।
मनेत्रकर्णनासास्यसंश्रयान् लभते गदान् ॥ ८ ॥

—०—

तत्र प्रायोगिकं त्रींस्त्रीनुच्छ्वासानाददीत मुखनासिकाभ्याञ्च पर्यायांस्त्रीयतुरो वेति । मुखनासाभ्यां पीतं स्नैहिकं यावदश्रु प्रवृत्तिरिति । नासिकाभ्याञ्च पीतं वैरेचनिकमादोषदर्शनात् मुखेनैव कासान्तकरो ग्रासान्तरेषु च । वामनीयञ्च मुखेनैव तिल तण्डुलकृता यवागूं पित्वा वामनीयो यथा योगम् ।

हृत्कण्ठेन्द्रियसंशुद्धि र्लाघवं शिरसः शमः।
यथेरितानां दोषाणां सम्यक् पीतस्य लक्षणम् ॥ ९ ॥
बाधिर्य्यमान्ध्यं मूकत्वं रक्तपित्तं शिरोभ्रमम्।
अकाले चातिपीतश्च धूमः कुर्य्यादुपद्रवान् ॥ १० ॥
तत्रेष्टं सर्पिषः पानं विरेको रक्तमोक्षणम् ॥ ११ ॥

तस्य योगातियोगौ विज्ञातव्यौ। तत्र योगे रोगोपशमनमिति। अतियोगे तालुशोषपरिदाहपिपासामदमूर्च्छाङ्गपर्व्वभेददौर्बल्यमिति।

—०—

स्नैहिकं धूमकं दोषे वायौ पित्तानुगे यदि।
शीतन्तु रक्तपित्ते स्यात् श्लेष्मपित्ते विरूक्षणम् ॥ १२ ॥
न विरिक्तः पिबेद्धूमं न क्षते वस्तिकर्म्मणि।
न रक्ते न विषे नार्त्तो नाशक्तो नच गर्भिणी ॥ १३ ॥
न श्रमे न मदे नामे न पित्ते न प्रजागरे।
न मूर्च्छाभ्रमतृष्णासु न क्षीणे नापि च क्षते ॥ १४ ॥
न मद्यदुग्धे पीत्वा च न स्नेहञ्च माक्षिकम्।
धूमं न भुक्त्वा दध्ना च न रूक्षः क्रुद्ध एव च ॥ १५ ॥
न तालुशोषे तिमिरे शिरस्यभिहते न च।
न शङ्के न रोहिण्यां न रोगे च मद्यात्यये ॥ १६ ॥
एषु धूममकाले च मोहात्पिबति यो नरः।
रोगास्तस्य-प्रवर्द्धन्ते दारुणा धूमविभ्रमात् ॥ १७ ॥

गौरवं शिरसःशूलं पीनसार्द्धावभेदकौ ।
कर्णाक्षिशूलं कासश्च हिक्काश्वासौ गलग्रहः ॥ १८ ॥
दन्तदौर्वल्यमास्रावः श्रोत्रघ्राणाक्षिदोषजः ।
पूतिस्रावश्च छर्दिश्च दन्तशूलमरोचकः ॥ १९ ॥
हनुमन्याग्रहः कण्डूः क्रमयो मुखपांडुता ।
श्लेष्मप्रसेको वैस्वर्य्यं गलशुण्ड्युपजिह्विका ॥ २० ॥
खालित्य पिञ्जरत्वञ्च केशानां पतनन्तथा ।
क्षवथुश्चातितन्द्रा च बुद्धेर्मोहोऽतिनिद्रता ॥ २१ ॥
धूमपानात्प्रशाम्यन्ति बलं भवति चाधिकम् ।
शिरोरुहकपालाना मिन्द्रियाणां रसस्य च ॥ २२ ॥
न च वातकफात्मानो बलिनोऽप्यूर्ध्वजत्रुजाः ।
धूमरिक्तकपालस्य व्याधयः स्युः शिरोगताः ॥ २३ ॥
धूमप्रयोगात्पुरुषः प्रसन्नेन्द्रियवाङ्मनाः ।
दृढकेशद्विजश्मश्रुः प्रसन्नविशदाननः ॥ २४ ॥
प्रयोगपाने तस्याष्टौ कालाः संपरिकीर्त्तिताः ।
स्नात्वा भुक्त्वा समुल्लिख्य क्षुत्वा दन्तान्विघृष्य च ॥ २५ ॥
नावनाञ्जननिद्रान्ते चात्मवान्धूमपो भवेत् ।
वातश्लेष्मसमुत्क्लेशः कालेष्वेषु हि लक्ष्यते ॥ २६ ॥
अङ्गुष्ठपरिणाहेन मध्ये स्थूलोऽन्तयोस्तनुः ।
षड्भागो धूमनेत्रस्य वर्त्त्यामानं प्रशस्यते ॥ २७ ॥
ऋजुत्रिकोषफलितकोलास्थ्यग्रप्रमाणितम् ।
वस्तिनेत्रसमद्रव्यं धूमनेत्रं प्रशस्यते ॥ २८ ॥
शरावसम्पुटयुत प्रपधूने नचेद्गणे ।
धूमनेत्रेण मतिमान् वेदना स्यात्ततोऽन्यथे ॥ २९ ॥

इति वङ्गसेने धूमपानाधिकारः समाप्तः ॥ ७८ ॥

## अथ कवलाधिकारमाह ।

चतुर्द्धा कवलः स्नेही प्रसादीशोधिरोपणो ।
स्निग्धोष्णः स्नैहिको वाते स्वादुशीतैः प्रसादनः ॥ १ ॥
पित्ते कट्वम्ललवणै रूक्षः संशोधनः कफे ।
कषायतिक्तमधुरैः कटुरो रोपणो व्रणे ॥ २ ॥
वचात्रिकटुकैश्चैव सिद्धार्थैः कल्कपेषितैः ।
तैलमूत्रसुरायुक्तैर्मधुनान्यतमेन च ॥ ३ ॥
मर्द्दितैः स्विन्नस्विदित स्निग्धभालकपोलकः ।
मुखे गृहीत्वा कवलं मात्रयाऽनन्यमानसः ॥ ४ ॥
तिष्ठेद्यावन्मुखं पूर्णं स्रावश्च घ्राणचक्षुषोः ।
ततस्त्यक्त्वाऽपरो ग्राह्यो यावद्दाऽऽदोषसञ्चयः ॥ ५ ॥
एवं स्नेहपयः क्षौद्र रसमूत्राम्लसंयुताः ।
कषायोष्णोदकाभ्याञ्च कवला दोषतो हिताः ॥ ६ ॥
मुखं सचार्य्यते यातु सा मात्रा कवले स्मृता ।
असचार्य्या तु सा मात्रा गण्डूषे सा प्रकीर्त्तिता ॥ ७ ॥

तावद्धारयितव्योऽनन्यमनसाऽनुन्नतदेहेन यावद्दोषपरिपूर्णकपोलत्व नासास्रोतोनयनपरिस्रवश्च भवति तदा विमोक्तव्यः । पुनश्चान्यो ग्रहीतव्य आशुद्धिलिङ्गमिति ।

—०—

व्याधेरपचयस्तुष्टिर्वैशद्यं वक्त्रलाघवम् ।
इन्द्रियाणां प्रसादश्च कवले शुद्धिलक्षणम् ॥ ८ ॥
हीने जाड्यकफोत्क्लेशा वरसज्ञानमेव च ।
अतियोगे मुखे पाकः शोषस्तृष्णारुचिः क्लमः ॥ ९ ॥
शोधनीये विशेषेण भवन्त्येतत्तु लक्षणम् ॥ १० ॥

तिलानीलोत्पलं सर्पिः शर्कराक्षीरमेव च ।
सक्षौद्रो दग्धवक्त्रस्य गण्डूषो दाहनाशनः ॥ ११ ॥
कवलस्य विधिस्त्वेष समासेन प्रकीर्त्तितः ।
विभज्यभेषजं बुद्ध्या कुर्वीत प्रतिसारणम् ॥ १२ ॥
कल्कोरसक्रिया क्षौद्रं चूर्णं चेति चतुर्विधम् ।
अङ्गुल्यग्रप्रणीतं तु यथास्वं मुखरोगिषु ॥ १३ ॥
तस्य योगातियोगश्च कवलोक्तं विभावयेत् ।
तान्येव शमयेद्व्याधीन् कवलोऽयं प्रयोजितः ॥ १४ ॥
दोषघ्नमनभिष्यन्दि भोजयेच्च तथा नरम् ॥ १५ ॥

## इति वङ्गसेने कवलाधिकारः समाप्तः ॥ ७६ ॥

—०—

## अथ नस्याधिकारमाह ।

प्रतिमर्शोऽवपीडश्च नस्यं प्रधमनं तथा ।
शिरोविरेचनं पञ्च नस्यभेदाः प्रकीर्त्तिताः ॥ १ ॥
द्वारं हि शिरसो नासा तेन तद्व्याप्य हन्ति तान् ॥ २ ॥

—०—

औषधमौषधपक्वो वा स्नेहो नासिकाभ्यां दीयत इति नस्यम् । नस्यं तद्द्विविधं शिरोविरेचनं स्नेहनञ्च तद्द्विविधमपि पञ्चधा । तद्यथा,—प्रतिमर्शो विरेचन विकल्पोऽवपीडः प्रधमनं चेति ।

ये तु वातात्मका रोगाः शिरःकम्पार्दितादयः ।
शिरस्स्तर्प्पणं तेषु नस्यकर्म्मप्रशस्यते ॥ ३ ॥
स्तम्भसुप्तिगुरुत्वाद्याः श्लैष्मिकाये शिरोगदाः ।
शिरोविरेचनं तेषु नस्यकर्म्मप्रशस्यते ॥ ४ ॥

शर्करेक्षुरसक्षीर घृतमांसरसान् पृथक्।
क्षीणानां नस्ततो दद्या द्रक्तपित्तगदेषु च ॥ ५ ॥

—०—

वातपैत्तिकेषु रोगेषु वातपित्तहर द्रव्यसिद्धेन स्नेहेनेति।

—०—

यथा दोषोदये काले रोगिणो नावनं भिषक्।
शरद्वसन्तयोः स्वस्थे पूर्वाह्णे संप्रयोजयेत् ॥
वर्षासु शिशिरे ग्रीष्मे सायं मध्यन्दिनेऽथवा ॥ ६ ॥

—०—

भुक्तवानपतर्पितोत्यर्थतरुणप्रतिश्यायो गर्भिणी स्नेहोदकमद्यद्रवपीतोऽजीर्णी दत्तबस्ति. क्रुद्धोगरार्त्तस्तृषाभिभूतोबालोवृद्धः श्रान्तोवेगावरोधितः शिरःस्नातः स्नातुकामश्च न नस्यकर्माईं इति। तस्य स्नेहननस्यस्य प्रमाणमष्टौ विन्दवः प्रदेशिनी पर्वद्वयनि.सृता प्रथममात्रा द्वितीयाशुक्ति स्तृतीया पाणिशुक्तिरित्येतास्तिस्रो मात्रा यथाबलं प्रयोज्याः। तत्रोच्चारितवातमूत्रपुरीषाय भुक्तवते व्यभ्रे काले पाणितापोपस्वेदितगलकपोलललाटप्रदेशाय वातातपरजोहीनवेश्मन्युत्तानशायिने प्रसारितकरचरणाय किञ्चित्प्रलम्बितशिरसे वस्त्राच्छादितनयनाय वामहस्तप्रदेशिन्यग्रोन्नामितनासाग्राय विशुद्धस्रोतसि दक्षिणहस्तेन स्नेहमुष्णानुतप्तं रजतसुवर्ण ताम्र मृत्पात्र-शुक्तीनामन्यतमस्थं शुक्तया पिचुना वा सुखोष्णमद्रुत विच्छिन्नधारया सिञ्चेत्। यथा नेत्रेन प्राप्नोति तथा प्रयतेतेति।

—०—

स्नेहेन सिच्यति शिरो न कथञ्चन कम्पयेत्।
न भाषेत न कुप्येत न ब्रूयान्न हसेत्तथा ॥ ७ ॥

तिलानीलोत्पलं सर्पिः शर्कराक्षीरमेव च।
सक्षौद्रो दग्धवक्त्रस्य गण्डूषो दाहनाशनः॥ ११ ॥
कावलस्य विधिर्ह्येष समासेन प्रकीर्तितः।
विभज्यभेषजं बुद्ध्या कुर्वीत प्रतिसारणम्॥ १२ ॥
कल्कोरसक्रिया क्षौद्रं चूर्णं चेति चतुर्विधम्।
अंगुल्यग्रप्रणीतं तु यथास्वं मुखरोगिषु॥ १३ ॥
तस्य योगातियोगञ्च कवलोक्तं विभावयेत्।
तान्येव शमयेद्व्याधीन् कवलोऽयं प्रयोजितः॥ १४ ॥
दोषघ्नमनभिष्यन्दि भोजयेच्च तथा नरम्॥ १५ ॥

## इति वङ्गसेने कावलाधिकारः समाप्तः॥ ७८ ॥

—०—

## अथ नस्याधिकारमाह।

प्रतिमर्शोऽवपीड़श्च नस्यं प्रधमनं तथा।
शिरोविरेचनं पञ्च नस्यभेदाः प्रकीर्त्तिताः॥ १ ॥
द्वारं हि शिरसो नासा तेन तद्व्याप्य हन्ति तान्॥ २ ॥

—०—

औषधमौषधपक्वो वा स्नेहो नासिकाभ्यां दीयत इति नस्यम्। नस्यं तद्द्विविधं शिरोविरेचनं स्नेहनञ्च तद्द्विविधमपि पञ्चधा। तद्यथा,—प्रतिमर्शो विरेचन विकल्पोऽवपीडः प्रधमनं चेति।

ये तु वातात्मका रोगाः शिरः कम्पार्दितादयः।
शिरस्तत्स्नेहनं तेषु नस्यकर्मप्रशस्यते॥ ३ ॥
स्तम्भसुप्तिगुरुत्वाद्याः श्लैष्मिकाये शिरोगदाः।
शिरोविरेचनं तेषु नस्यकर्मप्रशस्यते॥ ४ ॥

शर्करेक्षुरसक्षीर घृतमांसरसान् पृथक्।
क्षीणानां नस्ततो दद्या द्रक्तपित्तगदेषु च ॥ ५ ॥

—०—

वातपैत्तिकेषु रोगेषु वातपित्तहर द्रव्यसिद्धेन स्नेहेनेति।

—०—

यथा दोषोदये काले रोगिणो नावनं भिषक्।
शरद्वसन्तयोः स्वस्थे पूर्वाह्णे संप्रयोजयेत् ॥
वर्षासु शिशिरे ग्रीष्मे सायं मध्यन्दिनेऽथवा ॥ ६ ॥

—०—

भुक्तवानपतर्प्पितोत्यर्थतरुणप्रतिश्यायी गर्भिणी स्नेहोदकमद्यद्रवपीतोऽजीर्णी दत्तवस्तिः क्रुद्धोगरार्त्तस्तृषाभिभूतोबालोवृद्धः श्वान्तोवेगावरोधितः शिरःस्नातः स्नातुकामश्च न नस्यकर्मार्ह इति। तस्य स्नेहननस्य प्रमाणमष्टौ बिन्दवः प्रदेशिनी पर्वद्वयनिःसृता प्रथममात्रा द्वितीयाशुक्ति स्तृतीया पाणिशुक्तिरित्येतास्तिस्रो मात्रा यथाबलं प्रयोज्याः। तत्रोच्चारितवातमूत्रपुरीषाय भुक्तवते अभ्रे काले पाणितापोपस्वेदितगलकपोलललाटप्रदेशाय वातातपरजोहीनवेश्मन्युत्तानशायिने प्रसारितकरचरणाय किञ्चित्प्रलम्बितशिरसे वस्त्राच्छादितनयनाय वामहस्तप्रदेशिन्यग्रोन्नामितनासाग्राय विशुद्धस्रोतसि दक्षिणहस्तेन स्नेहसुखानुतप्तं रजतसुवर्ण ताम्र मृत्पात्र-शुक्तीनामन्यतमस्थ शुक्त्या पिचुना वा सुखोष्णमद्रुत विच्छिन्नधारया सिञ्चेत्। यथा नेत्रेन प्राप्नोति तथा प्रयतेतेति।

—०—

स्नेहेन सिञ्चति शिरो न कथञ्चन कम्पयेत्।
न भाषेत न कुप्येत न ब्रूयान्न हसेत्तथा ॥ ७ ॥

एवं हि विहितः स्नेहो नैवान्तः प्रतिपद्यते ।
ततः कासप्रतिश्याय शिरोक्षिगदसम्भवः ॥ ८ ॥
शृङ्गाटकमभिप्लाव्य स्थापयेन्न गिलेद्द्रवम् ।
पञ्चसप्तदशैव स्युर्मात्रा नस्यविधारणे ॥ ९ ॥
उपविश्याथ निष्ठीवे न्नासावक्त्राल्लग द्रवम् ।
वामदक्षिणपार्श्वाभ्या निष्ठीवेत्सुमुख न हि ॥ १० ॥
ललाटस्वेदन कुर्य्या द्यदि नो बहिराव्रजेत् ॥ ११ ॥
नीते नस्ये मनस्तापं रज क्रोधादिक त्यजेत् ।
शयीतनिद्रा व्यक्ता च प्रोक्ता नो वाक्शत नर ॥ १२ ॥
तथा वैरेचनस्यान्ते धूमो वा कवलो हित । '
व्यवभुक्तवते नस्य करस्विन्नाय दापयेत् ॥ १३ ॥
स्नेहस्य बिन्दवो ह्यष्टौ प्रदेया नस्यकर्म्मणि ।
शुक्तिश्च पाणिशुक्तिश्च तिस्रो मात्राः प्रकीर्त्तिताः ॥ १४ ॥
द्वात्रिंशद्बिन्दवश्चापि शुक्तिरित्यभिधीयते ।
द्वे शुक्ती पाणिशुक्तिश्च ज्ञेया तु कुशलैर्नरैः ॥ १५ ॥
चत्वारो बिन्दव' षड् वा तथाष्टौ वा यथा बलम् ।
शिरोविरेचने योज्या ऊर्ध्वजत्रुविकारिणाम् ॥ १६ ॥
शिरोऽभिवाते त्वरुचौ स्वरभङ्गे गलग्रहे ।
कासे नासामयेऽपथ्या नस्य देय विरेचनम् ॥ १७ ॥
शिरीषशिग्रुमिन्धूत्य रुचकत्र्यूषणादय ।
हिंस्वार्द्रकरसश्चैव प्रयोज्या नस्यकर्म्मणि ॥ १८ ॥
लाघव शिरसोयोगे सुखस्वप्नावबोधनम् ।
विकारोपशम शुद्धि रिन्द्रियाणा मन.सुखम् ॥ १९ ॥
लाघव शिरस' शुद्धि' स्रोतसा व्याधिसंक्षय' ।
चित्तेन्द्रियप्रसादश्च शिरस, शुद्धिलक्षणम् ॥ २० ॥

कंडूप्रदेहौ गुरुता स्रोतसां कफसंस्रवः।
हीने विशुद्धे शिरसि लक्षणं संप्रकीर्तितम्॥ २१॥
मस्तुलुङ्गागमो वातदुष्टिरिन्द्रियविभ्रमः।
शून्यता शिरसश्चापि मूर्ध्निगाढं विरेचिते॥ २२॥
हीनेविशुद्धे शिरसि कफवातघ्नमाचरेत्।
सम्यग्नियोजिते वापि सर्पिर्नस्ते नियोजयेत्॥ २३॥

—०—

प्रतिमर्शस्तु चतुर्दशसु कालेपूपादेयो भवति। तद्यथा, तल्पोत्थितेन प्रक्षालितमुखेन गृहान्निर्गच्छता व्यवायव्यायामाध्वपरिश्रान्तेन मूत्रोच्चारकवलाञ्जनान्ते भुक्तवता छर्दितवता दिवास्वप्नोत्थितेन सायं चेति।

—•—

ईषदुच्छिङ्घितः स्नेहो यदा वक्त्रं प्रपद्यते।
नस्ये निषिक्तं तं विद्यात् प्रतिमर्शं प्रमाणतः॥ २४॥
उच्छिङ्घन्न पिबेत् स्नेहं निष्ठीवेन्मुखमागतम्।
क्षीणे तृष्णास्यशोषार्त्ते बाले वृद्धे च युज्यते॥ २५॥
तेन रोगाः प्रशाम्यन्ति नराणामूर्ध्वजत्रुजाः।
इन्द्रियाणाञ्च वैमल्यं कुर्य्यादास्यं सुगन्धि च॥ २६॥
हनुदन्तशिरोग्रीवा त्रिकबाहूरसां बलम्।
वलीपलितखालित्य व्यङ्गानां चाप्यसम्भवः॥ २७॥
तैलं कफे सवाते च केवले पवने वसाम्।
दद्यान्नस्तः सदा पित्ते सर्पिर्मज्जानमेव च॥ २८॥
चतुर्विधस्य स्नेहस्य विधिरेष प्रकीर्त्तितः।
श्लेष्मस्थानां विरोधित्वात्तेषु तैलं प्रशस्यते॥ २९॥
अवपीडः प्रधमनं द्वौ भेदावपरौ स्मृतौ।

शिरोविरेचनस्यात तौ तु देयौ यथायथम् ॥ ३० ॥
कल्कीकृतादौषधाद्यः पीड़ितो निःसृतो रसः।
अवपोडः स निर्दिष्ट स्तीक्ष्णद्रव्यसमुद्भवः ॥ ३१ ॥
षडङ्गुलाद्द्विवक्त्राया नाडीचूर्णं तया धमेत्।
तीक्ष्णं कोलमितं वक्त्रवातैः प्रधमनं हितम् ॥ ३२ ॥
ऊर्ध्वजत्रुगते रोगे कफजे स्वरसंचये।
अरोचके प्रतिश्याये शिरःशूले च पीनसे ॥ ३३ ॥
शोफापस्मारकुष्टेषु नस्यं वैरेचनं हितम्।
भीरुस्त्रीकृशबालानां नस्य स्नेहनमिष्यते ॥ ३४ ॥
गलरोगे सन्निपाते निद्रायां विषमज्वरे।
मनोविकारे कृमिषु युज्यते चावपीडनम् ॥ ३५ ॥
अत्यन्तोत्कटदोषेषु विसंज्ञेषु च दीयते।
चूर्णं प्रधमनं धीरै स्तद्धि तीक्ष्णतरं यतः ॥ ३६ ॥

—०—

## वैरेचनं नस्यं यथा।

नस्यं स्याद्गुडशुण्ठीभ्यां पिप्पल्या सैन्धवेन वा।
जलपिष्टेन तेनाक्षि कर्णनासाशिरोगदाः ॥
मन्याहनुगलोद्भूता नश्यन्ति भुजपृष्टगाः ॥ ३७ ॥
मधूकसारकृष्णाभ्यां वचामरिचसैन्धवैः।
नस्यं कोष्णजलैः पिष्टं दद्यात् संज्ञाप्रबोधनम् ॥ ३८ ॥
रोहितमत्स्यपित्तेन भावितं मरिचं वचाः।
कट्फलं चेति तच्चूर्णं देयं प्रधमनं बुधैः ॥ ३८ ॥
इति वङ्गसेने नस्याधिकारः समाप्तः ॥ ८० ॥

—०—

## अथ स्वस्थवृत्ताधिकारमाह।

उत्थायात्मवता ब्राह्मे स्वस्थेनारोग्यमिच्छता।
धीमतायदनुष्ठेयं तत्सर्वं सम्प्रवक्ष्यते ॥ १ ॥
प्रतिपद्दर्शषष्ठीषु नवम्येकादशीषु च।
दन्तानां काष्ठसंयोगो दहत्याऽऽसप्तमं कुलम् ॥ २ ॥
कनिष्ठाग्रसमस्थूलमायतं द्वादशांगुलम्।
प्रातरुत्थाय मतिमान् भक्षयेद्दन्तधावनम् ॥ ३ ॥
करञ्जकरवीरार्कं मालतीककुभाशनाः।
खदिराम्रातकौ शुद्धौ सहकारकपित्थकौ ॥ ४ ॥
शस्यन्ते दन्तपवना ये चाप्येवंविधा द्रुमाः ॥ ५ ॥
आयुर्यशोबलं वर्णं प्रजापशुवसूनि च।
ब्रह्मप्रज्ञाञ्च मेधाञ्च त्व नो देहि वनस्पते ॥
इत्यादि श्रुतिवाक्येन गृह्णीयात् सुवनस्पतिम् ॥ ६ ॥
द्वादशांगुलमाद्यानां क्षत्रियाणां दशांगुलम्।
अष्टांगुलन्तु वैश्यानां शूद्राणान्तु षडंगुलम् ॥ ७ ॥
दन्तकाष्ठन्तु नारीणां विधिवच्चतुरंगुलम्।
तदग्रेण शनैर्दन्तान् घर्षयेत्तानपीडयन् ॥ ८ ॥
निहन्ति गन्धं वैरस्यं जिह्वादन्तास्यजं मलम्।
निरस्य शुचिमाधत्ते सद्यो दन्तविशोधनम् ॥ ८ ॥
मुखवैरस्य वैगन्ध्य शोषजाड्यापहं सुखम्।
दृढीकरञ्च दन्तानां स्नेहगण्डूषधारणम् ॥ १० ॥
विण्मूत्राखिलदोषधातुशमनाकाङ्क्षान्नपानेरुचिः।
भुक्तं जीर्यति पुष्टये परिणतिः स्वप्नावधौ ते सुखम् ॥
गृह्णीते विषयान्यथा स्वमुचितान् वृत्तानतो वृत्तितः।
स्वस्थस्याभिहितं चतुर्दशविधं जन्तोरिदं लक्षणम् ॥ ११ ॥

दध्याज्यादर्शसिद्धार्थबिल्वगोरोचनास्रजाम् ।
दर्शनं स्पर्शनं कार्यं प्रहृत्तमशुभापहम् ॥ १२ ॥
पञ्चरात्रात्नखश्मश्रु केशलोमानि कर्त्तयेत् ।
केशश्मश्रुनखादीनां कर्त्तनं संप्रसाधनम् ॥
पौष्टिकं धन्यमायुष्यं शौचकान्तिकरं परम् ॥ १३ ॥
उत्पाटयेन्न लोमानि नासायास्तु कथञ्चन ।
दृष्टिदौर्बल्यतिमिर मभीक्ष्णोद्धरणाद्भवेत् ॥ १४ ॥
तांबूलपत्रसत्कारं पूगाढ्यञ्च कफापहम् ।
चूर्णं कफानिलहरं खदिरः कफपित्तनुत् ॥ १५ ॥
संयोगतो दोषहरं कान्तिसौष्ठवकारकम् ।
पथ्यं सुप्तोत्थिते भुक्ते वान्ते श्रान्ते च मानवे ॥ १६ ॥
तांबूलञ्च विषार्त्तानां मूर्च्छांक्षयास्रपित्तिनाम् ।
रूक्षदुर्बलमत्तानां मङ्गितं चास्यशोषिणाम् ॥ १७ ॥
देहदृक्केशदन्ताग्नि श्रोत्रवर्णबलक्षयः ।
शोषः पित्तानिलास्रं स्यादतितांबूलभक्षणात् ॥ १८ ॥
पर्णमूले वसेद्व्याधिः पर्णाग्रे पापसम्भवः ।
चूर्णपर्णं हरत्यायुः शिरा बुद्धिविनाशिनी ॥ १९ ॥
आयुरग्रे यशोमूले मध्ये लक्ष्मीर्व्यवस्थिता ।
तस्मादग्रञ्च मध्यञ्च मूलं पर्णं विवर्जयेत् ॥ २० ॥
केशभूमिगतान्रोगान्छिरोभ्यङ्गोपकर्षति ।
केशानां मृदुतां स्नेहं रक्तःशान्तिं करोति च ॥ २१ ॥
करोति शिरसस्तृप्तिं केशानां दृढतामपि ।
तर्पणं चेन्द्रियाणाञ्च दत्तोभ्यङ्गस्तु मूर्द्धनि ॥ २२ ॥
केशप्रसाधनी केश्या रजो जन्तुमलापहा ।
हनुमन्या शिरः कर्ण शूलघ्नं कर्णपूरणम् ॥ २३ ॥

अभ्यङ्गो मार्दवकरः कफवातविनाशनः।
धातूनां पुष्टिजननो मृजावर्णबलप्रदः॥ २४॥
पादप्रक्षालनं पादमलरोगश्रमापहम्।
दृष्टिप्रसादनं हृद्यं रक्षोघ्नं प्रीतिवर्द्धनम्॥ २५॥
निद्राप्रदो देहसुखश्चक्षुष्यः पादरोगहा।
पादत्वग्मृदुकर्त्ता च पादाभ्यङ्गः प्रशस्यते॥ २६॥
उद्वर्त्तनं वातहरं कफमेदोविलायनम्।
स्थिरीकरणमङ्गानां त्वक्प्रसादकरं तथा॥ २७॥
तन्द्रापापोपशमनं तुष्टिदं पुष्टिवर्द्धनम्।
रक्तप्रसादनं चापि स्नानमग्नेश्च दीपनम्॥ २८॥
तच्चातिसारज्वरितकर्णशूलार्दितादिषु।
आध्मानारोचकाजीर्णभुक्तवत्सु च गर्हितम्॥ २९॥
श्रीमत्पारिषदं शस्तं निर्मलाम्बरधारणम्।
हृद्यं सौगन्ध्यमायुष्यं काम्यं पुष्टिबलप्रदम्॥ ३०॥
सौमनस्यं मलक्षोघ्नं गन्धमाल्यनिषेवनम्॥ ३१॥
पक्ष्मलं विशदं कान्त्यं मरुणोरञ्जितमञ्जनम्।
नेत्रमञ्जनसंयोगाद्भवेन्निर्मलतारकम्॥ ३२॥
चक्षुष्यं स्पर्शनार्हञ्च पदयोर्व्यसनापहम्।
बल्यं पराक्रमसुखं हृद्यं पादत्रधारणम्॥ ३३॥
घर्मानिलरजोऽम्बुघ्नं छत्रधारणमुच्यते॥ ३४॥
सुखस्थानप्रतिष्ठानं शत्रूणाञ्च निषेधनम्।
अनष्टभगमायुष्यं भयघ्नं दण्डधारणम्॥ ३५॥
अग्निर्वातकफस्तम्भशीतवेपथुनाशनः।
आमाभिष्यन्दशमनो रक्तपित्तप्रकोपनः॥ ३६॥
आहारः प्रीणनः सद्यो बलकृद्देहधारकः।

गन्त्वायुः शुक्रमत्वोज स्त्रोजकत्ताहवर्द्धनः ॥ ३७ ॥
अपि शाकं जलखिन्नं लवणस्नेहभर्जितम् ।
बुभुक्षितस्य कल्यं स्यात् स्वादु स्याद्धर्षणं तथा ॥
तत्तु षड्रससंपन्नं मन्दाग्नेर्भोजनञ्च यत् ॥ ३८ ॥
चुत्सम्भवति जीर्णेषु मलदोषरसेषु च ।
उचितोनुचितो वापि सोऽन्नकाल उदाहृतः ॥ ३९ ॥
यः प्रसादः परोऽन्नस्य परं जोर्णस्य सर्वशः ।
सरसोंजलयस्तस्य नव देहेषु देहिनः ॥ ४० ॥
रक्तस्यांजलयस्त्वष्टौ प्रकृताः सप्त सर्वशः ।
पित्तस्यांजलयः पञ्च षट्कफस्य प्रचक्षते ॥ ४१ ॥
मूत्रस्य विद्याच्चत्वारो वसायाश्चाञ्जलित्रयम् ।
द्वावञ्जलीमेदसस्तुमज्जश्चैवाञ्जलिर्मतः ॥ ४२ ॥
शुक्रस्याप्यञ्जलिर्ज्ञेयोमस्तिष्कस्योजसस्तथा ।
चत्वारोंजलयः स्त्रीणां रजसः प्रकृतिस्थितिः ॥ ४३ ॥
द्वावंजलीप्रसृतायाः स्तन्यस्यापीह योषिताम् ।
एवं तस्य परं मानं सन्निर्दिश्यं प्रचक्षते ॥ ४४ ॥
प्रमाणमेतद्धातूनां सदुष्टानामुदाहृतम् ।
क्षीणाः स्वेनप्रमाणेन विविधायापि धातवः ॥
योजयन्ति विकारैश्च क्षीणा हृद्वाः क्षयप्रदाः ॥ ४५ ॥
बालव्यजनमोजस्य मक्षिकादीन् व्यपोहति ॥ ४६ ॥
सेवेतविषयान् काले मुख्या तत्परतां वशी ।
नातिजागरणं निद्रां सर्वभूतहितैषिताम् ॥ ४७ ॥
देवगोब्राह्मणाचार्य्य गुरुवृद्धान् सदार्चयेत् ॥ ४८ ॥
चतुष्पथनमस्कर्त्ता दातावक्ता प्रियंवदः ।
कृतज्ञानामनुनेता च दीनानामनसूयकः ॥ ४९ ॥

आश्वासकश्च भीतानां बन्धुरसर्वदेहिनाम्।
रागद्वेषनिदानानां हन्ता धर्मपरायणः॥ ५०॥
नित्यं हिताहारविहारसेवी समीक्ष्यकारीविषयेष्वसक्तः।
दाता समः सत्यपरः क्षमावानाप्तोपसेवी च भवत्यरोगः॥ ५१॥
पृष्ठतोऽर्कं निषेवेत जठरेण हुताशनम्।
स्वामिनं सर्वभावेन पुण्यश्लोकममायया॥ ५२॥
भुंक्ष्वावास्तूकशाकेन तक्रं सलवणं पिब।
राजन् हरीतकीं भुंक्ष्वनश्यन्तु भवतो गदाः॥ ५३॥
न वेगान्धारयेद्धीमान् वातविण्मूत्ररेतसाम्।
तृष्णाकासक्षवोद्गार श्वासजृम्भाश्रमोत्क्षुधाम्।
धारितेष्वेषु जायन्ते तन्मार्गस्थानजा गदाः।
धार्यो वेगस्तु शस्तानां मनोवाक्कायकर्मणाम्॥ ५५॥
न पीडयेदिन्द्रियाणि न चैतान्यतिलालयेत्।
अनुजायाप्रतिपदं सर्वधर्मेषु तुल्यताम्॥ ५६॥
स्त्रियं श्रियं धनञ्चापि परस्याभिलषेन्न हि।
न कुर्याच्चञ्चलं चेतो न कालमतिवाहयेत्॥ ५७॥
प्रणयेनापि नो वाच्यं वचनं परतापि यत्।
अहिंसा सततं कार्या धार्या चेतस्यऽनित्यता॥ ५८॥
हिताभिर्जुहुयान्नित्य मन्तरग्निं समाहितः।
अन्नपानसमिद्भिर्ना मात्राकालौ विचारयन्॥ ५९॥
तच्च नित्यं प्रयुञ्जीत स्वास्थ्यं येनानुवर्त्तते।
अजातानां विकाराणा मनुत्पत्तिकरञ्च यत्॥ ६०॥
सर्वमन्यत्परित्यज्य शरीरमनुपालयेत्।
तदभावे हि भावानां सर्वाभावः शरीरिणाम्॥ ६१॥
मतिर्वचः कर्मसुखानुबन्धि सत्त्वं विधेयं विशदा च बुद्धि।

ज्ञानं तपस्तत्परता च योगे यस्यास्ति तं नानुपतन्ति रोगाः ॥६२॥
अर्थेष्वलभ्येष्वकृतप्रयत्नं कृतादरं नित्यमुपायवत्सु ।
जितेन्द्रियं नानुपतन्ति रोगास्तत्कालयुक्तं यदि नास्ति दैवम् ॥६३॥
कफे प्रच्छर्दनं पित्ते विरेको वस्तिरीरणे ।
शस्यते त्रिष्वपि हितो व्यायामो दोषपाचनः ॥
भुक्तं विरुद्धमप्यन्नं व्यायामान्न प्रदुष्यति ॥ ६४ ॥
अशाकभोजीह्यतमत्तियोऽम्बसा पयोरसान् सेवति नातियोऽम्भः ।
निरामभुग्वातकृतां विदाहिनां नच प्रभुग्जीर्णभुगल्परुक्सः ॥६५॥
नगरीनगरस्येव रथस्येव रथी सदा ।
स्वशरीरस्य मेधावी कृत्येष्वव हितो भवेत् ॥ ६६ ॥

## इति वङ्गसेनेऽनागतामयप्रतिषेधाधिकारः समाप्तः ॥ ८१ ॥

—०—

## अथ द्रव्यगुणाधिकारमाह ।

चक्षुष्यो मधुरो हृद्यो बल्यो धातुविवर्द्धनः ।
पक्कोरसोमतो ह्यद्यः क्लेदोदीपनपाचनः ॥ २ ॥
दीपनोऽम्लरसस्तस्य तिक्तः शोधनरोपणः ।
पीडनो लेखनः स्तम्भी कषायो ग्राहिरोपणः ॥ ३ ॥
रसवीर्यविपाकाना माश्रयाद्रव्यमुत्तमम् ।
उत्तरोत्तरसंश्लेषादितरेषां प्रधानता ॥ ४ ॥
सतिक्तलवणं ग्रुष्टं स्वल्पवातविषापहम् ।
स्वादुपाकरसो ज्ञेय स्तगरः कुष्टवद् गुणैः ॥ ५ ॥
यल्याग्रगन्धा वातघ्नी कासश्वासक्षये हिता ।
देवदारुभयेत्तद ल्यासग्भारामयापहम् ॥ ६ ॥

सौष्णं लघु च शीतञ्च सुगन्धि कटुकं गुरु।
वातपित्तहरोवल्या हृर्थ्यासंग्रहिणीवला ॥ ७ ॥
श्रीफलैरण्डमूलानि शूले वातकफोल्वणे।
पृश्निपर्णीस्थिरा चैव पित्तश्लेष्मातिसारिणाम् ॥ ८ ॥
वातभोजनसंस्कारे शस्यते वातभूयसाम्। .
चक्षुष्यं वातपित्तघ्नं बल्यं लोहितचन्दनम् ॥ ८ ॥
ह्रीवेरं छर्दिहृल्लास तृष्णातीसारनाशनम्।
पाचनं दीपनं हृष्यं शूलघ्नं विस्रभेषजम् ॥ १० ॥
वातश्लेष्महरं हृद्यं मुस्तं पित्ताऽविरोधि च।
पिप्पलीप्लीहगुल्मार्शो जठरेषु विधीयते ॥ ११ ॥
दीपनीपाचनीहृद्या नात्युष्णाकटुका मता।
मरिचं नातिशीतोष्ण' पित्तलं कफवातजित् ॥ १२ ॥
संग्राहिरोचनं मुस्तं दीपनं दोषपाचनम्।'
सतिक्तातिविषासोष्णा संग्राहिण्यामपाचनी ॥ १३ ॥
गुडूचीवातपित्तघ्नी मेहघ्नीपाचनीसरा। '
छर्दिकुष्टज्वरश्वास कासारोचकनाशिनी ॥ १४ ॥
किराततिक्तकस्तिक्तो रक्तपित्तज्वरापहः।
यावद्गुणैरसैस्तिक्ता प्रोक्ताभूनिम्बवत्सरा ॥ १५ ॥
किराततिक्तवत् ज्ञेये त्रायमाणादुरालभे।
कफवातज्वरछर्दि भ्रम्यरोचकनाशने ॥ १६ ॥
कफपित्तहरौ तिक्ता वरिष्टखदिरद्रुमौ।
तृष्णारोचकवीसर्प कण्डूकुष्टविनाशनौ ॥ १७ ॥
वासकः कासवैस्वर्य्य रक्तपित्तकफापहः।
सेव्यः पित्तकफस्वेद दाहदौर्गन्ध्यनाशनः ॥ १८ ॥
कफवातहरीपथ्या बुद्धायुः स्वरवर्द्धिनी।

ध्याने तपस्तत्परता च योगे यस्यास्ति तं नानुपतन्ति रोगाः ॥६२॥
अर्थेष्वलभ्येष्वकृतप्रयत्नं कृतादरं नित्यमुपायवत्सु ।
जितेन्द्रियं नानुपतन्ति रोगास्तत्कालयुक्तं यदि नास्ति दैवम् ॥६३॥
कफे प्रच्छर्दनं पित्ते विरेको वस्तिरीरणे ।
शस्यते त्रिष्वपि हितो व्यायामो दोषपाचनः ॥
भुक्तं विरुद्धमप्यन्नं व्यायामान्न प्रदुष्यति ॥ ६४ ॥
शशाकभोजीघृतमत्तियोऽन्धसा पयोरसान् सेवति नातियोऽश्नः ।
निरामभुग्वातकृतां विदाहिनां नच प्रभुग्जीर्णभुगल्परुक्सः ॥६५॥
नगरीनगरस्येव रथस्येव रथी सदा ।
स्वशरीरस्य मेधावी कृत्येष्वव हितो भवेत् ॥ ६६ ॥

## इति वङ्गसेनेऽनागतामयप्रतिषेधाधिकारः समाप्तः ॥ ८१ ॥

—०—

## अथ द्रव्यगुणाधिकारमाह ।

चक्षुष्यो मधुरो हृद्यो बल्यो धातुविवर्द्धनः ।
अम्लोरसोमतो हृद्यः क्लेदोदीपनपाचनः ॥ २ ॥
दीपनोऽत्वरलवणाग्र स्निग्धः शोधनरोपणः ।
पीडनो लेखनः स्तम्भी कषायो ग्राहिरोपणः ॥ ३ ॥
रसवीर्यविपाकाना माश्रयाद्द्रव्यमुत्तमम् ।
उत्तरोत्तरसंश्लेषादितरेषां प्रधानता ॥ ४ ॥
सतिक्तलवणं कुष्टं स्वल्पवातविषापहम् ।
स्वादुपाकरसो ज्ञेय स्तगरः कुष्टवद्गुणैः ॥ ५ ॥
वच्याश्वगन्धा वातघ्नी कासश्वासक्षये हिता ।
देवदारुभवेत्तद्वत्कासश्वासामयापहम् ॥ ६ ॥

सौष्णा लघु च शीतञ्च सुगन्धि कटुकं गुरु।
वातपित्तहरोवल्या हृद्यासग्रहिणीवला ॥ ७ ॥
श्रीफलैरण्डमूलानि शूले वातकफोल्वणे।
पृश्निपर्णीसिरा चैव पित्तश्लेष्मातिसारिणाम् ॥ ८ ॥
वातभोजनसंस्कारे शस्यते वातभूयसाम्।
चक्षुष्यं वातपित्तघ्न वल्य लोहितचन्दनम् ॥ ९ ॥
ह्रीवेरं छर्दिहृल्लास तृष्णातीसारनाशनम्।
पाचनं दीपनं हृद्यं शूलघ्नं विश्वभेषजम् ॥ १० ॥
वातश्लेष्महरं हृद्य मुस्तं पित्ताऽविरोधि च।
पिप्पलीश्लीहगुल्मार्शो जठरेषु विधीयते ॥ ११ ॥
दीपनीपाचनीहृद्या नात्युष्णाकटुका मता।
मरिच नातिशीतोष्णं पित्तल कफवातजित् ॥ १२ ॥
संग्राहिरोचन मुस्तं दीपन दीपपाचनम्।
सतिक्तातिविषासोष्णा सग्राहिण्यामपाचनी ॥ १३ ॥
गुडूचीवातपित्तघ्नी मेहघ्नीपाचनीसरा।
छर्दिकुष्टज्वरश्वास कासारोचकनाशिनी ॥ १४ ॥
किराततिक्तकस्तिक्तो रक्तपित्तज्वरापहः।
यावद्गुणैरसैस्तिक्ता प्रोक्ताभूनिम्ववत्सरा ॥ १५ ॥
किराततिक्तवत् ज्ञेये त्रायमाणादुरालभे।
कफवातज्वरछर्दि श्वस्यरोचकनाशने ॥ १६ ॥
कफपित्तहरी तिक्ता वरिष्टखदिरद्रुमौ।
तृष्णारोचकवीसर्प कण्डूकुष्टविनाशनौ ॥ १७ ॥
वासकः कासवैस्वर्य्य रक्तपित्तकफापहः।
सेव्यः पित्तकफस्वेद दाहदोर्गन्ध्यनाशनः ॥ १८ ॥
कफवातहरीपथ्या वृद्धायुः स्वरवर्द्धिनी।

विबन्धश्वासकासास्र हिक्कामारुचिनाशिनी ॥ १९ ॥
कफवातहरं केश्यमचर्मचिवलप्रदम् ।
वयसः स्थापनं वृष्यं शस्तमामलकं त्रिषु ॥ २० ॥
ककुभो भग्नरुग्घाती कटरो दन्तदार्ढ्यकृत् ।
कण्डूरोगापचीपित्ते विशेषाद्रजनी हिता ॥ २१ ॥
तद्वद्दार्वीविशेषेण कफाभिष्यन्दनाशिनी ।
पार्श्वरुक्कासश्वासार्त्ति हिक्काघ्नं पौष्करम्मतम् ॥ २२ ॥
मूलं कर्कटकस्यापि शृङ्गीकुच्यनिले हिता ।
जीरकैलाद्वयं पृथ्वी चव्यां दीपनपाचनी ॥ २३ ॥
भेदनं पिप्पलीमूलं दीपनं शूलनाशनम् ।
कट्फलो मुखरोगघ्नः कासश्वासकफापहः ॥ २४ ॥
कर्पूरः शीतलः पाके चक्षुष्यः कफनाशनः ।
सुगन्धिः कटुकौ हृद्यः कंकोलः कफवातजित् ॥ २५ ॥
तद्वज्जातीफलं प्रोक्तं लवङ्गकुसुमानि च ।
चक्षुष्यं मधुरं सेव्यं पुण्डरीकं च शस्यते ॥ २६ ॥
कुङ्कुमंतूष्णवीर्यं स्या द्वातघ्नं विषनाशनम् ।
नात्युष्णं नातिशीतञ्च वीर्यतो मरिचं सितम् ॥ २७ ॥
कण्डूघ्नं रोचनं हृद्यं हृष्यं चैवार्द्रकं स्मृतम् ।
स्निग्धं तीक्ष्णं कटुरसं शूलाजीर्णविबन्धजित् ॥ २८ ॥
तीक्ष्णोष्णं कटुकं पाके रुच्यं पित्ताग्निवर्द्धनम् ।
कटुश्लेष्मानिलहरं गन्धाढ्यं जीरकं हितम् ॥ २९ ॥
आर्द्राकुस्तुम्बरी कुर्यात् स्वादुसौगन्ध्यहृद्यताम् ।
सा शुष्कामधुरापाके तृष्णादाहरुजापहा ॥ ३० ॥
जम्बीरः पाचनः तीक्ष्णः कृमिवातकफापहः ।
सुरभिर्दीपनो हृद्यो मुखवैशद्य कारकः ॥ ३१ ॥

भस्मत्वं नैति दग्धा छिमिछिमि कुरुते चर्मगन्धाद्भुतास्ते।
सा शुद्धाशोभनीयावरतनुमृगजाराजयोग्यप्रशस्ता ॥ ४४ ॥

करतलजलमध्ये स्थापयित्वा महद्भिः
पुनरपि तदवश्यं चिन्तनीयं महद्भिः।
भवति यदि सरक्तं तज्जलं पीतवर्णं
*न भवति मृगनाभिः कृत्रिमोऽसौविकारः* ॥ ४५ ॥

—०—

सौवर्चलन्तु काचाभं सैन्धवं स्फटिकप्रभम्।
करमर्दफलाकारा द्राक्षा सा मध्यमा स्मृता ॥ ४६ ॥
उत्तमासैव विज्ञेया या भवेद्गोस्तनाकृतिः।
रक्तचन्दनमत्यन्तं लोहितं चोत्तमं मतम् ॥ ४७ ॥
हरिद्राकुंकुमाभा तु श्रेष्ठा पीता तु मध्यमा।
अतिपीता प्रशस्ता तु ज्ञेया दारुनिशाबुधैः ॥ ४८ ॥
खण्डञ्च विमलं श्रेष्ठं चन्द्रकान्तसमप्रभम्।
रुद्रपुष्पसुसंकाशामगोद्धा चोत्तमा मता ॥ ४९ ॥
श्वेतचन्दनमत्यन्तं श्रेष्ठं गुरु सुगन्धि च।
सुवर्णछविकं ज्ञेयं धातुमाक्षिकमुत्तमम् ॥ ५० ॥
श्रेष्ठं शिलाजतु ज्ञेयं यत्क्षिप्रं न विशीर्य्यति।
तोयपूर्णे कांस्यपात्रे प्रतानैन विवर्द्धते ॥ ५१ ॥
स्निग्धः काञ्चनसंकाशः पक्वजम्बूफलोपमः।
नूतनो गुग्गुलुः प्रोक्तः सुगन्धिर्यस्तु पिच्छिलः ॥ ५२ ॥
शुष्को दुर्गन्धिकश्चैव वर्णान्यत्वमुपागतः।
गुग्गुलुः सतु विज्ञेयः पुराणो वीर्य्यवर्जितः ॥ ५३ ॥
शशिकान्तनिभं श्रेष्ठं तथा स्फटिकसन्निभम्।
कर्पूरं स्निग्धमत्यर्थं मुद्गतुल्या हरेणुका ॥ ५४ ॥

सर्वं शुभ्रं गुरुस्निग्धं फलं जात्याः प्रशस्यते।
एला सूक्ष्मफला श्रेष्ठा प्रियंगुः श्यामपांडुरा॥ ५५॥
मुरा पीता वरा प्रोक्ता सुस्तमानूपसम्भवम्।
अविकारा लघुदीर्घा लताकस्तूरिका मता॥ ५६॥
सरलत्वक् छविर्ज्ञेया नलिकाग्रन्थिपिच्छिला।
सुगन्धिगुरुरूक्षश्च सुरदारुप्रकीर्त्तितः॥ ५७॥
सरलं स्निग्धमत्यर्थं सुगन्धि च मनोहरम्।
मृगशृङ्गनिभं कुष्टं शिरोच्छेदे वचारुणा॥ ५८॥
कनिष्ठांगुलिसंकाश सुत्तमं ग्रन्थिपर्णकम्।
सुसूक्ष्मकेसरा स्निग्धा मांसी पिङ्गजटाकृतिः॥
काकतुण्डनिभः स्निग्धः श्रेष्ठः स्यादगुरुर्गुरुः॥ ५९॥
वर्त्तुला मांसला स्वच्छा श्रेष्ठा पूतिः प्रकीर्त्तिता।
सुगन्धिशीतं चौशीरं कीर्त्तितं गन्धकर्म्मणि॥ ६०॥
वराहमूर्ध्ववत्कन्दो वाराहीकन्दसंज्ञितः।
भिषजातदलाभे तु चर्म्मकारालुकी मतः॥ ६१॥
सूक्ष्मास्थिमांसलापथ्या सर्वकर्म्मणि सम्मता।
चिंताम्भसि च या मज्जेन्नलातक्यभया च सा॥ ६२॥
एतेषामपरेषाञ्च नवता प्रवरो गुणः॥ ६३॥
अचोडकञ्च वातामं मुञ्जातो भिपुकस्तथा।
पारावतं पीलुफलं लवलीफलमेव च॥
नामान्येतानि सर्वाणि प्रसिद्धान्युक्तनामभिः॥ ६४॥

---

## अथ प्रतिनिधिमाह।

शक्रद्रसो गोमये स्याच्चन्दने रक्तचन्दनम्।
सिद्धार्थे सर्षपः प्रोक्तः सैन्धवं लवणे मतम्॥ ६५॥

मधु यत्र न विन्देत तत्र जीर्णगुड़ो मतः ।
चोराभावे भवेन्मौद्गो रसोमासूर एव वा ६६ ॥
वराहकान्तकाभावे स्तम्भने विकसा मता ।
चित्रकाभावतो दन्ती चारः शिखरिजोऽथवा ॥ ६७ ॥
दद्यात् कुष्टकं वैद्यः सुवर्णचोर्य्यभावतः ।
अभावादम्लवेतस्य पक्वं चुक्रं प्रयोजयेत् ॥ ६८ ॥
अर्कपर्णादिपयसो ह्यभावे तद्रसो मतः ।
रसाञ्जनस्याभावे तु सम्यग्दार्वी प्रयुज्यते ॥ ६९ ॥
नीलोत्पलस्याभावे तु कुमुदं देयमिष्यते ।
रक्तचन्दनका भावे नवोशीरं विदुर्बुधाः ॥ ७० ॥
श्रीखण्डचन्दनाभावे देयं कर्पूरमिष्यते ।
कर्पूराभावतो देयं ग्रन्थिपर्णं विशेषतः ॥ ७१ ॥
रुचकाभावतो दद्याल्लवणं विड़मुत्तमम् ।
मक्षकाभावतो देयं शिखिपिच्छञ्च तद्गुणम् ॥ ७२ ॥
अभावे हिंगुपत्रास्तु हिंगु तद्गुणकारकम् ।
ऊषरा भावतो देयं लवणं पांशु पूर्वकम् ॥ ७३ ॥
अन्योन्या भावतोऽन्योऽन्यं देयं वैद्येन जानता ।
सिताभावे भवेत् खण्डः शाल्यभावे च षष्टिकाः ॥ ७४ ॥
सुवर्णमथवा रूप्यं योगे यत्र न लभ्यते ।
तत्र लौहेन कर्माणि भिषक्कुर्य्याद्विचक्षणः ॥ ७५ ॥
तालीशपत्राभावे तु स्वर्णताली प्रशस्यते ।
अभावान्नागपुष्पस्य पद्मकेसर मुच्यते ॥ ७६ ॥
सौराष्ट्रभावतो ज्ञेया कठिनी गुणकारिणी ।
अभावे लक्षणायास्तु नीलकन्दशिखा मता ॥ ७७ ॥
यूथिकाभावतो ज्ञेया जाती तद्गुणकारिणी ।

मयूराभावतो दद्या च्छ्यहंसाखुकानपि ॥ ७८ ॥
कक्कोलाभावतो जाती शस्ता तस्या अभावतः।
लवङ्गकुसुमं देयं यतो दृष्टं तदर्थकृत् ॥ ७९ ॥
बंधूकाभावतो देयं पुष्पं पुन्नागसम्भवम्।
वकुलाभावतो देयं कह्लारोत्पलपङ्कजम् ॥ ८० ॥
माक्षिकस्याप्यभावे तु प्रदद्यात् स्वर्णगैरिकम्।
अभावे सोमराज्यास्तु प्रपुन्नाटफलं मतम् ॥ ८१ ॥
दारुहरिद्राभावे तु हरिद्रा दीयते बुधैः।
अहिंस्राया अभावे तु मानकन्दः प्रकीर्तितः ॥ ८२ ॥
तुम्बुरुतैलाभावे तु हितमारुष्करं यदि।
यदा न पौष्करं मूलं कुष्टं योज्यं तदा बुधैः ॥ ८३ ॥
लाङ्गल्यभावतो वह्निपर्वी दद्याद्भिषग्वरः।
असम्भवे तु द्राक्षायाः काश्मर्य्याः फलमिष्यते ॥ ८४ ॥
तयोरभावे पुष्पन्तु मधूकस्य समीरितम्।
न भवेद्दाडिमं यत्र वृक्षाम्लं तत्र योजयेत् ॥ ८५ ॥
चविकागजपिप्पल्यौ पिप्पलीमूलवत् स्मृते।
अभावे पृश्निपर्ण्यास्तु सिंहपुच्छी विधीयते ॥ ८६ ॥
मूलाभावे त्वचं ग्राह्यं लताजिङ्गिन्यसम्भवे।
न तं तगरपादी स्यादभावे कुष्टमिष्यते ॥ ८७ ॥
युक्तातः पश्चिमे ख्यातो ग्राह्यं तालस्य मस्तकम्।
भल्लातकासहत्वे तु रक्तचन्दनमिष्यते ॥ ८८ ॥
रसवीर्य्यविपाकाद्यैः समं द्रव्यं विचिन्त्य च।
युञ्ज्यात्तद्विधमन्यन्तु द्रव्यज्ञानविशारदः ॥ ८९ ॥
इति द्रव्यस्य भावाभावौ।
पयः सर्पिः प्रयोगे च गव्यमेव प्रशस्यते।

मूत्रे गोमूत्रमप्येवं विशेषो यत्र नेरितः ॥ ८० ॥
सारः स्यात् खदिरादीनां निम्बादीनां त्वचस्तथा ।
फलंतु दाड़िमादीनां पटोलादे च्छदस्तथा ॥ ८१ ॥
महान्ति यानि मूलानि काष्टगर्भानि यानि च ।
तेषान्तु वल्कलं ग्राह्यं ह्रस्वमूलानि कृत्स्नशः ॥ ८२ ॥
कूर्मपृष्टान्नरस्थाया मध्ये निम्ना समाचला ।
दुर्गन्धा शब्दसंयुता शिला नेष्टा तु पेषणे ॥ ८३ ॥

इति वङ्गसेने द्रव्यगुणाधिकारः समाप्तः ॥ ८२ ॥

—०—

## अथ गणपाठाधिकारमाह ।

स्थिरापुनर्नवैरण्ड शङ्खसर्षपजीवकाः ।
श्वदंष्ट्राभीरुलांगूली विदारीहंसपादिका: ॥ १ ॥
वृहत्यौ पृश्निपर्णी च विश्वे देवा महाबला ।
सहाशृगालविन्ना च वृश्चिकाली महासहा ॥
शोषगुल्मानिलश्वास कासपित्तहरो गणः ॥ २ ॥
आरग्वधो निशांवष्टा करकस्तापसद्रुमः ।
चुद्रश्वेता महाश्वेता वृश्चिकालीत्ययं गणः ॥
व्रणकुष्टविषश्वास कृमिभिदः कफापहः ॥ ३ ॥
सुरसे कासमर्दश्च फणिज्झार्जकभूस्तृणम् ।
निर्गुण्डीसुरसापर्णो कुलाहलसुगन्धिका ॥ ४ ॥
चवकः कालमालश्च चवपुष्टिः प्रचीवलः ।
विडङ्गः काकमाची च मरिचो मूषकर्णिका ॥ ५ ॥
सुपर्णी चेति वर्गोय कृमिश्लेष्मविनाशनः ।
कासारुचिप्रतिश्याय श्वासहा व्रणशोधनः ॥ ६ ॥

कुष्टकं त्रिफलाराठं हृचिकाग्निः सुहीपयः ।
वातारिरप्यपामार्गो मेदोऽर्शोऽश्मरिमेहहा ॥ ७ ॥
पिप्पल्यग्निवचावासा कालग्रन्थिकमुस्तकम् ।
मार्गीमूर्वा महानिम्बं पाठायष्टी च सर्षपाः ॥
हिङ्गुतिक्ता विडङ्गश्च वातश्लेष्महरो गणः ॥ ८ ॥
एलाचक्राङ्गकौन्तीत्वक् पत्ररोमाङ्गरोचकाः ।
चण्डाम्रफलपुन्नाग दारुसर्जरसोनतम् ॥ ९ ॥
शक्रशुक्तिदधिध्याम कुन्दरुव्याघ्रहस्तजाः ।
एलादिः पिडका कण्डू विषानिलकफान्तकृत् ॥ १० ॥
वचाजलजदेवाह्वा नागराविविषाभयाः ।
हरिद्राद्वययष्ट्याह्व कलशीकुटजोद्भवाः ॥ ११ ॥
वचाहरिद्रादिगणौ वातातीसारनाशनौ ।
मेदः कफाढ्यपवन स्तन्यदोषनिवर्हणौ ॥ १२ ॥
मूर्वाघण्टामृताराठ पाठाभूनिम्बकूलकाः ।
करञ्जवरशैरेय सुषवी सकटिल्लकाः ॥
मेहकुष्टज्वरच्छर्दि विषश्लेष्महरो गणः ॥ १३ ॥
सालस्यन्दनकालीय धवसर्जार्जुनासनाः ।
शिरीषशिंशिपाभूर्ज खदिरं चन्दनद्वयम् ॥ १४ ॥
कदरो वाजीकर्णश्च करञ्जः केम्बुकोऽगुरु ।
गणोऽय कफपांडुत्व कुष्टमेहविनाशनः ॥ १५ ॥
वारुणीतगराभीरुबिल्वजातीविषाणिका ।
सैरेय बृहतीयुग्म दर्भपूतीकशिग्रपाः ॥ १६ ॥
जयाग्निमन्थबिल्वाग्नि नक्तमालाग्निमोरटाः ।
वर्गोऽन्तर्विद्रधिश्लेष्म मेदो गुल्मशिरोर्त्तिनुत् ॥ १७ ॥
वीरवृक्षोग्निमन्थश्च काशवृचादनीकुशाः ।

मोरटेन्दीवरीसूर्य भल्लादण्डकगोक्षुरा: ॥ १८ ॥
वसुको बसिरो दर्भ सैरियाश्मकभेदका: ।
अश्मरीशर्कराक्लस्न मारुतार्त्तिहरो गण: ॥ १९ ॥
रोध्रद्वयप्लवाशोक लम्भशैलेय वालुका: ।
कदम्बो जिङ्गिणी चैव श्रीपर्णी च बहुस्रवा ॥ २० ॥
वर्गो लोध्रादिको नाम्ना कफमेदो विशोषण: ।
पानदोषहरो बल्य: स्तम्भीसर्वविषापह: ॥ २१ ॥
अर्कालर्केन्दुपुष्पी च करञ्जो नागदन्तिका ।
राम्नामधुकमायूर पाटा एष गण: शुभ: ॥
मेद: कफाब्यपवन स्तन्यदोषविनाशन: ॥ २२ ॥
श्यामादन्तीद्रवन्ती च युवाश्यामामृतामृता: ।
सप्तला शङ्खिनीश्वेता राजहच: सतिल्वक: ॥ २३ ॥
कम्पिल्लक: करञ्जश्च हेमक्षीरीत्यय गण: ।
उदावर्त्तोदरानाह॰विषगुल्मविनाशन: ॥ २४ ॥
बृहतीधातकीपाठा यष्टीमधुकलिङ्गका: ।
दीपनीयो बृहत्यादि: कच्छदोषत्रयापह: ॥ २५ ॥
पटोलं चन्दनं मूर्वा पाठातिक्तामृताघन: ।
पित्तश्लेष्मानिलच्छर्दि ज्वरकण्डूविषापह: ॥ २६ ॥
काकोल्यो मधुकं शृङ्गी मेदे द्वे जीवकर्षभौ ।
प्रपौण्डरीकमृद्वीका ऋद्धिवृद्धी तुगासहा ॥ २७ ॥
पयस्या पद्मकं छिन्ने त्येष वर्गोऽतिवृंहण: ।
स्तन्यश्च जीवनो हृद्य: पित्तास्रानिलनाशन: ॥ २८ ॥
उपसैन्धवकाशीस हयहिङ्गुशिलाजतु ।
तुत्थकं चेति मेदघ्न: शर्कराश्मरिच्छेदन: ॥ २९ ॥
सारिवापद्मकोशीर मधुकं चन्दनद्वयम् ।

काश्मरीमधुकं चेति सारिवादिरयं गणः ॥ ३० ॥
रक्तपित्तं निहन्त्याशु तृष्णां चातिप्रमाथिनीम्।
तीव्रपित्तज्वरामर्द सर्वदाहविनाशनः ॥ ३१ ॥
अञ्जनं फलिनीमांसी पद्मोत्पलरसाञ्जने।
एलामधुकनागाह्वा विषान्तर्दाहपित्तनुत् ॥ ३२ ॥
परूषो दाडिमं द्राक्षा काश्मरी काकजं फलम्।
राजादनं सधात्रीकं कतकेन समन्वितम् ॥ ३३ ॥
परूपकादिको नाम्ना गणो वातामयापहः।
हृद्यो रुचिप्रदस्तृष्णा मूत्रदोषविनाशनः ॥ ३४ ॥

—०—

प्रियंगु समंगा-धातकीलोध्रपुन्नागचन्दनकुचन्दनमोचरसाञ्जन-कुम्भीकस्रोतोऽञ्जनपद्मकेसरयोजनवल्लयो दीर्घमूला चेति।

—०—

अम्बष्टाधातकीलोध्र समङ्गापद्मकेसरम्।
मधुकारलुविल्वञ्च गणौ मुनिभिरीरितौ ॥ ३५ ॥
प्रियंग्वम्बष्टकादी च पक्कातीसारनाशनौ।
सन्धानीयौ हितौ पित्ते व्रणानां चातिरोपणौ ॥ ३६ ॥
न्यग्रोधोदुम्बराश्वत्थ मधुकाम्रघतिन्दुकाः।
प्रियालबदरीपार्थ नन्दीवृक्षाम्लजम्भलाः ॥ ३७ ॥
पलाशोरुप्लक्षः श्वेतं लोध्रं जम्बूरयं गणः।
पित्तासृग्मेहनुद्ग्राही योनिदाहनिवारणः ॥ ३८ ॥
गुडूचीनिम्बधान्याक मधुकं चन्दनान्वितम्।
तृष्णादाहारुचिच्छर्दि सर्वज्वरहरो गणः ॥ ३९ ॥
उत्पलं कुमुदं पद्मं कह्लारं लोहितोत्पलम्।
मधुकं चेति पित्तान्न विषच्छर्दिहरो गणः ॥ ४० ॥

मुस्तापाठाहरिद्रे द्वे तिक्ताहैमवतीवचा ।
द्रवन्त्यतिविषाकुष्टं भल्लातकफलत्रयम् ॥ ४१ ॥
साम्बष्टं चेति वर्गोय कफरोगनिषूदनः ।
शोधनः पाचनः स्तन्यो योनिदोषहरो गणः ॥ ४२ ॥
प्रसर्धावरभयाहन्ति त्रिफलाविषमज्वरम् ॥
चक्षुष्यादीपनीपित्त कुष्टमेहकफान्तकृत् ॥ ४३ ॥
आमलक्यभयाकृष्णा चित्रकश्चेत्ययं गणः ।
सर्वज्वरकफघ्नश्च भेदोदीपनपाचनः ॥ ४४ ॥
त्रपुताम्रमयः शीश हेमरूप्यंश्च तन्मयः ।
वर्गश्च शूलहृद्रोगपांडुमेहगदापहः ॥ ४५ ॥

—०—

लाक्षारेवतकुटजाश्वमारकट्फलहरिद्राद्वयनिम्बसप्तच्छदमालत्यस्त्रायमाणा चेति ।

—०—

कषायतिक्तमधुरः कफपित्तार्त्तिनाशनः ।
कुष्टघ्नमेहरश्चैव दुष्टव्रणविशोधनः ॥ ४६ ॥
बिल्वोग्निमन्थ. श्योनाकः श्रीपर्णीपाटलामहत् ।
दीपनं कफवातघ्नं पञ्चमूलमिति स्मृतम् ॥ ४७।
पृश्निपर्णीस्थिरा चैव बृहतीद्वयगोक्षुरम् ।
बृंहणं कफवातघ्नं पञ्चमूलं कनिष्ठकम् ॥ ४८ ॥
विदारीसारिवाछाग शृङ्गीवल्लादमोनिशा ।
कृच्छ्रपित्तानिलहरं वल्लीजं मूलपञ्चकम् ॥ ४९ ॥
गृध्रनखोश्वदंष्ट्रा च शैरेय करमर्दिका ।,
एतच्छ्लेष्मानिलौ हन्ति कण्टकं मूलपञ्चकम् ॥ ५० ।
कुशा काशद्वयं दर्भो नलश्चेति तृणोद्भवम् ।

पित्तकृच्छ्रहरं पथ्यं मूलं वस्तिविशोधनम् ॥ ५१ ॥
एतैस्तैलानि सर्पींषि प्रलेपं पानकान्यपि।
गणैर्विमभ्यकुर्वीत यथाविधिर्भिषग्वरः ॥ ५२ ॥
एकद्विद्रव्यहीनोपि क्रियायोग्यो ग्रहद्रणः।
हृत्वा तु तत्समं द्रव्य मथ योज्योऽल्पभेषजः ॥ ५३ ॥

## इति वङ्गसेने द्रव्यगणाधिकारः समाप्तः ॥ ८२ ॥

---

## अथ संशोधनसंशमनरसद्रव्यादीनां वर्गाधिकारमाह।

मदनकुटजजीमूतेक्ष्वाकुधामार्गवनोग्रक्षतवेधन-सर्षप-विडङ्ग-पिप्पली-करञ्ज-प्रपुन्नाट-कोविदार पिलु-कर्चूरनतकटुम्भरारिष्टाश्वगन्धाजगन्धाविदुलबन्धुजीवकश्वेता शतपुष्पाविंबीवचैर्वारुकचित्रा चेत्यूर्ध्वभागहराणीति। तत्र कोविदारपूर्वाणां फलानि कोविदारादीनां मूलानि। छहच्छ्यामादन्ती द्रवन्ती सप्तला शङ्खिनी-विषाणिका-गवाक्षी कगलांवी-स्नुही-सुवर्णक्षीरी-चित्रक-किणिही-कुशकाशतिल्वक-कम्पिल्लकचम्पकरम्यकपाटला पूगहरीतक्यामलकबिभीतक-नीलिनीचतुरगुल-पूतीकारग्वध महावृच-सप्तच्छदार्क-, ज्योतिष्मती चेत्यधोभागहराणि। तत्र तिल्वकपूर्वाणां मूलानि तिल्वकादीनां पाटलान्तानां त्वचः। कम्पिल्लकफलरज इति। पूगादीनामेरण्डान्तानां फलानि। पूतीकारग्वधयोः पत्राणि। शेषाणां क्षीराणीति। कोशातकीसप्तलाशङ्खिनीदेवदालीकारवेल्लिका चेत्युभयतो भागहराणि एषां स्वरसा इति। पिप्पलीविडङ्गापामार्गशिग्रुशिरीषसिद्धार्थकमरिच-करवीरबिम्बी-गिरिकर्णिका-किणिही-वचाज्योतिष्मतीकरञ्जार्कालर्कलसुनातिविषाशृङ्गवेर-ताली

सतमालसुरसार्जकेङ्गुदोमेषश्रृङ्गी-मातुलुङ्गीमुरुङ्गी-पीलुजातीसाल-तालमधूकलाचाहिंगुलवणमद्यगोमूत्रद्रसमूत्राणि चेति शिरोविरेचनानि। तत्र करवीरपूर्वाणां फलानि करवीरादीनामर्का-न्तानां मूलानि तालीसपूर्वाणां कन्दाः। तालीसादीनामर्जका-न्तानां पत्राणि। इङ्गुदीमेषश्रृङ्ग्योस्त्वक् मातुलुङ्गीमुरुङ्गीपीलु-जातीनां पुष्पाणि। सालतालमधूकानां साराः। लाचाहिंगुनि-र्य्यासौ। लवणानि पार्थिवविशेषाः। मद्यमासवसंयोगाः। गोशकृ-द्रसमूत्रे मलाविति।

—०—

## संशमनान्यत ऊर्ध्वंव्याख्यामः।

तत्र भद्रदारुकुष्टहरिद्रा वरुणमेषश्रृङ्गीवलातिवलार्त्तगलकच्छुराशल्लकीकुबेराचीवीरतरु-सहचराग्निमन्थ-वत्सादनीश्व-दंष्ट्राश्मभेदकालकार्क-शतावरी-पुनर्नवावसुकवसिरकवूर-भार्गीका-र्पासीवृश्चिकालीपत्तूरबदरयवकोलकुलित्थप्रभृतीनि विदारिगन्धा-दिश्च द्वे चाद्ये पञ्चमूल्यौ समासेन वातसंशमनो वर्गः। चन्दनकुच-न्दनह्रीवेरोशीरमंजिष्टापयस्याविदारीशतावरीगुन्द्राशैवालकह्लार-कोकनदोत्पलकदलीदूर्वाप्रभृतीनि काकोल्यादिः सारिवादिर्न्यग्रो-धादिरुत्पलादिस्तृणपञ्चमूलमिति समासेन पित्तसंशमनो वर्गः। कालीयकागुरुतैलपर्णी-कुष्टहरिद्राशीतशिवशतपुष्पासरलरास्नाप्र-कीर्य्योदकीर्य्येङ्गुदीसुमनःकाकादनीलाङ्गलकीहस्तिकर्णमुञ्जातता-ललामज्जकप्रभृतीनि वल्लीकण्टकपञ्चमूल्यौ पिप्पल्यादिर्बृहत्यादि-र्वचादिर्मुष्ककादिःसुरसादिरारग्वधादिरिति समासेन श्लेष्मसंशमनो वर्गः। काकोल्यादिः चीरघृतवसामज्जाशालिषष्टिकयवगोधुममाष-शृङ्गाटककशेरुकत्रपुसैर्वारुकालाबुकालिन्दककर्कारुककतकोद्या-लुकप्रियालपुष्करबीजकाश्मर्य्यमधूकद्राचाखर्जूरतालनारिकेलेचु-

विकारवलातिवलात्मगुप्ताविदारीपयस्यागोक्षुरकचीरकचीरमोरट-मधूलिकाकूष्माण्डकप्रभृतीनि समासेन मधुरोवर्गः। दाडिमामलकमातुलुङ्गाम्रातककपित्थकरमर्दबदरकोलप्राचीनामलकतिंतिडीककोशाम्रभव्यपारेवतवेत्रफललकुचाम्लवेतसदन्तशठदधितक्रसुराशुक्तसौवीरकतुषोदक-धान्याम्ल-प्रभृतीनि समासेनाम्लोवर्गः। सैन्धवसौवर्चलविड्पाक्यरोमकसामुद्रक-पक्तिमयवक्षारोषरसुवर्चिकाप्रभृतीनि समासेन लवणोवर्गः। पिप्पल्यादिः सुरसादिर्मधुशिग्रुमूलक-लसुन-सुपुष्प-शीतशिवकुष्टदेवदारुहरेणुकावल्गुजफल-चण्डागुग्गुलु-मुस्तालाङ्गलकीशुकनाशापीलुप्रभृतीनि शालसारादिश्च प्रायशः कटुकोवर्गः। आरग्वधादिर्गुडूच्यादिर्मण्डूकपर्णीवेत्रकरीरहरिद्राद्वयेन्द्रयवबरुण-स्वादुकण्टकसप्तपर्ण-बृहतीद्वयशङ्खिनीद्रवन्तीत्रिवृत्कृतवेधन-कर्कोटक-कारवेल्लकवार्ताककरीरकरवीरसुमनःशङ्खपुष्पापामार्ग-त्रायमाणाऽशोक-रोहिणी-वैजयन्ती-पुनर्नवा-वृश्चिकाली-ज्योतिष्मतीप्रभृतीनि समासेन तिक्तको वर्गः। न्यग्रोधादिरम्बष्टादिः प्रियंग्वादिर्लोध्रादिस्त्रिफलाशल्लकीजम्ब्वाम्रास्थितिन्दुकादीनि कतकशाकफल-पाषाणभेदक-वनस्पतिफलानि आमलक्यादिः शालसारादिश्च प्रायशः कोविदारकुरवकजीवन्तीचिल्लीपालकी-सुनिषण्णप्रभृतीनि नीवारचणकादयो मुद्गादयश्च समासेन कषायोवर्गः। पिप्पलीपिप्पलीमूलचव्यचित्रकाशृङ्गवेराम्लवेतसमरिचाजमोदाभल्लातकास्थिहिंगुनिर्य्यासा इति दशेमानि दीपनीयोवर्गः।

## इति वङ्गसेने संशोधनसंशमनरसद्रव्यादीनां वर्गाधिकारः समाप्तः॥ ८३॥

## अथर्त्तुचर्य्यामाह ।

भूवाष्पान्मेघनिःस्यन्दा त्पाकादम्लाज्जलस्य च ।
वर्षास्वग्निबले क्षीणे कुप्यन्ति पवनादयः ॥ १ ॥
तस्मात्साधारणः सर्वो विधिर्वर्षासु वक्ष्यते ।
उदमन्थं दिवास्वाप मवश्यायं नदीजलम् ॥ २ ॥
व्यायाममातपं चैव व्यवायं चात्र वर्जयेत् ।
दिव्यं क्वथितकूपोत्थं वाप्यंसारसमेव वा ॥ ३ ॥
प्रावृषिव्याकुले वह्नौ भोज्यमक्लेदि वातजित् ।
परिशुष्कलघुस्निग्ध मुष्णाम्लवलणञ्च यत् ॥ ४ ॥
प्रायोवपानं सक्षौद्रं संस्कृतञ्च घनोदये ।
पुनः संरचता चाग्निं यवगोधूमशालयः ॥ ५ ॥
पुराणाजाङ्गलैर्मांसैर्भोज्या यूषैश्च संस्कृतैः ।
पिवेत् क्षौद्रान्वितं चाल्पं माध्वीकारिष्टमेव वा ॥ ६ ॥
सविषप्राणिविण्मूत्र लालानिष्ठीवनादिभिः ।
मदाप्लुत तदा तोयं नवकं विषसन्निभम् ॥ ६ ॥
वायुना विषजातेन तत्पूर्वेण च धर्षितम् ।
वर्ज्यं सर्वप्रयोगेषु तस्मिन् काले विपश्चिता ॥ ७ ॥
सोपदंशं निषेवेत माध्वीकारिष्टमाधवम् ।
पिबेत्प्रावृषि धीरोऽल्पं रात्रौ तदपि वर्जयेत् ॥ ८ ॥
निरूहैर्वस्तिभिश्चान्यै रथान्यैर्मारुतापहैः ।
कुपितं शमयेद्वातं वार्षिकं वा चरेद्विधिम् ॥ ९ ॥
भूयो वर्षासु संयोगो गङ्गाया दक्षिणे तटे ।
ततः प्रावृण्ण वर्षाख्या वृतू तेषां प्रकीर्त्तितौ ॥ १०॥
तस्या एवोत्तरे देशे बहुशो हिमसंकुले ।
भूयः शीतमतस्तत्र हेमन्तशिशिरावुभौ ॥ ११ ॥

ततो व्यतीते वर्षर्तौ नीलमेघावगुण्ठिते।
व्योम्निप्रसन्नदिङ्मार्गे लब्धप्रसरभास्करे ॥ १२ ॥
शक्रास्त्वलब्धसंदर्गं जातमाममदस्ततः।
आक्रामतिरवेर्लक्ष्मी स्तिरस्कृत्यघनाम्मलान् ॥ १३ ॥
द्राक्षेक्षुचोरसेवी च भवेत्तत्र नराधिपः।
वर्षासूपचितं पित्तं निर्हरेच्च विरेचनैः ॥ १४ ॥
तिक्तसर्पिः प्रयोगैर्वा शिराणां चापि मोक्षणैः।
दिवासूर्य्यांशुसंतप्तं निशिचन्द्रांशुशीतलम् ॥
कालेन पक्वं निर्दोष मगस्त्ये नाविषीकृतम् ॥ १५ ॥
हंसोदकमिति ख्यातं शारदं विमलं शुचि।
स्नानपानावगाहेषु हितमम्बु यथाम्तम् ॥ १६ ॥
शारदानि च माल्यानि वासांसि विविधानि च।
इक्षवः शालयो मुद्गाः सरोऽम्भः क्वथितं पयः ॥ १७ ॥
शरत्काले प्रशस्यन्ते प्रदोषे चेन्दुरश्मयः ॥ १८ ॥

हेमन्ते शिशिरे चाग्र्यं विसर्गादनयोर्बलम्।
शरद्वसन्तयोर्मध्यं हीनं वर्षानिदाघयोः ॥ १९ ॥
शीते शीतानिलस्पर्शं संरुद्धो बलिनां बली।
पक्ता भवति हेमन्ते मात्रा द्रव्यगुरुक्षमः ॥ २० ॥
स यदा नेन्धनं युक्तं लभते देहजं तदा।
रसं हिनस्त्यतो वायुः शीते शीतः प्रकुप्यति ॥ २१ ॥
तस्मात्तुषारसमये स्निग्धाम्ललवणान्रसान्।
औदकानूपमांसानां मेध्यानामुपयोजयेत् ॥ २२ ॥
विलेशयानां मांसानि प्रसहानां भृतानि च।
भक्षयेन्मदिरां सीधु मधुरान्नं पिबेन्नरः ॥ २३ ॥
गोरसानिक्षुविकृती वसातैलं नवौदनम्।

हेमन्ते भजतस्तोय सुष्णमायुर्न हीयते ॥ २४ ॥
शस्ता रसाला हेमन्ते पीतधूमो मदोत्कटः ।
चौलकौशेय संवीत स्वाश्रये कुथकास्तृते ॥ २५ ॥
कुङ्कुमागुरुदिग्धाङ्गो निर्वाते भूमिगह्वरे ।
शयीतशयने चापि सुविस्तीर्णे मनोरमे ॥ २६ ॥
तत्रापनीतदारास्तु प्रिया नार्य्यः स्वलङ्कृताः ।
रमयेत्तु यथा कामं बलादपि मदोत्कटाः ॥ २७ ॥
प्रवात प्रमिताहार सुदमन्यं हिमागमे ।
वर्जयेच्छीतसस्पर्शं शीतान्युपवनान्यपि ॥ २८ ॥

—०—

एष एव विधिः कार्य्यः शिशिरेऽपि सदा बुधैः ।
हेमन्तशिशिरौ तुल्यौ शिशिरेऽल्पं विशेषणम् ॥ २९ ॥
रौक्ष्यमादानजं शीतं मेघमारुतवर्षजम् ।
तस्माद्धैमन्तिकः सर्वः शिशिरे विधिरिष्यते ॥ ३० ॥
निवातमुष्णं त्वधिकं शिशिरे गृहमाश्रयेत् ।
कटुतिक्तकषायानि वातलानि लघूनि च ।
वर्जयेदन्नपानानि शिशिरे शीतलानि च ॥ ३१ ॥

—०—

वसन्ते निचितः श्लेष्मा दिनकृद्भाभिरीरितः ।
कायाग्निं बाधते रोगां स्ततः प्रकुरुते बहून् ॥ ३२ ॥
तस्माद्वसन्ते कर्माणि वमनादीनि कारयेत् ।
गुर्वम्लस्निग्धमधुरं दिवास्वप्नञ्च वर्जयेत् ॥ ३३ ॥
यष्टिकान्वा नवाञ्छालीन् मुद्गनीवारकोद्रवान् ।
लावादिविष्किररसे दद्याद्वृष्टैश युक्तितः ॥ ३४ ॥
पटोलनिम्बवार्त्ताकै स्तिक्तैश्चान्यै र्हिमात्यये

शुचिशुक्लांबरधर चन्दनागुरुधूपितः।
पीनस्तनोरुजघनां रूपयौवनशालिनीम् ॥ ३६ ॥
काननेषु विचित्रेषु सर्वालङ्कारभूषिताम्।
कामयेद्यावदुत्साहं सुमनाः कुसुमागमे ॥ ३७ ॥
व्यायाममञ्जनं धूपं तीक्ष्णञ्च कवलग्रहम्।
तैलाद्युक्ताश्च सर्वान्वा सेवेत कुसुमागमे ॥ ३८ ॥

—०—

मयूखैर्जगतस्तेजो ग्रीष्मे ये पीयते रविः।
स्वादुशीतं द्रवं स्निग्धमन्नपानं तदा हितम् ॥ ३८ ॥
शीतं मशर्करं मन्थं जाङ्गलान्मृगपक्षिणः।
घृतम्पयः सशाल्यन्नं भजन् ग्रीष्मेन सीदति ॥ ४० ॥
व्यायाममुष्णमायासं मैथुनं परिदाहि च।
रसांश्चापि गुणोद्रिक्तान्विशेषेण विवर्जयेत् ॥ ४१ ॥
सर्पिः खण्डगुडाक्तांश्च सद्यकारसमन्वितान्।
प्रातरश्चं पिबेत्तक्रं न च शीतोत्तरं ततः ॥ ४२ ॥
यवगोधूमविकृतो ह्यालींश्च विविधानपि।
प्रसहानूपमांसानि हृष्यान्यन्यानि यान्यपि ॥ ४३ ॥
मद्यमल्पं न वा योज्य मथवा सुबहूदकम्।
लवणाम्लकटूष्णानि व्यायामं चात्र वर्जयेत् ॥ ४४ ॥
दिवाशीतगृहे निद्रां निशिसोमांशुशीतले।
भजेच्चन्दनदिग्धाङ्गः प्रवाते हर्म्यमस्तके ॥ ४५ ॥
व्यजनैः पाणिसंस्पर्शैः चन्दनोदकशीतलैः।
सेव्यमानो भजेदास्यां मुक्तामणिविभूषित. ॥ ४६ ॥
काननानि च शीतानि जलानि कुसुमानि च।
ग्रीष्मकाले निषेवेत मैथुनाद्विरतो नरः ॥ ४७ ॥

हेमन्ते भजतस्तोय सुष्णमायुर्न हीयते ॥ २४ ॥
ग्रस्ता रसाला हेमन्ते पीतधूमो मदोत्कटः ।
चौलकौशेय संवीत स्वाश्रये कुथकास्तृते ॥ २५ ॥
कुङ्कुमागुरुदिग्धाङ्गो निर्वाते भूमिगह्वरे।
शयीलशयने चापि सुविस्तीर्णे मनोरमे ॥ २६ ॥
तत्रापनीतदारास्तु प्रिया नार्य्यः स्वलङ्कृताः ।
रमयेत्तु यथा कामं बलादपि मदोत्कटाः ॥ २७ ॥
प्रवात प्रमिताहार मुदमन्यं हिमागमे ।
वर्जयेच्छीतसस्पर्शं शीतान्युपवनान्यपि ॥ २८ ॥

—०—

एष एव विधिः कार्य्यः शिशिरेऽपि सदा बुधैः ।
हेमन्तशिशिरौ तुल्यौ शिशिरेऽल्पं विशेषणम् ॥ २९ ॥
रौक्ष्यमादानजं शीतं मेघमारुतवर्षजम् ।
तस्माद्धैमन्तिकः सर्वः शिशिरे विधिरिष्यते ॥ ३० ॥
निवातमुष्णं त्वधिकं शिशिरे गृहमाश्रयेत् ।
कटुतिक्तकषायानि वातलानि लघूनि च ।
वर्जयेदन्नपानानि शिशिरे शीतलानि च ॥ ३१ ॥

—०—

वसन्ते निचितः श्लेष्मा दिनकृद्भाभिरीरितः ।
कायाग्निं बाधते रोगां स्ततः प्रकुरुते बहून् ॥ ३२ ॥
तस्माद्वसन्ते कर्माणि वमनादीनि कारयेत् ।
गुर्वम्लस्निग्धमधुरं दिवास्वप्नञ्च वर्जयेत् ॥ ३३ ॥
यष्टिकान्वा नवाच्छालीन् मुद्गनीवारको द्रवान् ।
लावादिविष्किररसे दद्याद्यूषैश्च युक्तितः ॥ ३४ ॥
पटोलनिम्बवार्त्ताकै स्तिक्तैश्चान्यै र्हिमात्यये ॥ ३५ ॥

शुचिशुक्लाम्बरधरः चन्दनागुरुधूपितः।
पीनस्तनोरुजघनां रूपयौवनशालिनीम्॥ ३६॥
काननेषु विचित्रेषु सर्वालङ्कारभूषिताम्।
कामयेद्यावदुत्साहं सुमनाः कुसुमागमे॥ ३७॥
व्यायाममञ्जनं धूमं तीक्ष्णञ्च कवलग्रहम्।
तैलप्रयुक्तांश्च सर्वान्वा सेवेत कुसुमागमे॥ ३८॥

—•—

मयूखैर्जगतस्तेजो ग्रीष्मे ये पीयते रविः।
स्वादुशीतं द्रवं स्निग्धमन्नपानं तदा हितम्॥ ३८॥
शीतं सशर्करं मन्थं जाङ्गलान्मृगपक्षिणः।
घृतम्पयः सशाल्यन्नं भजन् ग्रीष्मेन सीदति॥ ४०॥
व्यायाममुष्णमायासं मैथुनं परिदाहि च।
रसांश्चापि गुणोद्रिक्तान्विशेषेण विवर्जयेत्॥ ४१॥
सर्पिः खण्डगुडाक्तांश्च सक्तूकारसमन्वितान्।
प्रातराशं पिबेत्तक्रं न च शीतोत्तरं ततः॥ ४२॥
यवगोधूमविकृतो स्थालीश्च विविधानपि।
प्रसङ्गानूपमांसानि द्दयान्यन्यानि यान्यपि॥ ४३॥
मद्यमल्पं न वा पेयं मथवा सुबह्वदकम्।
लवणाम्लकटूष्णानि व्यायामं चात्र वर्जयेत्॥ ४४॥
दिवाशीतगृहे निद्रां निशिसोमांशुशीतले।
भजेच्चन्दनदिग्धाङ्गः प्रवाते हर्म्यमस्तके॥ ४५॥
व्यजनैः पाणिसंस्पर्शैः चन्दनोदकशीतलैः।
सेव्यमानो भजेदस्यां मुक्तामणिविभूषितः॥ ४६॥
काननानि च शीतानि जलानि कुसुमानि च।
ग्रीष्मकाले निषेवेत मैथुनाद्विरतो नरः॥ ४७॥

व्यायाममातपं यासं व्यवायं चात्र वर्जयेत् ।
पानभोजनसंस्कारान् प्राय. चौद्रान्वितान् भजेत् ॥ ४८ ॥
सरांसि वाप्यः सरितो वनानि रुचिराणि च ।
चन्दनानि जलार्द्राणि स्रजश्च कमलोज्ज्वलाः ॥ ४९ ॥
तालवृन्तानि नीहारा स्तथा शीतगृहाणि च ।
घर्मकाले निषेवेत वासांसि सुलघूनि च ॥ ५० ॥
ऋत्वोरन्त्यादिसप्ताहा वृतुसन्धिरिति स्मृतः ।
तत्र पूर्वो विधिस्त्याज्यः सेवनीयो परः क्रमात् ॥ ५१ ॥
सतां वृत्तोपपन्नेन विधिना वर्त्तते नरः ।
घोरान्तुकृतान्दोषा न्नाप्नुयात्स कदाचन ॥ ५२ ॥
कार्त्तिकस्य दिनान्यष्टा वष्टावग्रहणस्य च ।
यमदंष्ट्रा इति प्रोक्ता स्वल्पाहार्योऽत्र जीवति ॥ ५३ ॥
वर्षासु मद्यमल्पं वा ससन्तादुदकं पिबेत् ।
उष्णमेव वसन्ते च कामं ग्रीष्मेषु शीतलम् ॥ ५४ ॥
हेमन्ते च वसन्ते च शीतमिष्टं पिबेन्नरः ।
शृतशीतपयो ग्रीष्मे प्रावृट्काले रसं पिबेत् ॥ ५५ ॥
यूषं वर्षागमस्यान्ते प्रपिबेच्छीतलं जलम् ।
अतिस्निग्धकटुप्रायं हितमम्भो घनात्यये ॥ ५६ ॥
समदोषः समाग्निश्च समधातुमलक्रियः ।
प्रसन्नात्मेन्द्रियमनाः स्वस्थ इत्यभिधीयते ॥ ५७ ॥

## इति वङ्गसेने ऋतुचर्याधिकारः समाप्तः ॥८४॥

—०—

## अथ धान्यवर्गमाह ।

रूक्षः शालिस्त्रिदोषघ्न स्तृष्णामेदो निवारणः ।

महाशालिः परं वृष्यः कलमः श्लेष्मपित्तहा ॥ १ ॥
शीतो गुरुस्त्रिदोषघ्नो मधुरो गौरयष्टिकः ।
किञ्चिद्धीनो सितस्तस्मात्परोयं रसपाकतः ॥ २ ॥
दग्धायामवनौ जाताः शालयो लघुपाकिनः ।
कषाया बद्धविण्मूत्रा रूक्षाः श्लेष्मापकर्षणाः ॥ ३ ॥
स्थलजाः कफपित्तघ्नाः कषायाः कटुकान्वयाः ।
किञ्चित्सतिक्तमधुराः पवनानलवर्द्धनाः ॥ ४ ॥
कैदारा मधुरा वृष्या बल्याः पित्तनिवर्हणाः ।
ईषत्कषायाल्पमला गुरवः कफशुक्रलाः ॥ ५ ॥
रोप्यातिरोप्या लघवः शीघ्रपाका गुणोत्तराः ।
विदाहिनो दोषहरा बल्या मूत्रविवर्द्धनाः ॥ ६ ॥
शालयः छिन्नरूढा ये रूक्षास्ते बद्धवर्चसः ।
श्यामाकः शोषणो रूक्षो वातलः श्लेष्मपित्तहा ॥ ७ ॥
तद्वत्प्रियङ्गुनीवाराः कोरदूषाः प्रकीर्त्तिताः ।
बहुमूत्राः कफहराः कषाया वातकोपनाः ॥ ८ ॥
सूपानामुत्तमा मुद्गा लघीयांसोऽल्पमारुताः ।
हरितास्तेष्वपि वरा आढकी कफपित्तनुत् ॥ ९ ॥
रुक्षः कषायो विषदोषशुक्र बलामदृष्टिक्षयकृद्विदाही ।
कटुर्विपाके मधुरस्तु शिम्बिः प्रभिन्नविण्मारुतपित्तलश्च ॥ १०
उष्णः कुलत्थो रसतः कषायः कटुर्विपाके कफमारुतघ्नः ।
कुष्ठाश्मरीगुल्मनिषूदनश्च संग्राहकः पीनसकासहन्ता ॥ ११ ॥
आनाहमेदोगुदकीलहिक्काश्वासापहः शोणितपित्तकृच्च ।
बलासहन्ता नयनामयघ्नो विशेषतो वन्यकुलत्थ उक्तः ॥ १२ ॥
दन्त्योऽग्निमेधाजननोऽल्पमूत्रः स्तन्योऽथ केश्योऽनिलहा गुरुश्च ।
तिलेषु सर्वेष्वसितः प्रधानो मध्यः सितो हीनतरास्तथान्ये ॥ १३ ॥

पाके रसे चापि कटुः प्रदिष्टः सिद्धार्थकः शोणितपित्तकोपी ।
स्निग्धोष्णतीक्ष्णः कफवातहन्ता तथागुण श्चासितसर्षपोऽपि ॥
माषो गुरुर्भिन्नपुरीषमूत्रः स्निग्धोतिहृष्योमधुरोनिलघ्नः ।
सन्तर्पणः स्तन्यकरो विशेषाद्बलप्रदः शुक्रकफावहश्च ॥ १५ ॥
वृष्यः श्लेष्मपित्तघ्नो राजमाषोऽनिलार्तिकृत् ।
अवल्गुजः हैडगजौ निष्पावा वातपित्तलाः ॥ १६ ॥
काकाण्डी आत्मगुप्तानां माषवत् फलमादिशेत् ।
मसुरा मधुराः पाके ग्राहिणो रूक्षशीतलाः ॥ १७ ॥
मकुष्टकाः प्रशस्यन्ते रक्तपित्तज्वरादिषु ।
चणकाश्च मसूराश्च खण्डीकाः सहरेणवः ॥ १८ ॥
गुरवः शीतमधुराः सकषाया विरूक्षणाः ।
पित्तश्लेष्मणि शस्यन्ते सूपेष्वालेपनेषु च ॥ १९ ॥
यवः कषायो मधुरो हिमश्च कटुर्विपाके कफपित्तहारी ।
व्रणेति पथ्यस्तिलवच्च नित्यं प्रबद्धमूत्रो बहुवातवर्चाः ॥ २० ॥
स्थैर्याग्निमेधास्वरवर्णकृच्च सुपिच्छिलः स्थूलविलेपनश्च ।
मेदोमरुत्तृट्शमनोऽथ रूक्षः प्रसादनः शोणितपित्तयोश्च ॥ २१ ॥
एतैर्गुणैर्हीनतरांश्च किञ्चिद्विद्याद्यवेभ्योऽतियवानशेषैः ॥ २२ ॥
गोधूम उक्तो मधुरो गुरुश्च बल्यः स्थिरः शुक्ररुचिप्रदश्च ।
स्निग्धोऽतिशीतोनिलपित्तहारी सन्धानकृच्छ्लेष्महरः सरश्च ॥२३॥
तेषां मसूरः संग्राही कलायो वातलः परम् ।
अनार्तवव्याधिहरमपर्यागतमेव च ॥ २४ ॥
अभूमिजं नवं चापि धान्यं न गुणवत् स्मृतम् ।
नव धान्यमभिष्यन्दि लघुसंवत्सरोषितम् ॥ २५ ॥
विदाहिगुरुविष्टम्भि विरूढं वातकोपनम् ॥ २६ ॥
इति वङ्गसेने शिम्बिधान्यशूकधान्य वर्गाधिकारः॥८५

# अथ मांसवर्गमाह।

संग्राहीदीपनः शीतः कषायो मधुरो लघुः।
लावः कटुविपाकश्च सन्निपाते च पूजितः॥ १॥
ईषद्गुरुस्तु मधुरो हृद्यो मेधाग्निवर्द्धनः।
तित्तिरिः सर्वदोषघ्नो ग्राही वर्णप्रसादनः॥ २॥
रक्तपित्तहरः शीतो लघुश्चापि कपिञ्जलः।
कफोत्थेषु च रोगेषु मदे वाते च शस्यते॥ ३॥
वातपित्तहरा बल्या मेधाग्निबलवर्द्धनाः।
लघवः क्रकरा हृद्याः स्मृताः चैवोपचक्रकाः॥ ४॥
कषायः स्वादुलवणः त्वच्यः केश्योऽरुचिप्रदः।
मयूरः स्वरमेधाग्निदृक्श्रोत्रेन्द्रियदार्ढ्यकृत्॥ ५॥
स्निग्धोष्णोऽनिलहा वृष्यः स्वेदस्वरबलावहः।
बृंहणः कुक्कुटो वन्यस्तद्वद्ग्राम्यो गुरुर्मतः॥ ६॥
मृगाः सर्वप्रकाराश्च पित्तश्लेष्महराः स्मृताः।
किञ्चिद्वातकराश्चापि लघवो बलवर्द्धनाः॥ ७॥
कषायो मधुरो हृद्यः पित्तासृक्कफवातहा।
संग्राही रोचनो बल्यस्तेषां मेणो ज्वरापहः॥ ८॥
मधुरो मधुरः पाके दोषघ्नोऽनलदीपनः।
शीतलो बद्धविण्मूत्रः सुगन्धिर्हरिणो लघुः॥ ९॥
कषायः स्वादुलवणो गुरुः काणकपोतकः।
रक्तपित्तप्रशमनो विशदोऽपि कषायकः॥ १०॥
कषायो मधुरश्चापि गुरुः पारावतः स्मृतः।
कुलिङ्गो मधुरः स्निग्धः कफशुक्रविवर्द्धनः।
सन्निपातहरो वेश्म कुलिङ्गस्त्वतिशुक्रलः॥ ११॥

प्रसहाःशोषगुल्मार्शो ग्रहणीदोषिणां हिताः ।
सर्वदोषहरास्तेषां मेदस्तु बलदूषकम् ॥ १२ ॥
वृषसिंहकपिव्याघ्र भासमार्जारमूषिकाः ।
तरक्षु कुरर श्येन शशघ्नीजम्बुकादयः ॥ १३ ॥
गुहाशया वातहरा गुरूष्णा मधुराश्च ते ।
स्निग्धा वल्या हिता नित्यं नेत्रगुह्यविकारिणाम् ॥ १४ ॥
नकुलः शल्लकीगोधा शशश्चापि भुजङ्गमाः ।
श्वासकासानिलहरा भूशयाः कफपित्तलाः ॥ १५ ॥
कषायमधुरस्तेषां शशः पित्तकफापहः ।
नातिशीतलवीर्य्यत्वा द्वातसाधारणो मतः ॥ १६ ॥
महिषो गवयः खड्गी वराहश्चमरोरुरुः ।
आनूपाः मधुरावल्या गुरुस्निग्धाः कफप्रदाः ॥ १७ ॥
नातिस्निग्धा श्चमर्य्यस्तु मदपित्तकफाः स्मृताः ।
छगलस्त्वनभिष्यन्दी तेषां पीनसनाशनः ॥ १८ ॥
वृंहणं मांसमौरभ्रं पित्तश्लेषकरं गुरु ।
मेदः पुच्छोद्भवं हृद्य मौरभ्रसदृशं गुणैः ॥ १९ ॥
श्वासकासप्रतिश्याय विषमज्वरनाशनम् ।
गव्यं श्रमात्यग्निहितं दुष्पाकमनिलापहम् ॥ २० ॥
औरभ्रवल्लवणं मासमेकशफोद्भवम् ।
हंसकारण्डवक्रौञ्च मद्गुभल्लाह्लसारसाः ।
नन्द्यावर्त्ता बलाकाश्च स्नेहला गुरवः प्लवाः ॥ २१ ॥
मत्स्य. कर्कटकः कूर्माः शिशुमारोऽथ शुक्तयः ।
शङ्खाश्च गुरवः स्निग्धाः शीताह्यप्याजलेशयाः ॥ २२ ॥
सामुद्रा गुरव. स्निग्धा मधुरा नातिपित्तलाः ।
उष्णावातहरा हृष्या वर्चश्लेष्मविवर्द्धनाः ॥ २३ ॥

प्रलावहाविशेषेण मत्स्याशिलात्समुद्रजाः।
समुद्रजेभ्यो नादेया बृंहणत्वाद् गुणोत्तराः॥ २४॥

इति वङ्गसेने मांसवर्गाधिकारः समाप्तः ॥ ८६ ॥

---

## अथ फलवर्गमाह।

पाठामूर्वाशठीशाकं वास्तूकं सुनिषण्णकम्।
विद्याद्ग्राहि त्रिदोषघ्नं मार्कवं चिल्लिवास्तुकम्॥ १॥
संग्राहीच्चवकः प्रोक्तः स्निग्धः पञ्चांगुलः सरः।
भण्टीवल्लादनीफञ्जी वातघ्नी लघुदीपनी॥ २॥
काकमाचीत्रिदोषघ्नी स्तन्या हृष्या कलम्बिका।
चांगेरीकफवातघ्नी सार्षपं सर्वदोषकृत्॥ ३॥
सार्षपं च सकौसुम्भं राजिकैकान्तपित्तला।
नाड़ीकः कफवातघ्नः कटुर्मधुरशीतलः॥ ४॥
सतीनशाकं श्लेषघ्नं त्रैपुटं वातकृन्मतम्।
श्योहस्तिनी सयत्नूरा मूत्रलार्शरिभेदनी॥ ५॥
कालशाकंतु कटुकं दीपनं कफशोथजित्।
हृद्या स्निग्धा च शीता च मत्स्यघ्नी चाप्युपोदिका॥ ६॥
रूक्षो विषमदघ्नश्च प्रशस्तो रक्तपित्तिनाम्।
मधुरो मधुरः पाके शीतलस्तंडुलीयकः॥ ७॥
वर्षाभ्वौ कफवातघ्नो हितौ शोफोदरार्शसि॥ ८॥
कटुतिक्तरसा हृद्या रोचना वह्निदीपनी।
सर्वदोषहरीलघ्वी कण्ठ्यामूलकपोतिका॥ ९॥
महत्तद् रुचिदं स्निग्धं तीक्ष्णमामश्च दीपलम्।
तदेव सैंहसिद्धन्तु वातनुत्कफपित्तजित्॥ १०॥

शुष्कान्तु शोथशमनं गरदोषहरं लघु ।
विष्टम्भिवातलं शाकं शुष्कमन्यत्र मूलकात् ॥ ११ ॥
पुष्पञ्च पत्रञ्च फलं तथैव यथोत्तरन्ते लघवः प्रदिष्टाः ।
तेषान्तु पुष्पं कफवातहन्तृ फलं निहन्यात्कफमारुती च ॥१२॥
रक्तपित्तहरीशोष कुष्टघ्नीहिलमोचिका ।
कफापहं शाकमुक्तं वरुणप्रपुनाटयोः ॥ १३ ॥
स्निग्धोष्णतीक्ष्णः कटुपिच्छिलश्च गुरुः सरः स्वादुरसोऽथ बल्यः ।
वृष्यश्च मेधास्वरवर्णचक्षुर्भग्नास्थिसंधानकरो रसोनः ॥ १४ ॥
हृद्रोगजीर्णज्वरकुक्षिशूलविबन्धगुल्मारुचिकासशोषान् ।
दुर्नामकुष्टानिलसादजन्तु समीरणश्वासकफांश्च हन्ति ॥ १५ ॥
नात्युष्णवीर्योऽनिलहाकटुश्च तीक्ष्णो गुरुर्नातिकफावहश्च ।
बलावहः पित्तहरोऽथ किञ्चित्पलांडुरग्नेश्च विवृद्धिकारी ॥१६॥
स्निग्धोऽथ रुच्यः स्थिरधातुकर्त्ता बल्योऽथ मेधाकफपुष्टिदाता ।
स्वादुर्गुरुः शोणितपित्तशस्तः सपिच्छिलः क्षीरपलांडुरुक्तः ॥१७॥
न्यग्रोधोदुम्बराश्वत्थ प्लक्षपद्मादिपल्लवाः ।
कषायाः स्तम्भनाः शीता हिताः पित्तातिसारिणाम् ॥ १८ ॥
स्रंसनं कटुकं पाके कफघ्नमनिलापहम् ।
शोथघ्नमुष्णवीर्यञ्च पत्रं पूतिकरंजजम् ॥ १९ ॥
वेणोः करीराः श्लेष्मघ्नाः कटुकारसपाकतः ।
विदाहिनो नातिबलाः सकषाया विरूक्षणाः ॥ २० ॥
कफशोणितपित्तघ्नं रोचनं कारवेल्लकम् ।
कारवेल्लकवज्ज्ञेयं फलं कर्कोटकस्य च ॥ २१ ॥
पटोलपत्रं पित्तघ्नं नालं तस्य कफापहम् ।
फलं त्रिदोषशमनं मूलं तस्य विरेचनम् ॥ २२ ॥
पित्तघ्नंतेषु कूष्माण्डं बालं मध्यं कफापहम् ।

शुष्कं लघूष्णं सचारं दीपनं बस्तिशोधनम् ॥ २३ ॥
सर्वदोषहरं हृद्यं पथ्यं चेतोविकारिणाम्।
बालं सनीलं त्रपुसं तत्तु पित्तहरं स्मृतम् ॥ २४ ॥
तत्पांडुकफकृज्जीर्णं मम्लं वातविनाशनम्।
एर्वारुकं सकर्कारुसंपक्कं कफवातजित् ॥ २५ ॥
सचारं मधुरं रुच्यं तच्छीतं नातिपित्तलम्।
सचारमधुरं भेदि शीर्णवृत्तं कफावहम् ॥ २६ ॥
कंडूकुष्टक्रमिघ्नानि कफपित्तहराणि च।
फलानि बृहतीनान्तु कटुतिक्तलघूनि च ॥ २७ ॥
कफवातहरं तिक्तं रोचनं कटुकं लघु।
वार्त्ताकुदीपनं प्रोक्तं जीर्णं सचारपित्तलम् ॥ २८ ॥
अत्यर्थमधुरारुच्या पित्तघ्नीमधुकर्कटी।
कर्कन्धुकोलबदरमम्लं वातविनाशनम् ॥ २९ ॥
पक्वं पित्तानिलहरं स्निग्धं समधुरं सरम्।
पुराणं तृट्प्रशमनं श्रमघ्नं दीपनं परम् ॥ ३० ॥
सौवीरं बदरं स्निग्धं मधुरं वातपित्तजित्।
आमं कपित्थं वैस्वर्यं ग्राहिमधुरवातलम् ॥ ३१ ॥
कफानिलहरं पक्वं मधुराम्लरसं गुरु।
दीपनं पित्तकृत्पांडु जम्बीरमतिपित्तलम् ॥ ३२ ॥
गुल्मवातकफश्वास कासघ्नं बीजपूरकम्।
केसरं मातुलुङ्गस्य दीपनं कफवातजित् ॥ ३३ ॥
वातपित्तहरं मांसं त्वक्स्निग्धोष्णानिलापहा।
अत्यर्थमधुरारुच्या पित्तघ्नी मधुकर्कटी ॥ ३४ ॥
पित्तमारुतकृद्दालं पित्तल वह्निकेसरम्।
हृद्यं वर्णकरं रुच्यं रक्तमांसबलप्रदम् ॥ ३५ ॥

कषायानुरसं स्वादु.वातघ्नं बृंहणं गुरु ।
पित्ताविरोधिसंपक्व माम्लं शुक्रविवर्द्धनम् ॥ ३६ ॥
बृंहणं मधुरं बल्यं गुरुविष्टम्भजीर्यति ।
आम्रातकफलं वृष्यं सस्नेहं कफवर्द्धनम् ॥ ३७ ॥
त्रिदोषविष्टम्भकरं लकुचं शुक्रनाशनम् ।
अम्लं तृष्णाहरं रुच्यं पित्तश्लेष्मकरमर्दकम् ॥ ३८ ॥
हृद्यं स्वादुकषायाम्लं भव्यमास्यविशोधनम् ।
गरदोषहरं नीपं प्राचीनामलकं तथा ॥ ३९ ॥
वातापहं तिन्तिडीक मामं पित्तबलासकृत् ।
ग्राहिसंदीपनं हृद्यं सम्पक्वं कफवातनुत् ॥ ४० ॥
तस्मादल्पान्तरगुणं कोशाम्रफलमुच्यते ।
अम्लीकायाः फलं तद्वत् पक्वं भेदि तु केवलम् ॥ ४१ ॥
अम्लं समधुरं हृद्यं लघ्यमेतत्तु रोचनम् ।
वातघ्नं दुर्जरं प्रोक्तं नागरंगफलं गुरु ॥ ४२ ॥
कषायानुरसं चैषां दाड़िमं नातिपित्तलम् ।
दीपनीयं रुचिकरं हृद्यं विर्चो विबन्धनम् ॥ ४३ ॥
द्विविधं तत्तु विज्ञेयं मधुरं चाम्लमेव च ।
त्रिदोषघ्नन्तु मधुर मम्लं वातकफापहम् ॥ ४४ ॥
अश्वत्थोदुम्बरप्लक्षच न्यग्रोधानां फलानि च ।
कषाय मधुराम्लानि वातलानि गुरूणि च ॥ ४५ ॥
हृत्तमारुत्करं स्वादु पित्तघ्नं शोषवह्निकृत् ॥ ४६ ॥
अत्यम्लं वातलं ग्राहि जाम्बवं कफवातजित् ॥ ४७ ॥
आमं कषायं संग्राहि तिन्दुकं वातकोपनम् ।
विपाके गुरुसम्पक्वं मधुरं कफपित्तजित् ॥ ४८ ॥
मधुरं च कषायञ्च स्निग्धं संग्राहि चालुकम् ।

स्थिरीकरञ्च दन्तानां वाकुलं फलमुच्यते ॥ ४८ ॥
अत्यम्लमियन्मधुरं कषायानुरसं लघु।
वातघ्नं पित्तजनन मामं विद्यात्परूपकम् ॥ ५० ॥
तदेव मधुरं पक्वं वातपित्तनिवर्हणम्।
विपाके मधुरं शीतं रक्तपित्तप्रसादनम् ॥ ५१ ॥
पौष्करं स्वादुविष्टम्भि वल्यं कफहरस्परम्।
कफानिलहरं तीक्ष्णं स्निग्धं संग्राही दीपनम् ॥ ५२ ॥
कटुतिक्तकषायोष्णं वालं बिल्वमुदाहृतम्।
तदेव विद्यात्संपक्वं मधुरानुरसं गुरु ॥ ५३ ॥
विदाहिविष्टम्भकरं दोषकृत्पूतिमारुतम्।
पनसं सकषायन्तु स्निग्धं स्वादुहिमं,गुरु ॥ ५४ ॥
मोचं स्वादुरसं प्रोक्तं कषायं नातिशीतलम्।
रक्तपित्तहरं हृद्यं रुच्यं श्लेष्मकरं गुरु ॥ ५५ ॥
फलं स्वादुरसं चैव तालजं गुरुपित्तजित्।
तद्बीजं स्वादुपाकञ्च मूत्रलं वातपित्तजित् ॥ ५६ ॥
हृद्यं मूत्र विवन्धघ्नं पित्तासृग्वातनाशनम्।
केश्यं रसायनं मेध्यं काश्मर्य्यफलमुच्यते ॥ ५७ ॥
क्षतक्षयापहं हृद्यं वृंहणं तर्पणं गुरु।
स्निग्धं हृद्यं समधुरं खर्जूरं रक्तपित्तजित् ॥ ५८ ॥
वृंहणीयमहृद्यञ्च मधूककुसुमं गुरु।
वातपित्तप्रशमनं फलं तस्योपदिश्यते ॥ ५९ ॥
कषायं कफपित्तघ्नं किञ्चित्तिक्तं रुचिप्रदम्।
हृद्यं सुगन्धिसाम्लञ्च लवलीफलमुच्यते ॥ ६० ॥
शर्गीफलं गुरुस्वादु रूक्षोष्णं कफनाशनम्।
गुरुश्लेष्मातकफलं कफकृन्मधुरं हिमम् ॥ ६१ ॥

करञ्जकिंशुकारिष्टफलं जन्तु प्रमेहनुत् ।
प्रियालमज्जामधुरो वृष्यः पित्तानिलापहः ॥ ६२ ॥
वैभीतको मदकरः कफवातविनाशनः ।
कषाय मधुरो मज्जा कोलानां पित्तनाशनः ॥ ६३ ॥
तृष्णाछर्द्यनिलघ्नश्च तद्वदामलकस्य च ।
बीजपूरकसंपाको मज्जाकोशाम्रसम्भवः ॥ ६४ ॥
स्वादुपाकोऽग्निबलदः स्निग्धः पित्तानिलापहः ।
शीतं कषायमधुरं टङ्कं मारुतकृत्गुरु ॥ ६५ ॥
यस्य यस्य फलस्येह वीर्यम्भवति यादृशम् ।
तस्य तस्यैव वीर्येण मज्जानमपि निर्दिशेत् ॥ ६६ ॥
धान्येषु मांसेषु फलेषु चैव शाकेषु चानुक्तमपि प्रमोहात् ।
आस्वादतो भूतगुणैर्गृहीत्वा तदादिशेद्द्रव्यमनल्पबुद्धिः ॥ ६७ ॥

## इति वङ्गसेने फलवर्गाधिकारः समाप्तः ॥ ८७ ॥

—०—

## अथ व्यञ्जनमांसव्यञ्जनयोरधिकारमाह ।

वातश्लेष्महरश्चैव रक्तपित्तप्रदूषणम् ।
अग्निसन्दीपनं हृद्य मुष्णान्नन्तु प्रशस्यते ॥ १ ॥
धौतः सुविमलः शुद्धो मनोज्ञः सुरभिः समः ।
स्विन्नः सुप्रस्रुतस्तूष्णो विशदश्चौदनो लघुः ॥ २ ॥
शीतलं तर्पणं हृद्यं मधुश्रमहरं परम् ।
लघुद्रुतविपक्वन्तु सद्योन्नं वारिभावितम् ॥ ३ ॥
त्रिदोषकोपणं रूक्षं मलकृन्मूत्रशोधनम् ।
स्वादुमेदः कफोत्क्लेदि वार्यन्नं निशिसंस्थितम् ॥ ४ ॥
मधुरं शीतलं साम्लं तृष्णाघ्नं दीपनं परम् ।

आमघ्नन्तर्पणं हृद्यं शीलभक्तं रुचिप्रदम् ॥ ५ ॥
भोजनाग्रे सदा पथ्यं जिह्वाकण्ठविशोधनम्।
अग्निसन्दीपनं हृद्यं लवणार्द्रकभक्षणम् ॥ ६ ॥
वातश्लेष्महरं रुच्यं दीपनं पाचनं परम्।
विशेषादामवातघ्नं लवणं काञ्जिकार्द्रकम् ॥ ७ ॥
दीपनं तर्पणं रुच्य मामघ्नमनुलोमनम्।
मन्दाग्नीनां सदा पथ्यं विल्वं काञ्जिकसंस्थितम् ॥ ८ ॥
कषाय मधुरो रूक्षः शीतः पाके कटुर्लघुः।
श्लेष्मपित्तप्रशमनो मुद्गयूषोत्तमो मतः ॥ ९ ॥
सुस्विन्नो निस्तुषो भृष्ट ईषत् सूपो लघुर्मतः।
माषः समधुरो रुच्यो विदाही चाम्लपित्तकृत् ॥ १० ॥
वातघ्नो दीपनश्चैव चाम्लमाषो गुरुः सरः।
स्विन्नं निष्पीड़ितं शाकं हितं स्यात् स्नेहसंस्कृतम् ॥ ११ ॥
वातपित्तहरं हृद्यं पुष्टिकृद्बलवर्द्धनम्।
कफमेदोऽनिलहरं सरं सुलघुदीपनम् ॥ १२ ॥
वार्त्ताकं पित्तलं किञ्चि दङ्गारपरिपाचितम्।
हितं ततो गुरुतरं सतैलं लवणान्वितम् ॥ १३ ॥
वृद्धं कूष्माण्डकं स्विन्नं घृतभृष्टं सुपाचितम्।
पक्वं चिञ्चाफलं तक्र गुडयुक्तं सुभावितम्।
विकटुत्रिसुगन्धिभ्यां मोदितं दीपनाशनम् ॥ १४ ॥
सुस्विन्नमग्नौ घृतपाचितञ्च गुड़ान्वितं घोरविलोडितञ्च।
विजातयुक्तं च सकेसरं च दुग्धाम्लमेतत्परिकीर्त्तितञ्च ॥ १५ ॥
हृद्यञ्च पुष्टिञ्च करोति कान्तिं निषेव्यमाणं बलमादधाति ॥१६॥
लघवो बृंहणा रुच्या स्फूर्दिघ्ना रागषाण्डवः।
रसालां पाचनीहृद्या वातहृत् सगुड़ं दधि ॥ १७ ॥

गुरवः पैष्टिका भक्ष्या बृंहणा वातनाशनाः ।
वातपित्तहरो हृष्यो घृतपूरोऽग्निनाशनः ॥ १८ ॥
बृंहणा समिता भक्ष्या बल्याः पित्तानिलापहाः ।
पिशितैर्वेसवाराद्यैः संपूर्णा गुरुतर्पणाः ॥ १९ ॥
वैदलाः शेमला ज्ञेया गुरवो भिन्नवर्चसः ।
वातपित्तहरा बल्या दृष्टिदा घृतपाचिताः ॥ २० ॥
भक्ष्यास्तैलकृता दृष्टि वातघ्नाः पित्तकोपनाः ।
तोयेनालोड़िता भक्ष्याः खिन्नाश्चाम्भसि दुर्जराः ॥ २१ ॥
गुरवो बृंहणा हृष्या ये च क्षीरोपसाधिताः ।
अत्युष्णा मण्डलाः पथ्याः शीतला गुरवो मताः ॥ २२ ॥
लाजाश्छर्दिहराः शीता हृष्या गुर्वी च शष्कुली ।
पिष्टकं गुरुविष्टम्भि विदाहि कफपित्तलम् ॥ २३ ॥
कपालाङ्गारपक्काः स्युः किञ्चिल्लघुतराश्च ते ।
कुल्माषा वातला रूक्षा गुरवो भिन्नवर्चसः ॥ २४ ॥
शक्तवो वातला रूक्षा वातवर्चोऽनुलोमिनः ।
तर्पयन्ति नरं शीघ्रं पीताः सद्यो बलाश्च ते ॥ २५ ॥
मधुरा लघवः शीताः शक्तवः शालिसम्भवाः ।
ग्राहिणो रक्तपित्तघ्ना स्तृष्णाछर्दिज्वरापहाः ॥ २६ ॥
पूपका वा यवैर्वाल मोदकाः पित्तनाशनाः ।
विष्टम्भी पायसो बल्यो मेदः कफकरो गुरुः ॥ २७ ॥
कफपित्तकरा बल्या कृशराऽनिलनाशिनी ।
पाचनो दीपनः पथ्यो मण्डः स्याद्भृष्टतण्डुलैः ॥ २७ ॥
लाजमण्डो विशुद्धानाम्पथ्यः पाचनदीपनः ।
वातानुलोमनो हृद्यः पिप्पलीनागरायुतः ॥ २८ ॥
वातानुलोमनीलघ्वी सोष्णातन्वी ज्वरापहा ।

ग्राहिणी तर्पिणी हृद्या विलेपी बलवर्द्धिनी ॥ ३० ॥
शाकमांसफलैर्युक्ता विलेप्योऽम्लाश्च दुर्जराः।
दाड़िमामलकैर्यूषो वह्निकृद्वातपित्तहा ॥ ३१ ॥
श्वासकासप्रतिश्याय कफघ्नो मूलकैः कृतः।
यवकोलकुलत्थानां यूषः कण्ठ्योऽनिलापहः ॥ ३२ ॥
कपित्थतक्रचांगेरी मरिचाजाजिचित्रकैः।
कफवातहरो ग्रोप खण्डो दीपनपाचनः ॥ ३३ ॥
प्रीणनः प्राणजननः श्वासकासक्षयापहः।
रक्तपित्तश्रमहरो हृद्यो मांसरसः स्मृतः ॥ ३४ ॥
रोचनोपाचनोहृद्या साम्ला वातकफापहा।
जम्बीरसाधिता चैव कलम्बो च निगद्यते ॥ ३५ ॥
अम्लं समधुरं हृद्यं रोचनं वातकोपनम्।
वार्त्ताकं दीपनं हृद्यं तिन्तिड़ीगुड़साधितम् ॥ ३६ ॥
रक्तपित्तहरं रुच्यं स्नेहेन परिभावितम्।
वातपित्तहरं बल्यं रोचनं बह्निदीपनम् ॥ ३७ ॥
संग्राहिपुष्टिदं ज्ञेयं कदलीमूलसाधितम्।
कृमिकुष्टहरं रुच्यं हरिद्रा नाडिकायुतम् ॥ ३८ ॥
सुगन्धिमधुरं साम्लं दुर्जरं तक्रभावितम्।
रुच्यं वातहरञ्चैव नागरंगस्य केसरम् ॥ ३८ ॥
ईषत्तिक्तं समधुरं हृद्यं रोचनदीपनम्।
वार्त्ताकं कटुकं पाके सतीनदलसाधितम् ॥ ४० ॥
वातलं रोचनं हृद्यं कलाय दलसाधितम्।
अम्लं समधुरं हृद्यं रोचनं कण्ठशोधनम् ॥
वातघ्नं दुर्जरं चैव नष्टक्षीरप्रसाधितम् ॥ ४१ ॥
दुर्जरामधुरा रुच्या वटका माषकादिभिः।

चिञ्चाफलेन संसिद्धा रोचनाथ विशेषतः ॥ ४२ ॥
कफवातहरं रुच्यं दीपनं चानुलोमनम् ।
ज्वरितानां हितं मांसं पटोलफलसाधितम् ॥ ४३ ॥
रक्तपित्तविसर्पघ्नं कुष्टमेहज्वरापहम् ।
रोचनञ्च विशेषेण वेत्राग्र परिसाधितम् ॥ ४४ ॥
वातश्लेष्महरं रुच्यं दीपनं चानुलोमनम् ।
ज्वरकुष्टहरं मांसं क्षुद्रवार्त्ताकुसाधितम् ॥ ४५ ॥
कफपित्तप्रशमनं ज्वरकुष्टविनाशनम् ।
क्रिमिमेहहरं हृद्यं मांसं कैम्बुकसाधितम् ॥ ४६ ॥
कफवातहरं हृद्यं तृष्णारोचकनाशनम् ।
श्रमघ्नन्तर्पणं मांसं सिद्धं बदरशुण्ठकैः ॥ ४७ ॥
आर्द्रामामलकैः सिद्धं त्रिदोषप्रशमनं लघु ।
ज्वरहृद्यामभेदोघ्नं मांसं बह्निप्रदीपनम् ॥ ४८ ॥
वातश्लेषहरं हृद्य मनुलोम्यग्निदीपनम् ।
गलरोगप्रशमनं शुष्काम्रफलसाधितम् ॥ ४९ ॥
रुच्यं प्रीतिकरं हृद्यं मांसमाम्रेण साधितम् ।
कफपित्तप्रशमनं व्रणशोधनरोपनम् ॥ ५० ॥
अग्निसन्दीपनं मांसं कारवेल्लकसाधितम् ।
कफवातहरं हृद्यं दीपनं चानुलोमनम् ॥ ५१ ॥
रोचनं बलकृन्मांसं बालमूलकसाधितम् ।
प्रक्षीणबलमांसस्य वातेनाभिहतस्य च ॥ ५२ ॥
रुच्यं पुष्टिकरं हृद्यं मृगमांसं हितं नृणाम् ।
वातहृद्गलगण्डास्य रोगशोथविनाशनम् ॥ ५३ ॥
स्नेहनं रोचनं दीप्यं मांसं दाधिकमुच्यते ।
मांसन्तु कफपित्तघ्नं तोड़कादिरसाधिकम् ॥ ५४ ॥

कासश्वासहरं हृद्यं चक्षुष्यं स्वरवर्णदम्।
हृद्यं वातहरं रुच्यं वृष्यं पुष्टिबलप्रदम्॥ ५५॥
श्रेष्ठं पथ्यतमं मांसं करमर्दकसाधितम्।
शूलघ्नं दीपनं मांसं सिद्धं चिञ्चाफलेन तु॥
कफपित्तहरं रुच्यं बालचिञ्चाकसाधितम्॥ ५६॥
रुच्यं कफानिलहरं विबन्धानाहभेदनम्।
शूलघ्नं दीपनं हृद्यं पक्वचिञ्चाफलेन तु॥ ५७॥
वातश्लेष्महरं हृद्यं मर्षः कुष्टविनाशनम्।
विबद्धमीषन्मधुरं मूलकैः सह जाङ्गलम्॥ ५८॥
वातश्लेष्मानिलहरं मेहकुष्टविषापहम्।
धातूनां बृंहणं वृष्यं करीरैः सह साधितम्॥ ५९॥
गुरुर्विपाके मधुरो रुच्यो मांसवटः स्मृतः।
उदावर्तानिलहरो हृद्यो मूलकसाधितः॥ ६०॥
कफपित्ताविरोधी स्या द्वार्त्ताकेन प्रसाधितः।
पिष्टः सिद्धः पटोलस्य पत्रैः जीर्णज्वरापहः॥ ६१॥
कफपित्तहरो रुच्यो योससुन्दरसाधितः।
त्रिदोषकोपनं सर्वं पूतिमांसं प्रकीर्त्तितम्॥ ६२॥
कफपित्तहरं हृद्यं दीपनं क्रिमिनाशनम्।
मांसं वह्निकरं विद्या दार्द्रकेन प्रसाधितम्॥ ६३॥

इति वङ्गसेने व्यञ्जनमांसव्यञ्जनयोर्गुणाधिकारः समाप्तः॥ ८८॥

—०—

## अथ मत्स्यव्यञ्जनगुणाधिकारमाह।

गुरवो बृंहणाः सर्वे मत्स्याः शुक्रबलप्रदाः।

विपाके मधुरायोष्णा कफपित्तविवर्द्धना: ॥ १ ॥
दीप्ताग्नीनां हिता: पुंसां मैथुनप्रतिषेविनाम् ।
मत्स्याद नाभिबाधन्ते रोगावातसमुद्भवा: ॥ २ ॥
मधुरो वृंहणो हृद्यो वातघ्नो वह्निदीपन: ।
दग्धमत्स्यो रुचिकरो जम्बीररपरिभावित: ॥ ३ ॥
दग्धमत्स्यो भवेच्छ्रेष्ठो बलपुष्टिविवर्द्धन: ।
क्षीणा: क्षताश्च ये केचि ये भग्ना जर्जरीकृता: ॥
दग्धमत्स्या हितास्तेषां सतैललवणान्विता: ॥ ४ ॥
हृद्य: प्रीतिकरो रुच्यो वातहृज्जर्जरात्मक: ।
वातानुलोमनो हृद्य: पुष्टिकृद्बलवर्धन: ॥
अल्पग्नीनां नृणां शस्त: सस्नेह: शाकमत्स्यक: ॥ ५ ॥
विपाके मधुरो हृद्यो विष्टम्भी वातकोपन: ।
रोचनस्तु विशेषेण मूलकेन प्रसाधित: ॥ ६ ॥
आरेवतै: सिद्धमत्स्य आमवातविनाशन: ।
कटीशूलहर: सम्य ग्विड्विबन्धेऽर्शसां हित: ॥ ७ ॥
कफवातहरो हृद्यो दीपनो भक्तरोचन: ।
आरनालशृतो मत्स्यो हृद्यश्चैव गुणोत्तर: ॥ ८ ॥
वातश्लेष्महरो हृद्यो दीपनो भक्तरोचन: ।
अम्लैस्तु संस्कृतो मत्स्यो विबन्धानिलनाशनम् ॥ ९ ॥
विष्टम्भीरोचनो हृद्यो राजमाषप्रसाधित: ।
कफघ्न: पित्तशमनो हृद्य: पथ्योऽग्निवर्द्धन: ॥ १० ॥
शोथसंशमनश्चैव मत्स्यो वार्त्ताकुसाधित: ।
अम्लीकया शृतो मत्स्यो विबन्धानाह शूलनुत् ॥ ११ ॥
दधितक्रारनालैश्च सिद्धा मत्स्या रुचिप्रदा: ॥ १२ ॥
त्रिदोषशमनी हृद्या रुच्या पुष्टिविवर्द्धिनी ।

मधुरा कटभी प्रोक्ता सतीनदलसाधिता ॥ १३ ॥
वातघ्ना रोचनो हृद्यः पालंक्येन प्रसाधितः।
वातघ्नो गुरुरुच्यस्तु मत्स्यघण्टो बलप्रदः ॥ १४ ॥
विष्टम्भी भिन्नवर्चास्तु शाकघण्टो बलप्रदः।
रोचनो मधुरो हृद्यः पित्तघ्नः शोणहन्तयुक् ॥ १५ ॥
मूत्रलो गुरुपाकश्च कथितो दधिमत्स्यकः।
कफपित्तहरो रुच्यः कर्कोटेन प्रसाधितः ॥ १६ ॥
कर्कटीमधुरा हृद्या रुच्या मत्स्येन साधिता।
कफपित्तहरोरुच्या निम्बेन परिपाचिता ॥ १७ ॥
मधुरो रोचनो हृद्यो मत्स्यः कूष्माण्डघण्टितः ॥ १८ ॥
मूत्रलाभिन्नविट्काच गुर्वी रुच्या कफापहा।
अलाबूर्मधुरा प्रोक्ता निर्गुण्डीसाधिताबुधैः ॥ १९ ॥
रोचनः कफपित्तघ्नः केम्बुनाड़ीप्रसाधितः।
रोचनः कफहृत् ज्ञेयः कूष्माण्डाग्रप्रसाधितः ॥ २० ॥
कषाय ईषन्मधुरो रुच्यो हृद्यः कफापहः।
वृष्याग्नी गुरुपाकश्च कदलीनाडिका स्मृतः ॥ २२ ॥
कफघ्नः कटुकः पाके पिच्छिलो दीपनः परम्।
रुच्यः पित्तहरो ज्ञेयः पिप्पलीनाड़िका स्मृतः ॥ २२ ॥
मधुरो रोचनो हृद्यो दृष्टिवह्निविनाशनः।
ज्ञेयः सिद्दफलेनैव साधितः कृमिवर्द्धनः ॥ २३ ॥
वातघ्नो मधुरो वृष्यो रोचनः शिम्बिसाधितः ॥ २४ ॥
कफपित्तहरस्तिक्तो रोचनस्तु विशेषतः।
शुष्कपत्रेण मत्स्याम्लः सर्वेषां परिकीर्त्तितः ॥ २५ ॥
अर्शोघ्नो दीपनो ग्राही रुच्यो मधुरपाकतः।
कफवातामशूलघ्न शाङ्गेरीतक्रसाधितः ॥ २६ ॥

संग्राहीदीपनो हृद्यो रुच्यो वातानुलोमनः ।
कफवातहरः शाकः स्तिन्तिडीकप्रसाधितः ॥ २७ ॥
कफपित्तहरो रुच्यः स्वादुकृद्वातकोपनः ।
विपाके दुर्जरः प्रोक्तो राजिका परिसाधितः ॥ २८ ॥
अम्लः समधुरो हृद्यो रोचनश्चाग्निवर्द्धनः ।
वातानुलोमनश्चैव मत्स्यश्चुक्रेण साधितः ॥ २९ ॥
मधुरो दुर्जरः प्रोक्तो मत्स्यः कूष्माण्डगुण्ठकैः ।
गुर्वीविपाके मधुरा वटिका वा क्षता स्मृता ॥ ३० ॥
वातश्लेष्महरो हृद्यो बलकृत्पित्तकारकः ।
क्षये क्षीणे मद्यपाने चिंगुमत्स्यः सदा हितः ॥ ३१ ॥
संग्राहीदीपनो हृद्यः शूलघ्नो रक्तनाशनः ।
वातघ्नो मधुरः प्रोक्तो मत्स्यः कच्चटसाधितः ॥ ३२ ॥
कषायो मधुरो हृद्यः पित्तघ्नो रोचनस्तथा ।
दीपनो वातहा ग्राही हृद्यः कच्चटघण्टिकः ॥ ३३ ॥
शूलघ्नो दीपनो हृद्यः कफवातामनाशनः ।
सग्राही च विशेषेण पाठापत्रेण साधितः ॥ ३४ ॥
सग्राही दीपनो हृद्यः कासमर्दकसाधितः ।
कफपित्तहरो हृद्यो मूलिका गुण्ठिसाधितः ॥ ३५ ॥

## इति वङ्गसेने समत्स्यव्यंजनगुणाधिकारः समाप्तः ॥ ८९ ॥

—०—

## अथ द्रवद्रव्याधिकारमाह ।

## तत्रादौ तोयवर्गमाह ।

पानादिष्वव्यक्तरसं सुशीतं तर्पणाशनम् ।

अर्च्छं लघु च हृद्यञ्च तोयं गुणवदुच्यते ॥ १ ॥
भादेयं वातलं रूक्षं दीपनं लघुलेखनम्।
नदेऽभिष्यन्दिमधुरं सान्द्रं गुरुकफावहम् ॥ २ ॥
तृष्णाघ्नं दीपनं हृद्यं कषायं मधुरं गुरु।
ताडागं वातलं स्वादु कषायं कटुपाकि च ॥ ३ ॥
वातश्लेष्महरं याम्यं सक्षारं कटुपित्तलम् ॥ ४ ॥
चौण्ड्यमग्निकरं रूक्षं मधुरं कफपित्तकृत्।
कफघ्नं दीपनं हृद्यं लघुप्रस्रवणोद्भवम् ॥ ५ ॥
सक्षारं पित्तलं कौपं श्लेष्मघ्नं वह्निदीपनम्।
मधुरं पित्तशमनमविदाह्यौद्भिदं मतम् ॥
वैकिरं लघु सक्षारं कफघ्नं वह्निदीपनम् ॥ ६ ॥
कैदारं मधुरं प्रोक्तं विपाके गुरुदोषलम्।
तद्वत्पाल्वलमुद्दिष्टं विशेषाद्दोषलन्तु तत् ॥ ७ ॥
सामुद्रमुदकं क्लिष्टं लवणं सर्वदोषकृत्।
अनेकदोषमानूपं वार्यभिष्यन्दिगर्हितम् ॥ ८ ॥
परिदोषैरसंयुक्तं निरवद्यं तु जाङ्गलम्।
पाके विदाहि तृष्णाघ्नं प्रशस्तं प्रीतिवर्द्धनम् ॥ ९ ॥
दीपनं स्वादुशीतञ्च तोयं साधारणं लघु ॥ १० ॥
नद्यः शीघ्रवहा लघ्व्यः प्रोक्ता याश्चामलोदकाः।
गुर्व्यः शैवालसंछन्नाः कलुषा मन्दगाश्च याः ॥ ११ ॥
प्रायेण नद्यो मरुषु सतिक्तलवणान्विताः।
लघ्व्यः समधुराश्चैव पौरुषेयावलेहिताः ॥ १२ ॥
दिवार्ककिरणैर्जुष्टं जुष्टमिन्दुकरैर्निशि।
अरूक्षमनभिष्यन्दि तत्तुल्यङ्गगनांबुना ॥ १३ ॥
गगनांबुविदोषघ्नं गृहीतं यत्सुभाजने।

वल्यं रसायनं नेत्रं पाचापेचि ततःपरम् ॥ १४ ॥
मूर्च्छापित्तास्रदाहेषु विषे रक्ते मदात्यये ।
क्लमभ्रमपरीतेषु तमके वमथौ तथा ॥
ऊर्द्ध्वगे रक्तपित्ते च शीतमम्भः प्रशस्यते ॥ १५ ॥
पार्श्वशूले प्रतिश्याये वातरोगे गलग्रहे ।
आध्माने स्तिमिते कोष्टे सद्यः शुद्धौ नवज्वरे ॥
हिक्कायां स्नेहपीते च शीताम्बुपरिवर्जयेत् ॥ १६ ॥
कफमेदोऽनिलघ्नञ्च दीपनं वस्तिशोधनम् ।
कासश्वासज्वरहरं पथ्यमुष्णोदकं निशि ॥ १७ ॥
अरोचके प्रतिश्याये प्रमेहे श्वयथौ क्षये ।
मन्देऽग्नावुदरे कुष्टे ज्वरे नेत्रामये तथा ॥
व्रणे च मधुमेहे च पानीय मन्दमाचरेत् ॥ १८ ॥
चन्द्रकान्तमणिस्पृष्टः शुभ्रैश्चन्द्रांशुभिर्निशि ।
यन्मुचेन्निर्मलं वारि तद्विद्यादमृतोपमम् ॥ १८ ॥
स्निग्धं स्वादु हिमं हृद्यं दीपनं वस्तिशोधनम् ।
वृष्यं पित्तपिपासाघ्नं नारिकेरोदकं गुरु ॥ २० ॥
इति तोयवर्गः ।

---

## अथ क्षीरवर्गमाह ।

अल्पाभिष्यन्दिगोक्षीरं गुरुस्निग्धं रसायनम् ।
रक्तपित्तहरं शीतं मधुरं रसपाकयोः ॥ २१ ॥
अल्पाम्बुपानव्यायाम कटुतिक्ताऽशनैर्लघु ।
आजं शोषज्वरश्वास रक्तपित्तातिसारनुत् ॥ २२ ॥
महिषीणां गुरुतरं गव्याच्छीततरं पयः ।

चक्षुष्यमग्निदोषघ्नं दधिनार्य्यां गुणोत्तरम् ।
लघुपाके बलासघ्नं वीर्य्योष्णं पक्षिनाशनम् ॥ ३४ ॥
रसे पाके च मधुरं कषायं वातपित्तनुत् ।
कोपनं कफवातानां दुर्नाम्नाञ्चाविकं दधि ॥ ३५ ॥
पीनसे चातिसारे च शीतके विषमज्वरे ।
अरुचौ मूत्रकृच्छ्रे च कार्श्ये च दधिशस्यते ॥ ३६ ॥
शरद्ग्रीष्मवसन्तेषु प्रायशो दधिगर्हितम् ।
हेमन्ते शिशिरे चैव वर्षासु दधिशस्यते ॥ ३७ ॥
वातघ्नं कफकृत् स्निग्धं बृंहणं वातपित्तकृत् ।
कुर्य्याद्भक्ताभिलापञ्च दधि यत्सुपरिस्रुतम् ॥ ३८ ॥
शृतक्षीरात्तु यज्जातं गुणवद्दधि तत् स्मृतम् ।
वातपित्तहरं ह्यद्यं धात्वग्निबलवर्द्धनम् ॥ ३९ ॥
दध्नः सरो गुरुर्वृष्यो विज्ञेयोऽनिलनाशनः ।
वह्नेर्विवर्द्धनश्चापि कफशुक्रविवर्द्धनः ॥ ४० ॥
दधिलसारं कूर्च्चन्तु ग्राहिविष्टम्भिवातलम् ।
दीपनीयं लघुतरं सकषायं रुचिप्रदम् ॥ ४१ ॥
तृष्णाक्लमहरं मस्तु लघुस्रोतो विशोधनम् ॥ ४२ ॥
इति दधिवर्गः ।

—०—

## अथ तक्रवर्गमाह ।

ग्रहणीदोषशोफार्शो ग्रहातीसारगुल्मनुत् ।
त्रिदोषशमनं तक्रं मुहुतस्नेहमादिशेत् ॥ ४३ ॥
शीतकालेऽग्निमान्द्ये च कफोत्थेष्वामयेषु च ।
मार्गावरोधे दुष्टे च वायौ तक्रं प्रशस्यते ॥ ४४ ॥

वातेऽम्लं सैन्धवोपेतं पित्ते स्वादुसशर्करम्।
पिबेत्तक्रं कफे वापि व्योषक्षारसमायुतम्॥ ४५॥
नतु तक्रं क्षते दद्यान्नोष्णकाले न दुर्बले।
न मूर्च्छाभ्रमदाहेषु न रोगे रक्तपैत्तिके॥ ४६॥
ग्राहिणीबाललाख्या दुर्जरा तक्रकूर्चिका।
गुरुः किलाटोऽनिलहा पुंस्त्वनिद्राबलप्रदः॥ ४७॥
मधुरौ बृंहणौ वृष्यौ तद्वत्पेयूषमोरटौ॥ ४८॥
इति तक्रवर्गः।

—०—

## अथ नवनीतवर्गमाह।

नवनीतं नवं ग्राहि हृद्यं रोचनदीपनम्।
क्षयार्शोऽर्दितशोष ग्रहण्यर्शो विकारनुत्॥ ४९॥
क्षीरोद्भवं हिमं ग्राहि रक्तपित्ताक्षिरोगनुत्।
स्मृतिबुद्ध्यग्निशुक्रौजः कफमेदो विशोधनम्॥ ५०॥
विपाके मधुरं सर्पिर्वातपित्तविकारनुत्।
गव्यं मेध्यञ्च चक्षुष्यं तत्संस्काराच्चिदोषनुत्॥ ५१॥
अपस्मारगरोन्माद मूर्च्छाघ्न मनवं घृतम्।
अजावीनान्तु सर्पींषि विद्यात्स्वक्षीरवद्गुणैः॥ ५२॥
इति घृतवर्गः।

—०—

## अथ तैलवर्गमाह।

छिन्नभिन्नच्युतोत्पिष्ट मथितक्षतपिच्चिते।
भग्नस्फुटितविद्धाग्नि दग्धविश्लिष्टदारिते॥ ५३॥

तथाभिहतनिर्भुग्न मृगव्याघ्रादिभिः क्षते ।
सेकाभ्यङ्गावगाहेषु-तिलतैलं प्रशस्यते ॥ ५४ ॥
तद्वद्वस्तिषु पाने च नस्ये कर्णाक्षिपूरणे ।
अनुपानविधौ चापि प्रयोज्यं वातशान्तये ॥ ५५ ॥
क्रमिघ्नं सार्षपं तैलं कंडूकुष्ठापहं लघु ।
कफमेदोऽनिलहरं लेखनं कटुदीपनम् ॥ ५६ ॥
विषघ्नं कटुकं तैलं कौसुम्भं सर्वदोषकृत् ।
क्षौमं तैलमचक्षुष्यं पित्तकृद्वातनाशनम् ॥ ५७ ॥
फलोद्भवानि तैलानि यान्यनुक्तानि तानि च ।
गुणात्कर्म च विज्ञाय फलैस्तान्यपि निर्दिशेत् ॥ ५८ ॥
यावन्तः स्थावराः स्नेहाः समासात्परिकीर्तिताः ।
सर्वे तैलगुणा ज्ञेयाः सर्वे चानिलनाशनाः ॥ ५९ ॥

इति तैलवर्गः ।

—०—

## अथ मधुवर्गमाह ।

त्रिदोषघ्नं मधुप्रोक्तं मेध्यंशंसन्ति वातलम् ।
हिक्काश्वासक्रमिच्छर्दि मेहतृष्णा विषापहम् ॥ ६० ॥
मेदः स्थौल्यापहं ग्राहि पुराणमतिलेखनम् ।
दोषत्रयहरं पक्वं मामम्लञ्च दोषलम् ॥ ६१ ॥

इति मधुवर्गः ।

—०—

## अथेक्षुवर्गमाह ।

इक्षवो रक्तपित्तघ्ना बल्या वृष्याः कफप्रदाः ।
स्वादुपाकरसाः स्निग्धाः गुरवो मूत्रलाः हिमाः ॥ ६२ ॥

अविदाही कफकरो वातपित्तनिवर्हणः।
वक्त्रप्रह्लादनो वृष्यो दन्तनिष्पीडितो रसः॥ ६३ ॥
गुरुर्विदाही विष्टम्भी यान्त्रिकस्तु प्रकीर्त्तितः॥ ६४ ॥
मूलाग्रजन्तुजग्धादि पीडनान्मलसंकरात्।
किञ्चित्कालविधृत्या च विकृतिं याति यान्त्रिकः॥ ६५ ॥
फाणितं गुर्वभिष्यन्दि बलकृन्मूत्रशोधनम्।
नातिश्लेष्मकरः स्निग्धः सृष्टमूत्रशकृद्गुडः॥ ६६ ॥
पित्तघ्नो मधुरः स्निग्धो वातघ्नासृक् प्रसादनः।
सपुराणोऽधिकगुणो गुडः पथ्यतमो मतः॥ ६७ ॥
खण्डं वृष्यं सरं स्निग्धं स्वाद्वसृक् पित्तवातजित्।
वातपित्तप्रशमनी रक्तपित्तहरी सिता।
छर्द्यतीसारतृट्शोकाः ह्लादनीमधुशर्करा॥ ६८ ॥

इतीक्षुवर्गः।

—०—

## अथ मद्यवर्गमाह।

सर्वम्पित्तकरं मद्य मम्लं रोचनदीपनम्।
भेदनं कफवातघ्नं हृद्यं वस्तिविशोधनम्॥ ६९ ॥
कार्श्यार्शो ग्रहणीरोग मूत्राघातानिलापहा।
स्तन्यरक्तचयहिता सुरादीपनबृंहणी॥ ७० ॥
रक्तपित्तकरास्तीक्ष्णाः शुक्तसौवीरजातयः।
पित्तदाहनुदो वाह्ये स्थिताः शीतकराः स्मृताः॥ ७१ ॥

इति मद्यवर्गः।

—०—

## अथ मूत्रवर्गमाह।

गोमूत्रं कटुतीक्ष्णोष्णं सक्षारत्वान्न वातलम्।

लघ्वग्निदीपनं मेध्यं पित्तलं कफवातजित् ॥ ७२ ॥
शूलगुल्मोदरानाह विरेकास्थापनादिषु ।
मूत्रप्रयोगसाध्येषु गव्यं मूत्रं प्रयोजयेत् ॥ ७३ ॥
दृन्नासोदरगुल्मेषु कुष्टमेहविशुद्धिषु ।
आनाहशोथष्टीलासु पांडुरोगेषु माहिषम् ॥ ७४ ॥
कासश्वासापहं शोथकामलापांडुरोगनुत् ।
कटुतिक्तान्वितं छाग मीषन्मारुतकोपनम् ॥ ७५ ॥
प्लीहोदरहरं श्वास शोथवर्चो ग्रहे हितम् ।
सक्षारतिक्तकटुक मुष्णं वातघ्नमाविकम् ॥ ७६ ॥
दीपनं कटुतीक्ष्णोष्णं वातरोगविकारनुत् ।
आश्वं कफहरं रुक्ष कृमिदद्रुविनाशनम् ॥ ७७ ॥
सतिक्तलवणं भेदि वातघ्नं पित्तकोपनम् ।
तीक्ष्णं क्षारे किलासे च नागमूत्रं प्रयोजयेत् ॥ ७८ ॥
गररोगे विकारघ्नं तीक्ष्णं जठररोगनुत् ।
दीपनं गार्दभं मूत्रं कृमिवातकफापहम् ॥ ७९ ॥
शोथकुष्ठोदरोन्माद मारुतकृमिनाशनम् ।
अर्शोघ्नं कारभं मूत्रं मानुषन्तु विषापहम् ॥ ८० ॥

इति मूत्रवर्गः ।

## इति वङ्गसेने द्रवद्रव्याधिकारः समाप्तः ॥ ९० ॥

---

## अथारिष्टाधिकारमाह ।

फलाग्निजलवृष्टीनां पुष्पधूमाम्बुदा यथा ।
ख्यापयन्ति भविष्यत्वं तथारिष्टानि पञ्चताम् ॥ १ ॥

तानि सौक्ष्म्यात्प्रमादाद्वा तथैवाशुव्यतिक्रमात् ।
अज्ञानाच्च न दृश्यन्ते मुमूर्षौ न त्वसम्भवात् ॥ २ ॥
न त्वरिष्टस्य जातस्य नाशोऽस्ति मरणादृते ।
मरणञ्चापि तन्नास्ति यन्नारिष्टं पुरःसरम् ॥ ३ ॥
ध्रुवं त्वरिष्टे मरणं ब्राह्मणैस्तत्किलाऽमलैः ।
रसायनपरैर्जाप्य तत्परैर्वा निवार्यते ॥ ४ ॥
असिद्धिं प्राप्नुयाल्लोके प्रतिकुर्वन्गतायुषः ।
तस्माद्यत्नेनऽरिष्टानि लक्षयेत् कुशलो भिषक् ॥ ५ ॥
वैद्या रिष्टानि सिद्धर्यं भविष्यं मरणं स्फुटम् ।
कथयन्त्यातुरगतं शुभञ्चाशुभमेव च ॥ ६ ॥
नचलोद्भवपीड़ा च यथाकालं विपच्यते ।
अरिष्टपाकस्तु तथा ब्रुवते बहवो जनाः ॥ ७ ॥

—०—

## अथ दूतलक्षणमाह ।

दूतस्य गच्छतो वैद्य मानेतुं रोगिणः कृते ।
प्रदीप्तं शोभनं प्रोक्तं सौम्यं न शकुनं शुभम् ॥ ८ ॥
उत्तमस्यापि नीचोऽपि नीचस्याप्युत्तमो जनः ।
नरो विकृतवेषश्च न दूतः शुभसूचकः ॥ ८ ॥
पापण्डाश्रमवर्णानां सवर्णः कर्मसिद्धये ।
त एव विपरीताः स्युः दूताः कर्मविपत्तये ॥ १० ॥
नपुंसकः स्त्रीबहवो ऽनेककार्य्याभिसूचकाः ।
पाशदण्डायुधधराः पाण्डुरेतरवाससः ॥ ११ ॥
आर्द्रजीर्णापसव्यैक मलिनोद्धतवाससः ।
रूक्षनिष्ठुर वक्तार स्तमङ्गल्यप्रभाषिणः ॥ १२ ॥

न्यूनाधिकाङ्गा उद्विग्ना विकला रौद्ररूपिणः ।
छिन्दन्तस्तृणकाष्ठानि स्पृशन्तो नासिकास्तनम् ॥ १३ ॥
वस्त्रान्तानामिकाकेश नखरोमदशास्पृशः ।
वैद्यं य उपसर्पन्ति दूतास्ते चापि गर्हिताः ॥ १४ ॥
कपालोपलभस्मास्थि तुषाङ्गारकराश्च ये ।
विलिखन्तो महीं केचिन्मृषन्तो लोष्ट्रभेदिनः ॥ १५ ॥
तैलकर्दमदिग्धाङ्गा रक्तस्रगनुलेपनाः ।
फलं पक्वमसारम्बा गृहीत्वान्यच्च तद्विधम् ॥ १६ ॥
नखैर्नखान्तरं वापि करेण चरणौ तथा ।
काष्ठोपानच्चर्महस्ता विकृता व्याधिपीडिताः ॥ १७ ॥
वामाचारारुदन्तो वा श्वासिनो विकृतेक्षणाः ।
याम्यांदिशि प्राञ्जलयो विषमैकपदस्थिताः ॥ १८ ॥
दैन्यमङ्गल्यचिह्नानि दधतश्चापराण्यपि ।
दक्षिणाभिमुखं देशे मलिने क्रूरकर्मणि ॥ १९ ॥
ज्वालयन्तं पठन्तं वा क्षुरकर्मणि चोद्यतम् ।
भूमौ शयानं नग्नं वा वेगोत्सर्गेषु वा शुचिम् ॥ २० ॥
प्रकीर्णकेशमभ्यक्तं क्लिन्नं क्लान्तमथापि वा ।
वैद्यं य उपसर्पन्ति दूतास्ते चापि गर्हिताः ॥ २१ ॥
पित्र्ये चाहुतिकार्ये वा तथा चोत्पातदर्शने ।
मध्याह्ने चार्धरात्रे च सन्ध्ययोः कृत्तिकासु च ॥ २२ ॥
आर्द्राश्लेषामघामूल पूर्वासु भरणीषु च ।
चतुर्थ्यां नवम्यां षष्ठ्यां सन्धिदिनेषु च ॥
वैद्यं य उपसर्पन्ति दूतास्ते चापि गर्हिताः ॥ २३ ॥
स्विन्नाभितप्ता मध्याह्ने ज्वलनस्य समीपतः ।
गर्हिताः पित्तरोगेषु दूता वैद्यमुपागताः ॥ २४ ॥

ते वातकफरोगेषु कर्म्मसिद्धिकरा मताः ।
रक्तपित्तातिसारेषु प्रमेहेषु विशेषतः ॥
पूजिता ज्वररोगे च वैद्यं दूता उपागताः ॥ २५ ॥
शुक्लवासो गौरशुचि श्यामा वा प्रियदर्शनाः ।
स्वस्यां जातौ स्वगोत्रे वा दूताः कार्य्यकराः स्मृताः ॥ २६ ॥
अव्यङ्गाः पटवो दूताः शुभ्रनेपथ्यस्रजः ।
वृषवाजिसमारूढा चारुचेष्टाः सुजातयः ॥ २७ ॥
मिथुनः समवे प्राप्ताः मञ्जीवादिशुभान्विताः ।
जनमध्याः प्रशस्ता स्यादू रोगिणः सुखहेतवः ॥ २८ ॥
यस्या प्राणानिलो वाति सा नाडीजीवसंवृता ।
दिग्विभागोऽपि तस्यापि सजीवः सन्निगद्यते ॥ २९ ॥
स्वस्य प्राग्मुखमासीनं समे देशे शुचौ शुचिम् ।
उपसर्पन्ति ये वैद्यं ते च कार्य्यकराः स्मृताः ॥ ३० ॥

इति दूतलक्षणानि ।

---

## अथ शकुनलक्षणमाह ।

वैद्यस्य गच्छतः कर्त्तुं चिकित्सां रोगिणो भवेत् ।
सिद्धिद शकुनं सौम्यं दीप्तं नैव प्रशस्यते ॥ ३१ ॥
साक्षीदकुम्भातपत्र विप्रवारणगोवृषाः ।
शुक्लवर्णाश्च पूज्यन्ते प्रस्थाने दर्शनं गताः ॥ ३२ ॥
स्त्रीपुत्रिणी सवत्सा गौर्वर्द्धमाना स्वलङ्कृता ।
कन्या मत्स्याः फल चामं स्वस्तिको मोदका दधि ॥ ३३ ॥
हिरण्याक्षतदूर्वाश्च रत्नानि सुमनो नृपः ।
प्रशान्तोऽनलो वाजी चाषो हंसः शिखी तथा ॥ ३४ ॥

भवन्ति दर्शनादेव भिषजः कार्य्यसिद्धिदाः।
नन्दीदुन्दुभिनिर्घोषः शङ्खवेणुरवस्वनाः ॥ ३५ ॥
सिंहगोवृषनादोऽश्व ह्रेषितं गजबृंहितम्।
शस्तं हंसरुतं नृणां वाचश्च हृदयप्रियाः ॥ ३६ ॥
पत्रपुष्पफलोपेताः सक्षीरा नीरुजो द्रुमाः।
आश्रिता वा नभो वेश्म ध्वजतोरणवेदिकाः ॥ ३७ ॥
दिक्षु शान्तासु वक्तारो मधुरं पृष्ठतोऽनुगाः।
वामा वा दक्षिणा वापि शकुनाः कर्मसिद्धये ॥ ३८ ॥
दक्षिणाद्वामगमनं प्रशस्तं श्वशृगालयोः।
भासकौशिकयोश्चैवं नोभयं शशसर्पयोः ॥ ३९ ॥
दर्शनं वा रुतं वापि न गोधाकृकलासयोः।
ग्रन्थ्यर्बुदादिषु सदा छेदशब्दः प्रशस्यते ॥ ४० ॥
विद्रध्युदरगुल्मेषु भेदशब्दस्तथैव च।
रक्तपित्तातिसारेषु रुद्धशब्दश्च पूजितः ॥ ४१ ॥
दौर्मनस्यञ्च वैद्यस्य यात्रायां नैव पूजितम्।
वैद्यागमनावसादो वा आतुरो वाप्यधोमुखः ॥ ४२ ॥
वैद्यसंभाषणाङ्गानि कुड्यमास्तरणानि च।
प्रमृज्याद्वाधुनीयाद्वा करौ पृष्ठं शिरस्तथा ॥ ४३ ॥
हस्तं चाकृष्य वैद्यस्य न्यसेच्छिरसि चोरसि।
न स सिध्यति वैद्यो वा गृहे यस्य न पूज्यते ॥ ४४ ॥
वैद्य यत्रोन्मुखं पृच्छेत् स्पर्शं वा स्वाङ्गमातुरः।
भूयः सपूज्यते यस्य गृहे वैद्यः स सिध्यति ॥ ४५ ॥
शुभं शुभेषु दूतादिष्वशुभं ह्यशुभेषु च।
आतुरस्य ध्रुवं तस्माद् दूतादीँल्लक्षयेद्भिषक् ॥ ४६ ॥

इति शकुनलक्षणानि।

## अथ दुःस्वप्नानाह ।

स्वप्नाध्यायं प्रवक्ष्यामि मरणाय शुभाय च ।
पश्यन्ति सुहृदो यांस्तु स्वप्नान् स्वयमथापि वा ॥ ४७ ॥
स्वे हास्यशरीरस्तु करभव्यालगर्दभैः ।
मार्जारकपिशार्दूल शृगालैर्नारकेन च ॥ ४८ ॥
तरक्षोद्रामृगाभ्याञ्च भल्लूकेन शुनापि वा ।
खराहैर्महिषैर्वापि यो यायाद्दक्षिणामुखः ॥ ४९ ॥
कृष्णारक्ताम्बरधरा हसन्ती रक्तमूर्धजा ।
य चाकर्षति बद्धा स्त्री नृत्यन्ती दक्षिणामुखम् ॥ ५० ॥
अन्त्यावसायिभिर्यो वा कृष्यते दक्षिणामुखः ।
परिष्वजेयुर्यश्चापि प्रेताः प्रव्रजितास्तथा ॥ ५१ ॥
आघ्रायते यश्च मुहुः श्वापदैर्विवृताननैः ।
पिबेन्मधु च तैलं वा यो वा पङ्केऽवसीदति ॥ ५२ ॥
पङ्कप्रलिप्तगात्रो वा नृत्येद्वापि हसेत्तथा ।
निरम्बरश्च यो रक्तां शिरसा धारयेत् स्रजम् ॥ ५३ ॥
यस्य वंशोनलो वापि तालो वोरसि जायते ।
य मत्स्याद्रिग्रसितो वा नीरेऽग्नौ वा विलीयते ॥ ५४ ॥
उच्चादधः पतेद्यस्तु श्वापदैर्वा निहन्यते ।
ह्रियते स्रोतसा यो वा यो वा मोहमवाप्नुयात् ॥ ५५ ॥
पराजीयेत बध्येत काकाद्यैर्वाभिभूयते ।
पतनं तारकादीनां प्रणाशं दीपचक्षुषोः ॥ ५६ ॥
यः पश्येद्देवतानां वा प्रकम्पमचलैस्तथा ।
यस्य छर्दिर्विरेको वा दशनाः प्रपतन्ति वा ॥ ५७ ॥
शाल्मलीं किंशुकं यूपं वल्मीकं पारिभद्रकम् ।
पुष्पाढ्यं कोविदारं वा चितां वा योऽधिरोहति ॥ ५८ ॥

कर्पासतैलपिण्याक लोहानि लवणं तिलान् ।
लभेताश्नाति वा पक्वं मांसं यश्च पिबेत्सुराम् ॥ ५८ ॥
यः स्वप्नेषु नरः पश्येद्रक्तकृष्णाम्बराहतान् ।
कृष्णांश्च विकृतान्चण्डान्दण्डपाशधरानपि ॥ ६० ॥
कुर्वतो भर्त्सनं त्रासं दक्षिणाशांसमाश्रितान् ।
सस्वस्थो लभते रोगं व्याधितो मृत्युमृच्छति ॥ ६१ ॥
यथा स्वप्रकृति स्वप्नो विस्मृतो विहितस्तथा ।
चिन्ताकृतो दिवा दृष्टो भवन्त्यफलदास्तु ते ॥ ६२ ॥
ज्वरितानां शुनासख्यं शोषिणां कपिभिस्तथा ।
उन्मादे राक्षसैः प्रेतै रपस्मारे प्रवर्त्तनम् ॥ ६३ ॥
मेहातिसारिणां तोय पानं स्नेहस्य कुष्ठिनाम् ।
गुल्मेषु स्थावरोत्पत्तिः कोष्ठे मूर्ध्नि शिरोरुजि ॥ ६४ ॥
पिपासा श्वासयोर्छर्द्यां शष्कुल्यायेव भक्षणम् ।
हरिद्राभक्षणं वापि यद्भवेत्पांडुरोगिनः ॥
रक्तपित्ती पिबेद्यस्तु शोणितं सविनश्यति ॥ ६५ ॥
क्रव्यादाक्रमणं श्मसानगमनं पातस्तथोच्चादधो
रक्तस्रग्वसनं विवाहकलहौ चौरं विरेको भ्रमिः ।
बन्धं लोहकपर्दलाभनटनं पङ्काम्भसोर्मज्जनं
दन्ताक्षिग्रहपादचर्मपतनं स्वप्ने गदादिप्रदम् ॥ ६६ ॥
स्वप्नानेवंविधान् दृष्ट्वा प्रातरुत्थाय यत्नवान् ।
दद्यान्माषांस्तिलाल्लौहं विप्रेभ्यः काञ्चनं तथा ॥ ६७ ॥
जपेद्वापि शुभान्मन्त्रान् गायत्रीन्त्रिपदीन्तथा ।
दृष्ट्वा तु प्रथमे यामे स्वप्नान्ध्यायात्पुनः शुभम् ॥ ६८ ॥
जपेद्वान्यतमं वेदं ब्रह्मचारी समाहितः ।
नचाऽऽचक्षीत कस्मैचिद् दृष्ट्वा स्वप्नमशोभनम् ॥ ६९ ॥

देवतायतने चैव वसेद्रात्रित्रयं तथा।
विप्रांश्च पूजयेन्नित्यं दुःस्वप्नात्परिमुच्यते ॥ ७० ॥
अत ऊर्ध्वं प्रवक्ष्यामि प्रशस्तस्वप्नदर्शनम्।
देवान् द्विजान् गोवृषभान् जीवतः सुहृदो नृपान् ॥७१॥
समिद्धमग्निं साधूंश्च निर्मलानि जलानि च।
पश्येत्कल्याणलाभाय व्याधेरपगमाय च ॥ ७२ ॥
युद्धे चात्मजयं दृष्ट्वा नरः सुखमवाप्नुयात्।
तुरगो हस्तिको सर्पो मक्षिकाश्च जलौकसः।
स्वप्ने दशन्ति यं तस्य धनारोग्ये विनिर्दिशेत् ॥ ७३ ॥
मांसं मद्यं स्रजः श्वेता वासांसि च फलानि च।
लभेत् कल्याणलाभाय व्याधेरपगमाय च ॥ ७४ ॥
वीणाद्यादर्शसुश्वेतवसनातपवारणम्।
गुर्वङ्गणादिभोगी यः सोऽर्थदो गदनाशनः ॥ ७५ ॥
विपस्यापक्वमांसस्य गवादीनां विशेषतः।
भक्षणं विड्विलेपश्च रोदनं मरणं निर्जम् ॥
दृष्ट्वा जागरणं कुर्यादर्थलाभाय रोगहृत् ॥ ७६ ॥
नदीनदसमुद्रांश्च क्षुभितान् कलुषोदकान्।
तरेत् कल्याणलाभाय व्याधेरपगमाय च ॥ ७७ ॥
हयाश्वगजसौधाग्र नौ शैलाद्रं वनस्पतीन्।
आरोहेद्द्रव्यलाभाय व्याधेरपगमाय च ॥ ७८ ॥
इत्यादिकाच्छुभान् स्वप्नान् दृष्ट्वा फलमवृद्धये।
स्तुत्वा देवान् द्विजातिभ्यो दद्यात् स्वर्णं च भोजनम् ॥ ७९ ॥
भूयो दृष्टश्रुतध्याता अनुभूतैकगोचराः।
स्वप्ना निरर्थकाजीर्णाच्छिद्रभावादिसम्भवः ॥ ८० ॥

इति स्वप्नकथनम्।

## अथ कालज्ञानम् ।

अकस्माच्छीलविकृति रकस्मादपुरुत्तमम् ।
अकस्मादिन्द्रियोत्पत्तिः सन्निपाताग्रलक्षणम् ॥ ८१ ॥
शरीरशीलयोर्यस्य प्रकृतेर्विकृतिर्भवेत् ।
तदरिष्टं समासेन व्यासतश्च निबोधमे ॥ ८२ ॥
व्यञ्जनानि सुतो विद्या बुद्धि र्मेदो धनं यशः ।
स्वल्पे वयसि यस्यैतत् न स जीवेच्चिरन्नरः ॥ ८३ ॥
भक्ति. शील स्मृतिस्त्यागो मेधाबलमनुत्तमम् ।
भजन्ति वा निवर्त्तन्ते षड्भिर्मासैर्मरिष्यतः ॥ ८४ ॥
शृणोति विविधान् शब्दान् यो दिव्यानसतो बहून् ।
समुद्रपुरमेघाना मसम्पत्तौ च निष्ठुरान् ॥ ८५ ॥
तान् स्वरानावगृह्णीते गृह्णीते चान्यशब्दवत् ।
ग्राम्यारण्यस्वनांश्चापि विपरीतान् शृणोति च ॥ ८६ ॥
द्विषच्छब्देषु रमते सुहृच्छब्देषु कुप्यति ।
यश्चाकस्मान्न शृणुते स गतायुरिति स्मृतः ॥ ८७ ॥
यस्तूष्णसमये शीत मुष्णं जानाति शीतके ।
सञ्जातशीतपिटको यश्च दाहे न पीड्यते ॥
दाहार्त्तो यश्च रोमाञ्ची पञ्चत्वं तस्य निश्चितम् ॥ ८८ ॥
उष्णगात्रोऽतिमात्रञ्च यश्च शीतेन वेपते ।
प्रहार नाभिजानाति स यायाद्यममन्दिरम् ॥ ८९ ॥
पांशुनेवावकीर्णानि यस्तु गात्राणि मन्यते ।
नानावर्णाश्च राज्यो वा यस्य गात्रे भवन्ति हि ॥ ९० ॥
स्नातानुलिप्तं य वापि सेवन्ते नीलमक्षिकाः ।
सुगन्धिर्वाति चाकस्मात्त ब्रुवन्ति गतायुषम् ॥ ९१ ॥
सुगन्धं वेत्ति दुर्गन्धं दुर्गन्धं सुरभिं तथा ।

विपरीते न गृह्णाति भावान्यथोपसेवितान् ॥ ८२ ॥
क्रमोपयुक्ताश्च रसा यस्य दोषाभिवृद्धये।
यस्य दोषाग्निसाम्यञ्च कुर्युर्मिथ्योपयोजिताः॥
यो वा रसान्नसंवेत्ति तं वदन्ति गतायुषम् ॥ ८३ ॥
शृणोत्या पीड़िते कर्णे नयो धुकधुकध्वनिम्।
यो वा गन्धं न गृह्णाति शान्तदोषस्य मानवः॥ ८४ ॥
दिवाज्योतींपि यश्चापि ज्वलितानीव पश्यति।
चन्द्रं सूर्यमिवाचष्टे सूर्यं वा चन्द्रवर्चसम् ॥ ८५ ॥
अमेघोपप्लवे चापि शक्रचापतडिद्गुणान्।
तडिद्वन्तो सितान् वापि निर्मले गगने घनान् ॥ ८६ ॥
विमानयानप्रासादै र्यश्च संकुलमम्बरम्।
यश्चानिलं मूर्त्तिमन्त मन्तरिक्षे च पश्यति ॥ ८७ ॥
उष्णशीतादिकान् भावान् कालावस्थादिशस्तथा।
विपरीते न गृह्णाति भावानन्यांश्च यो नरः॥ ८८ ॥
धूमनीहारवासोऽभि रावृतामिव मेदिनीम्।
प्रदीप्तमिव चाकाशं यो वाप्लुतमिवाम्भसि ॥
भूमिमष्टापदाकारां रेखाभिर्यश्च पश्यति ॥ ८९ ॥
अरुन्धतीं ध्रुवञ्चैव विष्णोरपि पदत्रयम्।
न पश्येत् सगतायुः स्या श्चतुर्थमातृमण्डलम् ॥ १०० ॥
रसज्ञारुन्धती ज्ञेया घ्राणाग्रं च ध्रुवं विदुः।
भ्रुवोर्मध्यं पदं विष्णो स्तारकामातृमण्डलम् ॥ १०१ ॥
ज्योत्स्नादर्शोष्णतोयेषु छायां यश्च न पश्यति।
पश्यत्येकाङ्गहीनां वा विकृतां वान्यसत्वजाम् ॥ १०२ ॥
श्वकाककङ्कगृध्राणां प्रेतानां यक्षरक्षसाम्।
पिशाचोरगनागानां भूतानां विकृतामपि ॥ १०३ ॥

क्लीश्रियौ नश्यतो यस्य बुद्धिर्मेधा स्मृतिस्तथा ।
अकस्माद्वै भजन्ति च स परासुरसंशयम् ॥ १०४ ॥
यस्याधरोष्ठः पतितः क्षिप्तश्चोर्ध्वन्तथोत्तरः ।
उभौ वा जाम्बवाभासौ दुर्लभं तस्य जीवितम् ॥ १०५ ॥
आरक्ता दशना यस्य श्यावा वाथ पतन्ति च ।
खञ्जनप्रतिमा वापि तं गतायुषमादिशेत् ॥ १०६ ॥
अकस्माद्वदनं यस्य कुङ्कुमाभं प्रजायते ।
अङ्गकम्पो गतिभ्रंशो यदि वा स न जीवति ॥ १०७ ॥
पीड्यते कुण्डली यस्य नाभिस्थाहारबन्धना ।
दह्यते यस्य चाङ्गारः सर्वथैव मृतिं व्रजेत् ॥ १०८ ॥
अकस्माद्यः कृशः स्थूलो भवेत् स्थूलोऽथवा कृशः ।
प्रकृतिं वा त्यजेच्छीघ्र.मष्टमासात् सजीवति ॥ १०९ ॥
कृष्णास्तम्भावलिप्ता च जिह्वाशूना च यस्य वै ।
कर्कशा वा भवेद्यस्य सोऽचिराद्विजहात्यसून् ॥ ११० ॥
कुटिला स्फुटिता वापि प्रसुप्ता यस्य नासिका ।
भग्ना विस्फुरिता वापि स परासुरसंशयम् ॥ १११ ॥
केशाः सीमन्तिनो यस्य संक्षिप्ते विनते भ्रुवौ ।
लुनन्ति चाक्षिपक्ष्माणि स परासुरसंशयम् ॥ ११२ ॥
न धारयति यः शीर्षं बाहरत्यश्रमास्यगम् ।
नखाङ्गुलिचयं चापि दन्ताः शुष्यन्ति यस्य च ॥
एकाग्रदृष्टिर्मूढात्मा स परासुरसंशयम् ॥ ११३ ॥
बलवान् दुर्बलो वापि संमोहं योऽधिगच्छति ।
उत्थाप्यमानो बहुशः स परासुरसंशयम् ॥ ११४ ॥
उत्तानः सर्वदा शेते पादौ विकुरुते
विप्रसारणशीलो वा स परासुरसं

शीतपादकरोच्छ्वास श्छिन्नोच्छ्वासश्च यो भवेत्।
काकोच्छ्वासश्चयो मर्त्यः स परासुरसंशयम्॥ ११६॥
निद्रा न छिद्यते यस्य यो वा जागर्त्ति सर्वदा।
मुह्येद्वा वक्तुकामश्च प्रत्याख्येयः स जानता॥ ११७॥
रोमभ्यः सरोमकूपेभ्यो यस्य रक्तं प्रवर्त्तते।
पुरुषस्या विदार्त्तस्य स परासुरसंशयम्॥ ११८॥
अनन्योपद्रवकृतः शोथः पादसमुद्भवः।
पुरुषं हन्ति नारीन्तु मुखजो गुह्यजो द्वयम्॥ ११८॥
अतीसारो ज्वरो हिक्का छर्दिःशूनाङ्गभेदनम्।
कासिनः श्वासिनो वापि यस्य तं परिवर्जयेत्॥ १२०॥
स्वेदोदाहश्च बलवान् हिक्का·श्वासस्तथैव च।
बलवन्तमपि प्राणै र्वियुञ्जीत न संशयः॥ १२१॥
श्यावा जिह्वा भवेद्यस्य सव्यञ्चाक्षि निमज्जति।
मुखं च जायते पूति यस्य तं परिवर्जयेत्॥ १२२॥
वक्त्रमापूर्य्यतेऽश्रुभ्यः स्विद्येते चरणौ तथा।
चक्षुश्चाकुलतां याति यमराष्ट्रं गमिष्यतः॥ १२३॥
अतिमात्रं लघूनि स्यु र्गात्राणि गुरुकाणि च।
यस्याकस्मात् सविघ्नो यो गन्ता वै यमशासनम्॥ १२४॥
पङ्कमत्स्यवसातैल घृतगन्धाश्च ये नराः।
पूतिगन्धाश्च ये वाति गन्तारस्ते यमालयम्॥ १२५॥
ज्वरातिसारशोथाः स्यु र्यस्यान्योऽन्यावसादिनः।
प्रक्षीणबलमांसस्य स न शक्यश्चिकित्सितुम्॥ १२६॥
यूकाल्लाटमायान्ति बलिं नाश्नन्ति वायसाः।
येषां चापि रतिर्नास्ति गतास्तेयमनन्दिरम्॥ १२७॥
क्षीणस्य यस्य क्षुत्तृष्णे हृद्यैर्मिष्टै र्हितैस्तथा।

अन्नपानैर्नशाम्येते तस्य मृत्युरुपस्थितः ॥ १२८ ॥
प्रवाहिकाभिरःशूलं कोष्ठे शूलञ्च दारुणम् ।
पिपासा बलहानिश्च तस्य मृत्युरुपस्थितः ॥ १२९ ॥
निवर्त्तते महाव्याधिः सहसा यस्य देहिनः ।
उत्पद्यते च वा यस्य सहसा स विनश्यन्ति ॥ १३० ॥
न चाहारबलं यस्य दृश्यते स विनश्यति ।
नासाभङ्गो भवेद्यस्य समरात् सजीवति ॥ १३१ ॥
चिकित्स्यमानः सम्यक् च विकारो योऽभिवर्द्धते ।
प्रक्षीणबलमांसस्य लक्षणन्तद्गतायुषः ॥ १३२ ॥
यस्याण्डे निर्गते मेढ्रमुत्क्रिक्रमथवान्यथा ।
अचिरान् म्लानमम्लानं माल्यं मूर्ध्नि चिरादपि ॥ १३३ ॥
भामण्डलं न पश्येद्यो मार्जिते नयने नरः ।
विक्षतं वाथ सम्पश्येत् गतायुरिति ध्रुवम् ॥ १३४ ॥
भ्रुवौ केशाः ससीमस्ताः सावर्त्ता अपि मृत्यवे ।
कपोतो वायसो गृध्रः काकोलो यस्य मूर्द्धनि ॥
क्रव्यादो वापि लीयेत षण्मासायुः स उच्यते ॥ १३५ ॥
च्याव्यते पांशुवर्षेण काकपक्षैश्च ताड्यते ।
स्वप्नेऽपि यो नरस्तस्य मृतिर्मासचतुष्टयात् ॥ १३५ ॥
यस्याभिषिक्तमात्रस्य हृदिनोरं प्रशुष्यति ।
पिबतोऽपि जलं शोषः स्याद्दशाहं सजीवति ॥ १३६ ॥
स्थापयित्वा करं भूमौ निरुन्ध्यान्मध्यमांगुलिम् ।
प्रहरेण भवेन्मृत्युर्यद्युत्तिष्ठेदनामिका ॥ १३७ ॥
मध्याह्ने विमलेऽम्बरे दिनमणेर्बिम्बं जले निर्मले ।
पश्येत्तावगते यदा गदयुतः पूर्णस्तदा स्याच्छुभम् ॥
हीन दक्षिणपश्चिमोत्तरपुरोभागेषु मासैः क्रमात् ।

पट्लिङ्गेरकमितैर्दिनैश्च दशभिश्छिद्रं सधूमं दिनात् ॥१३८॥
हस्तयोः पादयोश्चापि कनिष्ठायाश्च मध्यजः।
चत्वारो यस्य भिद्यन्ते तुल्यं मासान्मृत्युभाक् ॥ १३८ ॥
कपोलमांसविच्छेदो मृत्युः स्यात्पञ्चरात्रतः।
चक्षुर्नासिकयोर्मध्ये स्पन्दाभावेन पञ्चमे ॥ १४० ॥
मृत्युः स्यादथ गात्राणां स्तब्धत्वादेकवासरे।
ललाटस्य त्रिरेखाणां नाशान्मृत्युरहस्त्रये ॥ १४१ ॥
सप्ताहान्मृत्युरङ्गस्य शीतताङ्गस्य चोष्णता।
अकस्माद्दूषणं नित्यं पश्चान्मृत्युप्रदं भवेत् ॥ १४२ ॥
ग्रीवायाः स्कन्धयोर्नाड्यो विच्छेदादपि पक्षतः।
अकस्मात्कृष्णरेखा स्या जिह्वाया यदि मध्यतः॥
दृढो वा दन्तसंदंशस्तदा मृत्युस्त्रिरात्रतः ॥ १४३ ॥
रात्राविन्दुवधं पश्येद्दिवानक्षत्रमण्डलम्।
अमेघे विद्युतं पश्येत् स्फुरन्ती दक्षिणाश्रिताम् ॥
जले चेन्द्रधनुर्जीवेद् द्वित्रिमासान् समानवः ॥ १४४ ॥
दिवाच्छायां नयः पश्ये दुल्कायाः पतनं तथा।
हंसकाकमयूराणां पश्येदेकत्र मेलनम् ॥ १४५ ॥
चन्द्रद्वन्द्वं द्विसूर्यं वा स्वशिरोज्वलनं तथा।
गन्धर्वनगरं वापि वृक्षाग्रे शिखरे गिरौ ॥ १४६ ॥
पश्ये त्तत्र पिशाचानां रूपमन्यच्च भीषणम्।
प्रकम्पितो भयं चैव मूर्च्छितो वा भवेन्मुहुः ॥ १४७ ॥
छर्दिर्मूत्रं पुरीषं वा सुवर्णरजतप्रभम्।
प्रत्यक्षं यदि वा स्वप्ने दशमासान्सजीवति ॥ १४८ ॥
कण्ठौष्ठतालुरसना दन्तं यस्य पृथक् पृथक्।
शुष्यत्यंशौचं षण्मासात्तस्य मृत्युं विनिर्दिशेत् ॥ १४९ ॥

सप्तर्षिचन्द्रनचत्र दिशां रात्रावदर्शनात्।
कलङ्करहितं चन्द्रं सूर्यं रश्मिविवर्जितम् ॥ १५० ॥
अग्निं तेजोविहीनञ्च सोमञ्चाप्यपरश्मिकम्।
रात्रौ सूर्यं दिवाचन्द्रं स्वनेत्रे ज्वलनं तथा ॥ १५१ ॥
नाभौ हिक्कां गुदे राजीं वर्णम्पद्मोपमं मुखे।
गण्डेऽतिरिक्तपिडकां गात्रे वर्णविचित्रताम् ॥ १५२ ॥
हृदये स्फुरणं मांस प्रकम्पमथ तालुनि।
चन्द्रच्छिद्रं रविच्छिद्रं पश्येद्भूमौ तथाम्बरे ॥
आत्मनैव हि यः पश्येत् त्यर्थेन्मृत्युं विपश्चितः ॥ १५३ ॥
मूत्रशुक्रपुरीषाणि तुल्यकालं पतन्ति चेत्।
वर्षान्मृत्युर्भवेत्यस्य भैषजादिक्रिया वृथा ॥ १५४ ॥
कर्णयोर्यदि नो शब्द स्तर्जनीभ्यां निरुद्धयोः।
जायते प्राप्तकालस्य लक्षणं तत्समादिशेत् ॥ १५५ ॥
सर्वाङ्गशीतलत्वञ्च दृशाहान्मरणं वदेत् ॥ १५६ ॥
कर्दमे पांशुदेशे वा पुरतः पृष्ठतोऽपि वा।
खण्डपादोदये नूनं मृत्युर्मासचतुष्टयात् ॥ १५७ ॥
श्रुतिबाधिर्यतो मृत्यु श्चतुर्मासान्तरे भवेत्।
स्वस्थेन्द्रियस्य पततो मृत्युर्मासत्रयाद्भवेत् ॥ १५८ ॥
भ्रूमध्ये ज्योतिषो दृष्टौ द्विमासाद्यमदर्शनम्।
एकमासात्तथा मृत्युर्घर्षणे गोलकद्वयात् ॥ १५९ ॥
जिह्वाया अपवृत्तौ च दशाहान्मृत्युसंगमः।
दक्षिणाशां गतां छाया मात्मनो यदि पश्यति ॥
अद्यैव मृत्युरस्माकमिति पश्ये दनित्यताम् ॥ १६० ॥
स्वस्थस्य स्थूलजिह्वा चेन्निःस्पर्शा रसवर्जिता।
यावत्पञ्चदिनं मृत्युः पश्चाशद्दिवसेऽथ वा ॥ १६१ ॥

अम्लादिलक्ष्म रसतो नीलादिलक्ष्म वर्णतः।
विकारे शुक्रमूत्राणां षण्मासाद्यमदर्शनम्॥ १६२॥
युगलिपक्षधारं वा बर्हावर्त्तिसुगन्धि वा।
मूत्रं यस्य भवेत्तस्य मृत्युः षण्मासमध्यतः॥ १६३॥
स्थिरत्वेपि स्वदेहस्य तच्छाया चञ्चला यदि।
चतुर्मासाद्भवेन्मृत्युरित्यागमविदो विदुः॥ १६४॥
ज्वरो यस्य तु पूर्वाह्णे शुष्ककासश्च दारुणः।
बलमांसविहीनस्य दुर्लभन्तस्य जीवितम्॥ १६५॥
ज्वरो यस्याऽपराह्णे तु श्लेष्मकासश्च दारुणः।
प्रक्षीणबलमांसस्य दुर्लभन्तस्य जीवितम्॥ १६६॥
प्रेतैः सह पिबेन्मद्यं स्वप्ने यः कृष्यते शुना।
सघोरं ज्वरमासाद्य सद्यः प्राणैर्विमुच्यते॥ १६७॥
सहसा ज्वरसन्तापस्तृष्णामूर्च्छा बलक्षयः।
विश्लेषणं च सन्धीनां मुमूर्षुरुपजायते॥ १६८॥
गोसर्गे वदना यस्य स्वेदः प्रच्यवते भृशम्।
लेपज्वरोपसृष्टस्य दुर्लभं तस्य जीवितम्॥ १६९॥
देवद्विजसुहृद्वैद्यगुरून्यो द्वेष्टि यस्य वा।
मज्जन्त्यप्सु शकृच्छ्लेष्मरेतांसि स न जीवति॥ १७०॥
इत्यादिलक्षणैर्ज्ञात्वा मरणं समुपस्थितम्।
लोकद्वयसुखप्राप्त्यै धर्ममेव समाचरेत्॥ १७१॥
सौम्याकारेन्द्रियः श्रोता द्रष्टा वक्ता च विन्दति।
सम्यक् स्पर्शं रसं गन्धं रोगीरोगात्प्रमुच्यते॥ १७१॥
स्वल्पो ज्वरो भवेद्यस्य जिह्वा भवति कोमला।
उष्णौ पादौ तथा पाणी सरोगो सुखमाप्नुयात्॥ १७२॥
ज्वरः स्वेदविहीनः स्यात् कण्ठः कफविवर्जितः।

नासामार्गगतिः प्राणो यस्य रोगी स जीवति ॥ १७३ ॥
भवेन्निद्रा सुखं यस्य स्मृति भ्रंशो न जायते ।
नाकारवर्णहानिः स्यात् सरोगी जीवति ध्रुवम् ॥ १७४ ॥
यस्यादरो भवेद्वैद्ये प्रीतिर्भिषज्यकर्म्मणि ।
पथ्ये रुचिः स्पृहा धर्मे स रोगी जीवति ध्रुवम् ॥ १७५ ॥
इत्यादिलक्षणैर्वैद्यः साध्यं विज्ञाय रोगिणम् ।
आयुर्वेदोक्तमार्गेण चिकित्सां सम्यगाचरेत् ॥ १७६ ॥

इति कालज्ञानम् ।

—०—

## अथ नेत्रपरीक्षामाह ।

रौद्रे रूक्षे च धूम्राभे नयने स्तब्धचञ्चले ।
तथाभ्यन्तररक्ताभे भवतो वातरोगिणः ॥ १७७ ॥
पित्तरोगे तु पीताभे नीले वा रक्तवर्णके ।
सन्तप्ते भवतो दीपं सहेते नावलोकितुत् ॥ १७८ ॥
ज्योतिर्हीने च शुक्लाभे जलपूर्णे सगौरवे ।
मन्दावलोकने नेत्रे भवत कफकोपतः ॥ १७९ ॥
तन्द्रामोहाकुले श्यामे निर्भुग्ने रूक्षरौद्रके ।
रक्तवर्णे च भवतो नेत्रे दोषत्रयोदये ॥ १८० ॥
दोषत्रये भवेच्चिह्नं नेत्रयोस्तु त्रिदोषजम् ।
दोषद्वयप्रकोपे तु भवेद्दोषद्वयोद्भवम् ॥ १८१ ॥
एकदृष्टी यदा नेत्रे स्वाधीनेन च रोगिणः ।
उन्मीलिते च भवत क्षणादेव निमीलिते ॥ १८२ ॥

बहुवर्णं च भवती विकृतानेकचेष्टिते।
नेत्रे मृत्युं कथयतो रोगिणो नात्र संशयः॥ १८४॥
सौम्यदृष्टीप्रसन्नाभे प्रकृतिस्थे मनोरमे।
नेत्रे कथयतः शीघ्रं रोगशान्तिञ्च रोगिणः॥ १८५॥
इति नेत्रपरीक्षा।

—०—

## अथ मुखपरीक्षा।

वातकोपे मुखं रूक्षं स्तब्धं वक्त्रं गतप्रभम्।
पित्तकोपे भवेद्रक्तं पीतं वा परितप्तकम्॥ १८६॥
कफकोपे गुरुस्निग्धं भवेच्छूनमिवाननम्।
त्रिलिङ्गञ्च त्रिदोषे स्या द्विलिङ्गञ्च द्विदोषके॥ १८७॥
इति मुखपरीक्षा।

—०—

## अथ जिह्वापरीक्षा।

वातकोपे प्रसुप्तेव स्फुटिता मधुरा भवेत्।
स्तब्धावर्णेन हरिता जिह्वालालां प्रमुञ्चति॥ १८८॥
पित्तकोपे तु रक्ताभा तिक्ता दग्धेव जायते।
जिह्वादाहान्विता विद्धा कण्टकैरिव सर्वतः॥ १८९॥
कफोदये भवेज्जिह्वा स्थूला गुर्वी विलेपनी।
सुस्थूलकण्टकोपेता चारा बहु कफावहा॥ १९०॥
दोषद्वये द्विदोषोक्त लक्षणा रसना भवेत्।
सर्वचिह्ना त्रिदोषे स्या द्विकृतानेकलक्षणा॥ १९१॥
इति जिह्वापरीक्षा।

नासामार्गगतिः प्राणो यस्य रोगी स जीवति ॥ १७३ ॥
भवेन्निद्रा सुखं यस्य स्मृति भ्रंशो न जायते ।
नाहारवर्णहानिः स्यात् सरोगी जीवति ध्रुवम् ॥ १७४ ॥
यस्यादरो भवेद्दैवे प्रीतिर्भिषज्यकर्मणि ।
पथ्ये रुचिः स्पृहा धर्मे स रोगी जीवति ध्रुवम् ॥ १७५ ॥
इत्यादिलक्षणैर्वैद्यः साध्यं विज्ञाय रोगिणम् ।
आयुर्वेदोक्तमार्गेण चिकित्सां सम्यगाचरेत् ॥ १७६ ॥

इति कालज्ञानम् ।

—०—

## अथ नेत्रपरीक्षामाह ।

रौद्रे रूक्षे च धूम्राभे नयने स्तब्धचञ्चले ।
तथाभ्यन्तरकृष्णाभे भवतो वातरोगिणः ॥ १७७ ॥
पित्तरोगि तु पीताभे,नीले वा रक्तवर्णके ।
सन्तप्ते भवतो दीपं सहेते नावलोकितुत् ॥ १७८ ॥
ज्योतिर्हीने च शुक्लाभे जलपूर्णे सगौरवे ।
मन्दावलोकने नेत्रे भवत. कफकोपतः ॥ १७९ ॥
तन्द्रामोहाकुले श्यामे निर्भुग्ने रूक्षरौद्रके ।
रक्तवर्णे च भवतो नेत्रे दोषत्रयोदये ॥ १८० ॥
दोषत्रये भवेच्चिह्नं नेत्रयोस्तु त्रिदोषजम् ।
दोषद्वयप्रकोपे तु भवेद्दोषद्वयोद्भवम् ॥ १८१ ॥
एकदृष्टी यदा नेत्रे स्वाधीनेन च रोगिणः ।
उन्मीलिते च भवत· क्षणादेव निमीलिते ॥ १८२ ॥
सततोन्मीलिते नेत्रे यदा नित्य निमीलिते ।
विलुप्तकृष्णतारे च भ्रमद्भ्रूमोग्रतारके ॥ १८३ ॥

बहुवर्णे च भवती विकृतानेकचेष्टिते।
नेत्रे मृत्युं कथयतो रोगिणो नात्र संशयः॥ १८४॥
सौम्यदृष्टीप्रसन्नाभे प्रकृतिस्थे मनोरमे।
नेत्रे कथयतः शीघ्रं रोगशान्तिञ्च रोगिणः॥ १८५॥

इति नेत्रपरीक्षा।

---

## अथ मुखपरीक्षा।

वातकोपे मुखं रूक्षं स्तब्धं वक्रं गतप्रभम्।
पित्तकोपे भवेद्रक्तं पीतं वा परितप्तकम्॥ १८६॥
कफकोपे गुरुस्निग्धं भवेच्छूनमिवाननम्।
त्रिलिङ्गञ्च त्रिदोषे स्यात् द्विलिङ्गञ्च द्विदोषके॥ १८७॥

इति मुखपरीक्षा।

---

## अथ जिह्वापरीक्षा।

वातकोपे प्रसुप्तेव स्फुटिता मधुरा भवेत्।
स्वत्वाद्वर्णेन हरिता जिह्वालालां प्रमुञ्चति॥ १८८॥
पित्तकोपे तु रक्ताभा तिक्ता दग्धेव जायते।
जिह्वादाहान्विता विद्वा कण्टकैरिव सर्वतः॥ १८९॥
कफोदये भवेज्जिह्वा स्थूला गुर्वी विलेपनी।
सुस्थूलकण्टकोपेता क्षारा बहु कफावहा॥ १९०॥
दोषद्वये द्विदोषोक्त लक्षणा रसना भवेत्।
सर्वचिह्ना त्रिदोषे स्यात् विकृतानेकलक्षणा॥ १९१॥

इति जिह्वापरीक्षा।

---

पानीयेन समं मूत्रं सुपाकसहितं भवेत्।
रक्तवातेन रक्तं स्यात् कौसुम्भं रक्तपित्ततः॥ २०३॥
तैलतुल्यं भवेन्मूत्रं नित्यं सह्लपित्ततः।
कफप्रकृतितो मूत्रं तुल्यं पल्वलवारिणा॥ २०४॥
वातप्रकृतितो मूत्रं नीराभं बहुलं भवेत्।
अधो बहुलमारक्तं मूत्रमालोक्यते यदा॥
वदन्ति तदतीसार लिङ्गं तल्लिङ्गवेदिनः॥ २०५॥
जलोदरसमुद्भूतं मूत्रं घृतकणोपमम्।
आमवातप्रमान्मूत्रं तक्रतुल्यं प्रजायते॥ २०६॥
मलेन पीतवर्णञ्च बहुलञ्च निगद्यते।
पीतवर्णं यदा मूत्रं तैलतुल्यं सबुद्बुदम्॥
तदप्यसाध्यमादिष्टं सद्भिर्वैद्यकवेदिभिः॥ २०७॥
अजीर्णेन भवेन्मूत्रं श्वेतञ्चापि तथारुणम्।
अजामूत्रसमं मूत्र मजीर्णत्वाच्च जायते॥ २०८॥
मूत्रन्तु कृष्णतां याति क्षयरोगे तथा किल।
क्षयरोगे यदा श्वेत मसाध्यं तद्विनिर्दिशेत्॥ २०९॥
पीतमच्छञ्च जायेत मूत्रं पित्तोदये सति।
समधातोः पुनः कूप जलतुल्यञ्च कथ्यते॥ २१०॥
ऊर्ध्वन्नीलमधोरक्तं रुधिरेण प्रजायते॥ २११॥
प्रवर्त्तते यदा मूत्रं स्निग्धं तैलसमप्रभम्।
आहारादुदरन्तस्य वृद्धिं याति तदा किल॥ २१२॥
ऊर्ध्वम्पीतमधोरक्तं मूत्रं चेद्रोगिणस्तदा।
पित्तप्रकृतिसंभूतं सन्निपातं वदेद्भिषक्॥ २१३॥
यस्येक्षुरसंकाशं मूत्रं नेत्रे च पिञ्जरे।
रसाधिक्यं विजानीया ल्लङ्घनं तस्य निर्दिशेत्॥ २१४॥

## अथ मूत्रपरीक्षा ।

रात्रेश्चतुर्थयामस्य घटिकानां चतुष्टये ।
उत्थाप्य रोगिणं वैद्यो मूत्रोत्सर्गन्तु कारयेत् ॥ १९१ ॥
आद्यन्तधारां सन्त्यज्य मध्यमां काचभाजने ।
कारयेत्कांस्यपात्रे वा कुर्य्यात्पात्रं पटावृतम् ॥ १९२ ॥
ततः सूर्योदये जाते प्रकाशे सति भाजने ।
स्थितं मूत्रसमालोक्य कुर्य्यात्तस्य परीक्षणम् ॥ १९३ ॥
वाते तोयसमं मूत्रं रूक्षं बहुतरं भवेत् ।
रक्तवर्णम्भवेत्पित्ते पीतं वा स्वल्पमेव च ॥ १९४ ॥
कफे श्वेतं घनं मूत्रं स्निग्धं सञ्जायते तथा ।
द्विदोषे द्वन्द्वचिह्नं स्यात् सर्वलिङ्गं त्रिदोषजे ॥ १९५ ॥
सुलक्षितं गृहीतं यन्मूत्रं घर्मे निधाय तत् ।
तैलबिन्दुं क्षिपेत्तत्र निश्चले वैद्यसत्तमः ॥ १९६ ॥
जायन्ते बुद्बुदा यत्र विकारः सोऽस्तिपित्तलः ।
रूक्षञ्च श्यामलच्छायं वाते मूत्रं प्रजायते ॥ १९७ ॥
तरीमुपरिविभाति तैलबिन्दुस्तथात्र वै ।
मूत्रं श्लेष्मणि जायेत समं पल्वलवारिणा ॥ १९८ ॥
मूत्रेण सार्द्धम्मिलित स्तैलबिन्दुः प्रजायते ।
सिद्धार्थतैलसदृशं मूत्रं वै पित्तमारुते ॥ १९९ ॥
श्वेतधारा महाधारा पीतधारा तदा ज्वरः ।
रक्तधारा ज्वरे दीर्घे कृष्णा च मरणाय वै ॥ २०० ॥
श्लेष्मवाते भवेन्मूत्रं काञ्जिकेन समन्तथा ।
पांडुरं श्लेष्मपित्ते च पीतश्चैव परीक्षयेत् ॥ २०१ ॥
सन्निपाते च यन्मूत्रं कृष्णं तल्लक्षयेद्बुधः ।
काञ्जिकेन समं मूत्रं भातुद्रुङ्गममप्रभम् ॥ २०२ ॥

पानीयेन समं मूत्रं सुयाकसहितं भवेत्।
रक्तवातेन रक्तं स्यात् कौसुम्भं रक्तपित्ततः॥ २०३॥
तैलतुल्यं भवेन्मूत्रं नित्यं सहजपित्ततः।
कफप्रकृतितो मूत्रं तुल्यं पल्वलवारिणा॥ २०४॥
वातप्रकृतितो मूत्रं नीराभं बहुलं भवेत्।
अधो बहुलमारक्तं मूत्रमालोक्यते यदा॥
वदन्ति तदतीसारलिङ्गं तल्लिङ्गवेदिनः॥ २०५॥
जलोदरसमुद्भूतं मूत्रं घृतकणोपमम्।
आमवातवशान्मूत्रं तक्रतुल्यं प्रजायते॥ २०६॥
मलेन पीतवर्णञ्च बहुलञ्च निगद्यते।
पीतवर्णं यदा मूत्रं तैलतुल्यं सबुद्बुदम्॥
तदप्यसाध्यमादिष्टं सद्भिर्वैद्यकवेदिभिः॥ २०७॥
अजीर्णेन भवेन्मूत्रं श्वेतञ्चापि तथारुणम्।
अजामूत्रसमं मूत्रमजीर्णत्वाच्च जायते॥ २०८॥
मूत्रन्तु कृष्णतां याति क्षयरोगे तथा किल।
क्षयरोगे यदा श्वेतमसाध्यं तद्विनिर्दिशेत्॥ २०९॥
पीतमच्छञ्च जायेत मूत्रं पित्तोदये सति।
ममधातोः पुनः कूप जलतुल्यञ्च कथ्यते॥ २१०॥
ऊर्ध्वनीलमधोरक्तं रुधिरेण प्रजायते॥ २११॥
प्रवर्त्तते यदा मूत्रं स्निग्धं तैलसमप्रभम्।
आहारादुदरस्तस्य वृद्धिं याति तदा किल॥ २१२॥
ऊर्ध्वम्पीतमधोरक्तं मूत्रं चेद्रोगिणस्तदा।
पित्तप्रकृतिसंभूतं सन्निपातं वदेद्भिषक्॥ २१३॥
यस्येक्षुरससंकाशं मूत्रं नेत्रे च पिञ्जरे।
रसाधिक्यं विजानीया ल्लङ्घनं तस्य निर्दिशेत्॥ २१४॥

रक्तं स्वच्छञ्च यन्मूत्रं तज्ज्वराधिक्य लक्षणम् ।
धूम्रवर्णं यदा मूत्रं ज्वराधिक्यं तदादिशेत् ॥ २१५ ॥
कृष्णमच्छञ्च जानीयात् सन्निपातज्वरोद्भवम् ।
उपरिष्टात्पीतवर्णं मधःकृष्णं सबुद्बुदम् ॥
मूत्रं प्रभूतदोषेण संशयो नात्र कश्चन ॥ २१६ ॥
आपीतफेनरक्ताद्य मसितेचुरसोपमम् ।
पित्ते कफेऽनिले मूत्रे निरामे च ज्वरे भवेत् ॥ २१७ ॥
यदा प्रसारमाप्नोति तैलं क्षेमं तदादिशेत् ।
विन्दुरूपं यदा तैल मसाध्यत्वाय रोगिणः ॥ २१८ ॥
प्रसरेत्पूर्वदिग्भागे पश्चिमे वा तथोत्तरे ।
तैलविन्दुस्तदा रोग विमुक्तिं रोगिणो दिशेत् ॥ २१९ ॥
दक्षिणस्यामथैशाने आग्नेये नैर्ऋते तथा ।
वायव्ये चापि दिग्भागे प्रसरन्मृत्युसूचकः ॥ २२० ॥
निमज्जति यदा मूत्रे भ्रमद्वा नैव सर्पति ।
तदारिष्टं विजानीया द्रोगिणो नात्र संशयः ॥ २२१ ॥
तैलप्रसारणान्मूत्रे विक्षताकारमूर्त्तयः ।
हलकूर्मखरोष्ट्रादे र्भवन्ति क्षतिसूचकाः ॥ २२२ ॥
यदि मूत्रगते तैले हंसछत्रादिकं भवेत् ।
रोगीरोगविमुक्तः स्या त्तदायुश्चाप्नुयाच्चिरम् ॥ २२३ ॥
इति मूत्रपरीक्षा ।

## इति वङ्गसेनेऽरिष्टाधिकारः समाप्तः ॥ ९१ ॥

—०—

## अथ दीपनपाचनद्रव्यलक्षणाधिकारमाह ।

पचेन्नामं वह्निकृद्य दीपनं तद्यथा मिसिः ।
पचत्यामन्न यत् कुर्या दनलं तद्धि पाचनम् ।

नागकेसरवद्विद्याच्चित्रो दीपनपाचनः ॥ १ ॥
न शोधयति न द्वेष्टि समान्दोषांस्तथोद्धतान्।
समीकरोति यज्ज्ञेयं शमनन्तद्यथाऽमृता ॥ २ ॥
कृत्वा पाकमलानां यद्भित्वा बन्धमधो नयेत्।
तच्चानुलोमनं ज्ञेयं यथा प्रोक्ता हरीतकी ॥ ३ ॥
पक्तव्यं यदपक्त्वैव श्लिष्टं कोष्ठे मलादिकम्।
नयत्यधः स्रंसनन्तद्यथा स्यात् कृतमालकः ॥ ४ ॥
मलादिकमबद्धं यद्बद्धं वा पिण्डितम्मलैः।
भित्वाध पातयति तद्भेदनं कटुकी यथा ॥ ५ ॥
विपक्वं यदपक्वं वा मलादि द्रवतान्नयेत्।
रेचयत्यपि तज्ज्ञेयं रेचनं त्रिवृता यथा ॥ ६ ॥
अपक्वपित्तश्लेष्माणौ बलादूर्ध्वं नयेत्तु यत्।
वमनं तद्धि विज्ञेयं मदनस्य फलं यथा ॥ ७ ॥
स्थानाद्बहिर्नयेदूर्ध्वमधो वा मलसञ्चयम्।
देहे संशोधनन्तत्स्याद्देवदालीफलं यथा ॥ ८ ॥
श्लिष्टान् कफादिकान्दोषानुन्मूलयति यद्बलात्।
छेदनन्तद्यथा क्षारो मरिचानि शिलाजतु ॥ ९ ॥
धातून्मलान्वा देहस्य विशोष्योल्लेखयेच्च यत्।
लेखनन्तद्यथा क्षौद्रं नीरमुष्णं वचा यवाः ॥ १० ॥
दीपनं पाचनं यत्स्यादुष्णत्वाद्द्रवशोषकम्।
ग्राहि तच्च यथा शुण्ठी जीरकं गजपिप्पली ॥ ११ ॥
रौक्ष्याच्छैत्यात्कषायत्वाल्लघुपाकाच्च यद्भवेत्।
स्तम्भकं स्तम्भनन्तत्स्याद्यथा टुण्टुकवत्सकौ ॥ १२ ॥
रसायनञ्च तज्ज्ञेयं यज्जराव्याधिनाशनम्।
यथाऽमृता रुदन्ती च गुग्गुलुश्च हरीतकी ॥ १३ ॥

येस्माच्छुक्राद्भवेत् स्त्रीषु हर्षो वाजीकरश्च तत् ।
यथा नागबलाद्याः स्यु र्बीजञ्च कपिकच्छुजम् ॥ १४ ॥
यस्माच्छुक्रस्य वृद्धिः स्या च्छुक्रलञ्च तदुच्यते ।
यथाश्वगन्धामुषली शर्करा च शतावरी ॥ १५ ॥
प्रवर्त्तकानि कथ्यन्ते जनकानि च रेतसः ।
दुग्धं माषाश्च भल्लात फलमज्जाऽऽमलानि च ॥ १६ ॥
प्रवर्त्तनी स्त्रीशुक्रस्य रेचनं बृहतीफलम् ।
जातीफलं स्तम्भनं स्यात् कालिन्दं चयकारि च ॥ १७ ॥
देहस्य सूक्ष्मच्छिद्रेषु विशेत्तत्सूक्ष्ममुच्यते ।
तद्यथा सैन्धवं क्षौद्रं निम्बस्नेहं रुबूद्भवम् ॥ १८ ॥
पूर्वं व्याप्याखिलं कायं ततः पाकञ्च गच्छति ।
व्यवायि तद्यथाभङ्गा फेनं चाहिसमुद्भवम् ॥ १९ ॥
सन्धिबन्धास्तु शिथिलान् यत्करोति विकाशि तत् ।
विश्लेष्यौजश्च धातुभ्यो यथाक्रमुककोद्रवौ ॥ २० ॥
बुद्धिं लुम्पति यद्द्रव्यं मदकारि तदुच्यते ।
तमोगुणप्रधानञ्च यथा मद्यसुरादिकम् ॥ २१ ॥
व्यवायि च विकाशि स्यात् सूक्ष्मछेदि मदावहम् ।
आग्नेयं जीवितहरं योगवाहि स्मृतं विषम् ॥ २२ ॥
निजवीर्येण यद्द्रव्य स्त्रोतोभ्यो दोषसञ्चयम् ।
निरस्यति प्रमाथि स्या त्तद्यथा मरिचं वचा ॥ २३ ॥
पैच्छिल्याद्गौरवाद्द्रव्य रुद्धा रसवहाः शिराः ।
धत्ते यद्गौरवं तत्स्या दभिष्यन्दि यथा दधि ॥ २४ ॥

इति वङ्गसेने दीपनपाचनादिलक्षणाधिकारः समाप्तः ॥ ८२ ॥

—०—

## वङ्गसेनोत्पत्तिः ।

श्रीकृष्णः पृथिवीं निजाधिकमलाऽरोगीकृतां हा यदा ।
त्यक्त्वा धामनिजं गतस्तत इयं मध्यल्पकालान्तरे ॥
जातारोगवती पुनर्भयकरा दृष्ट्वा तदा तां महम् ।
त्वय्यैवाग्रजनिं गदाधरगृहे चक्रे च नीरोगिकाम् ॥ १ ॥
भूमावागमनञ्च मे सुभिषजो ज्ञास्यन्ति सर्वे कथम् ।
इत्येवं सुविचार्य वै चितितले स्त्रीया मिमांसहिताम् ॥
लोकानां हितकाम्यया स्वयमसे सुस्थापयित्वा ततः ।
वैद्यानां गभुताकरीष्व गमनं यास्याम्यमं मे कृतम् ॥ २ ॥
अगस्तिसंहितेयं प्राक् ख्याता मज्जन्मतस्ततः ।
गदाधरगृहे जन्म लब्धा मे पुनः संस्कृता ॥ ३ ॥
वङ्गसेन इति नाम्ना विख्यातस्तदनन्तरम् ।
ग्रन्थोऽयं सर्वसिद्धान्त सारः शीघ्रफलप्रदः ॥ ४ ॥

इति श्रीमद्वैद्यगदाधरात्मजसद्वैद्यविद्याचार्य्य
श्रीवङ्गसेनविरचितो वङ्गसेनाह्वयो ग्रन्थः
समाप्तः ॥